**नात्रावयवेष्वाग्रहः। अत्र स्वनियामकनियतया विप्रतिपत्त्या**

कल्परूपवृत्तिस्वीकारेऽपि चित्सम्बन्धासम्भवात्। ननु सन्निष्ठया सद्भिन्ननिष्ठया च प्रतियोगितया सम्बन्धेन तादात्म्यं प्रत्याश्रयत्वेन तदवच्छेदकत्वेन च सम्बन्धेन अविद्यायाः कारणत्वात्, लौहित्यादिप्रतियोगिकतादात्म्ये च जपादिसन्निधानस्य विशिष्य कारणत्वात्, प्रतियोगितासम्बन्धेन सति इदमादौ लौहित्यादावेवास्तु तादात्म्यं न तुच्छेऽवच्छेदकतासम्बन्धेन तु स्यात्। तेन सम्बन्धेन तत्प्रति स्वप्रतियोगितावच्छेदकावच्छिन्नभेदस्य कारणत्वात्। अन्यथा रजताद्यवच्छेदेनेव स्वावच्छेदेनापीदमादितादात्म्यमुत्पद्येत, तस्य तुच्छेऽपि सत्त्वादिति चेन्न तुच्छे निर्धर्मकत्वेन उक्तभेदस्याप्यसत्त्वात्। तादात्म्यान्यस्वकार्यनिष्ठेन विषयत्वसम्बन्धेन अविद्याया एव तत्र हेतुत्वात्। अन्यथा स्वपरिणाम्यविद्यापरिणामाभिन्नेऽपि तादात्म्योत्पत्त्यापत्तेः रजतादौ तदुत्पत्तिपूर्वमपि उक्तविषयतासम्बन्धेन अविद्यायाः सम्भवात् तदुत्पत्तिकाले तादात्म्योत्पत्तिः। तादात्म्येऽपि तादात्म्यान्तरोत्पत्तिवारणाय स्वकार्यस्य तादात्म्यान्यत्वं विशेषणम्। यद्यपि तुच्छस्य सत्तादात्म्यावच्छेदकत्वेऽपि प्रकृते न दोषः। स्वरूपसम्बन्धेन सत्तादात्म्यवत्त्वस्यैवार्हान्तार्थत्वात्। अवच्छेदकतया तद्वत्त्वोक्तौ चितः सत्तादात्म्यानवच्छेदकत्वेन अर्हतैनैव वारणात्। चिद्भिन्नमित्यस्य वैयर्थ्यापातात्। स्वरूपसम्बन्धेन सत्तादात्म्यवत्त्वं च सदाकारधीविषयेषु वर्तते, न तुच्छे, तथापि वस्तुस्थितिरेवोक्ता। अत एवोक्तं निश्चितसाध्याभावेत्याद्युक्तं प्राचीननैयायिकैः। नवीनैस्तु दीधित्यादौ यद्यपि शक्त्यादिसाधकानुमाने पक्षीयव्यभिचारसंशयोप्यनुकूलतर्काभावे दोषत्वेनोक्तः; तथापि प्रकृते अनुकूलतर्काणां वक्ष्यमाणत्वान्न दोष इति भावः। **स्वनियामकनियतयेति**—स्वं विप्रतिपत्तिः, नियामिका जनिका यस्य तेन

**लघुभूतया पक्षतावच्छेदो न विरुद्धः। समयबन्धादिना व्यवधा-नात् तस्यानुमानकालासत्त्वेपि उपलक्षणतया पक्षतावच्छेदकत्वम्। यद्वा विप्रतिपत्तिविषयतावच्छेदकमेव पक्षतावच्छेदकम्। प्राचां**

---

विशेषण[1] नियततया स्वेतरस्माद्व्यावर्तितया। ननु विशिष्टार्थविशेषधीजन-कत्वेन विप्रतिपत्तेर्निवेशे विशिष्टघटकविशेष्यतावच्छेदकरूपेणैव पक्षता अस्तु लाघवात् तत्राह—लघुभूतयेति। तद्व्यक्तित्वरूपलघुरूपावच्छि-न्नयेत्यर्थः। तथाच तद्व्यक्तित्वेनैव निवेश्याया विप्रतिपत्तेरुक्तधी-जनकत्वं परिचायकमिति भावः। यत्तु धर्मविशेषे ग्रहाधीनग्रहापि विप्रतिपत्तिः पक्षतावच्छेदिका, न तु धर्मविशेषः, लघुपक्षहेतुघटि-तपरामर्शादिरूपप्रमाणस्वरूपलाघवात्। अतएव सावयवत्वं क्षितेः सकर्तृकत्वं प्रति न हेतुः, किन्तु तेनानुमितं कार्यत्वमिति, तन्न; प्रथमोपस्थितत्वलाघवस्य धर्मिविशेषे सत्त्वात्। द्रव्यसमवेतद्रव्य-त्वरूपे सावयवत्वे तत्सत्वेऽपि गुरुधर्मो न हेतुतावच्छेदक इति मते तत्र हेतुत्वानङ्गीकारात्। अतएव धर्मविशेष एव पक्षतावच्छे-दक इति मूले वक्ष्यते। नन्वनुमितिकाले सतः पक्षतावच्छेदकस्य समकालत्वं साध्ये भातीति पक्षतावच्छेदककालावच्छिन्नस्यैव साध्य-स्य सिद्ध्या अर्थान्तरम्। न चानुमानकालसत्या एव व्यक्तेः तद्व्य-क्तित्वेन पक्षतावच्छेदकत्वात्, साध्ये उक्तकालावच्छिन्नत्वस्य बाध काले भानासम्भवाच्च न दोष इति वाच्यम्; तद्व्यक्तित्वाश्रयपरि-चायकं यद्धर्मवद्विशेषकत्वं वाच्यं तस्यैव पक्षतावच्छेदकत्वौचित्यात्। साध्यं न तद्व्यक्तिकालावच्छिन्नमित्यादिबाधाभावे अर्थान्तरानुद्धाराच्चे-त्यत आह—यद्वेति। यत्तु विप्रतिपत्तिर्न पक्षतावच्छेदिका अनुमान-काले असत्याः विशेषणत्वासम्भवेन विशेष्यतावच्छेदककालावच्छि-

---

[1] पा. बोधविशेषेण,

**प्रयोगेष्वपि विमतमिति पदं विप्रतिपत्तिविषयतावच्छेदकावच्छिन्नाभिप्रायेणेत्यदोषः। ननु किमिदं मिथ्यात्वं साध्यते, "न तावत् मिथ्याशब्दोऽनिर्वचनीयतावचनः" इति पञ्चपादिकावचनात् सदसदनाधिकरणत्वरूपमनिर्वाच्यत्वम्। तद्धि किं असत्त्वविशिष्टसत्त्वाभावः, उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयम्, आहोस्वित् सत्त्वात्यन्ताभाववत्त्वे[1] सति असत्त्वात्यन्ताभावरूपं विशिष्टम्। नाद्यः; सत्त्वमात्राधारे जगत्यसत्त्वविशिष्टसत्त्वानभ्युपगमात् विशिष्टाभावसाधने सिद्धसा-**

---

न्नत्वेन विधेयावगाहनस्यौत्सर्गिकस्य भङ्गापत्तेः, अतएव न संशयविषयत्वरूपा विमतिः तथा, किन्तूक्तविमतिप्रकारकधीविशेष्यतेति, तत्तुच्छम्। स्वरूपयोग्यत्वेनास्मन्मूलोक्तविप्रतिपत्तिर्हि न वाक्यम्। तस्य अतत्त्वात्, किन्तु तद्धीः, साच विमतिधिया तुल्या, व्यापारानुबान्धितद्विशेष्यतायाः प्रपञ्चे सत्त्वेन पक्षतावच्छेदकत्वसम्भवात्। औत्सर्गिकं च सति बाधे व्याहतमेव। अन्यथा तदौत्सर्गिकमेव न स्यात्। किंचास्माकं समयबन्धादिवत् विप्रतिपत्तेरावश्यकत्वात् परामर्शकाले वाक्यस्मृतिरूपविप्रतिपत्तेरप्यावश्यकत्वात् पक्षतावच्छेदकत्वसम्भवः। तव तु संशयधीः कुतः, कथंचित्तत्सामग्रीकल्पने विप्रतिपत्तिसामग्री कुतो न कल्प्यते। अस्मदुक्तदूषणेन ग्रस्ता ते विमतिधीरपि, धीमात्रशून्यप्रलयावच्छेदेन मिथ्यात्वादिसिद्ध्यापत्तेः। **अदोष इति**। विप्रतिपत्तिमात्रस्य पक्षतावच्छेदकत्वे ब्रह्मतुच्छयोः बाधासिद्धी। घटादियत्किञ्चिद्विशेष्यकविप्रतिपत्तेः पक्षतावच्छेदकत्वे सर्वप्रपञ्चमिथ्यात्वासिद्धिरिति दोषाः नेत्यर्थः। **किमसत्त्वेत्यादि**। विशिष्टप्रतियोगिकाभावत्वेन, अभावद्वयत्वेन, एकाभावसमानाधिक-

[1] भावत्वे.

धनात्। न द्वितीयः; सत्त्वासत्त्वयोरेकाभावे अपरसत्त्वावश्यकत्वेन व्याघातात् निर्धर्मकब्रह्मवत् सत्त्वासत्त्वराहित्येपि सद्रूपत्वेन अमिथ्यात्वोपपत्त्या अर्थान्तराच्च, शुक्तिरूप्ये अबाध्यत्वरूपसत्त्वव्यतिरेकस्य सत्त्वेन बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्याच्च। अतएव न तृतीयः; पूर्ववत् व्याघातात् अर्थान्तरात् साध्यवैकल्याच्च इति चेत्, मैवम्। सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयाविवक्षायां दोषाभावात्। न च व्याहतिः। सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा, परस्परविरहव्यापकतया वा, परस्परविरहव्याप्यतया वा। तत्र नाद्यः; तदनङ्गीकारात्। तथाह्यत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानाधिकरणत्वम्, तद्व्यतिरेकश्च साध्यत्वेन विवक्षितः। तथाच त्रिकालबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्। एवंच सति न शुक्तिरूप्ये साध्यवैकल्यमपि, बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात्। नापि व्याघातः परस्परविरहरूपत्वाभावात्। अतएव न द्वितीयोऽपि; सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात्। नापि तृतीयः; तस्य व्याघाताप्रयोजकत्वात् गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात्। यच्च निर्धर्मकस्य ब्रह्मणः सत्त्वराहित्येऽपि सद्रूपवत्प्रपञ्चस्य सद्रूप-

---

रणापराभावत्वेन, विकल्पाः। अतश्शब्दार्थं विवृणोति पूर्ववदिति। नाद्यः इत्यादिना परस्परविरहरूपत्वमात्रं निषिध्यते। तेनैव हेतुना व्याघाताभावमाह—नापि व्याघात इत्यादि।

**त्वेन अमिथ्यात्वोपपत्त्या अर्थान्तरमुक्तम्, तन्न; एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रपञ्चस्य प्रत्येकं सत्स्वभावताकल्पने मानाभावात्, अनुगतव्यवहाराभावप्रसङ्गाच्च। सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम्। तथाचोभयात्मकत्वे अन्यतरात्मकत्वे वा तादृगभेदासम्भवेन ताभ्यामर्थान्तरानवकाशः। न च असत्त्वव्यतिरेकांशस्यासद्भेदस्य च प्रपञ्चे सिद्धत्वेनांशतः सिद्धसाधनमिति वाच्यम्; "गुणादिकं**

---

**सत्स्वभावता** सच्छब्देनाभिलप्यमानधीविषयता। **अनुगतव्यवहारेति**। ननु सदाकारबुद्धौ सत्ता द्रव्यत्वं मूर्तत्वं वा जातिर्विषयः। गुणादौ तस्यास्सामानाधिकरण्यादिः सम्बन्धः। त्वन्मतेऽपि हि सत्स्वरूपस्य नैकं तादात्म्यं समवायैकत्वदूषणात्। न च तादात्म्यत्वेनानुगतो मे सम्बन्ध इति वाच्यम्; तादात्म्यं सदित्यत्र तदसम्भवात्। एकरूपेण सम्बन्धत्वानुयोगित्वयोः असम्भवादिति चेन्न; समवायस्सन्नित्यादौ तवेव ममापि तत्र तत्सम्भवात्। तत्र विभिन्नरूपेण त्वया तयोरङ्गीकारे ममापि सदाकारप्रतीतेः सम्बन्धांशेऽप्यनुगताकारत्वाय तादात्म्यत्वरूपेण सम्बन्धेऽपि तदतिरिक्तरूपेणानुयोगित्वसम्भवात्। एकरूपेण सम्बन्धं प्रत्यनुयोगित्वप्रतियोगित्वयोरेव मया अनङ्गीकारात्। तादात्म्यत्वेनैव मम अनुयोगित्वसम्भवाच्च। अतएव सद्ब्रह्मेत्येव मे व्यवहारः, न तु सत्सादिति। अथवा सत्स्वरूपप्रतियोगिकं तादात्म्यमेव सत्तास्वरूपसंम्बन्धेन सदाकारधीविषयः, तादात्म्यं सदित्यत्रापि केवलोपहिततादात्म्ययोः स्वरूपं सम्बन्धः, तादात्म्ये तादात्म्यान्तरास्वीकारात्। तादात्म्याभिन्नयोरेव केवलोपहितयोः तादात्म्यस्वीकारात्। अतस्सदाकारबुद्धौ नानुगतसम्बन्धहानिः। सत्ता सतीति तु न मे व्यवहारः। **गुणादिकमित्यादि**। समानाधिकृत-

गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्" इति भेदाभे-

त्वात् गुणादौ गुण्यादिभेदधीप्रतिबन्धकप्रमाविषयत्वात् । तथाच यो यद्विशिष्टप्रतियोगिकभेदधीप्रतिबन्धकप्रमाविषयः सः तद्भेदाभेदवानिति व्याप्तिः । निष्कर्षस्तु— यो धर्मो यद्धर्मवदवच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्संयोगाद्यसंसर्गकप्रमादिविषयः स तद्धर्मावच्छिन्नप्रतियोगिताकभेदाभेदानुयोगितावच्छेदकताद्वयवानिति सामान्यतो व्याप्तौ घटत्वादिमदवच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपितस्वावच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयप्रमाविषयो द्रव्यत्वादिः । यथा घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदोभयानुयोगितावच्छेदक इति दृष्टान्तः । द्रव्यं घटाभिन्नं नेत्याद्याकारक घटत्वादिमदवच्छिन्नप्रतियोगिताकभेदप्रकारतानिरूपितद्रव्यत्वाद्यवच्छिन्नविशेष्यताकभ्रमं प्रति प्रतिबन्धिकायां द्रव्यं घट इत्यादिप्रमायां द्रव्यत्वादेर्विषयत्वात् घटो न घटाभिन्न इत्यादिज्ञानस्य आहार्यत्वेन अप्रतिबध्यत्वात् स्वपदयद्धर्मपदाभ्यां घटत्वादेरेकस्य धर्तुमशक्यत्वात् द्रव्यत्वादेरिव स्वपदेन घटत्वादेरेव यद्धर्मपदेन धारण तेन घटत्वादेः स्वावच्छिन्नप्रतियोगिताकभेदाभेदोभयानुयोगितावच्छेदकत्वाभावेऽपि न व्यभिचारः । न च द्रव्यत्वावच्छिन्ने घटत्वावच्छिन्नभेदोऽसिद्ध इति वाच्यम् ; विशिष्टकेवलयोः भेदवादिना तार्किकादिना केवलघटे द्रव्यत्वविशिष्टघटत्वादिना भेदस्वीकारात्, विशिष्टघटो घट इत्यादिप्रतीतेरभेदस्वीकाराच्च, विशिष्टघटकेवलयोः भेदास्वीकारे संयोगाविशेषवतो भेदाभेदयोर्वृक्षादौ तार्किकादिभिस्स्वीकारेण तत्रैव दृष्टान्तत्वसम्भवाच्च । भेदधीप्रतिबन्धकाभेदभ्रमानिपन्नयोः घटपटयोरभेदाभावात्प्रमेति स्वविशेषणीभूतयावदंशे भ्रमाभिन्नार्थकम् । तेनोक्तभ्रमस्य घटत्वाद्यंशे प्रमात्वेऽपि न दोषः ।

प्रमात्वं च बाधाभावात् सिद्धम् । संयोगेन घटवतो भिन्नं भूतल-मित्यादिधीप्रतिबन्धकप्रमाविषये भूतलादौ घटाद्यभेदाभावात् असंस-र्गान्तं यद्धर्मविशिष्टे यद्धर्मविशिष्टसंयोगाद्यविषयार्थकम् । न च नीला-दिविशिष्टप्रतियोगिकभेदप्रकारकघटादिविशेष्यकज्ञानं प्रति प्रमायाः प्रतिबन्धकत्वस्य घटादौ नीलादिगुणविशिष्टप्रतियोगिताकाभेदविष-यत्वावच्छिन्नत्वेनोक्तप्रतिबन्धकत्वे उक्ता[1]भेदासिद्धेरुपपादकत्वेऽपि न घटादौ नीलादिगुणाभेदसिद्धिस्तथेति अप्रयोजकत्वामिति वाच्यम् ; गुणगुण्याद्योरभेदान्यसम्बन्धासिद्धया अभेदसम्बन्धेन गुणादिविशिष्ट प्रतियोगिकगुण्यादिनिष्ठाभेदस्योक्तप्रतिबन्धकत्वोपपादकत्वात् । आधा-राधेयत्वस्य लोकैरननुभवात् । न ह्यस्ति धीर्घटे नीलः कपाले घट इति । अपितु घटो नीलः कपालं घट इत्यादि । अतएवेहेति प्रत्ययहेतुः समवायस्तयोः सम्बन्ध इति कणादादिमतमनुभवविरो-धात् हेयम् । किंच घटो न नील इत्यादिज्ञानं प्रति घटविशेष्य-तानिरूपिताभेदसंसर्गतानिरूपितनीलादिगुणप्रकारताकत्वेन प्रतिबन्धकत्वं मया वाच्यम् । नीलो घट इति धियो नीलगुणघटाभेदविषयकत्वस्य मयाऽङ्गीकारात् । नीलादिगुणविशिष्टनिष्ठोक्तप्रकारताकत्वेन तु त्वया वाच्यमिति ते गौरवम् । अथ ममापि समवायेन नीलादिप्रकारतानिरू-मितघटादिविशेष्यताकत्वेन तदिति चेत्तर्हि व्यर्थमभेदान्यनामकरणम् । यत्र यद्विशिष्टभेदज्ञानं प्रति यत्सम्बन्धेन त्वदाभिमतसमवायान्यसं-योगाद्यविषयिका तयोर्विशिष्टप्रमाप्रतिबन्धिका स एव हि तयो-रभेदः घटो द्रव्यमित्यादिप्रमायां त्वयाऽपि तथाऽङ्गीकारात् । एवंच घटो न नील इत्यादिज्ञाने नीलगुणाविशिष्टप्रतियोगिकभेदस्य त्वद्रीत्या विषयत्वेऽपि तत्र नीलगुणाभिन्नप्रतियोगिकभेदत्वेनैव विषयत्वं स्वीक्रि-यते । तथा सति हि तज्ज्ञानं यत्रोक्तभेदप्रकारकं तत्र नीलगुणाभेद-

[1] उक्त,

ज्ञानस्य तत्पूर्वमभावनियमेन तत्र नीलगुणभेदप्रकारकत्वसम्भवेन तद्रूपेणैव प्रतिबन्धकत्वं कल्प्यत इति लाघवम् । तादृशानुमित्यादेरप्युक्तप्रकारकत्वेन नीलाभिन्नप्रतियोगिकभेदव्याप्यपरामर्शादिकार्यत्वसम्भवात् । किंच गुणगुण्याद्योः समवायस्वीकारे तदन्तर्भावेणापि ज्ञानयोः प्रतिबध्यप्रतिबन्धकत्वं कल्प्यमिति ते गौरवम् । तादात्म्यान्तर्भावेण तु तत्तवापि क्लृप्तम् । एवं नीलगुणादिकं प्रति तद्व्यधिकरणतद्भेदत्वेन मे हेतुत्वम्, तव तु समवायावच्छिन्ननीलादिप्रतियोगिताकतादृशात्यन्ताभावत्वेनेति गौरवम् । घटो रूपमित्यादिकं तु लोकैरनुभूयत एव । पटे रूपमित्यादिकं तु काणादादिमतवासनाविलासः । उक्तं हि भामत्यां 'उभयथा च दोषात्' इति सूत्रे 'अनुभूयते हि पृथिव्यादिकं गन्धाद्यात्मकं लोकैः' इति । पुराणवचनान्यपि—

आकाशं शब्दमात्रं तत्स्पर्शमात्रं समाविशेत् ।
द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मनो भवेत् ॥

इत्यादीनि । एवमनुभवागमसिद्धं गुणगुण्याद्योरभिन्नत्वं वैशेषिकैरशक्यापह्नवमिति । मास्तां वा रूपत्वघटत्वादिभ्यां आत्मत्वदेहत्वाभ्यां इति वा भेदः । किन्तु भेदस्स एव च घटो रूपवानित्यादिबुद्धौ सम्बन्धः, घटत्वपटत्वादिभ्यां भेदस्तु घटपटयोर्न सम्बन्धः अबाधितप्रत्ययाभावात् । अथवा रूपत्वघटत्वादिभ्यां तादात्म्यस्य वृत्तिनियामकत्वस्वीकारात् तदवच्छिन्नाकारतैव उक्तबुद्धौ सम्बन्धः, न तु तदेव घटो न रूपमिति बुद्धौ, तस्याः प्रतिबन्धकतापत्तेः । नचातिरिक्ताधारताकल्पने गौरवमिति वाच्यम्, समवायपक्षेऽपि तदावश्यकत्वात् । समवायस्यैवाधारतारूपत्वे तु रूपं घटवदिति बुद्ध्यापत्तेः; तत्र च तादात्म्याख्यसम्बन्धे समवायत्वरूपोऽखण्डधर्मो न कल्प्यते क्वाप्यक्लृप्तत्वात्, किन्तु तादात्म्यत्वरूपः द्रव्यघटाद्योस्ता-

दात्म्ये कॢप्तत्वात्। यद्वा घटादौ रूपादेः प्रतियोगितारूपादौ घटादेरनुयोगितासम्बन्धः घटस्य रूपमिति प्रतीतेः घटादौ तदभावस्य तदभावे च घटादेः वृत्तिनियामकयोस्तयोः कॢप्तत्वात्। संयोगवदेकत्र वृत्तिनियामकस्याप्यपरत्र तत्त्वसम्भवात् यद्वा घटरूपाद्योरिव घटादितदभावयोरपि तन्निष्ठभेद एव सम्बन्धः सम्बन्धत्वेन कॢप्तत्वादिति दिक्॥

"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"

इत्यादेस्तु नामान्तराविशेषणं शुक्लादिपदं पुंसि, नामान्तरविशेषणं तु तत्समानलिङ्गमित्यादिरर्थः. यथाश्रुतार्थत्वे शुक्लं रूपमित्यादेरसाधुत्वापत्तेः। अत एवाधारत्वानियामकोपि गगनादिसंयोगवदभेदान्य एव सम्बन्धोस्त्वित्यपि निरस्तम्। आधारत्वानियामकत्वाविशेषेऽपि क्रियाजन्यत्वादिना संयोगत्वस्येव भेदधीप्रतिबन्धकधीविषयत्वेन अभेदत्वस्य सिद्धेः। अथैवमपि भेदांशसिद्धौ कस्तर्कः? उच्यते—भेदं विना न सम्बन्धः घटो घट इति विशिष्टानुभवस्य लोकानामभावात्। न च घटो घटवानिति लोकैरनुभवात्संसर्गप्रतियोग्यनुयोगिनोः तद्व्यक्तित्वाभ्यामेव भेदोपेक्षित इति प्रतियोग्यनुयोगितावच्छेदकान्तर्भावेन भेदसिद्धौ न तर्क इति वाच्यम्; घटो द्रव्यमित्यादौ तद्व्यक्तित्वाभ्यामपि प्रतियोग्यनुयोगिनोः भेदाभावेन घटो घटवानित्यादिस्थलेऽपि भिन्नरूपेणैव लोके संसर्गप्रतियोग्यनुयोगितयोः स्वीकारात्। प्रतियोग्यनुयोगितावच्छेदकरूपाभ्यां भेदाग्रहे संसर्गाग्रहात् भेदभ्रमे संसर्गभ्रमाच्च भेदज्ञानस्य संसर्गज्ञानकारणत्वे आवश्यके घटो द्रव्यमित्यादौ कारणीभूतभेदज्ञानस्य भ्रमत्वे तत्प्रयोजकानन्तदोषकल्पनापेक्षया प्रमात्वकल्पनस्यैव युक्तत्वात्। प्रमात्वाकल्पनेऽपि सिद्धान्ते प्रातिभासिकभेदसिद्धेरनपायात्। नचैवं सिद्धान्ते घटो घट इत्यादिधीरपि स्यात् प्रातीतिकभेदसम्भवादिति वाच्यं, तत्र भेदाकारवृत्तेः

आहार्यत्वेन ज्ञानत्वस्यास्वीकारेण स्वीकारेऽप्यनाहार्यस्यैव हेतुत्वेन उक्तहेत्वभावेन उक्तबुद्ध्यनुत्पादात्। न च भेदस्य प्रातीतिकत्वेन व्यवहारकालेऽपि बाधात् तदा तद्धटितं कपालं घट इत्यादिधीप्रमात्वं न व्यवह्रियेतेति वाच्यं, इष्टत्वात्। तदा घटत्वकपालत्वजात्योरप्यैक्यज्ञानेन उक्तबुद्धेरनुत्पादाच्च। संयोगविशेषवत्कपालत्वरूपेण घटत्वेनोक्तधीरप्युक्तयुक्ते. भेदज्ञानमपेक्षत एव, संसर्गप्रतियोग्यनुयोगितावच्छेदकयोः भेदस्यावश्यकत्वात्। यदिचैकरूपेणापि संयोगादिसंसर्गप्रतियोग्यनुयोगितेत्याग्रहः, तथापि अभेदसंसर्गं प्रति तथा नैव। वस्तुतस्तद्धटे स्वकीयसंयोगादिसत्त्वेऽपि तद्धटः तद्धटीय इति प्रत्ययाभावात् तद्व्यक्तिभिन्नवृत्तिसंयोगादिरेव तद्व्यक्तिसम्बन्धः। अतः घटो द्रव्यमित्यादौ अभेदसम्बन्धस्थले तद्व्यक्तेः स्वतो भेदाभावात् द्रव्यत्वघटत्वादिरूपाभ्यामौपाधिको भेदोऽवश्यं वाच्यः। अतएव घटाभावे घटो नास्तीत्यादावपि एकत्वविशिष्टघटाभावत्वकेवलघटाभावत्वाभ्यां भेदात्सम्बन्धः। नच प्रतियोग्यनुयोगिभावः सम्बन्धनियामकः। न च घटाभावो घटाभाववानित्यादौ विद्यमानोपि तद्धटस्तद्धटीय इत्यादौ नास्त्यननुभवादिति वाच्यम्, घटो द्रव्यमित्यादौ प्रतियोग्यनुयोगिनोः स्वतोभेदाभावस्थले औपाधिकभेदान्यप्रतियोग्यनुयोगित्वकल्पने गौरवात्। तथाच तद्धटे स्वकीयसंयोगादिसत्त्वेऽपि तद्धटस्तद्धटीय इति धीप्रमात्वाभावाद्विशेषणभेदमात्रस्य विशेष्यगततया प्रमात्वनियामकत्वासम्भवाच्च। विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणसंयोगादिरूपस्य तद्धटसम्बन्धस्याश्रये संयोगादिसम्बन्धेन तद्धटप्रकारकज्ञानत्वं संयोगादिसम्बन्धेन तद्धटप्रमात्वमित्येवंरीत्या प्रमात्वं तार्किकादिभिर्निर्वाच्यम। नचैवं तद्धटस्तद्धटीय इत्यादेः प्रमात्वं दुर्वारं द्रव्यत्वादिविशिष्टे तद्धटत्वावच्छिन्नभेदसत्त्वादिति वाच्यम्, द्रव्यत्वादिविशिष्टस्य तद्धटत्वाद्युपहितान्यत्वेन अविशेष्यत्वात् विशेष्यी-

भूततद्धटे तद्भेदाभावात् । न च विशेष्यतावच्छेदकविशेषणतावच्छेदकयोः भेद एव प्रमात्वघटकोस्त्विति वाच्यम्, अनवच्छिन्नविशेष्यताकप्रमायां तदसम्भवात् । अथानवच्छिन्नविशेषणताकप्रमायां त्वदुक्तिरपि न सम्भवतीति चेत् सत्यं, तथापि विशेष्यीभूता विशेषणीभूता च या व्यक्तिः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदघटितं तद्व्यक्तिप्रमात्वमित्येकोक्तिः सम्भवत्येव । न च सा अनादरणीयेति वाच्यम् एकजातीयप्रमात्वस्य प्रमामात्रे व्यवहारात् । अन्यथा व्याप्त्यादिलक्षणेष्वव्याप्त्युपन्यासस्य प्रलापत्वापत्तेः । एवञ्च घटत्वाद्युपहितनानाव्यक्तिविशेषणस्थले तत्तद्व्यक्तित्वावच्छिन्नभेदघटितामिव तद्घटोपहितमात्रविशेषणस्थलेऽपि तद्व्यक्तित्वावच्छिन्नभेदघटितप्रमात्वमुक्तम् । भेदस्य च विशेष्यीभूततद्धटे विरहात् तद्धटस्तद्धटीय इत्यादेर्न प्रमात्वम् । तथाचाभेदसम्बन्धस्थले तार्किकादेर्विशेषणविशेष्ययो भेदाङ्गीकार आवश्यकः । अन्यथा घटो नीलो द्रव्यं घट इत्यादिधीप्रमात्वासम्भवात् । अतएव घटाभावो घटाभाववानित्यादावपि एकत्वादिवीशिष्टघटाभावत्वकेवलघटभावत्वाभ्यां भेदस्वीकारेणैव निर्वाहः । न च नीलघटादिव्यक्त्योरुक्तरीत्या भेदसिद्धावपि नीलत्वघटत्वादिव्यक्त्योः प्रतियोगितानुयोगितावच्छेदकत्वासिद्ध्या उक्तानुमानानिर्वाह इति वाच्यम्, उक्तरीत्या तत्तन्नीलव्यक्तित्वतत्तद्धटव्यक्तित्वानां येषु भेदेषु प्रतियोगितानुयोगितावच्छेदकत्वं सिद्धं तेषु नीलत्वघटत्वादीनां प्रतियोगितानुयोगितावच्छेदकत्वावश्यकत्वात्, यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः विशेषाभावकूटस्यैव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपेण सामान्याभावत्वेन व्यवस्थाप्यत्वाच्च, न च तत्प्रतियोगिकतत्सम्बन्धानुयोगिनि तत्सम्बन्धेन तत्प्रकारकधीत्वं तत्सम्बन्धेन तत्प्रमात्वमिति वाच्यम्, दूषितत्वात् । किंच सम्बन्धप्रतियोगितानुयोगितयोः तद्धटादिस्वरूपत्वे येन संयोगेन तद्धटतत्पटयो-

मिथो विशिष्टप्रमा तेन तद्घटस्तद्घटीय इति प्रमापत्तितादवस्थ्यं, तत्संयोगस्य तद्घटप्रतियोग्यनुयोगित्वासत्त्वात्। तयोस्तदतिरिक्तत्वकल्पने च गौरवम्। मन्मते द्रव्यत्वघटत्वादिभ्यां भेदस्य कल्प्यत्वे यः भूतलघटयोः[1] भेदः क्लृप्तः स एव। न च तत्सम्बन्धीया तदभिन्ना या प्रतियोगिता तन्निरूपितानुयोगितारूपे तत्संबन्धेन तत्प्रकारकधीत्वं तत्संबन्धेन तत्प्रमात्वं पटात्मकप्रतियोगितानिरूपितानुयोगितारूपे तद्घटे स्वप्रमात्ववारणाय तदभिन्नेति तत्तद्विशेषणाभिन्नपरमिति वाच्यम्, तथापि हि द्रव्यं घट इति धीरिव द्रव्यं द्रव्यमिति धीरपि प्रमा स्यात्। द्रव्याभिन्नघटात्मकप्रतियोगितानिरूपितानुयोगिताया द्रव्यस्वरूपत्वात्। न हि मन्मत इव त्वन्मते द्रव्यघटयोर्भेदः, त्वयौपाधिकभेदास्वीकारात्। न च द्रव्यत्वघटत्वादिभ्यां भेदप्रतियोग्यनुयोगिभावोऽपि त्वन्मते अतिरिक्तः कल्प्यत इति गौरवमिति वाच्यम्, त्वन्मते सर्वत्र प्रतियोगित्वानुयोगित्वयोः अतिरिक्तयोः कल्प्यत्वात् भेदप्रतियोगितानुयोगितयोः स्वावच्छेदकधर्मस्वरूपत्वाच्च। नच मन्मतेऽपि यत्र स्वाभाविको भेदस्तत्र भेदेनैव निर्वाहः यत्र तु द्रव्यत्वघटत्वादिभ्यां औपाधिको भेदस्त्वयोच्यते तत्रैवातिरिक्तयोस्तयोः कल्प्यत्वमिति वाच्यम्। एवं सति तद्घटः तद्घटीय इत्यादिधीप्रमात्वं तद्घटधीभिन्नवृत्तिसंयोगादिघटितम्, तादात्म्येन प्रमात्वं तु सम्बन्धप्रतियोग्यनुयोगित्वघटितमिति वैरूप्यं स्यात्। तत्प्रतियोगिकभेदेति नाम विहाय तत्प्रतियोगितानिरूपितसम्बन्धानुयोगितेति नाम त्वया कृतमिति पर्यवसानाच्च। एतदभिप्रायेणैव 'यथा च तत्राभेदः' इत्यादि वक्ष्यति। तस्माद्वयोरभेदसम्बन्धः तयोर्भेदः सर्वैरपि वाच्यः, विशिष्टकेवलार्थोर्भेदं विना तज्ज्ञानादीनां मिथो वैलक्षण्यासिद्धेः। भेदज्ञानस्य विशिष्टधीमात्रहेतुत्वात् प्रमात्वस्य भेदघटितत्वाच्च। अथवा समानाभिकृतत्वादाधा-

---

1 घटाद्योः

रतावच्छेदकतानवच्छेदकरूपावच्छिन्नत्वसम्बन्धेन गुण्याद्यंशे प्रमाप्रकारत्वात्। तथाच यो यदवच्छिन्नविशेष्यतानिरूपितोक्तरूपावच्छिन्नसंसर्गतानिरूपितप्रमाप्रकारतावच्छेदकः स तदवच्छिन्नानुयोगिताकभेदाभेदोभयप्रातियोगितावच्छेदक इति व्याप्तिः। न चाप्रयोजकत्वं, नीलो घट इत्यादावाधारतावच्छेदकतानवच्छेदकरूपेणैव सम्बन्धस्योक्त युक्तिभिस्सिद्धया तादात्म्यजातीयस्य घटो द्रव्यमित्यादौ क्लृप्तस्य तादृशत्वेन उपपत्तावतिरिक्तसमवायकल्पने गौरवात्। गुणादीत्यादिना क्रियावयवजातिविशिष्टांशानां गुण्यादत्यिादिना च तद्वतां ग्रहणम्। न च कुण्डलत्वादेः कनकत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभेदानुयोगितावच्छेदकत्वे—

कार्यात्मना तु नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥

इति भामत्युक्तभेदाभेदवादिकारिकया कारणतावच्छेदकरूपेणाभेदस्यैव कार्यतावच्छेदकरूपेण भेदस्यैवोक्त्या विरोध इति वाच्यम्, तया कटककुण्डलयोः कटकत्वकुण्डलत्वाभ्यामत्यन्तभेदः कटकत्वकनकत्वाभ्यां तु भेदाभेदावित्यस्मदनुकूलस्यैवोक्तत्वात्। तथाहि—कार्यात्मना तु कटकत्वकुण्डलत्वादिरूपैः कार्यमात्रधर्मैरेव नानात्वं, कारणात्मना—कारणगतधर्मेण। कार्यात्मना त्वित्यनुषज्यते अभेदोऽपि। तथाच कारणगतधर्मकार्यमात्रगतधर्माभ्यां तु अभेदापीत्यर्थ इति व्याख्या संभवति। भेदाभेदवादिना त्रिदण्ड्यादिना ब्रह्मरूपज्ञानप्रपञ्चरूपज्ञेययोरभेदोक्तेर्व्यभिचारः[1]। व्यभिचारादिस्तु न सम्बन्धः। संबन्धोपि न धूमादिप्रकारतावह्न्यादिविशेष्यताभ्यां निरूपितसांसर्गिकविषयताकः। दृष्टान्तस्तु पूर्ववत्। येन द्रव्यत्वघटत्वाभ्यां न भेद उच्यते तं प्रत्युक्तयुक्तिभिः तस्य प्रसाध्यत्वात्।

---

[1] न व्यभिचारः.

तदुक्तं शारीरकसंक्षेपे—

अविरुद्धविशेषणद्वये प्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोः ॥

इति । एकता—अभेदः[1] । यत्तु भिन्नाभ्यामेकधर्मिबोधकत्वरूपशाब्दसामानाधिकरण्यघटितहेतुना भेदाभेदसिद्धिरिति परिमळादावुक्तं तस्याप्युक्तरीतौ तात्पर्यम् । यथाश्रुते भेदासिद्धेः[2] पूर्वमुक्त हेतोरसिद्धेः भेदांशसाधकतर्कानुत्थापकत्वेन अप्रयोजकत्वाच्च । ननु भेदाभेदयोरेकत्र युगपन्न ग्रहणं तद्धियोर्मिथो विरोधित्वात् युगपदुभयानुभवबलाद्गुणगुण्यादिस्थले तदनङ्गीकारे प्रथमोक्तहेत्वसिद्धिः । न चैकस्यैवैकदा ग्रहणं अविनिगम्यत्वात्; द्वयोः ग्राहकसन्निकर्षाद्यविशेषात् । सामानाधिकरण्यप्रत्यये व्यक्त्योर्भेदाभेदौ चकास्त इत्यादिभामतीविरोधाच्चेति चेन्न । प्रत्यक्षे मिथस्समानाधिकरणत्वेन तयोः युगपद्भानेऽप्यन्यतरविरोधितया एकतरस्य शाब्दादिबुद्धेः प्रतिबन्धकत्वसम्भवात् । एकांशधीप्रतिबन्धकदोषसत्त्वे तद्विरोधितया अन्यांशप्रत्यक्षेऽपि तत्सम्भवात् । अन्यतरसमानाधिकरणत्वेन अज्ञायमानतद्विषयकज्ञानत्वमेव तद्विरोधितया तज्ज्ञानत्वम् । तेन न प्रमात्वघटितहेत्वसिद्धिः अव्याप्यवृत्तिस्थले सर्वैरपि तथा वाच्यत्वात् । भामत्युक्तिरसति दोषे । अत एवात्यन्ताभेदे अन्यतरस्य भामत्यां द्विरवभासमात्रं दूषणमुक्तम् । न तु भेदानुभवविरोधः, भेदानुभवस्य त्वन्मतेऽप्यसार्वत्रिकत्वात् । अन्यतरस्याभिन्नस्य धर्मिणो द्वाभ्यां रूपाभ्यामवभासमात्रं न त्वेकरूपावच्छिन्ने अपररूपावच्छिन्नस्य विशिष्टधीः, अत्यन्ताभेदे सम्बन्धासम्भवादिति तदर्थः । अथैवमपि भावाभावावेकत्र कथम्? नचावच्छेदकभेदेनैव तौ साध्याविति वाच्मम्, एकावच्छेदेन तत्साधकयुक्तेरेवोक्तत्वात् । भामत्यादौ तन्मतस्य विरोधोक्त्या दूषणासङ्गतेः । मणिकारैरपि

---

1 अत्यन्ताभेदः. 2 अभेदासिद्धेः.

"न चैवं भेदाभेदः" इत्यनेन तन्मतमापाद्य अवच्छेदकभेदेन स्वमते तन्मतवैलक्षण्यस्योक्तत्वाच्चेति चेन्न। सामान्यतो विरोधेऽपि हि अव्याप्यवृत्तिस्थले अवच्छेदकभेदेनेव प्रकृते तद्भेदेनापि तयोरेकत्र सम्भवः, धीबलस्याविशेषात्। तदुक्तं भामत्यां—"विरुद्धमिति नः क्व सम्प्रत्ययो यन्न प्रामाणिकम्" इति। तदेतत्सर्वं सिद्धान्ते अनुकूलम्। परं तु एकत्र शुक्तिरजतत्वयोः प्रतीतिसत्त्वेऽपि तद्बला-बलपरीक्षया तदुचिततत्सत्ताभ्युपगमात् भेदाभेदावपि भिन्नसत्ताकौ तत्राप्यभेदसम्बन्धत्वाद्यन्यथानुपपत्त्यैव भेदस्य कल्प्यत्वात् व्यावहार-दशायामेव विशेषदर्शनबाध्यत्वाच्च। भेदः प्रातिभासिकः, तदुप-जीव्योऽभेदो व्यावहारिकः। न च कार्यकारणभाव एव भेदोपजीव्य इति वाच्यम्। स एव तथेत्यपरिविशेषात्, कार्यकारणभावस्यापि प्रतीय-मानतादात्म्यघटितान्वयव्यतिरेकग्रहोपजविकत्वात्, सांख्यादिमते वक्ष्य-माणरीत्या तस्यैवाभावाच्च। अत एवाभेदोपादानाभेदकल्पनेति भाम-त्यामभेदस्योपजीव्यत्वेनोपादानमस्याम्। सा तथा। अत एव ब्रह्मप्रपञ्च-योरपि भेदाभेदौ। तथैवोक्तं परिमळादौ। यत्तु भिन्नयोरभिन्नसत्ता-कत्वमेव सिद्धान्ते सामानाधिकरण्यधीमात्रविषयः गुणगुण्याद्योर्मिळि-तत्वेन स्वोपहितसत्ताभेदकत्वाभावादित्याश्रमस्वाम्यादिभिरुक्तम्, तत्रेदं चिन्त्यम्—सत्ताप्रतियोगिकभेदशून्यत्वं न कुत्रापि सत्तायामिति तत्प्र-वेशे अप्रसिद्धिः। घटपटाद्यवच्छिन्नसर्वसत्तानुगतसत्तात्वावच्छिन्नभेद-शून्यत्वं कपालतन्त्वाद्यवच्छिन्नसत्तास्वस्तीति तत्प्रवेशे पटः कपाल इत्या-दिव्यवहारापत्तिः। तत्कपालादिरूपाविशेषणीभूतव्यक्तितादात्म्यवत् सत्ता-त्वावच्छिन्नभेदशून्यसत्तायाः विषयत्वे घटस्सन्नित्यादौ तदसम्भवः, विशेषणीभूतमहासत्तायां सम्बन्धत्वेन वाच्यायां तस्यामेव तादात्म्या-भावात् घटावच्छिन्नसत्तातो भेदसत्त्वाच्च। अथ घटाद्यवच्छिन्नं सत्त्व-मेव तत्र घटादौ महासत्तायाः सम्बन्धः न तु स्वात्यन्ताभिन्ना सैवेति

चेन्न, अवच्छिन्नसत्तात्वापेक्षया महासत्ताव्यक्तितादात्म्यवत् सत्तात्वस्य गुरुत्वेन अनवच्छेदकत्वादप्रसिद्धिः। अथायं घट इत्यादौ घटत्वादिजातेरिव महासत्ताया अपि स्वरूपत एव निवेशः न तु तद्व्यक्तित्वेन; तथाच महासत्तातादात्म्यमवच्छेदकतानिरूपकत्वरूपेणावच्छिन्नत्वेन सममिति चेत्, तथापि घटः कपाल इत्यादौ तत्कपालत्वादिघटितं घटस्सन्नयं घट इत्यादौ च विशेषणस्वरूपमात्रघटितमिति सर्वत्र विशेषणस्य तद्व्यक्तित्वेनाघटकत्वात्। सम्बन्धवैरूप्यं गुरोरवच्छेदकत्वस्य वैरूप्यस्य वा अङ्गीकारेऽपि अवच्छिन्नसत्ता सतीति न स्यात्; अवच्छिन्नसत्तायामवच्छिन्नसत्तान्तराभावात्। अथावच्छिन्नसत्ता स्वास्मिन्नपि सम्बन्ध इति चेन्न; सम्बन्धान्तरसम्भवे तस्या एव तस्यास्सम्बन्धत्वस्यायुक्तत्वात्, महासत्तातादात्म्यस्यावच्छिन्नसत्तायामावश्यकत्वात् चिद्रूपमहासत्तायाश्चेत्यमात्रे तादात्म्यस्य त्वयाऽपि वाच्यत्वात्। अन्यथा तत्तद्विशेषणतादात्म्यवत् सत्तेत्यादिपूर्वोक्तासङ्गतेः वैरूप्यभङ्गस्य सर्वत्र कल्पिततादात्म्यसम्बन्धत्वाङ्गीकारेणापि सम्भवात्। अथ कपालघटाद्योः तादात्म्यं न क्लृप्तम्। अवच्छिन्नसत्ता तु क्लृप्तेति चेन्न; कपालाद्यवच्छिन्नचिति घटादेः घटाद्यवच्छिन्नचिति कपालादेश्च तादात्म्यस्याप्यन्योन्याध्यासानुरोधेन क्लृप्तत्वात्। तस्य च स्वरूपसम्बन्धेन चितीवावच्छेदकतया घटादावपि सत्त्वात्। एतेनावच्छिन्नसत्तायाः तद्व्यक्तित्वेन सर्वत्र सम्बन्धत्वान्न वैरूप्यमित्यपास्तम्। सत्तादात्म्यं सदिति तु सत्तादात्म्यं सत्सदित्यादिवत् नाभ्युपेयते। किंचोद्भूतरूपत्वादिना कारणत्वादेः नीलो घट इत्याकारकधीत्वादिना प्रतिबन्धकत्वादेश्चासम्भवः। एकजातीयसम्बन्धासम्भवात्। मन्मते च तादात्म्यत्वरूपाखण्डधर्माङ्गीकारेण तत्सम्भवात्। न च स धर्मोऽवच्छिन्नसत्तायामेवेति वाच्यम्। अवच्छिन्नसत्तायाः स्वासम्भवेन अवच्छिन्नसत्ता सतीति प्रतीत्यसम्भवस्योक्तत्वात्।

अपिच तद्रूपस्य तद्धट इव तदीयरसादावपि कुतो न प्रमा तत्र तत्सत्ताव्यक्तित्वेन न सम्बन्धताप्रतीत्यभावादिति चेन्न ; प्रतीतेरेवापाद्यत्वात् । कदाचिद्दोषात्तदुत्पत्तेः तद्रसो न नील इत्यस्य भ्रमत्वापत्तेश्च । एवं सन्मनः सद्भूतलमित्यादिवत् सुखं मनो घटो भूतलमित्याद्यपि स्यात् । सिद्धान्ते वृत्तिरूपेण परिणतमनसो घटादेश्च मेळने तदुपहितसत्तयोरिव मिळितभूतलघटाद्युपहितसत्तयोरैक्यावश्यकत्वात् । एवं घटो मन इत्याद्यपि आपादनीयं, मन्मते तद्रसावच्छेदेन तद्रूपतादात्म्यानङ्गीकारात् सुखाद्यवच्छेदेन मनआधेयतासंसर्गाध्यासस्यैव स्वीकारेण मनआदितादात्म्याभावात् मनःपरिणामत्वादिरूपेण सुखादौ मनआदितादात्म्याध्यासस्वीकारात् । मनःपरिणामो मन एवेत्यादिव्यवहारस्य 'एतत्सर्वं मन एव' इत्यादि श्रुतेश्चोपपत्तेः । अथ तादात्म्यं स्वरूपसम्बन्धेन स्वाश्रये सम्बन्धो नावच्छेदकत्वेनेति न घटादौ कपालादेस्तादात्म्यं सम्बन्ध इति चेन्न, अविनिगम्यत्वात् । कपालादिकार्यत्वस्य घटादौ प्रतिबन्धकधीविषयत्वस्य च नीलो घट इत्यादौ तादात्म्येनैव वाच्यत्वात् । सत्कार्यत्वस्य सन् 'घट इत्यादिप्रतिबन्धकधीविषयत्वस्य च तादात्म्येनैव क्लृप्तत्वात् । न च कपालादिकं प्रति तत्तादात्म्यं प्रतीव घटादेरवच्छेदकत्वादवच्छेदकत्वमेवास्तु तादात्म्यस्थानीयमिति वाच्यं ; परस्पराध्यासानुरोधेन घटादेः कपालादितादात्म्यं प्रत्यवच्छेदकत्वेऽपि कपालादिकं प्रति अवच्छेदकत्वे मानाभावात् । सद्धटाद्योर्मिथो विशिष्टबुद्ध्यनिर्वाहाच्च । घटादेः सत्सम्बधावच्छेदकत्वेऽपि सद्रूपाधिकरणं प्रत्यनवच्छेदकत्वात् सत्सम्बन्धस्य घटादाववच्छेदकत्वेऽपि सतो नावच्छेदकत्वं, किन्तु अवच्छेदकतावच्छेदकत्वं, घटादिस्तु चिद्भास्यतानियामकः चिन्निष्ठः स्वसम्बन्ध इव सत्सम्बन्धे अवच्छेदक. बाधकाभावात् । न चावच्छिन्नस्य सत्सम्बन्धस्यावच्छेदकत्वासम्भवात् सदेवावच्छेदकमिति

**दवादिप्रयोगे तार्किकाद्यङ्गीकृतस्य भिन्नत्वस्य सिद्धावपि उद्दे-श्यप्रतीत्यसिद्धेः यथा न सिद्धसाधनं तथा प्रकृतेऽपि मिळि-त२तीतेरुद्देश्यत्वान्न सिद्धसाधनम्। यथा तत्वाभेदे घटः कुम्भ इति सामानाधिकरण्यप्रतीतेरदर्शनेन मिळितसिद्धिरुद्देश्या तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य**

---

वाच्यम् । घटादिना अनवच्छिन्नस्य तदुपादानकपालादिनिष्ठस्य सत्सम्बन्धस्यैव घटादाववच्छेदकत्वमित्युक्तत्वात्। अन्यथा अधिकरणस्य सतोऽवच्छेदकत्वासम्भवात् । किंचाविद्याद्यनादिद्रव्यसतोरवच्छेद्याव-च्छेदकत्वस्य कथमपि विरहात् तत्र विशिष्टबुद्धेः तथापि निर्वाहः । तत्र हि घटादिनिष्ठसत्सम्बन्धं प्रति अवच्छेदकत्वात् सत्प्रत्यवच्छेदक-त्वमज्ञानस्य शङ्कितुं शक्यम् । सतोऽवच्छेद्यघटकत्वात् । अज्ञानं प्रति तु सतोऽवच्छेदकत्वं शङ्कितुमप्यशक्यम्, द्वितीयमिथ्यात्वलक्षणे वक्ष्यमाणरीत्या सत्सम्बन्धस्य कस्याप्यज्ञानं प्रत्यनवच्छेदकत्वेन अव-च्छेदकघटकत्वस्य सति दूरापास्तत्वात् । अत एव सद्विशेष्यकाज्ञान-प्रकारकधीवृत्तिरूपा न तु चिद्रूपेति तत्र वक्ष्यते। यदि च तत्रैव वक्ष्यमाणं सत्सम्बन्धस्याज्ञानावच्छेदकत्वपक्षमालम्बसे तदा सतोऽधि-करणत्वादेव नावच्छेदकत्वमित्येव गतिः। तस्मादभिन्नसत्तासमानाधि-करणबुद्धिविषयः सम्बन्ध इति वृद्धोक्तेरभिन्ना सत्ता यत इति व्युत्पत्त्या तदात्मता तत्र सम्बन्ध इत्येवार्थः । अस्तु वा अवच्छिन्नसत्तैव तादात्म्याश्रयः अवच्छिन्नसत्ता सतीत्यत्र तु तादात्म्यं सदित्येव विशेष्य-मेव सम्बन्धः। यथाच घटतादात्म्यप्रतियोगिता नीलत्वादिनैवाच्छिद्यते न तु रूपत्वादिना, घटो रूपमित्यप्रत्ययात्; तथा रूपतादात्म्यप्रति-योगिता घटगुणत्वादिना अवच्छिद्यते, रूपं घटगुण इति प्रत्ययात्; न तु रसत्वादिना रूपं रस इत्यप्रत्ययादिति दिक्। मिळितस्य

**तत्प्रयोजकतया मिलितसिद्धिरुद्देश्येति समानम्। अत एव सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टं साध्यमित्यपि साधु। न च मिलितस्य विशिष्टस्य वा साध्यत्वे तस्य कुत्राप्यप्रसिद्ध्या अप्रसिद्धविशेषणत्वं, प्रत्येकं सिद्ध्या**

---

तत्प्रयोजकतयेति। ननु मिलितस्य हेतूपपादकत्वेऽपि प्रत्येकरूपेण सिद्धिः किमिति नोद्देश्या, यदि भिन्नं स्यात्तदा[1] समानाधिकृतं न स्यादित्यादेरिव यदि सत् स्यात् तदा दृश्यं न स्यात् इत्यादेरपि प्रत्येकरूपेण व्याप्तिग्राहकस्य तर्कस्य सम्भवात्। न च लाघवान्मिलितरूपेणैकैवानुमितिरुद्देश्येति वाच्यम्। न्यायप्रयोगानन्तरप्रत्येकांशाप्रयोजकशङ्कानिरासकतर्कोत्थापनक्रमेण प्रत्येकानुमित्योरुत्पादेन मिळितानुमितिलाघवानुभवात्[2]। पश्चान्मिलितानुमितिस्वीकारे प्रत्युत गौरवादिति चेन्न। प्रत्येकानुमित्योरुत्पादेऽपि न तत्र प्रकृतन्यायवाक्यतात्पर्यं, गौरवात्। किन्तु मिळितानुमितावेकम्यामिति न्यायवाक्यतात्पर्यविषयत्वरूपोद्देश्यता मिळितानुमितेरेवेति भावात्। पक्षहेत्वोरेकत्वे प्रत्येकन्यायप्रयोगस्य गुरुत्वादशक्तिख्यापकत्वाच्च। न चैवमपि प्रत्येकावच्छिन्नविधेयताकानुमितिरेव उद्देश्याऽस्तु भिन्नाभिन्नं सदसन्नेत्यादिघटितप्रयोगसम्भवे भेदाभेदोभयवदित्यादिघटितप्रयोगे गौरवादिति वाच्यम्; येन रूपेणानुमितिविधेयता तेन रूपेण सिद्धिः प्रतिबन्धिका, समूहालम्बनाऽप्यनुमितिः प्रतिबध्या। अत एव वाङ्मनसे अनित्ये इत्यनुमितौ वाङ्मात्रे सिद्धिरपि प्रतिबन्धिकेति मते तदसम्भवात्। भेदोऽभेदश्च प्रकृतहेतूपपादक इत्यादिधीविषयत्वरूपोभयत्वेन साध्यनिर्देशस्य सामान्यतः प्रत्येकांशसाधकतर्कसूचन[3]फलकत्वात्। पश्चात् प्रतिवादिना प्रत्येकांशाप्रयोजकत्वे शङ्किते सूचिता एव मया प्रत्येकसाधकतर्कास्त्वया

---

[1] न स्यात्तदा. [2] लाघवासंभवात्. [3] सूचक.

**मिलितस्य विशिष्टस्य वा साधने, शशशृङ्गयोः प्रत्येकं प्रसिद्ध्या शशीयशृङ्गसाधनमपि स्यादिति वाच्यम् । तथाविधप्रसिद्धेः शुक्तिरूप्य एवोक्तत्वात् । न च निर्धर्मकत्वात् ब्रह्मणः सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्रातिव्याप्तिः;**

तु न बुद्धा इति परकीयाशक्तिख्यापनस्य तत्रापि प्रयोजकत्वात् । वादकथायामपि सामान्यविशेषाभ्यां सुखबोधनस्यैव प्रयोजनत्वात् । **शशीयशृङ्गसाधनमिति**—शशीयत्वविशिष्टशृङ्गस्य साधनं शशियशृङ्गयोरुभयत्वेन तादात्म्येन साधनं वा अर्थः । तेन मिलितसाधनेऽपि दूषणलाभः । **धर्मद्वयशून्यत्वेनेति**—यद्यपि ब्रह्मणः सत्त्वमबाध्यत्वोपलक्षितं तत्स्वरूपमेव, तदन्यत्वे तस्य मिथ्यात्वात् ब्रह्म वस्तुगत्या सत्यं न स्यात् । "प्राणो वै सत्यं, तेषामेष सत्यः, नित्यो नित्यानां चेतनश्चेतनानां, अणोरणीयान् महतो महीयान्" इत्यादिभिः श्रुतिभिः व्यवहारकालाबाध्यत्वरूपप्रपञ्चसत्यत्वापेक्षया अबाध्यत्वाद्युपलक्षितस्वरूपात्मकत्वेन ब्रह्मसत्त्वादेरुत्कर्षोक्तेः । पञ्चीकरणशारीरकतत्संक्षेपादौ ब्रह्मणो नित्यत्वादिस्वभावस्योक्तेश्च[1] । तथाच सत्त्वं न ब्रह्मणो धर्मः प्रपञ्चस्य तु सुतरां न धर्म इति सत्त्वासत्त्वरूपधर्मद्वयेत्याद्यतिव्याप्तिग्रन्थासङ्गतिः । न च स्वरूपस्यापि स्वस्मिन्नभावात् धर्मत्वस्य चाविवक्षितत्वात् नोक्तासङ्गतिरिति वाच्यम्; धर्मद्वयशून्यत्वेनेत्यत्र निर्धर्मकत्वादिति हेत्वसङ्गतेः । तथापि तादृशसत्त्वादेराधारत्वं तादात्म्यं वा ब्रह्मणि कल्पितमवश्यं वाच्यम् । अन्यथा उक्तश्रुतिभिः सत्त्वादेः ब्रह्मधर्मत्वोक्तेरसङ्गतेः । अतएव ब्रह्मणो निर्धर्मकत्वात्तद्धर्माध्यासानुपपत्तिमाशङ्क्य "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इत्युक्तं पञ्चपाद्याम् ।

---

[1] स्वभावत्वोक्तेश्च,

**सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधिकरणत्वात्**

तत्र चकारात् सत्यत्वशुद्धत्वविभुत्वादीनां ग्रहणम्। एवं च सत्त्वाद्युक्तसम्बन्धश्च उपहित एव वर्तते न तु शुद्ध इति तत्र तदभाव एव; उपहिततादात्म्येऽपि शुद्धो न सत्त्वादिधर्मक इत्याशयेनातिव्याप्त्युक्तिः[1]। न चैवमभावोपि स्वोपहिते न तु शुद्ध इति वाच्यम्; भावाभावयोरेकस्यावश्यकत्वं अन्यथा निर्धर्मकत्वानुपपत्तिश्चेत्यभिमानात्। **सद्रूपत्वेनेति**। उक्तसत्त्वसम्बन्धवत्प्रतियोगिकतादात्म्येनेत्यर्थः। उक्तसम्बन्धस्य ब्रह्मण्यपि एव सत्त्वेऽपि तत्तादात्म्यं शुद्धे अस्त्येव शुद्धाशुद्धयोस्तादात्म्याङ्गीकारात्। अन्यथा शुद्धस्याशुद्धोपरागेण भानासम्भवेन संसारकाले स्वप्रकाशत्वं न स्यात्। न हि शुद्धस्य तदा पृथक् भानमस्ति। तथाच सति 'तमेव भान्तमनुभाति सर्वम्' इति शुद्धप्रतिपादकश्रुतेः 'अनुकृतेस्तस्य च' इति सूत्रस्य चानुपपत्तिः। **तदभावेति**। उक्ततादात्म्याभावेत्यर्थः। तथाचोक्ततादात्म्याभाव एव निवेश्यः न तु सत्त्वाभाव इति भावः। न चोक्ततादात्म्यस्य कल्पितत्वेन शुद्धे तदभावोपीति वाच्यम्; प्रतियोगिव्यधिकरणस्योक्ताभावस्य निवेशात्। ननूक्तसत्त्वसम्बन्धोपहितब्रह्मण एव आकाशाद्युपादानत्वात्। सत्त्वोपहितकपालादेः घटाद्युपादानत्वाच्च प्रपञ्चेऽप्युक्ततादात्म्यसत्त्वान्नोक्ताभाव इत्यव्याप्तिः, न च प्रपञ्चे स्वोपहित एवोक्ततादात्म्यमिति तदनुपहितसाधारणप्रपञ्चे अव्याप्त्युक्तिः न युक्ता, सत्त्वानुपहितस्यैव कपालादेरुपादानत्वेन घटादितादात्म्यात् घटादौ न तद्द्वारापि सत्त्वोपहिततादात्म्यमिति वाच्यम्। 'केवलो निर्गुणः' इत्यादिश्रुत्या धर्माभावेऽपि कैवल्ये केवलं ब्रह्मास्ति न तु धर्मोपहितमित्यन्वयव्यतिरेकाभ्यां स्वोपहित एव ब्रह्मणि धर्म इति युक्त्या

[1] उपहिततादात्म्यात् शुद्धेऽपि सत्त्वादिधर्मकत्वव्यवहार इत्याशयेनातिव्याप्त्युक्तिः,

**निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्चेति**

---

च शुद्धे ब्रह्मण्येव धर्मानङ्गीकारात् । प्रपञ्चमात्रस्य सत्त्वादिप्रतीतेः तत्र तदावश्यकत्वादिति चेन्न; स्वाभाविकस्य सत्त्वसम्बन्धस्य उपहितकेवलभावेन तादात्म्यस्य च निवेश्यत्वात्, प्रपञ्चे च सदधिष्ठानतादात्म्यप्रयुक्तस्यैव सत्त्वसम्बन्धस्य सत्त्वात्, सत्त्वोपहितब्रह्मणः तादात्म्यस्य प्रपञ्चे सत्त्वेऽपि उक्तब्रह्मकेवलरूपत्वाभावात् । नन्वेवं सत्त्वानुपहितानिष्ठस्य सत्त्वोपहिततादात्म्यस्याभावः पर्यवसन्नः तथाच सिद्धसाधनम्, ब्रह्मण एव सत्त्वानुपहितत्वेन प्रपञ्चे तूक्ताभावस्य माध्वादिभिः स्वीकारादिति चेन्न; मन्मते चित्तादात्म्यस्य दृश्यमात्रे स्वीकारेणाबाध्यत्वोपलक्षितस्वरूपतादात्म्यवत्त्वरूपस्य सत्त्वोपहितत्वस्य दृश्यमात्रे सत्त्वेपि तन्मते घटादौ जन्यज्ञानाविषयत्वमात्रस्वीकारेण चित्तादात्म्यास्वीकारात् । अबाध्ये दृश्यतादात्म्यस्वीकारेऽपि तदुपाहितघटादितोऽन्यस्य केवलघटादेः स्वीकारादुक्ततादात्म्यानुपहितनिष्ठस्योक्ततादात्म्यस्य केवलघटादौ सत्त्वेन तदभावस्य पक्षतावच्छेदकावच्छेदेनासिद्धत्वादिति दिक् ॥

यदि च निर्धर्मिकभिन्न एव भावाभावयोरन्यतरानियमः तुच्छे तदन्यतरादर्शनात् धर्माभावाश्रयतादात्म्यादेव निर्धर्मकत्वस्य केवलश्रुत्यादौ व्यवहारादिति सूक्ष्मं पश्यासि, तदा अतिव्याप्तिस्तु भ्रान्त्यैवेत्याशयेनाह—**निर्धर्मकत्वेनैवेति** । यदि च शुद्धेऽप्यास्ति धर्मः, तद्वदभेदस्येव तस्यापि कल्पितस्य सत्त्वे बाधकाभावात् श्रुत्यादिनापि परमार्थतो न तत्र धर्म इति प्रतिपादनसम्भवात् अन्यथा तत्रात्यन्तासत्त्वबोधने प्रतीतिविरोधात् । तथाच ब्रह्मणो धर्मत्वेन प्रतीयमानस्य सर्वस्य अभाववत्त्वेन सत्त्वस्याप्यभावादतिव्याप्तिरिति शङ्कितुर्भावः । तथापि सद्रूपत्वेनेत्यस्य अबाध्यस्वरूपत्वेनेत्यर्थः । **तदभावेति** ।

अबाध्यत्वरूपसत्त्वाभावविरोधीत्यर्थः । अबाध्यत्वरूपप्रतियोगिव्यधिकरणसत्त्वाभावेति यावत् । बाध्यवृत्तिस्सत्वाभाव इति तु निष्कर्षः । बाध्यत्वं च ज्ञानजन्यध्वंसप्रतियोगित्वं ज्ञानात्मकध्वंसप्रतियोगित्वादिकं वा प्रकृते ग्राह्यम् । तेन प्रपञ्चे सत्त्वाभावस्य औपाधिकसत्त्वसम्बन्धसमानाधिकरणत्वेऽपि न दोषः । न वा बाध्यवृत्त्यभावस्यैव लक्षणत्वापत्त्या शेषवैयर्थ्यं, उक्तबाध्यवृत्त्यभावस्य ज्ञानप्रागभावादावपि[1] सत्त्वात् तत्र सिद्धसाधनापत्तेः । वस्तुतो ब्रह्मान्यत्वमेव बाध्यत्वं वाच्यम् । अन्यथा ह्यसत्वाभाववैयर्थ्यम् । अथवा निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वादिति निर्धर्मकत्वज्ञानज्ञाप्यादभावरूपधर्मस्यापि ब्रह्मणि बाधादित्यर्थः । तथाच धर्मिसमानसत्ताकस्य सत्त्वाभावस्य आश्रयत्वं प्रकृते वाच्यम् । धर्मिसमानसत्ताकस्य असत्वाभावस्याश्रयत्वं तु लक्षणान्तरम् । तदुभयमपि प्रपञ्च एवेति भावः । दृश्यमात्रं ब्रह्मणि नास्तीति बाधकेन प्रपञ्चतद्धर्मयोः बाधनात् स्वबाधकबाध्यस्य सत्त्वाभावस्य असत्त्वाभावस्य च अधिकरणत्वमेव प्रकृते वाच्यम् । यत्राधिकरणत्वं स्थाप्यं तदेव स्वमिति तु निष्कर्षः । ननूक्ततादात्म्येन[2] रूपेणाभावोऽप्रसिद्धः, सिद्धान्ते तूक्ततादात्म्यस्य ब्रह्ममात्रनिष्ठतया लाघवेन व्यक्तित्वस्यैव प्रतियोगितावच्छेदकत्वात्, तत्तादात्म्यव्यक्तित्वरूपायाः तादात्म्यमात्रविषयकधिय एव तद्व्यक्तित्वेन विषयतया प्रतियोगितावच्छेदकत्वात् । तथैवाभावनिवेशे च सिद्धसाधनमुक्ततादात्म्यमात्रविषयकधीवृत्त्युभयावृत्तिधर्मनिष्ठानवच्छिन्ना च प्रतियोगितावच्छेदकतावच्छेदकता यस्य तादृशाभावत्वेन तत्तद्धीविषयतादात्म्याभावत्वपर्यवसितेन निवेशेऽपि सिद्धसाधनम् । दृश्यानां चालनीयन्यायेन मिथस्तादात्म्याभावात् । एवमबाध्यत्वोपलक्षितस्वरूपत्वमुक्तस्वरूपमात्रधीः तादृशत्वेनाभावोऽप्रसिद्धः उक्तधीवृत्त्युभयावृत्तिधर्मनिष्ठावच्छिन्ना च प्रतियो-

1 ज्ञानतत्सामग्र्यन्यतरजन्यध्वंसप्रतियोगिनि. 2 तादात्म्यत्व.

गितावच्छेदकतावच्छेदकता यस्य तादृशाभावत्वेन तद्धीव्यक्तित्वावच्छिन्नाभावत्वेन वा निवेशेऽपि सिद्धसाधनं; आद्ये प्रपञ्चस्य सत्त्वेऽपि[1] ज्ञानाविषयज्ञानस्वरूपत्वमादायार्थान्तरं, ज्ञानानां ज्ञानविषयत्ववादिप्राभाकरमते ज्ञानेषु चांशतः सिद्धसाधनमिति चेन्न; उक्ततादात्म्यत्वव्यापकविषयताकं उक्ततादात्म्यत्वव्यापकं विषयत्वं वा यत्तद्वृत्त्युभयावृत्तिधर्मनिष्ठत्यादेरबाध्यत्वव्यापकाविषयताकं अबाध्यत्वव्यापकं विषयत्वं वा यत्तद्वृत्त्युभयावृत्तिधर्मानिष्ठेत्यादेश्च निर्दोषत्वात्। उक्तविषयता च शुद्धचिति सत्त्वोपहितचितस्तादात्म्यमित्याकारकज्ञानीया अबाध्यस्वरूपमित्याकारकज्ञानीया च अस्माकं, परेषां चोक्ततादात्म्यं सर्वं प्रमेयमित्याकारकज्ञानीया अबाध्यस्वरूपं सर्वं मेयमित्याकारकज्ञानीया च, तादृशश्च प्रपञ्चे, नाभावः परेषामिति न सिद्धसाधनम्। ज्ञानेषु इच्छाविषयत्वस्य[2] सर्वैरङ्गीकारात्। ज्ञानाविषयज्ञानरूपतया स्वकार्यतादात्म्यादिप्रपञ्चेऽपि उक्ततादात्म्यत्वव्यापकस्येच्छादिविषयत्वस्य अवश्यं स्वीकाराच्च न चरमोक्ते अर्थान्तरसिद्धसाधने। घटादितादात्म्यविषयकवृत्तिधर्मत्वेन तत्तद्व्यक्तित्वावच्छिन्ना प्रतियोगितावच्छेदकता यस्य तादृशाभावस्य पटादौ सत्त्वात् सिद्धसाधनम्। अतोऽनवच्छिन्नेति। उक्तविषयताकत्वादिना सिद्धान्ते न प्रतियोगितावच्छेदकता, किन्तु तत्तद्व्यक्तित्वेन, चिन्मात्रनिष्ठोक्ततादात्म्यनिष्ठप्रतियोगितासमनियतस्य तत्तद्व्यक्तित्ववत एव लघुत्वात्। तन्निवेशे च सिद्धसाधनम्। उक्ततादात्म्यं सर्वं प्रमेयमित्याकारकधियो ब्रह्मविषयकत्वेन अवच्छेदकतया निवेशे सिद्धसाधनम्। तादृशधीसामान्याभावे निवेशिते अप्रसिद्धिः। सिद्धान्ते उक्तसामान्यापेक्षया लघोस्तत्तद्धीव्यक्तित्ववत एव अवच्छेदकत्वात्। परमतेऽप्यबाध्यविषयकत्वादेरेव तदपेक्षया लघुत्वेनावच्छेदकत्वात्। अतो निष्ठान्तं व्यापकत्वादिकं च।

1 सत्यत्वेऽपि.  2 ज्ञानेच्छाविषयत्वस्य.

दिक् ॥

**इति सदसद्विलक्षणत्वरूपप्रथममिथ्यात्वविचारः.**

---

मिथ्यात्वासम्पादकाभावादिघटितं साध्यसामानाधिकरण्यावच्छेदकरूप-व्याप्तिनिरूपकत्वादिरूपं वा । अवच्छेदकत्वादिकं चाखण्डमेव मिश्रादिसम्मतम् । तेन सर्वत्र सर्वाभावसत्त्वात् न व्यापकत्वादि दुर्वचम् । लौकिकव्यवहारोपयुक्ताभावस्य तदीयविशेषणतासम्बन्धानामन्यतमत्वाद्यसाधारणरूपेण वा निवेशात्, उक्तावच्छेदकत्वस्य अभावाद्यघटितत्वाच्च । उक्ततादात्म्यं सर्वं मेयमित्याकारया कयाचिद्धिया तत्तद्व्यक्तित्वेन अवच्छिन्नप्रतियोगिताकः । शुद्धब्रह्मणि धर्माङ्गीकारे तु शुद्ध ब्रह्मनिष्ठायाः अबाध्यत्वव्यापकविषयतायाः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकोऽभावः प्रवेश्य इति तु वस्तुगतिः । व्यापकत्वादिनिवेशे प्रयोजनाभावात् । गुरोरवच्छेदकत्वे तु न काऽप्यनुपपत्तिरित्याद्यभिप्रेत्याह—**दिगिति** ॥

नन्वसत्त्वं[1] सत्त्वेनाप्रतीयमानत्वं, सत्त्वेन प्रतीयमानत्वं च स्वरूपसम्बन्धेन या सत्तादात्म्यप्रकारता तन्निरूपितविशेष्यत्वम् । अस्ति च तादात्म्ये तादात्म्यवति तत्र दृश्ये च स्वरूपसम्बन्धेन सत्तादात्म्यस्य प्रकारता । न च ब्रह्मण्युक्तविशेष्यत्वाभावादेव वारणसम्भवे सत्त्वाभावोपादानं व्यर्थमिति वाच्यम् । सत्सत्प्रतियोगिकतादात्म्यवदिति प्रत्ययाभावेऽपि वस्तुगत्या सतो यत्तादत्म्यं तद्वत्सदिति प्रतीतेः । वस्तुगत्या सतो यत्तादात्म्यं तत्प्रकारतानिरूपितविशेष्यत्वस्य ब्रह्मण्यपि सत्त्वादिति त्वया अभिप्रेतम् । तदयुक्तम्—असत्त्वं हि सत्वेनाप्रतीयमानत्वम् । असच्चेन्न सत्त्वेन प्रतीयेतेत्यादिना त्वयैव तस्य सत्त्वेनाप्रतीयमानत्वे प्रयोजकत्वोक्तेः । इष्टापत्त्यादिना स्वस्यैव स्वंप्रत्या-

---

[1] यत्त्वसत्त्वं.

पादकत्वरूपप्रयोजकत्वासम्भवात्। उक्तासत्त्वस्य अभावसाधनं च व्यर्थम्। न चासद्वैलक्षण्यसिद्धये तदिति वाच्यम्, तस्यासत्साधारण्यात्। 'तद्धैक आहुः असदेवेदमग्र आसीत्' इत्यादिश्रुत्याऽसतः सत्त्वेन प्रतीत्यनुवादात्। न चासत इव तादृशप्रतीतेरनुवादो न सत्तासम्पादक इति वाच्यम्। असद्वादिनस्तादृशप्रतीतिमन्तः इति श्रुत्या प्रतिपादनेन तत्सत्त्वसिद्धेः। न चोक्तश्रुत्या सदेवेत्यादिश्रुत्यर्थस्याभावधीरेवानूद्यते नोक्त-प्रतीतिरिति वाच्यम्। उक्ताभावस्याप्यसत्त्वेन तत्रासीदित्यनेन सत्त्व-प्रतीतिलाभादिति, तत्तुच्छम्। 'असच्चेन्न प्रतीयेत' इत्यत्राप्रतीति-रपरोक्षाध्यासाभिप्रायेण यद्यापरोक्ष्याभावरूपा तदा तस्याः सत्त्वेन अप्रतीयमानत्वेनापादने किंचिन्न बाधकम्। यदि चाध्यासमात्राभिप्रायेण सा सत्त्वेनाप्रतीतिरूपा तदापादकं सत्त्वविषयबुद्ध्यविषयत्वरूपं सत्त्व-प्रतीत्यनर्हत्वमिति न दोषः। उक्तश्रुत्या च सत्त्वेनासिद्धिर्नानूद्यते[1] एक इत्यनेन बौद्धानामेवोक्तेः। तन्मते 'तस्मादसतस्सज्जायते' इत्या-द्यनुपपत्तेः, कथं नु खल्वित्यादिश्रुतिदूष्यत्वस्य त्वन्मते त्वया अनङ्गी-काराच्च। अन्ये च नासत्ख्यातिवादिनः। पतञ्जलिनाऽप्यसद्ज्ञानं सदविषयकमुक्तं 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति सूत्रे। बौद्धाश्च न सत्त्वेनासद्धीमन्तः। तन्मते अर्थक्रियाकारित्वरूपसत्वस्य असति शशविषाणादौ बाधात्। किंच आहुरित्यनेन वचनस्य सत्त्वेनासद्विषयकत्वं लब्धं, तच्च स्वजन्यधीद्वारेति शाब्दधियस्स-त्त्वेनासद्विषयकत्वं वाच्यम्। न च तत्सम्भवति, आहार्यमात्र-निष्ठस्य तस्यानाहार्यस्वभावशाब्दज्ञानावृत्तित्वात्। न हि सवह्नि-र्निर्वह्निरित्याहेत्युक्तेराहार्यप्रतीतिर्लभ्यते। किन्तूक्तशब्दमात्रं वचन-कर्मतया लभ्यते; शाब्दाहार्यस्वीकारेऽपि पूर्वपक्षतया न तदुपन्यासो युज्यते। न हि सवह्निर्निर्वह्निरित्याहेति पूर्वपक्षीकृत्य तद्दूषणाय

[1] सत्त्वेन असिद्धीर्नानूद्य बोध्यते. इति पा.

सचेतसो यतन्ते । एवंच उक्तश्रुतेः सदेवेत्यादिश्रुत्यर्थाभावबुद्ध्यनुवादकत्वमेव । तच्च सदेवेत्यादिना यत्र यद्विधेयकधीर्जनिता तत्र तदभावबुद्ध्यनुवादकत्वम् । न चासदेवेत्यत्र नञ्समासगतत्वात्तदसम्भव इति वाच्यम् । 'अ मा नो ना प्रतिषेधवाचकाः' इति शाब्दिकोक्तेः अकारस्सम्बोधने अधिक्षेपे निषेधे चेत्यव्ययवृत्त्यादावुक्तेश्च अकारस्य स्वतो निषेधवाचकत्वसम्भवेन नञ्विकारत्वाभावेन समासानन्तर्गतत्वात् । नचैवमपि सदित्यस्य विशेष्यवाचकत्वात् तत्सङ्गतैवकारेण इदमात्मकसतोऽन्यन्नासीदिति बोधादकारेण तादृशसदन्यदासीदिति बोधः । तथाच सत्त्वेनासतो धीरागतैवेति वाच्यम् । 'असदेवेदमग्र आसीत्, तत्सदासीत्' इति श्रुतौ 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' इति सूत्रेणासच्छब्दस्य अव्याकृतार्थकत्वनिर्णयादव्याकृतादन्यत् नासीत् अव्याकृतमासीत् तच्च सदिति व्याकृते अग्रकालासत्त्वमव्याकृते अग्रकालसत्त्वं सदात्मकत्वं च विधीयते । तत्राग्रकाले सत्त्वं स्थितिमात्रामिति भ्रमः असच्छब्देन च तुच्छोक्त्या आसीदिति विरुद्धमिति भ्रमश्च स्यात् अतोऽबाध्यस्वरूपसदात्मकत्वं पृथग्विधेयम् । तत्सदासीदित्यग्रकालीनाबाध्यस्वरूपसत्तात्पर्यग्राहकमात्रं वा प्राप्तार्थत्वात् । तथाच तदेकवाक्यतया असदेवेत्यादिश्रुतावपि अव्याकृतपदोपसंहाराद्व्याकृते अग्रकालीनसत्ता अद्वितीयश्रुतावधिकोक्तावपि अव्याकृतव्याकृतयोरग्रकालसत्त्वादभावविधायकत्वाविशेषादसदेवेत्येवकारेणोक्ताभावस्य व्याकृते निषेद्धुमशक्यत्वात् अव्याकृते उक्तसत्ताभावबोधनमात्रस्वीकारात् सत्वेनासद्धीर्दूरापास्ता । यदि च सत एव विशेष्यत्वं, तथाऽपि उक्तश्रुत्या 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्' इति व्याकृतार्थकमिषत्पदयुक्तश्रुत्या च एकवाक्यत्वात् सदन्यत् व्याकृतं नासीदित्येवकारेण बोधेप्युक्तव्याकृतमासी-

दित्येवकारेण न बोधो बाधात् किन्तु सदग्रे नासीदिति । न च तावता नः क्षतिः । यदि चात्मा वा इदमित्यादिवाक्यस्य तद्भाष्योक्तरीत्या अखण्डसत्स्वरूपमात्रप्रतिपादकत्वं पदान्तरसामानाधिकरण्यं च बाधायामग्रादिकं च न विवक्षितं, तथाच तदेकवाक्यतया सदेवेत्यादेरपि तथात्वं तथाप्यसदेवेत्यादेरुक्त एवार्थः । यदि च तुच्छस्य पदानभिधेयत्वादसतो वाक्यार्थानिवेशेऽपि नञ्युक्तवाक्यस्य तदयुक्तवाक्यार्थधीविरोधित्वमानुमाविकमिति सार्थकत्वात् प्रामाण्यमिति छान्दोग्यभाष्यरीतिराश्रीयते तथाप्यसतस्सत्त्वेन धीर्दूरापास्तैव । ननु बौद्धैः शशविषाणादेरर्थक्रियाकारित्वं नोच्यते कार्यप्रागभावस्य तूच्यते अन्यथा 'तस्मादसतः सज्जायते' इत्यत्र 'कथमसतस्सज्जायेत' इत्याक्षेपस्य 'नासतो दृष्टत्वात्' इत्याद्यसत्कारणत्वनिरासकसूत्राणां चानुपपत्तिः । न चाबाध्यस्वरूपसत्त्वेन प्रतीयमानत्वस्यैव मिथ्यात्वशरीरे निवेशादर्थक्रियाकारित्वस्यासत्यङ्गीकारेऽपि न क्षतिरिति वाच्यम्; अर्थक्रियाकारिण एवाबाध्यस्वरूपत्वनियमस्य माध्यमिकान्यबौद्धैरङ्गीकारादिति चेन्न । उक्तश्रुतिसन्दर्भो हि इत्थं व्याक्रियते—यतोऽव्याकृतमुक्तसत्त्वाभाववत् सदग्रे नासीदिति वा तस्मादसतः सज्जायते सतस्सन्न जायते अग्रे इत्यनुषङ्गात् पश्चात् सतः कारणत्वेऽपि न क्षतिः, कुतस्तु खलु सोम्यैवं स्यात् उक्तसत्त्वाभावः किं प्रयोज्यः व्याकृताभावस्याग्रे नाशकसामग्रीप्रयुक्तत्वेऽपि सत्त्वाभावस्य न तदिति भावः । कार्यमात्रे सदन्वयात्कथं न कारणं सदित्याशयेनाह—कथमसतस्सज्जायेतेति । सतस्सन्न जायत इति नेत्यर्थः । अथवा अग्रे सदुत्पत्तौ कारणाङ्गीकारे असदेव[1] कारणं स्यादित्यापत्त्यभिप्रायकं तस्मादित्यादि । कुतस्त्वित्यादि तूक्तार्थम् । कारणं विनैवाग्रे कार्याङ्गीकारे समानेऽपि पश्चात् कार्ये कारणाङ्गीकारतदभावाभ्यां 'तद्धैक आहुः' इति श्रुत्युक्तवादस्वभाववादयोर्भेदः । अतः

---

[1] सदेव.

पञ्चपाद्यादौ तयोः पृथगुपन्यस्य दूषणेऽपि न क्षतिः। उक्तसूत्रं तु स्थिरस्य कारणत्वानङ्गीकारे असदेव कारणं स्यादित्यापाद्य दूषण परम्। अतएव तत्सूत्रस्य स्थिर[1] मनुयायिकारणमनभ्युपगच्छतां वैनाशिकानामभावाद्भावोत्पत्तिरित्यापद्येत। दर्शयन्ति चाभावाद्भावोत्पत्तिं 'नानुपमृद्य प्रादुर्भावात्' इति भाष्ये। अस्थिरात्कार्यमिच्छन्तोऽर्थादभावात् भावमाहुरुक्तमेतत् इत्यादि भामती। बौद्धैरभावस्यार्थक्रियाकारित्वानभ्युपगमात् कथमभावाद्भावोत्पत्तिस्तत्सिद्धान्तत्वेनानूद्य निरस्यते। तत्राह—अस्थिरादिति। आपाद्यानुवादोऽयमिति वदिष्यन् क्षणिकस्य कारणत्वासम्भवमाह—उक्तमेतदित्यादिनेति। तत्र कल्पतरुः—यत्तु अभावात्[2] पुनर्नाचेतनत्वादेव कार्योत्पत्तेरनुपपत्तिः अपितु निरुपाख्यत्वादिति; पञ्चपादिकावाक्येन च निरुपाख्योपादानता जगतः सदन्वयादिति विवरणम्। तत्त्वदीपने निरुपाख्यकारणवादिनं प्रति निरुपाख्यत्वादिति हेत्वसम्भवादाहेत्यवतारितं, तदपि यदि निरुपाख्यं कारणं वदेत्तदा उक्तहेत्वसम्भव इत्यभिप्रायकम्। अतएव शून्यमित्यपर इति भाष्ये सुषुप्ते विज्ञानलेशस्याप्यभावात् अकस्मादेवाहमिति धीसमुदायस्योत्थाने दर्शनादकारणस्य कादाचित्कस्य परमार्थवस्तुत्वाभावात् असदवभास एवाहंकार इति टीका, विषयावभासाभावात् निरालम्बनज्ञानयोगादुत्थितेन स्मर्यमाण[3] विज्ञानत्वाच्च सुषुप्तौ विज्ञानाभावः। किंच सविकल्पकस्य स्वविषयविपरीतनिर्विकल्पकालम्बनत्ववदुत्थानकालीनसत्प्रत्ययोपि स्वविषयविपरीतशून्यालम्बनः। तदेतदाह—सुषुप्त इति। अकस्मादिति उत्थानप्रत्ययस्य पूर्व[4] प्रत्ययशून्यतया कारणशून्यतेति भाव इति तत्र विवरणम्। आलम्बनत्वमुत्तरत्वं, अतएव जन्मादिसूत्रे सर्वकार्यमभावपुरस्सरमनुपलभ्यमानपूर्वावस्थत्वात्, यन्नैवं तन्नैवं यथा परकीयात्मेति। विवरणे अभाव-

[1] अस्थिर. [2] भावात्. [3] अस्मर्यमाण. [4] सर्व.

पूर्वकत्वमेवानुमितं न त्वभावजन्यत्वमिति। यदि च केनचित् असत्सत्त्वेन प्रतयेत तदा सत्तादात्म्यसत्त्वान्यतरवत्त्वमपरोक्षत्वं वा सत्त्वेन प्रतीयमानत्वशब्दार्थः । प्रतीयमानेत्यस्य प्राप्यमानार्थकत्वात् अपरोक्षत्वस्यापि सत्त्वरूपत्वादुक्तार्थपर्यवसानात्। अस्ति च सत्तादात्म्यं स्वभिन्ने तत्त्वं च तत्रातीन्द्रियमपि ईश्वरापरोक्षमेव। न चासत्तथा कस्यापि सम्मतम्। तस्मात् शुक्तिरजतादेः तादृशस्याप्यसदिति व्यवहारो न परस्य युक्तः सत्त्वासत्त्वयोः परस्परात्यन्ताभावरूपत्वोक्तिरपि परस्य न युक्ता, सर्वदेशकालीयात्यन्ताभावप्रतियोगित्वरूपासत्त्वस्य हि भावत्वेन असत्त्वात्यन्ताभावः[1] सत्त्वं वाच्यम्। तथाच त्वन्मते अत्यन्ताभावस्य असन्मात्रप्रतियोगिकत्वस्वीकारेणासत्त्वस्य अत्यन्तासत्त्वापत्तिः। न च तार्किकादिमते तयोर्मिथो विरहत्वोक्तिरिति वाच्यं, स्वमते मिथो विरहत्वेन व्याघातोक्त्यसङ्गतेः। वक्ष्यति व्यासतीर्थः—मया त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वप्रतियोगित्वे सत्वासत्वे इति स्वीकारादित्यादि । एवं मिथ्यात्वलक्षणे सद्भेदनिवेशेऽप्युक्तैव रीतिः। यत्तु सत्त्वासत्त्वयोरभावसाधनेऽपि ब्रह्मवत् जगत्सद्रूपं स्यात् सद्रूपत्वेन प्रमितत्वाविशेषात् अनेकसद्रूपकल्पनापत्तिरूपः तर्कोऽपि नोक्तप्रमितत्वापवादकः। अन्यथा प्रातीतिकोपि सत्तासम्बन्धो जगति न स्यात्. सत्तास्वरूपस्यैव लाघवेनानङ्गीकारसम्भवादिति जगच्छून्यं स्यादिति। सदसद्भेदादिनिवेशे तु व्याघातसाध्यवैकल्यादिति तन्मुख्यमस्तीत्युक्तम्। ब्रह्मणो बाधाभावेन सद्रूपत्वसिद्धावपि जगतो बाधे सन्देहेन विप्रतिपत्त्यधीनेन तदसिद्धः। अतएव तत्र सत्ताधीः न प्रमा संसर्गखण्डनयुक्तिभिः, संसृष्टधर्मिमात्रस्य अप्रमात्वनिश्चयात्। तर्हि ब्रह्मणोपि सत्तासंसर्गधीरप्रमेति चेदेवमेव। तथापि ब्रह्मस्वरूपस्य अबाध्यत्वोपलक्षितत्वमविवादम्। न च तत्रापि बाधावतारः, बाधसाक्षित्वेन व्याघातात्।

---

[1] सत्त्वात्यन्ताभावः.

# द्वितीयमिथ्यात्वलक्षणम्

**प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्या-**

---

व्याघातसाध्यवैकल्यादिकं तु परस्परविरहत्वानङ्गीकारादेव परिहृतम् । तत्तद्बुद्धयभाव एव सत्त्वाभावः तद्भेद एव सद्भेद इत्युक्तरीत्या एकैव तादृशी उक्तिः अग्नौ शलभीकृता ॥

---

'नेह नानास्ति' इति श्रुत्यर्थे विवदमानं प्रति तन्निर्णयाय साध्यान्तरमाह—**प्रतिपन्नेत्यादि** । प्रतिपन्नोपाधिः स्वप्रकारकधीविशेष्योपाधिः । नन्वविद्योपहितचिद्रूपां धियमादाय अविद्याश्रये शुद्धचिति नाविद्याप्रकारकधीविशेष्यत्वं सम्भवति, यो हि चिच्चेत्यसम्बन्धः यस्य चिच्चेत्यसम्बन्धस्य अवच्छेदकः सः तं प्रकारतारूपं प्रति विशेष्यता न वाऽविद्याचित्सम्बन्धंप्रति स कोऽपि तथा । न चाज्ञोऽहमहमज्ञ इति परस्पराध्यासात् अहङ्कारचित्सम्बधोऽज्ञानचित्सम्बन्धावच्छेदक इति वाच्यम् । अज्ञानचित्सम्बन्धावच्छेदेन अहंकाराध्यासेऽपि अहंकारचित्सम्बन्धावच्छेदेन अज्ञानसम्बन्धाध्यासासम्भवादधिष्ठानस्याधारतावच्छेदकस्य चैव सम्बन्धाध्यासो हि आरोप्यचित्सम्बन्धावच्छेदेन स्वीक्रियत इत्युक्तम्[1] । अज्ञानं तु नाधिष्ठानं न वाऽऽधारतावच्छेदकमिति चेन्न; तथा सति अज्ञानसम्बन्धोप्यहंकारसम्बन्धावच्छेदको न स्यात् । अज्ञानाधारतावच्छेदकत्वस्यैवारोप्यसम्बन्धावच्छेदकत्वे नियामकत्वात् । न चेष्टापत्तिरिति वाच्यम्; अज्ञानविशिष्टे अहंकाराध्यासस्य पञ्चपाद्यादौ सिद्धान्तबिन्दौ चोक्तत्वात् । अथ प्रातीतिकारोप्यसम्बन्धावच्छेदकत्वं प्रत्येवोक्तावच्छेदकत्वस्य नियामकत्वात्तदभावेऽपि अज्ञानस्य[2] व्यावहारिकाहंकारसम्बन्धावच्छेदक-

---

[1] इति युक्तम्. [2] अज्ञानसम्बन्धस्य.

त्वमुपपद्यते । अतएव कपालादिसम्बन्धावच्छेदेन घटादिसम्बन्धोपि चित्युपपद्यते । स्वेतरकारणकूटविशिष्टं यत्परिणाम्युपादानं तत्स्वाधिकरणक्षणाव्यवहितोत्तरक्षणावच्छेदेन स्वावच्छेदेन च चित्सम्बन्धस्वपरिणामकं भवतीति व्याप्तेः । न च तत्र मानाभावः । मूले संयोग इतिवत् कपाले घटं साक्षात्करोमीति विशेष्यतारूप एकसम्बन्धावच्छिन्नस्य प्रकारतारूपापरसम्बन्धस्यानुभवादिति ब्रूषे, तर्हि उक्तोपादानमुक्तावच्छेदेन चित्सम्बद्धो यः स्वपरिणामस्तदवच्छेदेन चित्सम्बद्धस्वतादात्म्यकं भवतीति व्याप्तेः । अन्यथा घटवच्छेदेन कपालादितादात्म्योत्पत्त्यनुपपत्तेः घटं कपालं साक्षात्करोमीति प्रत्ययस्योक्ततादात्म्यविषयकस्यापलापापत्तेः । अहंकारावच्छेदेन चित्सम्बन्धमज्ञानतादात्म्यमपि स्वीक्रियताम् । प्रतियोगितासम्बन्धेन तादात्म्यं प्रत्यज्ञानाश्रयत्वतदवच्छेदकत्वयोरिव परिणामाव्यवहितपूर्ववृत्तिपरिणामित्वस्यापि प्रयोजकतया उत्पद्यमानस्य कपालादितादात्म्यस्य घटाद्यवच्छेदेनेव अज्ञानतादात्म्यस्य अहंकारादिकार्यमात्रावच्छेदक[1] चित्सम्बन्धसम्भवात् । न चैवमेकचित्यहंकाराज्ञानयोः सम्बन्धादहमज्ञ इति धीः, न त्वहंकारविशिष्टे अज्ञानसम्बन्धात् । अन्यथा अहमनुभवामीति धीरहङ्कारविशिष्टे अनुभूतिसम्बन्धादित्यपि स्यादिति विवरणोक्तिर्विरुद्धेति वाच्यम् । तस्यानवच्छिन्नमनाद्यपि तादात्म्यमज्ञानस्य चित्यस्ति भावाकारत्वेन[2] अज्ञानस्य तमआदिवदाश्रितत्वनियमात् । अहंकाराद्यवच्छिन्नचिदाश्रितेन तेनाहंकारादिजननासम्भवात् । मुखमात्राश्रितस्य दर्पणादेर्बिम्बप्रतिबिम्बीभूतमुखभेदकत्ववत् चिन्मात्राश्रितस्याज्ञानस्य बिम्बप्रतिबिम्बीभूतचिद्भेदकत्वौचित्यादित्यत्रैव तात्पर्येण कार्यमात्रावच्छिन्नस्य कार्यस्याज्ञानतादात्म्यस्य निरासे तात्पर्याभावात् । यदि चाज्ञानान्यस्य परिणामिन एव परिणामावच्छेदेन

---

1 वच्छेदेन. 2 आवारकत्वेन.

त्वम् । ननु प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वे अद्वैतहानिः, प्रातिभासिकत्वे सिद्धसाधनं, व्यावहारिकत्वेपि तस्य बाध्यत्वेन तात्त्विकसत्वाविरोधितया अर्थान्तरम् । अद्वैतश्रुतेरतत्वावेदकत्वं च तत्प्रयोगिनः प्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्वं च स्यादिति चेन्न; प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम् । न च तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिः; तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारात् । अतात्त्विक एव वा निषेधोऽयम् । अतात्त्विकत्वेऽपि न प्रातिभासिकः; किन्तु व्यावहारिकः; न च तर्हि निषेधस्य बाध्य-

---

तादात्म्यं जायत इति यथाश्रुतविवरणोक्त्यनुसारेण स्वीक्रियते, तदा प्रतिपन्नोपाधीत्यस्य स्वप्रकारकवृत्तिविशेषोपाधीत्यर्थः । वृत्तेश्च विशेष्यताप्रकारके यद्यपि नोक्तरूपे अहं सुखीत्यादिज्ञानस्थले वृत्त्यभावात् भ्रमे विशेष्यताद्यभावस्य उक्तत्वेन च चितस्तत्कल्पनावश्यकत्वेन तव[1] तदुभयवद्ज्ञानानुभवोपपत्त्या वृत्तेस्तत्कल्पने मानाभावात् । तथाप्यनुमित्यादिवृत्तेरेकानुयोगिकापरप्रतियोगिकसंसर्गविषयकत्वेनैव परामर्शादिकार्यत्वेन तदावश्यकत्वात् स्वाकारसंसर्गानुयोगित्वप्रतियोगित्वरूपे । तथाच वृत्तेराकाराख्यगौणविषयताश्रयस्य अविद्यातादात्म्यस्य शुद्धचित्यनुयोगित्वसत्त्वात् . तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य च अविद्यायां सत्त्वात् तेन सम्बन्धेन तस्याः मिथ्यात्वसिद्धिः । वस्तुतः स्वाधिकरणनिष्ठात्यन्ताभावेत्यादिलक्षणे प्रतिपन्नेत्यादेः तात्पर्यस्य वक्ष्यमाणत्वान्न कोपि दोषः । त्रैकालिकनिषेधेति—अत्यन्ताभावेत्यर्थः । नाद्वैतहानिकरत्वमिति—निषे-

---

[1] तत एव.

**त्वेन तात्त्विकसत्वाविरोधित्त्वादर्थान्तरमिति वाच्यम्; स्वाप्नार्थस्य रजतादेः स्वाप्ननिषेधेन बाधदर्शनात्। निषेधस्य बाध्यत्वं**

---

धत्वस्य कल्पितस्याज्ञानेऽपि सद्रूपाधिष्ठानसामान्यज्ञानसम्भवात् नानुपपत्तिरिति भावः। **स्वाप्नार्थस्य रजतादेः स्वाप्ननिषेधेन बाधेति**। स्वाप्नरजतादेः स्वाप्नाभावविषयकबाधेत्यर्थः। न च मनोवच्छिन्नं जीवरूपं ब्रह्मरूपं वा चैतन्यं अविद्यावच्छिन्नं ब्रह्म वा स्वाप्ना[illegible] तद्धीरेव स्वाप्नबाधः; न तु स्वाप्नाभावधीः अधिष्ठानाविषयकत्वात्, स्वाप्नस्य प्रातिभासिकत्वेन अज्ञानविषयतानवच्छेदकत्वाच्चेति वाच्यम्। बाधकत्वस्य स्वाप्नाभावबुद्धावप्यानुभविकत्वेन मनोवच्छिन्नं इव स्वाप्नाभावावच्छिन्नेऽपि चैतन्ये अज्ञान[1] विशेषाङ्गीकारसम्भवात्। न च प्रातिभासिकत्वविरोधः, तत्तदज्ञानान्याज्ञानभावस्य तत्र निवेशात्, अन्यथा मनसोऽपि तद्विरोधापत्तेः। तथाचेदं रजताभाववदित्यादिस्वाप्नबुद्ध्युत्तरकालावच्छेदेन रजताभावादौ साक्षिण्युत्पन्ने प्रकाशप्रसक्त्या तदवच्छेदेनाज्ञानाविषयत्वसम्भवात्। तदानीमुत्पन्नस्येदं रजतमित्यादिस्वप्नस्य तदुत्तरोत्पन्नया इदं रजताभाववदिति धिया बाधः; अथवा स्वाप्नरजताद्यभावोत्पत्तेः पूर्वं प्रकाशाप्रसक्तावपि पश्चात्तद्धीबाधकत्वानुभवादेव तदवच्छेदेनाज्ञानविषयत्वम्। भाव्यवच्छेदेन ज्ञानविषयत्ववत्। एवंच स्वाप्नेषु प्रातिभासिकत्वं यथाश्रुतमेव। यद्वा बाधोऽत्र न साविलासाज्ञाननिवर्तकधीः, किन्तु मिथ्यात्वनिश्चयः। **निषेध्यस्य बाध्यत्वं**—मिथ्यानिषेधप्रतियोगित्वम्। **पारमार्थिकसत्ताविरोधित्वे**—निषेधसत्ताधिकसत्ताकत्वे। न **तन्त्रम्**—न व्याप्यम्। प्रातिभासिकत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य, व्यावहारिकत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्यावहारिक-

---

[1] अवस्था.

**पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्। किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वम्। प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वम्। न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति वाच्यम्, तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति। यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते न निषेधमात्रं निषिध्यते यथा रजते नेदं रजतमिति ज्ञानानन्तरं इदं नारजतमिति ज्ञानेन रजतं व्यवस्थाप्यते यत्र प्रतियोगिनिषेधयोरुभयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वम्। यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोः निषेधः। एवंच प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य निषेधस्य च बाधनान्न निषेधस्य**

---

त्वस्य व्याप्यं नेत्यर्थः। **निषेध्यापेक्षया न्यूनसत्ताकत्वम्।** स्वन्यूनसत्ताकनिषेधप्रतियोगित्वं तन्त्रमित्यनुषज्यते। अप्रातिभासिकनिष्ठं प्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य, पारमार्थिकनिष्ठं स्वसमानाधिकरणव्यावहारिकात्यन्ताभावप्रतियोगित्वं पारमार्थिकत्वस्य व्याप्यमिति निष्कर्षः। **कथं न विरोधित्वमिति।** व्यावहारिकोक्ताभावप्रतियोगित्वस्य पारमार्थिकत्वाव्याप्यत्वं कथं नेत्यर्थः। **रजतं व्यवस्थाप्यते**—रजतत्वं व्यवस्थाप्यते। रजतत्वस्यात्यन्ताभावरूपो रजतभेदो रजतत्वन्यूनसत्ताक इति न रजतत्वस्य मिथ्यात्वनिश्चयः। न च समसत्ताकयोः भावाभावयोः अविरोधे बाध्यबाधकत्वानुपपत्तिरिति वाच्यम्, अभावग्राहकश्रुत्यादिप्राबल्येन वक्ष्यमाणेन तदुपपत्तेः। न च श्रुत्यनुमित्योः परोक्षभ्रमं प्रत्युच्छेदकत्वादात्मसाक्षात्कारपूर्वं तदुच्छेदस्स्यादिति वाच्यम्, तदुपादानमूलाज्ञानानिवृत्तेः। न चैवं स्वान्यूनसत्ताकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन निश्चितत्वस्य बाध्यत्वरूपत्वे स्वाप्नभावाभावयोः द्वयोरपि स्वप्ने बाधितत्वापत्तिरिति वाच्यम्; उक्त-

**बाध्यत्वेपि प्रपञ्चस्य तात्त्विकत्वम्। उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात्। न चातात्विकनिषेधबोधकत्वे**

रूपस्य द्वयोः सत्त्वे इष्टापत्तेः। **निषेध्यतावच्छेदकस्य दृश्यत्वादेरिति।** 'नेह नानास्ति' इति श्रुतौ दृश्यत्वं प्रतियोगितावच्छेदकम्। अभावादसाधारणस्य नानात्वस्य वृत्तिविशेषविषयत्वरूपत्वात्। तच्च न पर्याप्त्यवच्छेदकं, येन युगपत्सर्वदृश्याभावसत्त्वात्[1] परेषामिष्टं, परन्तु स्वरूपसम्बन्धेन। न चैकाश्रयेऽपि नाना नास्तीति प्रयोगात् तत्र पर्याप्त्यैव तत्तथेति वाच्यम्, वायौ नानारूपं नास्तीत्यादौ स्वरूपसम्बन्धेनापि तथा वक्तुं शक्यत्वात्। अन्यथा किंचनेत्यस्य वैयर्थ्यात्। केनापि सम्बन्धेन नानात्ववन्नास्तीत्यस्य ततो लाभात्। घटादेर्नाशप्रत्यक्षेण सर्वदृश्यानां युगपदसत्त्वमविवादमिति नेहेत्यादिवाक्यस्यैव वैयर्थ्यापाताच्च। यदिच 'नेह नानास्ति किंचन मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यस्य 'नात्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नः मृत्योर्मृत्युमाप्नोति' इत्यादिश्रुत्यैकार्थतया नानेत्यात्मभिन्नार्थकं, किंचिनेति च मूढधीविषयार्थकम्। तत्तयोः एकमेवावच्छेदकं अन्यप्रतियोग्यंशे विशेषणमात्रम्! तदुक्तिस्तु भिन्नस्यात्मनि प्रतीयमानस्य तादात्म्यस्यासम्भवात्, विषयस्य विषयिणि स्वप्नवत्कल्पितत्वाच्च सुतरामभाव इति सूचनाय। तवापि[2] तदेव दृश्यत्वम्। आदिना वियत्त्वादिवियदभावत्वादिपरिग्रहः। सम्भवति च भिदानानाशब्दयोः विलक्षणार्थकतया मिथो वैलक्षण्यरूपविषयत्वादेः नेह नानेत्यादौ अवच्छेदकतया धीः। प्रकृतानुमानपक्षतावच्छेदकस्याप्यादिमा ग्रहणादनुमानेऽपि निषेध्यतावच्छेदकं तुल्यं लभ्यते। अनुमाने निषेध्यतावच्छेदकं निषेधप्रतियोगित्वांशे विशेष्यतावच्छेद-

[1] वभासत्वात्.　　[2] तदापि.

**श्रुतेरप्रामाण्यापत्तिः । ब्रह्मभिन्नं प्रपञ्चनिषेधादिकं अतात्त्विकमित्यतात्त्विकत्वेन बोधयन्त्याः श्रुतेरप्रामाण्यासम्भवात् । नन्वे-**

कम् । तेन सामान्यानुमाने पक्षतावच्छेदकस्य प्रतियोगितावच्छेदकतया भानाभावेऽपि न क्षतिः । वस्तुतो निषेधप्रतियोगितावच्छेदकमेवार्थः। सामान्यानुमानेऽपि स्वावच्छिन्ननिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वादेः साध्यत्वात् तुल्यत्वात् भासमानत्वात् । यत्तु स्वाप्नार्थाभावस्य जाग्रत्यबाधानुभवात् न तस्य बाध्यत्वम् । स्वप्नदृष्टत्वेनैव बाध्यत्वे आत्मनोऽपि बाधापत्तिः[1] । एवंच निषेधस्य बाध्यत्वं, प्रतियोगिसत्त्वाविरोधत्वे तन्नमेव । अथ च निषेधनिषेधोपि प्रपञ्चसत्त्वस्यापादकः, तद्विना अनुपपन्नत्वात् प्रतियोगिनो निषेधस्य वा सत्त्वावश्यकत्वात् । अतएव रजतभेदासत्त्वे रजतसत्त्वं त्वयैवोदाहृतम् । प्रागभावप्रतियोगिनोस्तु निषेधः प्रतियोगिसत्त्वं विनाऽप्युपपद्यते, स्वस्यैव सत्त्वादिति । तत्तुच्छम् । जाग्रत्यबाध्यत्वेनानुभूयमानो हि स्वाप्नार्थस्याभावो व्यावहारिक इन्द्रियादिप्रमाणग्राह्यः । तदन्यस्तु स्वाप्नो भावः स्वाप्नवृत्तिविशेषाभिव्यक्तसाक्षिभास्योऽपि न प्रमाणग्राह्यः । किंच स्वप्ने रजतादौ रजतभेदादिकमनुभूयते । तत्र च व्यावहारिकत्वं न शङ्कास्पदम् । रजताद्यात्मकनिषेधेन रजताभावादिकं बाधितमनुभूयते । स च निषेधो न व्यावहारिकः, तदुचितदेशकालकार्यग्राहकाद्यभावात् । स्वप्नदृष्टत्वेनात्मनो न बाध्यत्वापत्तिः दृष्टत्वाभावात्; 'अदृष्टो द्रष्टा' इति श्रुतेः । मूलाविद्यादिकं तु बाध्यमेव, स्वप्नमात्रादृष्टत्वात् । न जाग्रद्धीबाध्यमिति निषेध्यन्यूनसत्ताकत्वेनैव निषेधः प्रतियोगिसत्त्वाविरोधी, न तु बाध्यत्वमात्रेण प्रतियोगिनो निषेधस्य वा सत्त्वं नावश्यकम् । स्वाप्नार्थतन्निषेधयोरसत्त्वात् रजतस्य सत्त्वं तु तदन्यूनसत्ताकाभावा[2]ज्ञानपर्यन्तमिति । **अतात्त्विकेति ।**

[1] बाध्यत्वापत्तेः. [2] सत्ताकाबाधा.

**तन्निषेधप्रतियोगित्वं किं स्वरूपेण, उतासद्विलक्षणस्वरूपानुपमर्देन, पारमार्थिकत्वाकारेण वा, नाद्यः, श्रुत्यादिसिद्धोत्पत्तिकस्यार्थक्रियासमर्थस्य अविद्योपादनकस्य तत्त्वज्ञाननाश्यस्य च वियदादेः रूप्यादेश्च धीकालविद्यमानेन असद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात् । नापि द्वितीयः, अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात् । पारमार्थिकत्वस्यापि स्वरूपेण निषेधे प्रथमपक्षोक्तदोषापत्तिः अतस्तस्यापि पारमार्थिकत्वाकारेण निषेधे अनवस्था स्यादिति चेन्नैवम्; स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चे शुक्तिरूप्ये च अङ्गीकारात् । तथाहि शुक्तौ रजतभ्रमानन्तरं**

---

उक्तमिथ्येत्यर्थः । तथाच 'यजेत' इत्यादिश्रुतेरिवोक्तश्रुतेरपि व्यावहारिकं प्रामाण्यमक्षतम् । तात्त्विकं तु तन्नास्त्येवेति भावः । **किं स्वरूपेणेति**—स्वं मिथ्यात्वधर्मि तान्निष्ठं विषयत्वादिरूपं स्वरूपम् । **पारमार्थिकत्वाकारेणेति । पारमार्थिकत्वं**—अबाध्यत्वव्यापकविषयताकधीः । **तदाकारः**—तद्व्यक्तित्वविशिष्टं तत्स्वरूपम् । तेनोक्तधीत्वस्य तद्व्यक्तित्वापेक्षया गुरुत्वेऽपि न क्षतिः, न वाऽऽकारपदवैयर्थ्यम् । **अबाध्यत्वरूपेति** । बाध्यत्वविरोधिरूपेत्यर्थः । **बाध्यत्वेति** । प्रपञ्चगतेत्यादिः । **निरूप्यत्वेनेति** । उक्तविरोधस्य निरूप्यत्वात् तद्विशिष्टे तदुक्तिः । न च उक्त[1] पारमार्थिकत्वस्य तद्व्यक्तित्वेन अवच्छेदकत्वज्ञानं मिथ्यात्वविरोधत्वज्ञानं विनापीऽति नान्योन्याश्रयः इति वाच्यम्; तद्विना वियत्त्वादि[2]स्वरूपवदवच्छेदकत्वानिश्चयात् । तद्धीव्यक्तेः प्रपञ्चविषयकत्वशङ्कायाः प्रपञ्चाविषयकत्वरूपविरोधनिर्णयं विना निवर्तयितुमशक्यत्वात् । न च तावताऽपि तद्धियः प्रपञ्चाविषयकत्वनिरूपणमेव अपेक्षतां, न तु प्रपञ्चमिथ्यात्वनिरूपणमिति

---

[1] उत्तर. [2] विपक्षादि.

वाच्यम् । मिथ्यात्वेन अनिश्चितप्रपञ्चस्य तद्धीविषयत्वशङ्कासम्भवात्, अबाध्यत्वव्यापकत्वानुरोधात् । न च ब्रह्ममात्रे श्रुतेः तात्पर्यादेव श्रुतिजन्यतद्धीः तथात्वानिश्चय इति वाच्यं, तात्पर्ये संशयानं प्रत्येव प्रकृतानुमानसार्थक्यात् । नापि प्रतिबन्धकवशा तद्धीः प्रपञ्चाविषयणीति निर्णेयमिति वाच्यम्, मिथ्याविषयकत्वे अविद्यानिवर्तकत्वानुपपत्त्यैव प्रतिबन्धकत्वस्य निश्चेयत्वात् । नापि 'तमेवं विदित्वा' इत्यादिश्रुतेः तथा, तस्या अपि उक्तानुपपत्तिमाश्रित्यैव तथा बोधकत्वात् । अन्यथा तन्मात्रधियः अविद्यानिवर्तकस्य अदृष्टद्वारकत्वापत्तेः । अविद्यासमानविषयकत्वं तु शुद्धब्रह्मविषयिण्याः अन्याविषयकत्वेऽप्युपपद्यते न हि[1] घटशुक्तिविषयिणी धीः न शुक्त्यज्ञाननिवर्तिका, मिथ्यात्वे निश्चिते तु मिथ्यार्थे तत्वावेदकश्रुतितात्पर्याभावात् । कदाचित्सामग्रीवशात् मिथ्याविषयकब्रह्मज्ञानोत्पादेऽपि तदभावकाले ब्रह्ममात्रधीः उक्तश्रुतिजन्येति भवति निश्चयः । ततश्च तस्याः अवच्छेदकत्वधीसंभव इति भवत्येवान्योन्याश्रयः । यद्यपि स्वरूपस्यावच्छेदकत्वपक्षे स्वावच्छेदकावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगित्वादीव[2] पारमार्थिकत्वावच्छेदकत्वपक्षेऽपि स्वसमनियतधर्मावच्छिन्नवन्निष्ठेत्यादि वक्तुं शक्यम् । स्वप्रतियोगिताव्यापकमात्रस्य व्याप्यमात्रस्य वा उक्तौ प्रमेयत्वाद्यवच्छिन्नवन्निष्ठघटाद्यभावस्य तद्घटवन्निष्ठस्य एतद्घटत्वेन घटाभावस्य वा प्रतियोगित्वं घटादौ सिद्धमेवेति समनियतेति । एवंच पारमार्थिकत्वनिष्ठावच्छेदकत्वस्य लक्षणे प्रवेशो निष्प्रयोजनः भवति[3] तथाऽपि घटादौ पटत्वेन घटाद्यभावीयप्रतियोगितायाः घटपटोभयत्वाद्यवच्छिन्नप्रतियागितायाश्च स्वसमनियतान्यतरत्वाद्यवच्छिन्नवन्निष्ठाभावीयायाः घटादौ सिद्धत्वात् लाघवाच्च स्वाश्रयसमानाधिकरणात्यन्ताभावीयपारमार्थिकत्वावच्छिन्नप्रतियोगित्वादिकं वाच्यमिति भवत्यन्योन्याश्रयता । विषयता-

[1] न वा. [2] योगित्वादिति [3] भाति.

**अधिष्ठानतत्त्वसाक्षात्कारे रूप्यं नास्ति नासीन्न भविष्यतीति स्वरूपेणेव 'नेह नाना' इति श्रुत्या च प्रपञ्चस्य स्वरूपेणैव निषेधप्रतीतेः। न च तत्र लौकिकपरमार्थरजतमेव स्वरूपेण निषेधप्रतियोगीति वाच्यम्, भ्रमबाधयोर्वैयधिकरण्यापत्तेः अप्रसक्तप्रतिषेधापत्तेश्च। न च तद्धेत्पत्त्याद्यसम्भवः। न ह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे तन्त्रम्। परैरनिषेध्यरूपत्वेन अङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात्। किन्तु वस्तुस्वभावादिकमन्यदेव किञ्चित्प्रयोजकं वक्तव्यम्। तस्य मयाऽपि कल्पितस्य स्वीकारात्। न च त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं**

संबन्धेन पारमार्थिकत्वस्य अवच्छेदकता वाच्या, अन्यथा कालिकादिना पारमार्थिकत्वेन घटत्वाद्यभावमादाय घटत्वादौ सिद्धसाधनाद्यापत्तेः न चाधिकरणान्तं व्यर्थम्। पारमार्थिकत्वेन तद्धटादेः स्वानधिकरणे अभावस्य सिद्धत्वात्, सामान्यरूपेण विशेषाभावानभ्युपगमेऽपि उक्ताभावमादाय अर्थान्तरापत्तेः। यत्तु प्रपञ्चसत्यत्वमते बाध्यत्वाप्रसिद्ध्या अबाध्यत्वव्यापकविषयताकधीरपि अप्रसिद्धेति बाध्यत्वसिद्ध्या उक्तधीसिद्धिः, तत्सिद्धौ च तदवच्छिन्नाभावघटितबाध्यत्वसिद्धिरिति अन्योन्याश्रय इति, तन्न; मिथ्यात्वरूपबाध्यत्वासिद्धावपि अबाध्यं सर्वं वाच्यमिति धियः प्रपञ्चसत्यत्वमतेऽपि स्वीकारात् प्रमेयत्वस्यैव अबाध्यत्वरूपस्य तत्र भानस्वीकारात्। अतएव तम इति धीविशेष्यः भावोऽभावो वेति विवदन्ते। **अनवस्तेति**—अबाध्यं सर्वं वाच्यमिति धियः एकस्या अन्यया भावः[1] तस्या अप्यन्यया एवमन्यासामप्यन्याभिः इत्यनवस्था। ननु एकया स्वभिन्नदृश्यमात्रस्य स्वस्य चाभाव इति वा, स्वेन स्वभिन्नदृश्यस्य स्वाविषयकयाऽन्यया च स्वस्याभाव इति वा, अबाध्यत्वव्यापकविषयताकवृत्त्युभयावृत्तिधर्मनिष्ठानवच्छिन्न-

[1] अभावः.

**रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति मतहानिः स्यादिति वाच्यम् । अस्याचार्यवचसः पारमार्थिकलौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यर्थः । तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः ।**

प्रतियोगितावच्छेदकतावच्छेदकता यस्य तादृशाभाव इति वा वाच्यं, अतो नानवस्थेति चेन्न ; पारमार्थिकत्वाकारेण निषेधेऽनवस्थेति शब्देन तं तं पूर्वपक्षमानूद्य दोषान्तराणामुक्तत्वात् । तथाहि, पारमार्थिकत्वाकारेणेत्यस्य स्वेनेत्यर्थकत्वात् आद्यपक्षस्यानुवादः । तदा अनवस्थेत्यस्य साध्यसिद्धिरूपावस्थाविरोध्यर्थकतया अर्थान्तरमर्थः । ज्ञानं सर्वं स्वविषयकमिति[1] मते विषयतया स्वस्य स्वाविशिष्टत्वात् तादृशधियः तद्व्यक्तित्वावच्छिन्नाभावस्यैव तन्मते निवेशसम्भवात् । स्वाश्रये स्वस्य स्वेनाभावः स्वाविषयत्वं स्वस्यादायैव वाच्यमित्यर्थान्तरात्, स्वभिन्नेन पारमार्थिकत्वेनेत्यर्थकत्वात् द्वितीयपक्षस्योक्तिः । तदा 'अनवस्था' इत्यस्य एकरूपेण साध्यस्थापनाभावोऽर्थः । स्वभिन्नस्य स्वेन स्वस्यान्येन अभावे वाच्ये एकावच्छिन्नाभावघटितरूपेण साध्यस्थापनस्यासम्भवात् । उक्तोभयावृत्तिविशिष्टेनेत्यर्थकत्वात् तृतीयपक्षोक्तिः । तदा अनवस्थेत्यस्य विषयतासंबन्धेन घटत्वादेः प्रपञ्चनिष्ठप्रतियोगितायामवच्छेदकत्वसंभवात् घटत्वाद्यपेक्षया तत्तद्धीव्यक्तीनां गुरुत्वेनानवच्छेदकत्वात् । प्रपञ्चसत्यत्वमते बाध्यत्वाप्रसिद्धेश्च । उक्ताभावाप्रसिद्ध्या तद्घटितसाध्यस्थापनाभावोऽर्थः । तस्यापीत्यपिशब्दात् तद्व्यक्तित्वविशिष्टेन उक्तरीत्या तद्व्यक्तित्वविशिष्टावच्छिन्नाभावघटितसाध्यस्य अप्रसिद्ध्या स्थापनाभावः । तेन स्वस्वभिन्नयोः पक्षयोः व्यक्तिद्वयावच्छिन्नाभावद्वयघटितसाध्यद्वयकरणेऽपि दोष उक्तः । **अनास्थायामिति** । विकल्प इत्यर्थः । उक्तरीत्या

[1] स्वाविषयक.

तत्तद्धीव्यक्तीनां अनवच्छेदकत्वेऽपि अबाध्यत्वोपलक्षितस्वरूपेणाभावनिवेशे न दोषः। ऐक्यस्य संबन्धेनावच्छेदकत्वं वाच्यम्। तेन उक्तस्वरूपस्य आध्यासिकतादात्म्येन प्रपञ्चसम्बधित्वेऽपि, न स्वरूपावच्छेदकत्वपक्षोक्तदोषः। ऐक्यस्य सिद्धान्ते सम्बन्धत्वाभावेऽपि न क्षतिः। परैस्तदभ्युपगमात्, तद्रीत्या तान्प्रत्युक्तिसंभवात्। गङ्गातरणादे[1]रधर्मस्य धर्मविधयेव असम्बन्धस्यापि सम्बन्धाविधया प्रतियोगितायामवच्छेदकत्वसंभवाच्च। न च पूर्वक्षणाद्यवच्छिन्नोक्तस्वरूपात्मकघटाद्यभावप्रतियोगित्वमादाय घटादौ सिद्धसाधनतावारणाय अनवच्छिन्नावच्छेदकतानिवेशे घटादिरूपस्याखण्ड[2]त्वाभावेन तदसंभवात्। अखण्डघटत्वाद्यबाध्यस्वरूपनिष्ठं ऐक्यसम्बन्धावच्छिन्नं प्रतियोगितावच्छेदकत्वं यस्य तादृशघटाद्यभावप्रतियोगित्वमादायांशतो घटादौ सिद्धसाधनमिति वाच्यं; पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तदसंभवात्। सामानाधिकरण्येन तदुद्देश्यत्वेऽपि सखण्डस्यापि घटादिस्वरूपस्य अनवच्छिन्नावच्छेदकतावत्त्वे बाधकाभावेन अदोषत्वात्। अबाध्यत्वव्यापकविषयतयाऽभावनिवेशसभवात्। एतेन स्वान्येन तत्तदबाध्यस्वरूपेण अवच्छिन्नप्रतियोगिताकाभावमादाय दृश्यमात्रे सिद्धसाधनमित्यपास्तम्। न च निर्विकल्पकविषयता तादृश्येका ब्रह्मणीव घटादावपीति स्वरूपावच्छेदकत्वपक्षीयदोष इति वाच्यं; समवायवत्सिद्धान्ते विषयताया आधारभेदे ऐक्यासंभवात् अबाध्यं सर्वं मेयं इत्यादिसविकल्पकीयमुख्यविशेष्यताव्यक्त्याऽभावनिवेशाच्च। बाध्यत्वादिनिष्ठेन विशेष्यत्वेन अभावस्य प्रतियोगित्वमादाय घटादौ सिद्धसाधनस्य वारणाय मुख्येति। एवंच न तार्किकादिमते बाध्यत्वाप्रसिद्धिः दोष इति बोध्यम्। किंच शुक्तिरजतादौ बाध्यत्वस्वीकार एव प्रकृतानुमानावतारः अन्यथा साध्यवैकल्यात्। न चोक्तविशेष्यतायाः

---

[1] गगनादे.  [2] रूपस्य खण्ड.

**एतावदुक्तिश्च पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मत-निरासार्थं लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रति-**

---

प्रपञ्चवृत्तित्वशङ्कायां स्वरूपावच्छेदकत्वपक्षीयदोषात् तन्निरासार्थं प्रपञ्चे मिथ्यात्वरूपबाध्यत्वनिश्चयापेक्षया अन्योन्याश्रय इति वाच्यं; येन हि रूपेण यद्यत्र निश्चितं न तेन तस्य तत्राभावधीः। प्रकृते च वियत्त्वाद्यवच्छिन्नवत्त्वेन वियदाद्यधिकरणं निश्चितं न तूक्तपारमार्थिकत्वावच्छिन्नत्वेन, वियदादौ पारमार्थिकत्वस्य संदिग्धतया तदवच्छिन्नवत्तया तत्र संशयस्याप्यौचित्यावर्जितत्वात् संशयान[1] प्रत्येव प्रकृतानुमानसाफल्यात्। स च अभावः अधिकरणात्मकः चित्स्वरूपश्चेत्पारमार्थिकः नोचेत्तदन्यः। यत्तु तादात्म्येन ब्रह्मणो[2] दृश्यसंबद्धत्वाद्यप्यबाध्यस्वरूपं ब्रह्म वियत्त्वादितुल्यं; तथाऽपि तेनैवाभावो निवेश्यः अन्यस्वरूपावच्छिन्नाभावस्य बाध्यत्वात्[3] प्रतियोगिसत्त्वाविरोधित्वाद्यापत्तिदृष्टत्वादिति श्रीमदाश्रमादिभिरुक्तं तन्मिथ्याप्रतियोगित्वान्मिथ्यात्वे सत्यावच्छिन्नप्रतियोगिताकत्वात्सत्यत्वं किं न स्यात्। तस्मात् अभावमिथ्यात्वादौ प्रतियोग्यादिमिथ्यात्वादिकमप्रयोजकमित्यभिप्रायकम्। अन्यथा मिथ्याप्रतियोगिकत्वान्मिथ्यात्वस्य दुर्वारत्वात्। इदं तु तत्र चिन्त्यं— तादात्म्यसंबन्धावच्छिन्नावच्छेदकत्वानिवेशे स्वरूपेण पारमार्थिकत्वेन[4] वा प्रतिपन्नोपाधावभाव इति पक्षयोरुपपादनासंभवः। ऐक्यसंबन्धेन तन्निवेशे उक्तरीत्या सिद्धसाधनं, उक्तविशेष्यतानिष्ठावच्छेदकतानिवेशे तु अभावासत्यत्वाप्रतिक्षेपः व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमोक्तिविरोधश्च। तस्मात् स्वरूपेणाभाव इति पक्षमेवादाय तैस्तथोक्तम्। एकेनैव स्वरूपेणाभावमादाय सर्वत्र मिथ्यात्वं वक्तुं शक्यते इति तत्र भावः। पारमार्थिकत्वेनाभावपक्षस्योपपादनं तु यथोक्तमेव

---

[1] तत्संशयानं. [2] ब्रह्मणि. [3] अबाध्यत्वात्. [4] अपारमार्थिकत्वेन.

पादयितुं च। तदुक्तं तत्त्वदीपिकायां—'तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकपरमार्थरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्या' इति। अयमाशयः—एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिबलसिद्धत्वात् घटः पटो न भवतीति वाक्यवदिदं रजतं न भवतीति वाक्यस्य अन्योन्याभावबोधकत्वे स्थिते अभिलापजन्यप्रतीतितुल्यत्वात् अभिलप्यमानप्रतीतेः नेदं रजतमिति वाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव। तथाचेदंशब्दनिर्दिष्टे पुरोवर्तिप्रातीतिकरजते रजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकं मिथ्यात्वम्। नात्र रजतमिति वाक्याभिलप्या तु प्रतीतिरत्यन्ताभावविषया भिन्नविभक्त्यन्तपदोपस्थापितयोरेव धर्मिप्रतियोगिनोर्नञः संसर्गाभावबोधकत्वनियमात्। सा च पुरोवर्तिप्रतीतरजतस्यैव व्यावहारिकमत्यन्ताभावं विषयीकरोतीति कण्ठोक्तमेव मिथ्यात्वम्। अतो

---

प्रातीतिकव्यावहारिकरजतयोस्तादात्म्यं प्रतीयते इत्यत्र संवादमाह-**तदुक्तमिति**। निषेधोपयोगिनीं प्रसक्तिमाह—**परमार्थरजतत्वेन अपरोक्षतयेति**। उक्तरजततादात्म्येन अपरोक्षतयेत्यर्थः। उक्ततादात्म्यारोपं विना व्यावहारिकमिच्छतः प्रातीतिके प्रवृत्तिर्न स्यादित्याशयेनाह—**रजतार्थिन** इति। व्यावहारिकरजतार्थिन इत्यर्थः। उक्तनिषेधस्य मिथ्यात्वाघटकत्वेऽपि तद्बलान्मिथ्यात्वमिति मिथ्यात्वविचारे तदुक्त्युपयोगमाह—**आर्थिकामिति**। स्वसमानाश्रयात्यन्ताभावप्रतियोगित्वं विना

**नापसिद्धान्तो नान्यथाख्यात्यापत्तिः न वा ग्रन्थविरोधः इत्यनवद्यम् । नन्वेवमत्यन्तासत्त्वापातः । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं ह्यन्यत्रासत्त्वेन सम्प्रतिपन्नस्य घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितम् । अन्यथा तेषां अन्यत्र सत्त्वापातात् । न हि तेषामन्यत्र सत्ता सम्भवतीति त्वदुक्तेश्च । तथाच कथमसद्वैलक्षण्यम् । न हि शशशृङ्गादेरितोऽन्यदसत्त्वम् ।**

---

पारमार्थिकान्यत्वं अनुपपन्नमित्यर्थाद्विरुद्धमित्यर्थः । **नान्यथाख्यात्यापत्तिरिति** । व्यावहारिकस्य शुक्तिगतनिषेधप्रतियोगित्वे तत्र तस्यैव प्रसक्तेर्वाच्यतया अन्यथाख्यात्यापत्तिः । यत्तु प्रातीतिकव्यावहारिकरजतयोः तादात्म्यधीर्न युक्ता तयोरेकस्य अपराज्ञानाकार्यत्वात् प्रातीतिकस्य स्वोपादानाज्ञाननिवर्तकधीविषयेणैव तादात्म्यप्रतीतेश्च । न हि पुरोवर्तितत्त्वाज्ञानेऽपि व्यावहारिकरजतत्वज्ञानात् प्रातिभासिकरजतं निवर्तते, शुक्लः पट इति तु शुक्लपटयोः एकाज्ञानकार्यत्वात् एकत्राध्यासाच्च । न चैवं घटपटयोरपि तादात्म्यबुद्ध्यापत्तिः, बुद्धौ सत्यां तस्य निमित्तत्वकल्पनात् आरोपे सतीति न्यायात् । व्यावहारिकरजतस्य च भ्रमस्थले भानानुपपत्तिः, सन्निकर्षादिविरहात् । तस्माद्व्यावहारिकरजतमेव स्वरूपेण निषिध्यते शुक्तावित्येव त्वदाचार्यवाचामर्थ इत्यपसिद्धान्तादिकं दुर्वारमिति; तत्तुच्छम् । यद्यदज्ञानाकार्यं तत्तत्तादात्म्यवन्नेति हि न नियमः, रजताज्ञानाकार्ये इदमर्थे रजततादात्म्यस्वीकारात् । नापि ययोरेकमपि नापराज्ञानकार्यं तयोः न तादात्म्यमिति नियमः; इदंत्वद्रव्यत्वादिधर्माणां रजतस्य च मिथोऽज्ञानाकार्यत्वेऽपि तादात्म्यारोपात्, जपाकुसुमलौहित्यस्य स्फटिकस्य च मिथोज्ञानाकार्यत्वेऽपि तादात्म्याध्यासात् । तत्र पूर्वसिद्धधर्मिणो हि धर्मः संसृष्टतयैवाध्यस्यते । संसर्गश्च जातिगु-

**न च निरुपाख्यत्वमेव तदसत्त्वम्, निरुपाख्यत्वपदेनैव व्याख्यायमानत्वात्। नाप्यप्रतीयमानत्वमसत्त्वम्, असतोऽप्रतीतौ असद्वैलक्षण्यज्ञानस्यासत्प्रतीतिनिरासस्य असत्पदप्रयोगस्य च अयोगात्। न चापरोक्षतया अप्रतीयमानत्वं तत्, नित्यातीन्द्रियेष्वतिव्याप्तेः, इति चेन्मैवं; सर्वत्र त्रैकालिकनिषेधप्रति-**

---

णादीनाम् तादात्म्यमेव सुखादेस्त्वाधारता, अहं सुखीत्यादिप्रतीतेः लौहित्यस्येन्द्रियसन्निकृष्टत्वेन प्रत्यक्षतासंभवात्तदानीमुत्पत्तिस्वीकारस्य निष्प्रयोजनत्वाच्च। आत्मनः कर्तृत्वादिकमध्यस्तं स्फटिकमणेरिव लोहितिमा इति निरासे तात्पर्यं न तु लौहित्यस्य स्वरूपाध्यासे दूरस्थवृक्षयोराच्छादितामिथस्संयुक्तप्रान्तयोः वंशखड्गयोश्च तादृशयोः तादात्म्याध्यासाच्च। न च तत्तत्तादात्म्यं भावरूपं नाध्यस्यते किन्तु भेदाभाव इति वाच्यं; प्रकृतेऽपि तत्सम्भवात् इति अहङ्कारटीकावाक्यस्य व्याख्यातत्वात्, स्वप्नादावपि भिन्नत्वेनाज्ञायमानयास्तादात्म्यानुभवाच्च। तत्रैकाज्ञानकार्यत्वं तादात्म्यमित्युक्तौ भेदधीकालेऽपि तादात्म्यधीस्स्यात् तादात्म्यजातीययोस्तज्जातीयतादात्म्यसंस्कारा[1]दित्युक्तौ तु प्रकृते न दोषः। अतएव प्रातीतिकस्य स्वोपादानाज्ञानेत्याद्ययुक्तं प्रातीतिकयोः पश्चाद्दूरस्थत्वादिदोषयोगात् मिथस्तादात्म्यानुभवात् प्रातीतिकरजतादौ तदनधिष्ठानस्य सन्निहितसदृशव्यावहारिकस्य पश्चात्तनदोषात्तादात्म्यानुभवाच्च बुद्धौ सत्यामित्याद्यप्ययुक्तं, आरोपे सतीत्यादिन्यायाद्धि यद्रूपावच्छिन्नयोः तादात्म्यधीः आनुभाविकी तद्रूपावच्छिन्नयोः तादात्म्यसंस्कारदोषविशेषादिकं तत्र नियामकं न त्वेकाज्ञानकार्यत्वादि तस्मिन् सत्यपि तदभावात् असत्यपि तद्भावाच्च इति सिद्धम्। अतः व्यावहारिकप्रातिभासिकरजतयोरपि तादात्म्यधीस्तथेति तत्रापि तथा नियामकमव्याहतमिति स्फुट

---

[1] तादात्म्यात् सजातीययोस्तज्जतीय संस्कारादिति पाठान्तरम्.

**योगित्वं यद्यपि तुच्छानिर्वाच्ययोस्साधारणम् । तथापि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं अत्यन्तासत्त्वम् । तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं नास्त्येवेति न तुच्छत्वापत्तिः । न च बाधात्पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते । एतदेव सदर्थकेनोपाधिपदेन सूचितम् । शून्यवादिभिः सदधिष्ठानकभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्व-**

एव ते स्ववाक्यार्थाबोधः । तस्मात्तदवच्छिन्नाश्रयताकारज्ञानकार्यत्वस्य संस्कारदोषविशेषादेश्च विकल्पेन तत्तादात्म्योत्पत्तिनियामकत्वान्नानुपपत्तिः । व्यावहारिकरजतत्वेन सन्निकर्षादिविरहेऽपि न क्षतिः । तादात्म्यप्रतीतेः तदंशे स्मृतित्वात् इदं सुरभीति धीवत् । तत्रैका प्रमा वृत्तिः इतरत्र प्रमाभ्रमवृत्त्यवच्छिन्नमेकचैतन्यमिति तु विशेषः । इन्द्रियसंयुक्ततादात्म्यादेः तत्र सन्निकर्षत्वसम्भवाच्च । तस्मान्नापसिद्धान्तादिकम् । सत्त्वेनाप्रतीयमानत्वं चेदसत्त्वं तदा असच्चेत्सत्त्वेन न प्रतीयेतेत्यध्यासमात्रं पक्षीकृत्य आपादनं न स्यात् आपाद्यापादकयोरभेदात् इष्टापत्तेः[1]। अत उक्तं—**सत्त्वेन प्रतीत्यनर्हत्वमिति**। सत्त्वविषयकधीविषयत्वं सत्तादात्म्यतत्त्वान्यतरत्वं वा तदर्हत्वमिति भावः । नन्वेवमपि अत्यन्तासत्त्वापत्तिः कथं निरस्ता? तत्राह— **एतदेवेति** । सत्त्वेन प्रतीयमानत्वमेवेत्यर्थः । **सूचितमिति** । प्रतिपन्नपदेन स्वप्रकारकधीविशेष्यत्वस्य उपाधिपदार्थे लाभेन स्वप्रकारकधीविशेष्यताश्रयसद्वृत्त्यत्यन्ताभावप्रतियोगित्वलाभात् प्रपञ्चे सत्त्वेन प्रतीयमानत्वलाभः पर्यवसित इति भावः । **शून्यवादिभिः** ज्ञानादत्यन्तभिन्नो योऽर्थः सोऽळीक इति वादिभिः । **सदधिष्ठानकभ्रमेति** । अबाध्यविशेष्यकाळीकप्रपञ्चप्रकारकज्ञानेत्यर्थः । विज्ञानं सत्यं तदाकारस्तद्विषयः तद्धर्मत्वात् तद्भिन्नाभिन्नः ततोऽत्यन्तभिन्नस्त्वळीकः

[1] अनिष्टापत्तेः.

**रूपासद्वैलक्षण्यस्य शुक्तिरूप्ये प्रपञ्चे च अनङ्गीकारात्। नन्वेवं सति यावत्सदधिकरणात्यन्ताभावप्रतियोगित्वं पर्यवसितम्। तथाच केवलान्वय्यत्यन्ताभावप्रतियोगिषु अवृत्तिषु गगनादिषु तार्किकाणां सिद्धसाधनम्। यदधिकरणं यत्सत् तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायां अधिकरणपदेनावृत्तिनिराकरणेऽपि संयोगसम्बन्धेन समवायसम्बन्धेन वा यत् घटाधिकरणं समवायसम्बन्धेन संयोगसम्बन्धेन वा घटस्य तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनम्। येन सम्बन्धेन यत् यस्याधिकरणं तेन सम्बधेन तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षायां अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति चेन्न; येन रूपेण यदधिकरणतया यत् प्रतिपन्नं तेन रूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात्। तच्च रूपं सम्बन्धविशेषोऽ-**

---

इति विज्ञानवादः। तदुत्तरभूमिरूपे शून्यवादे तु विषयस्तथैव, विज्ञानं तु स्वाकारसहितं मिथ्येति विशेषः। तत्रांत्येतु अबाध्यस्वरूपमेव न स्वीक्रियते कुतः तद्विशेष्यकज्ञानं, आद्ये तु विज्ञानस्य अबाध्यस्य नाळीकप्रकारकज्ञानविशेष्यता, परमार्थालीकयोः एकज्ञानाविषयत्वात्। अत उक्तमतयोरलीकत्वमादायाकाशादौ नार्थान्तरमिति भावः। **यावत्सदिति**। स्वानाश्रयनिष्ठाभावप्रतियोगित्वस्य सिद्धत्वात् यावदिति प्रतिपन्नेति देयमेव। अन्यथा आकाशादावत्यन्तासत्त्वमादाय विज्ञानवादसम्मतमर्था[1]न्तरादिति भावः। **सिद्धसाधनमिति**। सामानाधिकरण्येनानुमितेरुद्देश्यत्वे सिद्धसाधनम्। अन्यथा तु प्रपञ्चस्यावृत्तित्वमादायार्थान्तरम्। **यदधिकरणं**— यस्याधिकरणम्।

---

[1] सम्मतार्था.

**वच्छेदकविशेषश्च । न हि सम्बन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते । अवच्छेदकविशेषमन्तरेण वा वृक्षे कपिसंयोगाधिकरणता । तथाच येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम् । यदि पुनः ध्वंसप्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रतियोगित्वमाकाशादौ न स्यात् । साधकमानाभावस्य**

---

एवंच यावत्पदं व्यर्थमिति भावः । तद्वृत्तया धीस्तच्छून्येऽपि भवतीति सिद्धसाधनम् । व्याप्यवृत्त्यधिकरणताधीश्चावच्छेदकं विनैवेत्यत आह—**तथाचेति** । यत्रेत्यधिकरणतान्वयि । तथाच यन्निष्ठा यत्सम्बन्धावच्छिन्नयद्वृत्ता यदवच्छिन्नतया प्रत्येतुमर्हा कदाचित् केनचित् प्रतीयमाना इत्यर्थः । **तेनैव सम्बन्धविशेषणेति**—तदन्यसम्बन्धेन अनवच्छिन्नप्रतियोगिताकेत्यर्थः । तत्सम्बन्धावच्छिन्नप्रतियोगिताकेत्युक्तौ तत्तदितरोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय सिद्धसाधनम् । अंतस्तन्नोक्तम्[1] । **तेनैव चावच्छेदकविशेषणेति**—तदन्यावच्छेदकानवच्छिन्नेत्यर्थः । अभावान्विते अधिकरणत्वे च तदन्वयः । एवंच व्याप्यवृत्तिस्थले तद्वृत्तावच्छेदकताभ्रमः प्रसिद्ध एव य यद्यदवच्छिन्नतया यद्वृत्ताधीः तत्प्रत्येकान्यानवच्छिन्नत्वकूटं निवेश्यम् । तेन मूलाद्यवच्छिन्ने अग्राद्यवच्छिन्नाभावमादाय न सिद्धसाधनम् । न च मूलाद्यवच्छिन्नस्य अग्राद्यवच्छिन्नत्वेनापि ज्ञानात् तन्मिथ्यात्वलक्षणे अग्राद्यन्यानवच्छिन्नत्वस्यापि निवेश्यत्वात् बाधः, मूलाद्यवच्छिन्नस्य मूलाद्यवच्छिन्नाभावप्रतियोगित्वरूपस्यैव मिथ्यात्वस्य वाच्यत्वादिति वाच्यम् ;

---

[1] यतस्तन्नोक्तम्.

तुल्यत्वादिहाकाशो नास्तीति प्रत्यक्षप्रतीत्यसम्भवात्, अनुमाने च अनुकूलतर्काभावात्, सामान्यतो दृष्टमात्रेण ध्वंसप्रागभावप्रतियोगित्वस्यापि सिद्धिप्रसङ्गात्तद्व्यतिरेकेण कस्यचित् कार्यस्यानुपपत्तेरभावाच्च। एवं संयोगसम्बन्धेन घटवति भूतले

---

मिथ्यात्वघटकाभावस्य तात्त्विकत्वपक्ष इवातात्त्विकत्वपक्षेऽपि अनवच्छिन्नत्वस्वीकारात् । न चैवमवच्छिन्नत्वसामान्याभाव एव निवेश्यतां लाघवादिति वाच्यम् ; विशेषाभावकूटान्यस्य तस्यानभ्युपगमात्, सामान्याभावत्वेन निवेश्य[1] स्वरूपाणामेव प्रदर्शितत्वाच्च । अतीन्द्रियस्य प्रतिबन्धकस्याभावः कार्यान्यथानुपपत्त्या उच्यते । प्रकृते तु न सेत्याह— **तद्व्यतिरेकेणेति । लाघवेनेति ।** सम्बन्धरूपावच्छेदकभेदेनाभावभेदाकल्पनलाघवेनेत्यर्थः । **विरोधित्वेति ।** सहानवस्थानेत्यर्थः । तथाचात्यन्ताभावत्वेनेति सहार्थे तृतीया । एवंच घटात्यन्ताभावत्वेन सह घटसामानाधिकरण्यस्य एकत्राभावेन प्रतियोगिस्वरूपमात्रेण अत्यन्ताभावस्य विरोधित्वमिति भावः । घटपटोभयं भूतले नास्तीत्यादौ नोक्तोभयस्याभावप्रतियोगितया धीः, घटादिप्रत्येकरूपस्योभयस्योक्तधीविषयाभावविरोधित्वात्। किन्तूक्तोभयत्वस्य भूतलादिनिष्ठाधिकरणतावच्छेदकत्वाभावधीः, अतएव उभयादिपदयोगे एकजातीयव्युत्पत्त्या घटत्वपटत्वोभयं नास्तीत्यादावपि घटत्वपटत्वोभयत्वे घटादिनिष्ठाधारतावच्छेदकत्वाभावधीः, संयोगसमवायोभयसम्बन्धेन भूतले घटो नास्तीत्यादौ संयुक्तत्वसमवेतत्वोभयवद्घटत्वादौ घटसंयोगसमवायोभयत्वादौ वा भूतलादिनिष्ठाधारतावच्छेदकत्वाभावधीः, घटादौ भूतलादिनिष्ठसंयोगसमवायोभयप्रतियोगिकत्वाभावधीर्वा । अतएवोक्तस्थले भासमानाभावमादाय वक्ष्यमाणमिथ्यात्वस्य घटत्वादौ न सिद्धसाधनम् । अथवा

---

[1] निवेशस्य.

**समवायसम्बन्धेन घटाभावसत्त्वे मानाभावात् लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात् सम्बन्धविशेषप्रवेशे च गौरवात् ।**

---

**लाघवेन** सम्बन्धाघटितावच्छेदकत्व[1] लाघवेन । **घटसामानाधिकरण्यविरोधित्वेति** । भूतलं घटवदित्याकारिका भूतलत्वादौ या घटसामानाधिकरण्यधीः तत्प्रतिबन्धकतायां भूतलादिविशेष्यकधीनिष्ठायां प्रकारतया अवच्छेदकेत्यर्थः । **गौरवात्**—सम्बन्धानां प्रतियोगितावच्छेदकत्वे गौरवात् । द्वितीये व्याख्याने घटत्वसंयोगाद्यवच्छिन्नप्रतियोगिताकाभावस्य प्रतिबन्धकतावच्छेदकनिवेशे घटत्वसंयोगाद्यवच्छिन्नत्वयोः विशेषणविशेष्यत्वस्य आविनिगम्यत्वेन[2] प्रतिबन्धकताभेदे गौरवात् । न च प्रतियोग्यंशे भासमानस्यैव प्रतियोगितावच्छेदकतया भानात् प्रतियोगितांशे घटत्वाद्यवच्छिन्नत्वविषयता घटाभाववद्भूतलमिति धीनिष्ठप्रतिबन्धकतावच्छेदककोटौ न निवेश्यते, किन्तु अभावांशे घटत्वाद्यवच्छिन्नप्रकारतैवेति वाच्यम्; व्यधिकरणधर्मावच्छिन्नाभाववादिनामस्माकं तदसम्भवात् । तत्सम्भवे वा सम्बन्धांशेऽपि तदापत्त्या घटत्वसंयोगाद्युभयधर्मावच्छिन्नप्रकारतानिवेशस्यैवौचित्यात्। अथैवं घटत्वादिनाऽपि प्रतियोगिता नावच्छिद्येतेति अनवच्छिन्नैव सा स्यादिति चेत्, स्यादेव यदि नानुभवो बाधकः, अभावांशे प्रतियोगितासम्बन्धघटत्वमात्राभ्यां प्रकारताया एव प्रतिबन्धकतावच्छेदके निवेशसम्भवात् । न च नीलघटाभावस्यापि घटीयत्वात् घटवत्यपि घटो नास्तीति धीः स्यादिति वाच्यम् ; घटसामान्याभावीयप्रतियोगिताव्यक्तेरेव घटत्वमात्रावच्छिन्नं प्रति संसर्गत्वान्नीलघटाभावे तद्व्यक्त्यसम्भवात् । अन्यथा प्रतियो-

---

1 वच्छेदक. 2 विनिगम्यत्वेन

**घटसमवायमात्रविषयतया प्रतीतेरुपपत्तेः**

गितावच्छिन्नत्वपक्षेऽपि उक्तापत्तेर्दुर्वारत्वात्, नीलघटत्वावच्छिन्नप्रतियोगिताव्यक्तेरपि घटत्वावच्छिन्नत्वात्, प्रतियोगितायाः अवच्छेदकत्वाभिमतघटत्वादिस्वरूपत्वाभ्युपगमात्, प्रतियोग्यंशे प्रकारीभवत एव अभावांशे सम्बन्धतया भानात्। **प्रतीतेरुपपत्तेरिति**। घटसंयुक्तादौ समवायेन घटो नास्तीत्यादिप्रतीत्युपपत्तेरित्यर्थः। न च एवं घटादेः प्रतियोगित्वानुभवविरोधः, समवायविशिष्टघटादिप्रतियोगित्वावगाहनात् तादृशप्रतियोगिताकोपि घटसमवायाभाव एव तत्समनियतत्वात्। न तु घटसामान्याभाव इत्याशयेन घटसमवायाभाव इत्युक्तम्। न चैवमपि वक्ष्यमाणलक्षणस्य तादृशाभावमादाय घटादौ सिद्धसाधनम्, यद्धर्मरूपप्रतियोगिताकाभावत्वेन सत्त्वव्यापकत्वं तद्धर्मवत्त्वस्य वाच्यत्वात् घटादिसमवायिन्यपि संयोगवत् घटाद्यभावसत्त्वादिति वाच्यम्; सत्त्वव्यापकतावच्छेदकं यद्धर्मपर्याप्तप्रतियोगिताकाभावत्वं[1] तद्धर्मवत्त्वे वक्ष्यमाणतात्पर्यात् तादृशाभावप्रतियोगितात्वस्य समवायादिघटत्वयोरेव पर्याप्तत्वात्। अन्यथा नीलघटाद्यभावमादाय सिद्धसाधनाद्यापत्तेः, विशिष्टस्यातिरिक्तत्वात् यथाश्रुतस्याप्यदोषत्वाच्च। अथवा ननु सम्बन्धावच्छिन्नत्वस्य विरोधितावच्छेदकाप्रवेशे संयोगेन घटाभाववदित्यादिबुद्धेरपि समवायेन घटवदित्यादिबुद्धिविरोधित्वापत्तिः घटाभावविषयकत्वाविशेषादत आह—**घटसमवायेत्यादि**। घटः समवायः आदिना प्रतियोगिता अभावश्चेति चतुष्टयमात्रविषयतया समवायविशिष्टघटत्वावच्छिन्ना प्रतियोगिता विशेषसम्बन्धावच्छिन्ना च या प्रकारता तन्निरूपिताभावप्रकारताकत्वेन **प्रतीतेः** समवायेन घटाभाववदित्यादिप्रतीतेः **उपपत्तेः** उक्तधीविरोधित्वोपपत्तेः। न चैवं घटसमवायाद्यभावस्य तद्विरोधित्वस्य चावश्य-

[1] प्रतियोगितावत्त्वं.

कत्वे घटसामान्याभावतद्विरोधित्वयोः पूर्वोक्तयोर्मानाभाव इति वाच्यम् ; घटो नास्तीति बुद्धेरुक्तरीत्या समवायविशिष्टघटादिसामान्याभावीयप्रतियोगिताविषयकत्वानुपपत्त्या अतिरिक्तप्रतियोगित्वावश्यकत्वात्, अतिरिक्ताभावानभ्युपगमेऽपि क्षतिविरहात्, ऊक्तबुद्धिसत्वे घटवदित्यादिबुद्ध्यनुत्पादात्, उक्तबुद्धेर्विरोधित्वस्यानुभाविकत्वात्, सम्बन्धसामान्येन घटाद्यभावस्य त्वयाऽप्यङ्गीकारात्, घटसम्बन्धसामान्याभावस्यैव मम घटसामान्याभावत्वात् । एकज्ञानविषयत्वव्यभिचारादिस्तु न सम्बन्धः सम्बन्धो वा न भिन्नकालीनयोः । किंच समवायादिना घटविशिष्टबुद्धौ घटसमवायाभावधीविरोधित्वं त्वयाऽपि वाच्यम्; तदनुभवात् । न च समवायादिना घटसामान्याभावावच्छेदकत्वेन गृहीततद्धीरेव तद्विरोधिनीति वाच्यम् ; गौरवात् । तथाच सम्बन्धावच्छिन्नप्रतियोगितावादिनस्तव मते तदन्तर्भावेनैव विरोधित्वात् घटसमवायित्वाद्यवच्छिन्नत्वस्वरूपसंम्बन्धावच्छिन्नत्वयोः विशेषणविशेष्यत्वाविनिगम्यत्वात् तत्र विरोधिताद्वयं तदवच्छेदकगुरुत्वं च आवश्यकम् । मन्मते च तत्र घटसमवायाभावधीत्वेनैकैव विरोधिता । तव समवायादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगितान्तर्भावेन उक्तरीत्या विरोधिताद्वयं अवच्छेदकगौरवं च । मम तु तत्र समवायादिविशिष्टघटाभावधीत्वेन एकैव सेति महदेव लाघवम् । न च तवापि समवायवत अंशे घटत्वस्य एकत्र द्वयमिति रीत्या समवायघटत्वयोश्च प्रकारतामादाय अन्ये अपि ते वाच्ये इति वाच्यम्; घटत्वांशे निर्धर्मितावच्छेदकज्ञानस्यैव विरोधिताया आवयोस्सम्मतत्वात् । घटो न समवायीति धीकालेऽपि प्रकृतविरोधिधीसम्पत्तये एकत्र द्वयमिति रीत्या प्रकारीभवद्भ्यां समवायघटत्वाभ्यां अवच्छिन्नाया एव अभावांशे प्रकारताया विरोधितावच्छेदकत्वस्वीकारात् । न च तथाऽपि समवायविशिष्टघटाभावो

घटसामान्याभाव एव तत्समनियतत्वादिति तद्धीः कथं घटसंयुक्तादौ प्रतियोगिता, समवायस्य न सम्बन्धः; किन्तु स्वाश्रयसमवेतत्वमित्युक्तौ तद्विषयतायाः विरोधितावच्छेदकत्वानिवेशे गौरवमिति वाच्यम्; लाघवेन प्रतियोगितामात्रस्य अभावविरोधित्वे स्थिते समवायप्रतियोगिघटत्वेन भूतलादिनिष्ठाभावाविरोधित्वात्, उक्तगौरवस्य प्रामाणिकत्वात्। अतएव संयोगेन भूतले घटो नास्तीत्यादावपि संयोगादेः घटादौ स्वाश्रयसंयुक्तत्वादिकमेव सम्बन्धः। समवायेन भूतले घटो नास्तीत्यादौ समवेतघटादिकं वा प्रतियोगितया भाति, तस्य केवलघटाद्यन्यत्वेन भूतलादौ तदभावसम्भवात् भूतले समवेतत्वेन घटो नास्तीत्यनुभवात्। अतएव समवायवत् घटाभावस्येव नीलघटाभावस्यापि धीः समवायेन घटवदिति धीविरोधिन्यस्तु इत्याद्यपास्तम्। तव प्रतियोगितावच्छेदकतया प्रतिबन्धकतावच्छेदके निवेशितयोरेव मम प्रकारतावच्छेदकतया निवेशात्। अतएव घटसंयुक्ते घटसमवायाभावस्याप्यसम्भवः, तत्र घटसमवायस्य कालिकसम्बन्धेनाधिकरणत्वसत्त्वात्। अथ कालिकसम्बन्धेन घटसमवायाभाव एव तद्विरोधी तर्हि संयोगेन घटाभाव एव संयोगेन घटाधिकरणत्वविरोधीत्येव युक्तमित्यपास्तम्। घटसंयुक्ते समवायेन घटाभावस्य त्वया स्वीकारेण तस्यैव मया घटसमवायाभावत्वस्वीकारात् समवायसम्बन्धावच्छिन्नघटाधिकरणत्वस्यैव मया घटसमवायाभावविरोधित्वस्वीकारात्। अथवा समवायेन घटो नास्तीत्यादौ घटसमवायादिनिष्ठप्रतियोगितैव परम्परया घटादिगततया भासते 'शिखी विनष्टः' इत्यादिवत्। अतो घटादेः प्रतियोगितानुभवो न विरुद्धः साक्षात्सम्बन्धेन वक्ष्यमाणप्रतियोगितायाः लक्षणत्वान्न दोषः। संयोगेन रूपं नास्तीत्यादौ रूपादौ संयोगाद्यभावः घटत्वेन पटो नास्तीत्यादौ पटादौ घटत्वाद्यभाव

इव भाति घटत्वेन पटो नास्तीत्यादिशब्दात् यद्यपि नामार्थस्य घटत्वादेरत्यन्ताभावो न भाति, प्रतियोगिनः प्रथमान्तानुपस्थाप्यत्वात् । अनुयोगिपटादेः सप्तम्यन्तानुपस्थाप्यत्वाच्च । तथापि तृतीयार्थस्य साहित्यरूपवैशिष्ट्यस्य स भाति । अथवा तत्र घटत्वाभावाद्यन्यो व्यधिकरणघटत्वपटत्वाद्युभयावच्छिन्नप्रतियोगिताकत्वेन पराभ्युपगताभाव एव भाति । अतएव घटत्वपटत्वाद्युभयावच्छिन्नवत्त्वेन ज्ञाते नोक्ताभावधीः, तत्प्रतियोगितायाः मिथोऽव्यधिकरणघटत्वपटत्वादिरूपत्वात् । प्रतियोग्यंशे प्रकारस्यैव संसर्गत्वमित्युक्तमिति मम न व्याहतिः[1] । अत एव तादृशाभावांशे प्रकारतावच्छेदकतयोक्तधर्मद्वयमवश्यं भातीति स्वीक्रियते । तथाच तत्प्रतियोगितायाः उक्तधर्मद्वयरूपत्वात् प्रतियोग्यंशे प्रकारस्यैव अभावांशे प्रतियोगिसंसर्गत्वमिति नियमाव्याघातः । न च घटत्वस्य पटासम्बन्धित्वात् तद्घटितसम्बन्धेनाभावस्य पटीयत्वासम्भव इति वाच्यम्; घटत्वनिष्ठं यत्पटत्वनिष्ठप्रतियोगितात्वं तन्निरूपकत्वसम्बन्धेन अभावांशे पटस्य विशेषणत्वेन भानस्वीकारात् । संयोगकालीनसमवायेन घटादेः रूपवत्त्वस्येव उक्तसम्बन्धेन अभावे पटीयत्वस्य सम्भवात् उक्तप्रतियोगित्वाश्रयविशिष्टस्य पटस्योक्ताभावाविरोधित्वेऽपि न क्षतिः, उक्तस्थले प्रतियोग्यभावयोः विरोधस्य परेणाप्यस्वीकारात् । उक्तस्थले घटत्वपटत्वोभयत्रभूतलनिष्ठाधारतावच्छेदकत्वं नास्तीति धीस्तु न सम्भवति, उभयत्वविशिष्टबोधकपदाभावात् । एवंच संयोगेन रूपं नास्तीत्यादावपि संयोगरूपत्वादिमत्प्रतियोगिकतया तादृशाभाव एव भातीति न कथमपि प्रतियोगितायाः अवच्छिन्नता । न चोक्ताभावमादाय सिद्धसाधनम्, स्वावच्छिन्नप्रकारकधीविशेष्यसन्मात्रवृत्त्यत्यन्ताभावप्रतियोगितात्वपर्याप्त्यधिकरणोक्ते-

[1] मित्युक्तनियमो न व्याहतः.

**आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयात् उक्तयुक्तेश्च न घटादेरत्यन्ताभावसामानाधिकरण्यम्। एवं संयोगतदभावयोर्नैकाधिकरण्यम्। 'अग्रे वृक्षः कपिसंयोगी मूले न' इति प्रतीतेरग्रमूलयोरेव संयोगतदभाववत्तयोपपत्तेः तदा सन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव**

---

भयधर्माधिकरणत्वाप्रसिद्धेः वक्ष्यमाणमिथ्यात्वाभावादित्यास्तां विस्तरः। ननु घटस्य स्वात्यन्ताभाववदवृत्तित्व[1]रूपो विरोधोऽवृत्तित्वेप्युपपद्यत इति स्वसंयोगिनि स्वात्यन्ताभावसत्त्वे किं बाधकं तत्राह—**आधारेति**। ननु घटादिसंयोगी घटाद्यभाववान् तत्समवायाद्यभावात् घटाद्यनाधारवदित्यत आह—**उक्तेति**। अनुकूलतर्काभावात् कपालदृष्टान्तेन तथैव प्रतियोगिसम्बन्धित्वादिहेतुना ध्वंसादिसिद्ध्यापत्तेः तद्व्यतिरेकेण कार्यानुपपत्तेरभावात् एकसम्बन्धवत्यप्यपरसम्बन्धाभावस्यैव प्रतिबन्धकाभावतया प्रयोजकत्वादित्यर्थः। **अग्रमूलयोरिति**। मिथश्चौपाधिकभेदवतोः तदवच्छिन्नवृक्षयोर्वेति शेषः। **तदेति**। इति परेणोच्यत इत्यादिः। **सन्मात्रनिष्ठेति**। स्वप्रकारकधीविशेष्यनिष्ठसत्त्वव्यापकेत्यर्थः। तेन न पूर्वोक्ते प्रपञ्चालीकत्वापत्तिसिद्धसाधने। अधिष्ठानमेव तत्र प्रतीयमानाभाव इति पक्षेऽपि केवलस्य सतोऽभावत्वाविशिष्टेन सता सम्बन्धसत्त्वात् व्यापकत्वमुपपन्नम्। न च तत्पक्षे अधिष्ठानेऽभावाधारत्वप्रत्ययानुपपत्तिः, विशिष्टकेवलयोराधाराधेयत्वाभावात् अन्यथा तद्धटो द्रव्यमितिवत् तत्र द्रव्यमित्यपि धीस्स्यादीति वाच्यम्; अन्यत्र तदस्वीकारेऽपि प्रतीत्यनुरोधेन प्रकृते तत्स्वीकारात्, घटाभावे घटो नास्तीत्यादाविव कल्पिताधारत्वे बाधकाभावात्। किंचाभावप्रत्यये भावस्य सम्बन्धमात्रं नियमेन भासते आधारत्वं तु सति सम्भवे, यथा पृथिव्यां गन्धाभावो

---

[1] भाववद्वृत्तित्व.

नेत्यादौ चैत्रे न गोशून्यतेत्यादौ त्वसम्भवात् न तद्भाति। उक्तं हि न्यायकुसुमाञ्जलौ अभावसम्बन्धविचारप्रसङ्गे 'परस्य तादात्म्यमस्तीति चेत्' इति। परस्य भट्टस्य मते अभावस्य तादात्म्यं सम्बन्ध इति तत्र टीकाकाराः। तथाचाधिष्ठानस्याभावानाधारत्वेऽपि न क्षतिः। अधिष्ठाने घटो नेत्यादिशब्दे सप्तमी तु आकाङ्क्षासम्पादनायापेक्षते नाधारत्वबोधाय। एवंचाभावे स्वाधारत्वाकल्पनेपि न क्षतिः। घटाभावे घटो नेत्यादौ किञ्चिद्विशिष्टघटाभावत्वेनानुयोगितावच्छेदकरूपेण आवश्यकभेदादेवोपपत्तेः। न च या अभावव्यक्तिः तद्व्यक्तित्वेन सत्त्वव्यापिका तत्प्रतियोगित्वरूपे प्रकृतलक्षणे समवायेन घटाभावमादाय न सिद्धसाधनम्, तद्व्यक्तेः घटसमवायिनि असत्त्वादिति घटादेस्संयोगिनि समवायेनाभावनिराकरणं व्यर्थमिति वाच्यम्; वक्ष्यमाणनिष्कर्षे उक्तदोषासम्भवात्। अभावीयविशेषणतादिसंम्बन्धेन घटाधभावव्यक्तिं केवलान्वयिनीमादाय सिद्धसाधनवारणाय प्रतियोगितायाः सम्बन्धावच्छिन्नत्वनिरासस‍ार्थक्याच्च।

**अत्यन्ताभावेति**। स्वान्यूनसत्ताकत्वरूपात्यन्तिकत्वविशिष्टसंसर्गाभावेत्यर्थः। तेन प्रातिभासिकात्यन्ताभावमादाय न सिद्धसाधनम्; न वा निष्ठान्तेनैव ध्वंसादिवारणादत्यन्तपदार्थघटकसदातनत्ववैयर्थ्यम्, भेदस्य सत्त्वव्यापकत्वसिद्ध्या अर्थान्तरं स्यात्। अतः संसर्गेति। ध्वंसादेस्तु तत्सिद्ध्या[1] न तद्बाधेन[2] तत्सिद्धेरसम्भवात्। ध्वंससामान्यं न सत्त्वव्यापकमिति बाधेन उक्तानुमानात् ध्वंससामान्याभाव[3]सिद्धावपि भेदसामान्यं न सत्त्वव्यापकमिति बाधेन भेदसामान्याभाव[4]सिद्धिः न सम्भवति, घटत्वादिना पटादिभेदस्य सत्त्वव्यापकत्वबाधात्। अस्तु वा अत्यन्ताभावार्थकमभावपदम्। उक्ताभावप्रतियोगित्वं च उक्त-

---

[1] अत्र तच्छब्देन स्वान्यूनसत्ताकत्वमुच्यते. [2] तच्छब्देनात्र सिद्धसाधनमुच्यते.
[3] ध्वंसान्याभाव. [4] भेदान्याभाव.

सत्त्वव्यापकाप्रातिभासिकाभावस्य व्यावहारिकनिष्ठप्रतियोगित्वं उक्तसत्त्वव्यापकाभावस्य प्रातिभासिकनिष्ठप्रतियोगित्वं चेत्यन्यतरवत्त्वम् । व्यावहारिकनिष्ठत्वं च प्रातिभासिकान्यविनाशिनिष्ठत्वं ब्रह्मावृत्तित्वं वा ग्राह्यम् । आद्यस्यान्त्यस्य च प्रतियोगित्वस्योक्त्या[1] व्यावहारिके प्रातिभासिके च साध्यलाभः। व्यावहारिको यः पूर्णानन्दाभावः तत्प्रतियोगिब्रह्मण्यतिव्याप्तेः व्यावहारिकनिष्ठेति विशेषणम् । विनाशिनः स्वस्य अप्रातिभासिकाभावत्वं च स्वान्यूनसत्ताकत्वं, स्वाप्नस्य स्वाप्नाभावेन मिथ्यात्वव्यवहारस्तु तदानीं तस्याप्रातिभासिकत्वज्ञानात् । प्रपञ्चः प्रातिभासिकः सत्य इति वादिनं प्रति तु विनाशिनः स्वस्याभावत्वमेव तत् । सत्त्वं[2] तु अबाध्यत्वव्यापक विषयताकाकिञ्चिद्धीविषयत्वं तद्विषयताव्यक्तित्वेन निवेश्यम् । तेन गुरोरनवच्छेदकत्वेऽपि न क्षतिः । गगनादेरवृत्तित्ववादिनं प्रत्यपि साध्यसिद्धये स्वाधिकरणसन्निष्ठत्वं लघ्वपि नोक्तम् । विषयत्वव्यापकत्वोक्तौ सर्वं बाध्यमिति मते अत्यन्तासत्त्वमादायार्थान्तरम् । अतस्तद्विषयत्वमुक्तम् । तन्मते च तदप्रासिद्धम् । विज्ञानमात्रसत्यत्वमते विज्ञानान्यस्यालीकत्वेन अर्थान्तरात् । उक्तविशेष्यवृत्तित्वं सत्त्वाविशेषणम् । तथा अस्मदीयपूर्वोक्तरीत्या ब्रह्मणोऽभावप्रतियोगित्वास्वीकारे तु पूर्वलक्षणे व्यावहारिकनिष्ठत्वादिकं उत्तरलक्षणे विनाशित्वं च न देयम् । तन्मते विज्ञाने विज्ञानान्यप्रकारकबुद्ध्यविशेष्यत्वात् नार्थान्तरम् । स्वावच्छिन्नप्रकारकधीविशेष्यनिष्ठसत्त्वव्यापकात्यन्ताभावप्रतियोगितात्वपर्याप्त्यधिकरणधर्मवत्त्वं लक्षणं बोध्यम् । तेन संयोगेन रूपाद्यभावमादाय रूपादौ न सिद्धसाधनमिति दिक् ॥

अप्रातिभासिको यः स्वसमानाधिकरणात्यन्ताभावः तस्य ब्रह्मावृत्ति यत्प्रतियोगित्वं, यच्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं

---

[1] त्वस्योक्तौ. [2] सत्यत्व.

**मिथ्यात्वं मन्तव्यम् । न चैवं सति भावाभावयोरविरोधात् तज्ज्ञानयोर्बाध्यबाधकभावो न स्यादिति वाच्यम्;**

---

प्रातिभासकवृत्ति तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षस्तु पूर्वमेवोक्तः । बाध्यबाधकेति । भावाभावयोस्सामानाधिकरण्यबुद्धौ सत्यां तयोरेकज्ञानमपरज्ञानाबाध्यम् । अतः उक्तबुद्ध्यभावविशिष्टेन तयोर्विरोधाविषयकेन वा परज्ञानेन बाध्यं वाच्यम् । तादृशज्ञानं च मिथ्यात्वं जानतां न सम्भवतीति न तेषां तथेति भावः । बाधकत्वं यदि प्रतिबन्धकत्वं तदा तन्नास्त्येव[1], तयोरेकप्रमायां सत्यामविद्यादोषादिविरहादेवापरभ्रमानुदयात् । तयोरेकभ्रमे सति तज्जनकदोषादिनैवापरप्रमानुदयात् । भावाभावयोरेकज्ञानस्य अपरज्ञानप्रतिबन्धकत्वाङ्गीकारेऽपि मिथ्यात्वधीपूर्वकं उक्तप्रतिबन्धकज्ञानं सम्भवत्येव । वस्तुतः प्रतियोगिसामनाधिकरण्यधीरभावधीप्रतिबन्धकतायां नोत्तेजिका । न च समुच्चयोत्तरं समुच्चयो न स्यादिति वाच्यम् । अवच्छिन्नत्वरूपाव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वात् । न च प्रातिभासिकत्वेन ज्ञायमानाभावस्य धीरपि प्रतिबन्धिका स्यादिति वाच्यम्; ब्रह्मज्ञानपूर्वबाध्यत्वरूपस्य प्रातिभासिकत्वस्य ज्ञाने तद्वद्भावविषयकत्वस्य प्रमात्वाभावव्याप्यत्वेन गृहीतस्याभावज्ञानग्रहे अप्रमात्वग्रहात्[2] प्रमात्वेन गृह्यमाणस्य अभावज्ञानस्य प्रतिबन्धकत्वेन क्लृप्तस्य उक्तधर्मरूपत्वाभावात् । एतेन प्रतियोगिसामानाधिकरण्यज्ञानस्य उत्तेजकत्वे प्रातीतिकप्रतियोगिसामानाधिकरण्यधीरपि तथा स्यात् । अन्यूनसत्ताकप्रतियोगिनिवेशे तु गौरवमित्यपास्तम् । वस्तुतस्तु मन्मते प्रतिबन्धकत्वं न कस्यापि कुत्राप्युच्यते, अव्याप्यवृत्तिशक्तेः मण्याद्यसमवहितवह्न्यादौ स्वीकारात् । अथ तयो-

---

[1] तत्रास्त्येव [2] प्रमात्वाग्रहात्.

**तज्ज्ञानयोः बाध्यबाधकभावो न स्यादिति वाच्यम्। भिन्न-सत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात्। यत्र भूतले यस्य घटस्यात्यन्ताभावो व्यावहारिकः तत्र स घटो न व्यावहारिक इति नियमात्। न चैवं सति 'शुक्तिरियं न रजतम्' इति ज्ञानविषयीभूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकत्वापहारेऽपि प्रातीतिकसत्त्वानपहारात् बाधोत्तर-कालेऽपि 'इदं रजतम्' इति प्रतीतिः स्यादिति वाच्यम्;**

रेकज्ञानस्य अपरज्ञाने भ्रमत्वज्ञापकत्वं तत्तथापि स्वान्यूनसत्ताकसन्मात्रनिष्ठाभावप्रतियोगित्वविशिष्टविषयकधीत्वस्यैव भ्रमत्वरूपत्वम्। न तु स्वविरोधिस्वाभाववति स्वप्रकारधीत्वस्य शुक्तिरूप्यादिज्ञानस्य तदभावात्। अतएव समसत्ताकयोः अविरुद्धयोरपि स्वाप्रभावाभावयोः बाध्यबाधकधीविषयत्वमुक्तमिति नानुपपत्तिः। अथ तयोरेकज्ञानस्य अपरोपादानाज्ञाननिवर्तकत्वं तत्तथापि न तयोः विरोधोऽपेक्ष्यते प्रत्युत अविरोधः, एकाश्रये अपरस्य कल्पितत्वात्। अथ तयोरेकज्ञानस्य स्वविषयापेक्षया न्यूनसत्ताकविषयकत्वज्ञापकत्वं अपरज्ञाने तत् तथापि तत्परत्वादिप्राबल्यसापेक्षत्वेऽपि तस्य न तयोर्विरोधापेक्षा इत्यस्माकं स्थितिः। त्वं तु यदि तयोर्विरोधेऽत्यन्तभक्तः तदा पारमार्थिको व्यावहारिको वा मिथ्यात्वघटकोऽभाव इत्युक्तयोः पक्षयोराद्य रोचयेरित्यभिप्रेत्याह—**भिन्नेति**। **न व्यावहारिक इति**। किन्तु प्रातीतिक इति शेषः। प्रातीतिकसत्त्वानपहारात् भिन्नसत्ताकाभावस्याविरोधित्वेन तज्ज्ञानस्याबाधकत्वात् उच्छिन्नापरोक्षताकत्वाभावात्। **बाधेति**। स्वान्यून[1]सत्ताकसन्मात्रनिष्ठात्यन्ताभावप्रतियोगित्वनिश्चयेत्यर्थः। तथाच समसत्तान्तर्भावेन न विरोधः किन्तु सामान्यत इति भावः। प्रातीतिकरजतस्य व्यावहारिकस्वाभावाविरोधेऽपि न

[1] स्वन्यून.

**तत्र 'इयं शुक्तिः' इत्यपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ प्रातीतिकसत्त्वस्याप्यपहारात्, शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्त्वे प्रातीतिकरजतासत्त्वस्य आवश्यकत्वात्। अतएव यत्र अपरोक्षया अधिष्ठानप्रमया न भ्रमोपादानाज्ञाननिवृत्तिः तत्र व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वानपहारात्। 'तिक्तो गुडः' इत्यादिप्रतीतिरनुवर्तत एव एवमखण्डब्रह्मसाक्षात्कारात्पूर्वं परोक्षबोधेन प्रपञ्चस्य व्याव**

---

क्षतिः। तत्र तादृशाभावधियो बाधकत्वाभावेऽपि शुक्तित्वाद्यधिष्ठानतावच्छेदकप्रमाया बाधकत्वेन उक्तबाधोत्तरं तदप्रतीतिसम्भवादित्याह —**तत्रेति**। भिन्नसत्ताकाभावज्ञानस्यापि मूलोच्छेदकत्वादेव प्रतियोग्यप्रतीतिप्रयोजकत्वम्। अतएव परोक्षस्य तस्यामूलोच्छेद[1]कत्वेनातथात्व[2]मिति अप्रतीतिप्रयोजके मूलोच्छेदकत्वरूपे बाधकत्वे विरोधिविषयकत्वं न प्रयोजकम्। नाप्युक्तभ्रमत्वज्ञापकत्वरूपे बाधकत्वे तत् तथा उक्ता[3]परोक्षस्य विरोध्यभावाविषयकस्यापि तत्सत्त्वादिति भावाभावविरोधस्वीकारः ते वृथेत्यभिप्रेत्याह—**अतएवेति**। अभावविरोधित्वानपेक्षस्याज्ञानोच्छेदस्यैव तत्कार्यप्रातीतिकसत्त्वापहारकत्वादेवेत्यर्थः व्यावहारिकत्वापहारे—स्वान्यूनसत्ताकसन्मात्रनिष्ठात्यन्ताभावप्रातियोगित्वेन ज्ञाप्यत्वे। तथाच भ्रमत्वज्ञापकत्वे विरोधिविषयकत्वं नापेक्ष्यत इति भावः। **व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वेति**। एकस्यैव मूलाज्ञानस्य नित्यपरोक्षापरोक्ष[4]प्रपञ्चोपादनत्वात्। अपरोक्षोपादानाज्ञानं प्रत्यपरोक्षस्यैव निवर्तकत्वात् तदभावादुक्ताज्ञानानिवृत्त्या प्रपञ्चमात्रप्रतीतिरित्यर्थः। अथवा अपरोक्षप्रपञ्चोपादानाज्ञानादन्यदेवास्तु परोक्षप्रपञ्चोपादानमज्ञानम्। तथापि परोक्षब्रह्मज्ञानेन तन्निवृत्त्या तदुपादानकप्रपञ्चे निवृत्तेऽपि प्रारब्धभोगानुरोधेन कल्प्यमानसंस्कारोपादान

---

[1] मूलोच्छेद. [2] तथात्व. [3] उक्त. [4] नित्यपरोक्ष.

**हारिकत्वापहारेऽपि प्रतीतिरनुवर्तेत एव । अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यते । एतेन—"उपाधिशब्देनाधिकरणमात्रविवक्षायामर्थान्तरम्, वाय्वधिकरणकात्यन्ताभावप्रतियोगित्वेऽपि रूपस्यामिथ्यात्वात् । अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्य अधिष्ठानत्वेन अन्योन्याश्रयत्वम्; ज्ञानस्य भ्रमत्वे विषयस्य मिथ्यात्वं, विषयस्य मिथ्यात्वे च ज्ञानस्य भ्रमत्वम्" इति परास्तम् । उक्तरीत्या अधिकरणविवक्षायां दोषाभावात् । न च 'स एवाधस्तात्' इति श्रुत्या प्रतिपन्ने देशकालाद्युपाधौ परमार्थतो ब्रह्मणोऽभावात्तत्रातिव्याप्तिरिति वाच्यम्; निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्माभावात् ।**

कपरोक्षप्रपञ्चान्तरं जायते । अतएवापरोक्षब्रह्मज्ञानोत्तरमपि प्रपञ्चनिवृत्तौ पुनः प्रपञ्चान्तरं अङ्गीक्रियत इति परोक्षब्रह्मज्ञानोत्तरं परोक्षापरोक्षप्रपञ्चधीः न विरुध्यत इति भावः । **अधिष्ठानेति ।** तिक्तत्वाभाववद्गुडादीत्यर्थः । तथाचाज्ञानोच्छेदकत्वेऽपि विरोधिविषयकत्वं नापेक्षत[1] इति भावः । **नानुवर्तिष्यत इति ।** निवृत्तेप्यज्ञाने प्रपञ्चस्य न निवृत्तिः । जातेऽप्यधिष्ठानसाक्षात्कारे नाज्ञानं निवर्तते भुज्यमान[2]कर्मणा प्रतिबन्धादित्यादिकं त्वन्यत् । **निर्धर्मक इति ।** सत्यादिपदवाच्यसम्बन्धाज्ञानविषयत्वादिकं तु तदुपहिते न तु केवले इति भावः । केवले तदङ्गीकारे तदन्यधर्मराहित्यमेव निर्धर्मकत्वम् । केवलस्य जगदुपादानत्वपक्षेऽपि न दोषः । दृश्यमात्रधर्मतानियामको यस्साधारणस्सम्बन्धो दृङ्निष्ठतादात्म्यं तदन्यसम्बन्धेन यत् सधर्मकं तदन्यस्य निर्धर्मकपदेनोक्तिसम्भवात्, तावतापि स्वरूपादिसम्बन्धेन प्रतियोगित्वादिराहित्यलाभेन प्रकृतोपयोगात् । न च प्रपञ्चे ब्रह्मसम्बन्धस्य मिथ्यात्वात् ब्रह्मणोऽभाव इति वाच्यम्;

1 सापेक्ष्यते.　　2 वाग्रुच्यमान.

तावताऽपि प्रपञ्चे ब्रह्माभावासिद्धेः प्रत्यक्षाभावात्, घटस्सन्नित्यादावुपहितब्रह्मण एवैन्द्रियकत्वात्, अभावांशे निरवच्छिन्नप्रकारताकज्ञानासम्भवेन केवलप्रतियोगिकाभावाभानात्। प्रतियोगिविशेषिताभावभानं तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इत्याद्यभियुक्तोक्तेः, अनुमानस्य चाप्रयोजकत्वात्, तद्व्यतिरेकेण कार्यानुपपत्त्यभावात् प्रतियोगिसम्बन्धस्याभावविरोधित्वात्। अतएव सिद्धान्तबिन्दौ ब्रह्मणोऽभावाप्रतियोगित्वं सर्वत्र सता[1]सम्बन्धादित्युक्तम्। एतेन—निर्धर्मकत्वात् ब्रह्मणः पारमार्थिकत्वादितदवृत्तिधर्मैरभावसम्भवः प्रतियोगित्वस्य च सत्यत्वादिवत् स्वरूपात्मकत्वात् ब्रह्मणि सम्भव इत्यादि परास्तम्। मिथ्यात्वादिग्राहकमानस्य ब्रह्मभिन्नतयैव प्रवृत्ततया ब्रह्मणो मिथ्यात्वाद्यभावसत्यत्वादिस्वरूपत्वेऽपि प्रतियोगित्वादिस्वरूपत्वे मानाभावात्। किंच पारमार्थिकत्वादितदवृत्तिधर्मेणाभावः किञ्चिद्धर्मविशिष्टस्यैव ब्रह्मणो ज्ञातुं शक्यः, न तु केवलस्य घटादौ पारमार्थिकामित्याद्यनाहार्यज्ञानसत्त्वेन घटादौ न पारमार्थिकमिति ज्ञानासम्भवात्, पारमार्थिकत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टधीत्वेन सामान्यतः उक्तधीप्रतिबध्यत्वात्। अतएवात्र घट इत्युक्तधीसत्त्वे अत्र घटत्वेन पटो नेति धीः, न त्वत्र घटो नेत्याकारा घटाभावस्यापि धीः। अतएव प्रतियोगित्वे मानाभावादित्यनुक्त्वा मानासम्भवलाभार्थं निर्धर्मक इत्याद्युक्तम्। अपिच किञ्चिद्धर्मावच्छिन्नस्य मिथ्यात्वेन स्वान्यूनसत्ताकाभावप्रतियोगित्वं शङ्कास्पदम्। अतादृशस्य[2] तु सत्यस्वरूपत्वेन न तत्तथेत्यपि निर्धर्मकेत्याद्यर्थः। यत्तु—"येन रूपेण यदधिकरणतया यत्प्रातिपन्नमित्यादि सन्मात्रनिष्ठेत्यादि च अयुक्तम्, लाघवेन स्वाभावत्वेनैव स्वविरोधित्वात् समसत्ताकत्वस्य गौरवेणाप्रवेशात् सत्ताभेदस्याद्याप्यसिद्धेश्च मिथ्यात्वानुमानादेव तत्सिद्धावन्योन्याश्रयात् श्रुतेः

[1] सदा. [2] तादृशस्य.

प्रत्यक्षबाधितत्वात्" इति, तन्न; शुक्तिरजतादेः स्वाप्रस्य चाभावे उक्ताविरोधत्वाभावेन सामान्यतस्तदभावात्। अथ शुक्तिरजतादेः मन्मते असत्त्वात् न तत्सामानाधिकरण्यं तदभावे इति चेत्तर्हि तदधिकरणाप्रसिद्ध्या तद्घटितविरोधित्वमपि तदभावे नास्तीति क्व सामान्यतो विरोधवार्ता। यो यो यद्विरोधी स तदभाववृत्तिरिति नियमो न नोऽनिष्टः[1], ब्रह्मस्वरूपाभावमादाय तत्सम्भवात्। यत्र यत्र यदभावप्रतियोगित्वं तत्र तदभावविरोधित्वमित्यपि न नियमः; ब्रह्मस्वरूपाभावस्याधिकरणाप्रसिद्धेः, अधिकरणमेवाभाव इति मते अवृत्तिगगनादिरूपाभावाधिकरणाप्रसिद्धेश्च, घटादेः पटादिरूपस्वाभावेन भूतलादौ सहभावाच्च। शुक्तिरूप्यादेः स्वाभावाभावस्य अधिकरणाप्रसिद्धेश्च। असतो न स्वाभावाभावत्वं मानाभावादिति चेत्तर्हि सतो[2] नाभावो मानाभावात् निर्धर्मकत्वाद्युक्तयुक्तिभिस्तस्याभावप्रतियोगित्वासम्भवात्। अतएव सिद्धान्तबिन्दौ न हि शशविषाणाभावो ज्ञायत इत्युक्तं चरमश्लोके। शशशृङ्गं नास्तीत्यस्य शशे शृङ्गाभाव इत्यर्थ इति मणिकारः, किं तर्हि तल्लक्षणमिति चेन्नकिञ्चित्। तर्हीतरव्यावृत्त्या तन्न प्रतीयेतेति चेन्न प्रतीयत एव। अतएव सद्भ्यामभावो निरूप्यत इत्युक्तम्। सद्भ्यामित्यस्य धर्मिप्रतियोगिभ्यामिति विशेष्यं यदि तत्तथा प्रतीयते तदा 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जलसूत्रे असदृज्ञानमात्रस्य शाब्दत्वोक्तेः निर्धर्मकत्वादि[3]-विरहात् तत्तद्धीविषयत्वादेरितरव्यावृत्तत्वनिश्चयेन व्यभिचारसम्भवाच्च [4]नानुमित्या, किन्तु शब्देन, तत्र च न लक्षणमपेक्षते, सत्त्वेन प्रतीत्यनर्हत्वस्य लक्षणत्वसम्भवाच्च। किंच वैशेषिकविशेषवत् निर्धर्मकस्यासतः स्वत एवेतरव्यावृत्तिसम्भवात् न लक्षणापेक्षा। एवंचासत्यतिव्याप्त्युद्भावनमसङ्गतमेव। किंच स्वान्यूनसत्ताकात्यन्ताभावप्रति-

---

[1] तन्निष्ठः. [2] असतो. [3] निर्धर्मकत्वाद्धत्वादे. [4] नानुमित्यादिना इति पा.

**न चैवं सत्यत्वमपि तत्र न स्यात्, तथाच 'सत्यं ज्ञानमनन्तम्' इत्यादिश्रुतिव्याकोप इति वाच्यम्; अधिकरणातिरिक्ताभावानभ्युपगमेन उक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपाविरोधात्। एतेन स्वप्रकाशत्वाद्यपि व्याख्यातम्— परप्रकाश्यत्वाभावो हि स्वप्रकाशत्वम्। कालपरिच्छेदाभावो नित्यत्वम्, देशपरिच्छेदाभावो विभुत्वम्, वस्तुपरिच्छेदाभावः पूर्णत्वमित्यादि। तथाच भावभूतधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया न काऽप्यनुपपत्तिरिति सर्वमवदातम्॥**

इति द्वितीयमिथ्यात्वविचारः.

---

## तृतीयमिथ्यात्वविचारः.

**ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम्। ननु उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने अतिव्याप्तिः मुद्गरपातादिनिवर्त्ये च घटादावव्याप्तिः।**

---

योगित्वस्य नासति सम्भवः[1], तस्योक्तव्यावहारिकत्वादिरूपतद्घटकाभावात्। एवंच अस्तु सन्मात्रेत्यत्र विषयत्वमात्रव्यापकत्वनिवेशः, उक्त विषयकत्वव्यापकत्वानिवेशे प्रयोजनाभावात्। किञ्च विभिन्नसत्तेत्यादिना तव लालनमात्रं कृतम्। तथाचातिलाघवात् भावाभावयोर्विरोध एव न स्वीक्रियतां उक्तरीत्या तस्य निष्प्रयोजनत्वात्। यदुक्तं सत्ताभेदेत्यादि, तन्न[2]; सत्ताभेदस्यानुमितेः पूर्वमसिद्धावपि मिथ्यात्वस्य विप्रतिपन्नत्वेन भावाभावविरोधस्यापि विप्रतिपन्नत्वेन मिथ्यात्वानुमितौ प्रतिबन्धकाभावात् पश्चात्तत्रा[3]प्रामाण्यशङ्कायाः सत्ताभेदकल्पनया निराससम्भवात्॥

---

'तथा विद्वान्नामरूपाद्विमुक्तः, ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुत्यर्थनिर्णयाय साध्यान्तरमाह—ज्ञाननिवर्त्यत्वमिति। पूर्व-

---

[1] संबन्धः. [2] कारणेषु-शक्तिस्वीकारेण. [3] तत्र.

**ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययं दोषः, अधिष्ठानसाक्षात्कारत्वेन निवर्त्ये शुक्तिरजतादौ च ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता। ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारे अतिव्याप्तिरिति चेन्न; ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञाननिवर्त्यत्वम्। अवस्थितिश्च द्वेधा—स्वरूपेण कारणात्मना च, सत्कार्यवादाभ्युपगमात्।**

**ज्ञाने**। तन्निष्ठोत्तरज्ञाननिवर्त्यत्वे। मिथ्यात्वलक्षणस्यातिव्याप्तिः। तेन पूर्वज्ञानस्य मिथ्यात्वलक्षण[1]लक्ष्यत्वेऽपि न क्षतिः। अथवा आतिव्याप्तिः सिद्धसाधनम्। **अवस्थितीति**। स्वात्मकेत्यर्थः। **स्वरूपेण** घटादिस्थूलरूपेण। **कारणात्मना** कारणगतसूक्ष्मावस्थया। **सत्कार्येति**। कार्याणां पूर्वं पश्चाच्च आ तत्त्वदर्शनं स्वात्मकावस्थाभ्युपगमादित्यर्थः। पराङ्गीकृतध्वंसप्रागभावयोरेव तथात्वेनाऽगौरवात् एकस्मिन् कनके जायमानकटकमुकुटयोरेकत्रापरध्वंसप्रागभावत्वस्वीकारादतिरिक्तकल्पने मानाभावात् कटकमेव मुकुटं जातमिति तादात्म्यानुभवात् "तद्धेदं तर्ह्यव्याकृतमासीत्, भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते" इति श्रुतिस्मृतिभ्यां तथा प्रतीतेश्च। अन्यथा पूर्वापरकालावच्छिन्नस्वसमवायिगतस्वात्यन्ताभावत्वादिविषयकत्वेनैव प्रतीत्युपपत्तेरतिरिक्तप्रागभावध्वंसयोः असिद्धेः प्रागभावो नष्टः ध्वंसो जात इत्यादिप्रत्ययानां व्यञ्जकनाशादिविषयकत्वेनोपपत्तेः। न च तौ विना पूर्वोत्तरत्वादिकमेव दुर्वचमिति वाच्यम्। तावता पूर्वत्वादेरेवाखण्डस्य सप्रतियोगिकस्य स्वीकर्तुमुचितत्वात्, तयोः कल्पने प्रागभावत्वध्वंसत्वादेरतिरिक्तस्य कल्पनेन गौरवात्। अथ प्रकृतलक्षणस्य प्रातिभासिककटकादावव्याप्तिः तन्निवर्तकज्ञानस्य तन्निष्ठप्रातिभासिक-

[1] अमिथ्यारूपेण घटादिस्थूललक्षण. पा.

तादात्म्यप्रतियोगिव्यावहारिकहेम[1]कटकादिविरहाप्रयोजकत्वादिति चेन्न; न हि यन्निष्ठतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावः ज्ञानप्रयुक्तः तत्त्वमित्येव लक्षणं, येन व्यावहारिकहेमादेः प्रातीतिके कटकादौ तादात्म्यारोपादुक्तदोषः, किन्तु यान्निष्ठतादात्म्यस्य यत्समसत्ताकप्रतियोगिसामान्याभावो ज्ञानप्रयुक्तस्तत्त्वम् । यत्पदाभ्यामेकैव लक्ष्यव्यक्तिर्धार्या । अतएव शुक्तिरूप्यादितादात्म्यप्रतियोगीदमाद्यभावस्य शुक्तिज्ञानाप्रयुक्तत्वेऽपि न क्षतिः । एतेन—"इहेदानीं घटप्रागभाव इति लोकाननुभवादिहेदानीं घटो नेति बुद्धेः सामयिकात्यन्ताभावविषयकत्वान्न प्रागभावे अत्यन्ताभावातिरिक्ते मानम्" इति दीधित्युक्तमपास्तम् । इह मृदि घटो नेति बुद्धेः कपालाद्यवस्थारूपप्रागभावावगाहित्वात् कपालादेश्च घटादितादात्म्यादत्यन्ताभावत्वाभावात् तत्र घटात्यन्ताभावत्वे मानाभावात् । न च तत्र पूर्वत्वरूपाखण्डधर्मकल्पनेनैव व्यवहारनिर्वाहे प्रागभावत्वकल्पने मानाभाव इति वाच्यम्; पूर्वत्वोत्तरत्वयोरेव प्रागभावत्वध्वंसत्वरूपतास्वीकारात् । न च घटादेर्व्यधिकरणेऽपि तन्निरूपितयोस्तयोः सत्त्वाद्घटादेरनधिकरणेऽपि तत्प्रागभावध्वंसयोर्व्यवहारापत्तिरिति वाच्यम्; अत्र घटप्रागभावः अत्र घटध्वंस इति व्यवहारे पूर्वत्वोत्तरत्वयोः तन्निरूपितत्वस्येव तदाश्रये सामानाधिकरण्यस्य तादात्म्यस्य वा घटसंसर्गतया भानात् । इह मृदि घटो नेत्यादिबुद्धौ घटादेः विरोधिसंसर्गाभावस्य विषयत्वेन घटादिप्रागभावादिमति घटाद्यन्तरवति नोक्तबुद्धिः । न चेह न घट इत्यादिवाक्ये नञो विरोधिनि लक्षणा[2]पत्तेर्नेदं युक्तमिति वाच्यम्; नञर्थे संसर्गाभावे घटत्वादिरूपान्वयितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वरूपविरोधस्य घटादेः प्रतियोगिनः संसर्गतया भानात् । अतएव घटसंयुक्ते न घटसंयोग इतिवदनुपहास्यते । घटसंयुक्ते अग्रे न

[1] हेमादेः, [2] विरोधिलक्षणा.

घटसंयोग इत्यादौ तु अग्रावच्छेदेन उक्तविरोधस्य भानं व्युत्पत्तिवैचित्र्यात्। न च नञोऽत्यन्ताभावे शक्तिस्वीकारेण तदर्थे तत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपघटा[1]दिसंसर्गस्योक्तवाक्यजन्यबोधे भानेनोपपत्तावुक्तविरोधित्वरूपगुरुतरसंसर्गभानकल्पनमयुक्तमिति वाच्यम्; घटादिमत्ताबुद्धौ घटाद्यसमानाधिकरणधर्मवत्ताज्ञानस्य प्रतिबन्धकत्वेन क्लृप्ततया उक्तवाक्यजन्यज्ञानस्य घटाद्यसामानाधिकरण्यरूपविरोधविशिष्टविषयकत्वे[2] सांसर्गिकविषयतासाधारणोक्तविरोधविषयताघटितरूपेण प्रतिबन्धकताकल्पनेनैवोपपत्त्या उक्त[3]प्रतियोगिताकत्वविषयताघटितरूपेणात्यन्ताभावज्ञानस्य प्रतिबन्धकत्वाकल्पनेन लाघवात्, उक्तज्ञानस्योक्तविरोधविषयकत्वेन वक्तुं युक्तत्वात्। किंच उक्तप्रतियोगिताकत्वघटितरूपेण प्रतिबन्धकत्वस्वीकारेऽपि उक्तबुद्धेरुक्तविषयकत्वानियमः[4] घटविरोधित्वविशिष्टघटात्यन्ताभावविषयकत्वेनैव तथा स्वीकार्यत्वात्, अन्यथाऽव्याप्यवृत्तित्वेन गृह्यमाणोक्ताभावज्ञानस्यापि प्रतिबन्धकत्वापातात्, अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वे[5] च गौरवात्। तथाचोक्तप्रतियोगिताकत्वविषयतानिवेशो व्यर्थ इति ध्येयम्। पूर्वावस्थाया अनुपमर्देनयत्रावस्थान्तरतन्नाशौ यथा कपालद्वयासंयोगात् घटः तद्विभागाच्च तन्नाशः, तत्र तत्तत्कालादि[6]विशिष्टावस्थैव तत्प्रागभावध्वंसौ। वस्तुतस्तु तत्र घटस्य कपालनाशत्वं कपालान्तरस्य च पश्चादुत्पन्नस्य घटनाशत्वम्, अन्यथा कपालादेः घटादिकालीनानन्तसंयोगादिकल्पनागौरवात्। एवंचाविद्यादिरूपपूर्वावस्थायां तथा बोध्यम्। कपालनाशस्थले तु कापालिकाद्यवस्थैव कपालघटयोः नाशः, तत्रैव लोके तत्त्वानुभवात्। अतएव विष्णुपुराणे--

मही घटत्वं घटतः कपालिकाकपालिकाचूर्णरजस्ततोऽणुः।

---

[1] घटत्वादि.　　[2] विषयकत्वेन.　　[3] अविच्छिन्न. पा.　　[4] नियमेन.
[5] स्योक्तजनकत्वे.　　[6] कपालादि.

जनैः स्वकर्मस्तिमितात्मनिश्चयैः आलक्ष्यते ब्रूहि किमत्र तत्त्वम् ॥ इत्युक्तम् । तत्र हि क्रमिकाणां कपालादीनामण्वन्तानां सर्वेषां अतत्त्वता प्रतिपादिता । तत्र कपालिकाद्यन्यस्य ध्वंसादेः सम्भवे तदतत्त्वताया अप्रदर्शनात् न्यूनतेति कपालिकादिवत् सोप्युच्येत मही कपालादिः घटत्वं घटः पूर्वावस्थैवोत्तरावस्थां प्रति परिणामितया कारणम् । अतएव तयोस्तादात्म्यमित्यावेदयितुमेकपदासम्भवयोरपि तसिल्प्रत्ययप्रथमयोः भिन्नपदगतत्वेनोक्तिः । अणुः त्रुटिरालक्ष्यते । द्व्यणुकपरमाणू तु न स्तः । अन्यथा तदतत्त्वताया अप्रदर्शनात् न्यूनतापत्तेः । न च त्रुटेः पूर्वसिद्धत्वेन न जन्यतेति वाच्यं; अनन्तत्रुटितत्संयोगादीनां घटादौ पूर्वसिद्धताकल्पने गौरवात्, घटाद्यनन्तर्गतत्वेन उपलभ्यमानानामेव त्रुटीनामुत्पत्तिस्वीकारात् । अतएव 'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' इति सूत्रे घटादिवत्त्रुटिरनित्या रूपादेरित्युक्तम् । न चाप्रयोजकत्वं रूपादेरिति वाच्यम्; पाकादिना घटादिकमुत्पद्यते नश्यति च, न तु घटरूपादिकम्, एकैकस्मिन् बहूनामुत्पत्तिनाशकल्पने गौरवात्, नित्याखण्डरूपादेः तत्र घटादावनुभवानुरोधात्स्वीकार इति न्यायस्य घटादाविव त्रुटावपि तुल्यत्वात्, जलीयादित्रुटावपि रूपादीत्यादिपदेन संयोगादिकल्पनारूपोक्तगौरवापत्तिग्रहणात् अनित्यत्वावश्यकत्वात् । विवृतमधिकमेतत्सूत्रमुक्तावलौ न । घटः ध्वंसः इत्यादि तु व्यवह्रियत एव । घटो ध्वंसत्वमापद्यत इत्यादिव्यवहारात् यदि न व्यवह्रियते तदा तादात्म्यस्य घञर्थत्वेन ध्वंसतादात्म्यस्य नामार्थस्य घटादावभेदान्वयासम्भवात् । अतएव साधुः ध्वंस इत्यादिप्रयोगः । अन्यथा धात्वर्थविशेषणत्वात् साध्वित्येव स्यात् । एवंच नश्यतीत्याद्यनुरोधेन परेषामिव न नः प्रतियोगितात्वादिना आख्यातस्य शक्तिः लक्षणा वा युज्यते, चलति स्फुरति भातीत्यादि-

साधारण्येन तादात्म्ये क्लृप्तशक्त्यैवोपपत्तेरित्यादि लाघवम्। किंच घटतद्धेतुकपालयोः समसत्ताकभेदे गुरुत्वादिभेदात्तत्कार्यावनतिविशेषाद्यापत्तिः। अथ गुरुत्वादिकं कार्यद्रव्ये कुत्रापि वा न जायते, उक्तकार्यं तु त्रुटिगुरुत्वेभ्यः अवयवविशेषाद्वा, तदवयवानां मिथस्संयोगमात्रादवयवनाशरूपात्परिणामविशेषाद्वा उक्तकार्यसंभवात् [1]कृतमवयवावयवियौगपद्येनोक्तगौरवेण। अथ भिन्नकालीने ध्वंसे प्रागभावे च कथं तत्प्रतियोगिनः तादात्म्यमिति चेत् प्रतियोग्यनुयोगिभावोऽपि ते कथं? अनुभवस्य मेऽपि तुल्यत्वात्। किंचैकस्यामेव मूलाविद्याव्यक्तौ तत्तत्सामग्रीसमवधानोत्तरकालावच्छेदेन सामान्यगुणकर्मणां भेदाभेदादीनां चाखण्डानां [2]अविद्यावस्थारूपत्वेनानादीनां यथामर्यादं सत्त्वम्। अतएवाविद्यान्यजडजातौ मानाभाव इति वृद्धाः। तन्न्यायश्च गुणादौ तुल्यः। [3]तेषां नित्याखण्डत्वमपि। एकैका एव नीलारुणादिव्यक्तय इत्यादिना मीमांसकनव्यतार्किकाद्यनुमोदितं आविर्भावमात्रं न किञ्चिदुत्पद्यते इत्यादिसांख्यादिसिद्धान्तस्याप्ययमेव निष्कर्षः, प्रकारान्तरस्यासम्भवात्। इयांस्तु विशेषः—यत्तैः [4]अविद्यानामविनाशि सत्यत्वं भेदाग्रहादिकं चोच्यते, सिद्धान्ते तु विनाशि मिथ्यात्वम्। भेदाग्रहादिस्थले च प्रातिभासिकाभेदादिरिति मूलाविद्यायां घटत्वादेरुक्तकालावच्छेदेनैव सम्बन्धो घटाद्युत्पत्तिः, कपालिकात्वाद्युक्तसम्बन्धो घटादिनाशो व्यवह्रियते। उक्तं च तत्त्वकौमुद्यां— 'कारणसम्बन्धः उत्पत्तिः' इति। यावतां मेलन क्षणाव्यवहितोत्तरक्षणावच्छेदेन यस्य सम्बन्धः तावतामनन्यथासिद्धानां तद्विशिष्टं प्रति तत्कारणत्वं व्यवह्रियते। न च कारणकूटवत् तत्तत्क्षणाव्यहितोत्तरक्षणावच्छेदेन मूलाविद्यायां घटत्वादिरूपावस्था-

[1] कृत्रिमावयवयौगपद्येन इति. पा. [2] अवस्थाविद्यारूपत्वेन इति. पा.
[3] तथेति. पा. [4] अविद्यानाद्यानामितिवा. पा.

विद्यासम्बन्धो घटाद्युत्पत्तिरिति वाच्यं; तत्र तत्तत्क्षणत्वादीनामनादितत्तदविद्यारूपतया तद्विशिष्टमूलाविद्यारूपक्षणानामप्यनादित्वात् तत्तदवच्छिन्नसम्बन्धस्योत्पत्तित्वं न युक्तमिति चेत्, न। अन्येषु तत्तत्क्षणव्यक्तित्वसंबन्धेषु अन्यक्षणव्यक्तित्वसम्बन्धोऽवच्छेदकः तत्राप्यन्यक्षणव्यक्तित्वसम्बन्धः अवच्छेदकः इत्यविद्यारूपतत्तत्क्षणव्यक्तित्वानामनन्तत्वेनैकैकस्य सम्बन्धे अपरस्यापरस्य सम्बन्धोऽवच्छेदक इत्यदोषात्। तार्किकादिमतेऽपि स्वजन्यविभागप्रागभाववैशिष्ट्यरूपतत्तत्क्षणत्वानां क्रियानिष्ठानां मीमांसकनव्यतार्किकयोरिव सांख्यादीनां मतेऽपि क्षणानां क्षणिकानां पूर्वं सतां उत्पत्तिः, इति विशेषः। तथाचानादिघटत्वादिरूपपल्लवाविद्यासम्बद्धानां तत्तत्क्षणावच्छिन्नत्वमेव मूलाविद्यारूपत्वेनानादिघटादीनामभिव्यक्तिः सांख्यादिसम्मता। तदाभिव्यक्तिः पूर्वमसतीति चेदसत्कार्यवादापत्तिः सतीति चेत्तस्या अप्यभिव्यक्तिरेवं तस्या अपीत्यनवस्था इत्याशङ्क्य परेषामुत्पत्तिवददोष इति तत्त्वकौमुद्यां समाहितम्। एवंच परेषामुत्पत्तिरसती तस्याः उत्पत्तिरपि सैव युगपत् क्षणद्वयस्य मानाभावेनानङ्गीकारात्, क्षणान्तरसम्बन्धे तदुत्पत्तित्वस्य वक्तुमशक्यत्वात्। अतो नानवस्था। तथाऽस्माकं अगत्या पूर्वं असती आभिव्यक्तिः सैव च तस्याः अभिव्यक्तिरिति नोक्तदोषः। अतएव प्रतिक्षणं परिणामिनो भावाः शुद्धे[1]चिति शक्तिरिति सांख्यादिसिद्धान्तः। क्षणविशिष्ट[2]रूपेण चिदन्यस्योत्पत्तिसम्भवात्। चितस्तु नोक्त[3]रूपेणाप्युत्पत्तिरसङ्गत्वेनोक्तरूपस्यैवाभावादिति भावः। अविद्यादीनां स्वरूपेणानावृतत्वेऽपि एकविशिष्टमूलाविद्यायाः अपरसम्बन्धांशे आवरणे न दोषः। 'षडस्माकमनादयः' इत्यनादीतरेषां अविद्यारूपत्वाभावेऽप्यक्षतेश्च।

---

1 अन्ये हि, पा. 2 क्षणविशेष. 3 नोत्तर.

दृष्टिसृष्टिपक्षे उक्तावरणस्याप्यस्वीकाराच्च । अथैवमपि घटत्वकपालिका-त्वयोः भिन्नकालीनत्वात् तद्विशिष्टयोः न तादात्म्यं किंतु तदुपलक्षित-योरिति चेत्, सत्यं; अतएव घटो यः स्थितः स इदानीं कपालिका, बालो यः स्थितः स इदानीं युवेत्यादिरेव अनुभवः न तु घटः कपालिका इत्यादिः । अतएव घटः प्रमेयः नीलो घटः इत्याद्यनुभवयोः घटत्वादिविशिष्टे प्रमेयादेः नीलत्वाद्युपहिते घटस्य च अभेदभानात् उक्तानुभवाद्वैलक्षण्यम् । भाष्यादौ चायमर्थः स्फुटः — 'भावे चोपलब्धेः' इति सूत्रे हि द्रव्यस्य भावाभावाभ्यां गुणादेः तयोर्दर्शनात् द्रव्यमेव संस्थानभेदाद्गुणाद्यनेकधीशब्दभाक् । यथैको बाल्यादिभेदेनेत्युक्तम् । यत्तु तदुत्तरमेवं सति सांख्यसिद्धान्त इति काणादं प्रत्युक्तं, तत्सत्यताद्यङ्गीकारे, तत्त्यागे तु वेदान्तसिद्धान्तः। अतएव सम्बन्धतद्वतोरेकत्वेऽपि स्वरूपबाह्यरूपापेक्षया घटस्संयोग इत्यादिधीशब्दाः । यथा एकस्मिन् मनुष्यो ब्राह्मण इत्यादिः । न हि कार्यकारणयोः भेदः आश्रिताश्रयत्व वा वेदान्तिभिरभ्युपगम्यते, कार-णस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमादिति तत्रैव पश्चादुक्तम् । तत्र घटत्वविशिष्टं प्रति स्वरूपं घटत्वाद्यवच्छिन्नप्रतियोगिताकभेदानुयोगिता-नवच्छेदकं घटत्वाद्येव बाह्यरूपं तदन्यत्संयोगद्रव्यत्वादि । 'भावाच्चोप-लब्धेः' इति सूत्रे तन्तुव्यतिरेकेण कार्यं न, किन्तु तन्तव एवातान-वितानवन्तः पट इत्युक्त्वा तर्ह्यातानवितानरूपसंयोगा एव जायन्त इति कार्यस्य पूर्वमसत्त्वापत्तिरिति हृद्याशङ्क्य मूलकारणपर्यन्तमेषा रीतिः न किंचित् जायते न्यायसाम्यादित्यभिप्रायकं तन्तुष्वंशव इत्यादिक-मुक्तम् । भामत्यां च 'तत्रैकत्वं वनवत्' इत्युक्तम् । 'सत्त्वाच्चा-वरस्य' इति सूत्रे पूर्वं कारणात्मनैव कार्यस्य अवरकालीनस्य सत्त्वात् कारणानन्यत्वमुक्तम् । 'युक्तेश्शब्दान्तराच्च' इति सूत्रे कारणव्या-पारवैयर्थ्यमाशङ्क्य नैषदोषः कार्याकारेण कारणव्यवस्थापकत्वात्

**तथाच मुद्गरपातेन घटस्य स्वरूपेणावस्थितिविरहेऽपि कारणात्मना अवस्थितिविरहाभावात् ब्रह्मज्ञानप्रयुक्त एव स इति**

---

तस्यार्थवत्त्वादित्युक्त्वा तर्हि कार्याकारो जायत[1] इति ह्याशङ्क्य कारणे अव्याप्यवृत्तिपटत्वादिसम्बन्धस्योक्तरीत्या सम्पादकत्वमेव तादृशव्यवस्थापकत्वं अन्यथा कार्यासत्त्वतादवस्थ्यादित्याभिप्रायकमुक्तम् । ततश्च कपालत्वघटत्वयोः भेदात्तदाश्रययोरपि स्वसमसत्ताकभेदः तादृशाभेदविरोधी [2]इत्याशङ्क्य बाल्ययौवनादौ तददर्शनात् न तथेत्युक्तं नच विशेषदर्शनेत्यादिना । ततश्चाव्याप्यवृत्तिघटत्वादिसम्बन्ध एवोत्पत्तिः, ततश्च तादृशभेदश्चावश्यको बालयूनोरपि स इष्ट इत्याशङ्क्य तत्रोत्पत्त्यादिस्वीकारे सङ्कोचविकासाभ्यां एकस्यापि तत्स्यादित्यभिप्रायकं 'न क्षीरे'त्याद्युक्त्वा तस्मान्मूलकारणमेव तत्तदाकारेण सर्वव्यवहारास्पदमित्युपसंहृतम् । "उभयथा च दोषात्" इति सूत्रे च भाष्यभामत्योः वायवीयादिपरमाण्वपेक्षया तैजसादिपरमणूनां स्थूलतैजसादिद्रव्यस्येव मूर्त्युपचयः[3] आपादितः । तच्चोक्तरीत्या तेजस्त्वादीनां शब्दस्पर्शरूपादीनां च मेळनात् तज्जन्यविशेषस्य स्थूलतैजसस्थले अनङ्गीकारादेवोपपद्यते, अन्यथा तत्र स्थूलद्रव्योत्पत्तिस्वीकारे तदसम्भवात् । न च तदस्वीकारेपि महत्त्वविशेषस्य तैजसत्वादिव्याप्यजातिविशेषस्य च स्थूल इव परमाणावभावान्नोक्तापत्तिरिति वाच्यम्; स्वरूपगुणजातिभिः त्रसरेण्वविशेषस्यैवापादनात्, त्रसरेणौ चोक्तजातिमहत्त्वयोः मानाभावात्, महत्त्वमात्रापेक्षया प्रकृष्टस्येवापकृष्टस्यापि महत्त्वस्यानङ्गीकारात् । नीलपीतकपालारब्धघटादौ रूपानङ्गीकारेण रूपमहत्त्वयोः कारणताद्वयकल्पनापेक्षया लाघवेन च रूपमहत्त्वयोः कारणत्वस्थले शक्तिविशेषविशिष्टत्वेन तादात्म्यसम्बन्धेन द्रव्यचाक्षुषहेतुत्वस्वीकारात् । अत

---

[1] न जायते. [2] समसत्ताकं तदेव तादृशभेदविरोधि इति पा. [3] मृद्युपचयः

नातीतघटादावव्याप्तिः। अतएवोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम्। न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्या अर्थान्तरम्। उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणात्मना अवस्थानात् अवस्थितिसामान्य-

एव परमाण्वादेरचाक्षुषत्वोपपत्त्या महत्त्वस्य तदहेतुत्वात्, उक्तमहत्त्वाङ्गीकारेऽपि लाघवेन प्रकृष्टमहत्त्वासमवहिततैजसत्वादिसम्बन्धविशिष्टे सर्वत्र तत्सम्बन्धस्योक्तरीत्या स्वीकारेण परमाणावपि तत्सम्भवात्। तदुक्तं भामत्यां—'तथाचापरमाणुत्वं स्थूलत्वात्' इति। तथाच परमाणुत्वद्व्यणुकत्वासम्भवः पर्यवसन्नः। महत्त्वस्य प्रत्यक्षानियामकत्वलाघवमप्यत्रोपजीव्यम्। कल्पतरावपि—"द्रव्यस्य गुणसमुदायरूपत्वात् तद्वृद्धिह्रासाभ्यां उपचयापचयौ" इत्युक्तम्। यदिच मूलाविद्यायां कादाचित्कस्य घटत्वादिसम्बन्धस्य अवश्यं प्रयोजकं वाच्यं घटसंयोगाद्यभावोपि भूतलादौ घटसंयोगसामग्रीरूपकारणाभावप्रयुक्तः अन्यथा सर्वदैव स्यात् कदापि वा तन्न स्यादिति ब्रूषे तदास्तु दण्डादि[1]सम्बन्ध एव तथा। नैतावता कस्यचिदुत्पत्तिः, त्वयापि घटघटत्वादिसम्बन्धस्य दण्डादिप्रयुक्तस्य तदनङ्गीकारादिति अवहिततमाचित्तैश्चिन्त्यमेतत्सुधीभिः। ब्रह्मज्ञानप्रयुक्त एव स--इति॥ ब्रह्मणः तद्ज्ञानस्य वाऽज्ञानादिध्वंसत्वेन ब्रह्मज्ञानप्रयुक्तत्वमखण्डं युक्तम्, ज्ञानात्कैवल्यमिति लोकशास्त्रव्यवहारात्। आधार एव ध्वंसः प्रतियोग्येव प्रागभावस्य स इति मतयोः आत्मनोऽज्ञानादिध्वंसत्वेन प्रयुक्तत्वस्य स्वस्यैव स्वप्रागभावध्वंसत्वेन स्वप्रयुक्तत्वस्य च स्वीकारात्। उत्तरज्ञानात् ज्ञानध्वंसः स्वस्मात् स्वप्रागभावनाश इति प्रत्ययात्, जन्यत्वं तु क्षेमसाधारणं, ब्रह्मणोऽन्यादृशं तु पञ्चमप्रकारस्यैवेति यथास्थानं वक्ष्यते। एकमेव

[1] तत्तद्दण्डादीति पाठान्तरम्.

**विरहानुपपत्तेः । शशविषाणादाववस्थितिसामान्यविरहेऽपि तस्य ज्ञानप्रयुक्तत्वाभावान्नातिव्याप्तिः । शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकाले अवस्थित्यङ्गीकाराच्च बाधकज्ञानं विना तद्विरह इति न साध्यविकलता । अतएवोक्तं**

ध्वसत्वं स्वपरसाधारणसकलदृश्यप्रतियोगितानिरूपकमिति ध्वंसत्वान्तरास्वीकारादनवस्था नाशङ्क्या, दृश्यप्रतियोगितात्वेन निरूप्यत्वात् नात्माश्रयः ; यद्यपि परमतेऽप्युत्तरधीप्रयुक्तो ध्वंसः पूर्वज्ञानात्मकसामान्यस्यैवेति सिद्धसाधनादितादवस्थ्यं, विषयतासम्बन्धेन प्रयोजकत्वोक्तावपि परामर्शप्रयुक्तानुमित्यादेः प्रागभावे बाधधीप्रयुक्तानादिसंसर्गाभावस्य प्रतियोगिनिविष्टज्ञानादौ च तथा। तथापि ज्ञानप्रयुक्ततावच्छेदकं ज्ञानप्रयुक्तं वा अज्ञानवृत्तिप्रतियोगित्वं लक्षणं निर्दोषम् । अज्ञानध्वंसक्षण एव तत्कार्यस्य जीवेशभेदादेश्च ध्वंस एक इत्येकैव तदीया तेषु प्रतियोगितेति नाज्ञानभिन्नाव्याप्तिः । ज्ञानप्रयुक्ताज्ञानध्वंसस्य प्रातियोगित्वं वा अज्ञानध्वंसादितरध्वंसोत्पत्त्यङ्गीकारे अज्ञानध्वंसप्रयुक्तध्वंसप्रतियोगितादात्म्यं तत् उक्तप्रतियोगित्वं जीवेशभेदादाविवाज्ञानकार्येपि तत्तादात्म्यमज्ञानेऽपीति दृश्यमात्रे तदन्वयः अज्ञानवृत्तिभेदादिप्रतियोगितया सिद्धसाधनस्य वारणाय विशेषणं**शशविषाणेति** । शशविषाणे विरहप्रतियोगित्वस्यैवानभ्युपगमात् आदीति । घटादीत्यर्थः । घटादौ चातिव्याप्तिः सिद्धसाधनं, तथाच पटादिनिष्ठस्य घटाद्यवस्थितिसामान्याविरहस्य ज्ञानाप्रयुक्तत्वान्न सिद्धसाधनमिति भावः । शुक्तिरजतादेः पराङ्गीकृतमसत्त्वं निरस्यति—**शुक्तीति** । प्रतिपन्नोपाधौ स्वरूपेण निषेध्यस्यापि नासत्त्वं, असद्विलक्षणरूपं विनाप्यापरोक्ष्ये शशविषाणेऽपि तत्स्यादिति भावः । एतेन—" अवस्थित्या सामान्यं विशेष्यते विरहो वा, आद्ये अवास्थितिसामान्यं कारणात्मनाऽवस्थितिः कारणमिति यावत् । तथाच ज्ञानप्रयुक्ताभावप्रतियोगिकारणकत्वे वाच्ये उत्तरधीप्रयुक्ताभावप्रतियो-

गिपूर्वधीजन्यसंस्कारादौ सिद्धसाधनम् । अनाद्यविद्यादौ च बाधः । तादृशप्रतियोग्यविद्योपादानकत्वोक्तौ प्रतियोग्यन्तवैयर्थ्यं अनादिदृश्ये बाधश्च । न द्वितीयः, घटाद्यवस्थितेर्हि सामान्येन विरहो घटादेः स्वरूपविरहः कारणरूपविरहश्चेति द्वयं विशेषाभावान्यसामान्याभावस्य त्वयैवाविद्यावादे निरस्यत्वात् । तथाच स्वरूपविरहस्य ज्ञानाप्रयुक्तत्वादसम्भवः, अवस्थात्वस्यातिप्रसक्तत्वेन ज्ञानप्रयुक्तविरहप्रतियोगितानवच्छेदकत्वाच्च । शुक्तिरूप्यादेः स्वरूपेणावस्थित्यङ्गीकारे स्वरूपेण निषेधस्यासम्भवात् शुक्तिरूप्याद्यभावस्य शशविषाणाद्यभाववत् ज्ञानाप्रयुक्तत्वाच्च साध्यवैकल्य बाधश्चेत्यपास्तम् । किंच ज्ञानकालाविद्यमानं यत् घटादिस्थूलस्वरूपं तद्विरहस्य सूक्ष्मावस्थारूपस्य ज्ञानाप्रयुक्तेत्वऽपि ज्ञानकालविद्यमानं यद्घटादिस्थूलरूपं तद्विरहो ज्ञान[1]प्रयुक्त एव, ज्ञानकालाविद्यमानस्थूलेऽपि स्वकीयसूक्ष्मावस्थाध्वंसस्य ज्ञानप्रयुक्तस्य प्रतियोगित्वमव्याहतं, घटप्रागभावे घटध्वंसप्रतियोगित्ववत् । तथाच स्वरूपविरहो ज्ञानाप्रयुक्त इति न व्याहतम् । अपिच सामान्याभावास्वीकारेऽपि विशेषाभावकूटनिष्ठेन अज्ञानकार्यत्वावच्छिन्नप्रतियोगिताकविरहत्वेन एकाज्ञानपक्षे अज्ञानध्वंसोत्तरमज्ञानप्रयुक्तध्वंसस्वीकारे अज्ञानभिन्नदृश्यत्वावच्छिन्नप्रतियोगिताकविरहत्वेन युगपत्सर्वदृश्यध्वंसस्वीकारे दृश्यत्वावच्छिन्नप्रतियोगिताकविरहत्वेन ब्रह्मज्ञानप्रयुक्तत्वाङ्गीकारात् ज्ञानप्रयुक्ततावच्छेदकस्वावच्छिन्नप्रतियोगिताकविरहत्वधर्मवत्त्वं लक्षणं निर्दोषम् । न च ध्वंसस्यैव ज्ञानप्रयुक्तत्वान्नोक्तरूपेण तत्, अन्यथा शुक्तिरूप्यादेः उत्पत्तिपूर्वं अनधिकरणदेशे वा तदभावो ज्ञानप्रयुक्त इति स्यादिति वाच्यम्; दाहस्य हेत्वभावकाले जलादौ वा तदभावो मणिप्रयुक्त इति बुद्ध्यभावात्, देशकालविशेषावच्छेदेन तदभावस्य तत्प्रयुक्तत्ववद्देशकालविशेषावच्छेदेन संसर्गाभावमात्रस्यैव

---

[1] अज्ञानध्वंस. पा.

**विवरणाचार्यैः–'अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा**

ज्ञानप्रयुक्तत्वसम्भवात्, तादृशात्यन्ताभावत्वादिनाऽपि ज्ञानप्रयुक्तत्वप्रतीतेश्च, स्वविशिष्टप्रतियोगिकध्वंसत्वस्य स्वादिविरहत्वान्तस्थले निवेशसम्भवाच्च। यत्तु कालदेशविशेषयोः एकनिष्ठापरावच्छिन्नकार्याभावाधिकरणतैव प्रतिबन्धकादिप्रयुक्तेति, तन्न; इहेदानीं दाहाभावो मणिप्रयुक्त इत्यादिशब्दप्रत्यये अधिकरणत्वाप्रत्ययादाधेयत्वस्यैव नव्यमते सप्तम्यर्थत्वात्। न च तयोरेकनिरूपितमन्यावच्छिन्नमाधेयत्वं प्रयुक्तं[1] उक्तप्रत्यये भातीति[2] वाच्यम्। प्रयोजकसमानाधिकरणस्यैव प्रयुक्तस्यौचित्यात्। अन्यथा दाहाभावो मणिप्रयुक्तो नेति प्रत्ययापत्तेः। **अज्ञानस्य स्वकार्येणेति**। स्वोपादानाज्ञानस्य स्वस्य च निवर्तकं ज्ञानमारोप्यस्य बाध इत्यर्थः। तेनाज्ञानस्य बाध इति न व्यवहारः। किन्तु शुक्तिरजतादेः स इति उत्तरधीः पूर्वधीबाधो मा भूदिति स्वोपादानाज्ञानस्येति। उपादानत्वं प्रयोजकत्वम्। तेनाज्ञानादिसम्बन्धादिबाधे नाव्याप्तिः। अज्ञानतत्कार्ययोः ध्वंसयोः भेदस्वीकारे स्वोपादानाज्ञाननिवृत्त्युदयक्षणे स्वबाधाव्यवहारात् स्वस्येति। निवर्तकत्वं च निवृत्त्युपधायकत्वं* उपाधिसन्निधानादिकालीनज्ञानस्य प्रतिबिम्बादिभ्रमबाधत्वे स्वरूपयोग्यत्वमेव वाच्यं, स्वस्येति न वाच्यम्। परोक्षस्याप्यपरोक्षभ्रमबाधत्वे अज्ञानतद्व्याप्ययोः ध्वंसैक्ये वा उपधायकत्वोक्तिपक्षेऽपि स्वस्येति न वाच्यम्। परोक्षभ्रमोपादानस्य असत्त्वापादकाज्ञानस्य निवर्तकत्वात् परोक्षेऽपि लक्षणान्वयः। उपधायकत्वं च एककालीनत्वघटितमिति निवृत्तिकालएव बाधव्यवहारः स्थूलस्वरूपस्यापि सूक्ष्मावस्थानिवृत्तिप्रतियोगित्वमिति तत्कालेऽपि तद्बाधव्यवहारः। निवृत्त्युपधायकत्वोक्तिपक्षे भाविनो वर्तमानं ज्ञानं बाधो नेत्याशयेनाह—**वर्तमानेन प्रविलीनेन वेति**। तच्च लक्षणाप्रविष्टत्वेन

---

[1] मवच्छिन्नमाधेयत्वप्रयुक्ततया. [2] न भातीति.

सह ज्ञानेन निवृत्तिर्बाधः' इति । वार्तिककृद्भिश्चोक्तम्—

तत्त्वमस्यादिवाक्योत्थसम्यक्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति । सह कार्येण नासीदिति लीनेन कार्येण सह निवृत्त्यभिप्रायम् । 'सह कार्येण न भविष्यति' इति तु भाविकार्यनिवृत्त्यभिप्रायमित्यन्यदेतत् । रूप्योपादानमज्ञानं

---

स्वरूपकथनमपि अतीतस्यापि वर्तमानज्ञानं बाध इत्यत्रोपष्टम्भकम् । अज्ञानप्रयोज्यस्य ज्ञानप्रयुक्ता निवृत्तिः निवृत्तिस्वरूपयोग्यं ज्ञानं वा बाध इति बाधसामान्यलक्षणम् । प्रयुक्तत्वस्य स्वरूपयोग्यत्वस्य चाज्ञाननिवृत्तिद्वारकत्वं वाच्यम् । तेनोत्तरधीप्रयुक्तपूर्वधीनिवृत्तौ नातिव्याप्तिः । अज्ञानतत्प्रयुक्तयोः ध्वंसैक्ये निवृत्तावज्ञानप्रतियोगिकत्वं वाच्यम् । ज्ञानप्रयुक्तेति न वाच्यम्। स्वरूपयोग्यत्वं[1] च साक्षादेव वाच्यमिति दिक्। **लीनेन कार्येणेति** । येन कार्येण सह अविद्या आसीत् येन चास्ति भविष्यति तैस्सह सा तत्वज्ञानान्नास्तीति श्लोकार्थः । तत्राविद्याया इवातीतादिकार्याणामपि ध्वंसरूपसंसर्गाभावस्य तत्त्वधीप्रयुक्तत्वप्रतीतेरतीतस्य च सूक्ष्मावस्थारूपो ध्वंसो न वर्तमानतत्त्वधीप्रयुक्तः तस्य तत्त्वाप्रत्ययात् । किन्तूक्तावस्थाप्रतियोगिकध्वंस इति ज्ञानप्रयुक्तध्वंसप्रतियोगित्वाय लीनावस्था आवश्यकीति भावः । **भावीति** । वर्तमानतत्त्वज्ञानेनाज्ञानस्य आवरणशक्तिमात्रस्य वा निवृत्तिद्वारा भुज्यमानकर्मफलस्य भाविनो निवृत्तिः । सा च प्रकृतानुपष्टम्भिकेत्याह—**इत्यन्यादिति** ।

---

[1] स्वरूपयोग्यत्वात्

**स्वकार्येण वर्तमानेन लीनेन वा सहाधिष्ठानसाक्षात्कारान्निवर्तते । तत्तद्रूप्योपादानानां अज्ञानानां भेदाभ्युपगमादिति न दृष्टान्ते साध्यवैकल्यम् । मुद्गरपातानन्तरं घटो नास्तीति प्रतीतिवदधिष्ठानज्ञानानन्तरं शुक्त्यज्ञानं तद्गतरूप्यं च नास्तीति प्रतीतेः सर्वसम्मतत्त्वात् । ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वमित्यपि साधु । उत्तरज्ञानस्य पूर्वज्ञाननिवर्तकत्वं च न ज्ञानत्वव्याप्यधर्मेण, किन्त्विच्छादिसाधारणेनोदीच्यात्मविशेषगुणत्वेन उदीच्यत्वेन वेति न सिद्ध-**

---

**अज्ञानानां भेदेति** । तथाच तन्मत एवेदं साध्यमिति भावः । अथवा ननु अवस्थाऽज्ञानानभ्युपगमपक्षे साध्यं नेदृशं सम्भवतीत्यत आह—**रूप्येत्यादि** । **अधिष्ठानेति** । ब्रह्मेत्यर्थः । **निवर्तते** निवर्तितुं योग्यम् । तथाचाज्ञानकार्यत्वरूपं ज्ञाननिवर्त्यतायोग्यत्वमेव वाच्यं, उक्तसंग्रहायेति भावः । एकस्य मूलाज्ञानस्य कार्यमात्रोपादानत्वं सहकारिवैचित्र्यादित्याह—**तत्तदिति** । **अज्ञानानामिति** । पदार्थतावच्छेदकभेदेन एकशेषानेकवचनयोरुक्तिः सूर्यमित्रावित्यादिवत् । **भेदः** तत्तद्दोषादिसहकारेण तत्तद्भ्रमोपधायकत्वम् । **नास्तीति प्रतीतेरिति** । न च तत्र ध्वंसभाने[1] रूप्यध्वंसवति रूप्यवत्यपि तादृशबुद्ध्यापत्त्याऽत्यन्ताभावविषयकत्वस्यैव वाच्यत्वात् कथं ज्ञानप्रयुक्तनिवृत्तिसिद्धिरिति वाच्यम्; तादृशबुद्धेः रूप्यत्वावच्छिन्नविरोधिसंसर्गाभावविषयकत्वेनोक्तापत्त्यभावात् । किंच **पातानन्तरं** पातोत्तरमेव। **रूप्यं चेति** चकार एवार्थो ज्ञानानन्तरमित्यत्र योज्यः। तथाच ज्ञानानन्तरमेव रूप्यं नास्ति[2] नतु ज्ञानपूर्वमिति प्रतीतेः ध्वंस एव विषय इति भावः । **उदीच्यात्मेति** । शब्दस्य तु पृथिव्यादिगुणस्य वायुसंयोगादिनैव नाशः । **उदीच्यत्वेनेति** । उदीच्यगुणत्वादिव्यापके-

---

1 ध्वंसाभाने. 2 नास्तीति धीः इति पा.

**साधनादि । नापीच्छाद्यनिवर्त्ये स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारे अतिव्याप्तिः, स्मृतित्वेन स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् । स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम् । दृढत्वं च समानविषयकसंस्कारानेकत्वमित्यदोषः । वस्तुतस्तु साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम् । अतो न पूर्वोक्तदोषः । नापि निश्चयत्वेन ज्ञानत्व-**

---

त्यर्थः । व्यापकत्वरूपावच्छिन्नत्वस्य तृतीयार्थत्वान्नाम्नोप्युदीच्यविशेषपरत्वाच्च । तथाच गुणत्वादिना निवर्तकत्वं, निवर्त्यता तु धर्मादिव्यावृत्तेन शब्दसाधारणेन । न च ज्ञानादेः क्षणिकत्वापत्तिः स्वस्यैव नाशकत्वादिति वाच्यम्; पूर्वत्वसम्बन्धेन नाशकत्वस्वीकारात् । वस्तुतस्तु उदीच्यत्वेनेत्यस्य जातिविशेषेणेत्यर्थः । तेन गुणत्वादेः व्यापकत्वेन अन्यथासिद्ध्या विनिगमकाभावेन च ज्ञानत्वादिना न तत्प्रसक्तिः । यत्तु सिद्धान्ते पूर्वधीनिवृत्तिरेवोत्तरधीः अतो न सिद्धसाध्यतेति, तन्न; ज्ञानमेवाज्ञाननिवृत्तिरित्यस्यापि तुल्यत्वात् ज्ञानात्मकनिवृत्तिप्रतियोगित्वे वाच्ये तद्दोषतादवस्थ्यात् अनुभवसिद्धं विलक्षणस्मृत्यादिकार्येणानुमेयम् । ननु अनुमेयो विलक्षणसंस्कारोपि स्मृतिजन्य इति स्मृत्या पूर्वसंस्कारनाश एवेत्यत आह—**दृढत्वं चेति** । तथाच समानविषयकत्वादिसम्बन्धेन संस्कारविशिष्टसंस्कारत्वेन विलक्षणस्मृतौ हेतुत्वं न तु विलक्षणसंस्कारत्वेन, वैलक्षण्यस्य तत्र स्मृतिनियम्यत्वस्य संस्कारनाशादेश्च कल्पने गौरवात् । न चोपेक्षात्मकस्मृत्युत्तरं स्मृत्यापत्तिः, उद्बोधकाभावात् । पदज्ञानत्वाद्यनुगतरूपे विशेष्यविशेषणत्वाविनिगम्यत्वेन नानाहेतुत्वापत्त्या विजातीयत्वेनैवोद्बोधकत्वादिति भावः । **संशये** विपरीतज्ञाने । यद्यपि ध्वंसत्वेन प्रयुक्तत्वोक्तौ नायं दोषः अनादिसंसर्गाभावस्यैव निश्चयादिप्रति-

बन्धकप्रयुक्तत्वात् । अनुमित्यादिरूपः प्रागभावध्वंसो न ध्वंसत्वेन परामर्शादिप्रयुक्तः, तथापि ज्ञानत्वव्याप्यापेक्षया लाघवात्साक्षात्कारत्वमेव वाच्यं न तु ध्वंसत्वेन प्रयुक्तत्वमिति भावः । ननु इदं रजतं पश्यामीत्यनुभूयमानभ्रमं प्रति चाक्षुषत्वेन निवर्तकत्वं एवं स्पृशामीत्याद्यनुभूयमाने स्पार्शनत्वादिनेति साध्यवैकल्यमिति चेन्न; चाक्षुषाधिष्ठानधजिन्यभ्रमोपधायकाज्ञानत्वेन चाक्षुषत्वेन निवर्त्यनिवर्तकतोक्तौ तादृशोपधानशून्याज्ञानस्य चाक्षुषेणाप्यनिवृत्त्यापत्तेः । उक्तभ्रमस्वरूपयोग्यतोक्तौ चाक्षुषं विना स्पार्शनादिना तादृशस्वरूपयोग्याज्ञानानिवृत्ति[1] प्रसङ्गात् । न च स्पार्शनादिनिवर्त्याज्ञानं नोक्तस्वरूपयोग्यमिति वाच्यम्; चाक्षुषस्पार्शनाधिष्ठानधीजन्यभ्रमस्य समूलस्य स्पार्शनादिना निवृत्तेः । तत्राज्ञानभेदस्वीकारेऽपि अज्ञानसत्त्वे अधिष्ठानप्रकाशानुपपत्तेः । न च साक्षात्कारत्वेन निवर्तकत्वे अधिष्ठानस्पार्शनोत्तरं क्वचिच्चाक्षुषादिभ्रमस्यानुभूयमानस्यानुपपत्तिरिति वाच्यम्; तादृशस्थले स्पार्शनादौ अप्रमात्वधिया निवर्तकत्वास्वीकारात् । अन्यथा वह्न्यादौ स्पार्शने तदन्यत्वादिचाक्षुषभ्रमाद्यापत्तेः । अन्यथा रजतभेदादितद्व्याप्यत्वानवगाहिनी शुक्तित्वादिधीरखण्डब्रह्मधीश्च न भ्रमनिवर्तिका स्यात् । परेषां तथैवाभ्युपगमादित्यस्याप्यापत्तेश्च परोक्षप्रातिभासिकभ्रमे साक्षात्कारत्वेनानिवर्तकत्वेपि तस्यादृष्टान्तत्वेन न दोषः । न च ब्रह्मज्ञानेऽपि निश्चयत्वेनैव तथास्तु, तच्च जातिविशेषादिरूपं निर्विकल्पेऽपीति वाच्यं; अभानापादकस्य परोक्षेण निवृत्त्यननुभवात् अतादृशाज्ञानं प्रत्येव तथा स्वीकारात् । न च परोक्षभ्रमोऽप्यभानापादकाज्ञानादिति वाच्यं; पिशाचाद्यतीन्द्रिये रूपविशेषादिभ्रमोपादानाज्ञानस्य तत्त्वासम्भवात्, पिशाचाद्यवच्छिन्नचैतन्यस्य साक्षित्वानापत्त्यैवाभानसम्भवात् । यदि

[1] योग्याज्ञाननिवृत्ति.

**व्याप्यधर्मेण ज्ञाननिवर्त्ये संशये अतिव्याप्तिरीति सर्वमवदातम् ॥**

**इति तृतीयमिथ्यात्वविचारः.**

---

च चाक्षुषत्वादिना तथेत्याग्रहः; तथापि यद्विशेषयोरिति व्यासद्या साक्षात्कारत्वेनाऽपि निवर्तकत्वं शुद्धविषयकसाक्षात्काराज्ञानत्वाभ्यामपि विशेषतो नाशकनाश्यभावः स्वीक्रियते। एतेन ब्रह्मसाक्षात्कारेणेव शुक्त्यादिस्पार्शनेनापि तत्त्वज्ञानेन विनैवचाक्षुषादितत्त्वज्ञानं चाक्षुषादिभ्रमो निवर्त्यतामिति परास्तं, शुद्धविषयकसाक्षात्कारसविकल्पकचाक्षुषाद्यन्यतमविशेषकारणसहकृतस्यैव साक्षात्काररूपसामान्यकारणस्य फलोपधायकत्वात्। "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति" इति तु चाक्षुषत्वेनैव निवर्तकत्वबोधकं, साक्षात्कारत्वेन उपादानप्रत्यक्षप्रयुक्तमपि[1] प्रवृत्त्यादिकं न निवृत्तिः प्रागभावानङ्गीकारात्। अतो न प्रवृत्त्यादिप्रागभावे सिद्धसाधनम्। नचैवं लक्षणे निवृत्तिनिवेशे संशयनिवृत्तेः निश्चयाप्रयुक्तत्वान्नापीत्यादिकमसंगतमिति वाच्यं, साक्षात्कारत्वोक्तिपक्ष एव निवृत्तिनिवेशात्। अतएव तादित्यनुक्त्वा ज्ञाननिवर्त्यत्वमित्युक्तम्। प्रागभावस्वीकारे तु स्वसमानविषयकत्वसम्बन्धावच्छिन्नप्रयोजकताकविरहप्रतियोगिकत्वमेव वाच्यम्। ज्ञानं हि तत्सम्बन्धेन अज्ञाने सन्निवृत्तिप्रयोजकं न तूपादानप्रत्यक्षादिकम्। तत्पक्षे स्मृत्या संस्कारनाशास्वीकारे साक्षात्कारत्वप्रयोजकं[2] चिन्त्यम्। अज्ञानव्याप्यस्य निवृत्तिरप्यज्ञाननिवृतिद्वारा तादृशीति दिक् ॥

इति तृतीयमिथ्यात्वनिरूपणम्

---

[1] प्रयुक्तमिति. पा. [2] प्रयोजनं. पा.

# चतुर्थमिथ्यात्वनिरूपणम्.

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्। तच्च स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वम्। अतः पूर्ववद्वैलक्षण्यम्। दूषणपरिहारः पूर्ववत्। न च संयोगिनि समवायिनि वा देशे तदत्यन्ताभावासंम्भवः, सम्भवे तु उपादानत्वाद्यनुपपत्तिरिति वाच्यम्; काले सहसम्भववद्देशेऽपि सहसम्भवाविरोधात् प्रागभावसत्त्वेनोपादानत्वाविरोधाच्च। न चात्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति वाच्यम्; काले व्यभिचारात्। न च काले प्रागभावात्यन्ताभावयोस्सामानाधिकरण्यमिदानीं घटात्यन्ताभाव इदानीं घटप्रागभाव इति प्रतीतिबलादङ्गीकृतं, देशे तु तदुभयसामानाधिकरण्ये न किञ्चिदपि प्रमाणमिति वाच्यम्; मिथ्यात्वानुमितेः श्रुतेश्च प्रमाणत्वात्। विषमसत्ताकभावाभावयोरविरोधः पूर्वमुपपादितः। न चासत्यतिव्याप्तिः. स्वात्यन्ताभावाधिकरण एव सत्त्वेन

---

सत्त्वेनेति। अबाध्यत्वोपलक्षिततादात्म्येनेत्यर्थः। तच्च स्वस्मिन्नपि स्वरूपसम्बन्धेनास्त्येव, तत् तत्वान्यतरवत्त्वेनेति वा अर्थः। तेन तादात्म्ये नाव्याप्तिः सत्त्वावच्छिन्ना या स्वप्रकारता तन्निरूपितविशेष्यताव्यापकस्वात्यन्ताभावकत्वं सत्त्वावच्छिन्नस्वाधिकरणताव्यापकस्वात्यन्ताभावकत्वं सत्त्वसमानाधिकरणस्वावच्छिन्नाधिकरणताव्यापकतावच्छेदकं यद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वं तद्धर्मवत्त्वं वा लक्षणम्। व्यापकत्वस्थले सामानाधिकरण्यं निवेश्यान्त्यद्वयं वा वाच्यम्। तेन स्वात्यन्ताभावानधिकरणाप्रसिद्धावपि नैवकारार्थासङ्गतिः। आद्ययोः स्वपदं लक्ष्यपरं, अन्त्ये तु यद्धर्मपरम्। असतः सत्त्वेन धीस्वीकारेऽपि द्वितीयतृतीययोः नासत्यतिव्याप्तिः। येन सम्बन्धेनाधिकरणता तेन प्रति-

प्रतीयमानत्वस्य विवक्षितत्वात् । न च "तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुत्या असतः सत्त्वप्रतीतेस्तत्राति-व्याप्तिर्दुष्परिहरेति वाच्यम्; 'सदेवेदमग्र आसीत्' इत्यस्य अर्थस्याभाव एव नञा प्रतिपाद्यते । न त्वसतः सत्त्वम्, विरोधात् । अतः नातिव्याप्तिः । सर्वं चान्यत् पूर्वोक्तमेवानु-सन्धेयमित्युपरम्यते ॥

इति चतुर्थमिथ्यात्वविचारः.

---

योगिता ग्राह्या। वृत्त्यनियामकसम्बन्धेनापि मिथ्यात्वलाभायाधिकरण-ताऽपि सम्बन्धितारूपा । एवंच विषयितया स्वसम्बन्धिनि ज्ञाने असतोऽत्यन्ताभावसत्त्वादसत्यतिव्याप्तिः सत्त्वावच्छिन्नत्वादिनिवेशः । एकरूपेण स्वाधिकरणे रूपान्तरेण स्वाभावस्वीकारेपि न तृतीये सिद्धसाधनम् । **पूर्वोक्तमिति** । न चाव्याप्यवृत्तिवारणाय एकावच्छिन्न-त्वस्यानवच्छिन्नत्वस्य वा अभावे निवेशे साध्याप्रसिद्धिः, शुक्तिरजतादा-वेव त्रैकालिकनिषेधेन तत्प्रसिद्धेः । एवंच स्वाधिकरणावृत्तिस्सन् स्वान-धिकरणवृत्तिर्यस्तदन्यात्यन्ताभावप्रतियोगित्वं साध्यम् । संयोगादौ दृष्टान्ते साध्यप्रसिद्ध्यर्थमवृत्त्यन्तम् । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि-त्वेति पक्षविशेषणात् अवृत्त्यन्ताभावप्रतियोगित्वं पर्यवस्यति । अव्या-प्यवृत्त्यत्यन्ताभावप्रतियोगित्वेन विशेषिते पक्षे स्वसमानाधिकरणात्यन्ता-भावप्रतियोगित्वं वा साध्यं व्याप्यवृत्त्यभावेन पर्यवस्यतीतियत्तत्वविवे-कादावुक्तं तत्सम्भवप्राचुर्येण; अवृत्त्यधिष्ठानात्मकाभावपर्यवसानस्यास्म-त्साध्येऽपि लाघवेन सम्भवात्, अवृत्तेरप्यत्यन्ताभावत्वेन रूपेण स्वस्मिन् तादात्म्याभ्युपगमेन व्यापकत्वसम्भवात्, संयोगादौ पक्षे अस्मदीयरीतेरावश्यकत्वाच्चेति ध्येयम् । असद्वारणंत्वभ्युपेत्य वाद

## पञ्चममिथ्यात्वनिरूपणम्.

सद्विविक्तत्वं वा मिथ्यात्त्वम्। सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वम्। तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्ध्यति। प्रमाणसिद्धत्वं च अबाध्यत्वव्याप्यमित्यन्यत्। अत्राप्यसति निर्धर्मके ब्रह्मणि

---

उक्तरीत्या तदत्यन्ताभावे मानाभावात्। सत्त्वाननुगमे[1] तु सत्त्वसमानाधिकरणं यत् स्वावच्छेदक तदवच्छिन्नव्यापकत्वं स्वनिरूपकत्वं चेत्युभयसम्बन्धेन प्रतियोगिमत्त्व[2]मत्यन्ताभावत्वावच्छेदेन साध्यम्। व्यापकत्वं समानाधिकरणभेदीयायाः प्रतियोगितायाः अनवच्छिन्नावच्छेदकताशून्यत्वम्। सिद्धान्ते सर्वेषां अभावस्वरूपाणां केवलान्वयित्वेन नोक्तावच्छेदकत्वं सामानाधिकरण्यं वा व्यापकत्वस्थले वाच्यम्। व्यापकत्वादि, निरवच्छिन्नविशेषणतया बोध्यम्। तेनाव्याप्यवृत्तौ न सिद्धसाध्यता[3]। विस्तरस्तु विशेषानुमानेषु भविष्यति ॥

इति चतुर्थमिथ्यात्वनिरूपणम्

---

**दोषेति**। **प्रमाणसिद्धत्वं** प्रमाविषयत्वम्। प्रमाणत्वं तु बाधिताविषयकधीत्वमखण्डधर्मो वा। तेन दोषाणामनुगतत्वसर्वसम्मतत्वाद्यभावेऽपि न क्षतिः। घटादिज्ञानं न प्रमा तद्विषये अबाधितत्वाग्रहात्, किन्तु तत्त्वेनाभिमन्यत इत्याह—**प्रमाणसिद्धत्व चेति**। प्रमा चेत्यर्थः। **अबाध्यत्वव्याप्यमिति**। नास्ति बाध्यत्वं यत्र तदबाध्यत्वं शुद्धं ब्रह्म तदभिन्नं प्रमोपहितं ब्रह्म व्याप्यं विषयो यस्य तत्तथा। तेनाबाध्यस्य शुद्धस्याविषयत्वेऽपि न क्षतिः। **निर्धर्मक इति**। भावरूपधर्मशून्यत्वेऽपि अभावरूपधर्मवैशिष्ट्यस्यो-

---

1 स्वत्वाननुगमे. 2 प्रतियोगित्व. 3 सिद्धसाधनता.

चातिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वं विशेषणं देयम्; तयोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावात्। अतएव सद्विविक्तत्वमित्यत्र सत्त्वं सत्ताजात्यधिकरणत्वं वा, अबाध्यत्वं वा, ब्रह्मरूपत्वं वा। आद्ये घटादावाविद्यकजातेस्त्वयाऽभ्युपगमेनासम्भवः। द्वितीये बाध्यत्वरूपमिथ्यात्वपर्यवसानम्। तृतीये सिद्धसाधनमिति निरस्तम्। अनभ्युपगमादेव सदसद्विलक्षणत्वपक्षोक्तयुक्तयश्चात्रानुसन्धेयाः। अवशिष्टं च दृष्टान्तसिद्धौ वक्ष्यामः॥

इत्यद्वैतसिद्धौ पञ्चममिथ्यात्वनिरुक्तिः.

---

क्तत्वादतिव्याप्तिः। विशेष्यतया तद्दाने शेषवैयर्थ्यादाह—**विशेषणमिति**। तथाच धूमप्रागभाववन्न वैयर्थ्यमिति। **पर्यवसानमिति**। तथाच बाध्यत्वमेवास्तु शेषवैयर्थ्यात्, तच्च ज्ञाननिवर्त्यत्वादिरूपमुक्तमेवेति भावः। **उक्तेति**। गुणादिकमित्यादिनोक्तेत्यर्थः। तथाच सत्त्वेन प्रतीयमानत्वांशे न सिद्धसाधनं, मिलितप्रतीतेरुद्देश्यत्वात्। तच्च मिलितस्यैव दृश्यत्वप्रयोजकत्वात्। मिलितं च शुक्तिरूप्यादौ प्रसिद्धमित्यादि। अत्र सद्विविक्तत्वं सदवृत्तिधर्मवत्त्वम्। सत्त्वं च अबाध्यं सर्वमेयमित्याकारकधीविषयत्वम्। तेन न बाध्यत्वघटितत्वप्रयुक्तवैयर्थ्यादि अविनाश्यवृत्तिधर्मवत्त्वं वा पक्षतावच्छेदकावच्छेदेन साध्यमित्यादि बोध्यम्। यत्तु—"ज्ञानत्वव्याप्येत्याद्ययुक्तं मननत्वावच्छिन्ननिवर्तकताके अर्थसंशये अतिव्याप्तेः, मननस्यातत्वे वैयर्थ्यात्। उत्तरात्मविशेषणत्वेनेत्यादि च न युक्तम्, धर्मादावतिप्रसङ्गात्। स्मृत्या च संस्कारो नाश्यते सुखादिनेव धर्मादिः, दृढस्तु संस्कारः स्मृतिजन्य एव, साक्षात्कारत्वेन च निवर्तकताऽपि न; प्रत्यक्षस्य शब्दशा-

ध्यत्वं वदता त्वयैव नायं सर्प इति शाब्दबुद्धेः बाधकत्वोक्तेः[1]। प्रतियोग्यत्यन्ताभावयोः काल इव देशेऽप्यविरोध इत्यपि न; तथा सति विरोधोच्छेदापत्तेः, अद्वैतधियोप्यबाधकत्वापत्तेः। मिथ्यात्वानुमानं च तत्र न मानं, विरोधेन तस्यैवानवतारात्। प्रमाणासिद्धत्वं सत्त्वमित्यपि न, तदभावस्य[2] घटादावव्याप्तेः। तद्बाध्यत्वव्याप्यमित्यपि न; तस्य ब्रह्मण्यभावेऽप्यबाध्यत्वात्, प्रपञ्चे तद्भावेऽपि बाध्यत्वात्, तस्मिन् अबाध्यत्वं प्रति व्यापकत्वस्येव व्याप्यत्वस्याभावात्" इति, तत्तुच्छम्; मननस्य तर्कत्वेनेच्छादेरिव ज्ञानत्वाभावात्। भावे वा युक्त्यनुसन्धानरूपस्य तस्य निश्चयत्वरूपेण ब्रह्माद्वितीयमित्यादिनिश्चयद्वारा ब्रह्माद्वितीयं न वेत्याकारकसंशयविरहप्रयोजकतायाः नापि निश्चयत्वेत्यादिना ग्रन्थकृतैवोक्तत्वेन त्वदुद्भावनानर्हत्वात्। व्यभिचारादिनिश्चयद्वारा साध्यादिज्ञाननिवर्त्यव्याप्त्यादिज्ञानवारणाय ज्ञानमद्वारीकृत्य निवर्तकताया अवश्यवाच्यत्वात्। मननत्वादिना साक्षात्संशयनिवर्तकतायां मानाभावात् स्वप्रयोज्योक्तनिश्चयद्वारा तत्सम्भवे[3] तत्कल्पने गौरवाच्च। उत्तरेत्यादि न युक्तं, स्वोत्तरधर्मादेर्निवर्तकत्वे क्षत्यभावात्। स्मृत्या च संस्कारनाशे दृढसंस्कारजनने च गौरवमुक्तम्। सुखादिना धर्माद्यनाशे पुनस्सुखाद्यापत्तिः। संस्कारनाशेऽपि न पुनः स्मृत्यापत्तिः उद्बोधकाभावादित्युक्तम्। प्रकारान्तरेणोक्तापत्तिवारणे धर्मादिकमपि सुखादिना न नाश्यताम्। परोक्ष[4]शाब्दबुद्धेः प्रत्यक्षं प्रत्यप्रमात्वज्ञापकत्वादिरूपबाधकत्वोक्तावपि साक्षात्कारत्वेन निवर्तकतायां न हानिः। भावाभावयोरविरोधेऽपि तद्धीबाधकत्वमुपपादितम्। मिथ्यानुमाने च विरोधसन्देहो न विरोधी तन्निश्चयस्तु तदा नेत्युक्तम्। उक्तप्रमाणासिद्धत्वं च न घटादौ, किन्तु प्रमोपहिते ब्रह्मणि। अबाध्यत्वव्याप्य-

---

[1] प्रतिबन्धकतोक्तः. [2] तदा भावस्य. [3] तत्सम्भवेन. [4] परीक्षित.

# मिथ्यात्वमिथ्यात्वोपपत्तिः

ननूक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः। एकस्मिन् धर्मिणि प्रसक्तयो· विरुद्धधर्मयोः एकमिथ्यात्वे

---

मित्यस्य तु उक्तार्थे न दोषः। न चैवमुपहितब्रह्मणोपि बाधितत्वा-त्तुच्छबाधिताविषयकधीत्वरूपस्य विशेषणस्यासिद्धिः प्रमाया अप्रसि-द्धिश्चेति वाच्यम्; उक्तोपहितब्रह्मान्यबाध्याविषयकत्वनिवेशात्, तादृ-शब्रह्मबुद्धावेव प्रमात्वस्वीकाराच्च, निर्धर्मकब्रह्ममते अन्यथानुपपत्तेः। यत्तु सर्वदेशकालगतात्यन्ताभावप्रतियोगित्वरूपं नृशृङ्गादिसाधारणमत्य-न्तासत्त्वमेव मिथ्यात्वमिति, तन्न; तार्किकमते गगनादौ मिथ्या-त्वव्यवहारापत्तेः। स्वाधिकरणानिवेशे च कालान्तस्य व्यर्थत्वादस्मदीय-लक्षणमेव। अत्यन्तासतश्च नाभावप्रतियोगित्वं मानाभावादित्युक्तम्। कदाचिदधिकरणासम्बद्धे च ध्वंसादिप्रतियोगित्वं प्रत्यक्षादिसिद्धम्॥

एवमन्यत्प्रलपितं दूषितत्वान्न दूष्यते।
तस्मात् टीकोक्तमाद्यं द्वे प्रकाशात्मोक्तबाध्यते?॥
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्।
नानिर्वाच्येऽप्रसिद्ध्यादिः प्रतीते प्रतिषेध्यता॥
स्वाश्रयेऽत्यन्तविरहः सद्विलक्षणता तथा।
इति पक्षत्रयेऽत्यन्तासत्त्वं नोक्तविशेषणात्॥
नोक्तधीनाश्यता सिद्धा गृह्णतां पञ्चता परैः।
सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रतां गतैः॥
दुरन्तध्वान्तखण्डानां खण्डिता दृश्यसत्यता॥

इति पञ्चममिथ्यात्वनिरुक्तिः

---

अपरसत्यत्वनियमात्, मिथ्यत्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः। उभयथाप्यद्वैतव्याघात इति चेन्न; मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः। तत्र हि विरुद्धयोर्धर्मयोः एकमिथ्यात्वे अपरसत्यत्वम्, यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् यथा परस्परविरहरूपयो रजतत्वतदभावयोः शुक्तौ, यथावा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव। तत्र निषेध्यतावच्छेदकभेदानियमात्। प्रकृते तु निषेध्य-

**एकमिथ्यात्वे** अन्यतरमिथ्यात्वे। **अपरसत्यत्वनियमात्** अन्यतरस्याधिकसत्तानियमात्। एवमग्रेऽपि। सत्यत्वमधिक[1]सत्ता। तथाच ययोर्विरुद्धयोरन्यतरस्मिन् मिथ्यात्वं पारमार्थिकं तयोरन्यतरदन्यतरापेक्षया अधिकसत्ताकमिति नियमः, विरुद्धयोः यदेकं मिथ्या तदपेक्षया तदपरमधिकसत्ताकमवश्यमित्युक्तौ तु शुक्तिरूप्ये व्यावहारिकमिथ्यात्वाश्रये तात्त्विकसत्यत्वाभावाद्व्यभिचारापत्तेः। यत्तु शुक्तिरूप्यं न मिथ्या मिथ्यात्वस्याश्रयः मिथ्यात्वविरुद्धस्य तात्त्विकसत्यत्वस्याभावात्। यद्यद्विरुद्धस्य तात्त्विकस्याभाववत् तत्तस्य मिथ्याभूतस्यानाश्रयो यथा गोत्वविरुद्धस्य तात्त्विकस्य गोत्वाभावस्याभाववान् मिथ्याभूतस्य गोत्वस्यानाश्रयश्च गौः। तथाच रूप्यमिथ्यात्वस्य तात्त्विकत्वेन रूप्ये हेतोरेवाभावान्न व्यभिचार इति तत्प्रायः[2]स्वगुरुं प्रत्येवोक्तम्। अन्यथास्मान् प्रति तात्त्विकस्य गोत्वाभावस्येत्यस्यासिद्ध्या साधनवैकल्यात्, तात्त्विकं ब्रह्मैवेति तत्प्रतियोगिकात्यन्ताभावाप्रसिद्ध्या हेत्वप्रसिद्धेश्च। वक्ष्यमाणतर्कसनाथं दृश्यमिथ्यात्वानुमानमपेक्ष्योक्तानुमानस्य तर्करहितत्वेन[3] दुर्बलत्वाच्च। ननु परस्परविरहरूपयोः परस्परविरहव्यापकयोश्चैकस्य मिथ्यात्वे अपरस्याधिकसत्ता आवश्यकी, अन्यथा समसत्ताकत्वे तयोः सहानवस्थान-

1 सत्यत्वमग्र. 2 तदभिप्रायः. 3 तद्रहितत्वेन.

**तावच्छेदकमेकमेव दृश्यत्वादि। यथा गोत्वाश्वत्वयोः एकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यमिति नैकतरनिषेधे अन्यतरसत्त्वं तद्वत्। यथाच सत्यत्वमिथ्यात्वयोः न परस्परविरहरूपत्वं न वा परस्परविरहव्यापकत्वं तथोपपादितमधस्तात्। पर-**

---

रूपविरोधात्। तथाच गोत्वाश्वत्वयोः समानाधिकरणप्रतीतिकयोः अतथात्वात्समसत्ताकत्वेऽपि सत्यत्वमिथ्यात्वयोः तथात्वान्न समसत्तेत्यत आह—**यथाचेति**। **तथेत्यादि**। स प्रकारः सत्त्वासत्त्वे अधिकृत्योपपादित इत्यर्थः। तथाच यथा सत्त्वासत्त्वयोः न परस्पराभावत्वं प्रपञ्चे तयोः प्रत्येकासत्त्वेपि प्रत्येकाभावसत्त्वात् तथा सत्यत्वमिथ्यात्वयोरपि न तत्त्वम्, तुच्छे तयोः प्रत्येकासत्त्वेपि प्रत्येकाभावसत्त्वादिति भावः। ननु तथाऽपि परस्परविरहव्याप्यत्वात्तयोर्व्यावहारिकयोः न सामानाधिकरण्यं गोत्वाश्वत्वयोरिव, तत्राह—**परस्परविरहरूपत्व इति**। उक्तविरहस्य रूपं रूपणं यस्मादिति व्युत्पत्त्या उक्तविरहव्याप्यत्वे इत्यर्थः। अथवोक्तविरहेण रूपं रूपणं यस्येति व्युत्पत्तेरपि सम्भवात्। रूपमभिन्नं व्याप्यं व्यापकं च। ननु यत्र तात्त्विकसत्त्वं तत्र न मिथ्यात्वमित्यात्मनि दृष्टमिति भिन्नसत्ताकयोरपि विरोधः। किञ्च प्रपञ्चे सत्यत्वं मिथ्यात्वविषमसत्ताकमपि तात्त्विकं वाच्यम्। अन्यथा 'सत्यं चानृतं च सत्यमभवत्' इत्यादिश्रुतौ सत्यब्रह्मणः प्रातीतिकसत्यत्वाश्रयाकाशादिसकलप्रपञ्चे कारणत्वोक्तेरनृतपदं विनापि सम्भवात्तद्वैयर्थ्यापत्तेः। शुक्तिरूप्यादिव्यावृत्तसत्यत्वस्य सत्यपदेन ग्रहणे तु शुक्तिरूप्यादिग्राहकमनृतपदं सार्थकमतो नाद्वैतहानेरुद्धारस्तत्राह—

**स्परविरहरूपत्वेपि विषमसत्ताकयोरविरोधात् । व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेपि काल्पनिकसत्यत्वानपहारात् । तार्किकमतासिद्धसंयोगतदभाववत् सत्यत्वमिथ्यात्वयोः समुच्चयाभ्युपगमाच्च । एकस्य साधकेन अपरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्यतदभावयोः ।**

---

**व्यावहारिकेति** । **व्यावहारिकसत्त्वेति** । प्रातीतिकान्यसत्यत्वेत्यर्थः । **काल्पनिकेति** । प्रातीतिकेत्यर्थः । शुक्तिरूप्यादौ तयोरविरोधस्सिद्धः । उक्तश्रुतौ च सत्यपदं व्यवहारकालाबाध्यपरम् । अतो नानृतपदवैयर्थ्यमिति भावः । यथा तार्किकैः संयोगतदभावयोर्व्यावहारिकयोरप्यवच्छेदकभेदेनाविरोधोऽङ्गीक्रियते तथा अवच्छेदकभेदाभावेऽपि सत्यत्वमिथ्यात्वयोः व्यावहारिकयोरविरोधः, प्रमाणस्योभयत्राविशेषात् । उक्तं हि भामत्यां—'विरुद्धमिति नः क्व सम्प्रत्ययः यत्र न प्रमाणम्' इति । न चैवं भेदाभेदादिस्थले विषमसत्ताप्रतिपादनपरा वयं तु पश्यामोऽभेदोपादानाभेदकल्पनेत्यादिभामती व्यर्थेति वाच्यम् । अभ्युपेत्य वादत्वात् । समसत्तयोरपि बाध्यबाधकत्वं स्वाप्नगजतन्निषेधदृष्टान्तेनोक्तमेवेत्याशयेनाह— **तार्किकेति** । ननु यत्र मिथ्यात्वावच्छेदकं नोभयवृत्ति तत्राप्येकमिथ्यात्वे अपरस्याधिकसत्तायां का युक्तिः तत्राह—**एकसाधकेति** । **प्रयोजकं** व्याप्यम् । यद्यद्बाधकधीविषयः तत्ततोधिकसत्ताकमिति व्याप्तौ यदि ततोधिकसत्ताकं न स्यात् तदा तद्बाधकधीविषयो न स्यादिति हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः । अभ्युपेत्य वादोऽयम् । तेन स्वाप्नगजतदभावदृष्टान्तेन व्यावहारिकयोः प्रपञ्चतदभावयोः बाध्यबाधकभावापन्नधीविषयत्वस्य पूर्वोक्तत्वेपि न क्षतिः । अथवा ननु मिथ्यात्वावच्छेदकस्योभयावृत्तित्वेऽपि एकमिथ्यात्वे अपरस्याधिकसत्ता मास्तु, न ह्ययं नियमः—'एकत्र प्रसक्तयोः विरुद्धता-

**एकबाधकबाध्यत्वं च समसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्य-शुक्तिभिन्नत्वयोः । अस्ति च प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञान-बाध्यत्वम् । अतः समसत्ताकत्वान्मिथ्यात्वबाधकेन प्रपञ्च-स्यपि बाधान्नाद्वैतक्षतिरिति कृतमधिकेन ॥**

**इति मिथ्यात्वस्य मिथ्यात्वनिरुक्तिः.**

---

वच्छेदकरूपावच्छिन्नयोरुभयावृत्तिरूपेणैकामिथ्यात्वे अपरस्याधिकसत्ता' इति । गजे प्रसक्तयोः गोत्वाश्वत्वयोः नात्र गोत्वं नात्राश्वत्वमित्युभयावृत्तिरूपेण निषेधेऽपि समसत्ताकत्वादित्यत आह—**एकसाधकेति** । तथाचोक्तनियमाभावेऽपि यद्यद्बाधकेत्याद्युक्तनियमोऽस्त्येव । एकसाधकेनापरबाध उभयावृत्तिरूपेणैवेत्यभिप्रायेणोभयवृत्ति न भवेदिति पूर्वमुक्तमिति भावः । प्रपञ्चसत्यत्वमिथ्यात्वयोः समसत्ताकत्वमुक्तं प्रमाणेन साधयति—**एकबाधकेति** । यद्यद्बाधकबाध्यं तत्तसमसत्ताकमिति व्याप्तौ यदि साध्यं न स्यात् तदा हेतुर्न स्यात् तद्बाधकात्पूर्वमेव बाधसम्भवादिति विपक्षे बाधक इति भावः । ब्रह्मज्ञानबाध्यं शुक्तिरूप्यादिकमपि स्वाभावादिसमसत्ताकमेव, प्रमात्रा सह बाध्यत्वस्य व्यावहारिकत्वस्य उभयत्रापि तुल्यत्वात् । **प्रपञ्चेति** । स्वसत्यत्वादिघटितप्रपञ्चेत्यर्थः । **समसत्ताकत्वादिति** । प्रपञ्चसत्यत्वस्य तात्त्विकत्वासम्भवादिति शेषः । अथवा एकत्र प्रसक्तयोर्विरुद्धयोरेकस्यापरापेक्षया अन्यूनसत्ताकत्वं प्रत्यमिथ्यात्वं न प्रयोजकं, किन्तु स्वाश्रयसमसत्ताकत्व[1]मतो मिथ्यात्वं प्रपञ्चे मिथ्यापि सत्यत्वान्नयूनसत्ताकं प्रपञ्चसमसत्ताकत्वात्। तच्च प्रपञ्चबाधकबाध्यत्वान्नासिद्धमित्याशयेनाह—**एकबाधकेति** । **समसत्ताकत्वादिति** । प्रपञ्चमिथ्यात्वस्य प्रपञ्चसत्वतां प्रत्यन्यूनसत्ताकत्वेन तस्याः तात्त्विकत्वासम्भवादिति शेषः । **बाधात्** बाधसम्भवात् । ननु मिथ्यात्वं न स्वाश्रयसमसत्ताकं तस्य प्रातीति-

---

1 सत्ताक

कनिष्ठस्य व्यावहारिकत्वात् व्यावहारिकनिष्ठस्य प्रातीतिकत्वादिति चेन्न ; व्यावहारिकनिष्ठमिथ्यात्वस्यैव स्वाश्रयसमसत्ताकत्वेनोक्तत्वात्, व्यावहारिकप्रपञ्चे स्वान्यूनसत्ताकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य अनुमितत्वेन तत्प्रातीतिकत्वस्य तद्धर्मिग्राहकमानेनैव निराकृतत्वात्। किंच मिथ्यात्वस्य सत्यत्वामिथ्यात्वविकल्पेन दूषणं नित्यसमा जातिः।

धर्मस्य[1] तदतद्रूपविकल्पानुपपत्तितः।
धर्मिणस्तद्विशिष्टत्वभङ्गो[2] नित्यसमो भवेत्॥

इति तल्लक्षणात्। न च मिथ्यात्वस्य सत्यत्वे धर्मिणि न तद्वैशिष्ट्यभङ्गः किन्त्वद्वैतहानिरिति वाच्यम्; विकल्पितकोट्योरेकस्या अद्वैतहानिप्रयोजकत्वेऽपि अन्यस्याः प्रपञ्चसत्यत्वतात्त्विकतापत्तिद्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वात्। अन्यथा मिथ्यात्वकोटिमात्रस्यास्माभिराश्रयणे सत्यत्वकोटिप्रयुक्तस्याद्वैतहान[3]दोषस्यानवकाशात्। किंच मिथ्यात्वस्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गेन सत्यत्वकोटेरपि धर्मिणि तद्वैशिष्ट्यभङ्गप्रयोजकत्वमावश्यकम्। न च स्वव्याघातकत्वाद्यभावान्नेयं जातिरिति वाच्यम्; त्वदीयस्य सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वरूपासत्त्वस्यासत्त्वे तद्विरुद्धस्य 'असदेवेदमग्र आसीत्' इति वाक्यादसति प्रतिपन्नतया त्वदभ्युगतस्य सत्त्वस्यासति तात्त्विकत्वापत्तिः, सत्त्वे तस्य सतोऽसति सम्बन्धानुपपत्तिः। उक्तं हि बौद्धाधिकारे—'सदसतोः सम्बन्धानुपपत्तेः' इति। तथा 'तुच्छस्य विशेषाभावात्' इति। तथा 'न च तस्य भाविको देशकालसम्बन्धः तुच्छत्वात्' इति। भाविकस्तात्त्विकः। न च प्रागभावप्रतियोगित्वादेरिव सतोऽपि[4] तस्य सत्सम्बन्ध[5] इति वाच्यम्; प्रागभावादिप्रतियोगिनः उक्तासत्त्वाभावात्। असत् शशविषाणमिति प्रततेः सत्त्वाश्रयासत्त्वविषयकत्वे 'वस्तुशून्यो

---

1 धर्मिणः. 2 भङ्गात्. 3 हानि. 4 असतोपि. 5 असत्सम्बन्धः.

विकल्पः' इति पातञ्जलसूत्रादिविरोधः, स्वलक्षणस्य च विकल्पागोचरत्वादिति बौद्धाधिकारीयवाक्यादिविरोधश्च। असतः सदसम्बन्धश्च बौद्धाधिकारादौ स्पष्ट उक्तः। तस्मादसतः सत्सम्बन्धं वदन् बौद्धादपि बौद्ध इत्युपेक्षणीय इति, स्वव्याघातकत्वाद्यावश्यकत्वात्। न च भेदः किं भिन्ने उताभिन्ने इत्यादि त्वदुक्तिरपि जातिरिति वाच्यम्; मम वैतण्डिकतामाश्रित्य तदुक्तौ[1] जातित्वासम्भवात् स्थापनीयाभावेन स्वव्याघातकत्वाद्यभावात् त्वदीयरीतिमाश्रित्य त्वां प्रति मिथ्यात्वानुमानाद्युपन्यासात्। खण्डनयुक्तीनां सर्वप्रमाणबाधकत्वस्यास्मदिष्टत्वेऽपि स्वप्रकाशचिन्मात्रस्य अस्मत्सम्मतस्य केनापि बाधासम्भवात् साक्षित्वात्तादृशमानाभावाच्च। तदुक्तं खण्डने—

अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्त्वानि कस्मान्न यथावदेव सैद्धान्तिकेप्यध्वनि योजयध्वम्॥

इत्यादिकमभिप्रेत्याह—**कृतमधिकेनेति**। यत्तु—"तत्र हि विरुद्धयोरेकमिथ्यात्वे अपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकं नोभयवृत्ति सत्यत्वमिथ्यात्वयोश्च निषेध्यतावच्छेदकं दृश्यत्वाद्येकमित्ययुक्तम्; परस्परविरहयोरेकरूपेण निषेधस्य क्वाप्यदर्शनात्। विषमसत्ताकत्वेन तयोः अविरोध इत्यपि न। तयोर्हि विषमसत्ता रूप्ये जगति वा, नाद्यः; रूप्यमिथ्यात्वं तात्त्विकमित्यभिमत्वदुक्तिविरोधात्, रूप्यमिथ्यात्वस्य बाध्यत्वे रूप्यसत्यत्वस्य तात्त्विकत्वापत्तेः। नान्त्यः; अप्रातीतिकस्य जगतो व्यावहारिकमिथ्यात्वे तात्त्विक[2]त्वापत्तेः। सत्यत्वमिथ्यात्वयोः समुच्चयस्तु अत्यन्तायुक्तः, सत्त्वासत्त्वसमुच्चयभीत्या त्वयाऽपि सदसद्वैलक्षण्योक्तेः। उक्तं च बौद्धाधिकारे—'सदसत्त्वस्यैकत्र विरोधेन विधिवन्निषेधस्याप्यनुपपत्तेः' इति। संयोगतदाभावौ च न दृष्टान्तः,

---

[1] त्वदुक्तौ.　　[2] मिथ्यात्वेनातात्त्विक.

तद्धूदवच्छेदकभेदाभावात्। एकबाधकेत्याद्यपि न युक्तं, परस्परविरहयोरेकबाध्यत्वासिद्धेः। शुक्तिरूप्यशुक्तिभिन्नत्वयोः परस्परविरहत्वाभावात्। प्रपञ्चे सत्यत्वमिथ्यात्वे समसत्ते इत्यपि न, विरुद्धयोरेकत्र समसत्ताऽसम्भवात्। सम्भवे वा वह्नावौष्ण्यतदभावौ व्यावहारिकौ स्यातामिति बाधोच्छेदः। तथाच व्यावहारिकमौष्ण्याभावमादायाग्रे त्वदुक्ता बाधव्यवस्था विरुध्यत इति पूर्वापरविरोधः" इति; तत्तुच्छम्। काप्यदर्शनादेकरूपेण परस्परविरहयोः न निषेध इति हि न युक्तम्; व्यवहारकाले तददर्शनेऽपि तदुत्तरकाले शुद्धचित्तपुरुषैः 'नेह नानास्ति किंचन, नात्र काचन भिदाऽस्ति' इत्यादिश्रुतिभिरुक्तानुमानेन च तद्दर्शनात्। अधिकसत्ताकाभावज्ञानस्यैव बाधकत्वपक्षे गज[1]तदभावादेः स्वाप्नस्य जागरे स्वाप्नं दृश्यमात्रं कालत्रयेऽपि स्वाश्रये नास्तीति एकरूपेण निषेधात्, शुक्तिरूप्याभावस्याश्रमाद्युक्तेः[2] शुक्तिरूप्याधिष्ठानमात्रगतत्वपक्षे शुक्तिरूप्यतदभावान्यतरत् घटादौ नास्तीति निषेधाच्च, घटध्वंसकाले कपाले घटतदत्यन्ताभावान्यतरन्नास्तीति निषेधाच्च। विषमसत्तेत्याद्यपि न युक्तम्; रूप्यमिथ्यात्वं तात्त्विकमित्याचार्यवाक्ये तात्त्विकशब्दस्य व्यावहारिकपरत्वात् विरुद्धयोरेकमिथ्यात्वे अपरसत्यत्वमिति नियमस्य यद्यद्बाधकधीविषयः तत्तदधिकसत्ताकमित्येवंरूपत्वेन रूप्यसत्त्वस्य[3] तात्त्विकतापत्त्यसम्भवात्, तस्य रूप्यमिथ्यात्वबाधकधीविषयत्वाभावात्। एवं नान्त्य इत्याद्यपि न युक्तम्; जगत्सत्यत्वस्य जगन्मिथ्यात्वबाधकधीविषयत्वाभावात्। समुच्चयस्तु इत्यादिकमपि न युक्तम्; कल्पितस्य तदुभयस्य कल्पितयोस्तात्त्विकयोर्वा तदभावयोश्चैकधार्मिणि सम्भवात्, रूप्ये सत्त्वासत्त्वे[4] तु न समुच्चिते; जगति सत्यत्वमिथ्यात्वयोरिव तत्र तयोः प्रतीत्यभावात्। सर्व-

---

[1] रजत. [2] श्रयाद्युक्तेः. [3] रूप्यस्य. [4] सत्यत्वासत्यत्वे.

देशकालगतात्यन्ताभावप्रतियोगित्वरूपं त्वदीयासत्त्वं प्रातीतिकसत्त्वं च रूप्ये समुच्चीयत एव, प्रतीयमानत्वात्; अस्मदीयाभ्यां सदसद्भ्यां वैलक्षण्यं विनाऽख्यातिबाधयोः रूप्येऽनुपपत्तेश्च। बौद्धाधिकारीयादुदयनाचार्यवाक्यात्तु असत्ख्यातिवादिनां त्वादृशानामेव भीः, तन्निराकरणार्थमेव तत्प्रवृत्तेः। नास्माकं भीः; अस्मन्मते सर्वमतमूर्धन्यत्वस्योदयनाचार्यैरुक्तत्वात्, अस्मन्मतस्य पुरस्कारे तत्तात्पर्यादिदूषणे च तत्तात्पर्याभावात्।

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः
तद्बाधके बलिनि वेदनये जयश्रीः।
नो चेदनित्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः॥

इति तदीयश्लोके क्षणिकविज्ञानातिरिक्तार्थापलापिविज्ञानवादिशून्यतावादिमतयोः दूषणोपसंहारपरे ज्ञानादत्यन्तविलक्षणार्थमपलप्य[1] ज्ञानस्वीकारो न सम्भवति, अनुभवादिविरोधात्; तस्य ग्राह्यमात्रस्य बाधके ज्ञाने चित्तशुद्धिश्रवणादिपरिपाकेन दृढे सति वेदनये वेदान्तदर्शने सङ्कोचकाभावात् सर्वमतापेक्षया बलिनि जयश्रीः यद्विषयकज्ञानं बाधकं तत् नित्यमेकं स्वप्रकाशानन्दस्वरूपं मोक्षान्वयि, लाघवात्। तस्य च न बाध्यत्वं, सर्वसाक्षित्वात्। यदिचोक्तपरिपाकाभावादुक्तबाधकाभावः, तदा दृश्यमात्रं व्यवहारकालाबाध्यरूपव्यावहारिकतथ्यं तत्रापाततः[2] कदाचित्तार्किकादिभिः तत्त्वाात्त्विकमिति वक्तुं शक्यम्। तदलीकमिति तथागतस्य बौद्धस्य मतं तु निरवकाशमित्यर्थस्य स्फुटत्वात्। न च दूष्यबौद्धमतस्य प्रस्तुतत्वात्तदपेक्षया बलित्वमुदयनैः विवक्षितमिति वाच्यम्; तथा सत्यस्मन्मतप्रकटनपूर्वकं तस्य स्वापकर्षोक्त्ययोगात्। तथाहि—"अस्तु

[1] विलक्षणत्वमालम्ब्य. [2] तत्रापततः न.

तर्हि शून्यतैव परमानिर्वाणमिति चेन्न; सा हि यद्यसिद्धा, तत्कथं तदवशेषं[1] विश्वम्? परतश्चेत् सिद्धा, परोऽभ्युपगन्तव्यः। स च परो यदि संवृतिरेव, विश्वशून्यतयोर्न कश्चिद्विशेषः। कथं तदप्यवशिष्येत? असंवृतिरूपश्चेत् परः, परत एव सिद्धा अनवस्था[2] स्वयमसिद्धश्चेत् कथं शून्यत्वमपि साधयेत्? स्वतस्सिद्धश्चेदायातोऽसि मार्गेण। तथाहि — स्वतस्सिद्धतया तदनुभवरूपशून्यत्वादेव न तस्य कालोऽवच्छेदक इति नित्यम्। अतएव न देशोऽवच्छेदक इति व्यापकम्। अतएव तत् निर्धर्मकमिति विचारास्पृष्टम्; तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। अतएव च तस्य विशेषाभाव इत्यद्वैतं प्रपञ्चस्यापारमार्थिकत्वादेव निष्प्रतियोगिकमिति विधिरूपम्। अविचारितप्रपञ्चाक्षेपात्तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन कस्सम्बन्धः? न च नायं प्रकाशत इति चेत्; वस्तुतो न कश्चित्। संवृत्या गगनगन्धर्वनगरयोराधाराधेयभाव इव[3] विषयविषयिभाव। स च यथा नैयायिकैः समर्थयिष्यते तथैव वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः। अविद्यैव हि तथातथा विवर्तते यथानुभवीयतया व्यवह्रियते। तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः। तदास्तां तावत् किमार्द्रकवणिजो वहित्रचिन्तयेति। तस्मादनुभवव्यवस्थितावनात्माऽपि स्फुरतीत्यवर्जनीयमिति प्रविश वा अनिर्वचनीयख्यातिकुक्षिं तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीनां पारमार्थिकत्वे" इत्याद्युक्तम्। संवृतिरिति। विकल्प इत्यर्थः। शून्यत्वात्—असंगत्वात्। तस्य—विचारस्य। निष्प्रतियोगिकम्—प्रपञ्चप्रतियोगिकत्वस्य मिथ्यात्वेन तद्राहितम्। विधिरूपं—कल्पितेन

[1]तदावेशेषं. [2]सिद्धावनवस्था. [3]भावरूप.

प्रपञ्चाभावत्वेन शून्यम् । अविचारितप्रपञ्चाक्षेपात्—यतः प्रपञ्चो विचारासहः अतस्तस्य खण्डनात् । प्रकाशते—प्रकाशसम्बद्धः ।[1] विषयविषयिभावः—विषयिप्रतियोगिको विषयभावः । नैयायिकैः—माद्दशैः । समर्थयिष्यते—'प्रकाशस्य सतः तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयता' इत्यादिना वक्ष्यते । वेद्यनिष्ठस्त्विति—चित्तादात्म्यस्य[2] चितो भिन्नेषु कल्पितस्य स्वीकारात् चित्तेः स्वप्रकाशत्वेन चितिविषयत्वास्वीकाराच्च चिद्भिन्नेष्वेव चित्तेस्तादात्म्यरूपा विषयता न तु चित्ताविल्यर्थः । अस्मिन् दर्शने—वेदान्तिदर्शने । तत्तन्मायोपनीतेति — मूलाविद्यापल्लवाविद्यापरिणामघटादिशुक्तिरूप्यादीत्यर्थः । वहित्रेति—महानौकेत्यर्थः । किंच सदसत्त्वविरोधस्य अस्मत्सम्मतत्वात् तत्परमुक्तवाक्यं न नः प्रतिकूलं, अवच्छेदकभेदाभावेऽपि प्रमाणबलात्समुच्चय इत्युक्तमेव । परस्परविरहयोरेकज्ञानबाध्यत्वं युक्तम्; जाग्रद्बोधेन स्वाप्नयोर्भावाभावयोरयं घट इत्यादिज्ञानेन शुक्तिरूप्यतदभावयोः बाधात् । किंच यद्यपि ब्रह्मप्रमान्यज्ञानं न परस्परविरहयोर्बाधकं तदधिष्ठानाविषयकत्वात्; तथापि ब्रह्मप्रमा तद्बाधिकैव, तदधिष्ठानविषयकत्वात्; विरुद्धयोः समसत्तयोः एकत्र स्थितिरपि युक्ता, स्वप्नेन्द्रजालादौ तथा दृष्टत्वात् । व्यावहारिकयोरौष्ण्यतदभावयोः एकत्र सत्त्वेऽपि न बाधोच्छेदः, संयोगतदभावयोरिव विरोधनिरूपकाधिकरणस्यैव स्वप्रतियोगिविरोधित्वविशिष्टाभावाविशिष्टस्य बाधत्वसम्भवात् । न चैवं जलमुष्णमित्यादावुष्णत्वानाधिकरणवृत्त्यनुष्णत्ववज्जलस्य बाधत्वसम्भवेऽपि तेजोऽनुष्णमिमित्यादौ बाधो न स्यात्, अनुष्णत्वानधिकरणाप्रसिद्धेरिति वाच्यम्;

---

[1] प्रकाशसंबद्धः संवृत्या, अविद्यया न.इति पा. [2] चिभिन्नतादात्म्येन चिति भिन्नेषु कल्पितस्य स्वीकाराच्चितेस्स्वप्रकाशन्चितिविषयत्वास्वीकाराच्च चिद्भिन्नेष्वेव चितेस्तादात्म्यरूपा विषयता न तु चित्ताविल्यर्थः. इति पा.

# दृश्यत्वनिरुक्तिः.

नतु मिथ्यात्वे साध्ये हेतूकृतं यद्दृश्यत्वं तदप्युपपादनीयम् । तथाहि—किमिदं दृश्यत्वं वृत्तिव्याप्यत्वं वा

---

उष्णत्वानाधारवृत्त्यनुष्णत्वसाध्यकस्थले तत्सम्भवात् । शुद्धानुष्णत्वसाध्यकस्थले बाधाभावस्त्विष्टः, तव संयोगाभावसाध्यकस्थलवत् । अत एव व्यावहारिकमभावमादायापि बाधव्यवस्था न विरुद्धा, समसत्ताकयोः भावाभावयोः विरोधपक्षे वा सोक्तेति न कोपि दोषः ॥

सारस्वतैः तर्करत्नैः चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डानां भग्ना मिथ्यात्वसत्यता ॥

इति मिथ्यात्वस्य मिथ्यात्वनिरुक्तिः.

---

वृत्तिव्याप्यत्वमिति । व्याप्यत्व[1]सम्बन्धेन वृत्तित्वेन हेतुता । व्याप्यत्वं च स्वजनकेन्द्रियसंयोगादिरूपं, परोक्षवृत्तेः स्वप्रयोजकव्यापकतावच्छेदकादिरूपं, भ्रमवृत्तेः स्वजनकदोषजन्यत्वादिरूपं, वृत्तिमात्रस्य स्वावच्छिन्नचैतन्याभिन्नमहाचैतन्यव्यक्तिप्रतियोगिकं तत्तद्विषयनिष्ठं तादात्मयं वा; अनुमित्यादिवृत्तेरपि स्वावच्छिन्नचैतन्याभिन्नमहाचैतन्यव्यक्तिप्रतियोगिकं वह्न्यादिनिष्ठं तादात्म्यमस्त्येव तावदन्यतमत्वेन सम्बन्धत्वात् नाननुगमः । न चातिरिक्तविषयतैवास्तु तदनङ्गीकारे उक्तान्यतमत्वविशिष्टसम्बन्धेन कारणत्वादिकल्पने गौरवमिति वाच्यम्; तस्याग्रे दूष्यत्वात्, उक्तसंयोगादेरेव सम्बन्धत्वस्य वक्ष्यमाणत्वात् क्लृप्तेनैव निर्वाहे अतिरिक्तकल्पने गौरवात् । उक्तान्यतमत्वस्य स्वरूपतोऽवच्छेदकत्वे गौरवात् ॥

वृत्तित्वं च[2] धीर्भीरित्यादिश्रुत्यनूद्यमानः संस्कारेच्छादिजनकतावच्छेदकतया सिद्धो धीत्वरूपो जातिविशेषः । अन्यथा तत्तद्विष-

---

1 तद्व्याप्यत्व. 2 वृत्तिश्च.

**फलव्याप्यत्वं वा, साधारणं वा, कदाचित् कथंचित् विषयत्वं वा, स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियतिर्वा, अस्व-**

---

यावच्छिन्नो योऽसत्त्वापादकाज्ञानाभावः तत्त्वेन संस्कारादिहेतुत्वे गौरवात् । प्रमाभ्रमान्यतरत्वं वा प्रमात्वभ्रमत्वे बाधोद्धारे वक्ष्यमाणे सखण्डे अखण्डे वा। असिद्धिवारकमपि सार्थकम्। मणिकारादिभिरीश्वरवादादौ तथोक्तत्वात् । अन्यतरत्वमन्यतमत्वं च स्वरूपतोऽवच्छेदकं वा, प्रमाभ्रमावित्याकारकतद्धीविशेष्यत्वमन्यतरत्वं प्रमाव्याप्यत्वभ्रमव्याप्यत्वे इत्याकारकतद्धीविशेष्यत्वं अन्यतमत्वमिति वा । तेन हेतुतावच्छेदके धर्मे सम्बन्धे च व्याप्तिग्राहकतया दृष्टान्तवृत्तितावच्छेदकस्य भ्रमत्वस्य भ्रमवृत्तिव्याप्यत्वस्य चावश्यकत्वेपीतरवैयर्थ्यमिति परास्तम् । **फलव्याप्यत्वमिति** । फलं वृत्तिप्रतिबिम्बितचैतन्यं भग्नावरणकचैतन्यं वा तत्तादात्म्यं तादात्म्येन तद्वा हेतुः साधारणं वृत्तिफलान्यतरव्याप्यत्वं, वैयर्थ्यपरिहारः पूर्ववत्। **कदाचिदिति** । कालावच्छिन्नवृत्तिकत्वोक्तिः दैशिकसम्बन्धेन हेतुतालाभाय । कालिकेन हेतुत्वे हि अविद्याद्यनादिषु भागासिद्धिः स्यात् । **कथंचिदित्यावृतानावृत**साधारणं चित्तादात्म्यत्वं हेतुतावच्छेदकमित्यर्थः । यत्तु 'बाह्येन्द्रियद्वारा निस्सृतोऽन्तःकरणपरिणामो वृत्तिः' इति परेण स्वग्रन्थे वृत्तिपदं व्याख्यातम्, तन्न शोभतेतराम् । निस्सृतान्तःकरणपरिणामस्य हेतुत्वे नित्यातीन्द्रियेषु भागासिद्धेः, योगिनोऽन्तःकरणवृत्तेरपि तेषु निस्सरणे मानाभावात्, निस्सृतत्वस्य जीवनकालावच्छेदेन बाह्येन्द्रियविभक्तत्वरूपत्वासम्भवात्, त्वगिन्द्रियसंसृष्टत्वस्य वृत्तिमात्रे सत्त्वेन बाह्येन्द्रियसंसृष्टत्वरूपस्याव्यावर्तकत्वात् व्यर्थत्वाच्च ब्रह्मणि व्यभिचारोक्त्ययोगाच्च । यदपि परेण कदाचिदित्यादिकं विवृतं अतीतादिकमपि कदाचित्स्वाकारवृत्तिप्रतिफलितचिद्विषयो नित्यातीन्द्रियमपि कथंचित् ज्ञातत्वेन वा साक्षिविषय इति, तदपि तुच्छम्;

**प्रकाशत्वं वा। नाद्यः; आत्मनो वेदान्तजन्यवृत्तिव्याप्यत्वेन तत्र व्यभिचारात्। अतएव न तृतीयोऽपि। नापि द्वितीयः; नित्यातीन्द्रिये शुक्तिरूप्यादौ च तदभावेन भागासिद्धिसाधनवैकल्ययोः प्रसङ्गात्। नापि चतुर्थः; ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन आत्मनि व्यभिचारात्। नापि पञ्चमः; ब्रह्मण्यप्यद्वितीयत्वादिविशिष्टव्यवहारे संविदन्तरापेक्षानियतिदर्शनेन व्यभिचारात्। नापि षष्ठः; स हि अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वाभावरूपः। तथाच शुक्तिरूप्यादेरपि अपरोक्षव्यवहारयोग्यत्वेन साधनवैकल्यादिति चेन्नैवम्; फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात्। न च वृत्तिव्याप्यत्वपक्षे ब्रह्मणि व्यभिचारः,**

अतीतादेर्योग्यस्थूलावस्थायां तदधिकरणयावत्कालं योगिनोऽन्यस्य वा कस्यचित् प्रत्यक्षसत्त्वेन[1] स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वात्, सूक्ष्मावस्थायामयोग्यस्थूलावस्थायां च अज्ञातत्वादिना साक्षिविषयत्वात्, कादाचित्कोक्तविषयत्वोक्तेर्निरालम्बनत्वात्। किंच ज्ञातत्वादिना साक्षिविषयत्वस्य साक्ष्यध्यस्तज्ञानादिविषयत्वरूपतया तस्य वृत्तिप्रतिबिम्बिताचिद्विषयत्वसाधारणरूपेण न हेतुतासम्भवः। वृत्तेर्हि विषयत्वमुक्तान्यतमादिरूपं, वृत्तिप्रतिबिम्बितचितस्तु तादात्म्यं, अन्यतमत्वादिना तत्सम्भवे वा साधारणमिति तृतीयपक्षाविशेषः। तस्मात्कथंचिद्विषयत्वमिति वृद्धोक्तपक्षस्योक्त एवार्थः। स्वव्यवहारेत्यादिपक्षद्वयं तु मूल एव स्पष्टीभविष्यति। **अवेद्यत्वे सतीत्यादि।** अवेद्यत्वं भग्नावरणचैतन्यतादात्म्यं तत्समानाधिकरणस्यापरोक्षव्यवहारयोग्यत्वस्याभाव इत्यर्थः। **क्षोदक्षमत्वादिति।** विचारसहत्वादित्यर्थः। एतेन—"स्तम्भादिप्रत्ययो मिथ्या, प्रत्ययत्वात्, तथाहि—यः प्रत्ययः

[1] प्रत्यक्षत्वेन.

अन्यथा ब्रह्मपराणां वेदान्तानां वैयर्थ्यप्रसङ्गादिति वाच्यम्; शुद्धं हि ब्रह्म न दृश्यं, 'यत्तदद्रेश्यम्' इति श्रुतेः। किन्तूपहितमेव। तच्च मिथ्यैव। न हि वृत्तिदशायां तदनुपहितं तद्भवति। न च 'सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते' इति स्ववचनविरोध इति वाच्यम्; तस्याप्युपहितपरत्वात्। न चैवं सति शुद्धसिद्धिर्न स्यादिति वाच्यम्; स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात्। नन्वज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वं अवश्यं स्वीकरणीयम्। न च स्वप्रकाशत्वेन स्वतस्सिद्धे शुद्धे श्रुत्या दृश्यत्वनिषेध इति वाच्यम्; शुद्धं स्वप्रकाशमिति शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वसिद्धेरिति चेन्न; वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वासम्भवात्। शुद्धस्य वृत्तिविषयत्वं न सम्भवति। अतः

---

स मृषा[1]दृष्टः, स्वप्नादिप्रत्ययो यथेति बौद्धोक्तं युक्तं, तन्मते भ्रमत्वस्य स्वतस्त्वेनानुकूलतर्कसत्त्वात् प्रमात्वस्वतस्त्वमते तु साक्षिणा प्रथमतः प्रमात्वग्रहात् पश्चादनुमित्या न मिथ्यात्वग्रहः" इति परेणोक्तं विचारासहं सूचितम्। भ्रमत्वस्य स्वतस्त्वे मानाभावात्, साक्षिणा बाधासम्भवादेरुक्तवात्, व्यवहारकालाबाध्यत्वादिरूपप्रमात्वस्य स्वतस्त्वेपि[2] बाध्यत्वसामान्यानुमितौ बाधकाभावस्य बाधोद्धारे वक्ष्यमाणत्वाच्च। यत्तु "प्रत्ययत्वादित्यस्य विशष्टप्रत्ययत्वादित्यर्थः। तेनाहमित्यालयविज्ञाने शून्यज्ञाने मिथ्याविषयकत्वरूपसाध्यासत्त्वेऽपि न व्यभिचारः" इत्युक्तम्, तत्स्वपाण्डित्यप्रकटितम्। शून्यवादिमते ह्युक्तानुमानम्। तत्र च सर्वं बाध्य[3]मित्युक्तज्ञानयोर्व्यभिचाराप्रसक्तिः। अतएव मिथ्यात्वमिथ्यात्ववादोपन्यस्तबौद्धाधिकारीयवाक्ये संवृतिसिद्धत्वं शून्यत्वस्य शङ्कितम्। तत्पूर्वमप्यस्तु तर्हि विचारासहत्वमेव विश्व-

'शुद्धं स्वप्रकाशम्' इति वाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशकत्वव्यापकमित्यर्थः । तथाच अशुद्धत्वव्यावृत्तया शुद्धे स्वप्रकाशता पर्यवस्यति । यथा भेदनिषेधेनाभिन्नत्वम् । स्येत्यनेन शून्यवादश्शङ्कितः । न च शून्यप्रत्ययस्य संवृतिशब्दितविकल्पात्मकस्य शशविषाणादिप्रत्ययवन्निर्विषयकत्वेन उक्तसाध्याभाव इति वाच्यम्; तथापि बौद्धमते प्रत्ययमात्रस्य स्वविषयकत्वेन स्वात्मकमिथ्याविषयत्वेनादोषात् । खण्डनेऽप्युक्तं—"सौगतब्रह्मवादिनोरयं विशेषः यदादिमस्य सर्वानिर्वाच्यत्वमन्तिमस्यानात्मन्यनिर्वाच्यत्वम्[1]" इति । अशुद्धत्वम् उपहितत्वं, न तु शुद्धभिन्नत्वं, शुद्धत्वस्य[2] वृत्तिविषयत्वापत्तेः । अशुद्धत्वव्यावृत्त्या शुद्धे पर्यवस्यति । उपहितत्वशून्यब्रह्मनिष्ठाभावप्रतियोगित्वेन न ज्ञायते । तथाचास्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपायाः स्वप्रकाशत्वव्यतिरेकव्याप्तेः यदोपहितत्वाभावरूपे शुद्धत्वे ज्ञानमुद्बुद्धसंस्कारो वा तदा शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावस्य न ज्ञानम्। वह्न्यभावव्यापकाभावप्रातियोगित्वस्य धूमे ज्ञानादि[3]काले धूमवान् वह्न्यभाववानिति ज्ञानाभाववदिति[4] तादृशज्ञानासम्भव एव स्वप्रकाशत्वसिद्धिरिति भावः । एतेन—'शुद्धत्वस्य हेतोः ब्रह्मण्यज्ञाने कथं तत्र स्वप्रकाशत्वस्यानुमितिरूपासिद्धिः' इति परास्तम्, शुद्धस्वरूपज्ञानं विनापि शुद्धत्वस्योक्तप्रतियोगित्वधीसम्भवात् । उपहितत्वमस्वप्रकाशत्वव्यापकमिति ज्ञानकालेऽप्युपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते । धूमव्यापको वह्निरिति ज्ञानकाले वह्न्यभाववान् धूमवानिति ज्ञानाभाववत् । अतः उपहितत्वाभावरूपशुद्धत्वस्याज्ञातत्वेऽपि क्षत्यभावाच्च । न चोपहितत्वाभावविशिष्टे स्वप्रकाशत्वभावो न ज्ञायत इत्याद्युक्तवाक्यजबुद्धौ शुद्धभानमावश्यकमिति वाच्यम्; उपहितत्वाभावावच्छिन्नाविशेष्यतानिरूपितस्वप्रकाशत्वाभावप्रकारताशालिज्ञानाविषयत्वाद्यभावस्य अस्वप्रकाशत्वेन उक्तबुद्धौ भानादुक्तप्रका-

1 स्यात्मान्यानिर्वाच्यत्वम्. 2 शुद्धस्य. 3 धूमज्ञानादि. 4 धूमवद्वह्न्य-

**न च शुद्धपदेनाभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यमिति वाच्यम्; पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः। एवंच 'शुद्धं न दृश्यं न मिथ्या' इत्यस्याप्यशुद्धत्वं, दृश्यत्वमिथ्यात्वयोर्व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्वमिथ्यात्वयोः व्यतिरेकः पर्यवस्यति। एतेन—'स्फुरणमात्रमेव मिथ्यात्वे तन्त्रं लाघवात्, अतः स्वतः स्फुरदपि ब्रह्म मिथ्यैव' इति शून्यवादिमतमपास्तम्। स्वतः स्फुरणरूपतायाः शुक्तिरूप्यादावभावात्। स्फुरणविषयत्वस्य ब्रह्मण्यसिद्धेः। ननु विशिष्टज्ञाने विशेष्यस्यापि भाने श्रुत्या विशिष्टस्य दृश्यत्वेनैव विशेष्यस्यापि**

---

रताया अनुपहितत्वेन भासमानोपहिते स्वप्रकाशत्वज्ञाने प्रसिद्धत्वात्। न चोपहितत्वे स्वप्रकाशत्वाभावव्यापकताज्ञाने शुद्धत्वस्वप्रकाशत्वयोः सहचारज्ञानमवश्यमपेक्षितं, अन्यथोपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वामिति व्यभिचारज्ञानानुच्छेदेन तादृशव्यापकताज्ञानासम्भवात्, तथाचोक्तसहचारघटकतया शुद्धज्ञानमावश्यकामिति वाच्यं; शुद्धस्य वृत्त्यविषयत्वेन तद्घटितोक्तव्यभिचारविषयकवृत्त्यसम्भवात्, उपहितत्वाभावभ्रमकाले उक्तव्यापकत्वज्ञानासम्भवेऽपि तदन्यकाले तत्सम्भवात्, उक्तसहचारभ्रमस्योपहितरूपाधिकरणमादाय सम्भवाच्च। न च शुद्धत्वान्यधर्मविशिष्टे स्वप्रकाशत्वाभावज्ञानापत्तिरिति वाच्यम्; बुद्धत्वसत्यत्वादेरपि[1] तादृशप्रतियोगित्वज्ञानादिविषयत्वात्, तदभावे इष्टत्वात्। न चैवमपि शुद्धत्वोपहिते स्वप्रकाशत्वसिद्धावपि शुद्धे तदसिद्धिरिति वाच्यम्; शुद्धत्वस्योपहितत्वाभावत्वेनाभावरूपधर्मे शुद्धवृत्तित्वस्योक्तत्वात्। युज्यते च तत्। उपहितत्वाद्यभावतोपहितेन स्वेन ब्रह्मणो भेदाभेदस्वीकारात् अभेदस्य धर्मधर्मितानियामकत्वात्। **पर्यवसितार्थमिति**। उक्तज्ञानासम्भवरूपं पर्यवसितप्रयोजनमित्यर्थः। **एवमिति**। वृत्तिविषयत्वं विनैवार्थसिद्धि[2]सम्भवे इत्यर्थः। **स्वतःस्फुरणेति**। तथाच साधन-

---

1 शुद्धसत्त्वादेरपी. 2 वृत्ति.

**दृश्यत्वात् व्यभिचारः । न च 'विष्णवे शिपिविष्टाय' इत्यादौ विशिष्टस्य देवतात्ववत् विशिष्टस्य विषयत्वम्, अग्नीषोमयोर्मिलितयोर्देवतात्ववद्वा मिलितस्य विषयत्वम्, अतो न विशेष्ये विषयत्वमिति वाच्यम्; तद्वदेव विशेषणस्यापि अविषयत्वे भागासिद्धिप्रसङ्गादिति चेन्न; विशेष्यतापन्नस्य विषयत्वेपि क्षत्यभावात्, तस्य मिथ्यात्वाभ्युपगमात् । अतएवोपहितविषयत्वेऽपि उपधेयविषयत्वमक्षतमेवेत्यपास्तम्। उपहितात्मना तस्यापि**

वैकल्यमिति भावः । **मिलितस्येति** । उभयपर्याप्तं विषयत्वमित्यर्थः । **तद्वदेवेति** । यथा विशिष्टस्यातिरिक्तत्वात् पर्याप्तिसम्बन्धेन विषयत्वस्य हेतुत्वाद्वा विशेष्ये न हेतुः तथा विशेषणेपीति भावः । **विशेष्यतापन्नस्येति** । न च विशिष्टज्ञानेन शुद्धे ज्ञातत्वस्य अज्ञाननिवृत्तेश्च व्यवहारो न स्यादिति वाच्यम्; इष्टत्वात् शुद्धस्याव्यवहार्यत्वात् 'अव्यवहार्यमलक्षणम्' इत्यादिश्रुतेः । न च शुद्धतात्पर्यनिर्णायकविचारासिद्धिरिति वाच्यम्; तावताऽप्यक्षतेः उपहिततात्पर्यनिर्णायकविचारादेरेव श्रवणत्वादिसम्भवात् । **तस्यापीत्यपिकारेण** उपहित[1]ब्रह्मभिन्नप्रपञ्चमात्रस्य मिथ्यात्वम्, उपहितत्वेन तत्र दृश्यत्वसत्त्वादिति सूचितम् । तेन निर्विकल्पकास्वीकारे घटादेस्तत्स्वींकारेऽपि नित्यातीन्द्रियस्यापि विशिष्टरूपेणैव दृश्यत्वात् केवले तत्र भागासिद्धिरिति परास्तम् । घटादिप्रपञ्चस्योपहितान्यस्वरूपाभावादसिद्ध्यनवकाशात् उपहिततत्स्वरूपे मिथ्यात्वसिद्ध्यैव नः कृतकृत्यत्वात्। किंच ब्रह्मणः स्वप्रकाशत्वेन शुद्धरूपेण ज्ञानाविषयत्वेऽपि न क्षतिः । घटादेस्तु यदि शुद्धरूपं तदा ज्ञानाविषयत्वे अलीकमेव स्यात् । स्वप्रकाशत्वं तु तस्य दूरत एव । अनन्तानां तत्स्वीकारे गौरवस्योक्तत्वात् घटं न जानामीत्यनुभवाच्च । अपिच सोयं घट इत्यादिवाक्याद-

[1] उपहिते.

**मिथ्यात्वाभ्युपगमात् ज्ञानान्तरविषयत्वेन विशेषणे भागासिद्ध्यभावाच्च । ननु वेदान्तजन्याखण्डवृत्तेरुपाहितविषयत्वे तदानीमुपाध्यन्तराभावेन तस्या एव उपधायकत्वात् स्वविषयत्वापत्तिः । नचेष्टापत्तिः, शाब्दबोधे शब्दानुपस्थितता भाननियमेन वृत्तेः शब्दानुपस्थिततायाः भानानुपपत्तेः । यथाकथंचिदुपपत्तौ वा न ततोऽज्ञानतत्कार्ययोर्निवृत्तिस्स्यात् अज्ञानतत्कार्याविषयकज्ञानस्यैव तदुभयनिवर्तकत्वात् । अन्यथा 'अहमज्ञः अयं घटः' इत्यादिज्ञानानामप्युपहितविषयकत्वेन अज्ञाननिवर्तकत्वप्रसङ्ग इति चेन्न; वृत्तेः शाब्दवृत्तावनवभासमानाया**

स्मन्मते शुद्धव्यक्ति[1]धीः । त्वन्मतेऽपि प्रमेयमित्यादिज्ञानद्विशेष्यमात्रांशे उद्बुद्धसंस्कारात् विशेष्यमात्रस्मृतिर्वाच्या । अन्यथा अननुभूतदशरथत्वादिविशिष्टे शक्यादिज्ञानासम्भव इति भावः । **ज्ञानान्तरेति** । विशिष्टविषयकज्ञानेत्यर्थः । **उपाध्यन्तराभावेनेति** । ज्ञानमेवाज्ञानस्य स्वेतरतत्कार्यस्य च ध्वंस इति मते भुज्यमानादृष्टाभावकालीनज्ञानस्य स्वेतरोपाधिकालीनत्वासम्भवात् उपाध्यन्तराभावेनेत्यर्थः । अथवा तदानीन्तनानां स्वस्वेतरोपाधीनामन्तरस्य विशेषस्याभावेन **तस्या एव** तस्या अपीत्यर्थः । यद्वा ज्ञानमेवाज्ञानध्वंस इति मते अज्ञानस्योपाधित्वासम्भवात् अज्ञानकार्यस्यैकजातीयस्य असार्वत्रिकत्वात् तस्या एवाखण्डाकारवृत्तित्वेन सर्वत्रोपधायकत्वादित्यर्थः । **यथाकंथचित्**—शाब्दज्ञानस्य स्वभिन्नशब्दानुपस्थितताविषयकत्वनियमस्वीकारेण । **तत्कार्याविषयकेति** । तत्प्रयुक्ताविषयकेत्यर्थः । तेन जीवेशभेदादिविषयकस्याप्यनिवर्तकत्वलाभः । **उपहितविषयकत्वेन** विशिष्टविषयकत्वेन । तेनास्मन्मते ज्ञानोपहितविषयकस्य निवर्तकत्वेन नेष्टापत्तिः । **निवर्तकत्वप्रसङ्ग इति** । न चोक्तज्ञानानामनिवर्तकत्वात् समानविषयकत्वेन ज्ञाना-

1 शुद्धवृत्ति.

ज्ञानयोः निवर्तकनिवर्त्यत्वसिद्ध्या शुद्धब्रह्मविषयकाज्ञाननिवर्तकज्ञानस्य शुद्धब्रह्मविषयकत्वानियमेऽपि अज्ञानाद्यविषयकत्वनियमः कुतः? इयं शुक्तिरज्ञानं रजतं च मेयं अहं ब्रह्म अज्ञानं घटादि मेयमित्यादिज्ञानानामधिकविषयकत्वेपि अज्ञानं प्रति समानविषयकत्वेन निवर्तकत्वसम्भवात्, अवस्थाज्ञानतत्कार्यशुक्तिरजतादिज्ञानानामविद्यावृत्तित्वेन शुक्त्याद्यविषयकत्वेऽपि शुद्धब्रह्मज्ञानस्य मूलाज्ञानतत्कार्यघटादिविषयकत्वे बाधकाभावात् बाधितविषयकत्वेऽप्यबाधितविषयकत्वेन प्रमात्वसम्भवाच्चेति वाच्यम्। तार्किकादिमते घटाभाववदिदं घटवदिति ज्ञानस्येव शुद्धब्रह्मविषयकज्ञानस्य तदन्यविषयकस्यासम्भवात्। यादृशविषयतयोर्विरोधस्तादृशविषयतयोरेकज्ञानासम्बन्धनियमस्य तुल्यत्वात्। विरोधश्च तन्मते प्रतिबध्यप्रतिबन्धकतावच्छेदकत्वम्, अस्मन्मते नाश्यनाशकतावच्छेदकत्वं नाशतत्प्रतियोगिताच्छेदकत्वं चेत्यन्यदेतत्। वह्निव्याप्यो धूम इत्याकारोद्बुद्धसंस्कारकाले धूमवान् वह्न्यभाववानिति ज्ञानस्येव ह्रदो वह्न्यभाववान् इति उद्बुद्धसंस्कारकाले ह्रदो वह्निमानिति ज्ञानस्याप्यनुत्पत्तेः, आनुभविकत्वेन दृश्याभाववद्ब्रह्मेत्याकारकोद्बुद्धसंस्कारकालीनब्रह्मज्ञानकाले दृश्यविषयकज्ञानस्यासम्भवाच्च। दृश्यभाने सद्रूपब्रह्मणो दृश्यानुविद्धतया भानावश्यकत्वात्। ब्रह्मज्ञानात्पूर्वं घटत्वाद्युपस्थितयावद्धर्मावच्छिन्नाभावस्य मिथ्यात्वघटकतया ब्रह्मणि निश्चयात्। तत्र तस्योद्बुद्धसंस्कारसत्त्वात्सर्वदा मुमुक्षुणा प्रपञ्चमिथ्यात्वस्य चिन्त्यमानत्वात्। अतएव विवरणे "ननु ब्रह्मात्मानुभवद्वैतदर्शनयोः कुतस्साहित्यम्" इत्याशङ्क्य न वयं साहित्यं ब्रूमः किन्तु कदाचित् असम्प्रज्ञातात्मैकत्वदर्शनं कदाचिदारब्धकर्मोपस्थापितदोषनिमित्तद्वैतदर्शनं चेति" इत्युक्तम्। सन्तमसबहुळालोकयो रिव[1] द्वैताद्वैतधियोर्विरोध इति तत्त्वदीपने शङ्काव्याख्यानम्। असम्प्रज्ञातं प्रत्यक्षादिमानाज्ञातम्। ननु ज्ञानं स्वसमानविषयकाज्ञानतज्जन्यभ्रम-

---

1 संतमसबहुळभास्करयोरिव.

तद्विषयनाश इति पक्षे तस्योक्तविषयाविषयकत्वनियमो युक्तः, उक्तविषयविषयकस्योक्त[1]भ्रमरूपत्वेन तन्नाशत्वासम्भवात् । इयं शुक्तिः तत् रूप्यं ज्ञेयमित्यादिरूपेण अतीतरूप्यादिविषयकत्वेन स्वसमानकालीनत्वेनापि ज्ञानस्य तु नासम्भवः, [2]स्वसमानकालीनत्वेनापि विषयस्य विशेषणीयत्वादुक्तज्ञानस्य तद्रूप्यमित्यंशे स्मृत्यादिरूपत्वेनातीतरूप्यादिविषयकत्वेन स्वसमानकालीनरूप्याद्यविषयकत्वात् । अतएवेयं शुक्तिरस्य रूप्यस्य धीः मम जातेत्यादिज्ञानस्यापि नासम्भवः । तथाच शुक्तिरियं रजतमिदं विद्यमानमित्यादेरिव अहं ब्रह्म, विद्यमानो घटो रूपवानित्यादेरपि ज्ञानस्यासम्भवः[3], स्वसमानविषयकाज्ञानजन्यभ्रमविषयविद्यमानविषयकत्वात् । ज्ञानस्योक्तनाशहेतुत्वपक्षे तूक्तनियमो न युक्तः, उक्तविषयविषयकेनाप्युक्त[4]नाशजननसम्भवात् । न चैवमुक्तज्ञानस्य स्वनाश्यत्वेन क्षणिकता स्यादिति वाच्यम् ; उक्तनियमे स्वीकृतेऽपि ब्रह्मज्ञानस्य ब्रह्माज्ञानजन्यभ्रमविषयत्वेन स्वनाश्यत्वात् तन्नाशकान्तरकल्पने गौरवाच्च क्षणिकतापत्तेः । न च ब्रह्मज्ञानविषयकभ्रमस्य साक्षिणः अविद्योपहितचिद्रूपत्वेन उक्ताज्ञानाकार्यत्वेन ब्रह्मज्ञानस्य न स्वनाश्यत्वमिति वाच्यम् ; उक्तभ्रमस्य ब्रह्मज्ञानरूपविषयोपहितरूपेणाज्ञानकार्यत्वात् अविद्यावृत्त्युपहित[5]चितः साक्षित्वपक्षे स्वरूपेणापि तत्त्वात् । वस्तुतस्तु स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वावच्छेदेनैव लाघवेन ज्ञाननाश्यत्वात् प्रयुक्तत्वस्य च नाश्यतावच्छेदकतया सिद्धस्य तदधीनत्वरूपस्य शक्तिविशेषरूपस्य वा नित्येऽपि सम्भवात् अज्ञा-

---

[1] विषयकतत्त्वज्ञानस्योक्त. [2] विषयपदेन विषयतापर्याप्त्याश्रयोक्त्या रजताभिन्नेदमादेरेव शुक्त्यादिज्ञानविषयत्वासम्भवात् । न चेयं शुक्तिरस्य रूप्यस्य ज्ञानं मे जातमित्यादिज्ञानासम्भव इति वाच्यम् ; इतरांशे अविशेषणस्य अविशेष्यस्य चोक्तपर्याप्त्याश्रयस्य विषयपदेनोक्तेरिति । स्वसमानकालीनत्वेत्यारभ्य तथाचेत्यन्तं पाठान्तरम् । इति कोशागारीयमातृकायां वर्तते. [3] स्य संभवः. [4] उक्तविषयकेनाप्युक्त. [5] प्रत्युपहित.

नसम्बन्धादेरपि ज्ञाननाश्यत्वमुपपादनीयम् । अन्यथा तदुपहितरूपेणापि तद्भ्रमस्याकार्यत्वेन तस्य ज्ञानानाश्यत्वापत्तेः । तथाच किं भ्रमाजन्यत्वचिन्तया । अतएव ज्ञानस्य उक्तनाशत्वपक्षे उक्तनाशहेतुत्वपक्षे वा अज्ञानसम्बन्धादिनाशत्वं तन्नाशहेतुत्वं वा नानुपपन्नं, उक्तान्यतरनाशत्वादेरेव तत्र स्वीकारात् । यदा तु ज्ञानस्य नाश्यमज्ञानमेव, तत्प्रयुक्तं तु तन्नाशनाश्यमिति स्वीक्रियते, तदोक्तक्षणिकत्ववार्तापि नेति सुतरां नोक्तानियमः । किंच ज्ञानमुक्तनाशः तद्धेतुर्वा आस्ताम्, उभयथापि जीवन्मुक्तिकाले कथमुक्तनियमः ? तदा भुज्यमानादृष्टदेहादिसत्त्वात् तद्भ्रमात्मकब्रह्मज्ञानोत्पत्तौ बाधकाभावात् । यच्चोक्तं वह्निव्याप्य इत्यादिकं, तदप्ययुक्तं ; तार्किकादिमते हि घटाभाववानयं घटवानिति ज्ञानं नोत्पद्यते, प्रतिबन्धकीभूतबाधबुद्धिसामग्र्याः प्रतिबन्धकत्वात् । सिद्धान्ते तु बाधबुद्धेरेव प्रतिबन्धकत्वस्य विवरणाद्युक्तत्वात् तत्सामग्र्या अ(पि)प्यप्रतिबन्धकत्वम् । ह्रदो वह्न्यभावेत्यादिकं तु तार्किकादिविमत[1]मिति चेन्न ; सिद्धान्ते बाधबुद्धेरप्रतिबन्धकत्वेपि तत्सामग्रीप्रतिबन्धकत्वसम्भवात् । परमते अनुमित्यादिसामग्रीप्रतिबन्धकत्ववत् । अन्यथा ज्ञानस्य अज्ञाननाशकत्वपक्षे घटाभाववानयं घटवानयमिति ज्ञानस्य दुर्वारत्वात् । ह्रदो वह्न्यभावेत्यादौ विमतत्वे तुल्ययुक्त्या धूमो वह्निव्याप्य इत्युद्बुद्धसंस्कारकालीनस्य धूमवान् वह्न्यभाववानिति ज्ञानस्योत्पत्त्यापत्तेः[2] । एवंच तमेव विदित्वेत्यादि श्रुतेरप्याञ्जस्यम्, अथवा अज्ञानतत्कार्यविषयकेत्यस्य स्वनिवर्त्याज्ञानविषयविषयकेत्येवार्थः[3] । उक्तश्रुतिस्तु "एकधैवानुद्रष्टव्यं, प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते सोयमात्मा स विज्ञेय." इत्यादिकेवलात्मज्ञेयत्वपरश्रुत्यैकवाक्यतया तदंशेऽन्याविषयकज्ञानमोक्षहेतुत्वपरा । न्यायसिद्धस्य स्वसमानविषयकत्वेनाज्ञान[4]निवर्तकत्वस्य तथा अनुवादात् । अतएव—

---

[1] प्रत्यक्षमत, [2] ज्ञानस्योत्पत्तेः. [3] स्वनिवर्त्याज्ञानविषयकेत्येवार्थः. [4] ज्ञान.

एवोपधायकत्वाभ्युपगमात् । तदुक्तं कल्पतरुकृद्भिः—"शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते, स्वस्याप्युपाधित्वाविशेषात् । एवंच नानुपहितस्य विषयता, वृत्त्युपरागोऽत्र सत्तयोपयुज्यते न भास्यतया विषयकोटिप्रवेशेन" इति । अयमभिप्रायः—यथा अज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति जडत्वात्, किन्तु साक्ष्यकोटावेव । एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिविषयकोटौ प्रविशति, स्वस्याः स्वविषयत्वानुपपत्तेः । किन्तु स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयतीति न काऽप्यनुपपत्तिः । एतेन ज्ञानाज्ञानयोरेकविषयत्वं व्याख्यातम् । अज्ञा-

---

'न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता ।
उपमृद्नाति चेद्बुद्धिं ध्याताऽसौ न तु तत्ववित् ॥'

इति ध्यानदीपे श्रीविद्यारण्यैरुक्तम् । बुद्धेर्मर्दनमितरविषयकत्वविघटनम् । तच्च ध्यानोपयुक्तम् । अन्यथा इतरविषयकज्ञानस्योत्पत्तौ ध्यानत्वस्येतरविषयकज्ञानाभावविशिष्टज्ञानधारात्वस्य[1] हानापत्तेः । न तु तत्त्ववेदनमात्रोपयुक्तमिति तदविषयकस्यापि[2] तत्त्वविषयकत्वसम्भवात् । पराभिमतबाधसामग्र्याः प्रतिबन्धकत्वस्य परैः क्लृप्तत्वेपि अखण्डब्रह्मधीसामग्र्याः तन्मते अलीकत्वेन तत्प्रतिबन्धकत्वस्य अक्लृप्तत्वात्, तत्कल्प्यत्वे सिद्धान्ते गौरवापत्तेः, तत्र प्रयोजनाभावाच्च । विवरणादिवाक्यं तु ब्रह्मज्ञानोत्पत्त्युत्तरं प्रारब्धभोगाभावकाले द्वैतप्रत्ययोत्पत्त्यभावपरं योजनीयम् । निवृत्तिः निवर्तिका । विषयतां सम्पादयति—अविषयात् शुद्धात्[3] विषयं विद्यमाना सती व्यावर्तयति । तथाच ब्रह्मान्विते स्वविषयत्वेऽनन्वितत्वे सति विद्यमानत्वे च सति व्यावर्तकत्वात् स्वविषयतां प्रत्युपाधित्वं वृत्तेः । यदनन्वितत्वे सति यद्वि-

---

[1] धारात्वादस्य. [2] युक्तमितरविषयकस्यापि. [3] अविषयत्वात् शुद्धं.

**नमपि हि स्वोपधानदशायामेव ब्रह्म विषयीकरोति स्वानुपधानदशायां स्वस्यैवाभावात्। तथाच ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयकत्वे सत्युपहितविषयकत्वात् समानविषयकत्व-**

---

शिष्टस्येतरव्यावर्तकं यद्विद्यमानं तत्र तदुपाधिः, यथा घटकारणत्वे दण्डत्वमिति लक्षणादिति भावः। **उपहितविषयत्वादिति**। ज्ञानस्याज्ञाननाशकत्वपक्षे ज्ञानाज्ञानयोः अन्याविशिष्टज्ञानपरासमूहालम्बनं स्यादेव; अज्ञानोपहितविषयकत्वसम्भवात्। एकविषयत्वेपि तस्य तन्नाशकत्वपक्षे तयोः स्वोपहितविषयकत्वेपि नैकविषयकत्वम्। अतः तन्नोक्तम्। अज्ञानादिविशिष्टविषयकमप्युपहितविषयकं, विशेष्यतापन्नस्य विषयत्वेऽपि क्षत्यभावादित्युक्तत्वात्। अतः **उपाध्यविषयकत्वे सतीति**। स्वोपहितब्रह्मान्याविषयकत्वे सतीत्यर्थः। तावन्मात्रं निर्विषयके तुच्छव्यवहारजनके विकल्पेपीति उपहितविषयकत्वादित्युक्तम्। सविषयकत्वादिति तदर्थः। तुच्छवृत्तेः सविषयकत्वमते तु विशेष्यदळं न देयम्। ज्ञानस्याज्ञानतत्प्रयुक्ताविषयकत्वनियमास्वीकारे तु विषयत्वानिरूपितेत्यस्य सत्यन्तेन लाभात् तादृशी या उपहितब्रह्मविषयता तच्छालित्वं दळद्वयार्थः। तच्च 'अहं ब्रह्म, घटो मेयः' इत्यादिसमूहालम्बनज्ञानेऽप्यक्षतम्। ब्रह्मभिन्नविषयकज्ञानाज्ञानयोस्तु अज्ञानतत्प्रयुक्ताविषयकत्वे सति अज्ञानविषयतावच्छेदकविषयकत्वं ज्ञानस्य अज्ञानसमानविषयकत्वम्। ज्ञानस्याज्ञानतत्प्रयुक्ताविषयकत्वनियमस्वीकारे तु सत्यन्तं न वाच्यम्। यादृशी अवच्छेदकता तादृशी ज्ञानस्य विषयता वाच्या। तेन शुद्धतद्व्यक्त्यवच्छिन्नविषयताकाज्ञानस्य शुद्धतद्व्यक्तिविषयकज्ञानं, शुद्धशुक्तित्वादिविशिष्टावच्छिन्नविषयताकाज्ञानस्य शुद्धशुक्तित्वप्रकारकं ज्ञानं, जातित्वादिविशिष्टशुक्तित्वादिविशिष्टावच्छिन्नविषयताकाज्ञानस्य तादृशशुक्तित्वादिप्रकारकज्ञानं समानविषयकम्। **समानविषयकत्वमिति**। एकविषयत्वपदेन पूर्वोक्तार्थ इत्यर्थः

**मस्त्यैव । एतेनोपाधिविषयज्ञानानामज्ञानानिवर्तकत्वं व्याख्यातम् । अज्ञानस्योपाध्यविषयत्वेन समानविषयत्वाभावात् । समानविषयत्वेनैव तयोर्निवर्त्यनिवर्तकभावात् । वस्तुतस्तु शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम् । अन्यथा 'शशविषाणं तुच्छम्' इत्यादिशब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्य दुरुद्धरत्वात् । एवंच सति शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न तत्र व्यभिचारः, तुच्छशुद्धयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात् ॥**

तेन न पञ्चम्यसङ्गतिः । **उपाधिविषयकेति** । सत्यन्तव्यावर्त्येत्यर्थः । **समानविषयकत्वेनैवेति** । समानविषयकत्वव्याप्यं निवर्त्यनिवर्तकत्वमित्यर्थः । तेन चैत्रो[1] ब्रह्मेति वाक्यजन्यस्योपहित[2]ब्रह्मविषयकस्य उक्तसमानविषयकस्य स्वसमानाधिकरणसंसारप्रयोजकाज्ञाना[3] निवर्तकत्वेऽपि न क्षतिः । शक्तिविशेषवत्त्वेनैव स्वपरिणाम्यज्ञानत्वसम्बन्धेन स्वहेत्वज्ञानत्वसम्बन्धेन वा कारणत्वम् । अज्ञानोपहितब्रह्मान्याविषयकाज्ञानवृत्तिप्रतियोगितासम्बन्धेन नाशत्वेन कार्यत्वम् । यस्य मूलाज्ञानस्य येन ब्रह्मज्ञानेन नाशः तस्य शक्तिविशेषविशिष्टस्य ज्ञानस्य स्वपरिणामिनः परिणाम्यज्ञानत्वसम्बन्धेन तत्र सत्त्वात् शुक्त्याद्यज्ञाने व्यभिचारापत्तेः वृत्त्यन्तम् । शुक्त्याद्यवच्छिन्नविषयताशाल्यज्ञानवृत्तिप्रतियोगितासम्बन्धेन नाशं प्रति स्वपरिणामिमनोवच्छिन्नाश्रयताकाज्ञानत्वसम्बन्धेन शुक्तित्वप्रकारताकज्ञानत्वेन कारणत्वम् । ज्ञानत्वजात्यस्वीकारे निश्चयत्वजातिर्निवेश्येति दिक् । एवंचोपहितब्रह्मान्याविशेषितोपहितब्रह्मविषयकज्ञानत्वं तात्त्विकप्रमात्वम् । यादृशरूपविषयकस्य व्यावहारिकप्रमाबाधकत्वं तादृशरूपविषयकज्ञानत्वस्यैव तात्त्विकप्रमात्वरूपत्वात् । अतस्तादृशज्ञानस्य अप्रमात्वापत्तिर्मौढ्येनैव । न चोपहितब्रह्मण आकाशादिबाधकधीविषयत्वानुपपत्तिः, आकाशाद्यधिकसत्ताकत्वाभावात्, यद्यद्बाधकधी-

[1] च ईशो. [2] स्वोपहित. [3] ज्ञान.

विषयः तत्तदधिकसत्ताकमित्युक्तव्याप्तेरिति वाच्यम्; स्वाबाधकेत्यनेन यद्बाधकस्य विशेषणीयत्वात्। अन्यथा स्वाप्नयोगेजतदभावयोः परस्परबाधकधीविषयत्वस्य पूर्वोक्तस्यानुपपत्तेः। विवक्षिते तु स्वाप्नगजाभाववति स्वाप्नगज इत्याकारकज्ञानस्य स्वाप्नगजतदभावयोः स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वविषयकत्वेनोभयबाधकत्वात्। यद्बाधके स्वाबाधकत्वाभावात् यत्र धीविषयत्वं स्थाप्यं तत्स्वपदार्थः। यत्तु—"ज्ञानाज्ञानयोः शुद्धाविषयकत्वे—

'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला'।

इति सिद्धान्तहानिः, लब्धे उपहिते विषये अज्ञानस्वरूपसिद्धिः, अज्ञानस्वरूपे च सिद्धे तदुपहितरूपासिद्धिरित्यन्योन्याश्रयः। उपहिताश्रयकत्वमप्यज्ञाने स्यात्। इष्टापत्तौ च तत्राप्यन्योन्याश्रयः, एवमनुपहितस्य वृत्त्यविषयत्वेन चैतन्यस्य वृत्तिविषयत्वार्थं[1] तटस्थयाऽप्युत्पन्नया वृत्त्योपहितत्वम्। उपहिते सति चैतन्ये तद्विषयकवृत्त्युत्पत्तिः निर्विषयकवृत्त्यनुत्पादात्। तथाच चैतन्यस्य विषयत्वे तद्विषयकवृत्त्युत्पत्तिः, तस्यां च चैतन्यस्य वृत्त्यधीनं विषयत्वमित्यन्योन्याश्रयः" इति, तत्तुच्छम्; आश्रयत्वेत्यादिवाक्येनाज्ञानकार्यानुपहितस्याज्ञानविषयताश्रयत्वयोरुक्तत्वात्।

'पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥'

इत्युत्तरार्धेनाज्ञानकार्योपहितस्याविषयाश्रयत्वे पश्चादुत्पन्नत्वहेतोरुक्तत्वात्। अज्ञानोपहितस्याप्यविषयत्वादौ तात्पर्ये हेत्वनुक्त्या न्यूनतापत्तेः। लब्ध इत्यादिकं तु स्वमौढ्यप्रकटनम्। अज्ञानतदुपहितयोस्तद्गोचरसाक्षिणोश्च अनादित्वेनोत्पत्तिज्ञप्त्योरन्योन्याश्रयानवकाशात्। एवमित्यादिकमपि तथा, शाब्द[2]वृत्तौ विषयस्याहेतुत्वेन विषयस्योपहितस्य वृत्तिपूर्वमनपेक्षणात्। लक्षणाज्ञानतज्जन्योपस्थिती अपि अन्याविशेषितं यत्स्वोपहितं तद्विषयके अपेक्ष्येते[3] न तु शाब्द[2]वृत्त्युपहितविषयके। न

[1] वृत्त्यविषयत्वार्थः. [2] शाब्दा. [3] अपेक्षेते.

**यद्वा सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्। प्रकारश्च सोपाख्यः कश्चिद्धर्मः। तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः। अभावत्वस्यापि सोपाख्यत्वादभावत्वप्रकारकज्ञानविषयीभूते अभावे न भागासिद्धिः। उपाख्या चास्तीति प्रतीतिविषयत्वादीत्यन्यत्। एतेन वृत्तिव्याप्यफलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वमपि हेतुः, ब्रह्मणि तुच्छे च व्यभिचारपरिहारोपायस्य उक्तत्वात्॥**

---

च वाचस्पतिमते आत्मसाक्षात्कारस्य मानसत्वेन मनस्सन्निकर्षविषयाभ्यां जन्यत्वात् स्वोपहितात्मविषयकत्वानुपपत्तिः, विषयनिष्ठप्रत्यासत्त्या तयोर्हेतुत्वेन स्वोपहिते तयोः स्वोत्पत्तिपूर्वमसत्त्वादिति वाच्यम्; सन्निकर्षाद्युपहितस्य स्वविषयस्य स्वोपहितत्वेन[1] तदुपपत्तेः। यस्मिन् क्षणे यत्कारणकूटवत्तदव्यवहितोत्तरक्षणे तत्तादात्म्यापन्ने कार्योत्पत्तिरिति व्याप्तेः स्वीकारात्। न च विनश्यदवस्थसन्निकर्षादिना स्वोत्पत्तिस्थले भिन्नकालीनसन्निकर्षाद्युपहितात् स्वोपहितस्य अत्यन्तभेदात् यत्र मनस्संयोगोपहिते मनस्संयोगः[2] तत्र लौकिकविषयतया न साक्षात्कारोत्पत्तिरित्युक्तानुपपत्तिरिति वाच्यम्; तावताऽप्यविनश्यदवस्थसंप्रयोगात् तदुत्पत्तिसम्भवादिति सुधीभिर्ज्ञेयम्। असत्ख्यातिमते शब्देनेवानुमानादिनाऽपि तुच्छस्य ज्ञेयत्त्वात्तत्र व्यभिचारादाह—**यद्वेति**। **धर्म** इति। **ग्राह्य** इति शेषः। तथाच सोपाख्यनिष्ठप्रकारताकवृत्तिर्वाच्येति भावः। तुच्छस्याप्यस्तित्वेन[3] ज्ञानमस्तीति वादिनं प्रत्याह—**आदीति**। सत्तातादात्म्यतत्त्वान्यतरवत्त्वादित्यर्थः। एवं फलव्याप्यत्वहेतुतोक्तिपक्षेऽपि वृत्त्यभिव्यक्तचित्त्वादिरूपफलत्वेन न निवेशः। किन्तु स्वावच्छेदकवृत्तिव्याप्यत्वसम्बन्धेन मनोवच्छिन्नचित्त्वेन हेतुता।

[1] स्वविषयस्वोपहितादभेदेन. [2] मनस्संयोगे तत्तादात्म्यवति. इति पा. [3] प्यसत्त्वेन.

वृत्तिश्च सोपाख्यनिष्ठप्रकारताका ग्राह्या। तेन नोक्तव्यभिचारः। चित्त्वेन हेतुत्वं वा, सम्बन्धभेदाच्चतुर्थपक्षाद्भेदः। न चातीन्द्रिये अविद्यासुखादौ च अनुमित्यादिवृत्त्यवच्छिन्नचैतन्यमादाय हेतुः स्थाप्यः तच्च न फलमिति फलव्याप्यत्वं रूपान्तरेणापि प्रकृते न हेतुरिति वाच्यम्; वृत्तिप्रतिबिम्बितत्वेन तदधीनासत्त्वापादकाज्ञाननिवृत्तिमत्त्वेन वा साक्षिचैतन्यस्यैव प्रकृते फलत्वात्। अनुमित्यादिवृत्तौ साक्षिणः प्रतिबिम्बितत्वाद्यनपायात्। उक्तं हि विवरणे—'जानातेश्चानुमेयादिषु फलापेक्षया सकर्मकत्वं न कर्मकारकापेक्षया' इति। अतएव सुखादिरूपाया वृत्तेरपि स्वच्छत्वात् चित्प्रतिबिम्बग्राहित्वमित्युक्तं सिद्धान्तविद्यादौ। वृत्तिज्ञाने यद्यपि बाह्यार्थवत् फलं नास्ति, तथापि चैतन्याभिव्यक्तिरूपं फलमस्त्येव, मनस इव तत्परिणामस्यापि स्वच्छत्वेन चित्प्रतिबिम्बग्राहित्वादित्युक्तम् 'नाभाव उपलब्धेः' इत्यधिकरणे कल्पतर्वादौ। एवंचेन्द्रियकरणकवृत्तावेव चित्प्रतिफलनं न त्वनुमित्यादिवृत्ताविति वेदान्तसिद्धान्त इति यत्परेणोक्तं तत् तन्मतिपरिपाकः। स्वाकारवृत्तिप्रतिबिम्बितचिद्विषयत्वादिरूपस्य फलव्याप्यत्वस्यानुमित्यादिस्थले अस्मत्सिद्धान्ते परमनङ्गीकारात्। उक्तं हि विवरणे—'अनुमित्यादौ न क्रियाजन्यफलशालित्वरूपं कर्मत्वं, किन्तु सुषुप्त्यादिव्यावृत्तिमात्रम्' इति। वस्तुतः सर्वस्य कर्तृत्वादेव वर्तमानसर्वविषयज्ञतेत्यादिविवरणे[1] ईश्वरोपाधिसत्त्वप्रधानमाया वर्तमानसर्वविषयाकारेण परिणमते, तस्मिंश्च परिणामे प्रतिबिम्बितं चैतन्यं सर्वं पश्यत्याध्यासिकसम्बन्धादित्यादितत्त्वदीपनोक्तेः[2] स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वरूपं फलव्याप्यत्वं सर्वत्र सुलभम्। न च चैतन्यत्वेनैव तादात्म्यरूपविषयतया हेतुत्वसम्भवात् व्यर्थविशेषणत्वमिति वाच्यम्; वृत्तिप्रतिबिम्बितत्वेनैव तादात्म्येन हेतुत्वात्। तुच्छे तु नोक्तमायावृत्तिः, विद्यमानमात्र एव

---

[1] विवरणात्. [2] दीपनोक्तं

तदुक्तेः । अतश्चैतन्यातादात्म्याच्च न तत्र व्यभिचारः । ब्रह्मणि तु न सः, तदन्याकारवृत्तौ पूर्वोक्तविरोधेन तदाकारकत्वाभावात् । तन्मात्राकारकवृत्तेः सप्रकारकत्वविशेषणेन वारणसम्भवात् । तदन्यनिष्ठतादात्म्येनैव हेतुत्वाद्वा । एतेन वृत्तिप्रतिबिम्बितशुद्धब्रह्मरूपाभ्यां[1] भेदसत्त्वात् तादात्म्यसत्त्वेऽपि न क्षतिः । अतीतादेरपि वर्तमानतादशायां तादृशचित्तादात्म्यात् तत्र न भागासिद्धिः । यत्तु—"वृत्तिविषयत्वेनैव सकलव्यवहारसम्भवात् वृत्तिविषयत्वातिरिक्तस्य चिद्विषयत्वस्याननुभवाच्च न कुत्रापि चिद्विषयत्वम् । अन्यथा तमोनिवर्तकप्रभादिप्रतिफलितं प्रभाद्यन्तरं स्यात् । विषयस्यापरोक्ष्यमपि इन्द्रियप्रयुक्तसाक्षात्कारत्वविशिष्टवृत्तिविषयत्वरूपं वृत्तिप्रतिफलितचिद्विषयत्वं विनाप्युपपद्यते, ज्ञानत्वाश्रयवृत्तिविषयत्वरूपज्ञातत्वादिवत्" इति, तन्न; सुखादौ वृत्तिज्ञाने च इन्द्रियजन्यवृत्त्यन्तरकल्पने गौरवात्, वृत्तिविषयत्वस्येच्छादिव्यवहारविषयत्वाप्रयोजकत्वात् । असत्त्वापादकाज्ञानविषयतानवच्छेदकत्वस्य तत्र प्रयोजकत्वोक्तौ चेच्छाविरहप्रयोजकमज्ञानाविषयतावच्छेदकत्वं घटादेरज्ञानविषयचित्तादात्म्येनैवोपपाद्यम् । अवच्छेद्याधिकरणसंम्बन्धं विना अवच्छेदकत्वानुपपत्तेः । न चाज्ञानविषयतानवच्छेदकत्वस्य तथात्वे अतीततादिदशायां सुखादौ परोक्षवृत्तिनिवर्त्यतत्समसंख्याज्ञानानामिच्छादिविरहप्रयोजकानां कल्पनमावश्यकं, तथाच तदपेक्षया वृत्तीनां विद्यमानतादशायां तत्र कल्पनायां न गौरवमिति[2] वाच्यम्; अज्ञानस्य वृत्तिप्रागभावरूपतया प्राचां मते वृत्तिसमसङ्ख्यत्वेऽपि विद्यमानसुखादौ वृत्तितत्प्रागभावादिकल्पनायां तदपेक्षया गौरवात्, नव्यमते प्रागभावास्वीकारेणाज्ञानस्य वृत्तिप्रागभावत्वाभावात् तत्समसङ्ख्यत्वाभावात् । देशकालविशेषावच्छेदेन घटाद्यत्यन्ताभावस्य घटादिविरोधित्ववत् तद्विषयतावच्छेदक-

---

[1] स्वरूपाभ्यां. [2] तत्कल्पनाया गौरवादिति.

त्वस्य वृत्तिविरोधित्वसम्भवात् एकस्यैवाज्ञानस्येच्छाविरहप्रयोजकत्वात् । तादृशस्याप्यध्यासोपादानत्वेन भावरूपत्वात् । प्रतिकर्मव्यवस्थायामधिकं वक्ष्यते । असत्त्वापादकाज्ञानस्यैवेच्छादिप्रयोजककुक्षौ निक्षेपादनुमित्यादिकाले अभानापादकाज्ञानसत्त्वेपीच्छाद्युत्पत्तिः । न च घटादेरज्ञानविषयत्वमेव लाघवादस्तु, तथाच तदवच्छेदकत्वोपपादकं चित्तादात्म्यं न कल्प्यमिति वाच्यम्; घटादिजडेषु तदाकारवृत्तिं विना प्रकाशप्रसक्तिर्हि चैतन्यस्य शुद्धरूपेण मोक्षान्वयिसत्तास्फुरणरूपसर्वगतस्वप्रकाशत्वेन क्लृप्तस्य सम्बन्धात् । तथाच तत्रैवैकत्र तत्तदवच्छिन्नरूपेणाज्ञानविषयत्वकल्पनेन तदवच्छेदकेषु घटादितद्धर्मेष्वनन्तेषु अप्रकाशनिर्वाहे तेषु नाज्ञानविषयकत्वं कल्प्यते, गौरवात् । किञ्च घटादौ तदवच्छिन्नचिति वा तद्विषयत्वमित्यत्र न विनिगमकम् । न चोक्तचिति तत्स्वीकारे घटादौ तदवच्छेदकत्वस्य आवश्यकत्वात् गौरवमेव विनिगमकमिति वाच्यम्; उक्तचितः केवलचिदन्यत्वेन तस्यामनवच्छिन्नोक्तविषयत्वस्वीकारे दोषाभावात्, अनातिरिक्तवृत्तित्वरूपावच्छेदकत्वमादायैव शास्त्रे तदवच्छेदकत्वव्यवहारात् अतिरिक्तावच्छेदकत्वाकल्पनात् । उपहितस्य केवलानन्यत्वपक्षे तु एकस्यैव अज्ञानविषयत्वस्य शुद्धचिन्निष्ठस्योक्तरीत्या अवच्छेदकत्वानि घटादौ कल्प्यन्ते । तत्र विषयत्वं ब्रह्माज्ञानस्यैव विरोधि, अवच्छेदकत्वादीनि तु घटाद्याकारवृत्तीनामपि । सर्वथा घटादौ चित्तादात्म्यमावश्यकम् । अत एव सत्तास्पुरणाकारप्रतीत्याऽपि सर्वत्र चित्तादात्म्यसिद्धिः, सत्तास्फुरणरूपतया क्लृप्तचित एव तद्विषयत्वात् । अतएव विषयापरोक्ष्यमपि नेन्द्रियजन्यवृत्तिविशेषविषयत्वं, आत्मसुखादौ तदभावात्, तन्मानससाक्षात्कारस्य तत्र मनस्सन्निकर्षादिहेतुत्वस्य च कल्पने गौरवात् । किन्तु अज्ञानविरोधि चिद्रूपम् । अज्ञानविरोधित्वं च सुखाद्यवच्छिन्नचिति स्वतः, तदन्याचिति तु तदाकारवृत्त्येति विशेषः । अतएव ज्ञातत्व-

**यद्वा दृश्यत्वं चिद्विषयत्वम्। तच्च यथाकथंचित् चित्सम्बन्धित्वरूपं हेतुः। तच्च न चैतन्ये, अभेदे भेदनान्तरीयकस्य**

मपि न वृत्तिविशेषविषयत्वं, किन्तु असत्त्वापादकाज्ञानविरोधि चिद्रूपम्। उक्तविरोधित्वं च सुखाद्यवच्छिन्नचिति स्वत, तदन्याचिति तु वृत्त्या। तच्चापरोक्ष्यादिकम्। यद्यपि ब्रह्म स्फुरति, ब्रह्मास्तीत्यादावसंसृष्टमेव भासते; तादृशवाक्ये लकारस्य साधुत्वार्थकत्वस्योक्तत्वात्। तथापि घटः स्फुरतीत्यादौ घटादौ तत्तादात्म्यं भासत एवेति चिद्विषयत्वमाचिन्मात्रस्यावश्यकम्। प्रभादिप्रतिफलिते च प्रभाद्यन्तरे न कापि युक्तिरिति न तदापादनम्। न चैवमपरोक्षज्ञानत्वं चितीव वृत्तावपि वाच्यमिति परोक्षत्वापरोक्षत्वयोः[1] चैतन्यरूपमुख्यज्ञानत्वं वृत्तिरूपगौणज्ञानत्वं प्रति वा व्याप्यता न स्यादिति वाच्यम्; मुख्ययोः परोक्षापरोक्षज्ञानत्वयोः मुख्यज्ञानत्वव्याप्यतायाः अमुख्ययोस्तयोरमुख्यज्ञानत्वव्याप्यतायाः सम्भवात्, अज्ञानसामान्यविरोध्यज्ञानविशेषविरोधिचित्त्वाभ्यां चितो मुख्यापरोक्षपरोक्षरूपत्वात् तादृशचिदात्मकविषयकत्वेन वृत्तेरमुख्यापरोक्षतासम्भवात्। तस्मात् फलव्याप्यत्वहेतुरपि निर्दोषः। फलव्याप्यत्वव्यतिरिक्तस्येत्याद्याचार्योक्तिस्तु स्वाकारवृत्त्यभिव्यक्तचैतन्यविषयकत्वाहेतुत्वपरा; तस्योक्तमायावृत्त्याप्यतीन्द्रियेष्वसम्भवात्, अज्ञाननिवृत्तिरूपाभिव्यक्तेः मायावृत्त्यप्रयोज्यत्वात्। **भेदनान्तरीयकस्येति।** ययोर्भेदस्तयोरेव सम्बन्ध इत्यर्थः। भेदाभेदानुमानविवेचने विवेचितमस्माभिरेतत्। यद्यपि कल्पितश्चित्सम्बन्धश्चैतन्येप्यस्ति, सत्यत्वादिरूपस्य तस्य स्वधर्मतास्वीकारात्। तथाऽपि स्वज्ञानाबाध्यचित्सम्बन्धवत्त्वं वाच्यम्। अथवा भेदनान्तरीयकस्येति भेदघटितत्यर्थः। **सम्बन्धस्य** चित्सम्बन्धित्वपदार्थस्य। तथाच चिदन्यनिष्ठचित्सम्बन्धो हेतुरिति भाव। ननु चितः स्वावच्छेदकवृत्तिव्याप्यत्वसम्बन्धस्तुच्छेपीत्यत आह—

[1] परोक्षापरोक्षज्ञानत्वयोः

**सम्बन्धस्य अभावात् । अतो न व्यभिचारः । तुच्छे च व्यभिचारः परिहारणीयः । यद्वा स्वव्यवहारे स्वातिरिक्तसंविद्-पेक्षानियतिरूपं दृश्यत्वं हेतुः । संविच्छब्देन विषयाभिव्यक्तं वा वृत्त्यभिव्यक्तं वा शुद्धं वा चैतन्यमात्रमभिप्रेतम् । तथाच घटादौ नित्यातीन्द्रिये साक्षिभास्ये च सर्वोपि व्यवहारः स्वातिरिक्तसंवित्सापेक्ष इति नासिद्धिः । व्यवहारश्च स्फुरणाभि-वदनादिसाधारणः । तत्र ब्रह्मणः स्फुरणरूपे व्यवहारे नित्यसिद्धे स्वातिरिक्तसंविदपेक्षा नास्तीति नियतिपदेन व्यभिचारवारणम् ।**

---

**तुच्छ इति** । स्वज्ञानाबाध्यत्वोक्तिपक्षे तुच्छज्ञानबाध्य[1]त्वाप्रसिद्धेः तदनुक्तिपक्षे तुच्छावृत्तित्वेन सम्बन्ध[2]विशेषणात् तादात्म्यसम्बन्धस्यैव निवेशाद्वेति शेषः । प्रातिभासिकज्ञानमपि स्वप्नादौ स्वाभावज्ञान-बाधकमिति स्वज्ञानबाध्यतायोग्यताप्रसिद्धेर्न साधनवैकल्यम् । **विष-याभिव्यक्तं**—विषयावच्छिन्नेनावरणेन शून्यम् । **वृत्त्यभिव्यक्तं**—वृत्तिप्रतिबिम्बितम् । **सर्वोपीति** । इच्छाप्रवृत्त्यादिरित्यर्थः । अविद्यादेः स्वावच्छिन्नचिद्रूपं स्फुरणमनाद्यप्यनवच्छिन्नचित्सापेक्षं तदाश्रितत्वात् प्रयुक्तत्वरूपसापेक्षत्वस्या[3]नादावपि सम्भवादिति भावः । स्फुरणमस-त्त्वापादकाज्ञानविरोधि चैतन्यं, ताद्रूप्येण स्फुरणस्य निवेशेऽपि न क्षतिः, ब्रह्मस्फुरणापेक्षणीयशुद्धचैतन्यस्य ब्रह्मातिरिक्तत्वाभावादित्याशङ्केनाह— **तत्र ब्रह्मण** इत्यादि । **नित्यसिद्धे** इति । नित्यसिद्धब्रह्माश्रिते इत्यर्थः । इदं च नास्तीत्यत्र हेतुगर्भं विशेषणम् । **स्वातिरिक्तेति** । स्ववि-लक्षणेत्यर्थः । स्वावृत्तिधर्माश्रयेति यावत् । तेन ब्रह्मणः स्वस्मिन् स्वात्मकसत्यत्वादिधर्मतानियामककल्पितभेदसत्त्वेऽपि न क्षतिः । अत्रो-क्तविशिष्टस्फुरणस्य स्वातिरिक्तवृत्तिसापेक्षत्वात् संवित्पदेन पूर्वं चैत-न्यमुक्तम् । अथवा **नित्यसिद्धे** ब्रह्मस्वरूपे । तथाच घटादिस्फुरण-

---

1 तुच्छज्ञानतुच्छबाध्य. 2 संबन्धि. 3 साक्षित्वस्या.

**स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षायां पर्यवसानात्। अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः। स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम्। 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः। तथाचान्यानधीनापरोक्षत्वं पर्यवस्यति। तन्निरूपितभेदवत्त्वं हेतुः। तच्च नित्यपरोक्षे अन्याधीनापरोक्षे च घटादावस्तीति नासिद्धिः। न च ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात्तत्र व्यभिचारः, अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति**

स्योक्तविरोधिचिद्रूपत्वेऽपि शुद्धचिद्रूपब्रह्मणः स्फुरणं शुद्धचिदेव, आवृताया अपि तस्याः चिन्मात्रमस्तीत्यभिलापादि[1]दर्शनादिति भावः। **स्वगोचरेत्यदि**। स्वस्फुरणाद्यन्यतमत्वव्यापकस्वातिरिक्तचित्प्रयुक्तताकत्वे पर्यवसानादित्यर्थः। स्वातिरिक्तचित्प्रयुक्तस्फुरणकत्वं सापेक्षस्फुरणस्वरूपकत्वं वा हेतुर्लघुर्बोध्यः॥

**स्वापरोक्षत्वे** इति। अपरोक्षत्वमज्ञानसामान्यविरोधि चैतन्यम्। **स्वातिरिक्तेति**। स्वविलक्षणचिदित्यर्थः। तेनाज्ञानविरोधित्वरूपेण वृत्त्यपेक्षत्वेऽपि न क्षतिः; वृत्त्यसत्त्वेऽपि चिन्मात्रं भातीति व्यवहारात्। शुद्धचैतन्यस्यापरोक्षताकत्वे तु स्वातिरिक्तं न निवेश्यम्। अनपेक्षापरोक्षताकत्वस्य ब्रह्मणि सत्त्वात् साक्षादपरोक्षात् स्वविलक्षणचिदनपेक्षापरोक्षताकत्वमनपेक्षापरोक्षताकं[2] वा अविद्याद्युपहितचिद्रूपमविद्याद्यपरोक्षत्वं शुद्धचित्सापेक्षमेव। **तन्निरूपितेत्यादि**। तदवच्छिन्नानुयोगिताकस्य स्वभेदस्य प्रतियोगित्वमित्यर्थः। ब्रह्म स्वप्रकाशं नेति बुद्ध्या स्वप्रकाशत्वावच्छिन्नप्रतियोगिताकस्य शुद्धब्रह्मानुयोगिकभेदस्य कल्पन[3]सम्भवात् स्वप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदानुयोगित्वं नोक्तम्। स्वप्रकाशं ब्रह्म नेति बुद्धिस्तु ईश्वरत्वादिधर्मोपहितप्रतियोगिकं भेदमवगाहते, न तु शुद्धब्रह्मप्रतियोगिकम्। अभावप्रत्यक्षे शुद्धस्य प्रति-

---

[1] त्यालापादि.　[2] स्वविलक्षणचिदनपेक्षताकं.　[3] कल्पना.

**वाच्यम्; तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात्। जीवत्वेश्वरत्वादिरूपस्यान्यस्यैव धर्मस्य तन्निरूपकत्वात्।**

---

योगित्वेनाभाननियमात्। अतो न शुद्धब्रह्मण्युक्तहेतुरीति भावः। जीवत्वाद्युपहितस्य ब्रह्मणः शुद्धब्रह्मानुयोगिको भेदः नोक्तस्वप्रकाशत्वावच्छिन्नानुयोगिताकः, येन जीवत्वोपहितब्रह्मप्रतियोगिकत्वात् शुद्धब्रह्मप्रतियोगिकत्वमाशङ्क्येत। अतो न व्यभिचार[1] इत्याशयेनाह— **तद्भेदस्येति। धर्मानिरूपितत्वात्**—धर्मानवच्छिन्नानुयोगिताकत्वात्। ननु स्वप्रकाशो न जीव इत्यादिप्रत्यक्षसिद्धभेदप्रतियोगित्वं ब्रह्मण्यपीत्यत्राह—**जीवत्वेति। अन्यस्य** शुद्धब्रह्मान्यस्य। शुद्धान्यो यो जीवत्वादि**धर्मः** तस्य **तन्निरूपकत्वात्** उक्तभेदप्रतियोगितावच्छेदकत्वात्। तथाच तादृशभेदप्रतियोगित्वस्य स्वावच्छेदकधर्मसामानाधिकरण्यनियमात् उपहितस्य शुद्धातिरेकात् उपहित[2]वृत्तेः शुद्धवृत्तित्वे मानाभावेन शुद्धब्रह्मावृत्तित्वान्न व्यभिचार इति भावः। अथवा ननु स्वप्रकाशत्वविशिष्टकेवलब्रह्मरूपाभ्यां कल्पितभेदस्यावश्यकत्वात् तस्यानुयोगितावच्छेदकत्वं स्वप्रकाशत्वे प्रतियोगित्वं केवलब्रह्मणीत्यत आह—**जीवत्वेति। तन्निरूपकत्वात्** स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वात्। तथाचोक्तभेदो यदि स्वप्रकाशत्वावच्छिन्नानुयोगिताकस्तदा जीवत्वाद्यवच्छिन्नप्रतियोगिताकत्वाज्जीवत्वाद्युपहितप्रतियोगिक एव स्यात्। न शुद्धब्रह्मप्रतियोगिकः; उक्तभेदस्य प्रत्यक्षसिद्धत्वात्, प्रत्यक्षे अभावप्रतियोगितया शुद्धाभाननियमात्। अतः[3] शुद्धानुयोगिकः स्वप्रकाशत्वावच्छिन्नप्रतियोगिताको वाच्यः। तथाच तादृशभेदप्रतियोगित्वमादाय न व्यभिचारशङ्का, तादृशभेदस्यैव शुद्धस्वप्रकाशयोः तादात्म्याद्युपहिततया [4]स्वप्रकाशे शुद्धस्याप्रत्यक्षे भेदान्तरे मानाभावादिति भावः। न चैवं

---

[1] अतो व्यभिचार. [2] स्वोपहित. [3] नियमादरः [4] द्युपपादकतया.

एवंचावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वमपि हेतुः। न च फलव्याप्यत्वाभावविशिष्टं* यदपरोक्षव्यवहारयोग्यत्वं तस्य ब्रह्मणीवाविद्यान्तःकरणादौ शुक्तिरूप्यादौ च सत्त्वेन असिद्धिसाधनवैकल्ये इति वाच्यम्; अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्य अपरोक्षव्यवहारयोग्यत्वपदेन विवक्षि-

भेदप्रतियोगित्वमात्रं हेतुरस्तु स्वावच्छेदकोपहित एव तत्सत्त्वात् न शुद्धब्रह्मणि व्यभिचार इति वाच्यम्; सत्यत्वादिरूपस्य ब्रह्मणः स्वधर्मतानिर्वाहाय कल्पितभेदस्य अस्वीकारमते शुद्धं ब्रह्म जगदुपादानमिति मते उपादानत्वान्यथानुपपत्त्या कल्प्यस्य भेदस्य च परोक्षबुद्ध्येकविषयत्वेनानवच्छिन्नप्रतियोगिताकस्य प्रतियोगित्वमादाय शुद्धब्रह्मणि व्यभिचारात्, प्रत्यक्ष एव किञ्चिदवच्छिन्नप्रतियोगिताकत्वेनाभावभाननियमात्, स्वप्रकाशत्वावच्छिन्नानुयोगिताकत्वेन प्रतियोगितासम्बन्धेन हेतुत्वे वैयर्थ्यानवकाशाच्च। स्वप्रकाशो न तद्व्यक्तिरिति धिया स्वप्रकाशो न स्वप्रकाश इत्याहर्यधिया वा स्वप्रकाशत्वोपहितेऽपि तद्व्यक्तित्वादिरूपेण तस्माद्भेदस्य सत्त्वात् न भागासिद्धिः। एवञ्चेति। यथाश्रुतमनादृत्य व्याख्यादरे चेत्यर्थः। अवेद्यत्वे इत्यादि। अवेद्यत्वसमानाधिकरणं यदपरोक्षव्यवहारयोग्यत्वं तदभाव इत्यर्थः। वेद्यत्वं स्वावच्छिन्नचैतन्यविषयकं यदभानापादकाज्ञानं तन्निवर्तकवृत्तिव्याप्यत्वरूपं फलव्याप्यत्वम्। तच्च न ब्रह्मणि, तदवच्छिन्नचैतन्याप्रसिद्धेः। नापि शुक्तिरूप्यादौ, तस्यातीततादशायां असत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिव्याप्यत्वेऽप्युक्ताज्ञाननिवर्तकवृत्त्यव्याप्यत्वात्। अनावृतसाक्षिसम्बन्धो नोक्त[1]व्यवहारयोग्यत्वम्, येनोक्तदोषः। किन्तु अभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वम्। उक्तविषयत्वस्य अव्याप्यवृत्तित्वात् ब्रह्मण्यपि तदभावोऽस्तीत्यतो योग्यत्वेति। तच्चाभानापाद-

[1] सबन्धेनोक्त.

**तत्वात्। तस्य चाविद्यादौ शुक्तिरूप्यादौ चासत्त्वान्नासिद्धि-साधनवैकल्ये। यथाच घटादेः फलव्याप्यत्वं तथाग्रे वक्ष्यामः। अविद्यानिवृत्तेः पञ्चमप्रकारत्वाभ्युपगमपक्षे तत्र व्यभिचारवारणायाज्ञानकालवृत्तित्वं हेतुविशेषणं देयम्। तेनैव तुच्छेऽपि न व्यभिचारः। एवमेव सर्वेषु हेतुषु व्यभिचा-**

काज्ञानाविषयतदवच्छेदकान्यतरत्वम्। उक्तविषयत्वं ब्रह्मण्येव, उक्तविषयावच्छेदकत्वं घटादावेव, न त्वविद्यादौ। अतीतत्वादिदशायामपि शुक्तिरूप्यादेः नाभानापादकाज्ञानविषयतावच्छेदकत्वम्। साक्षिसम्बन्धाभावादेव तदा तदभानोपपत्तेः। न चाज्ञानविषयतदवच्छेदकत्वयोरव्याप्यवृत्तितया तद्दोषतादवस्थ्यमिति वाच्यम्; तदव्याप्यवृत्तित्वेऽपि तदवच्छिन्नभेदघटितान्यतरत्वस्य व्याप्यवृत्तित्वात्, ब्रह्मघटादियत्किञ्चिद्व्यक्तयोरन्यतरत्वादेरव्याप्यवृत्तेरुक्तयोग्यतात्वसम्भवाच्च। अत्र मूलाज्ञानाविषयत्वावच्छिन्नप्रतियोगिताक एकाज्ञानपक्षे तु चिन्मात्रविषयकतद्धीविषयत्वावच्छिन्नप्रतियोगिताको भेदो लघुः हेतुर्बोध्यः[1]। **अज्ञानकालवृत्तित्वमिति।** अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वे सति कालसम्बन्धित्वमित्यर्थः। अज्ञाननाशकप्रयुक्तनाशप्रतियोगित्वादिकं ब्रह्मण्यपि नास्तीति दृश्यत्वभागवैयर्थ्यं, अतस्तन्नोक्तम्। न चोक्तदृश्यत्वस्योक्तप्रतियोगित्वाभिन्नत्वाद्धूमप्रागभाववत् न वैयर्थ्यमिति वाच्यम्; उक्तप्रतियोगित्वविशिष्टस्य दृश्यत्वघटकीभूतविशेष्यांशस्यैव हेतुत्वसम्भवेनेतरवैयर्थ्यात्। उक्तकालसम्बन्धित्वं तु ब्रह्मण्यपीति दृश्यत्वं सार्थकम्। सत्यन्तं तुच्छेऽपीति विशेष्यम्। तन्मात्रं पञ्चमप्रकारेऽपीति सत्यन्तमुक्तम्। अज्ञानाप्रयुक्तं अज्ञानतल्लेशान्यतरतादात्म्यानापन्नम्। तेनाज्ञाननिवृत्तावपि प्रतियोगितया ज्ञानस्य प्रयोजकत्वेऽपि न क्षतिः। जीवन्मुक्तभोगादिकमज्ञानानात्मकमपि तल्लेशा-

[1] हेतुरिति भेदः.

रपरिहाराय यतनीयम्। सद्विविक्तत्वमात्रे तु साध्ये तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च न व्यभिचारगन्धोऽपीति सर्वमवदातम्॥

इति दृश्यत्वनिरुक्तिः

---

त्मकम्। सर्वेष्वनुमानेषु साध्यस्यैव मिथ्यात्वलक्षणत्वाभिप्रायेण तुच्छव्यावर्तकं सत्त्वेन प्रतीत्यर्हत्वादिकं साध्ये दत्तम्। वस्तुतस्तु साध्ये तन्न देयम्, प्रयोजनाभावात्। अतो नोक्तव्यभिचार इति वस्तुगतिमनुरुध्याह—सद्विविक्तत्वमात्रे साध्य इति। सतो विविक्तत्वं भेदो यत्र तन्मात्रे यत्साध्यं तस्मिन्नित्यर्थः। तदन्य[1]सकलसाधारणेषूक्तसाध्येष्विति यावत्। यत्तु—"ब्रह्मनिष्ठस्यान्यानधीनापरोक्षत्वस्य ब्रह्मातिरिक्तत्वे अविद्याधीनतया अन्यानधीनत्वमसम्भवि, ब्रह्मस्वरूपत्वे तु तस्य घटादिनिष्ठभेदप्रतियोगित्वेऽपि घटादिनिष्ठत्वात् घटादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वेन घटादावसिद्धिः। उक्तापरोक्षप्रतियोगिकभेदोक्तौ तादृशजीवप्रतियोगिकभेदवत्त्वात् ब्रह्मणि व्यभिचारः। घटादिर्नापरोक्ष इति धीकल्पितभेदमादाय ब्रह्मस्वरूपस्याप्यपरोक्षत्वस्योक्तावच्छेदकत्वे पञ्चमप्रकाराविद्याध्वंसादौ व्यभिचारः। तद्वारणायाज्ञानकालवृत्तित्वोक्तौ अविद्यानाशोत्तरजीवन्मुक्तभोगादावसिद्धिः। अविद्यालेशकालीनत्वोक्तौ घटादावसिद्धिः। क्रमिकसर्वमुक्तिपक्षे पञ्चमप्रकाराविद्यानाशादौ च व्यभिचारः, युगपत्सर्वमुक्तेः वामदेवादिमुक्तिबोधकागमविरोधेनाप्रामाणिकत्वात्। किंचापरोक्षत्वं जातिविशेषो वा, तदाश्रयज्ञानविषयत्वं वा, तृतीयप्रकाराभावात्। उभयथाऽप्यन्यानधीनापरोक्षताकभिन्नत्वात् ब्रह्मणि व्यभिचारः। न हि ब्रह्म इन्द्रियजन्यमनोवृत्तिनिष्ठोक्तिजात्याश्रयः। न चोक्तवृत्तिविषयः। द्वितीयपक्षे अन्यानधीनापरोक्षत्वाप्रसिद्ध्या घटादावसिद्धिः। अपि-

---

[1] सदन्य.

चावेद्यत्वे सतीत्यादि न युक्तम्, वृत्तिमात्रस्याज्ञानानिवर्तकतया त्वन्मते घटादाविव ब्रह्मण्यप्यज्ञाननिवृत्त्यर्थं वृत्तिप्रतिबिम्बितचैतन्यस्यावश्यकत्वेन फलव्याप्यत्वात्। विशेषणाभावप्रयुक्तविशिष्टाभावः घटादावेव वृत्तौ चित्प्रतिफलनं न तु ब्रह्मणीत्यङ्गीकारे वृत्तेरज्ञानानिवर्तकत्वेनातीन्द्रियादाविव विशेष्याभावप्रयुक्तो विशिष्टाभाव इति ब्रह्मणि व्यभिचारो दुर्वारः। वृत्त्यन्यचैतन्यरूपज्ञानस्य मया अनङ्गीकारेणान्यतरासिद्धिश्च" इत्युक्तं, तत्तुच्छम्; उक्तव्याख्यानस्य निर्दोषत्वात्। किंच निरूपितपदस्यावच्छिन्नप्रतियोगिताकार्थकत्वमिति ते भ्रमः। तथा सत्युक्तभेदप्रतियोगित्वं ब्रह्मण्येवेति प्रपञ्चे तदसिद्धिं त्यक्त्वा पञ्चमप्रकारादौ व्यभिचार एव कथमुक्तः; चित्रं महदेतद्यद्वाक्यार्थमबुद्ध्वैव दूषणे प्रवृत्तिः। आपिच पञ्चमेत्याद्य[1]युक्तम्, सद्योमुक्तिपक्ष एवोक्तविशेषणादरात्। उक्तं हि संक्षेपशारीरकादौ—

सम्यक्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं
सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसन्दीपितः।
निर्लेपेन हि दन्दहीति न मनागप्यस्य रूपान्तरम्
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा॥

इति। नापि प्रत्येकमुक्तिपक्षे दोषः, एकजीवपक्ष एव तथोक्तत्वात्। तस्यैव मुख्यसिद्धान्तत्वात् पक्षान्तराण्यपि संगृहीतान्येव। वामदेवादिमुक्तिशास्त्रं तु अर्थवादो देवताधिकरणन्यायेन प्रत्येकमुक्तिसाधकं वाच्यम्। न च तत्सम्भवति, मानान्तराविरोध एव तन्न्यायप्रवृत्तेः। प्रकृते च लाघवतर्कसनाथेभ्यः 'पुरत्रये क्रीडति यस्तु जीवः' इत्यादिश्रुत्यनुमानादिभ्यो जीवैकत्वसिद्धेः। किंचेत्याद्यपि न युक्तं, 'यत्साक्षादपरोक्षात्' इति श्रुत्युक्तब्रह्मापरोक्षत्वस्य तृतीयप्रकारत्वात्तस्य जातित्वे जन्यापरोक्षत्वस्येन्द्रियादिजन्यता-

[1] पञ्चमेत्यादि.

वच्छेदकत्वे गौरवात्, अपरोक्षत्वजात्याश्रयमानसविषयत्वस्य सुखादावपि सत्त्वेन तस्य ब्रह्मण्येवोक्तश्रुत्योक्त्यसम्भवात् अनावृतचिद्रूपत्वेन ब्रह्मणि तत्तादात्म्येन विषये तद्विषयकत्वेन वृत्तौ चापरोक्षत्वव्यवहारसम्भवेन अपरोक्षत्वजातावेव मानाभावात्। न च वृत्तिगतोक्तरूपस्येन्द्रियादिजन्यतावच्छेदकत्वे गौरवमिति वाच्यम्; चाक्षुषत्वादिना जन्यतावश्यकत्वेन चाक्षुषरासनादिसाधारण्येन तदस्वीकाकारात्। स्वीकारे वेन्द्रियत्वापेक्षया लघुना संयोगत्वादिनेन्द्रियं प्रतिज्ञानत्वादिना जन्यत्वसम्भवात्। परोक्षस्थलेऽपीन्द्रियसंयोगाद्यभावेऽपि न वह्न्यादौ कस्याचित्संयोगवतः संयोगादिसम्भवादव्यभिचारात्। अपिचेत्याद्यपि न युक्तम्—

स्वच्छेऽन्तःकरणे सति प्रसृमरे नेत्रादिमार्गोद्गते
तत्तद्ग्राह्यचया[1]त्मना परिणते बिम्बीभवन्ती चितिः।
एकाऽप्यर्थमनोविशेषकवशात् द्वैतं[2] प्रपन्ना हर-
त्यज्ञानं, प्रकटीकरोति विषयान्, ज्ञातं मयेदं त्विति॥

इत्यादिना सिद्धान्ते वृत्तौ प्रतिबिम्बितचिदङ्गीकारेऽपि सा स्वाश्रितमेवाज्ञानं हरतीति नियमः, न तु स्वविषयावच्छिन्नाश्रितं स्वविषयाश्रितमेव वा हरतीति। आद्ये प्रतिबिम्बितचैतन्यविषयघटाद्यवच्छिन्नचिदाश्रितस्य पल्लवाज्ञानस्य नाशसम्भवेऽपि मूलाज्ञाननाशासम्भवात् ब्रह्मणः प्रतिबिम्बितचिद्विषयत्वेऽपि मूलाज्ञानस्य तदवच्छिन्नानाश्रितत्वात्। द्वितीये पल्लवाज्ञानस्याप्युक्तचिद्विषयघटाद्यनाश्रितत्वेन नाशासम्भवात्। किंच ब्रह्मज्ञानस्य जातिविशेषादिनैव अज्ञाननिवर्तकतावश्यकत्वस्योक्तत्वात् नाज्ञाननिवृत्त्यर्थं ब्रह्मणः फलव्याप्यत्वोक्तिः युक्ता। वृत्त्यन्येत्यादिरोदनं तु सुखादिस्थले वृत्तिकल्पनागौरवमोक्षस्वप्रकाशत्वावश्यकत्वादिना परिहृतमेव। न च

[1] ग्राह्यतया. [2] भेदं.

## जडत्वनिरुक्तिः

जडत्वमपि हेतुः। ननु किमिदं जडत्वं? अज्ञातृत्वं वा? अज्ञानत्वं वा? अनात्मत्वं वा? नाद्यः; त्वन्मते पक्षे निक्षिप्तस्यैव अहमर्थस्य ज्ञातृत्वात्तत्रासिद्धेः; शुद्धात्मनोऽज्ञातृत्वेन तत्र व्यभिचाराच्च। नापि द्वितीयः; वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेन केवलाया वृत्तेः केवलस्य चैत-

---

वृत्तिः सुखादौ मयाऽपि नोच्यते, वृत्तिसाक्षिणोः ज्ञानत्वादिजातिस्वीकारेण मन्मते 'घटं जानामि, सुखं जानामि' इत्याद्यनुगतव्यवहारसम्भवादिति वाच्यम्; अनुगतव्यवहारस्यैकव्यक्तिविषयकत्वासम्भवे सत्येवैकजातियविषयकत्वस्वीकारात्। मन्मते असत्त्वापादकाज्ञानविरोधिचैतन्यव्यक्तेरेव जानामीति व्यवहारप्रयोजकत्वात्। न चाज्ञानतद्विरोधित्वयोः कल्पने गौरवमिति वाच्यम्; ज्ञानप्रागभावस्थले अज्ञानस्वीकारात्, मूलाज्ञानस्यैव घटाद्यवच्छिन्नचिदावरकत्वपक्षे अज्ञानस्य वृत्त्या नाशास्वीकारेणागौरवात्। वृत्त्यभावविशिष्टं यदज्ञानं तदभावविशिष्टचिद्व्यक्तेरेव जानामीति व्यवहारप्रयोजकत्वात्। दृष्टिसृष्टिपक्षे केवलचिद्व्यक्तेरेव तत्त्वसम्भवात् वृत्त्यकल्पने नातिलाघवात्। विस्तरः प्रतिकर्मव्यवस्थायां भविष्यति॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रतां गतैः।
दुरन्तध्वान्तखण्डानां खण्डिता दृश्यताद्युतिः॥

इति दृश्यत्वनिरुक्तिः.

---

वृत्त्युपरक्तेति। सुखादावपि सुखादिरूपवृत्त्युपरक्तचैतन्यमेव ज्ञानमिति भावः। केवलाया इति। जडत्वादित्यादिः। केवलस्येति। वृत्त्यभावकाले घटं जानामीत्यापत्तेरित्यादिः। मोक्षे

न्यस्य चाज्ञानत्वेन वृत्तावसिद्धिपरिहारेऽपि चैतन्ये व्यभिचारतादवस्थ्यात्। नापि तृतीयः; आत्मत्वस्यैव निरूपयितुमशक्यत्वात्। तद्धि न जातिविशेषः; त्वया आत्मन एकत्वाभ्युपगमात्। विशिष्टात्मनां भेदेऽपि तेषां पक्षकुक्षिनिक्षिप्तत्वात्। नाप्यानन्दरूपत्वम्, वैषयिकानन्दे तद्व्यतिरेकस्य हेतोरसिद्धेः। तस्याप्यात्मत्वे अज्ञान[1]पक्षोक्तदोषः प्रसञ्जनीय इति चेत्, मैवम्; द्वितीयतृतीयपक्षयोः दोषाभावात्।

---

तु न ज्ञानपदवाच्यं किन्तु लक्ष्यमिति भावः। अज्ञानपक्षोक्तेति। विषयसेवाजन्यवृत्त्युपरक्तचैतन्यस्यैवानन्दत्वेन केवलचैतन्ये व्यभिचार इति भावः। केवलवृत्तिचितोरिव वृत्त्युपरक्तचितोऽपि न ज्ञानत्वम्। पटाकारवृत्तिकाले घटं जानामित्यापत्त्या तदाकारवृत्त्युपरक्तचित एव तज्ज्ञानत्वात्, सुखाद्याकारवृत्त्यभावेन सुखादि जानामित्यस्य असम्भवात्। किन्तु तदीयस्यासत्त्वापादकाज्ञानस्य विरोधिचितः तज्ज्ञानत्वं तदीयत्वं च स्वावच्छिन्नचिद्विषयताविषयितान्यतररूपः तत्सम्बन्धः ब्रह्मणः स्वावच्छिन्नचिद्विषयितायाः घटादेश्च स्वविषयितायाः अज्ञाने अप्रसिद्ध्या अन्यतरनिवेशः सुखादेश्चातीततादिदशायां स्वावच्छिन्नचिद्विषयताकाज्ञानं प्रसिद्धम्। अन्यथा तत्र भ्रमादिकार्यानुपपत्तेः अभानापादकाज्ञानसत्त्वेपि परोक्षवृत्तिकाले घटं जानामित्यनुभवादसत्त्वापादकेति। ज्ञाधातोः शक्यता तु लाघवाच्चिद्व्यक्तावेव निरवच्छिन्ना शक्यनानात्व एवानुगमार्थं[2] अवच्छेदकस्वीकारात्। घटं जानातीत्यादिवाक्यजन्यबोधे उक्ताज्ञानविरोधित्वसम्बन्धेन घटादेर्ज्ञाधात्वर्थे अन्वये निर्धर्मितावच्छेदकशाब्दबोधः प्रकृते स्यादेव[3]। घटत्वाद्यवच्छिन्नविशेष्यताकस्य बाधप्रतिबध्यस्य योग्यताज्ञानस्य घटः

---

[1] ज्ञान. [2] निरवच्छिन्नाशक्यता न त्ववच्छिन्नानुगत्यर्थं. इति. पा. [3] स्यात्। एवं.

**तथाहि—अज्ञानत्वं जडत्वमिति पक्षे नात्मनि व्यभिचारः अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात्। न चाभावे सप्रतियोगित्ववदिच्छाज्ञानादिष्वपि सविषयकत्वस्य स्वाभाविकत्वादिच्छायामिव ज्ञानेऽपि तस्य समानसत्ताकत्वमिति वाच्यम्; ज्ञानस्य हि सविषयत्वं विषयसम्बन्धः। स च न तात्त्विकः, किन्त्वाध्यासिकः, वक्ष्यमाणरीत्या तात्त्विकसम्बन्धस्य निरूपयितुमशक्यत्वात्। अतो न तस्य स्वाभाविकत्वम्। न हि शुक्तौ**

---

स्ववृत्त्यभावप्रतियोग्यसत्त्वापादकाज्ञानविषयतावच्छेदकत्वसम्बन्धेन चिद्विशिष्ट इत्याकारकस्य हेतुत्वसम्भवात् चिदाश्रयत्वे आख्यातार्थे वा व्युत्पत्तिवैचित्र्यादन्वयः[1]। अथवा शक्तिज्ञानस्य चिद्विषयकशाब्दत्वेनैव कार्यता। घटं जानामीत्यादिसमभिव्याहारधीकार्यता तु घटाद्यज्ञानविरोधिचित्त्वावच्छिन्नप्रकारताकशाब्दत्वेनैवेति न निर्धर्मितावच्छेदकशाब्दधीः। आकाशादिपदवन्निरवच्छिन्नशक्यतामते तादृशरीतेरावश्यकत्वात्। न चैवं 'सत्यं ज्ञानम्' इत्यादौ लक्षणया शुद्धचिद्बोधसिद्धान्तहानिरिति वाच्यम्; विशिष्टचिद्बोधस्यौत्सर्गिकत्वेन शुद्धचिद्बोधमात्रे शक्तिज्ञानस्य प्रतिबन्धकत्वकल्पनात्, विशिष्टरूपेण बोधाभावमात्रे लक्षणेति भाक्तव्यवहाराच्च। अन्यथा विशिष्टशक्तिपक्षेऽपि शुद्धे शक्त्यनपायात्। न चैवमपि ज्ञानानन्दादिपदानां पर्यायतापत्तिरिति वाच्यम्; आनन्दादिपदानां तुल्ययुक्त्या शुद्धचिच्छक्तत्वेऽपि चन्दनानन्द इत्यादौ चन्दनसेवाजन्यवृत्तिविशेषस्य सम्बन्धत्वादिना भाननियमेन तावता विशेषेण पर्यायतावारणसम्भवादित्याशयेनाह—**अर्थोपलक्षितप्रकाशस्येति**। शुद्धचित इत्यर्थः। **ज्ञानत्वेन**—ज्ञानपदार्थे-

---

[1] वैचित्र्यादयः.

**रूप्यं स्वाभाविकम् । एवंच ज्ञानोपाधिकस्यैव सविषयत्वस्य इच्छादिष्वभ्युपगमात् न तरां तत्र तस्य स्वाभावि-**

त्वेन । यद्वा उक्तविरोधित्वोपहितचित्त्वेनैव ज्ञाधातुशक्यता । घटज्ञानविरोधित्वपटाज्ञानविरोधित्वादिरूपेण नानार्थकत्वं तु इष्टमेव । घटज्ञानमित्यादौ घटादिपदं तात्पर्यग्राहकम् । यत्किञ्चिदज्ञानविरोधिचित्त्वेनैव वा तथा । असत्त्वापादकाज्ञानास्वीकारमते अनावृततत्तादात्म्यं तद्गोचरवृत्तिश्चेत्यन्यतरोपहितचित्त्वेनैव तथा । नानार्थत्वास्वीकारे तदिति तद्गोचरेति च न देयम् । तादात्म्ये तदीयत्वं वृत्तौ तद्विषयकत्वं-च शाब्दबोधे संसर्गतया भासते । एवं नित्यानन्दादिपदानामपि बोध्यम् । त्रिकालापरिच्छिन्नचित्त्वेन नित्यपदस्य चन्दनादिसेवाजन्यवृत्तिविशेषाद्यवच्छिन्नचित्त्वेनानन्दपदस्याबाध्यत्वाद्युपहितचित्त्वेन सत्यादिपदस्य शक्यता । एवंच ज्ञानत्वेनेत्यस्य प्रकृते हेतूकृतभेदप्रतियोगित्वेनेत्यर्थः । ज्ञाधातुवाच्यत्वोपलक्षितव्यक्तिभेदो हेतुरिति भावः । न च तद्व्यक्तित्वेन तद्व्यक्तेः भेदो हेतुः, तद्व्यक्तित्वं च तद्व्यक्तिरेव; तथा च तस्याः सिद्धान्ते स्वकीये विशिष्टरूपे कल्पिततादात्म्यसत्त्वेऽपि शुद्धरूपे तदभावेन तादृशभेदसम्भवात् व्यभिचारः, प्रपञ्चे तद्व्यक्तितादात्म्यस्य तदा[1] सत्त्वेनासिद्धिश्चेति[2] वाच्यम्; परमते शुद्धेपि तद्व्यक्तेरैक्यरूपसम्बन्धस्य स्वस्मिन् सत्त्वेन परार्थानुमाने ऐक्यरूपसम्बन्धेन तद्व्यक्तिविशिष्टप्रतियोगिकभेदस्य हेतुत्वसम्भवात्, विशेष्यताविशेषानवच्छिन्नप्रतियोगिताकभेदत्वेन हेतुत्वस्याचार्यैरेव वक्ष्यमाणत्वाच्च । सत्यत्वादिरूपे स्वधर्मतानिर्वाहकभेदस्य शुद्धब्रह्मणि स्वीकारमतेऽपि तस्याप्रत्यक्षत्वेन तत्प्रतियोगितायाः निरवच्छिन्नत्वात्, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्य तद्व्यक्ता[3]वस्वीकारेणादोषाच्च तद्व्यक्तिवृत्तिभेदभिन्नभेदो वा हेतुः । **ज्ञानोपाधिकस्य** सविषयकज्ञानतादात्म्यरू-

---

[1] सदा. [2] नासिद्धिर्वेति. [3] तद्वृत्ता.

कत्वम् । न चैवं ज्ञानवत् विषयसम्बन्धं विनापि कदाचिदिच्छायास्सत्त्वापत्तिरिति वाच्यम्, सविषयत्वप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वस्य तत्र प्रयोजकत्वात् इच्छायाश्च तत्समानसत्ताकत्वात् । न च त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकारात् आनन्दप्रकाशे तदपुमर्थत्वं स्यादिति वाच्यम्; तदा ह्यानन्द एव प्रकाशो न त्वानन्दस्य प्रकाशत्वम् । अर्थोपलक्षितप्रकाशत्वं वा तदास्त्येवेति न ज्ञानत्वहानिरित्युक्तम् । ननु तथापि ज्ञातुरभावात् तदा तन्न ज्ञानम् । न हि भोक्तृहीना भुजिक्रिया भवति । न चानादित्वेन क्रियारूपत्वाभावात् अनपेक्षत्वमिति वाच्यम्; अनादेः प्रागभावस्य प्रतियोगिनि, जातेर्व्यक्तौ, जीवब्रह्मविभागस्य धर्मिप्रतियोगिनोरज्ञानस्य चाश्रयविषययोः, ब्रह्मसत्तायाश्च कर्तर्यपेक्षादर्शनात् । अन्यथा 'अस्ति ब्रह्म' इत्यादौ कर्तरि लकारो न स्यात् । एवंचातीतादिज्ञानस्य ईश्वरज्ञानस्य च

---

पस्य ज्ञाने उक्तविरोधित्वादिविषयस्य[1] सम्बन्धः । इच्छादिषु तु स्वनिष्ठमुक्ताविरोधित्वादिमज्ञान[2]तादात्म्यमिति भावः । अथवा **ज्ञानोपाधिकस्येति** । ज्ञानोपाध्यविद्याप्रयुक्तस्येत्यर्थः । **न तरामिति** । तात्त्विकेऽपि ज्ञानस्वरूपे यदि तन्न तात्त्विकं तर्हि अतात्त्विकेच्छादौ तत्तथा न तरामित्यर्थः । एवंच मनोवृत्तिमात्रस्यातिरिक्तविषयतास्वीकारेपि न क्षतिः । नन्वानन्दसम्बन्धिप्रकाशस्य तदा विरहे आनन्दाप्रकाशः स्यात् दुःखादिसम्बन्धाभावकाले साक्षिणि दुःखाद्यप्रकाशवत्तत्राह— **प्रकाशत्वमित्यादि** । प्रकाशत्वं अप्रकाशरूपाज्ञानसामान्यविरोधिस्वरूपम् । अर्थोपलक्षितप्रकाशत्वं आनन्दावारकाप्रकाशविरोधिस्वरू-

---

[1] त्वादिर्विषयस्य. [2] विरोधित्वादिदमज्ञान.

उत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृ-ज्ञेयनिरूप्यत्वं स्वभावः। अन्यथा 'इदमहं जानामि' इत्यनुभवो न स्यात्। 'ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्' इति विवरणविरोधश्च स्यादिति चेन्न; जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित्तदसम्बन्धवदुपपत्तेः सम्बन्धप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वात्। अतएव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वं च न स्वाभाविकम्। तथाहि— सज्ञेयत्वं तावत् ज्ञेयजन्यत्वं वा ज्ञेयव्याप्यत्वं वा। नाद्यः, परोक्षज्ञाने ईश्वरज्ञाने चाभावात्। नापि द्वितीयः; 'यदा ज्ञानं तदाऽर्थः' इति कालिकव्याप्तौ पूर्ववत् व्यभिचारात्। दैशिकव्याप्तिस्तु दूरनिरस्तैव। न च 'यदा अपरोक्षज्ञानं तदाऽर्थः' इति कालिकव्याप्तौ नास्ति व्यभिचारः, आत्मा च 'यत्साक्षादपरोक्षाद्ब्रह्म'. इति श्रुतेरपरोक्षज्ञानरूप इति सोप्यर्थव्याप्त इति वाच्यम्; ईश्वरज्ञाने योगिज्ञाने च व्यभिचारात्। 'यदैन्द्रियकं ज्ञानं तदाऽर्थः' इति तु व्याप्तिस्सर्वसम्मता। न चात्मरूपे ज्ञाने ऐन्द्रियकत्वमस्तीति न तया विरोधः।

---

पम्। अखण्डाकारवृत्त्युपलक्षितचिद्रूपस्यैवोक्तविरोधित्वरूपत्वादिति भावः। ज्ञानत्वहानिः—आनन्दाप्रकाशापत्तिः। उक्तमिति। सविषयकत्वस्य अतात्त्विकतोक्त्या अखण्डाकारवृत्त्युपलक्षितचिद्रूपस्याज्ञानतत्प्रयुक्तसामान्यविरोधित्वमुक्तमित्यर्थः। सम्बन्धप्रयोजकोपाधीति। ज्ञातृज्ञेयसम्बन्धप्रयोजकविद्योपाधीत्यर्थः। यदा ज्ञानं तदाऽर्थ इति। यदा यस्यार्थस्य ज्ञानं तदा सोर्थ इत्यर्थः। तेन वक्ष्यमाणव्यभिचारसङ्गतिः। दूरेति। अन्तःकरणादौ ज्ञानवत्यपि साक्षात्सम्बन्धेन तद्विषयघटाद्यसत्त्वात्परम्परासम्बन्धेन व्यापकत्वस्य यद्यत् ज्ञानं तत्र तादात्म्येनार्थ इति व्याप्तेश्चास्माकमिष्टत्वाच्चेति भावः। सर्वसम्मतेति। यदा यदर्थेन्द्रि-

**ननु 'यदा अपरोक्षं ज्ञानं तदाऽर्थः' इति व्याप्त्यनभ्युपगमे 'इदं रजतम्' इत्यपरोक्षज्ञानान्यथानुपपत्त्या अनिर्वचनीयतासिद्धिर्न स्यात्। अर्थं विनाप्यपरोक्षत्वोपपत्तेरिति चेन्न; 'इदं रजतमहं जानामि' इति अनुसन्धीयमानं यत् ज्ञानविषयत्वं तस्य आश्रयान्तरानुपपत्त्या अनिर्वचनीयरजतासिद्धेर्वक्ष्यमाणत्वात्। अतएव परोक्षभ्रमेऽपि अनिर्वचनीयार्थासिद्धिः। अन्यापरोक्षत्वेन वा अर्थव्याप्यता, आर्षज्ञानस्यापरोक्षत्वानभ्युपगमात्। तथाच नानिर्वचनीयरजतसिद्ध्यनुपपत्तिः। एवं सज्ज्ञातृकत्वमपि किं ज्ञातृजन्यत्वं? ज्ञातृव्याप्यत्वं? ज्ञातृसमवेतत्वं वा? आद्ये ईश्वरज्ञाने व्यभिचारः। ज्ञाननित्यत्वस्य साधयिष्यमाणत्वाच्च। द्वितीयेऽपि अप्रयोजकता। न तृतीयः; ज्ञातृजन्यत्ववत् ज्ञातृसमवेतस्यापि सम्भवात्, ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात्। कदाचित् ज्ञातृज्ञेयसम्बन्धेनैव अनुभवस्य विवरणवाक्यस्य च**

---

ययोः लौकिकसन्निकर्षजन्यज्ञानं तदा तदर्थ इति सर्वसम्मतेत्यर्थः। **वक्ष्यमाणत्वादिति**—"देशान्तरीयस्य साक्ष्यसम्बन्धेनापरोक्षतानुपपत्तेरपरोक्षज्ञानमादाय जानामीति न स्यात्। कालान्तरे तस्य साक्षिसम्बन्धेऽपि वर्तमानकालावच्छेदेन अपरोक्षानुपपत्तेः। देशान्तरीये सन्निकर्षाभावेन प्रत्यक्षासम्भवात्, अलौकिकसन्निकर्षनिरासात् प्रतीतिमात्रे यादृशं भासते तादृशमवश्यं वाच्यम्; प्रतीतेः स्वविषयशूरत्वात्। अन्यथा घटादावपि रूपादिवैशिष्ट्यं व्यावहारिकं न स्यात्, पश्चात् बाधस्य तत्रापि सत्त्वात्। इदानीं बाधात्परं शुक्त्यादौ रजतादिवैशिष्ट्यं प्रातीतिकम्। भ्रमस्थले दोषादिकार्यता रजतत्वादिना; न तु रजतज्ञानत्वादिना, गौरवात्" इत्यादियुक्तेः वक्ष्यमाणत्वादित्यर्थः। **आर्षज्ञानस्येति**। इन्द्रियसन्निकर्षादिरूपक्लृप्तकारणबाधात् तत्प्रत्यक्षादिभिन्नं,

उपपत्तेः। 'अस्ति ब्रह्म' इति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह, नित्यत्वेन तदसम्भवात्। किन्तु साधुत्वार्थ इति द्रष्टव्यम्। ननु प्रमाभ्रमभिन्नं न ज्ञानम्, न चात्मस्वरूपं ज्ञानं प्रमा, तद्विषयस्याविद्यादेः तात्त्विकत्वापातात्। न च अप्रमा, दोषजन्यत्वापातादिति चेन्न; तार्किकसिद्धेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्च स्वभावतः उभयवैलक्षण्येनाप्युपपत्तेः। तत्रापि ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य चापत्तेः। निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य, तदभाववति तत्प्रकारकत्वस्य च अनुपपत्तेः। जन्यसविकल्पकत्वेन भ्रमप्रमान्यतरत्वानियमे च अस्माकं क्षत्यभावात्। विलक्षणवृत्तिद्वयोपरागेण च स्वभावतो भ्रमप्रमाविलक्षणस्याप्यत्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेः। न च ज्ञानपदवाच्यभिन्नत्वविवक्षायां उपाधेरपि

---

पूर्वं तु परमतेन तत्प्रत्यक्षत्वमुक्तमिति भावः। **साधुत्वेति**। मणिकारादिमते जानातीत्यादाविव कर्तृत्वानभिधानम्। वर्तमानकालभानं तु अखण्डार्थतात्पर्याभावे स्वीक्रियत इति भावः। **विलक्षणवृत्तीति**। प्रमाभ्रमरूपवृत्तीत्यर्थः। सुखाद्यवच्छिन्नचैतन्यस्यापि घटाद्याकारवृत्त्या तथात्वम्। सुखाद्यंशे च प्रमाभ्रमाविलक्षणत्वमिष्टं, अज्ञाताविषयकत्वात् स्मृतिवत्। आगन्तुकदोषाजन्यत्वादीश्वरज्ञानादिवदिति भावः। अथवा वृत्तेरेव मुख्यप्रमात्वादि, चैतन्ये तूपचारात्तद्व्यवहार इत्याह—**विलक्षणवृत्तिद्वयोपरागेणेति**। बाधकवृत्तिघटितं यत् बाधितविषयकत्वं तदन्यविषयकत्वरूपं द्वयं तदुपरागेणेत्यर्थः। तथाचाबाधितबाधितविषयकत्वाभ्यां चैतन्ये प्रमात्वभ्रमत्वोपचार इति भावः। वस्तुतस्तु वृत्ताविव व्यावहारिकप्रमात्त्वस्य घटाद्यवच्छिन्नचैतन्ये स्वीकारेऽपि न क्षतिः, तेन रूपेण गुणजन्यत्वस्य सत्त्वात्। अविद्यावच्छिन्ना

**ज्ञानपदवाच्यत्वात्तत्रासिद्धिः, ज्ञानपदलक्ष्यभिन्नत्वविवक्षायां तु घटादेरपि ज्ञानपदलक्ष्यत्वात् तत्राप्यसिद्धिरिति वाच्यम्; ज्ञानपदजन्यप्रतीतिविशेष्याभिन्नत्वविवक्षायामुक्तदोषाभावात् । एवमानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यम्; वैषयिकानन्दस्यापि ब्रह्मरूपत्वात्, तदुपाधिमात्रस्यैवोत्पत्तिविनाशप्रतियोगित्वात् । न च ज्ञानाभिन्नत्वस्य आनन्दभिन्नत्वस्य च काल्पनिकस्य ब्रह्मणि सत्त्वात् तत्र व्यभिचार इति वाच्यम्; धर्मिसमसत्ताकतद्भेदस्य हेतुत्वात् । अनौपाधिकत्वेन वा भेदो विशे-**

---

चित्तु न प्रमा, अज्ञाता[1]गोचरत्वात् । [2]जीवेशभेदादेरनादित्वेऽपि तदवच्छिन्ना चित् आवरणभञ्जकवृत्तिविशिष्टतया गुणजन्यैव । शुक्तिरूप्याद्यवच्छिन्नरूपेण तु चित् आगन्तुकदोषजन्यैव । शुद्धरूपेण तु सा प्रमा भ्रमो वा नेति न कोपि दोषः । **ज्ञानपदवाच्येति** । शक्त्या ज्ञाधातुजन्यप्रतीतिविषयेत्यर्थः । तेन शुद्धवाच्यतापक्षे उपाधेरवाच्यत्वेऽपि उपाधेरित्यादेः नासङ्गतिः । **विशेष्याभिन्नत्वस्य** शुद्धब्रह्मनिष्ठतद्धीविशेष्यताव्यक्त्यवच्छिन्नप्रतियोगिताकभेदस्य । तेन घटादेरपि तादृशविशेष्यत्वेऽपि नासिद्धिः, गुरोरनवच्छेदकत्वेऽपि न वा क्षतिः । **तदुपाधीति** । विषयसेवाजन्यवृत्तिविशेषेत्यर्थः । नन्वव्याप्यवृत्तिविशेष्यत्ववद्भेदस्य अव्याप्यवृत्तित्वपक्षे ब्रह्मणि व्यभिचारः । न च ब्रह्मण आवृतत्वेन तत्र भेदस्य प्रत्यक्षतया तत्प्रतियोगिता अवच्छिन्नेति वाच्यम्; जीवन्मुक्तौ तत्प्रत्यक्षतासम्भवादिति शङ्कते—**न चेति** । **ज्ञानभिन्नत्वस्य**—ज्ञानपदजन्यतद्धीविशेष्यभिन्नत्वस्य । **आनन्दाभिन्नत्वस्य**—आनन्दपदजन्यतद्धीविशेष्यभिन्नत्वस्य । **धर्मिसमसत्ताकेति** । शुद्धब्रह्मवृत्तिभिन्नेत्यर्थः । विशेषणतया शुद्धब्रह्मवृत्ति यत् तदन्यत्वेन विशेषणतया हेतुत्वसम्भवात् विशेष्यांशवैयर्थ्यादाह—**अनौपाकिकत्वेनेति** ।

---

[1] अज्ञाना. [2] जीवेशभेदा................गुणजन्यैव. नास्त्येतत्कोशान्तरे.

षणीयः। तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचारपरिहारः पूर्ववत्। एवमस्वप्रकाशकत्वं वा जडत्वम्। तच्च पूर्वमेवोपपादितमिति शिवम्॥

इति जडत्वहेतूपपत्तिः.

---

उपाधिं स्वप्रतियोगितावच्छेदकं अर्हति तत्समानाधिकरणं भवतीत्यौपाधिकम्। तदन्यत्वेन स्वप्रतियोगिवृत्तिभिन्नत्वेनेति यावत्। घटादिभेदमादाय ब्रह्मणि व्यभिचारात् शुद्धब्रह्मप्रतियोगिकभेदेति विशेष्यं वाच्यमिति भावः। शुद्धब्रह्मणो ज्ञानपदजन्यतद्धीविशेष्यत्वेन आनन्दपदजन्यतद्धीविशेष्यत्वेन च निवेशाद्धेत्वोर्भेदः। तादृशविशेष्यताव्यक्त्यवच्छिन्नप्रतियोगिताकभेदत्वेन वा निवेशः। तेन स्वरूपतो ब्रह्मव्यक्तिनिवेशसम्भवेन तादृशविशेष्यताघटितस्य न व्यर्थविशेषणत्वशङ्केति ध्येयम्। यत्तु—"यदि ज्ञानस्य विषयेणाध्यासिकः सम्बन्धस्तर्हि चरमवृत्तावात्मा विषयो न स्यात्। न च वृत्तिप्रतिबिम्बितचैतन्यरूपस्य ज्ञानस्य विषयेणाध्यासिकः सम्बन्ध इति वाच्यम्; चरमवृत्तावपि अज्ञाननिवर्तकत्वाय चित्प्रतिबिम्बावश्यकत्वात्। तादृशप्रतिबिम्बितचितः आध्यासिकसम्बन्धरूपविषयत्वस्यात्मन्यङ्गीकारे फलव्याप्यत्वहेतोः तत्र व्यभिचारात्। परोक्षवृत्तौ चातीन्द्रियं विषयो न स्यात्, तत्र तस्यानध्यासात्। तस्मात् ज्ञाने विषयसम्बन्धः स्वाभाविकः। एवमिच्छायामपि उपाध्यनुल्लेखेन घटमिच्छामीत्यनुभवात् जातेर्व्यक्तिनिरूप्यत्वेऽपीत्याद्यपि न युक्तम्; व्यक्तिं विना प्रलये जातिसत्त्वेऽपि व्यक्त्युपरक्तधीविषयत्वं जातेरन्यदस्त्येवेति जात्यादेः व्यक्त्याद्यनुपरक्तबुद्ध्यविषयत्वस्य व्यक्त्याद्यनुपरक्तप्रत्यक्षाविषयत्वस्य वा नियमवत् ज्ञेयाद्यनुपरक्तबुद्ध्यविषयत्वस्य ज्ञेयाद्यनुपरक्तप्रत्यक्षाविषयत्वस्य वा ज्ञाने नियमसम्भवात्। किंचैवमैक्यं जीवस्य

ब्रह्मणि न स्यात् । ऐक्ये जीवस्य हि जन्यत्वं व्याप्यत्वं वा सबन्धः । नाद्यः ; तस्य ब्रह्मरूपत्वेनाजन्यत्वात् । नान्त्यः ; यदा ऐक्यं तदा जीव इत्यत्र सर्वमुक्तौ व्यभिचारात् । यत्रैक्यं तत्र जीव इति दैशिकव्याप्तौ जीवे व्यभिचारात् । 'अस्ति ब्रह्म' इत्यत्र लकारो न पदसाधुत्वार्थः ; योगक्षेमसाधारणीं सत्ताक्रियासिद्धिं प्रति स्वातन्त्र्यरूपकर्तृत्वस्य तत्रापि संभवेन अर्थसाधुत्वसम्भवात् । तार्किकेश्वरज्ञानवदित्याद्यपि न युक्तम् ; तार्किकमते हि प्रमात्वं न गुणजन्यतावच्छेदकं, येन ईश्वरज्ञाने न स्यात् । किन्तु तत्तत्प्रमात्वम् । उक्तं हि मणिकारैः—'प्रमामात्रे नानुगतो गुणः' इति । तथाच दोषाजन्यत्वादीश्वर[1]ज्ञानं प्रमैवेति नोभयबहिर्भावः । अतएव नित्यसाक्षात्कारप्रमाया आश्रयत्वेन ईश्वरः प्रत्यक्षप्रमाणमित्युक्तमुदयनाचार्यैः । तद्वति तत्प्रकारकज्ञानत्वं न मुख्यप्रामाण्यं, स्मृतौ सत्त्वात् निर्विकल्पके चासत्त्वात् । किन्तु विशेष्यावृत्त्यप्रकार[2]कानुभवत्वमित्युक्तमन्यैस्तार्किकैः ; अतो निर्विकल्पकमपि प्रमैवेति चैतन्यस्य ज्ञानत्वे प्रमाभ्रमान्यतरत्वमावश्यकम्" इति, तत्तुच्छम् ; ज्ञानस्याध्यासिकसम्बन्धनियमोक्तौ वृत्तौ व्यभिचारोक्त्यसङ्गतेः । वृत्तेरज्ञानत्त्वात्, वृत्तेरात्मनाऽऽध्यासिकसम्बन्धस्यापि सत्त्वात् । अहंकारोपहितात्मनि तदध्यासे केवलात्मन्यप्यध्यासात् । अन्यथा जन्यमात्रोपादानत्वभङ्गापत्तेः । आत्मनि च फलव्याप्यत्वहेतुर्यथा नास्ति तथोक्तमस्माभिः । परोक्षत्याद्यपि न युक्तम् ; वृत्तेरज्ञानत्वात् परोक्षवृत्तिस्थले साक्षिणि वह्न्याद्यज्ञानविरोधित्वादिरूपोक्तसम्बन्धस्य अतात्त्विकत्वात् । अतात्त्विकस्यैवाध्यासिकशब्देनोक्तत्वात् । कल्पिततादात्म्यस्य आध्यासिकशब्दार्थत्वे तादात्म्यरूपत्वे निरूपयितुमशक्यत्वादिति हेत्वनुपपत्तेः । घटमिच्छामित्यत्र च प्रकारतया ज्ञानरूपोपाधि-

---

[1] त्वादिदं. [2] विशेष्यावृत्तिप्रकार.

सम्बन्धस्यानुल्लेखेऽपि सम्बन्ध[1]तया तदुल्लेखानपायात्। अन्यथा सम्बन्धान्तरकल्पने गौरवात्। अतिरिक्तविषयतारूपसम्बन्धान्तरकल्पनेऽपि तस्याविद्यकत्वात् सविषयकत्वमात्रस्य तात्त्विकत्वाभावे प्रकृतग्रन्थतात्पर्यसम्भवात्। व्यक्तिं विनेत्याद्यपि न युक्तम्; व्यक्त्यविषयकजात्यनुमित्यादिसम्भवात्, ध्वंसो घटत्वाद्यप्रतियोगिक इत्यनुमित्यादेः सर्वसम्मतत्वात्। आद्यानियमे व्यभिचारात्। घटाद्यविषयकघटत्वादिभ्रमदोषविशेषजन्यतया लौकिकप्रत्यक्षे द्वितीयनियमे व्यभिचारात्। कालिकसम्बन्धेन पटे घटत्वप्रत्यक्षं भवत्वितीच्छाजन्ये वह्न्यनुमित्यादिसामग्रीकालीने घटाविषयके घटत्वप्रत्यक्षे व्यभिचाराच्च। तत्रेच्छानुरोधेन घटत्वादिभानेऽपि भिन्नविषयकानुमितिसामग्र्या प्रतिबन्धेन[2] घटाभानात् घटत्वे सन्निकर्षसत्त्वे तस्य लौकिकप्रत्यक्षत्वसम्भवात् समवायेन जातिप्रत्यक्षप्रमाया व्यक्तिविषयकत्वानियमे च तदापादनासंभवात्कालिकेति ज्ञानविषयोभयवैशिष्ट्यावगाहिज्ञानस्य विषयविषयकत्वनियमस्य युक्तत्वात्। मन्मते ज्ञानस्य स्वप्रकाशत्वेन विषयाविषयकप्रत्यक्षाविषयत्वस्य तत्रेष्टत्वात्। यदा यस्य प्रत्यक्षं तदा स इति नियमे स्वोत्पत्तिक्षणतद्वितीयक्षणविनाशिघटादिप्रत्यक्षे त्वन्मतेऽपि व्यभिचारात्। यदैन्द्रियकं ज्ञानं तदाऽर्थ इत्याचार्योक्तिस्तु स्वाव्यवहितपूर्वत्वसम्बन्धेन व्याप्यत्वाभिप्रायेण विषयस्य कार्यसहभावेन प्रत्यक्षहेतुत्वमाश्रित्य स्वोत्पत्तिक्षणत्वसम्बन्धेन व्याप्यताभिप्रायेण वा जन्यापरोक्षत्वेन वाऽर्थव्याप्यतेत्यप्याचार्यवाक्यं तथैव योज्यम्। तादात्म्येन व्याप्यता कालिकेन व्यापकतेति वा तत्र बोध्यम्। यदा ऐक्यं तदा जीव इति व्याप्तौ सर्वमुक्तौ व्यभिचारोक्तिस्तु नामूढस्य। सर्वमुक्तौ कालाद्यभावात् सर्वमुक्तिर्भविष्यतीत्यादिरूपेण कल्पितः काल इदानींतनः। यत्र ऐक्यं तत्र जीव इति दैशिकव्याप्तिमदृष्ट्वा[3]। यत्रैक्यमित्याद्युक्तिरपि मोहादेव। किंच नास्मत्सिद्धान्ते जीवेश्वरयोरैक्यं, येन

1 संबद्ध. 2 सामग्रीप्रतिबन्धेन. 3 व्याप्तिरप्यविदुषां.

जीवत्वरूपे ईश्वरत्वरूपे वा ऐक्ये जीवाभावाद्यभिचारः। नापि जीवब्रह्मणोरात्यन्तिकाभेदः, तस्य भेदे सत्यसम्भवात्। किन्तु तत्त्वोपलक्षितचिन्मात्रयोः। अस्तीत्यादिकमपि न युक्तम्; स्वस्वव्याप्येतरासु यावतीषु व्यक्तिषु सतीषु यदधिकरणक्षणाव्यवहितोत्तरक्षणे सत्वे तावतीषु सतीष्वेव तदनधिकरणक्षणाव्यवहितोत्तरक्षणे सत्त्वाभावरूपं क्षेमसाधारणजन्यत्वं हि मङ्गलादेर्विघ्नप्रागभावादाविव न ब्रह्मणः स्वसत्तायां ब्रह्मासम्बन्धिक्षणाप्रसिद्धेः, स्वस्मिन् स्वप्रयुक्तत्वरूपाखण्डधर्मस्यासम्भवाच्च। सत्तास्तीत्यादौ परैरपि तथा वाच्यत्वात्। तथाचास्ति ब्रह्मेत्यादावखण्डार्थत्वमव्याहतम्, सत्यं ज्ञानमित्यादिवत्। तार्किकमते हीत्यादिकमप्ययुक्तम्; मणिकारो हि तद्वति तत्प्रकारकानुभवत्वरूपे प्रमालक्षणे तत्प्रकारकत्वं तद्वैशिष्ट्यविषयकत्वं तद्ज्ञानजन्यत्वं वा, ईश्वरस्य तद्वैशिष्ट्यविषयकं ज्ञानं, न तु तत्प्रकारकं, निर्विकल्पकं च प्रमाभ्रमबहिर्भूतं, व्यवहारानङ्गत्वादिति वदन् ईश्वरधीनिर्विकल्पकयोरप्रमात्वं व्यक्तमुक्तवान्। यथा स्मृतौ तान्त्रिकाणां प्रमात्वाव्यवहारात् विशेष्यसंसृष्टविशेषणज्ञानादिरूपगुणजन्यत्वासंभवाच्च अनुभवत्वघटितं प्रमात्वं, तथा जन्यत्वाघटितस्येश्वरधीसाधारणत्वेन गुणजन्यतावच्छेदकत्वरूपपरतस्त्वविप्रतिपत्तिरूपव्यवहाराविषयत्वेन नित्यज्ञानस्य प्रमाणफलत्वाभावाच्च जन्यत्वघटितमेव तत्। अतएव स्वतोग्राह्यत्वविप्रतिपत्तिरूपव्यवहाराविषयकमनुभवत्वजन्यत्वघटितमपहाय[1] ज्ञानत्वघटितमुक्तव्यवहारविषयप्रमालक्षणान्तरमुक्तम्। एवं निर्विकल्पकस्य प्रवृत्त्यादिरूपव्यवहाराप्रयोजकत्वात् तद्व्यावृत्तं तदित्याशयेन प्रमात्वस्येश्वरज्ञाननिर्विकल्पकव्यावृत्तत्वे व्यवहारानङ्गत्वं हेतूकृतम्। न च प्रमामात्रे नानुगतो गुण इति पूर्वं मणावुक्तत्वात् सामान्यतः प्रमात्वं नैव जन्यतावच्छेदकमिति वाच्यम्; तथापि भूयोऽवयवेन्द्रियसन्निकर्षादिजन्यतावच्छेदकस्य ईश्वरप्रत्यक्षव्यावृत्तप्रत्यक्षादिप्रमात्वस्य आवश्य-

[1] अविहाय.

कत्वात् । किंच प्रमामात्र इत्यादि मणिवाक्यं प्रमात्वसामान्यस्य जन्यतावच्छेदकत्वाभिप्रायकमेव । तार्किकशिरोमण्यादिभिः तथैव व्याख्यातत्वात् । तथाहि—" यद्यपि प्रमासामान्ये अनुगतो गुणो नान्वयव्यतिरेकासिद्धः ; तथापि प्रमाविशेषे गुणविशेषाणामन्वयव्यतिरेकाभ्यां हेतुत्वे सिद्धे बाधकाभावात् प्रमासामान्येऽपि तेषां तत्सेत्स्यतीत्यभिप्रेत्य समाधत्ते—' प्रमामात्रे नानुगतो गुणः किन्तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं गुणत्वम् ' इति । तथाच प्रमात्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्त्वेन प्रमासामान्ये कारणत्त्वम् । एतेन दोषोऽपि व्याख्यातः । तत्प्रमासामान्ये ईश्वरीयं तद्विशिष्टज्ञानं हेतुः । तदभावः भ्रमसामान्ये, दोषोपि तदेव । वस्तुतो विशेषणसंसृष्टासंसृष्टविशेष्यज्ञाने गुणदोषौ, लौकिकसन्निकर्षवत् सामान्यलक्षणाऽपी निर्विकल्पकजननी विशेष्यसंसृष्टासंसृष्टविशेषणज्ञाने वा तौ, तेनाप्रसिद्धसाध्यकानुमितिस्वीकारेऽपि न क्षतिः" इत्यादि शिरोमणिनोक्तम् । यत्तु—" प्रमात्वसामान्यस्य जन्यतावच्छेदकत्वे [1] प्रत्यक्षादिप्रमात्वं न भूयोवयवसन्निकर्षादिजन्यतावच्छेदकं, प्रत्यक्षस्य प्रमासामान्यस्य च सामग्रीभ्यां तदवच्छिन्नस्यार्थसमाजसिद्धत्वात् । अतः प्रमामात्रे नानुगतो गुण इति" इति विद्यावागीशैर्व्याख्यातं, तदापाततो ग्रन्थलापनमात्रम् । प्रमात्वसामान्यस्य जन्यतावच्छेदकत्वेऽपि अर्थसमाजसिद्धत्वस्य दुर्वारत्वात् । उक्तं हि कुसुमाञ्जलिटीकायां तैरेव—" घटत्ववद्विशेष्यकत्वादि न कार्यतावच्छेदकं, अर्थसमाजसिद्धत्वात् । तद्विशेष्यकज्ञाने तज्ज्ञानसामग्री, तत्प्रकारकज्ञाने च तज्ज्ञानं, [2] विधेयताख्यतत्प्रकारताकज्ञाने च तदसंसर्गाग्रहादिर्हेतुः । तद्व्यक्तिप्रकारतानिरूपिततद्व्यक्तिविशेष्यताके हि संसर्गा[3]ग्रहसामान्यप्रत्यासत्तिरेव तथा । अन्यथा

[1] वच्छेदकत्वेन. [2] तदज्ञानं. [3] चासंसर्गा.

यावन्तो विशेष्यवृत्तिव्यतिरेकधर्माः तत्तदाश्रयविशेष्यकत्वे सति घटत्वप्रकारकत्वेन जन्यत्वापत्त्या अनन्तहेतुत्वापत्तेः। भवतु वा प्रमात्वमेव जन्यतावच्छेदकम्। तथापि शाब्दादिप्रमात्वं न तथा, शाब्दज्ञानप्रमासामान्यसामग्रीभ्यां तदवच्छिन्नस्यार्थसमाजसिद्धत्वात्'' इत्यादि। उत्पत्तिवादे अस्तु वेत्यादिमणौ मिश्रैरप्युक्तं—'सर्वकार्यप्रमासाधारणमीश्वरीयज्ञानमेव गुणः' इत्यादि। एवं 'यदि प्रमात्वा[1]समानाधिकरणधर्मनिरूपितकार्यत्वप्रतियोगिककारणजन्या न स्यात् अप्रमा स्यात्' इत्यादिमणौ ईश्वरज्ञानं तु न प्रमेत्युक्तम्। प्रमामात्रे नानुगतो गुण इत्यत्रोक्तम्। अस्मन्मते त्वनुगत एव स साधारणोऽस्तीति। उदयनाचार्यैस्तु—''ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात्'' इत्याशङ्क्य—

''मितिस्सम्यक्परि(च्छत्ति)ज्ञप्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते।
समीचीनो ह्यनुभवः सा प्रमेति व्यवस्थितम्॥

तथाच नित्यत्वेन[2] विशेषणमनर्थकम्। यद्येवं 'आप्त[3]प्रामाण्यात्' इति गौतमसूत्रविरोधः। तेन ईश्वरे प्रामाण्यमावेदितं न तु प्रमातृत्वमिति चेन्न; प्रमासमवायित्वेन प्रमातृत्वस्येव प्रमाया अयोगव्यवच्छेदेन प्रमाणत्वस्यापि सम्भवात्'' इत्यादिकं कुसुमाञ्जलिचतुर्थस्तबकान्ते उक्तम्। तत् प्रौढिमात्रम्; उक्तयुक्तेरनित्यत्व[4]विशेषणसार्थक्यात्, उक्तसूत्रे ईश्वरस्य वेदार्थप्रमावत्त्वेन तदुक्तवेदस्य प्रामाण्यं यदुक्तं तत्रानित्यत्वाविशेषितमेव प्रमात्वमुपयुज्यत इत्येतत्परत्वाच्च, सौत्रप्रमाशब्दस्य जन्यत्वघटितमुख्यार्थैकदेशेन अजन्यज्ञाने प्रवृत्तिसम्भवपरत्वाच्च। अत एव प्रमाया अयोगव्यवच्छिन्नत्वे सति कारणत्वरूपस्य मुख्यार्थस्य एकदेशेन प्रमायोगव्यवच्छेदेन सौत्रप्रमाणशब्दो भगवति वर्तते। न चैतावता लक्षणा,—

[1] प्रमाऽप्रमात्वा [2] अनित्यत्वेन. [3] आद्य. [4] रनित्यार्थ.

एवमस्वप्रकाशत्वं वा जडत्वम्। तच्च पूर्वमेवोपपादितमिति शिवम् ॥

इति जडत्वोपपत्तिः.

---

'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा'

इत्यत्र शक्यादित्यस्य शक्यतावच्छेदकघटकादित्यर्थकत्वात्। अतएव 'श्येनेन यजेत' इत्यादौ बलवदनिष्टाननुबन्धित्वसमानाधिकरणेष्टसाधनत्वशक्तस्य विधेः केवलेष्टसाधनत्वबोधने न लक्षणेत्यभिप्रायेण प्रमायोगव्यवच्छिन्नत्वमीश्वरस्योक्तम्। अन्यथा प्रमाया अकरणे घटादावपि प्रमायाः कालिकादिसम्बन्धरूपयोगाभावव्यवच्छेदसत्त्वेन प्रमाणशब्दमुख्यार्थत्वापत्तेः। अतएव 'करणव्यवहारस्तु अन्यत्र यद्यप्यन्यनिमित्तकः, तथापीहोक्तनिमित्तविवक्षयैव' इत्यग्रे उक्तं कुसुमाञ्जलौ। अन्यनिमित्तकः अयोगव्यवच्छेदेन जनकत्वनिमित्तक इति वर्धमानाः। यत्तु—"स्वाधिकरणक्षणध्वंसोत्पत्तिक्षणत्वव्यापकप्रमितिकत्वरूपः प्रमायोगव्यवच्छेदः सौत्रप्रमाणशब्दार्थः। स चेश्वरे प्रमाचरमकारणे चास्ति" इति विद्यावागीशैरुक्तं, तत्रायमेव यदि मुख्यार्थः तदा परमाण्वाद्यकारणेऽपि तत्त्वापत्तिः, ईश्वरप्रमामादाय तत्राप्युक्तार्थसत्त्वात्, उक्तप्रमित्यधिकरणत्वोक्तावपि जन्यमात्रस्येश्वरज्ञानमादाय तत्सत्त्वात्। जन्यप्रमानधिकरणकालोत्पन्ने चरमक्रियादौ प्रमाणपदमुख्यार्थत्वापत्तिः। यदि चायं गौणोर्थः, तदा प्रवृत्तिनिमित्तं तु यथोक्तमेवेत्युत्तरग्रन्थविरोधः। अथ प्रमोपधायकत्वघटितमुक्तरूपं मुख्यार्थः, उक्तग्रन्थस्य तु यथोक्तं प्रवृत्तिनिमित्तमेव तद्घटकत्वादित्यर्थः, तदाऽस्मदुक्तप्रकारे पर्यवसानम्। तस्मादीश्वरज्ञाननिर्विकल्पकव्यावृत्तं प्रमात्वमव्याहतम्। यच्चोक्तम्—'तद्वति तत्प्रकारकज्ञानत्वं न मुख्यप्रमात्वम्, किन्तु विशेष्यावृत्त्यप्रकारकानुभवत्वम्' इति, तत्तुच्छम्; तद्वतीत्यादेः मणिकारादिभिः

## परिच्छिन्नत्वविचारः

परिच्छिन्नत्वमपि हेतुः। तच्च देशतः कालतो वस्तुतश्चेति त्रिविधम्। तत्र देशतः परिच्छिन्नत्वं अत्यन्ताभावप्रतियोगित्वम्। कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम्। वस्तुतः परिच्छिन्नत्वमन्योन्याभावप्रतियोगित्वम्। ननु—"समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वं आत्मनि व्यभिचारि, तस्याप्याकाशादिवत् क्वाप्यसमवेतत्वात्। संयोगसम्बन्धेनात्यन्ताभावप्रतियोगित्वमाकाशादावसिद्धम्; तस्य यावन्मूर्तसंयो-

---

सिद्धान्ते उक्तत्वात् विशेष्यावृत्तीत्यादेः स्वतः परतो ग्राह्यताविप्रतिपत्त्यनास्पदत्वेन प्रवृत्त्यनुपयुक्तत्वात्। अनुभवत्वघटितस्य प्रमाव्यवहारमात्रोपयोगेऽपि[1] ज्ञानत्वघटिततद्वतीत्यादेरेव प्रवृत्त्युपयुक्तत्वेन मुख्यत्वसम्भवात्। तदुक्तं मणौ—प्रवृत्तिसंवादादिना प्रमाण्यं यथार्थत्वमेवानुमीयते न त्वनुभूतित्वे सति स्मृतौ व्यभिचारादिति प्रमापदमुख्यार्थत्वाच्च। उक्तं हि दीधितौ—'प्रमापदं हि धात्वर्थतावच्छेदकज्ञानत्वपुरस्कारेण यथार्थज्ञानमभिधत्ते। स्मृतिहेतोः प्रमाणान्तरत्वापत्तेः शास्त्रे प्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तमनुमन्यते' इति। मणौ निर्विकल्पकं च प्रमाबहिर्भूतं, व्यवहारानङ्गत्वादित्याद्युक्तेः दर्शितत्वाच्च। यच्चानन्दस्य ब्रह्मरूपत्वे तत्तारतम्यानुभवादिकमनुपपन्नमित्युक्तम्, तदग्रे समाधेयम्॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तखण्डानामखण्डि जडताहुतिः॥

इति जडत्वनिरुक्तिः.

---

आकाशादावित्यादिना ईश्वरादिग्रहणम्। सर्वमूर्तेष्वाकाश-

---

1 मात्रोपयोगितया.

गित्वनियमात् । अमूर्तनिष्ठात्यन्ताभावप्रतियोगित्वाभिप्राये तु आत्मनि व्यभिचारस्तदवस्थः । सर्वसम्बन्धित्वाभावविवक्षायामपि सर्वसम्बन्धशून्ये परमात्मनि व्यभिचारः, अज्ञाने सर्वसम्बन्धिन्यसिद्धिश्च । ध्वंसप्रतियोगित्वमपि आकाशादावसिद्धम् । तेषां परैर्नित्यत्वाभ्युपगमात् । अन्योन्याभावप्रतियोगित्वं च आत्मनि व्यभिचारि, तस्य जडनिष्ठान्योन्याभावप्रतियोगित्वात् । अन्यथा जडत्वापत्तेः" इति चेन्न ; अत्यन्ताभावे अन्योन्याभावे च प्रतियोगिसमसत्ताकत्वविशेषणेन आत्मनि व्यभिचारपरिहारात् । अज्ञानाकाशादौ च स्वसमानसत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्वसत्त्वेन असिद्ध्यभावात् । अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकत्वाभावपक्षे स्वान्यूनसत्ताकेति विशेषणं देयम् । अतएव प्रातिभासिकशुक्तिरूप्यादेः

---

मित्यादिप्रतीत्याऽऽकाशादिसंयोगो वृत्तिनियामक इति वृत्तिनियामकसंयोगेन प्रतियोगित्वमप्यसिद्धमिति भावः । **अभिप्राय इति** । संयोगावच्छिन्नप्रतियोगितात्वेनैव हेतुः अमूर्तनिष्ठाभावीयं त[1]मादायाकाशादावप्यस्तीत्यभिप्राय इत्यर्थः । मूर्ते संयोगेनात्मनः सत्त्वेप्यमूर्ते तेन तदभावाद्व्यभिचार इत्याह—**आत्मनीति** । उपहितात्मन एवोपादानत्वात्साक्षित्वाच्च सर्वसम्बन्धो न तु शुद्धस्येति मत्वाऽऽह—**सर्वेति** । धर्मीत्यस्य स्वाश्रयेत्यर्थकत्वे स्वपदस्य हेतुपरत्वादन्यतरत्वादिना तादृशप्रतियोगित्वं शुद्धात्मनोऽपीत्यत आह—**अज्ञानाकाशेति** । **स्वेति** । यत्र हेतुः स्थाप्यः स स्वपदार्थः । अत्मावृत्तिप्रतियोगितया अत्यन्ताभावो भेदश्च हेतुः । अतः स्वत्याननुगमादिर्न दोषः । यद्यपि मिथ्यात्वलक्षणोक्तरीत्या आकाशादेरत्यन्ताभावप्रतियोगित्वे मानाभावः,

---

[1] भावीयात्त.

व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम्। निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावात् न साध्याविशिष्टता। ध्वंसप्रतियोगित्वं चाकाशादौ नासिद्धम्। 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति श्रुतिसिद्धजन्यत्वेनानुमितत्वात्। 'आकाशवत्सर्वगतश्च नित्यः' इत्यत्र चात्मनिदर्शनत्वं[1] स्वसमानकालीनसर्वगतत्वेन आभूतसम्प्लवावस्थायित्वेन चेति द्रष्टव्यम्। 'अतोऽन्यदार्तम्' इति श्रुत्या अनात्ममात्रस्यैव विनाशित्वप्रतिपादनात्। अतएव "घटादयः स्वानु-

-मिथ्यात्वानुमानं चोक्तहेतुकं उक्तहेतुसिद्धेः पूर्वमप्रवृत्त्या न तत्साधकम्; तथापि दृश्यत्वादिहेत्वन्तरेणात्यन्ताभावप्रतियोगित्वघटितमिथ्यात्वे सिद्धेऽप्यत्यन्ताभावप्रतियोगित्वेन सदसद्विलक्षणत्वादिरूपमिथ्यात्वानुमितिस्सम्भवतीत्यभिप्रायेणाह—**निरुक्तेति**। अत्यन्ताभावप्रतियोगित्वान्येत्यर्थः। **एवंरूपत्वेति**। अत्यन्ताभावप्रतियोगित्वरूपत्वेत्यर्थः। **साध्याविशिष्टता** साध्यस्यानुमितिपूर्वकालापेक्षया अनुमितिकाले विशेषाभावः, सिद्धत्वमिति यावत्। विशिष्टप्रतियोगित्वरूपमिथ्यात्वसिद्धावपि प्रकृत[2]-हेतुना तदन्यमिथ्यात्वसाधनमव्याहतमिति भावः। एतेन—'मिथ्यात्वलक्षणे स्वाधिकरणादिनिवेशात् तदनिवेशपक्षेऽपि सद्वृत्त्यत्यन्ताभावनिवेशान्न साध्यहेत्वोरविशेषः' इत्यादि परास्तम्। **जन्यत्वेनेति**। जन्यमात्रस्याविद्योपादानकत्वात्तन्नाशनाश्यत्वादविद्यासम्बन्धादेरपि अज्ञानप्रयुक्तस्त्वेनाज्ञाननाशकनाश्यत्वात्। शुक्तयज्ञान[3]सम्बन्धादौ क्लृप्तत्वात् एकाज्ञानपक्षे तस्या[4]क्लृप्तत्वेऽपि 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुतेः लाघवादनात्मत्वावच्छेदेनैवात्मज्ञानविरोधित्वकल्पनात् अनात्ममात्रं विनाशि अविद्यानाशस्यैव अनात्ममात्रनाशत्व[5]कल्पनात् नाका-

[1] निदर्शनवत्त्वं. [2] अप्रकृत. [3] शुक्तिज्ञान. [4] तथा. [5] नाशकत्व.

**गतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्, यथा सर्प-मालादिकम्, स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते। "एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते। सन् घटः सन्**

---

शादिव्यक्तिनाशकल्पनागौरवमिति भावः। **स्वानुगतप्रतिभासे इति।** स्वतादात्म्येन स्वरूपतो भानयोग्ये स्वतादात्म्यविषयतानिरूपितानव-च्छिन्नप्रकारतावतीति यावत्। सप्तम्या व्यापकत्वमर्थः[1]। व्यापकता-निरूपकत्वं तादात्म्येन। तथाच यदुक्तप्रकारतावत्तत्र कल्पिता इति व्यापकता लभ्यते। **कल्पिताः** ज्ञाननिवर्त्याः, स्वाभाववति ज्ञेया वा। तादृशप्रकारताव्यापकस्वनिवर्तकधीविषयताकत्वं तादृशप्रका-रताव्यापकस्वात्यन्ताभावकत्वं वा पर्यवसितार्थः। उक्तप्रकारतायाः सामानाधिकरण्यमात्रनिवेशे घटस्य स्वतादात्म्यभ्रमविषयपटत्वादौ कल्पि-तत्व[2]मादाय परैरर्थान्तरं वाच्यम्। अतस्तस्याव्यापकत्वं निवेशितम्। तादृशप्रकारतावति द्रव्यगुणकर्मादौ स्वनिवर्तकधीविषयत्वाभावादनव-च्छिन्नेति। द्रव्यगुणादौ च नानवच्छिन्नं प्रकारत्वम्। प्रतियोगिता-विषयतादेरखण्डत्वस्वीकारे तादृशप्रकारतावति तत्र घटादेः स्वनिवर्तक-धीविषयत्वाभावान्निरूपितान्तस्थले स्वतादात्म्यसमानाधिकरणेति वा-च्यम्। एवंच यथासन्निवेशो व्यापकत्वं न व्यर्थम्। सामानाधिकरण्यं वा तत्स्थाने निवेश्यम्, प्रतियोगितादेरपि धर्मत्वात्। घटादौ तादात्म्य-स्वीकारे तु सामान्यवद्वक्ष्यमाण[3]रीत्या तस्य ब्रह्मस्वरूपत्वाद्घटादि-निवर्तकधीविषयत्वात् न तद्व्यभिचार इति निरूपितान्तमपि निर्दो-षम्। तच्च यथोक्तरूपेण साध्यसिद्ध्यर्थं प्रकारताविशेषणम्। द्वितीय-साध्ये त्वनवच्छिन्नत्वं न देयम्। वस्तुतस्तु[4] कल्पितपदस्य स्वात्य-न्ताभाववति प्रतीयमानार्थत्वे स्वानुगतप्रतिभासेत्यस्य स्वपश्चादपि

---

[1] सिद्धमित्यस्याव्यापकत्वमर्थे. इति. पा. [2] कल्पित. [3] सामान्यस्य वक्ष्यमाण.
[4] सत्येन वस्तुतस्तु.

**पटः" इत्यानन्दबोधोक्तमपि साधु। विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वात् न ब्रह्मतुच्छयोर्व्यभिचारः। न च 'खण्डो गौर्मुण्डो गौः" इत्येवमादिस्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वात् व्यभिचार इति वाच्यम्; सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमात्, व्यक्तिविशेषाणामेवाननुगतानां**

---

भासमानार्थकतया सद्रूपार्थकत्वपर्यवसानात् सत्त्व[1]व्यापकस्वात्यन्ताभावकत्वं द्वितीयसाध्यं पर्यवस्यति। स्वानधिकरणकपालादिरूपसद्वृत्त्यत्यन्ताभावप्रतियोगित्वमादाय पटादौ परेषामर्थान्तरवारणाय व्यापकत्वम्। भासमानत्वव्यापकतानिवेशे शून्यवादिनां सिद्धसाधनम्। अतः सत्त्व[1]-व्यापकत्वमुक्तम्। अथवा द्वितीयसाध्यं ब्रह्मसिद्ध्युक्तवक्ष्यमाणानुमान एव बोध्यम्। कल्पितत्वं च स्वाभाववतीति वक्ष्यमाणाचार्यवाक्यमपि तदभिप्रायम्। यथेत्यादिः, यद्यद्विभज्यते तत्स्वानुगतप्रतिभासे कल्पितं, यथा रज्जुसर्पादिकमित्युदाहरणे एवमित्यादेरुपनयनिगमनयोः तात्पर्यम्। **आनन्दबोधोक्तमिति**। प्रमाणमालायामित्यादिः। प्रथमसाध्याभिप्रायेणाशङ्क्य निराकरोति—**न चेत्यादि**। गोत्वाद्यनपेक्षतया गोत्वादिकार्यप्रयोजकतायां दृष्टान्तमाह—**गोत्वाद्यभ्युपगम इति**। **व्यक्तिविशेषाणामिति**। जातिवृत्तिलौकिकाविषयतया प्रत्यक्षं प्रति स्वविषय[2]-समवेतत्वसम्बन्धेन प्रत्यक्षस्य कारणत्वेन स्वविषयव्यक्तीनां सम्बन्धविधया प्रत्यक्षोत्पत्तिप्रयोजकत्वरूपं व्यञ्जकत्वमिति भावः। **अननुगतानां** गोत्वाद्यविशेषितानाम्। अथ साक्षाद्यवच्छिन्नसन्निकर्षादेः विशिष्य गोत्वादिव्यञ्जकत्वस्यावश्यकत्वेनोक्तव्यञ्जकत्वे मानाभावः,

---

[1] स्व. [2] स्वविषये.

**सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववत् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तेः ।**

तत्राह—**सास्नेति** । अनुगतानां विशेषितानां सास्नाद्यवच्छिन्नसन्निकर्षाद्याश्रयतया व्यक्तीनां[1] व्यञ्जकत्वमिति भावः । **व्यक्तिविशेषविशिष्टत्वेनेति** । गोत्वादिना अभिमतव्यक्तीनामन्यतमनिष्ठतादात्म्यरूपवैशिष्ट्येनेत्यर्थः । **तत्तद्व्यवहारेति** । गोत्वादिप्रयोज्यकार्येत्यर्थः । **जनकत्वेति** । प्रयोजकत्वेत्यर्थः । न च सम्बन्धाननुगमो दोषः, स्वरूपसम्बन्धेन कारणत्वादिस्थले तस्यातत्त्वात् अन्यतमत्वेनानुगमसम्भवाच्च । न च तावता तादात्म्यानन्स्यात्तद्घटितान्यतमत्वनिवेशे गौरवमिति वाच्यम् ; तावदन्यतमत्वव्यक्तेः स्वरूपत एव निवेशात्, अनुगतरूपान्तरसत्त्व एव तेन रूपेणावच्छेदकत्वे अन्यथासिद्धेः स्वीकारात् । अतएव स्वरूपसम्बन्धेनाभावादेः कारणत्वादिस्थले तावत्स्वरूपान्यतमत्वमेव स्वरूपतोऽवच्छेदकम् । अन्यथाऽननुगतसम्बन्धैः कारणत्वादेर्दुर्वचत्वात् । एवंच तादृशान्यतमसम्बन्धेन सद्रूपमेव गौरित्यादिव्यवहारविषयः। गोत्वाद्यवच्छिन्नत्वेन अभिमतं कारणत्वादिकं उक्तसम्बन्धेन तद्रूपेणैवा[2]वच्छिद्यत इति गोत्वादिकल्पनं व्यर्थम् । तदुक्तं भर्तृहरिणा—

सम्बन्धभेदात्सत्तैव[3] विद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥

इतीति भावः । न च गोव्यक्तीनां अन्यतमत्वेनापि कारणत्वादिसम्भवात् सत्सामान्यस्यैवेत्यसङ्गतमिति वाच्यम् ; गोत्वाभ्युपगमेप्युक्तान्यतमत्वादिना तदापत्त्या तेन रूपेणान्यथासिद्धेरावाभ्यां स्वीकारात् । अथवा गोव्यक्तयः सद्रूपतादात्म्यविशिष्टा गौरित्यादिव्यवहारविषया इत्येव प्रकृतग्रन्थार्थः । न च गवादिपदानां शक्यता, गवादिनिष्ठकारणत्वादिकं च सद्रूपेणावच्छेत्तुमशक्यं, अतो गोत्वमावश्यकमिति वाच्यम् ; सद्रूपविशिष्टगोव्यक्तिष्वेव उक्तशक्यताकारणतादे-

---

1 सन्निकर्षान्यवृत्तीनां. 2 सद्रूपेणैवा 3 भेदास्तत्रैव.

**अतएव 'घटादिकं सद्रूपे कल्पितम्। प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गवत्' इति ब्रह्म-**

---

रनवच्छिन्नस्य स्वीकारे बाधकाभावात्। न च कम्बुग्रीवादिमत्त्वादिना शाब्दबोधस्यापि घटादिपदशक्तिज्ञानजन्यत्वापत्तिरिति वाच्यम्; घटत्वेन घटबोधस्यानुकूलायाः घटपदनिष्ठायाः शक्तेरेव घटपदघटयोः शक्तिरूपत्वात्। तार्किकादिरीत्या तु घटपदात् घटत्वेन घटो बोध्यतामितीच्छा[1]विशेष्यत्वस्यैव तद्रूपत्वात्[2] तत्र घटत्वं सद्रूपमेव घटस्तद्व्यक्तिरेव सद्रूपेण यत्किञ्चिद्गोव्यक्तौ शक्यताग्रहस्यैव अन्वयव्यतिरेकाभ्यां सद्रूपेण गोव्यक्तिस्मृतिशाब्दबोधहेतुत्वस्य अनवच्छिन्नस्य सम्भवात्, अनवच्छिन्नकारणत्वादेरेव दण्डत्वविशिष्टादौ ग्रहात् प्रवृत्त्यादिसम्भवात्। न च घटत्वादिजातिं विना घटादिकारणत्वमेकं दुर्वचमिति वाच्यम्; शक्तिविशेषरूपस्यातिरिक्ताखण्डरूपस्य वा कारणत्वस्य उक्तजातिं विनाऽप्यैक्यसम्भवात्, कार्यकारणव्यक्तीनामन्यतमत्वव्यक्त्योरेव अखण्डकारणता[3]घटकत्वसम्भवाच्च। अन्यथा व्याप्यत्वादेः कारणत्वाद्यवच्छेदकत्वस्य चावच्छिन्नत्वनियमापत्तेरित्यास्तां विस्तरः। **अतएव** उक्तपरिच्छेदानां हेतुत्वसम्भवादेव। **सद्रूपे कल्पितं** सद्रूपधीनिवर्त्यमुक्तार्थकं वा। तरङ्गचन्द्रे तु तत्त्वं सिद्धमेवेति न साध्यवैकल्यम्। **प्रतीयमानत्वात्** प्रतीयमानतायोग्यत्वात्। सदनुवेधेन प्रतीयमानतायोग्यत्वं च उक्तपरिच्छेद एवेति भावः। अथवा सत्तादात्म्याविषयकप्रतीत्यविषयत्वादित्यर्थः। प्रतीतिमात्रे सद्रूपं विषय इति वक्ष्यते। यत् यत्तादात्म्याविषयकप्रतीत्यविषयस्तत्तत्र कल्पितमिति सामान्यतो व्याप्तिः। अतएव दृष्टान्ते चन्द्रानुविद्धेत्युक्तम्। चन्द्रानुविद्धधीविषयेतत्यर्थः[4]। **प्रत्येकमिति**। प्रतीतिविशेषणेन स्वविषयक-

---

[1] बोध्यत इतीच्छा. [2] सद्रूपत्वात्. [3] मन्यतमत्वादिव्यक्तेरेवाखण्डकारणता.
[4] चन्द्रानुवेधलाभेन उक्तहेतुलाभात् न तदुक्तिवैयर्थ्यम्। यत्तु अनेकेषां तदनुविद्धतया प्रतीयमानत्वं हेतुः; ब्रह्मणस्तु नानेकत्वमिति न तत्र विद्धधीविषयेत्यर्थः—इत्यधिकपाठः.

**सिद्धिकारोक्तमपि साधु। ननु सदर्थस्य ब्रह्मणः रूपादिहीनस्यासंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं घटस्सन्नित्यादिबुद्धिविषयता स्यात्? तथाच 'घटोऽनित्यः' इत्यनेन घटगतानित्यतेव 'घटस्सन्' इत्यनेनापि घटगतमेव सत्त्वं गृह्यते। न च स्वरूपेणाप्रत्यक्षस्य राहोः चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति वाच्यम्; शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात्। राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य योग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषता युक्तेति चेन्न; यतस्सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वम्, किन्तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव।**

---

प्रतीतिमात्रस्य तत्तादात्म्य[1]रूपानुवेधविषयकत्वलाभेन उक्तहेतुलाभान्न तदुक्तिवैयर्थ्यम्। यत्तु अनेकेषां तदनुविद्धतया प्रतीयतमानत्वं हेतुः, ब्रह्मणस्तु नानेकत्वमिति; न तत्र व्यभिचारः, तद्रूपाभिन्नत्वं वा साध्यमित्युक्तं तच्छोभतेतराम्। ब्रह्मणोऽपि ज्ञानानन्दादिरूपेण अनेकत्वस्य कल्पितत्वात्, प्रपञ्चमादायापि तत्सत्यत्वाच्च। उक्तसाध्यं च मिथ्यात्वं विनाऽपि सम्भवतीत्यर्थान्तरात्। ननु सदिति प्रथमहेतुर्यद्यपि स्वान्यूनसत्ताकभेद[2]प्रतियोगितात्वाद्युक्तरूपेण; तथापि सदनुवेधधीविषयत्वयोग्यतात्वेन तदुक्तिर्न घटत इत्यभिप्रायः। **सदात्मनेति**। सद्रूपेणेत्यर्थः। **घटाद्यवच्छिन्नशक्त्यज्ञानेनेति**। घटादिप्रपञ्चानुकूला शक्तिः यस्य तादृशमज्ञानं यत्र तेन पूर्णानन्दरूपेणेत्यर्थः। सद्रूपस्फुरणेऽपि पूर्णानन्दावरणादेव संसारदृष्ट्याऽ[3]-पूर्णानन्दरूपेण मूलाज्ञानावृतत्वम्। सद्रूपपूर्णानन्दरूपयोस्तु भेद आविद्यक इति भावः। अथवा सदात्मनेति घटाद्यवच्छिन्नसदात्मनेत्यर्थः। अतएव वक्ष्यति ब्रह्म घटाद्यवच्छेदेन योग्यमिति। अत एव पल्लवाज्ञानास्वीकारपक्षेऽपि मूलाज्ञानेन घटाद्याकारवृत्तिकाले घटा-

---

[1] सत्तादात्म्य. [2] सत्ताकाभेद. [3] संसारदशा.

**तथाच चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात्। न च रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिः बाधिकेति वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्। सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म। नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः, सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च। तदुक्तं वार्तिककृद्भिः—**

**अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः।**
**अक्षादीनां स्वतस्सिद्धो यत्र तेषां प्रमाणता॥**

---

द्यवच्छिन्नसद्रूपानावरणात् तस्य प्रकाश इति भावः। घटाद्यवच्छिन्नेत्यादेरर्थस्तु पूर्ववत्। **सर्वेन्द्रियग्राह्यमिति**। धीमात्रविषयत्वाभ्युपगमादिति भावः। **परैरिति**। सत्ताजातेस्तार्किकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात् ज्ञानविषयत्वरूपसत्तायाः मणिकारोक्तप्राभाकरमते धीमात्रविषयत्वाभ्युपगमादित्यर्थः। उक्तं हि मणौ—'प्राभाकरास्तु मितिमात्रंशे सर्वं ज्ञानं प्रत्यक्षम्' इति। प्राचीनप्राभाकरमते तु वाचस्पत्याद्युक्ते मेयभानकाले मितिमात्रोर्न संशयविपर्ययावित्येवाभ्युपगमः। सर्वेन्द्रियग्राह्यत्वसाधकस्य[1] सर्वधीविषयत्वस्योपपदकमाह—**तदुक्तमिति**। अनुभवः सद्रूपम्। तस्यैव विषयत्वे हेतुः—**अज्ञातलक्षण इति**। सद्रूपभिन्नं तु विषयीभूतसद्रूपावच्छेदकम् न तु विषय इति भावः। **स्वतस्सिद्धः** अनारोपितः। अथवा अज्ञातो[2] विषयोऽनुभव एव, जडे अज्ञातत्वाभावादित्यर्थः। तथाच सद्रूपान्यस्य विषयत्वेऽपि न क्षतिः। **अक्षादीनां** चक्षुरादिप्रयोज्यज्ञानानाम्। तेन भ्रमस्याप्यनुभवो विषय इति लभ्यते। उक्तविषयकत्वं विना-ज्ञानमात्रे प्रमात्वव्यवहारो न स्यात्, अज्ञाताबाधितविषयकत्वस्यैव प्रमात्वरूपत्वादित्याशयेनाह—**यत्रेति**। यद्विषयकत्वेनेत्यर्थः। **प्रमाणता**

---

[1] साधकत्वस्य. [2] ज्ञाने.

**इति कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्, न च शब्दावच्छिन्नस्याकाशस्यापि श्रावणत्वं स्यादिति वाच्यम्; स्वभावतो योग्यस्य हि केनचिन्निमित्तेन प्रतिरुद्धयोग्यताकस्य अवच्छेदकादिना योग्यता**

---

प्रमात्वव्यवहारः । अमेध्यधिष्ठानीभूतसद्रूपतदात्म्यापन्नरजतादिविषयकत्वेनैव प्रमात्वं बाधात्पूर्वं[1] व्यवह्रियत इति धीमात्रस्य सद्रूपविषयकत्वमावश्यकमिति भावः । कालसम्बन्धित्वरूपा सत्ता सर्वधीविषयत्वात् सर्वेन्द्रियग्राह्या मीमांसकादीनाम् । उक्तं हि तैः—

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते'

इतीत्याशयेनाह—**कालस्येति** । प्रतीयमानांशे आधेयतासम्बन्धेन विशेषणतया कालो भाति, इदानीं घट इत्यनुभवात् । अविद्यमानघटादेरपि तदानीं घट इत्याद्यनुभवात्, स्मर्यमाणस्य तत्कालीनार्थकः स इत्युल्लेखनियमात् । अतएव तार्किकादिभिः परोक्षज्ञाने सत्ताभानावश्यकत्वं वाच्यमित्याशयेन मीमांसकादीनामित्यादि पदमुपात्तम् । तथाचानुभवानुरोधात् सत्तावच्छेदकभानसामग्र्या एव सत्ताभासकत्वं कल्प्यत इति तार्किकादिभिरपि वाच्यम् । पर्वते वह्निमनुमिनोमीत्याद्यनुभवस्यापलापायोगात् । अन्यथा पर्वतीयवह्निः सन्न वेत्यादिसंशयापत्तेः उक्तसंशयनिवर्तकज्ञानान्तरकल्पने गौरवात्, सत्ताघटितरूपेण व्यापकत्वाग्रहेपि सत्ताभानस्यानुमित्यादौ सम्भवात्, उक्तनियामकसम्भवात् । अतएवातीन्द्रियानुमित्यादावपि सत्ताभानावश्यकत्वम् । न च मीमांसकादिभिः कालांशे लौकिकान्यविषयतैव धीमात्रे स्वीक्रियते, त्वन्मते तु सद्रूपे लौकिकविषयतेति कथमनुभवैकरूपतेति वाच्यम्; तन्मतेऽपि सत्तां साक्षात्करोमीति धीबलात्तादृशविषयत्वावश्यकत्वा-

---

[1] बाधपूर्वं.

**सम्पाद्यते, यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसम्बन्धेन। एवंचावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति। नभस्तु स्वभावायोग्यमेव, न प्रतिरुद्धयोग्यताकम्; येन शब्दावच्छेदेन योग्यं भवेत्। यद्वा द्रव्यग्रहे चक्षुषो रूपापेक्षा। न तु अन्यग्रहे। ब्रह्म तु न द्रव्यम्, 'अस्थूलमनण्वह्रस्वमदीर्घम्' इति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्। अतो नानुपपत्तिः। अस्तु वा द्रव्यम्; तथाप्यभ्यस्तद्रव्यवति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्ये-**

---

त्संयुक्तविशेषणतासान्निकर्षसम्भवात्, गुरुमते लौकिकान्यप्रत्यक्षविषयत्वानभ्युपगमाच्च[1]। न च सद्रूपस्य द्रव्यत्वमभ्युपगम्य सिद्धान्तस्येदानीमुच्यमानत्वात् द्रव्यप्रत्यक्षे च रूपादिहेतुतायाः क्लृप्तत्वात् रूपादिहीने तत्र कथं प्रत्यक्षविषयत्वमिति वाच्यम्; द्रव्यत्वं हि यद्यपि सद्रूपं कल्पिततादात्म्येन स्वस्मिन्नपि वर्तत इति तादृशतादात्म्यं सद्रूपभिन्नद्रव्यव्यक्तिनिष्ठतादात्म्यानि चेत्यन्यतमसम्बन्धेन सद्रूपविशिष्टमेव द्रव्यम्; तथापि स्वभिन्नद्रव्यव्यक्तिवृत्तितादात्म्याना[2]मन्यतमसम्बन्धेन सद्रूपविशिष्टं यत् तद्वृत्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति रूपादिहेतुतेति भावः। सद्रूपभिन्नद्रव्यव्यक्तिवृत्तितादात्म्यान्यतमसम्बन्धेन सद्रूपविशिष्टमेव द्रव्यमित्याशयेनाह—**यद्वेति**। व्यावहारिकमहत्त्वादिपरिमाणं व्यावहारिकस्य द्रव्यत्वसम्बन्धस्य सद्रूपेऽनङ्गीकारे अनुपपन्न[3]मित्यत आह—**अस्तु वेति**। **धर्मीत्यादि**। धर्म्येन्यूनसत्ताकेन तादात्म्येन द्रव्यत्ववतीत्यर्थः। तेन कर्मधारयोत्तरं मतुपोऽसाधुत्वेऽपि न क्षतिः। न वा द्रव्यत्वस्य सद्रूपत्वेन द्रव्यव्यक्तीनामिव गुणादिव्यक्तीनामन्यूनसत्ताकत्वेऽपि क्षतिः। यद्यपि यथाश्रुतोक्तविव-

---

1 विषयत्वान्यानभ्युपगमाच्च. 2 व्यक्तितादात्म्याना. 3 व्यवहारविषयत्वमनुपपन्न.

न्यूनसत्ताकद्रव्यत्ववत्येव चक्षुः रूपमपेक्षते । ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेवेति न तद्ग्रहे रूपाद्यपेक्षा । कल्पितत्वं च स्वाभाववति प्रतीयमानत्वं वा स्वरूपज्ञाननिवर्त्यत्वं वेत्यन्यदेतत् । तस्मात् परिच्छिन्नत्वमपि भवति हेतुरिति सिद्धम् ॥

इति परिच्छिन्नत्वहेतूपपत्तिः.

---

क्षायामपि सद्रूपद्रव्यत्वस्य व्यावहारिकतादात्म्याश्रये व्यावहारिकगुणादौ चाक्षुषे व्यभिचारः, प्रातीतिकस्य तत्तादात्मस्य आश्रये प्रातीतिकगुणादौ चाक्षुषत्वस्वीकारे तत्रापि व्यभिचारः; तथापि धर्म्यन्यूनसत्ताके[1] त्यस्य गुणाद्याश्रयत्वेन पराभिमतं यद्यत्सद्रूपभिन्नं तादृशव्यक्तिगततादात्म्यान्यतमेत्यर्थकस्वान्न दोषः । गुणादेः सद्रूपस्य च तादृशतादात्म्येन सद्रूपद्रव्यत्वानाश्रयत्वात् । एवमन्यत्रापि धर्म्यन्यूनसत्ताकत्वादिकं निर्वाच्यम् । तेन धर्म्यादिनिवेशगौरवानवकाशः । सत्तात्रैविध्यासिद्धिदशायामपि तदुक्तिसम्भवश्चेति ध्येयम् । चक्षुः चक्षुरादि । रूपं रूपादि । तेन त्वगिन्द्रियादिकमपि न ब्रह्म[2] स्पार्शनादावुद्भूतस्पर्शादिकमपेक्षत इति लभ्यते । ननु अन्यांशे उद्बोधकाद्यभावे घटत्वादिमात्रविषयकस्मृतिः सद्रूपाविषयेति नोक्तहेतुसम्भव इति चेन्न; सद्रूपभाने उद्बोधकादेः पृथगनपेक्षाया उक्तत्वात् । न चायं घट इत्यादिज्ञाने घटत्वांशे सद्रूपभाने[3] अयं घटो न वेत्यादिसंशयनिवर्तकता न स्यादिति वाच्यम्; जातिमान् घट इत्यादाविव स्वातन्त्र्येणापि स्वरूपतो घटत्वादिविषयतायास्तत्र सम्भवात्, उक्तसंशयेऽपि घटत्वांशे सद्रूपभानाच्च[4] । न च ब्रह्मज्ञाने[5]

---

[1] धर्म्यसत्ताके. [2] मपि ब्रह्म. [3] सद्रूपाभाने. [4] सद्रूपाभानाच्च.
[5] ब्रह्मभाने ज्ञाने.

ब्रह्मांशे घटः सान्नित्यादौ सद्रूपांशे च सद्रूपतादात्म्यभानं स्यादिति वाच्यम्; सद्रूपान्यभासकसामग्र्यां सद्रूपभिन्नांश एव सद्रूपतादात्म्यभासकत्वनियमात्। वस्तुतस्तु ब्रह्मणश्चाक्षुषादिवृत्त्यविषयत्वेऽपि नास्माकं प्रकृते क्षतिः; घटादिविषयकवृत्त्या घटाद्यवच्छिन्नसद्रूपस्याप्यावरणाभिभवाद्घटादौ भासमाने सद्रूप[1]तादात्म्यस्यावश्यं भानसम्भवात्, अज्ञातचिदवच्छेदकविषयकत्व[2]घटितस्य घटादिगोचरवृत्तिप्रामाण्यस्य वक्तुं शक्यत्वात्। ब्रह्मज्ञानस्य तु त्रिकालाबाध्यविषयकत्वघटितं प्रामाण्यं भिन्नमेवेति तत्राज्ञातविषयकत्वनिवेशेऽपि क्षत्यभावात् सद्रूपानुविद्धेत्यादिहेतोः सद्रूपतादात्म्ये[3] स्वनिष्ठे भासमान एव भासमानत्वरूपत्व[4] सम्भवात्। परंतु वस्तुगतिराचार्यैरुक्ता। यत्तु—"खण्डो गौर्मुण्डो गौरित्याद्यनुगतव्यवहार एव गोत्वादिसामान्ये मानं, अन्यथा व्यक्तिविशेषविशिष्टसत्सामान्यस्य उक्तव्यवहारविषयत्वे घटादेरपि व्यक्तिविशेषत्वादुक्तव्यवहारविषयत्वापत्तिः, व्यक्तौ[5] विशेषस्य गोत्वादिरूपत्वे तु मदिष्टसिद्धिः। सदात्मना न ब्रह्मण इत्याद्यप्ययुक्तम्। सदानन्दरूपयोरखण्डैकरूपत्वेन सदात्मनाऽऽवरणाभिभवे आनन्दात्मनाऽपि तदभिभवसंभवात् आनन्दात्मनाऽपि प्रकाशापत्तेः। प्रतिनियतेन्द्रियेत्याद्यपि न युक्तम्, ब्रह्मणोऽत्यन्ताव्यक्तत्वेन अतीन्द्रियत्वात्। 'नावेदविन्मनुते तं' न चक्षुषा दृश्यते, सर्वभूतेषु गूढः, दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया' इत्यादिश्रुतेः। सत्तादृष्टान्तोप्ययुक्तः, तस्याः योग्यव्यक्तिवृत्तिजातित्वेन योग्यत्वेऽपि ब्रह्मणोऽतथात्वेन अयोग्यत्वात्। अतोऽनुभव इत्यादिवार्तिकमप्ययुक्तम्, 'अथ परा यया तदक्षरमधिगम्यते' इत्यादिश्रुत्या ब्रह्मबोधकत्वस्य परविद्यारूपोपनिषदां लक्षण[6]स्योक्तत्वात्, प्रत्यक्षादेर्ब्रह्मबोधकत्वे तत्र तदति-

---

[1] तद्रूप. [2] अज्ञातचिद्विषयत्व. [3] तादात्म्येन. [4] रूपत्वा. [5] वृत्तौ.
[6] निषदंशलक्षण. [7] तद.

व्याप्तेः। कालदृष्टान्तोप्ययुक्तः; उपनयसन्निकर्षेणैव साक्षिणा वा कालभानात्। स्वभावतो योग्यस्येत्याद्यपि न युक्तम्; आकाशस्येव ब्रह्मणोऽपि रूपाद्यभावेन स्वभावायोग्यत्वात्। ब्रह्म तु न द्रव्यमित्याद्यपि न युक्तम्; अस्थूलादिश्रुत्या घटादिसाधारणस्थौल्यादेरेव निषेधेन परिमाणमात्रानिषेधात्, "महान्तं विभुमात्मानं, अणोरणीयान् महतो महीयान्, ज्यायानेभ्यः त्रिभ्यो लोकेभ्यः, सर्वं समाप्नोषि, सर्वत्र प्रसिद्धोपदेशात्" इत्यादिश्रुतिस्मृतिसूत्रैः ब्रह्म परिमाणवत्, उपादानत्वादित्यादियुक्त्या च ब्रह्मणि परिमाणसिद्धेः, अद्रव्यस्य तस्याम्बरादिधारणानुपपत्तेः। धर्म्यन्यूनसत्तेत्याद्यपि न युक्तं; जगतः कल्पितत्वासिद्धौ द्रव्यत्वे ब्रह्मन्यूनसत्ताकत्वासिद्धेः" इति, तत्तुच्छम्; गोत्वादिसामान्यं विनाऽप्युक्तव्यवहारस्योपपादितत्वात्, सदानन्दयोः कल्पितभेदेन घटादिवृत्त्या घटाद्यवच्छिन्नसद्रूपस्यैव प्रकाशस्वीकारेण च दोषाभावस्योक्तत्वात्, 'आनन्दं ब्रह्मणो रूपम्, आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुतिभिरुक्तभेदस्यानुवादात्। किंच सदानन्दयोर्मास्तूक्तभेदः[1], तथापि न क्षतिः; सद्रूपस्य घटादिविशेषणतया व्यवहारं प्रति सद्रूपमूलाज्ञानं न विरोधि, घटादिवृत्तिशून्य[2]काले घटादिव्यवहारस्य विरोधिपल्लवाज्ञानसत्त्वेन[3] तद्विशेषणतया सद्रूपभानासम्भवात्। पल्लवाज्ञानावृत्तं[4] सद्रूपमित्युपचर्येत इत्यस्मिन्नर्थे प्रकृतग्रन्थतात्पर्यात्। आनन्दरूपमपि विशेषणतया व्यवह्रियत एव—

'अस्ति भाति प्रियं नाम रूपं चेत्यंशपञ्चकम्' इति व्यवह्रियमाणस्य पञ्चांशत्वोक्तेः घटोस्तीत्यादिवत् घटः प्रेयानित्यादिप्रतीतेः। न च सद्रूपस्य घटादिवृत्तिविषयत्वे मूलाज्ञाननिवृत्तिः स्यादिति वाच्यम्; आपातश्रौतज्ञानस्येव घटादिवृत्तेरपि तदनिवर्तकत्वात्, सामग्रीविशेषजन्यज्ञानस्यैव विजातीयत्वेन तन्निवर्तकत्वस्योक्तत्वात्। न च विशेषणतया

---

[1] मास्तु भेदः. [2] घटादिशून्य. [3] पल्लवाज्ञानस्य सत्त्वे. [4] नावृतं.

व्यवहारस्यावरण[1]प्रतिरुद्धत्वे घटादिवृत्तिविषयत्वं सद्रूपे व्यर्थमुक्तमिति वाच्यम्; सदुपरक्तघटादिसंस्कारार्थं तदुक्तेः, सम्भवप्राचुर्यमात्रेण तस्योक्तत्वाच्च। 'नावेदवित्' इत्यादिश्रुतेस्तु न विरोधः, मूलाज्ञानस्य वेदजन्यवृत्त्यैव निवृत्तिरित्येतत्परत्वात्। सत्तादृष्टान्तस्तु न त्वया दृष्टान्तः, यथा सत्ता सर्वेन्द्रियग्राह्या तथा ब्रह्म; उक्तयुक्तिकलापसत्त्वे जातित्वाभावस्याप्रयोजकत्वात् ब्रह्मण एव सर्वजातिरूपत्वस्योक्तत्वाच्चेत्याशयात्, सद्रूपं धीमात्रविषयत्वेन सर्वानुभविकमित्येतत्परत्वेन मया व्याख्यातत्वात्, सत्तेत्यादेः दृष्टान्तत्वाभावाच्च। उक्तवार्तिकमपि युक्तम्, 'अथ परा' इत्यादिश्रुत्याऽक्षरविषयकमूलाज्ञाननिवर्तकत्वस्यैव लक्षणस्योक्तत्वात, कालस्योपनीततया न भानं, प्रत्युक्तत्वात्, तया विनापि भानस्योपपादितत्वाच्च। साक्षिणा न तज्ज्ञानं, तस्य क्रियादिरूपस्य साक्षिण्यनध्यासात्। स्वभावेत्यादि[2]रोदनं तु प्रत्युक्तम्। ब्रह्म त्वित्यादिकं तु युक्तम्[3]; अस्थूलादिश्रुत्या परिमाणमात्रस्यैव निषेधात् सङ्कोचे मानाभावात्, घटादिसाधारणपरिमाणस्य ब्रह्मण्यप्रयुक्त[4]त्वात्, सर्वभासकत्वादिना प्रसक्तसर्वसम्बन्धयोग्यस्य परममहत्त्वस्यैव प्रसक्तत्वात्। अणीयानित्यादेः दुर्बोधत्वपरत्ववत् महीयानित्यादेः परिमाणशून्यत्वपरत्वात्, अविद्यादि[5]महत्साधारणपरिच्छेदशून्यत्वपरत्वाद्वा। सर्वत्र प्रसिद्धेत्यादिसूत्रेण मनोमयत्वादिना ब्रह्मोपासना, सर्वं समाप्नोषीति स्मृत्या सर्वसम्बन्धः प्रतिपाद्यते, न परिमाणम्। उपादानत्वमपि न परिमाणसाधकं; व्याप्तिग्राहकतर्काभावात्। अतएव द्रव्यत्वमपि न तथा; विवर्तोपादानत्वे तदुपयोगस्य शङ्कानास्पदत्वात्। एवं धारणं न द्रव्यत्वसाधकम्; न हि ब्रह्मणि ब्रह्माण्डादिधारणं संयोगविशेषः, निरवयवे संयागाभावात्, किन्तु आध्यासिकतादात्म्यं पतनप्रतिबन्धकप्रयत्नो वा, तस्य च मायि-

---

1 स्यावरणा. 2 साक्षिणा तदज्ञानस्य क्रियादिरूपस्य साक्षिण्यध्यासात्। सत्ता वेत्यादि. इति कोशान्तरे पा. 3 न युक्तम्. 4 प्रसक्त. 5 असत्यादि.

कस्याद्रव्येऽपि सम्भवात् । उक्तं हि पदार्थखण्डने—"ईश्वरस्य परिमाणवत्त्वे मानाभावः, द्रव्यत्वस्य तृटित्वादेरिव परिमाणासाधकत्वात् । रूपादीनां च नेन्द्रियायोग्यत्वं, मानाभावात्, अतीन्द्रियानन्तस्पर्शकल्पने गौरवात् न स्पर्शवत्त्वेन द्रव्यसमवायित्वं, किन्तु जातिविशेषेण" । तट्टीकायां चोक्तं रामभद्रसार्वभौमैः—'एवमीश्वरे जीवे च द्रव्यत्वे संयोगादौ च मानाभावः, आत्ममनोयोगादेः हेतुत्वेऽपि न मानम्' इत्यादि । जन्यमात्रं प्रति द्रव्यत्वेन परिणामिकारणत्वेऽपि न क्षतिः । अन्यूनसत्ताकत्वे च यथाव्याख्याते न कोऽपि दोष इति । यदपि देशकालयोः कुत्रापि नात्यन्ताभावः, स्वस्मिन्नपि सत्त्वादित्याद्युक्तं; तच्छोभतेतरां, देशकालान्तरयोः देशकालात्यन्ताभावसत्त्वात्, स्वस्मिन् स्वसत्त्वस्य विरुद्धत्वात् देशकालान्तरस्यैव देशकालयोः सम्बन्धप्रतीतेः । यदपि प्रमेयत्वादेः स्वास्मिन् वृत्तिरित्युक्तं दृष्टान्ततया, तदपि न; प्रमेयत्वान्तरमादायैव प्रमेयत्वं प्रमेयमित्यादिबुद्ध्युपपत्तेः । किंच प्रमेयत्वादेरेकस्य सर्व[1]सम्बन्धित्वेऽपि न देशकालयोरेकैकयोः तथात्वं, अविद्यारूपयोस्तयोस्तदिति चेन्न; अविद्यायाः तादात्म्यादिसम्बन्धेन स्वस्मिन् जीवेशभेदादौ चाभावात्[2] । न हि घटाभावे घटो नास्तीतिवदविद्या स्वस्मिन् अस्तीति धीरस्ति । सर्वत्र देशकालौ स्त इति धीस्तु सर्वं दृश्यं विनाशीतिवत् सर्वत्र नैकसम्बन्धविषयिका ॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डानामखण्डि मितताहुतिः ॥

इति परिच्छिन्नत्वनिरुक्तिः.

---

1 रेकस्यासर्व. 2 जीवेशभेदाभेदौ च भावात्.

## अंशित्वविचारः.

चित्सुखाचार्यैस्तु 'अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वात् इतरांशिवत्' इत्युक्तम् । तत्र तन्तुपदमुपादानपरम् । एतेनोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः । न च–कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनं, अनाश्रितत्वेन अन्याश्रितत्वेन वा उपपत्त्या अर्थान्तरं चेति वाच्यम्; अभेदे कार्यकारणभावव्याहत्या कथञ्चिदपि भेदस्यावश्याभ्युपेयत्वात् । न च 'तदनन्यत्वमारम्भणशब्दा-

---

अंशित्वात्—उपादानतानिरूपकत्वात्, जन्यत्वाद्वा । ननु तन्त्ववच्छिन्नचैतन्यमेवोपादानं न तु तन्तुरिति मते पटे सिद्धसाधनम्; किंच उक्तप्रतियोगित्वं न मिथ्यात्वस्वरूपं, घटादेः सत्यत्वमतेऽपि तत्र तत्स्वीकारादित्यर्थान्तरम् । अपिच पटान्तरे तन्त्वन्तरानिष्ठाभावप्रतियोगित्वानुमित्यर्थमेकोक्तय[1]लाभस्तत्राह—**तत्रेति** । एतत्पदं[2] तु पक्षीभूतव्यक्तिपरमित्याशयेन तत्स्थाने स्वपदमाह—**स्वेति**[3] । **भेदस्येति** । तथाच कार्यस्य कारणानाश्रितत्वेऽपि कारणस्य कार्यभिन्नत्वेन कार्यप्रतियोगिकसम्बन्धानुयोगित्वान्न कार्यात्यन्ताभाववत्त्वम् । अन्यथा न्यायादिमते बदरं कुण्डीयमित्यादिधियो भ्रमत्वापत्तेः, कुण्डाभाववति कुण्डप्रकारकत्वात् । न च तादात्म्यसम्बन्धो भेदस्यैव विरोधी नात्यन्ताभावस्येति वाच्यं; मन्मते ययोस्तादात्म्यं तयोरवश्यं भेद इत्युक्तत्वात्, तादात्म्यस्य परकीयसमवायस्थानीयत्वाच्च तस्यात्यन्ताभाव एव विरोधित्वात्[4] । अतएव धनानाधिकरणे धनस्वामिन्ययमधन[5] इत्यादिधीर्न प्रमा, मण्यादिवृत्तितृणादौ च न दाहादिकं, मण्याद्यभावसत्त्वात् ।

---

1 मित्यर्थ ऐकात्म्य. 2 तत्पदं. 3 मूले नोपलभ्यते. 4 भावविरोधित्वात्. 5 धनस्वामीतित्वदयमधन.

**दिभ्यः' इत्यधिकरणविरोधः; उपादानव्यतिरेकेणोपादेयं नास्तीत्यस्यैव तदर्थत्वात्। बाधात्तन्मात्राश्रितत्वेन पक्षविशेषणाद्वा नार्थान्तरम्। न च प्रकृतेऽपि बाधः, तस्योद्धरिष्यमाणत्वात्। न चात्यन्ताभावस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पावकाशः, तस्य प्रागेव निरस्तत्वात्। न च कस्यचित्पटस्य संयोगवृत्त्यैतत्तन्तुषु सत्त्वेन तत्र व्यभिचार इति वाच्यम्; तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतः तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वात्। न चाव्याप्य-**

---

न च मण्यादिसंयोग एव प्रतिबन्धकमिति वाच्यम्, तत्त्वेन प्रतिबन्धकत्वे गौरवात्। बदरे कुण्डं नेत्यादिधीस्तु वृत्तिनियामकसंयोगेनाभावविषयिका। अतएव तत्सत्त्वेऽपि संयोगेन कुण्डीयं बदरमित्यादिधीः। अतएव पृथिवीत्वादिकं प्रति संयोगेन गगनादेर्व्यापकत्वोक्तिप्रस्तावे गगनाभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वादिति दीधितिवाक्ये उत्पत्तिकालावच्छेदेन संयोगेन समवायेन वा गगनाभावः पृथिव्यादाविति व्याचक्षते। अथवा भेदसत्त्वेन तादात्म्यसम्बन्धसंभवोक्तिद्वारा स्वोपादाननिष्ठात्यन्ताभावप्रतियोगिस्वतादात्म्यैकत्वमेव मिथ्यात्वमिति ज्ञापितम्। **कथंचिदिति**। प्रातीतिकस्येत्यर्थः। तादात्म्यसम्बन्धत्वान्यथानुपपत्त्या भेदकल्पनात् भेदोपजीव्यत्वेनाभेदरूपतादात्म्यस्य व्यावहारिकत्वादिति भावः। **बाधादिति**। कारणानाश्रितस्यापि पटादेर्भूतलाद्याश्रितत्वादनाश्रितत्वबाध इति भावः। **तन्मात्राश्रितत्वेनेति**। स्वोपादानान्यस्मिन् तादात्म्यसम्बन्धेनानाश्रितत्वेनेत्यर्थः। तेनान्यतादात्म्यवत्त्वेनापि नार्थान्तरम्। **प्रामाणिकत्वेति**। तात्त्विकत्वेत्यर्थः। **प्रागेवेति**। तात्त्विको व्यावहारिको वेत्यादेरुक्तत्वादित्यर्थः। ननु मूले वृक्षे न तत्संयोग इतिवत्तन्तुषु दशायां न पट इति प्रतीतेः तादात्म्येन पटस्य अव्याप्यवृत्तित्वं, तत्राह—**संयोगेति**।

**वृत्तित्वेन अर्थान्तरम्; पटतदभावयोरेकाधिकरणवृत्तौ विरोधस्य जगति दत्तजलाञ्जलित्वप्रसङ्गात्, संयोगतदभावयोरप्येकाधिकरणवृत्तित्वानभ्युपगमात्। अभ्युपगमे वा एतत्तन्तुत्वावच्छिन्नवृत्तित्वमत्यन्ताभावस्य विशेषणं देयम्। एवमेतत्कालीनत्वमपि। तेन कालान्तरीयाभावमादाय नार्थान्तरम्। न चेह तन्तुषु पट इति प्रत्यक्षबाधः, तस्य भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकत्वात्। बाधोद्धारे च विस्तरेणैतद्वक्ष्यामः। न चान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुरिति वाच्यम्; एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि एतत्तन्तुसमवेतस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं हि एतत्समवेतत्वे प्रयोजकं न भवति; परमते केवलान्वयिधर्ममात्रस्य एतत्समवेतत्वापत्तेः। किन्त्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकम्। तच्चैतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्ध-**

---

उक्तबुद्धयोः[1] मूले वृक्षवृत्तिसंयोगाभावः मूलाद्यवच्छिन्नवृक्षे संयोगाभावो वा, दशायां तन्तुवृत्तिपटाभावः, दशावच्छिन्नतन्तुषु पटाभावो वा विषय इति भावः। एतत्तन्तुत्वावच्छिन्नवृत्तित्वं एतत्पटानवच्छेदकानवच्छिन्नत्वम्। तेन मिथ्यात्वघटकाभावस्यावच्छिन्नत्वास्वीकारेपि न क्षतिः। तत्पटानवच्छेदकेत्यत्र देशकालसाधारणमवच्छेदकत्वं निवेश्यमित्याशयेनाह—एवमेतदिति। प्रयोजकं समव्यापकं, न तु व्याप्यमात्रं व्यापकमात्रं वा; आद्योक्तेर्व्यर्थत्वात्, द्वितीये केवलान्वयिनि वक्ष्यमाणापत्त्यसम्भवात्। केवलान्वयीति। उपलक्षणमेतत्। केवलव्यापकमपि न भवति, तत्त्वग्राहकतर्काभावादिति भावः। ननु प्रागभावप्रतियोगित्वमपि न प्रयो-

---

1 उक्तबुद्धेः.

मित्युपपादितमधस्तात् । एतत्समवेतत्वं च एतदुपादानकत्वम् । न तु नित्यसम्बन्धशालित्वं, तस्यानभ्युपगमात् । नन्वयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात् व्यतिरेकेण पटान्तरवदिति प्रतिरोधः । न चाप्रसिद्धविशेषणत्वम्, एतन्निष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात् प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः । न चाकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात्तस्य च केवला-

---

जकं, तत्तन्तुसमवेतद्रव्यत्वादौ तदभावात्तत्राह—एतत्समवेतत्वमिति । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगि, न एतदारब्धत्वादित्युक्तसाध्याभाववान् तत्पटोपादानोपादानकत्वादित्यर्थः । तेन तत्पटाव्याप्यवृत्तित्वान्न बाधः, न वा तत्संयोगजन्यत्वस्य तदारब्धत्वस्यास्मन्मते असिद्धिः । यद्यपि—संसर्गाभावप्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसम्भवाद्व्याप्यत्वांशवैयर्थ्यम्, व्याप्यत्वं च यदि यत्किञ्चिद्रूपेण, तदा घटादिवृत्तित्वविशिष्टत्वेनाकाशाभावस्यापि तदस्ति ; यदिच अत्यन्ताभावप्रतियोगितात्वेन, तदा साधनवैकल्यम् । यदि संसर्गाभावप्रतियोगितात्वेन, तदा व्याप्यतायाः साधनतावच्छेदकरूपायाः[1] स्वव्यापकोक्तसाध्यसमानाधि[2]करणवृत्ति यत् संसर्गाभावप्रतियोगितात्वं तत्त्वेन हेतुता वाच्या । तथाच संसर्गाभावप्रतियोगितात्वस्य निवेशावश्यकत्वे[3] तेनैव रूपेण हेतुतासम्भवादितरवैयर्थ्यम्, किञ्चिन्निष्ठात्यन्ताभावप्रतियोगितात्वस्य[4] तादृशप्रतियोगितात्वरूपेणोक्तव्याप्तौ प्रविष्टत्वेन तेनैव रूपेण हेतुतासम्भवादितरवैयर्थ्यं च । न चास्तु तथैवेति वाच्यम्; अप्रयोजकत्वात् । द्वितीयपक्षे साधनवैकल्यात् । अन्यथा भेदप्रतियोगितात्वेनापि उक्त-

---

1 साधारणरूपायाः. 2 व्यापकोक्तसमानाधि. 3 कत्वेन. 4 प्रतियोगितात्वरूपसाध्यतावच्छेदकस्य.

न्वयित्वेन किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् तत्र व्यभिचार इति वाच्यम्; संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिनि धर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन व्यभिचाराभावादिति चेन्न; यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तावेतन्निष्ठप्रागभावाप्रतियोगित्वस्य उपाधित्वेन प्रतिरोधस्य हीनबलत्वात्, एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया सान्दिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्, दृश्यत्वाद्यनुपपत्तिप्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्च। अतएव एत-

सध्यानुमित्यापत्तेरित्युक्तानुमानं न सम्भवदुक्तिकम्—तथापि तदभ्युपेत्य दूषणान्तरमाह—यत्रैतदिति। प्रागभावानङ्गीकारे तु एतदुपादानकत्वाभाव एवोपाधिः। तादृशप्रतियोगित्वेन सन्दिह्यमाने पक्षे यदि उपाधेर्निश्चयस्स्यात्तदा तदृशप्रतियोगित्वरूपसाधन[1]व्यापकत्वमुपाधौ निश्चीयेत, स तु नास्तीत्याशयेन पक्षावृत्तेरित्युक्तम्। पक्षावृत्तित्वेन निश्चितस्येत्यर्थः। सन्दिह्यमानेत्यादि। सन्दिह्यमानं यदुक्तप्रतियोगित्वं तद्व्यापकत्वानिश्चयादित्यर्थः। तथाचैतदारब्धत्वाभावव्यापकोपाधिव्यभिचारित्वेन हेतुना एतदारब्धत्वाभावव्यभिचारित्वमेतन्निष्ठाभावप्रतियोगित्वे अनुमेय[2]मित्येतदनारब्धत्वे तादृशप्रतियोगित्वव्यापकतानिश्चयो न सम्भवतीति भावः। न चोक्तोपाध्यभाववति तादृशप्रतियोगित्वस्य सन्देहा[3]त्तत्रोक्तव्यभिचारित्वस्य हेतोरनिश्चय इति वाच्यम्; एतत्तन्तुपदस्य तत्पटोपादनपरतया तत्पटोपादानीभूतं यत्तन्त्ववच्छिन्नचैतन्यं तन्निष्ठप्रागभावाप्रतियोगित्वरूपोपाध्यभाववति तादृशचैतन्यारोपितसर्पादौ स्वोपादानवृत्तिस्वावच्छेदकावच्छिन्नात्यन्ताभावप्रतियोगित्वानिश्चयस्य परेणापि वा-

1 साधना. 2 न प्रमेय. 3 योगित्वसंदेहा.

तन्त्वनारब्धत्वमपि नोपाधिः, उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपाधिकत्वस्य उक्तत्वात्, अव्याप्यवृत्तिसंयोगाभ्युपगमे तत्र व्यभिचाराच्च । अतएव यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्र एतत्तन्त्वनारब्धत्वमिति न साध्यव्यापकताग्रहोऽपि, तत्रैव व्यभिचारादिति सर्वमनवद्यम् ॥

एवंच 'विमतं ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात् स्वप्नादिवत्' इति विद्यासागरोक्तमपि साधु । ज्ञानव्यतिरेकेणासत्त्वमुक्तमिथ्यात्वान्यतमत्वं साध्यम् । ज्ञानव्यतिरेकेणानुपलभ्यमानत्वं चिदाभासे सत्येवोपलभ्यमानत्वं

---

च्यतयोक्तव्यभिचारित्वस्य हेतोर्निश्चयानपायात्, तादृशव्यभिचारित्वसंशयाहितव्यभिचारसंशयेनाप्युक्तव्यापकतानिश्चयप्रतिबन्धसम्भवाच्च । **उक्तत्वादिति** । उपाध्यभावे साध्याभावस्य व्यतिरेकव्याप्तेरेव वाच्यतया तत्र एतन्निष्ठप्रागभावा[1]प्रतियोगित्वस्योपाधेरुक्तत्वादित्यर्थः । **तत्र व्यभिचारादिति** । दशावच्छिन्नसंयोगे तत्पटानवच्छेदकानवच्छिन्नात्यन्ताभावप्रतियोगित्वरूपस्य साध्याभावस्य तत्तन्त्वारब्धत्वस्य हेतोश्च सत्त्वादित्यर्थः । न च स्वानवच्छेदकानवच्छिन्नस्वसमानाधिकरणाभाव[2] प्रतियोगित्वस्यैव साध्यतया उक्तप्रतियोगित्वस्य उक्तसंयोगे स्थापनकाले व्युत्पत्तिस्वाभाव्यात् तस्यैव स्वपदेन धार्यत्वात् नोक्तव्यभिचार इति वाच्यम्, प्रकृतानुमानवादिनव्यमते स्वत्वस्याननुगतत्वात्, व्युत्पत्तेर्व्याप्तिज्ञानादावनुपयोगाच्च, तत्पटावच्छेदकत्वेनैव साध्ये निवेशात् साध्योपाध्योः तत्तन्तुपदेन तत्पटोपादानस्यैव धार्यतया तत्तन्त्ववच्छिन्नचैतन्याधिष्ठानकसर्पादौ स्वानवच्छेदकानवच्छिन्नस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्याप्यनपायाच्च, तदारब्धत्वस्य तदुपादानकत्वरूपस्य सत्त्वाच्च; तत्संयोगजन्यत्वरूपस्य[3] पक्षेऽपि मन्मते अभावात् । **चिदाभासे इति** ।

---

[1] एतान्निष्ठात्यन्ताभावा. [2] भावा. [3] जन्यत्वस्य.

**हेतुरिति न किश्चिदनुपपन्नम्। एवमन्येषामपि प्रयोगा यथायोगमुपपादनीया इति शिवम्॥**

इत्यंशित्वविचारः.

---

चिदाभासं विनापि यत्प्रकाशते तदन्यत्वं, स्वप्रकाशान्यत्वमिति यावत्। स्वावच्छिन्नचिद्विषयत्वं वा, जडानामेव चिदवच्छेदकत्वान्न ब्रह्मणि तत्। अथवा ज्ञानं सदात्मकं चिद्रूपम्। तथाच सत्तादात्म्याविषयकबुद्ध्यविषयत्वादिरूपः प्रत्येकं तदनुविद्धतया प्रतीयमानत्वादित्युक्तहेतुः पर्यवसन्नः। सदविषयकबुद्ध्यविषयत्वस्य ब्रह्मण्यपि सत्त्वात्तादात्म्यनिवेशः। चिदाभासशब्दस्यापि सत्तादात्म्यार्थकत्वाच्चिदाभासेत्यादेरुक्तार्थकत्वम्। एवंच बौद्धोक्तस्सहोपलम्भहेतु[1]रयमिति भ्रान्तिरेव। अर्थो ज्ञानभिन्नो ज्ञानाविषयकबुद्ध्यविषयत्वादित्यस्यैव बौद्धानुमानस्य बौद्धाधिकारे उक्तत्वात्। एतेन—ज्ञानात्[2] भेदेनानुपलभ्यमानत्वं ज्ञानाभावप्रयुक्तोपलब्धिविरहकत्वं वा हेतुः; नाद्यः, पटस्य ज्ञानं न तु पट[3] इत्यसिद्धेः, नान्त्यः, ज्ञान[4]मेवोपलब्धिरिति स्वस्य स्वाप्रयुक्तत्वादित्यादि परास्तमित्याह—**न किश्चिदिति॥**

ननु विमतं मिथ्या, धर्मिकाल एवान्यथा प्रमितत्वाच्चित्रनिम्नोन्नतादिवत्, भारूपवस्तुसंलग्नत्वात् सवितृ[5]च्छिद्रादिवत्; न चासिद्धिः, धर्मिकाल एव 'इदं सर्वं यदयमात्मा' इति श्रुत्या सर्वानात्मन आत्मत्वेन प्रमितेः, घटादि स्फुरतीति भारूपसंलग्नत्वाच्चेति कौमुदी। तत्रान्यथेत्यात्मत्वेनेत्यर्थे सदात्मत्वेन[6] प्रमितत्वस्यामिथ्यात्वव्याप्यत्वाद्विरुद्धो हेतुः, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनेत्यर्थे तु असिद्धिर्व्यर्थविशेषणता च; द्वितीयस्तु सवित्रात्मनोः व्यभिचारी, 'सविता प्रकाशते आत्मा स्फुरति' इति तयोः भारूपसंलग्नत्वादित्यत आह—**एवमन्येषामिति।** अन्यथा प्रमितत्वादित्यस्य प्रपञ्चविलक्षणाखण्डानन्द-

---

[1] सदोपालम्भो हेतु. [2] ज्ञानत्वात्. [3] तन्तुपट. [4] ज्ञानत्व. [5] सचित्र.
[6] त्वेनेत्यर्थः तदात्मत्वेन.

रूपेण प्रमिततादात्म्यादित्यर्थः। तच्च कल्पितं ब्रह्मण्यपीति धीकाल इत्युक्तम्। स्वधीकाल इत्यर्थः। ब्रह्मधीकाले च ब्रह्मणि न तत्, ब्रह्मधियः स्वेतरकल्पितध्वंसरूपत्वात्। तथाच ब्रह्मावृत्तिस्तद्धीविषयत्वावच्छिन्नप्रतियोगिताको वा भेदो हेतुरिति उक्तजडत्वहेतौ पर्यवसानम्। भारूपं स्वप्रकाशरूपं, तत्र सम्यक् लग्नत्वात् यावत्स्वरूपं सम्बद्धत्वात्। ब्रह्मणः स्वस्मिन्नसम्बन्धस्तु न तथा, कल्पितत्वात्, ब्रह्मान्यनिष्ठभासम्बन्धादिति यावदिति द्वितीयस्याप्यस्वप्रकाशत्वाद्युक्तहेतावेव पर्यवसानम्। सवितरि व्यभिचारोक्तिस्तु शोभते, तस्यापि पक्षत्वात्, दृष्टान्तस्तु शुक्तिरूप्यादि वा चित्रनिम्नोन्नतादि वेति[1] न विशेषः। यत्तु—"कथंचिद्भेदो यदि कार्यकारणत्वानुपपत्तयोच्यते[2] तर्हि कथंचित्त्वं मिथ्यात्वमेव। तच्चाबाध्यात्यन्ताभावप्रतियोगित्वमित्यभेदस्सत्य[3] इत्यागतमेव। एतन्निष्ठाभावप्रतियोगित्वेप्येतत्समवेतत्वादंशित्वस्य साध्येना[4] विरोधादित्यादि कथमप्ययुक्तम्; तदत्यन्ताभाववति तत्प्रागभावस्य विरोधात्। अन्यथा वाय्वादौ रूपादिप्रागभावापत्तेः। केवलान्वयीत्याद्यपि न युक्तम्, एतत्समवेतत्वस्य यावत्स्वरूपमेतत्सम्बन्धवत्त्वरूपत्वात्,[5] तस्य च केवलान्वयिन्यपि सत्त्वात्। तत्तन्तुसंयोगिनि पटे व्यभिचारोऽपि युक्तः, तत्संयोगिनि तदत्यन्ताभावविरोधात्। समवायेनाभावस्य साध्ये निवेशे तु समवायानभ्युपगमपक्षे सिद्धसाधनमर्थान्तरं वा। इह तन्तुषु पट इति प्रत्यक्षं चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रमाणमित्यपि न; दृष्टान्तस्यापरीक्षितत्वत्, दार्ष्टान्तिकस्य फलपर्यन्तार्थक्रियापरीक्षितत्वात्तयोर्वैषम्यात्। तत्र एतत्तन्तुनिष्ठेत्याद्यपि न युक्तम्, तथा सति हि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादावपि यत् पृथिवीतरत्तत्र पृथिवीत्वाभाव इत्यादिव्याप्तिग्रहे पाकजरूपाभावादिरुपाधिः स्यात्, पृथिवीत्वाभावव्याप-

---

[1] शुक्तिरूप्यादिवच्चित्रनिम्नोन्नतादिवद्वेति. [2] कारणत्वान्यथानुपपत्त्योच्यते. [3] मित्यतः भेदस्सत्य. [4] अंशस्य साध्येन. [5] वत् रूपत्वात्.

कस्य पाकजरूपाभावस्य पक्षावृत्तेः पक्षवृत्तितया सन्दिह्यमानपृथिवीतरा-व्यापकत्वात्। तथाच व्यतिरेकिमात्रोच्छेदः। दृश्यत्वानुपपत्तिस्तु न प्रति-कूलतर्कः,[1] संयोगादिना दृश्यत्वस्य वाच्यत्वात्[2]। एतत्तन्त्वनारब्धत्वरूपोपाधिरेव प्रयोजकः, साध्यं प्रति समनियतत्वात्। नांशित्वं हेतुः, साध्यवति ब्रह्मण्यसत्त्वात्" इति, तत्तुच्छम्; स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमित्युक्तत्वादभेदसत्यत्वासम्भवात्। तत्सम्भवे वा मिथ्याभेदस्य त्वन्मते अलीकत्वात् कथं ते कार्यकारणत्वम्? अत्यन्ताभावप्रागभावयोः विरोधस्तु दीधित्यादावेव निरस्तः। घटे रक्तरूपं[3] नास्तीति प्रत्ययात् तस्य प्रागभावादिविषयकत्वे रक्तताप्रागभावादिमति[4] रक्तेऽपि तत्प्रसङ्गात्। वाय्वादौ रूपादिप्रागभावापत्तिस्तु शोभतेतराम्, अत्यन्ताभावस्य प्रागभावाव्याप्यत्वात्। केवलेत्यादिकमयुक्तम्; प्रयोजकत्वग्राहकतर्काभावस्योक्तत्वात्। तत्तन्तुसंयोगिनी[5]त्यादि न युक्तम्; तत्सम्बन्धिनि तदत्यन्ताभावस्य मिथ्यात्वानुमितिकाले सन्दिग्धत्वेन विरोधानिश्चयत्वात्, समवायवादिनं प्रति समवायेन, तादात्म्यवादिनं प्रति तादात्म्येनाभावस्य निवेशेन सिद्धसाधनाद्यभावात्, नैकदा त्रयाणां विवाद इति न्यायात्, तन्तुः पटीय इति धीविषयसम्बन्धेन सम्बन्धसामान्येन वाऽभावस्य निवेशसम्भवाच्च। इह तन्तुषु पट इति प्रत्यक्षस्य त्वादृशैरिव चन्द्रप्रादेशिकत्वप्रत्यक्षस्यापि बहुभिः परीक्षितत्वात्, विचारशूर[6]परीक्षितत्वस्य दार्ष्टान्तिकेप्यभावात्, अर्थक्रियामात्रस्य स्वाप्नपदार्थेऽपि सत्त्वात्। यत्रैतदित्यादिकं तु युक्तमेव; साध्यासमानाधिकरणाधिकरणं[7] यत्साधनवत्तन्निष्ठाभावप्रतियोगितावच्छेदकः साध्य[8]-

---

[1] नुपपत्तिरनुकूलस्तर्कः. [2] व्याप्यत्वात्. [3] रूपं. [4] रक्तप्रागभाववति. [5] संयोगी. [6] शून्य. [7] साध्यासमानाधिकरणं. [8] वच्छेदकसाध्यसमानाधिकरणं साध्य इत्यधिकः पाठः.

समानाधिकरणवृत्तिर्यो धर्मः तद्रूस्वरूपलक्षणस्योक्तोपाधौ[1] सत्त्वात् ज्ञानसम्भवाच्च। उक्तप्रतियोगित्वरूपसाधनवत्त्वेन उभयवादिनिश्चिते तत्तन्त्ववच्छिन्नचैतन्योपादानकसर्पादौ दशावच्छिन्ने तत्तन्तुसंयोगादौ च तत्पटोपादानोपादानकत्वाभावरूपसाध्यस्यासमानाधिकरणधर्मनिश्चयात्। एवं स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वादिलक्षणस्यापि सत्त्वात् पृथिवीतररूपसाधनतादात्म्येन निश्चिते जलादौ पृथिवीत्वाभावरूपसाध्यस्यासमानाधिकरणधर्मो नास्ति न ज्ञायते[2] चेति प्रथमलक्षणस्य स्वानधिकरणत्वादि नस्ति न ज्ञायते[2] चेति द्वितीयादिलक्षणस्यासत्त्वात्,[3] ज्ञातुमशक्य[4]त्वाच्च। पृथिवी इतरभिन्ना पृथिवीत्वादित्यादौ पाकजरूपाभावादेरुपाधित्वासम्भवात्, व्यतिरेकिमात्रोच्छेदाप्रसक्तेः पाकजरूपाभावरूपोपाधिव्यभिचारित्वस्य पृथिवीतररूपसाधने निश्चयाभावे तेन हेतुना पृथिवीत्वाभावरूपसाध्यव्यभिचारित्वानुमानासम्भवाच्च,[5] सत्प्रतिपक्षोन्नायकतया दूषकत्वस्य तत्रासम्भवाच्च। उक्तं हि दीधितौ—"यत्र यद्दोषोन्नायकत्वमुपाधेः, तत्र तदुन्नयनौपयिक[6]; रूपवैकल्यमाभासत्वे बीजम्" इति। न च तथापि सन्दिग्धोपाधित्वं पाकजरूपाभावादेः स्यादिति वाच्यम्; साध्यहेत्वोर्व्याप्तिग्राहकतर्कसत्त्वात्। तदुक्तं हि मणौ—"यत्र साध्यहेत्वोः साध्योपाध्योर्वा व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयः, तत्र सन्दिग्धोपाधित्वम्। यत्र तु एकत्र तर्कावतारः, तत्र हेतुत्वमुपाधित्वं वा निश्चितम्। अत एव पक्षेतरत्वं न सन्दिग्धो[7]पाधिः" इति। न चैवमुक्तसर्पादावुक्तसाधननिश्चयस्योभयवादिनोः सम्भवेन साधनाव्यापकत्वसौलभ्यात् पक्षावृत्तेः पक्षवृत्तितया सन्दिह्यमानेत्युक्तिर्व्यर्थेति वाच्यम्; यदि उक्तसर्पादौ नोक्तसाधननिश्चयः, तथापि यत्रैतत्तन्त्वित्यादिव्याप्तिग्राहकतर्काभावा-

---

[1] क्तोपाय. [2] जायते. [3] स्य सत्वात्. [4] ज्ञा.तुं शक्य. [5] मानात्सम्भवाच्च.
[6] नौपाधिक. [7] तरत्वं संदिग्धो.

त् सान्दिग्धोपाधित्वमेतान्निष्ठप्रागभावाप्रातियोगित्वस्याव्याहतामित्याभिप्रायेण तथोक्तत्वात् । संयोगादिना दृश्यत्वोपपादनं तु प्रतिवक्ष्यते । उपाधिरेवेत्यादिकं तु न युक्तं ; 'उपाधित्वे साध्यसमनियतत्वादिकं नोपयुज्यते' इत्यादेर्मण्यादावुक्तत्वात् । साध्यासमनियतत्वान्न हेतुत्वमित्युक्तौ न लज्जेति चित्रम् । तथा सति धूमादेर्वह्न्याद्यहेतुत्वापत्तेः । तर्कसत्त्वात्तत्र हेतुत्वमिति चेत्तर्हि साम[1]नैयत्यं क्वोप[2]युक्तम् ? वक्ष्यन्ते च प्रकृतहेतौ तर्काः । साध्यवति ब्रह्मणीत्ययुक्तम् ; ब्रह्मणोऽत्यन्ताभावप्रतियोगित्वे मानाभावस्य उक्तत्वात् । एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः एतत्पटानाद्यभावत्वादित्यादिनव्यानुमानेषु परेणात्राशङ्कितमग्रे समाधेयम् । समाहितप्रायं चेत्याचार्यैरुपेक्षितम् । यदपि मिथ्यात्वघटकोऽभावो यदि न तात्त्विकः, तदा सिद्धसाधनादि । अथ यदि तात्त्विकः, मण्डनमते भावाद्वैतस्वीकारान्नाद्वैतहानिरिति तदाऽभावे अभावत्वादेर्ब्रह्मणि तदाश्रयत्वादेरावश्यकत्वात् भावाद्वैतमपि व्याहतम् । अभावस्य प्रवृत्तिनिमित्तस्य सम्भवात् ब्रह्म वाच्यं स्यात् । अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वयोः संसर्गासिद्धिश्च, अन्यस्य तत्त्वावेदकत्वं नास्त्येवेत्यभावः कथं तात्त्विकः ? अद्वितीयपदस्य भावरूपद्वितीयाभावपरतया सङ्कोचे बीजाभावश्च । भावस्यापि स्वाभावाभावत्वेन सत्यता स्यात् । भेदोप्यभावत्वात् सत्यः स्यात् । ध्वंसादेस्सत्यत्वे मिथ्याप्रतियोगिना विरोधो न स्यात् । भावत्वस्येवाभावत्वस्यापि दुर्वचत्वात् कथमभावस्सत्यः ? दृश्यत्वादिहेतोरभावे व्यभिचारश्चेत्युक्तम् । तत्रोक्ताभावस्यातात्त्विकत्वमाचार्यैर्विवेचितत्वाददोषम् । तात्त्विकत्वमपि ब्रह्मान्यस्याभवस्य मण्डनमते युक्तमेव ; अभावत्वाभावाश्रय[3]त्वादेरतिरिक्तस्यानङ्गीकारादभावस्वरूपेण प्रतियोगिविशेषितेन ब्रह्माद्वैतमिति व्यवहारोपपत्तेः, अभावत्वस्यातिरिक्तत्वेप्यनुयोगिताविशेषरूपस्य तस्य प्रतियोगिताया इवातात्त्विकत्व[4]सम्भवात् । आश्रयत्वमतिरिक्तमि-

[1] सम. [2] नोप. [3] अभावत्वाश्रय. [4] तात्त्विकत्वा.

त्युक्तिस्तु शोभते, सम्बन्धस्यैवाश्रयत्वरूपत्वात् । अभावस्य त्वधिकरणमेव स्म्बन्ध इति द्वितीयाभावाश्रयत्वस्य ब्रह्मरूपत्वात् अभावस्येत्यादि न युक्तम् ; ब्रह्मणो विशिष्टरूपेण वाच्यत्वेपि तात्पर्यानुरोधेन लक्षणाङ्गीकारात् । अखण्डार्थेन महावाक्येनाभावासिद्धावपि 'एकमेवाद्वितीयम्' इत्याद्यवान्तरवाक्येन तत्सिद्धेः, तस्य च मण्डनमाते अखण्डार्थत्वाभावेऽप्यक्षतेः । न चावान्तरवाक्ये शुद्धाबोधे महावाक्ये तद्भानं न स्यादिति वाच्यम् ; ज्ञानानन्दादिपदेभ्योऽवान्तरवाक्यजन्यबोधे शुद्धरूपेणापि भानात्समानाधिकृतनानानामघटितस्यैकमेवाद्वितीयमित्यादेरेव सिद्धान्तेऽखण्डार्थत्वात्, नेह नानेत्यादिश्रुतेः मिथ्यात्वानुमितेश्चाभावसिद्धिसम्भवाच्च । न चैवं मिथ्यात्वघटकवस्तुमात्रस्यैव तात्त्विकतापत्तिः, स्वाधिकसत्ताकस्वसमानाधिकरणाभावप्रतियोगित्वस्य मण्डनमतेऽनुमेयतया तदन्यथानुपपत्त्याऽभावस्य तात्त्विकतासिद्धावपि तदन्यत्वस्य[1] तत्सिद्ध्यसम्भवात् । अतएवाद्वितीयपदे उक्तसङ्कोचोऽपि प्रामाणिकः । अन्यथा तत्राभावस्यापि निषेधे स्वप्रतियोग्याधिकसत्तानुपपत्तेः । किंच तत्त्वज्ञानोद्देशेन प्रवृत्त्यन्यथानुपपत्त्या तत्त्वज्ञानकार्योऽविद्याध्वंसो वाच्यः । तस्य च मिथ्यात्वे तत्त्वज्ञानबाध्यत्वान्न तत्कार्यत्वमिति स तात्त्विकः । एवंच मिथ्यात्वघटकात्यन्ताभावोऽ[2]विद्याध्वंसश्च तात्त्विक , तदन्यत् दृश्यजातं मण्डनमतेऽपि मिथ्यैव, तात्त्विकत्वग्राहकयुक्त्यभावादिति भावस्येत्यादि निरस्तं बोध्यम् । अभावत्वं दुर्वचत्वान्मिथ्यैव सप्रतियोगिकत्ववत् उक्ताभावव्यावृत्तदृश्यत्वं ध्वंसप्रतियोगित्वादिकमेव वा मण्डनमते मिथ्यात्वे हेतुरिति न व्यभिचारः ॥

सारस्वतैस्तर्करत्नैश्चान्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डानामखण्डि सांशताहुतिः ॥

इत्यांशित्वविचारः.

---

[1] तदन्यस्य. [2] भावे योऽविद्या.

## सोपाधिकत्वभङ्गः

**ननु दृश्यत्वादिहेतवः सोपाधिकाः; तथाहि—स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं वा विपक्षाद्व्यावृत्तं समव्याप्तम्। अतएव व्यतिरेकव्याप्तिमदुपाधिरिति चेन्न; ब्रह्मज्ञानमात्रबाध्ये देहा-**

---

**स्वबाधकेत्यादि**। यत्रोपाधिः स्थाप्यः स स्वपदार्थः। स्वबाधकेन ज्ञानेनाबाध्यो यो दोषस्तत्प्रयुक्तं भानं यस्य तत्त्वम्, शुक्तिरूप्यादौ साध्यव्यापकं वियदादेः स्वबाधकाबाध्य[1]दोषाप्रसिद्ध्या शुक्तिरूप्यादावेव प्रसिद्धं तद्वियदादिनिष्ठसाधनाव्यापकं बोध्यम्। **स्वबाधकाबाध्यबाधकमित्यादि**। स्वपदार्थः पूर्ववत्। शुक्तिज्ञानादिरूपं यत् स्वबाधकं तदबाध्यं नात्र रूप्यमित्यादिधीरूपं, बाधकं प्रति निषेध्यत्वेन विषयः शुक्तिरूप्यादिः, स्वबाधकाबाध्यधीविषयत्वं वियदादावप्यस्ति, तद्बाधकब्रह्मज्ञानाबाध्यचिद्विषयत्वस्य तत्र सत्त्वात्। अतो बाधकं प्रति **निषेध्यत्वेनेति**। तथाच स्वबाधकाबाध्यस्वप्रतियोगिकाभावबुद्धिकत्वं समुदायार्थः। आकाशाद्यभावबुद्धेस्तद्बाधकब्रह्मज्ञान[2]-बाध्यत्वादाकाशादावुक्तोपाधेरभावेन न साधनव्यापकतेति भावः। **विपक्षेत्यादि**। विपक्षात् ब्रह्मणस्तुच्छाच्च व्यावृत्तं, अतः समव्याप्तमित्यर्थः। उदयनादिमते समव्याप्तस्यैवोपाधित्वादिदमुक्तम्। **अतएव** समव्याप्तत्वादेव। ययोः व्यतिरेकव्याप्तिः, तयोरेव व्याप्य[3]वृत्तिव्यतिरेकिणोः अन्वयव्याप्तिः। अतएव पक्षेतरत्वं नोपाधिः, व्यर्थविशेषणत्वेन व्यतिरेके[4] व्याप्त्यभावादिति मते साध्यान्वयव्यतिरेकोन्नायकस्वान्वयव्यतिरेकत्वरूपं साध्यप्रयोजकत्वमुपाधित्वम्। अतएव पक्षेतरत्वेनोपाधिरिति मते च उपाधित्वसंपादनायाह—**व्यतिरेकव्याप्तिमदिति**।

---

[1] काबाध्या. [2] द्बाधकत्वमज्ञान. [3] व्याप्ति. [4] व्यतिरेक. [5] स्वाभावक.

**त्मैक्ये मिथ्याभूते साध्याव्यापकत्वात् पर्वतावयववृत्त्यन्यत्वादिवत्, साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरतुल्यत्वाच्च।**

---

साध्याभावव्याप्यस्वाभावकत्व[1]मित्यर्थः । **साधनवदिति** । पर्वतावयववृत्तीत्यस्य स्वबाधकेत्यादेश्च विशेषणस्य पर्वतावयवरूपादेः वासनादि[2]-दोषप्रयुक्तविकल्पविषयादलीकाच्च विपक्षाद्व्यावर्तकत्वात् साधनवदिति साधनवत्पक्षव्यावर्तकं यत्साधनवद्विपक्षाव्यावर्तकं विशेषणं तद्वत्त्वेनेत्यर्थः । साधनवद्विपक्षनिष्ठभेदप्रति[3]योगितावच्छेदकताया यन्निष्ठाया अनवच्छेदकं यद्विशेषणं तत्र तत्साधनवद्विपक्षाव्यावर्तकमन्यत्वादिनिष्ठोक्तावच्छेदकताया अनवच्छेदकं पर्वता[4]वयववृत्त्यादिकं पर्वतो धूमवान् वह्नेरित्यादौ साधनवद्विपक्षे अयःपिण्डादौ पर्वतावयववृत्त्यन्यत्वादि[5]मद्भेदासत्त्वात्स्वबाधकेत्याद्युपाधौ यद्यपि प्रकृतसाधनवान् विपक्षोऽप्रसिद्धः, तथापि साधनवद्विपक्षव्यावर्तको यावान् प्रसिद्धः तत्तदन्यत्वं स्वबाधकेत्यादिविशेषणेऽप्यस्त्येव । यद्विशेषणघटितस्य यस्योपाधेराश्रयाद्भिन्ने साधनवत्त्वविपक्षत्वोभयाभावः तत्तत्र साधनवद्विपक्षा[6]व्यावर्तकमिति वा बोध्यम् । आर्द्रेन्धनस्य तु आर्द्रत्व[7]विशेषणं साधनवद्विपक्षव्या[8]वर्तकमिति तदुपाधिः । **पक्षेतरतुल्यत्वादिति** । यदा[9] साध्यव्यापकताग्राहकतर्काभावनियतात् साधनवत्पक्षमात्रव्यावर्तकविशेषणात् पर्वतेतरत्वादिकं नोपाधिः, न वोपाधित्वेन कथायामुद्भाव्यं, तदा[10]पर्वतावयववृत्त्यन्यत्वादिकं स्वबाधकेत्यादिकं च तर्काभावे पक्षे व्यभिचारसंशयेन साध्यव्यापकत्वानिश्चयादित्यर्थः । उक्तं हि मणौ—न च पक्षतरत्वे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः, तत्र अनुकूलतर्काभावेन व्यापकत्वानिश्चयात्। बाधोन्नीते च तर्कोऽस्त्येव । एवं पर्वतावयववृत्त्यन्य-

---

[1] स्वाभावक. [2] वा साधनादि. [3] निष्ठप्रति. [4] पर्वतीया. [5] वृत्तित्वादि. [6] द्विपक्ष. [7] आदित्यादि. [8] द्विपक्षवद्व्या. [9] यथा. [10] तथा.

त्वादिकं नोपाधिः, पक्षमात्रव्यावर्तकविशेषणवत्त्वात् । उक्तं च तत्र दीधितौ—“तर्कादिना व्यापकतानिश्चये तु पक्षेतरत्वमपि बाधोन्नीतपक्षेतरत्ववन्निश्चितोपाधिः,[1] पक्षमात्रव्यावर्तकविशेषणवत्त्वं तु नानुपाधितायां बीजं, परिभाषामात्रत्वात्, किन्त्वनुकूलतर्काभावेन तादृशव्यापकत्वानिश्चय इति, तथाकथकसम्प्रदायानुरोधात् बाधानुन्नीतः[2] पक्षेतरो न कथायामुपाधित्वेनोद्भाव्यते” इति । ईश्वरवादे च मणावुक्तं—“पक्षेतरत्वादौ विपक्षबाधकाभावात् न साध्याव्यापकतानिश्चय इत्यनुपाधित्वे बीजम्” इति । अतएव सन्दिग्धोपाधित्वमपि तस्य नास्ति, दृश्यत्वादिहेतोः साध्ये व्यापक[3]ताग्राहकतर्कसत्त्वात्, उक्तोपाधौ साध्यव्यापकताग्राहकतर्कासत्त्वाच्च । उक्तं हि मणौ—“यत्र साध्योपाध्योः हेतुसाध्ययोः व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयः, तत्र सन्दिग्धोपाधित्वं, व्यभिचारसंशयाधायकत्वात्, यत्रत्वेकत्र तर्कावतारस्तत्र हेतुत्वमुपाधित्वं वा निश्चितम्” इति । विपक्षाद्व्यावर्तकत्वेऽपि[4] साधनवद्विपक्षान्न व्यावर्तयतीत्यंशेन प्रकृतोपाध्योः पर्वतेतरत्वादिकं न सदृशं, किन्तु पर्वतावयववृत्त्यन्यत्वादिकमिति तदेव दृष्टान्तीकृतम् । तत्रायमभिप्रायः—पक्षेतरतुल्यत्वेन पर्वतावयववृत्त्यन्यत्वादेः यथोक्तमणिवाक्ये अनुपाधित्वमुक्तम्, तथा तत्सुसदृशयो[5]रुक्तोपाध्योरपि तदिति । यत्तु—‘व्यतिरेके साधारणत्वात् पर्वतेतरत्वस्य अनुपाधित्वं, न तु विपक्षाव्यावर्तकविशेषणवत्त्वादिति तन्न[6] दृष्टान्तीकृतम्’ इति, तत्तुच्छम्; उक्तविशेषणात् तदनुपाधित्वस्य मण्यादावुक्तत्वात्, तदभावस्य पक्षमात्रवृत्तित्वेन असाधारणत्वादन्वयव्याप्त्या सत्प्रतिपक्षासम्भवेऽपि व्यतिरेकव्याप्त्या तत्सम्भवाद्व्यभिचारज्ञापकतया दूषकत्वे तदभावासाधारण्यस्याप्रयोजकत्वात्, सत्प्रतिपक्षोन्नायकतयैवोपाधेः दूषकत्वे सत्प्रतिपक्षे

---

1 पक्षेतरत्वविनिश्चिते उपाधिः. 2 बाधानुन्नीत. 3 साध्यव्यापक. 4 कत्वे सत्यपि. 5 तथाच तर्कसदृशयो. 6 तत्र.

**न च बाधोन्नीतत्वात् सोप्युपाधिः, बाधस्याग्रे निरसिष्यमाणत्वात्। अपिच यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वम्, इतरांशे अनुकूलतर्काप्रसरात्। तथाच 'क्षित्यादिकं न कर्तृजन्यं, शरीराजन्यत्वात्' इत्यत्र यथा शरीरविशेषणवैयर्थ्यान्न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्, एवं**

---

उपाध्युद्भावनाभावप्रसङ्गात्। यदपि प्रथमोपाधौ विशेषणं साध्यसमव्याप्त्यर्थं न तु पक्षमात्रव्यावृत्त्यर्थम्, अतस्तस्योपाधित्वमव्याहतमिति, तदपि न; समव्याप्त्यर्थमुक्तस्यापि साधनवत् पक्षमात्रव्यावर्तकत्वानपायात्। न हि तत्पक्षव्यावृत्तिमात्रार्थमुपात्तत्वम्,[1] अपितूक्तरूपम्। किंच दोषप्रयुक्तभानत्वं न ब्रह्मणि, तस्य स्वप्रकाशत्वात्। अतो विशेषणं विनापि साध्यसमव्याप्तिसत्त्वमिति न तदर्थं विशेषणं, किन्तु पक्षमात्रव्यावृत्त्यर्थमेव। भानं हि चैतन्यं चेत्तदा न तत्कुत्रापि दोषप्रयुक्तं, अनावृतचैतन्यं चेत्तदा वृत्तिद्वारा ब्रह्मण्यपि दोषप्रयुक्तं तद्वाच्यम्। तथाच परोक्षप्रातीतिके तस्य साध्याव्यापकत्वमतो वृत्तिरूपं तद्वाच्यम्। न च ब्रह्मणि दोषप्रयुक्तं तदस्ति, बाध्य[2]विषयकवृत्तेरेव दोषप्रयुक्तत्वात्। न च बाध्याविषयकत्वेऽपि तत्वाविषयकत्वेनालीकाकारवृत्तेः वासनादिदोषप्रयुक्तत्वादलीकवारणायोक्तविशेषणमावश्यकमिति वाच्यम्; अलीकाकारवृत्तेरस्माभिरस्वीकारात्, त्वया स्वीकारेऽप्यस्मान् प्रत्युपन्यस्तोपाधावुक्तविशेषणवैयर्थ्यात्। **बाधोन्नीतत्वादिति**। पक्षे साध्याभावनिश्चयरूपबाधेन[3] निर्णीतसाध्य[4]व्यापकताकत्वादित्यर्थः। यथा वह्निरनुष्णः कृतकत्वादित्यादौ वह्नीतरत्वमुपाधिः, पक्षस्य साध्याभाववत्तया निश्चितत्वरूपाद्विपक्ष[5]त्वाद्विपक्षाव्यावर्तकविशेषणशून्यत्वात् तथा स्वबाधकेत्यादिकमपीति भावः। **यदिति**। यदवच्छिन्नप्रतियोगिताकेत्यर्थः। **साधकत्वं** व्याप्यत्वम्। **तस्य** तद्विशिष्टस्य। **यथा शरीरेत्यादि**। शरीरजन्यत्वं यदि कर्तृजन्यत्वव्यापकं

---

[1] मुपात्तम्. [2] बाद्य. [3] निश्चयानेरूपकबाधे. [4] बाध्य. [5] रूपविपक्ष.

**'वियदादिकं न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्त-भानत्वरहितत्वात्' इति साध्यव्यतिरेकसाधने स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्त-भानत्वं न मिथ्यात्वव्यापकम्। दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्। तच्च साधनव्यापकमपीति नोपाधिः;**

न स्यात्तदा कर्तृजयत्वाभावव्याप्याभावप्रतियोगि न स्यादिति तर्को नावतरति, लाघवेन जन्यत्वाभावेनैव व्याप्यतासम्भवेन शरीरविशेषण-वैयर्थ्यादिष्टापत्तित्वादिति यथा मण्यादावुक्तम्, एवं **स्वबाधकेत्यादि** न[1] मिथ्यात्वव्यापकं, यदि तत्तद्व्यापकं न स्यात् तदा तदभावव्याप्य-स्वाभावकं न स्यादित्यापत्तेरिष्टत्वाल्लाघवाद्दोषप्रयुक्तभानत्वाभावत्वेनैवा[2]-मिथ्यात्वव्याप्यतासम्भवेन स्वबाधकेत्यादिवैयर्थ्यादित्यर्थः। यत्र तु विशिष्टाभावत्वेनैव व्याप्यता व्यर्थविशेषणत्वाद्यभावात्तत्र विशिष्टरूपेणापि व्यापकत्वं, तर्कप्रसरात्। उक्तं हि मणावीश्वरवादे—"धूमविशेषादौ चन्दनवह्न्यादेः कारणत्वाद्विपक्षबाधकेन[3] विशिष्टस्य व्यपकत्वाद्विशिष्टा-भावस्य हेत्वभावव्याप्यत्वं, यत्र तु विपक्षे बाधकं नास्ति तत्र विशिष्टव्यापकता नास्ति" इत्यादि। न च शरीरजन्यत्वाभावे जन्यत्व-सामान्याभावत्वस्यासत्त्वात्तत्र शरीरांशस्य तेन न वैयर्थ्यं, धूमत्वेनेव धूमप्रागभावे प्रागभावत्वस्य[3] स्वसमानाधिकरणव्याप्यतावच्छेदका-न्तरघटितत्वस्य व्यर्थविशेषणतारूपत्वादिति वाच्यम्; विशेष्यविशेष-णयोः प्रत्येकाभावयोरेव विशिष्टाभावत्वस्वीकारात्, येन विना व्याप्तिः गृह्यते तदेव व्यर्थविशेषणमिति मते[4] वा तथोक्तत्वात्। उक्तं हि मणौ—"उक्तस्थले शरीराजन्यत्वे व्यर्थविशेषणत्वं, लाघवेनाजन्यत्वस्यैव व्याप्यत्वात्, येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यताव-च्छेदकत्वनियमात्। अतएव घ्राणं पार्थिवं, रूपादिषु मध्ये गन्धस्यैव

[1] स्वबाधकेत्यादिना. [2] नैव. [3] साधकेन धूमप्रागभावत्वस्य. [4] प्रकृते.

**दृश्यत्वादिनैव मिथ्यात्ववत्तस्यापि साधनत्वात्। एवं द्वितीयोपाधावपि 'स्वबाधकाबाध्यबाधकं प्रति' इति विशेषणं व्यतिरेकसाधने व्यर्थम्। विशेष्यभागस्तु साध्यसाधनयोः**

व्यञ्जकत्वादित्यत्र रूपादिषु मध्य[1] इति असिद्धिवारकमपि न व्यर्थम्, तेन विना व्याप्त्यग्रहात्" इत्यादि। किंच तर्काप्रसरादित्यनेन व्यापकताग्राहकतर्कमात्रमुपाधित्वे बीजमुक्तम्। उक्तमण्यादिवाक्येऽपि तथोक्तम्। तथाच व्यर्थविशेषणत्वाभावेऽपि यथा शरीरजन्यत्वं तादृशतर्काभावात् न साध्यव्यापकम्। जन्यत्वमात्रं तु तत् यदि कर्तृजन्यत्व[2]-व्यापकं न स्यात् तदा कर्तृजन्यतावच्छेदकं न स्यादिति तादृशतर्कसत्त्वात् साध्याव्यापकम्। तथा स्वबाधकेत्यादि न मिथ्यात्वव्यापकं, तादृशतर्काभावात्। दोषप्रयुक्तभानत्वं तु तद्व्यापकम्। मिथ्याभूतवस्तुमात्रं यदि दोषप्रयुक्तभानं न स्यात्तदा मिथ्या न स्यात् परमते वियदादिवदिति तादृशतर्कसत्त्वादित्यत्र प्रकृतग्रन्थतात्पर्यम्। व्यतिरेके व्यर्थत्वं तु तादृशतर्काप्रसरबीजमात्रोपलक्षणत्वेनोक्तमिति ध्येयम्॥

ननु यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वं, तस्मिन् साध्ये श्यामत्वमुपाधिः, तथा दृश्यत्वादिना मिथ्यात्वे साध्ये दोषप्रयुक्तभानत्वं,[3] तस्मिन् साध्ये मिथ्यात्वमुपाधिः, अस्तु युगपदुभयसाधने त्वर्थान्तरं, मिथ्यात्व एव विप्रतिपत्तेस्तत्राह-- **दृश्यत्वादिनेति।** युगपदुभयसाधनेपि नार्थान्तरं, मिथ्यात्वत्वावच्छिन्नविधेयकानुमितेरुद्देश्यत्वादुभयविषयकसमूहालम्बनानुमितेरपि तथात्वादुद्देश्यतानाक्रान्तसिद्धेरेवार्थान्तरत्वात्। न च तथापि पक्षे[4] साधनवति द्वयोरपि सन्दिग्धत्वात्सन्दिग्धसाधनाव्यापकत्वात्सन्दिग्धोपाधित्वमेकैकस्याक्षतमिति वाच्यम्; साधने साध्यव्याप्यतानिश्चायकतर्कावतारे तदसम्भवस्योक्तत्वात्, साध्यं च नोपाधिरिति तार्किकोक्तेश्चेति। अथ यथा पर्वतावयववृत्तीति

[1] पञ्चसु मध्य.   [2] जन्यत्वं.   [3] भानवत्त्वं.   [4] तथा विपक्षे.

**व्यापक इति नोपाधिः। अतएवाधिष्ठानत्वाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः। अत्र च ब्रह्मणोऽपि बौद्धकल्पितदोषवद्धेतुजन्यक्षणिकत्वादिज्ञानविषयत्वात् समव्याप्तिसिद्ध्यर्थं अधिष्ठानसमसत्ताकेति विशेषणं, न तु पक्षमात्रव्यावृत्त्यर्थम्। अतो न पक्षेतरतुल्यतेत्यपास्तम्। ब्रह्मणीव ब्रह्मणि कल्पिते क्षणिकत्वादावपि मिथ्याभूते धर्मे अधिष्ठानसमसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वादुपाधेः साध्याव्याप्तेः, व्यतिरेकसाधने व्यर्थविशेषणत्वस्योक्तत्वाच्च। नापि श्रुतितात्पर्याविषयत्वमुपाधिः, श्रुतितात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया तदभा-**

विशेषणकृता पर्वता[1]वयवरूपादेर्व्यावृत्तिः[2] नोपाधितायामुपयुज्यते, किन्तु पक्षस्येव साधनाव्यापकत्वसम्पादकत्वादिति, उपाधित्वौपयिकी या विपक्षव्यावृत्तिः तदसम्पादकत्वादुक्तविशेषणस्य पक्षमात्रव्यावर्तकत्वं मण्यादावुक्तमिति दीधित्यादौ स्पष्टम्। तथा समव्याप्तिसम्पादकस्याप्यधिष्ठानेत्यादिविशेषणस्य ब्रह्मव्यावर्तकत्वस्य[3] स्वानधिकरणेत्यादिनिरुक्तोपाधित्वानौपयिकत्वादुक्तव्यावृत्त्यसम्पादकत्वेन पक्षमात्रव्यावर्तकत्वमक्षतम्। आर्द्रेन्धनादेस्तु आर्द्रत्वादिविशेषणकृतायोगोलकादिव्यावृत्तिः साधनाव्यापकत्वसम्पादकत्वादुपाधित्वौपयिकीत्याशयेनाह—**अतएवेति**। समव्याप्तिसम्पादकत्वेप्युक्तरीत्या पक्षमात्रव्यावर्तकत्वादेवेत्यर्थः। **ब्रह्मणीवेत्यादि**। स्वजनकाज्ञानविषयावच्छेदक[4]रूपाधिष्ठानघटितोक्तोपाधिर्यथा न ब्रह्मणि, तज्जनकाप्रसिद्धेः, तथा न तत्र कल्पिते क्षणिकत्वादावपि, तज्जनकाज्ञानविषयब्रह्मावच्छेदकाप्रसिद्धेः। तत्प्रसिद्धिस्तु शुक्तिरूप्यादौ। स्वजनकाज्ञानविषयसमसत्ताकदोषनिवेशे तु तत्राप्रसिद्ध्या साध्याव्यापकत्वमपि। **ब्रह्ममात्रेति**। अवान्तरतात्पर्यविषयत्वं तु यागादिनिष्ठे स्वर्गादिसाधनत्वे, न तु यागादौ, 'अनुप-

[1] कृतपर्वता. [2] व्याप्यवृत्तिः, [3] व्यावर्तकस्य, [4] विषयतावच्छेदक.

**त्वस्य साधनव्यापकत्वात् । नापि प्रातिभासिकत्वमुपाधिः । तद्धि ब्रह्मज्ञानेतरबाध्यत्वम्; तस्य च देहात्मैक्ये मिथ्याभूतेऽप्यसत्त्वेन साध्याव्याप्तेः, व्यतिरेके व्यर्थविशेषणत्वाच्च । नापि प्रतिभासमात्रशरीरत्वमुपाधिः, दृष्टिसृष्टिपक्षे साधनव्यापकत्वात्, परेषामसिद्धेश्चेति ॥**

**इति दृश्यत्वादीनां सोपाधिकत्वभङ्गः.**

---

लब्धेस्तत्प्रमाणम्' इति जैमिनिसूत्रैकदेशेन मानान्तरानुपलब्ध एव श्रुतितात्पर्योक्तेः । साधनत्वादिविशिष्टतया यागादाविव मिथ्यात्वविशिष्टतया दृश्यमात्र एव श्रुतितात्पर्यात् साध्याव्यापकत्वापत्तेः परमतात्पर्यमेव निवेश्यमिति भावः । दोषजन्यधीविषयत्वमपि परोक्तं साधनव्यापकं प्रतिभासमात्रशरीरत्वमज्ञानविषयतानवच्छेदकत्वं प्रातीतिक एव सत्त्वात् साध्यं व्याप्नोति, न तु साधनमिति भावः । **दृष्टीति** । प्रतिकर्मव्यवस्था तु तत्पक्षे नास्तीति भावः । **परेषां** तत्त्ववादिनाम् । शुक्तिरूप्यादीनां अत्यन्तासत्त्वेन तत्र तदसिद्धेः साध्याव्यापकत्वमित्यर्थः । अत्यन्तासत्त्वादेव तत्र नाज्ञानविषयावच्छेदकत्वमिति चेदसतः सत्त्वेन धीवादिनां भवतां तस्यापि[1] सम्भवात्, परेषां तत्त्व वादितार्किकादीनां तदसिद्धेरज्ञानाप्रसिद्धया तदप्रसिद्धेरिति वाऽर्थः - स्वकालत्वव्यापकस्वधीकत्वं तदित्युक्तमपि[2] सुखादिषु साक्षिभास्यत्वेन। तत्प्रसिद्धावपि शुक्तिरूप्यादावत्यन्तासत्त्वेन तदसिद्धिः । तार्किकादीनामपि क्वचित्तत्सिद्धावपि क्वचिच्छुक्तिरूप्यादौ तदसिद्धिरिति साध्याव्यापकत्वमिति भावः । चकार उक्तोपाधिषु दोषान्तराणि समुच्चिनोति । तथाहि—स्वबाधकेत्यादौ स्वत्वस्यानुगतत्वेपि स्वबाधकबाध्यत्वं, यदि स्वजनकाज्ञाननिवर्तकनिवर्त्यत्वं तदा जनकत्वस्य स्वावच्छेदकघटितत्वात् स्वजनकत्वस्य

---

[1] तस्यामपि. [2] तदित्युक्तावपि.

शुक्त्यवच्छिन्नविषयकत्वादिरूपावच्छेदकभेदेन[1] स्वजनकाज्ञाननिवृत्तिजनकत्वस्य शुक्तित्वप्रकारकेदंविशेष्यकत्वादिरूपावच्छेदकभेदेन नानाविधस्याननुगमः[2]। पल्लवाज्ञानास्वीकारपक्षे शुक्तिरूप्यादिबाधकब्रह्मज्ञाना[3]-बाध्यदोषाप्रसिद्धिः। यदि च स्वमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वं[4] तत्तथापि निश्चयस्य तत्तद्धर्मितावच्छेदकादिभेदेन नानात्वादननुगमः। नेह नानास्तीत्यादिश्रुत्यादिजन्येन ईश्वरीयेन वा मिथ्यात्वनिश्चयेन दोषमात्रस्य निश्चितमिथ्यात्वकत्वादेतादृशदोषाप्रसिद्धिः। अथ जनकत्वं तत्त्वं वा अखण्डं न तु स्वावच्छेदकघटितं पल्लवाज्ञानं चास्तीत्यङ्गीकृत्य आद्य एव पक्षः, दोषभिन्नं यत्स्वभिन्नं तदविशेष्यकमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकत्वं तदिति पक्षो वा ग्राह्यः[5]। उक्तश्रुतिजन्यादिमिथ्यात्वनिश्चयस्तु स्वाभिन्नविशेष्यकः। स्वभिन्ना[6]विशेष्यकमिथ्यात्वनिश्चयनिश्चितमिथ्यात्वकदोषप्रयुक्तभानकत्वस्य घटादावपि सत्त्वाद्दोषभिन्नेति। स्वाभिन्न यद्दोषभिन्नं तदविशेष्यकेन 'घटाविद्ये मिथ्या' इत्यादिनिश्चयेनाविद्यारूपदोषमिथ्यात्वं निश्चितमिति न घटादौ तदिति चेन्न; तथापि द्वितीयपक्षे शुक्तिरूप्यतज्ज्ञापकदोषौ मिथ्येति निश्चयमादाय साध्याव्यापकत्वाद्यत्र प्रातिभासिकान्तराविशेष्यकं स्वविशेष्यकं मिथ्यात्वज्ञानं न जातं, तत्रापि साध्याव्यापकत्वाच्च पक्षद्वयेऽपि दोषत्वस्य दोषमात्राननुगतत्वात्, साध्याव्यापकत्वादबाध्यान्तवैयर्थ्याच्च। न चान्यतमत्वेन दोषाणामनुगमः, अनन्तदोषघटिततया युगसहस्रेणापि दुर्ज्ञेयत्वापत्तेः। न च स्वरूपतोऽन्यतमत्वं निवेश्यमिति वाच्यम्; त्वन्मते तस्य स्वरूपतो ज्ञेयत्वे गोत्वादिजात्यपलापापत्तेः तावद्व्यक्त्यन्यतमत्वस्यैव तत्त्वसम्भवादविद्यान्यदोषाणामन्यतमत्वस्यैव निवेशसम्भवेन अबाध्यांश[7] वैयर्थ्यात्, साध्यव्यापकत्वस्य तेन रूपेण ग्राहकतर्काभावादन्यथाप्रातीतिकाना-

---

[1] त्वाद्रूपावच्छेदेन भेदेन. [2] स्यानागमः [3] बाधकज्ञाना. [4] निश्चयानिश्चितमिथ्याकत्वं. [5] पक्षो नायुक्तः. [6] स्वभिन्न. [7] साध्यत्वान्त.

मन्यतमत्वेन[1] तादात्म्येन उपाधित्वसम्भवात्तदपेक्षया गुरुरूपानुधावनस्य तेऽनुचितत्वात् । अविद्यान्यदोषप्रयुक्तभानत्वानि यावन्ति वस्तुगत्या तावन्निष्ठप्रतियोगिताया लघुना तावदन्यतमत्वेन स्वरूपतोऽवच्छिन्नत्वात् स्वबाधकेत्यादिरूपावच्छिन्नप्रतियोगिताकाभावत्वस्य अप्रसिद्धया तेन रूपेण साध्याभावव्याप्यत्वाभावात् स्वबाधकेत्यादिरूपेण व्यापकताग्राहकतर्काप्रसरादुपाधित्वासम्भवात् स्वाप्नादिभ्रमे स्वाप्नादिप्रातीतिकस्यापि दोषत्वेन तत्र स्वबाधकजाग्रदादिबोधबाध्यत्वेन साध्या[2]व्यापकत्वाच्चेति । एवमुपाध्यन्तरेपि दोषा बोध्याः । यत्तु—"देहात्मैक्ये साध्याव्यापकतोक्तिः न युक्ता, मम देह इति देहात्मभेदस्यानुभाविकत्वेन तस्यैवाप्रसिद्धेः । यद्व्यतिरेकस्येत्याद्यपि न युक्तम्; एकनिष्ठव्याप्यतायामवच्छेदकयोस्सम्भवे तयोर्लघुनैव अवच्छेद्या सा, न गुरुणा, यथा नीलधूमनिष्ठव्याप्यता धूमत्वेन, न नीलधूमत्वेन । न च विशिष्टाभावे विशेष्यसामान्याभावत्वमस्ति, येन तन्निष्ठव्याप्यता तेनावच्छिद्येत । ईश्वरानुमाने तु शरीरजन्यत्वस्यानुपाधित्वं श्रुत्येश्वरसिद्धौ, पक्ष एव साध्याव्यापकत्वात् । ब्रह्मणीवेत्याद्यपि न युक्तम्; समसत्ताकान्तेन व्यावहारिकबाधाबाध्यस्येत्यस्य वाच्यत्वात्, ब्रह्मणि क्षणिकत्वादिज्ञापकदोषस्याविद्यादिरूपस्य शून्यवाद्युत्थापिततर्कादेर्वा व्यावहारिकबाधाबाध्यत्वात् । ब्रह्मण एवेत्याद्यपि न युक्तम्; श्रुतिजन्यप्रमां प्रति विषयत्वस्य प्रपञ्चे अवश्यवाच्यत्वात् धर्मादौ तदनङ्गीकारे तदसिद्ध्यापत्तेः । उक्ता च देवताधिकरणे परै[3]र्देवताविग्रहादिप्रमा श्रुतिजन्या" इति, तत्तुच्छम्; मनुष्यत्वादिविशिष्टस्य ऐक्यस्यात्मन्यध्यासस्वीकारेण तत्सत्त्वेऽपि मम देह इत्यनुभवे बाधकाभावादहङ्कारस्यापि मन्मते अस्मदर्थत्वेन तद्भेदस्यैवोक्तानुभवविषयत्वसम्भवात्, त्वन्मते ममात्मेतिवद्भेदस्यैव षष्ठ्योल्लेखसम्भवाच्च । अन्यथा

---

[1] मनतीतत्वेन. [2] साध्यादि. [3] पदैः.

रजतमस्य स्वरूपमित्युक्तिमात्रेण इदंरजतयोरैक्यमप्यपलप्येत । विस्तरेण चैतदग्रे वाच्यम् । यद्यतिरेकेत्यादि युक्तं, विशेषणविशेष्ययोरेकैकाभावस्यैव विशिष्टधर्मावच्छिन्नप्रतियोगिताकत्वमित्यादेरुक्तत्वात् । ईश्वरेत्यादिकं तु शोभते; मीमांसकादिकं प्रतीश्वरानुमानस्य प्रवृत्ततया तेन श्रुत्येश्वरसिद्ध्यस्वीकारात् । अन्यथा सिद्धसाधनप्रसक्त्यैवानुमानवार्तालोपे उपाध्यन्वेषणा[1] नौचित्यात् । व्यावहारिकेत्यादिकं तु न युक्तम्; शुक्तिरूप्यादिज्ञापके दोषेपि व्यावहारिकस्य यद्बाधकं ब्रह्मज्ञानं तद्बाध्यत्वस्य सत्त्वात्, व्यावहारिकविषयकबाधाबाध्यदोषोक्तावपि व्यावहारिकदोषमात्रस्य तत्त्वेन शुक्तिरूप्यादाविव वियदादौ क्षणिकत्वादिज्ञानविषयत्वमादाय ब्रह्मणि चोक्तोपाधेस्सत्त्वेन साध्यसमव्याप्त्यभावात्, स्वं प्रतीत्यस्यापि बाधविशेषणत्वे [2] ततएव ब्रह्मनिष्ठक्षणिकत्वे तद्घटितोक्तोपाधेरसत्त्वात् साध्याव्यापकत्वस्य आवश्यकत्वात्तद्वारकस्य व्यावहारिकविषयकेत्यस्य व्यर्थत्वात् प्रातीतिकदोषज्ञाप्यप्रातीतिकविशेषे साध्याव्यापकत्वात् । श्रुतिजन्येत्याद्यपि न युक्तम्; नेह नानास्तीत्यादिश्रुतिजन्यप्रमाविषयत्वस्य दृश्यमात्रे सत्त्वस्योक्तत्वात् । निषेध्यत्वेन विषयत्वान्यविषयत्वोक्तावपि "इदगूँ सर्वमसृजत, सत्यं चानृतं च सत्यमभवत्" इत्यादिश्रुत्या मानान्तरनैरपेक्ष्येण ब्रह्मोपादानकत्वादिना कार्यमात्रप्रमापनात् कार्यमात्रनिष्ठकार्यतायाः व्यवहारकालाबाध्यत्वात् । अन्यथा घटादेरपि तादृशप्रमां प्रत्यविषयत्वात्, 'पृथिवी ब्रह्मेत्युपासीत' इत्यादिश्रुतिजन्यज्ञानस्य मानान्तरज्ञातपृथिव्याद्यंशे प्रमात्वाभावात् । किञ्चिदंशे[3] प्रमात्वविवक्षायां प्रातीतिकपृथिव्यादेरपि तादृशविषयत्वसम्भवान्मिथ्या नोपास्य[4]मिति सङ्क्षेपोक्ते-

---

[1] उपाध्यन्वेषणा. [2] तत एव ब्रह्मनिष्ठक्षणिकत्वस्यापि वारणाद्व्यावहारिकविषयकेत्यस्य व्यर्थत्वाच्च । प्रातीतिकदोषज्ञाप्यप्रातीतिकविशेषे ब्रह्मनिष्ठक्षणिकत्वे. इति कोशान्तरे पाठः. [3] किञ्चिदंशेन. [4] तन्नोपास्य.

## आभाससाम्यभङ्गः

**ननु—विमतं प्रातिभासिकं, दृश्यत्वात्; ब्रह्म मिथ्या, व्यवहारविषयत्वात् असद्विलक्षणत्वाद्वा शुक्तिरूप्यवदित्याद्याभाससाम्यमिति चेन्न; जगतो व्यावहारिकसत्त्वबाधे व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्चेति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वात्, प्रकृते च प्रतिकूलतर्कस्य निरसिष्यमाणत्वात्। किंच प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वं प्रतिभासमात्रशरीरत्वं वा? आद्ये साध्ये देहात्मैक्ये व्यभिचारः, अप्रयोजकत्वं च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्। एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनम्। निरुपाधिके व्यवहारविषयत्वरूपो हेतुरसिद्धः, वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजकः। एवमसद्विलक्षणत्वमपि**

मिथ्यात्वेन ज्ञातं नोपास्यमित्यत्र तात्पर्यात्। तथाच साध्यव्यापकत्वरक्षार्थमबाध्यविषयकत्वरूपप्रमात्वनिवेशे साधनव्यापकत्वस्य दुर्वारत्वात्॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तखण्डानामुपाधिरपसारितः॥

इत्युपाधिभङ्गः

---

**आभाससाम्यमिति**। उक्तानुमानाभासा यथा न साधकाः तथा प्रपञ्चमिथ्यात्वानुमानमित्यर्थः। प्रपञ्चमिथ्यात्वे नानुपपत्तिः, आभासे तु साऽस्तीत्याशयेनाह—**न जगत इत्यादि**। जगतः व्यावहारिकमात्रस्य। **व्यावहारिकसत्त्वेति**। अज्ञातसत्त्वेत्यर्थः। **व्यवहारेति**। चक्षुरादिजन्यवृत्तिप्रत्यभिज्ञादी[1]त्यर्थः। अज्ञातत्वावच्छेदकघटाद्यस्वीकारे चाक्षुषादिवृत्तेः विषयेन्द्रियसम्बन्धादिजन्यायाः पूर्वदृष्टस्य दृश्यमानेनैक्यप्रत्यभिज्ञादेश्चानुपपत्तिरिति भावः। **अप्रयोजक इति**। यदि ब्रह्म

---

[1] प्रत्यक्षादी.

**ब्रह्मण्यसिद्धमेव। क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्त्वम्, तद्विलक्षणत्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम्। तच्च शुद्धे ब्रह्मणि नास्त्येव। न च बाध्यत्वमसत्त्वं, तद्विलक्षणत्वं चाबाध्यत्वं, तच्च ब्रह्मण्यस्त्येवेति वाच्यम्; अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वसाधने विरोधात्, शुक्तिरूप्यदृष्टान्तस्य साधनविकलत्वाच्च, शून्यवादस्याग्रे निराकरिष्यमाणत्वाच्च। तस्माच्च दृश्यत्वादीनामाभाससाम्यमिति सिद्धम्॥**

**इत्याभाससाम्यभङ्गः.**

---

मिथ्या न स्यात्तदा वृत्तिविषयो न स्यादिति न तर्कः, मिथ्यात्वाभावेऽपि तत्र कल्पितस्य वृत्तिविषयकत्वस्य सम्भवात्। ब्रह्मणः साक्षित्वेन बाधकप्रमाणस्य तत्रानवतारादिति भावः। **तच्च शुद्ध इति।** सत्तादात्म्यसत्त्वा[1] न्यतरवत्त्वरूपमुक्तार्हत्वं निर्धर्मके ब्रह्मणि नास्ति, किन्तु तदुप हित इति भावः। शुद्धे तत्स्वीकृतमप्यप्रयोजकमित्याशयेनाह– **शून्यवादस्येति।** यत्तु–"सुखानुभवपर्यन्तव्यवहारस्याप्यव्यावहारिकत्वस्वीकारे का व्यवहारानुपपत्तिः? स्वप्नोत्थापिततर्कवन्न तर्कः प्रतिकूलः। किञ्चेत्याद्यपि न युक्तम्; देहात्मैक्याप्रसिद्धेः, दृष्टिसृष्टेरप्रमाणिकत्वादनुपाधिकस्याव्यवहारे तदसिद्ध्यापत्तेः। एवमित्यादिकमपि न युक्तम्; 'स्वे महिम्नि' इति श्रुत्या स्वस्मिन्नेव ब्रह्मणः प्रतीत्यर्हत्वात् मिथ्यात्वस्यैव मन्मते तुच्छ[2]रूपत्वात्, शून्यवादस्यैव स्वयं स्वीकृतत्वेन आपत्त्यनर्हत्वात्" इति, तत्तुच्छम्; घटादिज्ञाने अन्वयव्यतिरेकसिद्धस्य चक्षुरादिजन्यत्वस्य प्रत्यभिज्ञादिसिद्धस्य पूर्वोत्तरकालीनयोरैक्यस्य च व्यावहारिकत्वं स्वीकृत्यैव घटादौ व्यावहारिकत्वपक्षप्रवृत्तेः दृष्टिसृष्टेर्मुख्यत्वस्य[3] सिद्धान्तत्वात्। देहात्मैक्यं तु स्थापितमेव; सर्वस्यैव

---

1 तत्त्वा. 2 तुच्छत्व. 3 मुख्यत्वेनास्य.

## प्रत्यक्षबाधोद्धारः.

ननु 'सन् घटः' इत्याद्यध्यक्षबाधितविषया दृश्यत्वादय इति चेन्न; चक्षुराद्यध्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः। तथाहि—न तावत् प्रमाविषयत्वं तद्योग्यत्वं, भ्रमाविषयत्वं वा तादृक्सत्त्वम्; चक्षुराद्यगम्यभ्रमप्रमाघटितत्वेन चक्षुराद्ययोग्यत्वाद्वक्ष्यमाणदूषणगणग्रासाच्च। तथाहि—नाद्यः; असति प्रमाणप्रवृत्तेः तद्विषयत्वात् प्राक् सत्त्वस्य वक्तव्यत्वेन तस्य तदन्यत्वात्, सत्त्वनिरूपणं विना सदर्थविषयत्वरूपप्रमात्वस्य निरूपणे

---

दृश्यस्य परोक्षत्वापरोक्षत्वान्तरत्वबहिष्ट्वादिना यथानुभवं साक्षिणि कल्पनासम्भवादस्थिरज्ञानानामर्थानां च कल्पने गौरवात्, ज्ञानोत्पत्ति[1]कालत्वेन अभ्युपगतकाले अर्थानामेवोत्पत्तिस्वीकारे लाघवात्, दृष्टिसृष्टिपक्षस्यादरणीयत्वात् 'अचिन्त्यमव्यवहार्यम्' इत्यादिश्रुत्या अव्यवहार्यस्यापि ब्रह्मणः स्वत एव सिद्धेरुक्तत्वात्। एवमित्यादि युक्तम्; उक्तार्हत्वस्य स्वोपहित एव ब्रह्मणि सत्त्वात्, शुद्धे सत्त्वेऽप्यप्रयोजकत्वस्योक्तत्वात्, अस्मन्मते मिथ्यात्वस्य उक्तार्हत्वघटितत्वस्योक्तत्वात्त्वन्मतसिद्धस्य सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वस्यापि मिथ्यात्वस्य अत्यन्तासति ब्रह्मणि च सत्त्वे मानाभावस्योक्तत्वेन शून्यवादे अस्मत्स्वीकारोक्ते[2]रुन्मत्तप्रलापत्वान्न हि दृश्यमात्रमिथ्यात्वेन शून्यवादः, किन्तु सर्वासत्यत्वेन ॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डानामखण्ड्याभासतुल्यता ॥

इति आभाससाम्यभङ्गः

---

1 अज्ञानोत्पत्ति. 2 अस्मन्मतस्वीकारोक्ते.

चान्योन्याश्रयात्, मिथ्याभूतस्य शुक्तिरजतसंसर्गस्य व्यवसायद्वारा साक्षाच्च निषेध्यत्वादिना प्रमाविषयत्वाभ्युपगमाच्च। नापि द्वितीयः; योग्यताया अनिरूपणात्। न तृतीयः; असिद्धेः, सर्वस्यैव क्षणिकत्वादिना भ्रमविषयत्वाभ्युपगमात्। अत एव नासत्त्वाप्रकारकभ्रमाविषयत्वमपि, अन्योन्याश्रयाच्च। नापि सत्त्वप्रकारकप्रमाविषयत्त्वम्, आत्माश्रयात्। नापि असत्त्वप्रकारकभ्रमाविषयत्वं सत्त्वम्, अन्योन्याश्रयात्। नापि प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः, आत्माश्रयात्। नापि सत्ता जातिः अर्थक्रियाकारित्वं असद्वैलक्ष्यण्यं वा, एतेषां मिथ्यात्वाविरोधित्वेन तत्प्रत्यक्षेण मिथ्यात्वानुमाने बाधाभावात्। नापि वेदान्त्यभिमतमिथ्यात्वाभावस्सत्त्वम्, तुच्छे अतिव्याप्तेः। नाप्यसद्विलक्षणत्वे सत्यनारोपितत्वम्; अनारोपितत्वं हि आरोपाविषयत्वम्, तच्चासम्भवि; सर्वस्यापि क्षणिकत्वादिना आरोपविषयत्वात्। नाप्यस्तित्वप्रकारकप्रमां प्रति कदाचित्साक्षाद्विषयत्वं, कालसम्बन्धित्वं वा सत्त्वम्; अस्तित्वं च वर्तमानत्वम्, न तु

---

**व्यवसायद्वारेति**। रजतमिदं जानामीत्यनुव्यवसायरूपप्रमायाः व्यवसायांशे नेदं रजतमिति प्रमाया निषेधांशे विशेषणत्वं रजतादेरिति भावः। **आत्माश्रयादिति**। यद्यपि पूर्वोक्तान्योन्याश्रयस्थलेऽपि सत्त्वघटितत्वेनात्माश्रयत्वं, सत्त्वप्रकारकप्रमानिरूपणे तद्विषयत्वरूपसत्त्वनिरूपणं, तन्निरूपणे च तादृशप्रमानिरूपणमिति प्रकृतेऽप्यन्योन्याश्रयत्वं; तथापि स्फुटप्रतीतिमपेक्ष्य एकैकमुक्तम्। **प्रतिपन्नेति**। त्रैकालिकस्य स्वसत्त्वाभावस्य स्वधीविशेष्यदेशकालावच्छेदेन स्वस्मिन् या धीः 'अत्र रजतं नास्ति नासीन्न भविष्यति' इत्यादिरूपा तद्विषयत्वस्य शुक्तिरूप्यादिनिष्ठस्याभाव इत्यर्थः। **अस्तित्वेति**। अस्तित्वप्रकारतानिरूपितं प्रमाविशेष्यत्वमित्यर्थः। **वर्तमानत्वं** काल-

सत्त्वम्, अतो नात्माश्रयः। अतीतादिरपि कदाचित् 'वर्तत एवेति नाव्याप्तिः। आरोपितत्वं च कालत्रयासम्बन्धित्वेन बाधेन बोधितमिति न द्वितीयलक्षणे अतिव्याप्तिरिति वाच्यम्; प्रमात्वस्य सत्त्वघटितत्वेन चक्षुराद्ययोग्यत्वेन पूर्वोक्तदोषात्, वर्तमानत्वप्रकारकप्रमाविषयत्वेऽपि मिथ्यात्वाविरोधाच्च। द्वितीयमपि न मिथ्यात्वविरोधि; शुक्तिरूप्यस्यापि प्रतिभासकालसम्बन्धित्वात्, बाधेन तात्त्विककालत्रयसम्बन्धनिषेधेऽपि अतात्त्विककालसम्बन्धस्य अनिषेधात्। नापि तात्त्विककालसम्बन्धित्वं तत्; तात्त्विकस्याद्याप्यनिरूपणात्, निरूपणे वा शेषवैयर्थ्यात्। ननु भवन्मते यत् सत्त्वं ब्रह्मणि, तदेवेह मम। उक्तं हि—

'यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि।
तत्र स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः॥'

इति। न च तत्रापरिच्छिन्नत्वं सत्त्वम्, तच्च न जगतीति वाच्यम्; तुच्छस्यापरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमान्नापरिच्छिन्नत्वं सत्त्वम्। किन्त्वन्यदेव। तच्च ब्रह्मणीव भ्रमाधिष्ठानत्वाच्छुक्तिकादेरपि भविष्यतीति चेत्, नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रं तदेव ममापि गोत्रमिति वदतो वरस्य भ्राता भवान्। यतो जामातृश्वशुरयोः एकगोत्रत्वे विवाहानुपपत्तिवत् जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात्। तथाहि—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मण-

---

सम्बन्धित्वम्। तेन तत्तत्कालसम्बन्धित्वरूपवर्तमानत्वस्याननुगमेऽपि न क्षतिः। बाधेन तात्त्विकेति। तात्त्विकत्वेन कालसम्बद्धस्य[1] निषेधेऽपि कालसम्बन्धत्वेनानिषेधात् कालसम्बन्धित्वेन[2] निषेधपक्षेऽपि प्रतियोग्यभा-

---

[1] सम्बन्धस्य. [2] धात् सम्बन्धित्वेन.

**स्सत्त्वम्; तदेव चेज्जडस्यापि जगतः, तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः। चैतन्यस्यैवावच्छिन्नानवच्छिन्नाज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वाभ्युपगमात् न भ्रमाधिष्ठानत्वेन**

वयोः भिन्नसत्ताकत्वेन अविरोधादित्यर्थः। **रजतत्वविरोधीत्यादि**। यथा शुक्त्यवच्छिन्नसत्तातादात्म्यं[1] रजते कल्पितं व्यावहारिकरजतावृत्तित्वरूपरजतत्वविरोधादव्यावहारिकरजतवृत्ति; तथा तात्त्विकस्वप्रकाशसत्तातादात्म्यं प्रपञ्चे कल्पितं तात्त्विकस्वप्रकाशत्वविरोधीति अतात्त्विका[2] स्वप्रकाशवृत्त्युच्यत इति जगतो मिथ्यात्वोपपत्तेरित्यर्थः। **अवच्छिन्नेत्यादि**। अवच्छिन्नं चानवच्छिन्नं च तदवच्छिन्नानवच्छिन्नमिति समाहारः। तादृशं यदज्ञानविषयत्वं तेनेत्यर्थः। रजतादिभ्रमोपादानाज्ञानविषयत्वं शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठं, वियदाद्युपादाना[3] ज्ञानविषयत्वं तु अनवच्छिन्नचैतन्यनिष्ठमिति भावः। **न भ्रमेति**। भ्रमविषये अधिष्ठान सत्तायास्तादात्म्यारोपादधिष्ठानस्याबाधाच्च सद्रूपत्वं वाच्यम्। तत्रैकस्याश्चैतन्यव्यक्तेः सर्वभ्रमाधिष्ठान[4]त्वसम्भवेन सद्रूपतासम्भवे तदन्यत्र तत्कल्पने गौरवं, "नेह नानास्ति, त्रयमप्येतत् स्वप्नं, मायामात्रं, ज्ञानं यथा सत्यमसत्यमन्यत्" इत्यादिश्रुतिस्मृत्यादिविरोधश्चेति भावः। यत्तु—"ब्रह्मणि यत्सत्त्वं तदेव प्रपञ्चे इत्यस्य स्वप्रकाशाद्वितीयचैतन्यरूपं सत्त्वं प्रपञ्चगतमिति नार्थः; किन्तु यादृशं ब्रह्मसत्त्वं श्रुतिगम्यं मिथ्यात्वविरोधि तादृशं प्रपञ्चसत्त्वं प्रत्यक्षादिगम्यं मिथ्यात्वविरोधीति। ब्रह्मसत्त्वं च न स्वप्रकाशाद्वितीयत्वादिरूपं, मिथ्यात्वाविरोधित्वात्, सर्वं मेयमिति ज्ञानस्य स्वप्रकाशस्यापि त्वन्मते मिथ्यात्वात्, अवेद्यत्वादिरूपस्व[5] प्रकाशत्वयुक्तस्याद्वितीयस्य शून्य[6]-

[1] सत्तादात्म्यं. [2] अतात्त्विक. [3] वियदाद्यवच्छिन्नानवच्छिन्नाद्युपादाना.
[4] सर्वत्राधिष्ठान. [5] रूपस्य. [6] अशून्य.

शुक्त्यादेस्सत्त्वसिद्धिः । नन्वेवमपि सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वमसत्त्वं तुच्छानिर्वचनीयसाधारणम्, तदभावस्सत्त्वम् । तच्च ब्रह्मणीव जगत्यपीति ब्रूमः । न च संयोगे अव्याप्तिः, तस्याव्याप्यवृत्तित्वानभ्युपगमात् । तदभ्युपगमे च व्याप्यवृत्तित्वेनाभावो विशेषणीयः । नापि वियत्यव्याप्तिः; तदत्यन्ताभावस्य केवलान्वयित्वाङ्गीकारेण लक्षणस्य विद्यमानत्वादेव । न हि कस्मिंश्चिद्देशे काले वा तस्याभावः, नित्यविभुत्वभङ्गप्रसङ्गात् । आकाशात्यन्ताभावस्य केवलान्वयित्वाभ्युपगमे च वृत्तिमत्प्रतियोगिकत्वेनाभावो विशेषणीय इति चेन्न; चक्षुराद्ययोग्यानेकपदार्थघटितत्वेन एतादृशसत्त्वस्य ग्रहणे चक्षुरादेर-

स्यापि सद्विविक्तत्वादिरूपमिथ्यात्वाद्ब्रह्मणि श्रौतसत्यत्वव्यवहारप्रयोजकं यत्तद्विरहस्यैव मां प्रति प्रपञ्चे त्वया साध्यतया तथाभूतस्वप्रकाशत्वाद्वितीयत्वादेरभावस्य साधने सिद्धसाधनापत्तेश्च" इति, तत्तुच्छम्; अस्मदीयदूषणानवबोधात् । ब्रह्मसत्त्वं यदि हि प्रपञ्चे स्वीक्रियते, तदा तन्मिथ्यात्वोपपत्तेरित्यन्तेन प्रत्युक्तम्[1] । यदि यथा ब्रह्म सद्रूपं तथा वियदादीत्युच्यते, तदा चैतन्यस्येत्यादिना प्रत्युक्तम्[1] । ब्रह्मसत्त्वं च नेत्यादिकं तु प्रलापः । न हि ब्रह्मणि स्वविषयकत्वरूपं स्वप्रकाशत्वं मिथ्यात्वविरोधि ब्रूमः, येन सर्वं मेयमिति धीसाधारणं स्यात् । नाप्यवेद्यत्वादिमात्रं, येन तुच्छसाधारणम् । किन्तु अन्यानधीनापरोक्षताकत्वादिरूपं, तच्च ब्रह्मण्येवेत्युक्तम् । ब्रह्माणि सत्यताव्यवहारप्रयोजकं यदबाध्यस्वरूपं तन्निष्ठेनाबाध्यत्वव्यापकविषयत्वेन यो भेदः तादृशविषयतासम्बन्धेन ज्ञानात्यन्ताभावो वा तद्घटितं मिथ्यात्वं साध्यम् । अतो न सिद्धसाधनमित्याद्युक्तमेव । ब्रह्मस्वरूपमिव वियदादिस्वरूपमपि न बाध्यम्,

[1] प्रयुक्तम्

**सामर्थ्यात्। न हि सर्वदेशीयत्रैकालिकवृत्तिमत्प्रतियोगिकव्याप्यवृत्तिनिषेधप्रतियोगिकत्वं कस्यापि प्रत्यक्षम्; येन तदभावः प्रत्यक्षो भवेत्। वृत्तिमत्प्रतियोगिकत्वव्याप्यवृत्तित्वपरित्यागेऽपि सर्वदेशीयत्वत्रैकालिकत्वयोरयोग्यत्वात्। ननु स्वदेशकाल-**

---

तत्त्वे गौरवादिति चेत्, सेयं मिथ्यात्वबोधकश्रुत्यनुमानादौ तवापरिचितिः। सा चापसार्यत एव। **नित्यत्वेति**। यदाऽऽकाशस्यात्यन्ताभावस्तदा तस्य ध्वंसः प्रागभावो वा वाच्यः, तथाचानित्यत्वं स्यात्। यत्र द्रव्ये तस्यात्यन्ताभावः तत्र तत्संयोगो न जात इति वाच्यम्। अन्यथा अत्राकाशमिति प्रतीतेः वृत्तिनियामकतत्संयोगेन तदत्यन्ताभावविरोधादव्याप्यवृत्तित्वानङ्गीकारात्। वृत्त्यनियामक एव तत्संयोग इति स्वीकारेऽपि तेन तद्विरोधात्। अन्यथा धनवत्यपि निर्धन इत्यादिव्यवहारापत्तिरित्यादेश्चित्सुखीयानुमाने उक्तत्वात्। तथाच सर्वमूर्तसंयोगित्वरूपं विभुत्वं न स्यात्। यद्यपि तत्संयोगिन्यपि समवायादिना तदत्यन्ताभावः तद्वत्यपि काले तत्सम्बद्धे देशावच्छेदेन तदत्यन्ताभावो वक्तुं शक्यः, तथापि तत्सम्बन्धिनि सम्बन्धान्तरेणापि न तस्यात्यन्ताभावः; किंतु यदीयसम्बन्धान्तरस्येति पूर्वोक्ताभिप्रायकमेतत्। अतएव नित्यजलीयरूपादावपि देशे संयुक्ततत्संयुक्तसमवायादिसम्बन्धसत्त्वेन[1] न तदत्यन्ताभावः। तथा सति तादृशरूपादिसमवायाद्याश्रये तत्संयोगस्यानङ्गीकार्यतया विभुत्वभङ्गप्रसङ्गादिति भावः॥

यत्तु—"सर्वसंसर्गकात्यन्ताभावनिवेशात् समवायादिना सर्वदेशीयात्यन्ताभावप्रतियोगित्वेऽपि गगनादौ न सत्त्वलक्षणाव्याप्तिः" इति, तत्तुच्छम्; सर्वसंसर्गकत्वं हि यदि सर्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वं, तदाऽसम्भवः। न हि सर्वत्र सर्वैस्सम्बन्धैः किञ्चिदस्ति[2]। यदि सर्व-

---

[1] सम्बद्धत्वेन. [2] कश्चिदस्ति.

**वृत्तिनिषेधप्रतियोगिकत्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् तत्संवलितं कालत्रयवृत्ति**

---

सम्बन्धानां अन्यतमावच्छिन्नप्रतियोगिकत्वं तत्तथापि शशविषाणादावतिव्याप्तिः। यथा हि भेदप्रतियोगिता न नव्यनये तादात्म्यसम्बन्धावच्छिन्ना, तत्त्वे[1] मानाभावात् घटत्वादिना भेदस्यैव घटादितादात्म्यविरोधित्वसम्भवात्। यथावा ध्वंसप्रागभावयोः प्रतियोगिता न केनापि धर्मेण सम्बन्धेनाऽवच्छिन्ना, मानाभावात्, तथा तुच्छनिष्ठाप्यभावप्रतियोगिता न केनापि धर्मेण सम्बन्धेन वा अवच्छिन्ना, मानाभावात्, स्वप्रतियोगिकाभावमात्रेण तुच्छस्य विरोधसम्भवात्। अथैवं तुच्छस्याभावोपि न सिद्ध्येत् मानाभावात् तस्यायोग्यत्वेन अप्रत्यक्षत्वादनुमानस्याप्रयोजकत्वेन अनवतारादिति चेत्, सोयं तुच्छवादिनस्तवैवं गर्तपातः। यत्तु अश्वे गोत्वं नास्तीति प्रतीतिः गोत्वाश्वत्वयोः संसर्गमलीकं निषेधप्रतियोगितया अवगाहत इति अश्वाद्यवच्छेदेन गोत्वाभावस्य सर्वकालवृत्तित्वात् सर्वकालिकत्वमेवाभावे निवेश्यं, तादृशाभावप्रतियोगिकत्वमसदनिर्वाच्ययोरेव सर्वदेशीयाभावप्रतियोगित्वं घटादावपीति तन्नोक्तमिति मतं, तत्परोक्तमपि गोत्वादेः प्रतियोगित्वानुभवापलापादलीकसंसर्गस्य प्रतियोगित्वेनानुल्लेखाच्चाचार्यैर्न शङ्कितम्। न हीत्यादि[2]वृत्तिमत्प्रतियोगिकाभावादिकं न प्रत्यक्षं, वृत्तिमान् यद्यत्र स्यात्तदोपलभ्येतेत्यादिरूपापादनासम्भवात्। प्रतियोगिसत्त्वहेतुकापादन[3]योग्योपलब्धिप्रतियोगिकत्वरूपयोग्यतायाः प्रतियोग्यनुपलब्धावभावात् वृत्तिमदादेः सत्त्वेप्यतीन्द्रियत्वादिना तदनुपलब्धिसम्भवादिति भावः। **तत्संवलितेति**। सर्वदेशकालघटितं मिथ्यात्वं, परमते मिथ्यात्व-

---

1 तत्तत्त्वे. 2 न तर्हीत्यादि. 3 हेतुनापादन.

**सर्वदेशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यत इति चेन्न; स्वदेशकालवृत्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तदभावस्य सुतरां तदयोग्यत्वात्। स्वदेशकालवृत्तियत्किञ्चिन्निषेधाप्रतियोगित्वस्य मिथ्यात्वाविरोधित्वात् स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यस्य च स्वप्रतियोगिकात्यन्ताभावाप्रसिद्ध्या केवलान्वयिनि सम्बन्धभेदेन घटादौ चासिद्धेः। स्वात्यन्ताभावयावदधिकरणावृत्तित्वं वा, स्वात्यन्ताभावयत्किञ्चिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च। तस्मात् तत्प्रकारान्तरस्य निरूपयितुमशक्यत्वात् मिथ्यात्वाविरोधित्वाच्च स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्य-**

---

स्यासत्त्वरूपत्वात्। अस्मन्मतेऽपि स्वदेशकालवृत्तिनिषेधप्रतियोगित्वरूपं तद्ग्रहीतुमशक्यम्, तदभावस्य गृहीतत्वादिति बोध्यम्। **पूर्वोक्तेति**। एतेन—"अत्यन्ताभावसामान्ये यत्प्रतियोगिकत्वयत्सामानाधिकरण्योभयाभावस्तत्त्वं सत्त्वं वाच्यं, तत्सम्बन्धिनि तदभावस्वीकारे तु तत्सम्बन्धावच्छिन्नप्रतियोगितासामान्ये यन्निष्ठत्वस्य तत्सम्बन्धावच्छिन्नयदधिकरणतासमानाधिकरणात्यन्ताभावनिरूपितत्वस्य च द्वयोरभावस्तत्त्वं तत्केवलान्वयिनि च नाव्याप्तिः, तन्निष्ठत्वस्य स्वरूपसम्बन्धावच्छिन्नतदाधारतासमानाधिकरणतात्यन्ताभावनिरूपितत्वस्य च द्वयोः स्वरूपसम्बन्धावच्छिन्नप्रतियोगितासामान्ये अभावात्" इति प्रत्युक्तम्; अधिकरणे यावत्त्वकिञ्चित्त्वविकल्पेन तत्रतत्राप्युक्तदोषादुक्तोभयाभावधियः उक्तोभयत्वाघटितमिथ्यात्वधीविरोधित्वाभावाच्च। **स्वसमानेत्यादि**। स्वपदं लक्ष्यपरम्। **यावदिति** तादृशप्रतियोगित्वसामान्याभावाभिप्रायकम्। तेन तत्तत्प्रतियोगिताविशेषाभावज्ञानस्य मिथ्यात्वबुद्ध्यविरोधित्वेऽपि न क्षतिः। तथाच घटादिसमानाधिकरणात्यन्ताभावप्रतियोगित्व-

**मित्युक्तम् । ननु यस्मिन्कस्मिंश्चित् स्वदेशकालवृत्तिनिषेधे एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तिभूतेनोपस्थापितानां स्वदेशकालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्यः । ततस्सार्वदिक्सर्वदेशीयनिषेधप्रतियोगित्वस्य ग्रहणं घटे दुर्घटमिति चेन्न; एवं सामान्यलक्षणया सर्वनिषेधेषूपस्थितेष्वपि तत्प्रतियोगित्वाभावस्य चक्षुरादिना ग्रहीतुमशक्यत्वात् । योग्यप्रतियोगिक एव हि संसर्गाभावो योग्यः ।**

सामान्यस्य पटादिनिष्ठस्य घटादावभावसत्त्वात्तत्र लक्षणसङ्गतिः । पूर्वोक्तस्य मिथ्यात्वस्याभावः सत्त्वमित्युक्तौ तुच्छेऽपि तत्सत्त्वादतिव्याप्तिः । अतस्तथा नोक्तम् । अयोग्यत्वमुक्तात्यन्ताभावे इन्द्रियसन्निकर्षाभावात्प्रत्यक्षाविषयत्वमिति भ्रान्त्या शङ्कते—**नन्वित्यादि** । उक्ताभावेषु सामान्यलक्षणसन्निकर्षसत्त्वेप्युक्ताभावप्रतियोगित्वं यदि घटादौ स्यात्तदोपलभ्येतेत्यापादनासम्भवः[1] उक्ताभावप्रतियोगित्वस्य तत्र सत्त्वेपि तन्निरूपकाभावानां[2] अतीन्द्रियत्वाल्लौकिकसन्निकर्षाद्यभावाच्च अनुपलब्धिसम्भवात् । अतः उक्तप्रतियोगित्वाभावस्य न लौकिकप्रत्यक्षविषयत्वम् । अतएव दीधित्यादावुक्तं—"यथा विद्यमानमपि वह्नित्वे रासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृह्यते, अभावदेशविप्रकर्षादिना ग्राहकाभावात्, तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपि" इति । नानुपलब्धेः प्रतियोगिसत्त्वविरोधित्वरूपयोग्यतेति तदभावो नाध्यक्ष इतीत्याशयेनाह—**नैवं सामान्येत्यादि** । **योग्यप्रतियोगिक इति** । स्वप्रतियोग्युपलम्भापादकता[3]योग्यप्रतियोगिक इत्यर्थः । **संसर्गाभाव इति** । अभावमात्रं विवक्षितम् । येन संसर्गेण यत्र यस्य प्रतियोगिनः उपलम्भापादकत्वं तेन संसर्गेण तत्र तस्याभावः प्रत्यक्ष इति ज्ञापयितुं संसर्गपदमुक्तम् । एतेन—

[1] संभवात्. [2] भावं. [3] पादकतया.

**न चाशेषनिषेधानां प्रतियोगित्वमतीन्द्रियसाधारणं चक्षुरादि-**

"योग्यप्रतियोगिक इत्यादेः योग्यप्रतियोगिकान्यः संसर्गा[1]भावः न योग्य इति नार्थः, उक्तप्रतियोगित्वाभावस्य योग्यायोग्यप्रातियोगिकत्वेन योग्यतापत्तेः। नाप्ययोग्यप्रतियोगिकः संसर्गाभावो योग्यो नेत्यर्थः। महावायौ योग्यायोग्योद्भूतरूपसामान्याभावप्रत्यक्षतायाः दीधित्यादावुक्त-त्वात्। नाप्ययोग्यधर्मावच्छिन्नप्रतियोगिताकः संसर्गाभावः न योग्य इत्यर्थः। तावता उक्तप्रतियेगितात्वावच्छिन्नप्रतियोगिताकात्यन्ताभाव-प्रत्यक्षतावारणेऽपि स्तम्भे पिशाचादेरिव योग्ये घटादौ तादृशप्रतियोगित्वा-श्रयस्य भेदप्रत्यक्षतासम्भवेन तदवारणे[2] मिथ्यात्वानुमितिप्रतिबन्धक-बाधसामान्यावारणात्" इत्यादि परास्तम्; उक्तप्रतियोगित्वस्य अत्यन्ताभावप्रत्यक्ष[3] इव तद्वद्भेदप्रत्यक्षेऽपि निरुक्तयोग्यतायाः प्रति-योग्यनुपलम्भे अपेक्षणात्, तदभावस्य प्रकृतग्रन्थार्थत्वात्। अतएव तदभावो नाध्यक्ष इति दीधित्यादिवाक्यस्य तद्वद्भेदस्याप्यनध्यक्षतायां तात्पर्यम्; अन्यथा तस्य लौकिकप्रत्यक्षसम्भवे उत्तरग्रन्थेनोपनयेन तदभावधीकथनवैयर्थ्यापत्तेः। अतएव च मूर्तसामान्यतद्वतोरिव (उपाधिसामान्यतद्वतोः) अत्यन्तान्योन्याभावौ न योग्याविति व्याप्तिग्रहो-पायदीधित्यादावुक्तम्। मूर्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्येव मूर्तवद्भेदस्यापि निरुक्तयोग्यताविशिष्टस्य प्रतियोग्यनुपलम्भस्य असत्त्वा-देव अप्रत्यक्षतायाः सम्भवात् **अतीन्द्रियसाधारणमिति**। अती-न्द्रियासन्निकृष्टाभावप्रतियेगितात्ववदित्यर्थः। **चक्षुरादियोग्यमिति**। येनोपलब्धिरापादयितुं शक्यते तादृशमित्यर्थः। अयोग्यधर्मानवच्छिन्न-योग्यमात्रवृत्तिप्रतियोगिताकाभाव एव योग्यः। वाय्वादौ रूपाद्यभावस्तु न प्रत्यक्षः, किन्तु अनुमेयमिति मते तु यथाश्रुतमेव सम्यक्। यत्तु—"सर्वदेशकालवृत्तिनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेपि तदभावो

---

[1] योगिकान्यसंसर्गा. [2] तदवधारणे. [3] प्रत्यय.

योग्यः, घटे आकाशत्वाभाववत् घटे आकाशत्व[1]सत्त्वे तस्यानेकवृत्तित्वा-ज्जातित्वापत्त्योपलम्भापादनवत् घटे तादृशाभावप्रतियोगित्वोपलम्भस्य आपादनसम्भवात् घटवृत्तेः[2] संसर्गाभावप्रतियोगित्वस्य प्रागभावप्रति-योगित्वादिवत् योग्यत्वात् प्रतियोगित्वस्य स्वरूपविशेषरूपत्वात् घटादि-ज्ञानानन्तरं अयमिहैव नान्यत्रेत्यन्यनिष्ठात्यन्ताभावप्रतियोगित्वस्यानु-भवात् । अन्यनिष्ठात्यन्ताभावस्तु न चक्षुरादिग्राह्यः, विशेष्यसन्निकर्षा-द्यभावात् । न च घटादौ सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वाभावे दृष्टान्ताभाव इति वाच्यम्; मन्मते शुक्तिरूप्यादेस्तादृशप्रतियोगित्वस्य साक्षिभास्यस्य सत्त्वेन दृष्टान्तत्वात्, तार्किकादिमते तु व्यतिरेकेण दृष्टान्तत्वसम्भवात् । एवं स्वसमानाधिकरणेत्यादिरूपं सत्त्वमपि योग्यम्, उक्तरीत्या उपलम्भापादनसम्भवात्" इति प्रलपितं, तत् स्वमतिः प्रकटिता । प्रागभावस्य हि सत्त्वे[3] तत्प्रतियोगित्वं प्रत्यक्षं, तदसत्त्वे वा, नाद्यः; तदा स्वाश्रयासन्निकर्षेण तत्प्रतियोगित्वस्य प्रत्यक्षासम्भ-वात् । अन्त्येपि तस्य प्रागभावप्रतियोगितात्वेन प्रत्यक्षं प्रतियोगितात्वेन, तद्व्यक्तित्वेन वा, नाद्यः; प्रागभावासन्निकर्षात् । न द्वितीयः; सम्ब-न्धिता[4]वच्छेदकरूपेण प्रत्यक्षं प्रति सम्बन्धितावच्छेदकरूपेण प्रत्यक्षस्य हेतुत्वात्, प्रागभाव[5]प्रत्यक्षे तेन रूपेण प्रत्यक्षासम्भवात्, अन्त्यकल्पे वक्ष्यमाणदोषाच्च । नान्त्यः; तावतापि यथा तद्व्यक्तित्वेन उपलब्धि-रापादयितुं शक्यते न तु प्रागभावप्रतियोगितात्वेन, तथोक्तात्यन्ताभाव-प्रतियोगितात्वेनोपलम्भो नापादयितुं शक्यत इति तदवच्छिन्नाभावस्या-योग्यत्वानपायात् । अतएव 'घटत्वत्वादिना नाभावप्रत्यक्षता' इति शिरोमणिः । अयं नान्यत्रेत्यनुभवस्तु नानुपपन्नः, सन्निकृष्टस्वानधि-करणनिष्ठाभावप्रतियोगित्वप्रत्यक्षसम्भवाद्विशेष्यसन्निकर्षाभावात् । अत्य-न्ताभावो न प्रत्यक्ष इति तु शोभतेतमां, तथा सति महावायावुद्भूत-

1 घटाकाशत्व. 2 घटव्यक्तेः. 3 सत्त्वे न. 4 संबन्धता. 5 तत्प्रागभावा.

**योग्यम् । वस्तुतस्तु सामान्यं नेन्द्रियप्रत्यासत्तिः, मानाभावात् । न च महानसीयधूमेन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात्, सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे तस्यापि प्रत्यासन्नत्वात्तत्र व्याप्तिग्रहे ततोऽनुमितिरिति वाच्यम्; पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेनप्रकारेण गृहीतस्मृतव्याप्तेः तत्र वैशिष्ट्यग्रहसम्भवात् । 'सुरभि चन्दनम्' इतिवत् विशेष्येन्द्रियसन्निकर्षविशेषणज्ञानासंसर्गो-**

रूपात्यन्ताभावादेरपि प्रत्यक्षत्वासम्भवात् । न च यथा मनस्तत्त्वेन[1] रूपेणोपलब्ध्यापादनं न सम्भवति तस्य मनोभिन्नावृत्तित्वादिघटितत्वेनातीन्द्रियत्वात्, अथ च मनस्त्वाभावः प्रत्यक्षः, तथोक्तप्रतियोगित्वाभावोऽपि प्रत्यक्षः स्यादिति वाच्यम् । मनस्त्वं यदि घटे स्यात् तदा मनसो योग्यत्वेन तत्समवेतत्वेन मनस्त्वोपलब्ध्यापत्त्या तेन रूपेणैव तदभावस्य प्रत्यक्षात् । मन्मते इत्यादिकं तु स्वपित्रादीन् प्रत्येव वाच्यम् । यादृशाभावो न्यायादिमते प्रत्यक्षस्तस्यैव त्वया साक्षिभास्यताया वाच्यत्वात्, अन्यथा अतिप्रसङ्गात् । तार्किकादीनां तु वाक्यमुक्तमेव, तत्तु त्वया तथा प्रलपता स्वप्नेऽपि न श्रुतमित्यलमव्युत्पन्नविडम्बनया । ननूक्तप्रतियोगित्वाभावस्य लौकिकप्रत्यक्षासम्भवेऽपि उक्तरीत्या सामान्यप्रत्यासत्त्या ज्ञानप्रत्यासत्त्या वा अलौकिकप्रत्यक्षमस्तु; तत्राह–**वस्तुतस्त्वित्यादि** । **विशेष्येन्द्रियसान्निकर्षेति** । मुख्यविशेष्येन्द्रिययोः लौकिकसान्निकर्षेत्यर्थः । बहिरिन्द्रियाणां स्वलौकिकसन्निकृष्टमुख्यविशेष्यकज्ञानजनकत्वनियमान्मुख्यविशेष्यांशे लौकिकसन्निकर्षस्य बहिरिन्द्रियजन्यप्रत्यक्षे अपेक्षेति भावः । यो यत्र पुरा अवगतः स एव तत्र संस्कारवशादलौकिकप्रत्यक्षविषयोऽन्यत्रानुमानादिति प्राचीनतार्किकादिमते, उपनयसन्निकर्षास्वीकारमते च महानसीय एव स्मृतव्याप्तेः

[1] मानसत्वत्वेन.

**ग्रहरूपाया विशिष्टज्ञानसामग्रयाः पूर्णत्वात्। व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्य हेतुता; महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति। धूमत्वेन पर्वतीयधूम-**

---

पर्वतयिधूमे प्रत्यक्षासम्भवादाह—**व्याप्तिस्मृतिप्रकारेण** वेत्यादि। यथाश्रुतार्थमिदं प्राभाकरादिमते। अस्मन्मते तु स्मृतिप्रकारेण स्मृतिप्रकारतायोग्येन विषयो विषयतायोग्यः। योग्यत्वं च उद्बुद्धसंस्कारविषयत्वम्। तथाच प्राभाकरादिमते व्याप्तिविशिष्टवैशिष्ट्यबुद्धयनावश्यकत्ववत्[1] मन्मते व्याप्तिस्मृत्यनावश्यकत्वं, पर्वते धूमज्ञानोत्तरं व्याप्तिविशिष्टवैशिष्ट्यस्येव व्याप्तेरपि ज्ञानाकल्पने लाघवात्। न च व्याप्तिसंस्कारत्वेन हेतुत्वे पूर्वाननुभूतव्याप्तेः विशिष्टवैशिष्ट्यानुभवादनुमितिर्न स्यात्, अनुद्बुद्धसंस्कारादनुमितिवारणायोद्बोधकानां नानाविधानां हेतुत्वे च गौरवमिति वाच्यम्; व्याप्तिसंस्कारज्ञानयोः स्वविशिष्टानुमितौ कारणत्वयोः सम्भवात्। स्मृत्युपधायकोद्बोधकानां परेषां स्मृताविवास्माकमनुमितौ हेतुतायामगौरवात्। संस्कारहेतुत्वं च स्मृताविवानुमितावपि अन्वयव्यतिरेकसिद्धमस्तु, मास्तु वा। अतएव पञ्चपाद्यां "लिङ्गज्ञानसंस्कारयोः सम्भूय लिङ्गज्ञानहेतुत्वं, संस्कारानुद्बोधे तदभावात्; तस्माल्लिङ्गज्ञानमेव लिङ्गिसम्बन्धसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयति" इत्युक्तम्। तत्र स्मृताविवानुमितौ संस्कारस्य हेतुत्वमस्तु, मा वा। तदुद्बोधकहेतुत्वात्तु तद्धेतुत्वमुक्तमित्याशयेन संस्कारानुद्बोधे तदभावादित्युक्तम्। उद्बोधकानामपि स्मृताविवान्वयव्यतिरेकाभ्यां हेतुत्वमस्तु, मा वा, लिङ्गज्ञानमेव वस्तुगत्या अनुमित्यव्यवहितपूर्ववृत्ति उद्बुद्धसंस्कारादिसहितं जातिविशेषेण शक्तिविशेषेण वा हेतुर्लाघवादित्याशयेन तस्मादित्यादि। न चैवं वह्निव्याप्यधूमवानित्यादिज्ञानादिदं व्याप्तयाद्यंशे भ्रम इति धीविषयादनुमितिः

---

[1] वैशिष्ट्यबुद्धेरिव. [2] तत्र.

**ज्ञानं चापि जातम्। तच्च सामान्यलक्षणां विनैव तावतैवानुमितिसिद्धेः। न च सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी न वेति अनुभूयमानसंशयो न स्यात्, प्रसिद्धधूमे वह्निसम्बन्धावगमात् अप्रसिद्धस्य च अज्ञानादिति वाच्यम्; प्रसिद्धधूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः। तथाचोक्तं मणिकृता—'घटत्वेनेतरभेद**

स्यात्, व्याप्त्यादिविषयकज्ञानत्वस्य कारणतानवच्छेदकत्वेन तदंशे भ्रमत्वज्ञानस्य अकिञ्चित्करत्वात्, एवं व्यभिचारादिज्ञानसत्त्वेप्युक्तहेतुसम्पत्त्या अनुमितिः स्यादिति वाच्यम्; व्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वाभ्यां हेतुत्वद्वयमते वह्निव्याप्यधूमवैशिष्ट्यांशे भ्रमत्वेन गृहीतादिव मन्मतेऽप्युक्तज्ञानादनुमितेरिष्टत्वाद्व्याप्त्यादिविषयकज्ञानत्वेनाहेतुत्वेऽपि उक्तभ्रमत्वज्ञानाभावानां हेतुज्ञाननिष्ठहेतुतावच्छेदकत्वस्य स्वातन्त्र्येण हेतुत्वस्य वा सम्भवात्, कारणतावच्छेदकजात्यादेरुक्तज्ञानावृत्तित्वसम्भवेनापत्त्यसम्भवाच्च। एवमुक्तहेतुताद्वयमते वह्निव्याप्याभाववानयमित्यादिधीसत्त्व इव व्यभिचारादिधीसत्त्वे कारणसम्पत्त्या अनुमितेर्मन्मतेपि इष्टत्वात्, [1] संस्कारद्वारा अनुमितिप्रयोजकधीप्रतिबन्धकधीविषयत्वादेव व्यभिचारादेः हेत्वाभासत्वसम्भवात्, कारणीभूतसंस्कारायथार्थत्वज्ञापकव्यभिचारादिज्ञापनार्थं सत्प्रतिपक्षाद्युत्थापनार्थं वा विपरीतनिश्चयस्य संस्कारनाशकत्वमते व्यभिचारादिज्ञानस्य व्याप्तिसंस्कारनाशकत्वेन तादृशव्यभिचारादिज्ञानार्थं वा उपाध्युपन्याससम्भवात्, कारणतावच्छेदकीभूतजात्यादेर्व्यभिचारादिज्ञानोत्तरकालिनज्ञाने सत्त्वे मानाभावेनाखिलदोषपरिहाराच्च। **वह्निसम्बन्धेति**। वह्निव्याप्तिरित्यर्थः।

---

[1] संस्कारानुमितिप्रयोजक . . . . . वा लाघवादि . . . . . हेतुरयं संशयः . . . . द्वेरिव मन्मते व्याप्तिस्मृतेरपि नावश्यकत्वम्। . . . . रद्वा . . . नारद्वा . . धीप्रतिसम्बन्धकधीविषयत्वादेव. इत्यधिकः पाठः.

निश्चयेऽपि पृथवीत्वादिना तत्र संशयसिषाधयिषे भवत एव' इति । निश्चितेप्यर्थे प्रामाण्यसंशयाहितसंशयवत् धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयादपि तादृश-संशयोपपत्तेश्च । एतेन वायुः रूपवान्न वेति संशयोपि व्याख्यातः । ननु सिद्धे नेच्छा किन्तु असिद्धे, सा च स्वसमानविषयज्ञानजन्या । तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना । न च सिद्धगोचरसुखत्वप्रकारकज्ञानादेव अज्ञाते सुखे भवतीच्छा, समानप्रकारकत्वमात्रस्य नियामकत्वादिति वाच्यम्; रजतत्वेन प्रकारेण रजते अनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात् । न च प्रकाराश्रयत्वमपि नियामकम्, रजतभ्रमाच्छुक्ताविच्छानुदयप्रसङ्गात् । तथाच समान-प्रकारकत्वे सति समानविषयकत्वं तन्त्रम् । अतएवाख्याति-पक्षे रजतस्मरणस्यैव शुक्तौ प्रवर्तकत्वमित्यपास्तमिति चेन्न; यतो रजतभ्रमाच्छुक्ताविच्छा नास्त्येव, किन्त्वनिर्वचनीये रजत इत्यनिर्वचनीयख्यातौ वक्ष्यते । प्रकाराश्रयत्वं नियामकं

---

संशयादिति । धूमवृत्तित्वघटितधूमत्वत्वरूपेण धूमत्वस्य विशेष्यतया व्यभिचाराभावरूपव्याप्तेः उपस्थितेश्च व्यभिचारतदभावसहचरितधूमत्व-वैशिष्ट्यस्य धूमे अवगाहनात् साधारणधर्मवद्धर्मिधीविधया धूमधर्मिक-व्यभिचारसंशयहेतुरयं संशयः । यद्यपि व्यभिचारतदभावसहचारित-धर्मान्तरज्ञानमपि तथा सम्भवति; तथाप्यस्य धूमत्वव्याभिचारि-वृत्तित्वावगाहित्वात् व्यभिचारिणि धूमे व्याप्तिप्रकारकत्वरूपाप्रामाण्य-ज्ञापकत्वेन व्याप्तिनिश्चयाभिभावकत्वादादर इति ध्येयम् । वस्तुतस्तु उक्तसंशयस्य दोषविशेषतया अनुभवबलात् तदजन्यव्यभिचारज्ञान एव व्याप्तिनिश्चयो विरोधीति भावः । अप्रामाण्यसंशयोत्थानद्वारा उक्त-संशयस्य व्याप्तिनिश्चयाभिभावकत्वे तु न दृष्टान्तसामञ्जस्यम् ।

**वदख्यातिवादी परमेवं विभीषणीयः । तथाच प्रकाराश्रयत्वस्य नियामकत्वादन्यथाख्यातिपक्षोपि निरस्त एव । न च तर्हि भ्रमत्वं न स्यात्, इदं रजतमिति भ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारत्वानभ्युपगमादिति वाच्यम्; बाधितविषयत्वेन हि भ्रमत्वं, न तु व्याधिकरणप्रकारत्वने,**

---

**विभीषणीय इति** । वस्तुतस्तन्मते संवादिप्रवृत्तावेव प्रकाराश्रयत्वं नियामकं, प्रवृत्तिमात्रे तु उपस्थितयोः इष्टतावच्छेदकपुरोवर्तिनोरसंसर्गाग्रह इति न दोष इति भावः । **प्रकाराश्रयत्वस्येति** । एकरजतज्ञानादन्यरजते प्रवृत्त्यापत्तिस्तु ज्ञानरजतानामेकत्रेव अन्यत्रापि प्रवृत्तिः स्यादित्यापत्त्या तुल्या, असाधारणकारणकल्पनात्तदभावात् तदनापत्तिरपि तुल्येति भावः । **व्याधिकरणप्रकारत्वेति** । स्वनिरूपितविशेष्यतावद्वृत्तिभिन्नवृत्तिप्रकारताकत्वेत्यर्थः । स्वप्रकारता रजतादिस्वप्रकारता, स्वनिरूपितविशेष्यतावति शुक्त्यादौ वर्तमानादिदंत्वादेः भिन्नरजतादौ वर्तमाना बोध्या । **बाधितेति** । स्वसमानाधिकरणाभावप्रतियोगीत्यर्थः । विषयाबाधप्रयोज्यत्वात्स्वाधिकरणत्वेन प्रतीतेः विषयाभावज्ञानज्ञप्यत्वात् । किंच यत्र येन सम्बन्धेनासम्बन्धि यत् तन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नप्रकारताकधीत्वं, तत्र तेन सम्बन्धेन तस्य भ्रमत्वमित्युक्तौ भ्रमत्वं संसर्गांशे न स्यात् । व्यवह्रियते च तदंशेपि भ्रमत्वम् । अन्यथा संसर्गांश एव भ्रमत्वं न प्रकारांशे इत्येव स्वीकृत्य तदीयतत्सम्बन्धनिष्ठसांसर्गिकविषयताकत्वं तत्सम्बन्धस्य भ्रमत्वमिति लक्षणं किं न स्यात् । अथ तस्य विशेषणस्येव तदीयतत्सम्बन्धस्यापि उक्तप्रकारताकधीत्वमेव तस्मिन् विशेष्ये भ्रमत्वम्, तथापि संयोगेन रूपवानित्यादिज्ञानं रूपांशे संयोगस्य भ्रमो न स्यात्, प्रतियोगितासम्बन्धेन रूपासंबन्धिनः संयोगस्य तेन सम्बन्धेन प्रकारत्वाभावात् सम्बन्धभानस्य नव्यैरस्वीकारात् । अथ यत्सम्बन्धो यद्प्रति-

योगिकः तन्निष्ठसांसर्गिकविषयतानिरूपिततत्प्रकारताकधीत्वं तत्सम्बन्धस्य तत्र तत्सम्बन्धे तस्य च भ्रमत्वं तदा एकोक्त्यसम्भवः। न चोक्तज्ञानं घटादौ रूपस्यैव भ्रमः न तु रूपे संयोगस्येति वाच्यम्; व्यधिकरण-धर्मावच्छिन्नाभावास्वीकर्तृमते व्यधिकरणसम्बन्धावच्छिन्नाभावास्वीकार-स्याप्यौचित्येन घटत्वेन पटो नास्तीत्यत्र पटे घटत्ववैशिष्ट्यस्येव संयोगेन रूपं घटे नास्तीत्यत्र रूपे संयोगवैशिष्ट्यस्य अभावभानौचित्येन तादृश-धीबाध्यस्य संयोगेन रूपवान् घट इति ज्ञानस्य रूपे संयोगभ्रमत्वौचि-त्यात् उक्तज्ञानस्य उक्तधीबाध्यत्वं चानुभवबलादेव कल्प्यम्, संयोग-ससंर्गकज्ञानस्यापि संयोगाभावप्रकारकधीबाध्यत्ववत्। ननु प्रतियोगिनि विशेषणमेव प्रतियोगितावच्छेदकमिति नियमेन घटो नास्तीत्यादिज्ञानस्य प्रतियोगिनि विशेषणप्रमात्वमेव विशेषणीभूतघटत्वादेः प्रतियोगितावच्छेद-कत्वप्रमात्वे नियामकं[1], अन्यथा घटत्वावच्छिन्नाभावः पटत्वावच्छिन्नप्रति-योगिताक इत्यादिज्ञानस्यापि प्रमात्वापत्तेः। तथाच घटत्वेन पटो नास्तीति ज्ञानं न घटत्वादौ प्रतियोगितावच्छेदकत्वस्य प्रमा, संयोगेन रूपं नास्तीति ज्ञानं तु संयोगादौ सम्बन्धे[2] प्रतियोगितावच्छेदकत्वस्य कुतो[3] न प्रमेति चेत्, तादृशयुक्तेरेव[4]। न हि संयोगेन घटो नास्तीति ज्ञाने संयोगादिसम्बन्धो घटांशे विशेषणीभूतोऽपि प्रति-योगितावच्छेदकः, घटत्वादिकं तु न तथेति वैषम्ये मानमस्ति। न च पूर्वमज्ञातस्य[5] संयोगादेर्विशेषणत्वासम्भवेपि[6] प्रतियोगिता-वच्छेदकत्वधीरिति वाच्यम्; विशिष्टबुद्ध्यादौ विशेषणधीहेतुत्वा-स्वीकर्तृनव्यमते तथोक्तेरसम्भवात्। न च रूपे संयोगाभावनिर्ण-

[1] घटत्वादिप्रमात्वमेव घटत्वादौ प्रतियोगितावच्छेदकत्वेन नियामकम्। अन्यथा घटसामान्याभावः पटत्वत्वावच्छिन्नप्रतियोगिताकः। पा. [2] सम्बन्धविधया. [3] भ्रमो. [4] तादृशे युक्तज्ञानप्रतियोगिनि संयोगस्याविशेषणत्वेपि प्रतियोगिता-वच्छेदकतया भानं रूपत्वस्य तत्र विशेषणतयैव. पा. [5] पूर्वज्ञातस्य. [6] प्रतियोगिनि विशेषणत्वासम्भवेपि.

**तस्यापि विषयबाधप्रयोज्यत्वादिति हि वक्ष्यते । नन्वभाव-ज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशयावत्तेजोविरहरूपस्य तमसः प्रत्यक्षता न स्यात्, सामान्यप्रत्यासत्तिं विना प्रति-योग्यनुपस्थितेरिति, चेन्न; अस्मन्मते तमसो भावान्तरत्वात् ।**

---

योत्तरं जायमाने संयोगेन रूपं नास्तीति ज्ञाने रूपे संयोगस्य विशेषणत्वासम्भवात् उक्तवैषम्यमिति वाच्यम्; एकत्र द्वयमिति रीत्या रूपत्वसंयोगोभयप्रकारज्ञानस्य संयोगेन रूपं नास्तीति निर्णया-प्रतिबद्धत्वाच्च तयोः तदाऽपि भानसम्भवात् । एवं दूरस्थविषयक-निर्विकल्पकप्रत्यक्षे सर्वलोकसम्मतभ्रमत्वव्यवहारो न स्यात् । अस्मन्मते तत्रानिर्वाच्यं जातं बाधितमतो बाधितविषयकत्वमेव भ्रमत्वमित्या-शयेनाह—**वक्ष्यत इति । अस्मन्मते** पूर्वोत्तरमीमांसकमते । **भावान्तरत्वादिति** । तदुक्तम्—

नाभावोऽभाववैधर्म्यान्नारोपो बाधहानितः ।
द्रव्यादिषट्कवैधर्म्यात् ज्ञेयं मेयान्तरं तमः ॥

इति । तमो नीलं चलतीत्यादिप्रतीत्या रूपादिमत्त्वात् घटादिष्विव तत्राबाधात् गन्धाद्यभावेन पृथिव्यादिनवद्रव्यगुणादिवैधर्म्याच्च द्रव्या-न्तरमित्यर्थः । किञ्च द्रव्यचाक्षुषे आलोकप्रतियोगिकः संयोगो न हेतुः, मणिप्रभादौ तदभावेऽपि चाक्षुषभावात्[1] । नापि आलोक-प्रतियोगिकत्वोपलक्षितः संयोगो विजातीयत्वेन हेतुः, अणुदेशा-वच्छिन्नाद्यालोकसंयोगात् न चाक्षुषमतो विजातीयत्वेनेति । आलोक-प्रभादौ वाय्वादिसंयोग एव तादृश इति वाच्यम् । आलोक-प्रभादौ वाय्वादेः संयोगो विभागादिरेव वा तादृश इत्यत्र विनि-गमकाभावात्, घटादावपि विभागादेर्हेतुत्वसम्भवेन सङ्कराद्यप्रसक्तेः तददोषत्वाच्च[2] । अतो द्रव्यचाक्षुषे तादात्म्येन संसर्गविधया तमस्त्व-

---

1 चाक्षुषाभावात्. 2 तद्दोषत्वाच्च.

**न च तथाऽपि तद्व्यञ्जकत्वात्तदपेक्षेति वाच्यम्; स्वरूपसत एव तादृक्तेजोविरहस्य तमोव्यञ्जकत्वं, न तु ज्ञातस्य, माना-**

जात्या प्रतिबन्धकत्वात् तमो नाभावः, कपालादौ घटादिरिव घटादौ तदवच्छिन्नचैतन्यगतमूलाविद्यापारिणामस्तम इति तत्रतत्र तत्ता-दात्म्यात् तत्काले न चाक्षुषम्, प्रभादौ तदभावाच्चाक्षुषम्। तमोध्वंसश्चालोक[1]संयोगादिरूप इति न तत्कल्पने गौरवम्। न चैवं तमोऽभावत्वेन कारणत्वे गौरवात् द्रव्यचाक्षुषहेतुत्वेन वस्त्वन्तरमेव सिद्धयेतेति वाच्यम्; प्रतिबन्धकाभावस्य सिद्धान्ते हेतुत्वास्वीकारात्, प्रतिबन्धकस्य कार्याभावं प्रति क्षेमसाधारणजनकत्वमात्राभ्युपगमात्। प्रतिबन्धकाभावाधिकरणं यः प्रतिबन्धकाभावसहितकारणकूटक्षणोत्तर-क्षणः तत्त्वस्यैव कार्यव्याप्यतया प्रतिबन्धककाले न कार्योत्पत्त्यापत्तिः। अथवा स्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन स्वनिरूपकत्व-सम्बन्धेन वा तमस्त्वमभावनिष्ठकारणत्वावच्छेदकं प्रतियोगितायाः स्वाव-च्छेदकधर्मरूपत्वेन तमस्त्वाभिन्नप्रतियोगितानिरूपकत्वमभावेऽपि। वस्तुतस्तु तमस्त्वावच्छिन्नाभावव्यक्तिस्तद्व्यक्ति[2]त्वेनैव हेतुः, तच्च सैव व्यक्तिस्तान्निष्ठधीविशेषविषयत्वं वेत्यन्यत्। न च तद्व्यक्तेः स्वरूपतो भानाभावात् स्वरूपतो नावच्छेदकत्वमिति वाच्यम्, स्वरूपतो भानाभावेऽपि स्वरूपतोऽवच्छेदकत्वे बाधकाभावात्। किञ्च उक्तकारणत्वेन भावान्तरासिद्धौ तदभावेन नीलं तम इत्यादिप्रतीतेरनिर्वाहात्तमसो भावत्वावश्यकत्वेन तदभावस्यैव उक्तकारणत्वसम्भवेन तद्धेतुत्वेन भावान्तरं न कल्प्यते गौरवादित्यास्तां विस्तरः॥

**न तु ज्ञातस्येति।** अलोकस्य तमोनाशकत्वात्तमस आलोका-भावप्रयुक्तत्वेन तमोजन्यस्य तमश्चाक्षुष[3]स्यालोकाभावप्रयोज्यत्वं; तत्र च न ज्ञानमुपयुज्यते। उक्तं च विवरणे—'आलोकविनाशितस्य

1 तमोध्वंसाच्चालोक. 2 व्याक्तितद्व्यक्ति. 3 तद्वच्चाक्षुष.

भावादित्यभ्युपगमात्। अन्येषां मते तादृक्तेजोविरहज्ञानस्यापेक्षितत्वेपि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्सम्भवेन तदर्थं सकलप्रतियोगिज्ञानजनिकायाः सामान्यप्रत्यासत्तेरनुपयोगात्। न च गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति साम्प्रतम्; यत्किञ्चिद्गोव्यक्तेरेव

---

तमसः पुनर्मूलकारणादेव विद्युदादेरिव झटिति जन्म' इति। तम उत्पन्नं नष्टमिति प्रतीतेस्तमउत्पत्त्यादिविषयकत्वं स्वीकृत्येदम्। लाघवाच्छब्द उत्पन्नो नष्ट इत्यादिबुद्धेरिवोक्तबुद्धेरभिव्यक्त्युत्पत्ति-नाशविषयकत्वे च साक्षादेव आलोकाभावस्य व्यञ्जकत्वम्। न चैवमालोके सत्यपि दिवा उलूकादेस्तमश्चाक्षुषं न स्यादिति वाच्यम्; दोषविशेषाणामपि विकल्पेन व्यञ्जकत्वादालोकाभावभ्रम एव दोषविशेषाणामावश्यकहेतुत्वेपि प्रातीतिकस्याप्यालोकाभावस्य व्यञ्जकत्वाद्वा। अन्येषां उक्ततेजोविरहस्तम इति वादिनां वैशेषिकादीनां, द्रव्यं तमस्तद्व्यञ्जक आलोकाभाव इति वादिनां पूर्वमीमांसकानां, च। प्रतियोगितावच्छेदकेति। प्रौढप्रकाशत्वेत्यर्थः। तच्च उद्भूतानभिभूतरूपकमहातेजस्त्वं प्रभात्वरूपा जातिर्वेत्यन्यत्। गोव्यक्तेरिति। समवेतत्वसम्बन्धेन गोत्व[1]रूपेणावच्छिन्नं प्रतियोगितावच्छेदकत्वं गोव्यक्तीनां सर्वासां प्रत्येकपर्याप्तत्वाद्यत्किञ्चिद्गोव्यक्तिनिष्ठतया भातीति भावः। विशेषणविधया गोः प्रतियोगितावच्छेदकत्वात् गोसमवेतद्रव्यत्वाद्याश्रयेऽपि गोत्वं नास्तीति धीः प्रमा। वस्तुतस्तु तत्तद्गोव्यक्तीनां गोत्वनिष्ठाधेयतया अवच्छेदकत्वमनवच्छिन्नम्, न तु गोत्वादिना अवच्छिन्नम्, एकैकगोव्यक्तिमात्रनिष्ठावच्छेदकत्वस्य तदतिप्रसक्तगोत्वाद्यवच्छिन्नत्वासम्भवात्, तत्तद्व्यक्तित्वेनापि तदव[2]-

---

1 गो. 2 तदनवः

गोत्वत्वरूपत्वात् । एतेन प्रागभावप्रतीतिरपि व्याख्याता । किंचानागतज्ञानस्य अपेक्षितत्वे अनुमानादेव तद्भविष्यति । तथाच न्यायकुसुमाञ्जलौ—

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।

---

च्छिन्नं लाघवात् । तथाच तत्तद्गोव्यक्तीनामेकैकमात्रस्य उपलक्षणविधयैवावच्छेदकत्वं तादृशसम्बन्धेन तद्व्यक्तिविशिष्टगोत्वस्य गवान्तरे सत्त्वाभावेन तत्र गोत्वं नास्तीति प्रत्ययापत्त्या विशेषणविधया तस्यावच्छेदकत्वासम्भवात् । गोत्वं तु नावच्छेदकं, अत्यन्ताभेदे सिद्धान्ते सम्बन्धाभावेन प्रतियोग्यसम्बद्धत्वात् । गौरित्याकारकयत्किञ्चित्ज्ञानेच्छाप्रकारत्वादिकं तु ज्ञानविषययोर्भेदे विषयत्वभेदानङ्गीकारे अतिप्रसक्तम् । अतो गोव्यक्तेरेवेत्युक्तम्—गोत्वत्वेति । गोत्वांशे प्रकारेत्यर्थः । तथाच गोमात्रस्य गोत्वनिष्ठप्रतियोगितायां वस्तुगत्या अवच्छेदकत्वेऽपि कस्यचिद्गोरेव गोत्वांशे प्रकारत्वेन गोत्वाभावप्रतियोगितावच्छेदकतया भानात् तद्विषयीभूतस्यैव कस्यचिद्गोर्वा गोत्वेन ज्ञानमेव[1] तदभावधीहेतुः न तु गोमात्रस्येति भावः । **एतेनेति** । प्रतियोगिज्ञानस्याभावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतुत्वात् प्रतियोग्यंशे विशेषणतावच्छेदकधर्मप्रकारकज्ञानत्वेन हेतुत्वेनेत्यर्थः । घटत्वादिना विद्यमानघटज्ञानादेव भाविघटविशेषितप्रागभावधीः शब्दादिना[2] योग्यताबलाद्विद्यमानकार्ये शक्तिग्रहात् भाविकार्यस्य लिङा प्राभाकरमते बोधवदिति भावः । **शङ्केत्यादि** । कालान्तरे देशान्तरे च वर्तमानधूमादिर्व्यभिचारीत्यस्य अतीन्द्रियपिशाचा[3]द्युपाधित्वस्य वा शङ्का पूर्वोक्ता चेदस्ति तदा देशकालान्तरयोः भाविभूतयोः अननुभूतयोर्ज्ञानाय अनुमानमस्त्येव । जल्पेन प्रतिवादिनं निरस्य

---

[1] गोर्वा ज्ञानमेव. [2] शब्दादीनां [3] पिशाचत्वा शङ्कते.

**व्याघातावधिराशङ्का तर्कश्शङ्कावधिर्मतः ॥**

**इत्यत्र शङ्कोपपादकमनागतज्ञानमनुमानादेवेत्युक्तम् । अनुमानं च 'वर्तमानपाकः पाकपूर्वकालीनः पाकत्वादतीतपाकवत्' इत्यादि । न च चरमपाके व्यभिचारः; साध्यासिद्ध्युपजीवकस्य व्यभिचारज्ञानस्यादोषत्वात्, अन्यथा सिद्ध्यसिद्धिव्याघातात् । किंच शब्दादपि सकलधूमपाकादिगोचरज्ञानसम्भवः । न च शङ्कादिपूर्वं शब्दस्योपस्थितिनियमाभाव इति वाच्यम्; कदाचिदेव शब्दादनुभूतस्य तदानीं**

---

त्ववबुभुत्सुं प्रत्याह—**तर्कश्शङ्कावधिरिति** । शङ्काया अवधिः सामग्रीविघटकः । ननु तर्कस्यापि व्याप्तिधीमूलकत्वादनवस्था; तत्राह—**व्याघातेति** । आशङ्का उक्तानवस्था यदि सर्वत्र शङ्कसे, तदा धूमाद्यर्थं वह्न्यादौ तवैव प्रवृत्तिः न स्यादिति तर्करूपेण व्याघातेन वारणीयेत्यर्थः । **उक्तमिति** । कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकल्प्याशङ्क्येत; तदाकलनं च नानुमानमवधीरयेतेत्यनेनोक्तमित्यर्थः । भाविनमित्युपलक्षणम् । **पाकपूर्वकालीनः** । पाककालीनध्वंसप्रतियोगी । **सिद्ध्यसिद्धीति** । भावि यदि ज्ञातं, तर्ह्यनुमानेनेति किं पाश्चात्येन व्यभिचारज्ञानेन, यदि न ज्ञातं तर्हि, तत्र व्यभिचारो ज्ञातुमशक्य इत्यर्थः । पाककालीनध्वंसप्रतियोगिपाकत्वादि तु असिद्धत्वा[1]च्चरमपाकसिद्ध्यधीनसार्थकताकविशेषणयुक्तत्वाच्च न हेतूकृतम् । न च जातायामनुमितौ व्यभिचारिलिङ्गधीजन्यत्वेन भ्रमत्वमनुमेयमिति वाच्यम्; व्यभिचारलिङ्गधीजन्यानुमितेरपि प्रमात्वात् । **शब्दादनुभूतस्येति** । विद्यमानशक्त्यादि[2]ज्ञानादविद्यमानव्यक्तिबोधः प्राभाकरमत इव समानप्रकारकत्वेन शक्त्यादिधीशाब्दबोधयोः कार्यकारणभावादिति भावः ।

---

[1] पाकत्वादिनि हेत्वसिद्धत्वा. ~ [2] शक्यादि.

प्रमृष्टतत्ताकस्मृतिसम्भवात्। नन्वनुमितेः विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, न चानुमानान्तराद्विशेषणज्ञानमनवस्थानादिति चेन्न; विशेषणतावच्छेदकप्रकारकज्ञानादेव साध्यविशेषणरूपपक्षविशेष्यकानुमितिसम्भवात्। एतेन 'सुरभि चन्दनम्' इत्यादिविशिष्टज्ञानाय कल्पिता ज्ञानलक्षणा प्रत्यासत्तिरपि निरस्ता; चन्दनत्वेन सुरभित्वानुमानोपपत्तेः। अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गात्। न चाभावसाध्यकेवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात् तत्र क्लृप्तायाः अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वमिति वाच्यम्; अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात्। 'पर्वतवृत्तिधूमो वह्निव्यापकः' इति परामर्शात् साध्यविशेष्यक-

---

तत्तद्देशकालसम्बन्धित्वरूपतत्ताविशिष्टधूमत्वादिना अनुभूतस्यापि केवलधूमत्वादिना स्मृतिरित्याह---**प्रमृष्टतत्ताकेति**। तत्तांशे संस्कारानुद्बोधेनाविषयीभूततत्ताकेत्यर्थः। **ज्ञानादेवेति**। विशेषणज्ञानं यदि समवायेन हेतुः तदा प्रत्यक्ष एव, अन्यथा स्मृतौ व्यभिचारादिति भावः। **पक्षप्रत्यक्षेति**। परमाणुः रूपवानित्याद्यनुमितेरपि परमते मानसप्रत्यक्षत्वोपपत्तिः। न चानुमिनोमीत्यनुव्यवसायेनानुमितित्वजातिसिद्ध्या तद्विशिष्टस्य परामर्शजन्यत्वमावश्यकम्, अन्यथा व्याप्तिपक्षधर्मतानिश्चयस्यानुपयुक्तत्वापत्तेरिति वाच्यम्; अनुमितिसामग्रीत्वेन पराभिमतव्याप्तिज्ञानाद्युत्तरप्रत्यक्षस्यैवोक्तानुव्यवसायविषयत्वात्, व्याप्तिपक्षधर्मतानिश्चयस्य तादृशप्रत्यक्षप्रमात्वग्रहोपयुक्तत्वसम्भवात् वह्न्यादिप्रमात्वस्य व्यापकत्वपक्षे वह्न्यादिव्याप्यवद्विशेष्यज्ञानस्य विशेष्यदर्शनत्वेन उपयोगादिति भावः। **अर्थापत्तीति**। वस्तुतस्तु तत्रानुमितिस्वीकारेपि व्यतिरेकव्याप्तिज्ञानघटितायाः सामग्र्या एवालौकिकप्रत्यक्षसामग्रीतो बलवत्त्वं सिद्ध्यति,

**पक्षविशेषणकानुमित्यभ्युपगमे तु नैव काप्यनुपपत्तिः, अनुमितेः पक्षविशेष्यत्वनियमे मानाभावात्। किञ्च धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः। धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठवाह्निव्याप्तिग्रहानुदयप्रसङ्गात्। न चेष्टापत्तिः; तदुत्तरकालमनुमित्यनुदयापत्तेः। तथाच धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम्। तच्च धूमेन्द्रियसन्निकर्षद-**

---

न त्वन्वयव्याप्तिज्ञानघटिताया इति ध्येयम्। **नैव कापीति**। विशिष्टबुद्धिमात्रे विशेषणविषयकत्वेन संस्कारादिसाधारणेन हेतुत्वेऽपि पक्षवृत्तिसाध्यघटितव्याप्तिविशिष्टविशेष्यकज्ञानात् पक्षधर्मताबलात् पक्षीयसाध्यविशेष्यकानुमितिसम्भवः सामान्यलक्षणानैरपेक्ष्येणेति भावः। यदि पक्षीयधूमस्सन्निकृष्टः, तदा तत्र पूर्वोक्तरीत्या स्मृतव्याप्तेर्वैशिष्ट्यधीसम्भवान्न सामान्यलक्षणापेक्षा। यदि च व्याप्तिधीसमये पक्षे विद्यमानो धूमोऽसन्निकृष्टः; तदापि स्वरूपतो धूमत्वप्रत्यासत्तित्वेऽपि तदानीं तत्सत्त्वात् व्याप्तिधीसम्भवः। यदि तु न तथा, किन्तु पक्षीयधूलीपटले धूमत्वभ्रमोत्तरं पक्षीयातीतानागतधूमेषु व्याप्तिं गृहीत्वा अनुमितं, तदा अतीतादिधूमेषु व्याप्तिधीपूर्वक्षणावच्छेदेन धूमत्वरूपप्रत्यासत्तेः कारणस्याभावात् न व्याप्तिधीरूपकार्यस्य विशेष्यतासम्बन्धेन तेषूत्पत्तिसम्भव इत्याह— **धूलीत्यादि**। उपलक्षणमिदम्। पक्षावृत्तिधूमे व्याप्तिग्रहानन्तरं यदि पक्षीयातीतादिधूमेषु व्याप्तिं गृहीत्वा अनुमितिः, तत्राप्यनुपपत्तिर्बोध्या। तत्रातीतादिषु पक्षीयधूमेषु व्याप्तिप्रत्यक्षपूर्वक्षण इति शेषः। एतेन "धूलिपटले धूमत्वभ्रमात् धूममात्रे व्याप्तिप्रत्यक्षे बाधकाभावः, तस्य धूलीपटलविशेष्यकत्वं तु दोषप्रयोज्यं, न तु धूमत्वसामान्यप्रयोज्यम्; धूमनिष्ठविशेष्यतासम्बन्धेनैव धूमत्वप्रकारकप्रत्यक्षस्य तत्कार्यत्वात्" इति परास्तम्। **धूमत्वज्ञानमिति**। विषयतासम्बन्धेन कारणत्वात्[1] तेन

---

[1] विषयतासंम्बन्धेन–विषयत्वरूपविषयताघटितसंम्बन्धेन कारणत्वात्.

**शायां धूमज्ञानात् प्राक् नास्त्येव। निर्विकल्पके मानाभावात् विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्यकारणभावानभ्युपगमात्, अवश्यक्लृप्तकार्यकारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः। न च धूमत्वेन सन्निकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारमसन्निकृष्टधूमगोचरं ज्ञानान्तरमुत्पद्यत इत्यत्र**

सम्बन्धेनातीतादावपि तदस्तीति तत्रापि विशेष्यतया प्रत्यक्षोत्पत्तिरिति भावः। नन्वनवच्छिन्नप्रकारतया ज्ञानं जन्य[1]प्रत्यक्षं वा प्रत्यनवच्छिन्नविषयतया[2] सम्बन्धेन सविषयकत्वेन हेतुत्वमवश्यं वाच्यम्, अन्यथा जातिमानिति प्रत्यक्षस्य नियमेन घट इत्याद्याकारकत्वं स्यात्, सन्निकर्षादेरविशेषात्; ज्ञानोपरमेऽपि इच्छाद्यनुव्यवसाये घटादेः प्रकारत्वात् ज्ञानत्वेन हेतुत्वम्, अनुव्यवसायस्य साक्षित्वेनाजन्यत्वे तु ज्ञानत्वेनैव हेतुत्वमित्यत्राह—**अवश्येति**। अयं घट इत्यादिसधर्मितावच्छेदकबुद्धेः बाधाभावप्रयोज्यत्वात् निर्धर्मितावच्छेदघट इत्यादिबुद्धेरपीष्टविषयान्तरजिज्ञासादिरूपप्रतिबन्धकाभावप्रयोज्यत्वात् तादृशप्रतिबन्धकत्वस्य च जातिमानिति प्रत्यक्षं भवतु; घट इति प्रत्यक्षं भवत्वित्यादीच्छोत्तेजका[3]नुरोधेन पृथक्त्वात् जातिमानिति धीकाले घट इत्यादिधीसामग्र्या अनावश्यकत्वेन जातिमानिति ज्ञानस्य नियमेन घट इत्याद्याकारकत्वासम्भवात् किंच उक्तप्रकारतासम्बन्धेन प्रत्यक्षे न[4] विशेषणधीहेतुत्वम्, अनन्तनिर्विकल्पककल्पनागौरवात्; किन्तु अनवच्छिन्नविषयतासम्बन्धेन प्रत्यक्षं प्रति क्लृप्तसंयोगादेरेव स्वाश्रयसमवायेन विजातीयत्वेन हेतुत्वम्। अलौकिकप्रत्यक्षं तु अनवच्छिन्ना प्रकारतापरामर्शादिनियम्येति भावः। ननु धूमनिष्ठविशेष्यतया प्रत्यक्षं प्रति स्वाश्रयनिष्ठविषयतया धूमत्वं हेतुः, तथाच ज्ञानान्तरानुत्पादेऽपि न क्षतिः, चक्षुस्संयुक्तसमवायादेः सहकारित्वात्, तदभावकाले न

[1] ज्ञानजन्य. [2] विषयता. [3] तेजकता. [4] प्रत्यक्षेण.

**मानमस्ति; धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि न व्यवहितमित्यनुभावाच्च। अन्यथा जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमीत्यनुव्यवसीयेत। न चैवमनुभवमात्रशरणैरभ्युपेयते। किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे यत् प्रमेयं तदभिधेयं, यत् प्रमेयवत् तदभिधेयवदित्यादिव्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तिः। न चेष्टैव सा; परज्ञानविषयो घटो न वेत्यादिसंशयानुपपत्तेः। न च घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी, प्रमेयमिति निश्चयस्तु घटविषयोऽपि न घटत्वप्रकारक इति वाच्यम्; भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्, घटत्वस्यापि प्रमेयमिति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वात्, घटत्वप्रकारकनिश्चयस्य घटत्वज्ञानजन्यत्व-**

प्रत्यक्षं, तत्राह— **धूमत्वेन पुरोवर्तिनमित्यादि। साक्षात्करोमीति।** न च—सन्निकृष्टलौकिकविषयकप्रत्यक्षस्योक्तानुव्यवसायविषयत्वात् नोक्तापत्तिः, व्यवहितादिषु लौकिकविषयत्वाभावादिति वाच्यम्; प्रत्यक्षीयालौकिकविषयतायामुक्तरीत्या मानाभावे तात्पर्यात्कविकाव्यादिस्थले स्मरणानुमानशाब्दबोधरूपवाक्यार्थधीसम्भवात् बाधितेप्यर्थे आहार्यालौकिकमानसादिप्रत्यक्षास्वीकारेपि शाब्दधीसम्भवात्, कलहादौ तथा दृष्टत्वात्, वाक्यार्थज्ञानं विनापि शुकवद्वाक्यरचनासम्भवाच्च प्रमेयत्वसामान्यलक्षणायाः सर्वविषयज्ञानजनकत्वम्। प्रमेयत्वसामान्यलक्षणा तु प्रमेयत्व[1]सामान्यलक्षणाजन्या स्वयमपि सर्वविषयकेत्यभिप्रायेणाह— **यत्प्रमेयवदिति। इष्टैवेति।** अलौकिकप्रत्यक्षत्वादुक्तसार्वज्ञ्यमीश्वरीयधीविलक्षणमिति भावः। उक्तज्ञानाभावकाले संशये बाधकाभावादाह— **परज्ञानेति।** उक्तज्ञानेत्यर्थः। यस्योक्तज्ञानं जातं तस्यैवोक्तज्ञानविषयताविशिष्टो घटो न वेत्यादिसंशयानुपपत्तेरित्यर्थः। **प्रमेयमितीति।**

[1] ग्रन्थे न प्रमेयत्वं.

**विशेषणाददोष इति चेत् न विशेषणज्ञानत्वेनैव तस्य जनकता वाच्या, तस्याः प्रागेव निरासात्; स्वरूपसम्बन्धविशेषाभ्युपगमे च अनिर्वचनीयवादापत्तेरित्यादिदूषणानि बहुतरमूहनी-**

---

यत्प्रमेयं तदभिधेयमितीत्यर्थः । **विशेषणादिति** । घटत्वज्ञानजन्यत्वमेव घटत्वप्रकारकत्वमित्यर्थः । **निरासादिति** । यत्र घटत्वादौ प्रमेयत्वाभिधेयत्वयोः सहचारं गृहीत्वा व्याप्तिर्गृहीता तत्र घटत्वज्ञानजन्यत्वमपि व्याप्तिग्रहे वर्तते । न च स्वरूपतो घटत्वज्ञानजन्यत्वं वाच्यम्, उक्तस्थले च प्रमेयत्वाधिकरणत्वेन तद्ज्ञानं न स्वरूपत इति वाच्यम्; तथाप्ययं घटभिन्नवानिति निश्चयस्य घटभिन्नत्वसामान्यलक्षणाजन्यस्योक्तसंशयविरोधित्वापत्तेः ॥

ननु—प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषो विषयतेति बौद्धाधिकारे उक्तम्, तत्र तदीयता तत्सम्बन्धित्वं प्रकाशस्य ज्ञानस्य, तथाच ज्ञानस्वरूपविशेष एव अर्थेन सह ज्ञानस्य सम्बन्ध इत्यर्थः । सामान्यतो विषयता ज्ञानमेव, घटादिविषयता तु घटादीयत्वेन अनुगताः ज्ञानविशेषाः संयोगविशेषा इव घटादीनां, सम्बन्धव्यवहारनिमित्तं च ज्ञाननिष्ठमर्थसम्बन्धित्वं, न त्वर्थनिष्ठं ज्ञानसम्बन्धित्वं, अतीतानागतानुरोधात्, सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय, सर्वत्र स्वरूपसम्बन्धस्थले तथा कल्पनादिति शिरोमणिः । तथाच घटत्वप्रकारकज्ञान[1]मुक्तसंशयविरोधि; प्रकारकत्वं च ज्ञानविशेषरूपमिति प्रमेयमित्याद्याकारकज्ञानस्य अतथात्वादविरोधित्वमित्यत आह—**स्वरूपेति** । स्वस्य स्वं न सम्बन्धः, स्वं न स्वीयमित्यनुभवात्, अथ केनचित् रूपेण स्वस्यापि स्वातिरेकं स्वीकृत्य स्वप्रतियोगिकसम्बन्धत्वं वाच्यम्; तथापि तादृशाकिञ्चिद्रूपविशिष्टस्य स्वरूपस्य स्वभिन्नत्वे स्वभेदो[2]

---

[1] मान. [2] स्वाभेदो.

विरुद्ध इति मिथ्यात्वं वाच्यमित्यनिर्वाच्यवादापत्तिः । अथ तादृशविशिष्टरूपमत्यन्तभिन्नं, तर्हि भाषान्तरेणातिरिक्तविषयैव स्वीकृता । नन्वस्त्वतिरिक्तैव विषयता । उक्तं च शिरोमणिना—"यदि ज्ञानं विषयता, तर्हि घटपटाविति धीर्घटत्वपटत्वावच्छिन्नघटीयपटीयात्मकविषयताशालित्वात् भ्रमस्स्यात्; अथ यथा समवायोऽनवच्छिन्न एव[1] सत्ताया रूपसंयोगाद्यवच्छिन्नश्च रूप[2]संयोगादेः सम्बन्धः, तथा निर्विकल्पकं ज्ञानं अनवच्छिन्नमेव । सविकल्पकं तु तत्तत्प्रकारावच्छिन्नम् । विषयतासमूहालम्बने[3] घटत्वाद्यवच्छिन्नं ज्ञानं घटादेर्विषयताभ्रमे घटत्वाद्यवच्छिन्नं पटादेरिति चेत्तर्हि घटज्ञानं ज्ञातो घट इत्येव स्यात्, न तु घटत्वेन घटज्ञानं, घटत्वेन घटो ज्ञात इति, घटत्वस्य सम्बन्धकोटौ प्रवेशात् । न हि भवति नीलत्वेन नीलः पटः, नीलत्वेन पटः नीलिमेति । तत्तत्प्रकारावच्छिन्नं च यदि धर्मान्तरं तदा भाषान्तरेणातिरिक्तविषयताङ्गीकारः । अथ तदुभयमेव, तदातीतानागतविशेषणके अप्रतीकारः । किंच घटज्ञानं यदि घटादिभिः स्वरूपेण सम्बन्द्धमिति तेषु व्यवहारमाधत्ते, तदा आत्मनि स्वाभावेषु कालादावप्यादध्यात्, तैरपि समं तस्य स्वरूपेण सम्बद्धत्वात् । अपिच यदि विषयत्वं तत्त्वं वा नातिरिच्यते, तदा कथं तद्विषयकेच्छादिसामान्ये तद्विषयकज्ञानानां कारणत्वं? अननुगतत्वात् । तस्मादतिरिक्तैव विषयता, तद्विशेषास्तु प्रकारत्वादयः । एवं विषयतात्वादिकमपि । एतेन प्रतियोगित्वादधिकरणत्वादयोपि व्याख्याताः । अथैवं सम्बन्धानन्त्ये अनवस्था स्यात्, स्यादेव, यदि क्वचिदपि स्वरूपसम्बन्धेन न प्रतीकारः; अन्यथा अनुपपत्तेः दुर्वारत्वात् सा ज्ञाननिष्ठा[4] ज्ञानस्य नियतकार्यजनकतावच्छेदकतया कल्पनीया, तत्तत्प्रतियोगितया चार्थे विषय-

---

[1] एवं. [2] च्छिन्नस्वरूप. [3] च्छिन्नविषयतासमूहालम्बनेन. [4] साक्षात् ज्ञाननिष्ठा.

व्यवहारः। परे तु विषयत्वविषयित्वे भिन्ने एवार्थज्ञानयोः प्रतियोगित्वानुयोगित्वे इव भावाभावयोरित्याहुः। इत्थंच स्वभावेति स्वीयभावार्थकम्[1]। प्रकाशस्येति त्विच्छानिरासायेत्युत्तरग्रन्थानुरोधेन वर्णयन्ति। वस्तुतस्तु इच्छादिष्वपि ज्ञान इव विषयत्वम्। अथ तेषु जनकज्ञानौपाधिकं विषयत्वमिति चेन्न; जनकज्ञानस्य तद्विषयत्वस्य वा तद्विषयतात्वे अतिप्रसङ्गात्, ईश्वरेच्छादौ तदसम्भवाच्च। अथ यद्विषयकत्वेन ज्ञानस्येच्छादिजनकत्वं तद्विषयकज्ञानमेव इच्छादेस्तद्विषयत्वमिति चेत्तर्हि इच्छादेः सर्वविषयकत्वं[2] न स्यात्, सर्वविषयकत्वेन इच्छाद्यनुत्पादकत्वात्। स्याच्च सुखादीच्छाया अपि दुःखाभावादिविषयकत्वं, ज्ञानोपरमे इच्छादीनां च सविषयकत्वं न स्यात्। तस्माल्लाघवाद्बाधकाभावाच्च ज्ञान इवेच्छादिष्वपि ज्ञानाघटितैव विषयता" इति। तत्र व्याख्यानम्—तत्तत्प्रकारेति। यदवच्छिन्नं ज्ञानं विषयता तद्विशेषणं यस्य विषयता[3]तद्विशेष्यमिति भावः। अतीतेति। अतीतादिविशेषणकं ज्ञानमिदानीं अतीतादिविषयकमित्यादिव्यवहारानुपपत्तिरिति भावः। नन्वेकत्र ज्ञानं घटसम्बद्धत्वं पटसम्बद्धत्वं च अस्ति, तत्राद्ये घटत्वम् अन्त्ये पटत्वं चावच्छेदकं, भ्रमे तु पटसम्बद्धत्वे घटत्वमवच्छेदकमिति भ्रमत्वमेव, सम्बन्धत्वावच्छेदकत्वे चातिरिक्ते अनतिरिक्ते चेति न विषयताबाधः; इत्थंच यत्सम्बद्धत्वं ज्ञाने, स विशेष्यः, योऽवच्छेदकः स प्रकार इत्युच्यते तत्राह—किञ्चेति। स्वरूपेण स्वात्मकेन सम्बन्धेन आत्मनि स्वस्मिन् कथमिति। न चाननुगततत्तद्विषयता[4]सम्बन्धेन विषयविशिष्टज्ञानत्वेनैव हेतुतेति वाच्यम्; अननुगतसम्बन्धैः कारणत्वे सत्यपि परामर्शादौ तत्सम्बन्धेन हेतुत्वं न क्लृप्तमित्यनुमित्याद्यनुत्पत्तिसम्भवे पक्षतादिहेतुत्वानापत्त्या

---

[1] र्थकत्वम्.　[2] सविषयकत्वं.　[3] विषयतायाः.　[4] गतत्वाद्विषयता.

अव्यवस्थापत्तेः, [1] अननुगतसम्बन्धघटितव्यापकत्वस्य दुर्वचत्वाच्च। अतएव सम्बन्धतावच्छेदकस्य संयोगत्वादेरपि अभावभाने संसर्गमर्यादया भानमङ्गीकुर्वन्ति। अतएव सर्वसम्बन्धेन भूतलादौ द्रव्यं नास्ति सम्बन्धसामान्येन तु द्रव्यं तत्रास्तीति सिद्धान्त.। प्रकारत्वादय इत्या· दिना संसर्गत्वविशेष्यत्वनिर्विकल्पकविषयत्वसंग्रहः। निर्विकल्पकविष· यत्वं विशेष्यत्वमिति केचित्। सर्वसाधारणं तु विषयितात्वादिकमर्थान्तरं सम्बन्धतावच्छेदकमुपेयम्। अतएव, तद्विषयकज्ञानत्वादिनाऽनुगतरूपेण हेतुत्वादिति भावः। स्वरूपसम्बन्धलोपे अनवस्थेत्याह—अथेति। यावत्प्रतीतिः तावत्सम्बन्धः, तदभावे तु न स इति नानवस्थेत्याशयेनाह—स्यादिति। जनकतावच्छेदकेति। न च विषयनिष्ठा सा प्रतियोगितासम्बन्धेन ज्ञाननिष्ठजनकतायामवच्छेदिकाऽस्त्विति वाच्यम्; कारणांशे साक्षात्प्रकारीभूय अवच्छेदकस्य वृत्तिनियामकसम्बन्धेनैव सत्वोपगमात्। कारणताया अवच्छेदकत्वेन कल्प्यस्य तत्सामानाधिकरण्यसम्भवे वैयधिकरण्याकल्पनादिति भावः। विषयनिष्ठप्रत्यासत्त्या हेतुतद्भावे वाच्ये विषयनिष्ठोपि सम्बन्धास्सिध्यति, अन्यथा स्वविषयताप्रतियोगित्वेन तदुक्तगौरवादित्याशयेनाह—परेत्विति। तथाप्यर्थज्ञानोभयनिष्ठ एक एव सम्बन्धः कल्प्यते न तूभयमित्यस्वरसेनाहुरिति। तदेतत्सव्याख्यानं शिरोमणिवाक्यम्। तथाच प्रमेयमित्यादिज्ञाने घटत्वप्रकारताकत्वाभावेन उक्तसंशयाविरोधित्वं, प्रमेयवदिति ज्ञाने च घटत्वप्रकारता नानवच्छिन्नेत्यनवच्छिन्ना या घटत्वप्रकारता तच्छालित्वेन विरोधित्वे न दोष[2] इति चेन्न; तस्यापि स्वरूपसम्बन्धेत्यादिग्रन्थेनैव प्रत्याख्यानात्, ज्ञानार्थस्वरूपयोः सम्बन्धविशेषरूपस्य अतिरिक्तविषयतारूपस्य अभ्युपगमे चानिर्वनीयत्वं विचारासहत्वमापद्यत इति तदर्थसम्भवात्। तथाहि—भासमानवैशिष्ट्यप्रतियोगि-

[1] अनुगतेने. [2] नदोष.

स्वानुयोगित्वयोरेव प्रकारताविशेष्यतारूपत्वसम्भवेन तदतिरिक्ततत्कल्पने मानाभावः । न च दण्डपुरुषसंयोगा इत्यादिसमूहालम्बने दण्डादेः प्रकारत्वापत्तिः, संयोगेन रूपवानित्यादिज्ञाने च रूपादेः प्रकारत्त्वं न स्यादिति वाच्यम्; भासमानेत्यस्य वैशिष्ट्यप्रतियोगित्वानुयोगित्वयोश्च विशेषणत्वात् । तथाच सांसर्गिकविषयतामतिरिक्तामङ्गीकृत्य संयोगादिनिष्ठसांसर्गिकविषयतानिरूपितसांसर्गिकविषयताश्रययोः प्रतियोगित्वानुयोगित्वयोः प्रकारताविशेष्यतारूपत्वमुच्यते । न च प्रकारतां विशेष्यतां वा अतिरिक्तां उपेत्य[1] प्रकारताश्रयप्रतियोगिकत्वं विशेष्यताश्रयानुयोगिकत्वं वा सांसर्गिकविषयत्वमित्येवास्त्विति वाच्यम्; संयोगेन रूपवानित्यादिज्ञाने कालिकसम्बन्धस्यापि संसर्गत्वापत्तेः, संयोगादेः संसर्गत्वाभावापत्तेश्च, संयोगादेः रूपादिप्रतियोगिकत्वाभावात् । न च अतिरिक्तप्रकारतादिस्वीकारे संयोगनिष्ठसंसर्गतानिरूपितघटादिप्रकारताकज्ञानत्वेन कारणताद्यवच्छेदके निवेशे लाघवम्, उक्तसंसर्गतानिरूपिता या घटादिप्रतियोगित्वसंसर्गता तच्छालिज्ञानत्वेन निवेशे तु गौरवमिति वाच्यम्; उक्तगौरवापेक्षया प्रकारताविशेष्यतयोरतिरिक्तयोः कल्पने गौरवात् । संयोगे तत्प्रतियोगित्वानुयोगित्वयोश्च एकस्या एव सांसर्गिकविषयतायाः सम्भवेन संयोगनिष्ठा या [illegible] तच्छालिज्ञानत्वेन निवेशसम्भवाच्च । एतेन—'संयोगसंसर्गतानिरूपितसंसर्गताद्वयकल्पने तत्स्थाने प्रकारताविशेष्यते एव कल्पयेते इति न गौरवम्' इति परास्तम्; स्वप्रतियोगिकसंयोगानुयोगित्वसम्बन्धेन घटादिप्रकारताकज्ञानस्थले तादृशसंसर्गताद्वयस्य अनुव्यवसायसिद्धत्वात् । अतएव केवलसंयोगेन घटाभावनिश्चयोत्तरं तादृशबुद्धेः त्वन्मते उत्पत्त्यापत्तिः, स्वाश्रयसंयोगेन घटवत्ताबुद्धेः तत्प्रतिबध्यत्ववारणाय घटप्रकारतानिरूपितसंयोगसंसर्गताशालिज्ञानस्यैव त्वन्मते तत्प्रतिबध्य-

1. अभ्युपेत्य.

त्वात्, तादृशबुद्धेस्त्वन्मते संयोगसंसर्गताया घटप्रकारतानिरूपितप्रतियोगित्वसंसर्गतानिरूपितत्वात्[1]। ननु घटादिस्वरूपं यदि संयोगादिप्रतियोगित्वानुयोगित्वं, तदा स्वाश्रयसंयोगादिसम्बन्धेन घटत्वप्रकारकज्ञानस्यापि घटप्रकारकत्वापत्तिः; यदि तदतिरिक्तं, तथापि स्वाश्रयप्रतियोगिकसंयोगत्वादिना सम्बन्धतायां तत्प्रकारकज्ञानस्य स्वसंयोगीयप्रतियोगितासम्बन्धेन पटवान् घट इत्यादिज्ञानस्य च घटप्रकारकत्वापत्तिः, द्रव्यवत् घटवादिति ज्ञानयोरवैलक्षण्यापत्तिश्च, अतिरिक्त प्रतियोगित्वानुयोगित्वयोः तत्सांसर्गिकविषयत्वयोश्च कल्पनामपेक्ष्य अतिरिक्तप्रकारत्वविशेष्यत्वयोरेव कल्पने लाघवं चेति चेन्न; घटत्वावच्छिन्नप्रतियोगित्वपर्याप्तसांसर्गिकविषयता हि घटत्वावच्छिन्नप्रकारता; तथाच स्वाश्रयप्रतियोगिकसंसर्गत्व[2]स्थले स्वाश्रयतावच्छिन्नप्रतियोगित्वस्य भानेऽपि घटत्वावच्छिन्नप्रतियोगित्वस्य अभानात् न घटत्वावच्छिन्नप्रकारताव्यवहारः। स्वाश्रयत्वरूपेण स्वाश्रयस्य तु प्रकारत्वमिष्यत एव; तवापि मते तेन रूपेण तत्प्रमात्वनिर्वाहार्थं तथा वाच्यत्वात्। अन्यथा स्वाश्रयरूपसंयोगेन गुणत्वादिप्रकारकज्ञानस्य रूपभ्रमत्वं न स्यात्। स्वसंयोगीयप्रतियोगितासम्बन्धेन पटवान् घट-इति[3] ज्ञानस्यापि संसर्गता न घटत्वावच्छिन्नप्रतियोगित्वे पर्याप्ता। तत्पर्याप्तत्वं च घटत्वावच्छिन्नत्व[4]संसर्गतानिरूपितत्वे सति प्रतियोगित्वनिष्ठत्वं, घटत्वावच्छिन्नत्वप्रतियोगितारूपात्रितय[5]पर्याप्तैकविषयतारूपत्वं वा। न च घटत्वावच्छिन्नप्रतियोगिताकसंयोगेन पट[6]प्रकारकज्ञानस्यापि घटत्वावच्छिन्नप्रकारताकत्वेन व्यवहारापत्तिरिति वाच्यम्; इष्टत्वात्। शुद्धसंयोगेन घटत्वावच्छिन्नप्रकारताकत्वेन त्वदङ्गीकृतज्ञानस्यैव मया घटत्वावच्छिन्नप्रतियोगिताकसंयोगसंसर्गकत्वस्वीकारात्,

---

1 घटप्रकारतानिरूपित्वात्. 2 योगिकसंयोगसंसर्गत्व. 3 पटवानिति. 4 वच्छिन्न. 5 प्रतियोगितादिषु विशेषणविशेष्यभावापन्नेषु त्रितय. 6 घट.

तत्रैव घटत्वावच्छिन्नत्वप्रतियोगित्वसंयोगानुयोगित्वेषु पर्याप्ताया एक-विषयतायाः स्वीकाराच्च । स्वानुयोगिकसयोगप्रतियोगितासम्बन्धेन घटवानिति ज्ञानस्य न संयोगेन घटप्रकारकत्वं; प्रतियोगित्वानु-योगित्वयोः अधिकर्योर्भानेन उक्तपर्याप्तयभावात्, रक्तदण्डवादति ज्ञानीयस्य व्यासज्यवृत्तेः प्रकारत्वस्य तदवच्छेदकत्वस्य वा दण्ड-रक्तवदिति ज्ञान इव संयोगेन घटवदिति ज्ञानीयस्य विलक्षणस्य प्रतियोगित्वादिविषयत्वस्य संयोगेन घटप्रकारतानियामकस्यि[1] स्वानु-योगीत्याद्याकारकज्ञाने अभावाच्च । शुद्धघटत्वादिप्रकारकत्वं तु शुद्ध-घटत्वादौ प्रतियोगित्वे च वर्तमानं संसर्गताकत्वं घटवदिति ज्ञाने, घटत्वावच्छिन्नं द्रव्यवदिति ज्ञाने द्रव्यत्वावच्छिन्नं प्रतियोगित्वं संसर्ग इति तयोः वैलक्षण्यमेव । इत्थंच प्रतियोगित्वानुयोगित्वयोः घटादि-रूपत्वेऽपि न क्षतिः । वस्तुतस्तु तयोः तदतिरिक्तत्वं त्वयाऽपि वाच्यम्; अन्यथा संयोगसम्बन्धेन तद्धटस्तद्धटयि इत्यादिज्ञान-मपि प्रमा स्यात्, तद्धटप्रतियोगिकसंयोगानुयोगित्वस्य भूतलस्वरूपत्ववत् तदा घ[2]टस्वरूपत्वस्याप्यवश्यवाच्यत्वात् भूतलं तद्धटीयं तद्धटो भू-तलीय इति बुद्ध्योरेकसंयोगेन प्रमात्वात् । अतिरिक्तयो[3]स्तयोस्स्वी-कारे तु संयोगीया या तद्धटनिष्ठप्रतियोगिता तन्निरूपितानुयोगित्ववति तद्धटप्रकारकज्ञानस्य तद्धटप्रमात्वरूपत्वात् तद्धटस्य भूतलनिष्ठ-तत्प्रतियोगितानिरूपितानुयेगित्वेऽपि स्वनिष्ठतत्प्रतियोगितानिरूपितानु-योगित्वाभावादुक्तबुद्धेः प्रमात्वासम्भवः । न च तयोरतिरिक्तत्वेऽपि तद्धटनिष्ठेन तादात्म्यसम्बन्धे प्रतियोगित्वेन निरूपितानुयोगित्वं तद्धटेऽपीति अयं तद्धट इति बुद्धिरिवायं संयोगेन तद्धटीय इति बुद्धिरपि प्रमा स्यादिति वाच्यम्; संयोगप्रतियोगितायास्तादात्म्य-प्रतियोगितातिरिक्तत्वात् । अथ संयोगवत् तादात्म्यस्य संयोगरूपत्वा-

---

[1] नियामकत्वस्य.　[2] तद्धट.　[3] प्रमात्वातिरिक्तयोः.

दुक्तदोषतादवस्थ्यमिति चेन्न; तादात्म्यस्यातिरिक्तत्वात् । अन्यथा अयं तादात्म्येन संयुक्तवान् संयोगेन संयुक्तवानिति धियोर्वैलक्षण्यानुपपत्तेः, संयोगवत्त्वावच्छिन्नस्य तादात्म्यप्रतियोगित्वस्य तद्धटे सत्त्वेऽपि तद्धटत्वावच्छिन्नं यत्संयोगप्रतियोगित्वम् तन्निरूपितानुयोगित्वस्य असत्त्वात्, तद्वति संयोगेन[1] तद्धटप्रकारकत्वस्य प्रमात्वरूपत्वेन दोषाभावाच्च । अतएव स्वस्मिम् तद्धटस्य संयोगो नेति व्यवहारः प्रमाणम् । अतएव उक्तशिरोमणिवाक्ये प्रतियोगित्वाधिकरणत्वयोः अतिरिक्तत्वमुक्तम् । तस्य सम्बन्धप्रतियोगित्वयोः अभाव[2]प्रतियोगित्वादेश्च अतिरेक[3]परत्वात् । परमार्थतस्तु संयोगेन घटवद्भूतलमित्यादौ संयोगादिसम्बन्धनिष्ठसांसर्गिकविषयताया एव अतिरिक्ताभ्यां घटभूतलप्रतियोगित्वानुयोगित्वाभ्यां निरूपितत्वं स्वीक्रियते, अत्र ज्ञाने घटस्य भूतले संयोगस्सम्बन्ध इति प्रत्ययात् । स्वाश्रयसंयोगादिसंसर्गकज्ञाने च संयोगादिनिष्ठसांसर्गिकविषयतायाः न ताभ्यां निरूपितत्वं, तथा प्रत्ययाभावात्, स्वाश्रयसंयोगादिसंसर्गकात् घटवद्भूतलमित्यादि[4]ज्ञानात् संयोगेन घटवद्भूतलमिति धीकार्यापत्तेश्च । उक्तज्ञानयोः वैलक्षण्यान्तरस्वीकारे गौरवात् । अतएव वह्न्यादिप्रतियोगिकपर्वताद्यनुयोगिकसंसर्गता संयोगादावस्तीति प्रतियोगिवैयधिकरण्यनिरूपणप्रस्तावे व्याप्तिसिद्धान्तलक्षणे हरिदासादिभिरुक्तं शिरोमणिटीकायाम् । एवंच घटवद्भूतल[5]मित्यादिज्ञाने यदि घटादौ विषयत्वमपेक्षितं, तदा घटादेः ज्ञानसामान्यसामग्र्या घटादौ निर्विकल्पकीयविषयतानियामकत्वम् । अथ विशिष्टबुद्ध्यादौ विशेषणज्ञानादिहेतुत्वे मानाभावात् न तदपेक्षा, तदा तद्ज्ञानाविषयस्यापि घटादेः

---

1 सत्त्वात्संयोगेन. 2 भाव. 3 अनतिरेक. 4 मित्याकारक. 5 घटवद्भूतलमितिज्ञानस्य विशेषणज्ञानादिविधया विशिष्टबुद्ध्यादिहेतुत्वाद्धटवद्भूतल. इत्यधिकः पाठः.

सांसर्गिकविषयतानिरूपकतावच्छेदकत्वम् । वस्तुतस्तु प्रतियोगित्वानुयोगित्वयोरेव विषयतात्वप्रकारतात्वविशेष्यतात्वानि कल्प्यन्ते । अन्यथा उक्तरीत्या घटत्वावच्छिन्नप्रतियोगित्वनिरूपितसंसर्गताकत्वस्य घटत्वावच्छिन्नप्रकारताकत्वरूपत्वे गौरवात् । तथाच प्रतियोगित्वानुयोगित्वयोः अतिरिक्तत्वं स्वीकृत्यापि विषयताया अतिरिक्तत्वस्वीकरणस्य अयुक्तत्वात् पक्षधरपर्यन्तप्राचीनतार्किकसम्मतं भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वे एव प्रकारत्वविशेष्यत्वे इति मतमेव युक्तमित्यवहिततमचित्तैश्चिन्त्यमेतत्सुधीभिः ॥

ननु तथापि प्रमेयत्वसामान्यलक्षणाजन्यज्ञानस्य प्रमेयमुख्यविशेष्यकत्वेन घटत्वादिरूपप्रमेयप्रतियोगितानिरूपितसमवायसांसर्गिकविषयताकत्वाभावात् कथमुक्तसंशयविरोधित्वमाचार्यैरुक्तम् ? न चोक्तज्ञानोत्तरभाविज्ञानस्य तथात्वमभिप्रेतमिति वाच्यम् ; घटत्वस्यापि प्रमेयमिति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वादित्युक्तिविरोधादिति चेन्न ; प्रमेयमिति ज्ञानात् ज्ञानान्तरे भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वादित्यर्थसम्भवात् । अपिच मुख्यविशेष्यतानन्त[1]र्भावेन सामान्यप्रत्यासत्तिकार्यत्वस्य नव्यमते स्वीकारात्, विशिष्टवैशिष्ट्यबुद्ध्यादौ विशेषणतावच्छेदकप्रकारकज्ञानत्वादिना हेतुत्वस्याप्यस्वीकारात्, प्रमेयमिति सामान्यज्ञानाज्जायमाने प्रमेयवानयमित्याकारकज्ञाने घटत्वस्य भासमानवैशिष्ट्यप्रतियोगित्वादुक्तसंशयानुपपत्तिरित्यभिप्रायः । न चोक्तसंशये प्रमेयवानित्याकारा[2] प्रमेयतावच्छिन्नप्रतियोगितात्वावच्छिन्ननिरूपकताकसमवायसंसर्गताकधीः न विरोधिनी, किन्तु अयं घट इत्याकारा शुद्धघटत्वप्रतियोगितात्वावच्छिन्ननिरूपकताकसमवायसंसर्गताकधीरिति वाच्यम् ; सकलघटवृत्तित्वादिरूपघटत्वत्व[3]विशिष्टवानयमित्यादिज्ञानस्यापि तद्विरोधित्वानुभवात् तद्व्यक्तिप्रतियोगिताकाभावबुद्धौ लाघवेन तद्व्यक्तिप्रकारक[4]-

[1] विशेष्यताविशेषणानन्त. [2] त्याकारात्. [3] घटत्वत्वं त्वन्मते. [4] प्रकारताक.

**यानि। तस्मात् सामान्यप्रत्यासत्त्या निषेधमात्रप्रतियोगि-**

निश्चयत्वेन विरोधित्वौचित्यात्। अन्यथा तद्घटमात्रवृत्त्यनन्तधर्माव-च्छिन्नप्रकारताकनिश्चयत्वेन अनन्तविरोधित्वकल्पने गौरवात्। न चात्र घटत्वमित्यादिज्ञानस्यापि विरोधित्वान्नोक्तधीत्वेन विरोधित्वं, किन्तु घटत्वनिश्चयत्वेन, निश्चयत्वं च जातिविशेषोऽनभ्यासकालीनज्ञान-इव प्रमेयवानयमित्यादिज्ञाने घटत्वाद्यंशे नास्ति, दोषविशेषस्य तत्र प्रतिबन्धकतया[1] स्वीकारादिति वाच्यम्; तादृशदोषकल्पने गौरवात्, सामान्यप्रत्यासत्तेरेव प्रक्षालनाद्धीति न्यायेन त्यागार्हत्वात्, प्रमेयत्वव-न्निष्ठेत्यादिव्याप्तिज्ञानस्य आधेयत्वांशेऽपि प्रमेयत्वनिश्चयत्वाभावापत्तेश्च। **तस्मादिति**। यद्यपि घटोऽत्यन्ताभावसमानाधिकरणो धर्मत्वादित्यनेन, कपालमत्यन्ताभाववत् वस्तुत्वादित्यनेन वा घटसमानाधिकरणयावदत्य-न्ताभावसिद्धिः सम्भवति, वह्निमदित्यनुमितेरबाधितयावद्वह्निविषयकत्ववत् उक्तानुमितेरप्यबाधितयावदत्यन्ताभावविषयकत्वसम्भवादिति चेत्, तथा-पि यादृशयावदभावप्रतियोगित्वाभावस्यायोग्यत्वेन लौकिकप्रत्यक्षाभाव-स्योक्तत्वादलौकिकप्रत्यक्षस्य च अनङ्गीकारात्, अङ्गीकारेऽपि चन्द्र-प्रादेशिकत्वप्रत्यक्षमिव तद्बाधितत्वानुमानोदयादनुपयुक्ता सेति भावः॥

यत्तु—'असद्विलक्षणत्वे सत्यनारोपितत्वं वर्तमानत्वप्रमाविष-यत्वं वा सत्त्वलक्षणमदोषं, तस्य चक्षुराद्ययोग्यार्थघटितत्वेऽपि तद्योग्य-ताया लक्षणत्वसम्भवात्' इति' तन्न; अज्ञानविषयत्वस्य तद्योग्यतात्वे जडेष्वव्याप्तेस्तदवच्छेदकत्वस्य तत्त्वे[2] ब्रह्मण्यव्याप्तेः। तदन्यतरस्य तत्त्वेऽपि शुक्तिरूप्यादावपि धीकाले मिथ्यात्वेन न जानामीत्यनुभवेन अज्ञानविषयतावच्छेदकत्वसत्त्वात्तत्रातिव्याप्तेः, सुखादावव्याप्तेश्च। अत एव प्रातीतिकान्यत्वे सति तुच्छान्यत्वमपि न तथा, चक्षुराद्ययोग्य-

1 बन्धकतायाः. 2 अतत्त्वे.

त्वोपस्थितौ तदभावग्रहात् बाध इत्यनुपपन्नमेव ।

तुच्छादिघटितत्वाच्च । अतएव वर्तमानविशिष्टरूपेणा[1]ज्ञानविषयतावच्छेदकत्वमपि न तथा, शुक्तिरूप्यादेरिव सुखादेरपि यावत्स्वसत्ताकालं वर्तमानत्वेन प्रत्ययात्तदभावात् दृष्टिसृष्टिपक्षे घटादावव्याप्तेश्च, अज्ञानविषयतावच्छेदकत्वादेः मन्मते मिथ्यात्वाविरोधित्वाच्च । यदपि[2] पराभिमतमिथ्यात्वाभावः सत्त्वमिति स्वकीयमूलग्रन्थे पराभिमतमिथ्यात्वं यदि स्वसमानाधिकरणस्वसमानकालीननिषेधप्रतियोगित्वादि, तदा तदभावस्य पूर्वमुक्तत्वात् पौनरुक्त्यमित्याशङ्क्य स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वे तात्पर्यमित्युक्तं, तदतीव चित्रम्, उक्तावच्छेदकत्वस्य मिथ्यात्वरूपत्वेनास्मदाचार्यैः क्वाप्यनुक्तत्वेन अस्मदिष्टत्वात् । न ह्यस्मन्मते घटादौ घटत्वादिना भेदः स्वीक्रियते- किन्तु घटत्वाद्यत्यन्ताभावः । अथ 'नेह नाना' इत्यादिश्रुतावत्यन्ताभाव इव अस्थूलमित्यादिश्रुतौ भेदस्य बोधनात् तादृशमपि मिथ्यात्वं युक्तमिति चेन्न; न स्थूलं यत्रेत्यादिव्युत्पत्त्या तस्या अप्यत्यन्ताभावबोधकत्वात्, 'अस्नेहमच्छायमि' इत्यादौ[3] तत्पुरुषासम्भवेन तत्समभिव्याहारात्, अस्थूलमित्यादावपि बहुव्रीहेर्युक्तत्वात् विभक्त्यन्तत्वानुरोधेन जघन्यत्वेन च चरमपद एव लक्षणास्वीकारेण तस्याद्यपदलाक्षणिकतत्पुरुषतुल्यत्वाच्च । अतएवाद्वैतरत्नादौ तस्या[4] भेदबोधकत्वं खण्डितम् । तद्बोधकत्वेऽप्यार्थिकस्यात्यन्ताभावघटितमिथ्यात्वस्य बोधनसम्भवात्तादृशबोधमादायैव परिमाणनिषेधबोधकत्वमस्याः पूर्वमाचार्यैरुक्तम् । न च परिमाणवति तद्भेदानङ्गीकारे कथं तद्बोधकत्वमिति वाच्यम्; धर्मिसमसत्ताकेन तदाश्रयत्वेन भेदबोधनसम्भवात् । अतएव नेदं रजतमिति प्रतीतेरार्थिकमिथ्यात्वसाधकत्वमिति पूर्व-

[1] रूपेण. [2] यत्तु. [3] अस्मेहोऽच्छाय इत्यापत्त्या. इत्यधिकः पाठः [4] तस्य.

माचार्यैरेवोक्तम् । किञ्च त्वदीयमूलेऽपि पञ्चविधमेवमिथ्यात्वं दूषणायानूदितं अन्यविधमिथ्यात्वस्यास्मदीयत्वे तददूषणे[1] त्वन्मूलकृतो न्यूनता स्यात् । तस्मात् पराभिमतेत्यादित्वन्मूलस्यायमर्थः—"सदसद्विलक्षणत्वादिरूपमिथ्यात्वे परैर्ब्रह्ममात्रगततया स्वमतसिद्धसत्त्यस्याभावनिवेशे सिद्धसाधनापत्तेः अबाध्यं सर्वं मेयमित्याकारकधीविशेषविषयत्वाद्यभावस्य तद्धीविषयत्वाद्यभावत्वेन निवेशः कार्यः । तथाच मिथ्यात्वलक्षणस्यासत्त्वाभावघटितत्वेऽपि अनुमीयमानमिथ्यात्वांशस्य तदघटितत्त्वेन पराभिमतस्याभावः उक्तधीविषयत्वादिरूपः सत्त्वमिति । एवञ्च यत्पूर्वमनुमेयत्वेन शङ्कितं तदभावरूपसत्त्वग्राहिप्रत्यक्षस्य बाधत्वमपि सङ्गच्छते, न तु भेदगर्भयथोक्तग्राहिप्रत्यक्षस्यानुमेयात्यन्ताभावतद्वद्भेदा[2] विषकत्वादिति स्फुटमेव ते भ्रान्तप्रतारकत्वम् । तद्धीविषयत्वादिकं च चक्षुराद्ययोग्यत्वात् न प्रत्यक्षमिति त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वादि दूषणेनैव दुष्ट[3] मित्यस्मदाचार्यैर्न पृथग्दूषितम् । यद्यपि त्वन्मते दृश्यत्वादयः सत्त्वप्रत्यक्षबाधिता इति प्रतिज्ञायास्तित्वप्रमाविषयत्वादिरूपसत्त्वोक्तिरप्यसङ्गता, तत्प्रत्यक्षस्योक्तरीत्याबाधत्वासम्भवात् । तथापि पराभिमतेत्यादौ उक्तासङ्गतौ त्वत्पाण्डित्यमेव बीजमिति । अपिच स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमव्याप्तं[4], घटादिसखण्डदृश्यमात्रे तद्वन्निष्ठायां भेदप्रतियोगितायां तत्समनियतानां ज्ञानविषयताविशेषाणामत्यन्ताभावप्रतियोगित्वादीनां वा तदपेक्षया लघुत्वेनावच्छेदकत्वात् । अथ गुरोरवच्छेदकत्वमते घटादिकमपि तथेति चेन्न; तन्मते कम्बुग्रीवादिमत्त्वादेः प्रतीतिबलात् स्वाश्रयविरोध्यभावप्रतियोगितावच्छेदकत्वेऽपि तदविरोध्यभावप्रतियोगितावच्छेदकत्वाभावात् श्रुत्यादिजनितायाः मिथ्यात्वबुद्धेर्विषयताविशेषादिलघुरूपावच्छिन्नस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिवि-

**ननु प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथं प्रत्यक्षं स्यात्? अथ तत्र रजतत्वविरोधिशुक्तित्वे साक्षात्कृते तदन्यथानुपपत्त्या च रजतत्वाभावे निश्चिते मिथ्यैव रजतमभादिति तादृङ्निषेधप्रत्ययः स्वसम्बन्धसर्वभासकेन साक्षिणैवोपपन्नः, तर्हि साक्षात् स्वविषयस्यगगनादेर्भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणासाक्षिणा गृह्यतामिति—चेन्न साक्षिणो विद्यमानावभासकत्वेनाविद्यमानभाविबाधाभावभासकत्वानुपपत्तेः,**

---

षयकत्वेनाप्युपपत्तेः गुरुनिष्ठतादृशावच्छेदकत्वाकल्पकत्वात् । [1]अथ विषयताविशेषादेरिव तद्धटादेरपि स्वरूपतोऽवच्छेदकत्वसम्भवात् न गौरवमिति वाच्यम्, तथापि तस्य स्वरूपतः प्रतियोग्यंशे विशेषणत्वासम्भवेन केनचिद्रूपेण तथाभूतस्यावच्छेदकत्वं वाच्यमित्युपस्थितिगौरवं दुर्वारमेव । अन्यथा तद्रूपादेः स्वसमनियतकारणतावच्छेदकत्वापत्त्या अनन्त[2]कारणत्वाद्यापत्तेः । विषयताविशेषादिकं यद्यपि प्रत्यक्षे ज्ञानविशेषिततयैव भाति; तथाप्यनुमित्यादौ स्वरूपेणैवविशेषणमिति तदेवावच्छेदकं युक्तम् । किञ्च भेदगर्भमप्युक्तसत्त्वं[3] न चक्षुरादियोग्यं, मूर्तसामान्यवद्भेदवदुक्तरीत्या योग्यानुपलम्भाभावादिति दिक् ॥

**साक्षात्स्वविषयस्येति** । ज्ञाततया अज्ञाततया वा स्वविषय[4]स्येत्यर्थः । **साक्षिण इति** । प्रमाणवृत्त्यनुपहितसाक्षिण इत्यर्थः । **विद्यमानावभासकत्वेनेति** । विद्यमानान्येनार्थेन[5] विद्यमानकालावच्छेदेन आध्यासिकतादात्म्याभावेनेत्यर्थः **भाविबाधाभावभासकत्वेति** । भाविकालनिषेधाप्रतियोगित्वनिश्चयत्वेत्यर्थः । तथाचाज्ञाततया भाविबाधाभावस्य साक्षिणा व्यवहारो यद्यपि सम्भवति; तथापि न

---

[1] न च. [2] कत्वापत्तयाद्यनन्त. [3] स्वं. [4] विषय. [5] विद्यमानार्थे.

**साक्षिज्ञानस्य भ्रमप्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्च । ननु ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव, न हि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नामेति चेन्न; व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावपि संवादोपपत्तेः, तद्रूपगतप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावात् । न हि घटादिज्ञानस्य संवादिप्रवृत्तिजनकतावच्छेदकं प्रामाण्यं त्रिकालाबाध्यविषयकत्वम्, किन्तु शुक्तिरूप्यादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्ति व्यवहारकालाबाध्यविषयकत्वमेव । तच्च न भाविकालबाधविरोधीत्युक्तम्, भाविकालबाधतदभावौ च न मानं विना साक्षिणा गृहीतुं शक्यौ,**

---

तस्य तन्निश्चयत्वमिति न मिथ्यात्वानुमितिबाधकत्वम्[1] । शुक्तिरूप्यादेरप्युक्तान्यथानुपपत्त्यादिमानेनैव त्रिकालादिगर्भ[2] मिथ्यात्वनिश्चय इति भावः **भ्रमप्रमासाधारणेति** । सुखाद्यंशे प्रमात्वस्येव शुक्तिरूप्याद्यंशे भ्रमत्वस्यापि गृह्यमाणत्वेन त्रिकालनिषेधाप्रतियोगित्वांशेऽपि भ्रमत्वशङ्कास्पदत्वेनेत्यर्थः—**व्यवहारेत्यादि** । व्यवहारकालाबाध[3] विषयकत्वमात्रेण प्रवृत्तिप्रयोजकाविसंवादोपपत्तेरित्यर्थः । यादृशं प्रवृत्तावविसंवादित्वं तादृशं तत्प्रयोजकज्ञाने अपेक्ष्यते औचित्यत्त्, भाविकालाबाध्यत्वादिनिवेशे गौरवाच्चेत्याशयेनाह—**न हीति** । **अवच्छेदकमिति** । आवरणविषयतानवच्छेदक[4] प्रमात्वेन जनकतेत्यर्थः । तेन दोषविशेषात्प्रमाया अप्रमात्वभ्रमविषयीभूताया अप्रवर्तकत्वेपि न दोषः । तत्रप्रमात्वविशिष्टमानावच्छेदेन साक्षिण आवरणविषयत्वात् । प्रवृत्ति[5] सामान्यकारणीभूतं यत् प्रमात्वेन निश्चीयमानं[6] ज्ञानं तत्सहकृताया एव प्रमायाः संवादिप्रवृत्त्युपधायकत्वात्—**शुक्तिरूप्येति** ।

---

[1] साधकत्वं. [2] त्रिकालादिगत [3] कालाबाध्य. [4] तावच्छेदक [5] प्रयत्न.
[6] निर्णीयमानं

**तस्य विद्यमानमात्रग्राहित्वादिति चोक्तम्। ननु तर्हि देहात्मैक्यज्ञान मुष्णं जलमित्यादि ज्ञानं च प्रमा स्यात्, व्यवहारदशायां विषयाबाधादिति चेन्न; आब्रह्मज्ञानमबाधितत्वेन तेषामपि घटादिज्ञानसमानयोगक्षेमत्वात्। ननु कालान्तरस्थमपि यत् बाधकं तदपि किं यत्कालावच्छेदेन अनेन स्वार्थो गृहीतः तत्कालावच्छेदेनैव तन्निषेधति उतान्यकालावच्छेदेन; आद्ये कथमस्य प्रामाण्यम्? अन्त्ये अनित्यत्वादिकमेवेति—चेन्न; अबाध्यत्वरूपप्रामाण्यस्य प्रपञ्चज्ञाने मया अनङ्गीकारात्। यत्कालावच्छेदेनैवानेन स्वार्थो गृहीतः तत्कालावच्छेदेनैव तन्निषेधाभ्युपगमात्। यच्च प्रामाण्यं मया अभ्युपेयते तत् व्यवहारदशायां विपरीतप्रमारूपबाधकस्य अनुपपन्नत्वादस्त्येव।**

---

व्यवहारकालबाध्य[1] शुक्तिरूप्येत्यर्थः—**क्षेमत्वादिति**। तथा च व्यवहारकालाबाध्यप्रातीतिकमात्रस्येयं गतिरिति तत्र साक्षिणा उक्तप्रामाण्य[2]ग्रहात् संवादिन्येव प्रवृत्तिः, व्यवहारकालाबाध्यविषयकत्वस्त्येव प्रवृत्तिनिर्वाहित्वादिति भावः। न च स्मृतिवारणायाज्ञानविषयतावच्छेदकाबाध्यविषयकत्वं प्रमात्वं वाच्यमिति प्रातीतिकस्य तादृशाबाध्यत्वाभावान्नतद्धीः प्रमेति वाच्यम्; तात्त्रिकव्यवहार्यप्रमात्वस्य तथात्वेऽपि प्रवृत्तिप्रयोजके अवच्छेदकान्तानिवेशात्। स्मृतेरप्यनुमित्यादिवत् प्रवर्तक[3]त्वात्—**अनित्यत्वादित्यादिना**। निषेधस्याव्याप्यवृत्तित्वमेवकारात् न तु मिथ्यात्वधीरूपो बाध., मिथ्यात्वस्य प्रतिपन्नदेशकालावच्छिन्ननिषेधघटितत्वादित्यर्थः—**अबाध्यत्वेति**। त्रिकालाबाध्यत्वेत्यर्थ.। **अस्त्येवेति**। व्यवहारकालावच्छिन्नात्यन्ताभावप्रतियोगित्वेऽपि तद्धीविषयत्वाभावो व्यवहारकाले अस्त्येवेत्यर्थः। अत्र तद्रूपप्राणाण्यस्य साक्षिणा ग्रहणेऽपीत्यपिशब्देन अस्वरसः सूचितः।

---

[1] कालाबाध्य      [2] प्रामाण्या      [3] मित्यादिप्रवर्तक.

स चेत्थम्, व्यवहारकालाबाध्यविषयकत्वमपि न साक्षिग्राह्यम्, यदेव हि तार्किकादिमतरीत्या साक्षात्क्रियते तदेव साक्षिग्राह्यं वाच्यम्; अन्यथा पिशाचाभावादेरपि तत्त्वापत्तेः। व्यवहारकालाबाध्यत्वं च तन्मतरीत्या घटादिकं इदानीं यदि व्यवहारकाले बाध्येत तर्हि तथोपलभ्येतेत्यापादनासम्भवेन योग्यानुपलम्भाभावात् वर्तमानव्यवहारकाले अन्यपुरुषस्य बाधसम्भवेऽपि तत्पुरुषे बाधाभावेन तत्पुरुषस्य बाधानुपलब्धिसम्भवात्। अथ—वस्तुगत्या यो व्यवहारकालः तत्तज्ज्ञानाधिकरणीभूतः तद्घटितं स्वाधिकरण[1]कालावच्छिन्नं यद्बाधाविषयत्वं तद्विषयकत्वरूपं स्वाधिकरणकालावच्छिन्नसामानाधिकरण्यसम्बन्धेन स्वविषयबाधस्य योऽभावस्तद्विशिष्टत्वं वा प्रमात्वम्। स्वपदं प्रमाव्यक्तिपरम्। पुरुषभेदेन प्रपञ्चभेदादेकपुरुषीयधीविषये पुरुषान्तरीयबाधाभावादाद्यं, पुंभेदेन प्रपञ्चाभेदेऽपि द्वितीयं साक्षिणा सुग्रहम्, यदीदानीमिदं घटादि बाध्येत तदा तथोपपलभ्येत, यद्युक्तसम्बन्धेनात्र ज्ञाने बाधः स्यात् तदा तथोपलभ्येतेत्यापादनसम्भवात्, योग्यानुपलम्भसत्त्वादिति चेन्न; तत्तज्ज्ञाने स्वानधिकरणव्यवहारकालबाध्यविषयकत्वग्रहे प्रवृत्त्याद्यनु[2]त्पादेन स्वाधिकरणकालीनोक्तबाधाभावघटितस्य प्रमात्वरूपत्वाभावात्, स्वसमानाधिकरणस्वान्यूनसत्ताकाभावप्रतियोगित्वस्य स्वाधिष्ठानस्य वा ज्ञानं घटादेर्बाध इति तत्त्वेनेदानीं ज्ञानसम्भवाच्च। अथ वस्तुगत्या व्यवहारकालीनं यद्बाधायोग्यत्वं तद्विषयकत्वमेव। तदुक्तायोग्यत्वं च उक्तप्रतियोगित्वविशिष्टरूपेणाज्ञानविषयतावच्छेदकत्वं अज्ञानविशेषणतया च उक्तप्रतियोगित्वविशिष्टं साक्षिग्राह्यमेव। स्मृतेरप्युक्तप्रमात्वेन प्रवर्तकत्वम्। शुक्तिरूप्यादिधीरपि बाधपूर्वं तथेति सापि प्रवर्तिका संशयवारणाय निश्चयत्वमपि निवेश्यम्। अज्ञान[3]विषयकनिश्चयत्वं प्रमात्वमिति अद्वैतरत्नाद्युक्तेरत्रैव तात्पर्यम्।

---

[1] स्वस्यानधिकरण. [2] प्रवृत्त्यनु. [3] अज्ञात.

**न च यत् भवतां घटादिबुद्धेः प्रातिभासिकबुद्धितो वैलक्षण्यं विषयस्य व्यावहारिकसत्त्वसाधकं, तदेवेह मम विषयस्य पारमार्थिकसत्त्वसाधकमस्त्विति वाच्यम्; प्रातिभासिकबुद्धिवैलक्षण्यं हि घटादिबुद्धेः सप्रकारकज्ञानाबाध्यविषयत्वादिरूपम्। तन्न पारमार्थिकसत्त्वं घटादेः साधयितुं शक्तम्। देहात्मैक्यज्ञाने ब्रह्मज्ञानाव्यवहितभ्रमे च व्यभिचारात्। ननु 'घटस्सन्, रूप्यं मिथ्येति' प्रतीत्योरविशेषे कथं 'घटोमिथ्या, रूप्यमिथ्यात्वं न मिथ्या' इति विशेषः? न च तदपि मिथ्यैव, रूप्यतात्त्विकत्वापत्तेरिति चेन्न; मिथ्यात्वमिथ्यात्वेऽपि यथा न रूप्यस्य तात्त्विकत्वं तथोपपत्तेरुक्तत्वात्। न च पारमार्थिकसत्त्वस्य प्रत्यक्षागोचरत्वे तन्निषेधश्रुतीनां**

---

अन्यथा [illegible] व्यवहारकालाबाध्यप्रातीतिकबुद्धेः संवादिप्रवृत्तिप्रयोजक[1]प्रमात्वाभावापत्तेरिति चेत् तथापि व्यवहारकालीनबाधाभावघटितस्य साक्ष्यग्राह्यत्वेनापिशब्दसूचितमस्वारस्यं सिद्धमेव। तदेवं त्रिकालबाधाभावघटितप्रमात्वग्राहकत्वेनाविद्यमानग्राहकत्वात्त्रैकालिकनिषेधाप्रतियोगित्वमपि साक्षी गृह्णात्विति दृश्यत्वादेः साक्षिबाध्यत्वशङ्कां निरस्य व्यावहारिकप्रमायाः प्रसङ्गात् तदीयव्यावहारिकविषयकत्वसाधकलिङ्गेन दृश्यत्वादिकं बाधितमिति प्रसङ्गाच्छङ्कते। **न चेति।** **प्रातिभासिकेति।** ब्रह्माविषयकज्ञानबाध्येत्यर्थः विषयकत्वादीत्यादिना ब्रह्मधीबाध्यत्वविषयकत्वादिसङ्ग्रहः। तेन सोऽयमिति शाब्दनिष्प्रकारकधीबाध्यभेदविषयकस्योक्तवैलक्षण्याभावेऽपि न क्षतिः। **अविशेषे।** आगन्तुकदोषजन्यत्वविशेषस्याभावे। **तन्निषेधेति।** तदवच्छिन्नप्रति-

---

[1] संवादिप्रयोजक

**अप्रसक्तप्रतिषेधकता स्यादिति वाच्यम्; तासां चक्षुरादिप्रसक्तद्वैतनिषेधपरत्वात् । पारमार्थिकत्वेन द्वैतनिषेधपरत्वेऽपि नाप्रसक्तनिषेधकत्वम्; परोक्षप्रसक्तेस्सम्भवात्, 'नान्तरिक्षेऽग्निश्चेतव्यः' इत्यादिवदप्रसक्तप्रतिषेधस्याप्युपपत्तेश्च । न च**

---

योगिताकनिषेधबोधकेत्यर्थः[1] । **अप्रसक्तप्रतिषेधकतेति** । येन रूपेण यत् न ज्ञातं[2] तेन तन्निषेधकतेत्यर्थः । **चक्षुरित्यादि** । दृश्यत्वाकाशत्वादिना चक्षुरादिज्ञातं द्वैतं, तेन तन्निषेधपरत्वादित्यर्थः । **नान्तरिक्ष—इत्यादि** । यत्र प्रतिषेधे तात्पर्यं, तत्र प्रतियोगिप्राप्त्यादिकं विना तत्कल्पनवैयर्थ्यात् तदावश्यकता, यत्र तु 'नान्तरिक्षे' इत्यादौ न तत्र तात्पर्यं, किन्तु मानान्तरसिद्धतदनुवादद्वारा विधेयस्तुतिपरत्वं, तत्र न तदावश्यकता । तथाच सत्यत्वविशिष्टद्वैत[illegible]मं विनापि 'नेहनाना' इत्यादिश्रुतीनां मिथ्यात्वानुमानादिसिद्धस्य ब्रह्मगतस्य सत्यत्वेन द्वैताभावस्य अनुवादद्वारा विधेयब्रह्मस्तुतिपरत्वमिति भावः । प्रथमाध्याये द्वितीयपादे अर्थवादाधिकरणे 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यन्तरिक्षे दिवि च चयनं न प्रतिषिध्यते, अप्राप्तत्वात् । नापि पर्युदस्यते, अदिव्यनन्तरिक्षे च नित्यप्राप्तत्वात् । एवं पृथिव्यां न तत्प्रतिषेधपर्युदासौ, चयनविरोधात् । नापि ग्रहणाग्रहणवत् पाक्षिकत्वसिद्धये प्रतिषेध इति वाच्यम्; 'पशुकामश्चिन्वीत' इत्यादि पुरुषार्थचयनस्य 'अथातोऽग्निमग्निष्टोमेन यजेत' इत्यादि क्रत्वर्थचयनस्य च पाक्षिकत्वस्य च सिद्धत्वात् । 'यद्यग्निं चेष्यमाणा भवन्ति' इत्यस्मिन् सत्रगतसमारोपकालादिगुणाविधायकवाक्ये सिद्धवत्पाक्षिकानुवादादिना 'अग्निः सोमाङ्गं वेच्छताम्' इति कात्यायनोक्त्याच निरग्निसोत्तरवेदिकप्रयोगस्य दशमोक्तत्वात् कत्वर्थचयनस्यापि पाक्षिक-

---

1 निषेधकेत्यर्थः. 2 यत् ज्ञातं.

**अतात्त्विकप्रपञ्चे यदि तात्त्विकत्वमप्यध्यक्षेण न गृह्यते कथं तर्हि तस्यातत्त्वावेदकत्वम्? न हि तदेव तत्त्वेनावेदयत्तात्त्विकं नाम। दृश्यते च सार्वलौकिकप्रपञ्चे पारमार्थिकत्वानुभव इति वाच्यम्; न ह्यस्माकं तत्त्वावेदकत्वं तद्वति तत्प्रकारकत्वम्, तद्भिन्नत्वमतत्त्वावेदकत्वम्। किन्तु अबाधितविषयत्वं तत्त्वावेदकत्वम्। बाधितविषयत्वं च अतत्त्वावेदकत्वम्। अबाधितविषयत्वं च श्रौते ब्रह्मज्ञान एव, तद्भिन्नज्ञाने तात्पर्यवद्वेदत्वेनैव तत्त्वावबोधकत्वात्। तथाच प्रपञ्चप्रत्यक्षस्य तात्त्विकत्वागोचरत्वेऽपि अतत्त्वाबोधकत्वं सङ्गच्छते। सार्वलौकिकपारमार्थिकत्वप्रसिद्धिस्तुजलगतपिपासोपशमनसामर्थ्यप्रसिद्धिवत् परोक्षतयाऽप्युपपन्ना नापरोक्षत्वपर्यवसायिनी ॥**

**तस्मादध्यक्षयोग्यस्य सत्त्वस्येहानिरुक्तितः।**
**नाध्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥**

---

त्वस्य सिद्धत्वात् 'उत्तरवेद्यामग्निश्चीयते' इत्यनेन साग्निप्रयोग एवाग्न्युत्तरवेद्योः समुच्चयस्य सङ्कर्षोक्तत्वात्। अत उक्तवाक्यमप्रमाणमप्रतिषेधभागित्वादिति 'अभागिप्रतिषेधात्' इति सूत्रे आशङ्क्य शुद्धपृथिवीचयनप्रतिषेधो नित्यानुवादो 'न पृथिव्यां चेतव्यः' इति नहि निन्दान्यायेन 'हिरण्यं निधाय चेतव्यम्' इति विहितहिरण्यस्तुत्यर्थः। तदुपपादकौ च इतरौ नित्यानुवादौ, यथा अन्तरिक्षे दिवि वा चयनमप्रसिद्धं तथा हिरण्यरहितायां शुद्धपृथिव्यामिति सिद्धान्तितं 'अन्त्ययोर्यथोक्तम्' इति सूत्रे। **तात्पर्येति**। महातात्पर्येत्यर्थः। अवान्तरतात्पर्यविषयस्य यागादिगतेष्टसाधनत्वादेः बाधितत्वादिति भावः। **पिपासेति**। दुःखविशेषरूपपिपासानिवृत्तिसामर्थ्यस्य जलगतस्य व्यापकताविशेषरूपत्वात् शक्तिविशेषरूपत्वाद्वा नापरोक्षतेति

न लौकिकं न सामान्यजन्यं साक्ष्यात्मकं च न ।
प्रत्यक्षं बाधते लिङ्गमिथ्यात्वस्यानुमापकम् ॥

इति प्रत्यक्षयोग्यसत्यत्वानिरुक्त्या प्रत्यक्षबाधोद्धारः.

---

## प्रत्यक्षबलखण्डनम्.

किंचेदं रूप्यमित्यत्र इदमितिवत् 'सन् घटः' इत्यत्रापि सदित्यधिष्ठानभूतं ब्रह्मैव भासते । न च चाक्षुषादिज्ञाने रूपादिहीनस्य ब्रह्मणः कथं स्फुरणमिति वाच्यम्; रूपादिहीनस्यापि कालादिन्यायेन स्फुरणस्य प्रागेव उपपादितत्वात् । नन्वेवं 'नीलो घटः, मिथ्या रूप्यं असन्नृशृङ्गम्'

---

भावः । लौकिकं । लौकिकसन्निकर्षजन्यम् । सामान्येति । अलौकिकसन्निकर्षमात्रेत्यर्थः । सामान्यज्ञानप्रत्यासत्त्योः सन्निकर्षत्वास्वीकारात् योगजधर्मस्य प्रत्यक्षजनकत्वस्वीकारपक्षेऽप्यतीन्द्रियप्रत्यक्षजनकत्वास्वीकारात् सत्यत्वप्रत्यक्षाजनकत्वमिति भावः ॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डनां खण्डिता सत्त्वयोग्यता ॥

इति प्रत्यक्षबाधोद्धारः.

---

इदमितीति । यथेदंरजतयोः कल्पितं तादात्म्यं भाति, तथा सद्रूपमिथ्यारूपयोः, तच्च नोक्तमिथ्यात्वविरोधीति लौकिकप्रत्यक्षमपि न दृश्यत्वादिबाधकरूपमिति भावः । घटादेरारोपितत्वात् सिद्धिकालेऽपि कार्यमात्रे ब्रह्मणो निमित्तत्वस्येवोपादानत्वस्यापि सिद्धि-

**इत्यादावपि 'नीलः' इत्यादिरधिष्ठानानुवेध इति स्यात्। न च नैल्यं घटादिष्वस्ति सत्त्वं तु नेति वाच्यम्; अस्यारोपितत्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्। अन्यथा 'सत्यं ज्ञानम्' इत्यत्रापि सत्यमित्याधिष्ठानानुवेध एव स्यादिति चेत् न; सन्नित्यस्य घट इत्यनेन सामानाधिकरण्यस्य बाधितत्वात्। तथाहि सत्ताजातिस्फुरणनिबन्धनं वा, स्वरूपसत्त्वनिबन्धनं वा, कालत्रयाबाध्यत्वनिबन्धनं वा, सामानाधिकरण्यं स्यात्। न चाभावादिसाधारणसत्प्रतीतौ सत्ताजातिस्फुरणं सम्भवति, अभावादिषु त्वयापि तदनङ्गीकारात्। न च क्वचित्साक्षात्सम्बन्धेन क्वचित् परम्परासम्बन्धेन सदिति प्रतीत्युपपत्तिः, विजातीयसम्बन्धेन समानाकारप्रतीत्यनुपपत्तेः।**

---

सम्भवात् ज्ञानरूपत्वेन ज्ञेयमात्रसम्बन्धत्वाच्च सद्रूपब्रह्मतादात्म्यमुक्तधीविषयो निर्णीयते। न त्वन्यादृशसत्तासम्बन्धः, असम्भवात्। किञ्च उक्तमिथ्यात्वाभावविषयकत्वे सिद्धे त्वनिष्टं[1] सेत्स्यति। न च तत्रयं[2] साधयितुं शक्तं, सद्रूपतादात्म्यविषयकत्वस्य त्वत्सिद्धत्वेऽपि मिथ्यात्वरूपारोपितत्वसिद्धिःस्सम्भवत्येवेति क्वान्योन्याश्रयनेत्याशयेनाह—**न सन्नित्यस्येति**। यद्यपि जातिनिबन्धनमित्येव वक्तुमुचितं, तथापि जातेः सर्वगतत्वमते तथा वक्तुमशक्यतया स्फुरणनिबन्धन मित्युक्तम्। **विजातीयेति**। सर्वत्र एकजातीयसम्बन्धेन सत्ताप्रकारकत्वेन मानसिद्धप्रतीतेर्विजातीयसम्बन्धेन क्वचित्सत्ताप्रकारकत्वेन उपादानासम्भवादित्यर्थः। न च तथा मानसिद्धत्वमसिद्धमिति वाच्यम्; द्रव्यगुणकर्मसु साक्षात् सम्बन्धः, अन्यत्र परम्परासम्बन्धः भातीति हि वैशेषिकादिशास्त्रकल्पना। न तु लोका-

---

[1] त्वदिष्टं.  [2] तत्त्वया.

**अन्यथा सम्बन्धभेद एव न सिद्ध्येत् । न च स्वरूपसत्त्वेनाभावादौ तत्प्रतीतिः, अननुगमात्, अननुगतेनापि अनुगत-**

---

नुभवः अन्यथा तच्छास्त्रानभिज्ञस्य द्रव्यादित्रयमेव सदितिधीकाले त्रयान्य[1]त्सामान्यादिसदिति परम्परासम्भन्धेन सत्ताधीः स्यात् । न च त्रयान्यत्र परम्परासम्बन्धेन सत्तावतो भेदस्त्रयमेवेत्यत्र प्रकार इति परम्परासम्बन्धेन सत्ताधीर्न जायते इति वाच्यम्; येन सम्बन्धेन त्रये सत्ताप्रकारः त्रयान्यत्र तत्सम्बन्धेन तद्वतो भेदस्यैव एवकारेण बोधनादेव[3] परम्परासम्बन्धेन सामान्यादिकं न सदिति धीकाले सामान्यादिसदिति धीर्भ्रमस्स्यात् । द्रव्यादिसप्तकं सदेवेति च लोकानुभवो भ्रमस्स्यात्; विशेष्यतावच्छेदकावच्छेदेन एकसम्बन्धेन सत्ताप्रकारकत्वात् । न[4] च तदिष्टं; बाधकाभावात्, तत्कारणदोषकल्पने गौरवाच्च 'लोहितः स्फटिकः' इत्यादौ तु बाधस्य सर्वानुभाविकत्वात् तत्कल्पना न दोष इति भाव. । **अन्यथेति** । साक्षात्सम्बन्धस्य प्रामाणिकत्वसम्भवेऽपि परम्परासम्बन्धस्य कल्पन इत्यर्थः । **सम्बन्धभेदः** साक्षात्सम्बन्धनानात्वम् । घटादेस्संयोगः समवायो वा अस्तु कपालादौ भूतलादौ वा परम्परासम्बन्धसम्भवात् । अथ क्वसाक्षात् क्वपरम्परेति विनिगमकाभावादुभयत्र परम्परासम्बन्धाननुभवाच्च उभयत्रापि साक्षात्सम्बन्धः, तर्हि प्रकृतेऽपि द्रव्यादित्रये साक्षात्, अन्यत्र परम्परेति वा अन्यत्रैव स्वरूपसम्बन्धेन समवायत्वाभावत्वादिवत् सत्ताखण्डोपाधिर्वर्तते द्रव्यादित्रये स्वरूपसम्बन्धघटितपरम्परासम्बन्धेनेति वेति विनिगमकाभावादुभयत्र परम्पराननुभवाच्चोभयत्रापि साक्षात्सम्बन्धः । तत्र घटादेरुत्पत्तिकाले कपालादौ संयोगस्य, भूतलादौ समवायस्य चासम्भवात् सम्बन्धभेदसिद्धावपि प्रकृते एकसम्बन्ध एव

---

1 क्रिया. 2 भेदस्त्रय. 3 बाधनादेवं. 4 न चेत्यादिस्सर्वानुभाविकत्वादित्यन्त-पाठः क्वचिन्न दृश्यते.

**प्रतीतौ जातिमात्रोच्छेदप्रसङ्गात्। अतएव न सर्वत्रापि स्वरूपसत्त्वेनैव सद्व्यवहारः, एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ बहूनां तद्धेतुत्वकल्पने मानाभावात्। नापि कालत्रयाबाध्यत्वनिबन्धनं तत्, तस्य चक्षुराद्यगम्यत्वस्योक्तत्वात्, सदिदं रजतमित्यादिभ्रमे अभावाच्च। तस्मादेकं सर्वाधिष्ठानमेव सादिति सर्वत्रानुभूयत इति युक्तम्। नीलादेस्तु घटादिसामानाधिकरण्ये किमपि नास्ति बाधकम्। न वा नीलादेरधिष्ठानत्वं सम्भवति, प्रागसत्त्वात्। नीलपीतादिप्रातस्वि-**

---

कल्प्यत इति विशेषः। न च जन्यसत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वम्; अन्यथा रूपादेः स्वसमवायिसमवेतत्वसम्बन्धेन कारणस्य सत्वात् कपालरसादावपि रूपाद्युत्पत्तिस्स्यात्, अतो द्रव्यादित्रये[1] सत्तासमवायस्य आवश्यकत्वात् अन्यत्र परम्परासम्धन्बस्य तद्धटितस्य सम्भवान्न स्वरूपसम्बन्धकल्पनमिति विनिगमकामिति वाच्यम्; तावतापि हि रूपादिष्वेव साक्षात्सम्बध्यतां सत्ता, न तु द्रव्ये। किञ्च समवायेन जन्यत्वेनैव द्रव्यकार्यत्वसम्भवात् रूपादेर्घटत्वादिवत् अनुगतनित्यत्वसम्भवेन रूपाद्यजन्यत्वसम्भवाच्च नोक्तं विनिगमकमिति भावः। **स्वरूपसत्त्वेन**—घटादिस्वरूपसत्त्वेन। अथवा स्वरूपसत्त्वेनेति कालसम्बन्धित्वेनेति देशसम्बन्धित्वेनेति वा अर्थः। **सर्वानुगतेनेति।** यदि खण्डकालदेशभानं तदा अननुगतत्त्वम्। अथाविद्यारूपमहाकालदेशभानं तदा अनादिपदार्थेषु तत्सम्बन्धा[2]सम्भव। परम्परासम्बन्धस्य तेषु भानेऽपि सम्बन्धस्यैकजातीयत्वाभावादननुगम इति भावः। **अधिष्ठानत्वं** उपदानाज्ञानविषयत्वम्। नीलादेर्घटत्वादिवन्नानाद्रव्यानुगतनित्यत्वमते प्राक्स्तत्वादाह—**नीलपीतेति**। सद्रूपं

---

[1] द्रव्यादित्वेन हेतुत्वम्। अन्यथा त्रये. [2] तत्सम्बन्ध.

कानन्ताधिष्ठानकल्पने गौरवात्, अधिष्ठेयतुल्ययोगक्षेमत्वाच्च। अधिष्ठेयविषमसत्ताकमेव हि अधिष्ठानं भवति। 'मिथ्यारूप्यम्, असन्नृशृङ्गम्' इत्यादौ मिथ्यात्वासत्त्वयोराधिष्ठानत्वशङ्कापि नास्तीति शून्यवादापत्तेः। तत्र चानुपपत्तिरुक्ता, वक्ष्यते च। यत्तु 'सत्यं ज्ञानमनन्तम्' इत्यत्रापि तथा स्यादिति, तन्न; यतो न तत्र सत्तासम्बन्धेन सत्त्वम्, किन्तु स्वरूपेणैवेति उक्तदोषानवकाशात्। न चैवं घटादावपि स्वरूपेणैव तथात्वम्, पूर्वमेव निराकृतत्वात्। किं च निश्चित-

नीलादि प्रत्येकं वा अधिष्ठानमित्यत्र विनिगमकमाह —**अधिष्ठेयतुल्ययोगक्षेमत्वादिति**। मिथ्यात्वादित्यर्थः॥

**अधिष्ठेयविषमसत्ताकमिति**। यत्प्रमया यदुपादानाज्ञाननिवृत्तिस्तत्तदपेक्षया अधिकसत्ताकं वाच्यं, अन्यथा तथा सा न स्यात्। नीलादिकं च घटाद्यपेक्षया न तथेति भावः। अथवा अधिष्ठेयविषमसत्ताकं तात्त्विकं, अतात्त्विकस्य नाधिष्ठानत्वमज्ञानविषयत्वरूपं सम्भवति, जडत्वेनैव प्रकाशासम्भवेन तद्वैयर्थ्यादिति भावः। न चाधिष्ठानावच्छेदकतया नीलादि भासतां इदं रजतमित्यादाविदमादिवदिति वाच्यम्; घटत्वादिवन्नीलादेः प्राक् सत्त्वं; अतएव तदवच्छिन्नचैतन्यस्याज्ञानविषयत्वस्य वाच्यतया तन्मते घटत्वादिवत् नीलादेरपि सद्रूपानतिरेकसम्भवात्, अधिष्ठान [1]स्यैव सम्भवात् अधिष्ठानावच्छेदकतया सामानाधिकरण्यस्यापीष्टत्वसम्भवाच्च **मिथ्यात्वासत्त्वयोः** मिथ्यातुच्छयोः। तेन परमते मिथ्यात्वासत्त्वयोः नीलादितुल्यत्वेऽपि न क्षतिः। **शङ्कापीति**। नीलादेस्तु सत्त्वशङ्कया अधिष्ठानत्वशङ्का सम्भवतीति भावः। **स्वरूपेणेति**। स्वरूपानतिरिक्तमित्यर्थः। तथाच सत्तायां सद्व्यवहारः सत्तान्तराविषयक इति परेषामपि सम्मतमिति भावः।

[1] त्व.

प्रामाण्यमेत्र प्रत्यक्षमितरबाधकं भवेत्। न चात्र प्रामाण्यं निश्चितम्, आगमविरोधात्, अनुमानविरोधात्, भाविबाधाभावानिर्णयाच्च। ननु प्रत्यक्षमेव प्रबलमनुमानागमबाधकम्, नानुमानागमौ, प्रत्यक्षाप्रामाण्ये तद्विरोधाभावेनानुमानागमयोः प्रामाण्यम्; तयोः प्रामाण्ये च तद्विरोधात्, प्रत्यक्षाप्रामाण्यमित्यन्योन्याश्रयात्। न हि प्रत्यक्षस्य प्रामाण्येप्येवमन्योन्याश्रयः, तस्यानपेक्षत्वादिति चेन्न; चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन तस्याप्रामाण्यदर्शनात्, तेनापि स्वप्रामाण्यसिद्ध्यर्थमितराविरोधस्य अवश्यमपेक्षणीयत्वात्। तथाचान्योन्याश्रयतुल्यत्वात् परस्परविरोधेन प्रामाण्यसन्देहे सत्यनाप्तप्रणीतत्वादिना प्रमाजनकत्वव्याप्तेः वेदप्रामाण्यनिश्चये जाते तेन स्वतस्सम्भावितदोपस्य प्रत्यक्षस्य बाधात् अस्मन्मते क्वान्योन्याश्रयः। अन्यथा देहात्मैक्यप्रत्यक्षबुद्ध्या बाधात् देहभिन्नत्वमप्यात्मनो नागमानुमानाभ्यां सिद्ध्येत्। ननु प्रत्यक्षमनुमानाद्यपेक्षया जात्यैव प्रबलम्, कथमन्यथा औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमितिप्रतिबन्धः? न च तत्रोपजीव्यत्वनिबन्धनं प्रत्यक्षस्य बाधकत्वम्, धर्म्यादेश्चक्षुरादिनैव सिद्धेस्त्वचोऽनुपजीव्यत्वात्। किञ्च प्रत्यक्षस्य प्राबल्यमनुमाद्यगृहीतरेखोपरेखादिग्राहकत्वादनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वाच्चेति चेन्न? त्वाचप्रत्यक्षस्याप्युपजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धकत्वसम्भवात्, चक्षुरादिना धर्म्यादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावात्। तथा न जात्या प्राबल्ये मानमस्ति। तदगृहीतग्राहित्वमपि न प्राबल्ये प्रयोजकम्, प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेः। नाप्य-

---

अनुमानविरोधात्। तर्कसहकृतत्त्वेन बलवदनुमानविरोधात्।

**नुमानाद्यनिवर्तितदिङ्मोहनादिनिवर्तकत्वेन प्राबल्यम् । एतावता हि वैधर्म्यमात्रं सिद्धम् न च तावता इतरप्रमाणापेक्षया प्राबल्यं भवति । अन्यथा त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकत्वाच्चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात् । ततश्च चित्रनिम्नोन्नतज्ञानस्य चाक्षुषस्य तद्विरोधित्वाचज्ञानात् बाधो न स्यात् । प्रत्युत आगमस्यैव सर्वतः प्राबल्यं स्मर्यते—**

**'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' ।**

**इति । न च तद्वैदिकार्थविषयमिति वाच्यम् । अद्वैतस्यापि वैदिकार्थत्वात् ।**

---

**वंशोरगेति ।** मण्डूकवसाञ्जनदुष्टनयनजन्यभ्रमस्यादुष्टनयनजप्रत्यक्षेणैव निवृत्तिः । त्वगादिना काठिन्योपलम्भेप्युक्तदोषदुष्टनयनेन वंशोरगदर्शनादिति भावः । **वैदिकेति ।** वेदान्याबोध्येत्यर्थः **अद्वैतस्येति** वस्तुतस्तु वेदान्याबोध्येऽर्थेमानान्तरस्य प्रवृत्तेरेवाभावात् दौर्बल्योक्तेरसङ्गतत्वात् स्वबोध्यार्थ एव मानान्तरस्य दौर्बल्यपरा उक्तस्मृतिरिति बोध्यम् । यत्तु—"विजातीयसम्बन्धेत्यादिकं न युक्तं ; लोहितोऽयमिति समानाकारप्रतीतेः स्फटिकादौ स्वसमवायिसंयोगरूपपरम्परासम्बन्धेन अन्यत्र समवायेन लौहित्वप्रकारकत्वस्य सर्वैः स्वीकारात्, नीलोऽयमित्याकारकप्रतीतेः सम्बन्धभेदेन घटतन्नीलिम्नोः नीलरूपप्रकारकत्वाच्च । अन्यथेत्याद्यपि न युक्तम्; तत्तत्सम्बन्धगोचरबुद्धेः सम्बन्धभेदसाधकत्वात् । न च स्वरूपसत्त्वेनेत्यादिकमप्ययुक्तम्; त्वन्मते प्रमेयत्वेनैवाननुगतेनाप्यनुगतव्यवहारसम्भवात्, त्वन्मतेऽपि ब्रह्मणि स्वरूपेणान्यत्र तत्सम्बन्धेनेत्यननुगमाच्च आधिष्ठयविषमेत्यादिकमप्ययुक्तम्; ब्रह्मणोऽपि घटाद्यपेक्षया आधिकसत्वस्य मया अनङ्गीकारात्, ब्रह्मसत्त्वश्रुतेरिव सन् घट इत्यादिप्रत्यक्षस्यापि सत्त्वग्राहकत्वात् शून्यवादापत्ति-

रपि न युक्ता; वियदादिमिथ्यात्वेऽपि तदापत्तेः, अधिष्ठानमात्र-सत्यत्वस्य शून्यवादेऽपि स्वीकारात्" इति, तत्तुच्छम्; अस्मद्याख्याता-तार्थानवबोधमूलकत्वात्। व्याख्यातं हि साक्षात्सम्बन्धेन बाधसत्त्वे सामान्यादौ लोकानां सद्बुद्ध्यनुदयात् तत्र तत्सम्बन्धेनैव तद्धीरिति। तथाच स्फटिकादौ तत्सम्बन्धेन लौहित्यादेः बाधसत्त्वेपि तद्बुद्ध्युदयात् तद्धीः, तत्सम्बन्धेनौपाधिकभ्रमत्वात् परम्परासम्बन्धविषयकत्वाद्वा बाधा-प्रतिबध्या वा, उभयथापि न क्षतिः। तत्र परम्परासम्बन्धविषयकत्वे च रजतादिकमपि सादृश्यादिसम्बन्धेन शुक्त्यादौ भातीति सम्भवेन भ्रममात्रोच्छेदः। साक्षात्सम्बन्धविषयकत्वानुभवेन भ्रमत्वकल्पनं तु तुल्यमित्यस्मदीयो भ्रमत्वपक्ष एव साधुः। न परेषां परम्परासम्बन्ध-धीत्वपक्षः। नीलोऽयमित्याद्ययुक्तं, नीलरूपस्यापीदन्त्वादिरूपेण नील-त्वावच्छिन्नप्रतियोगिताकतादात्म्यानुयोगित्वान्नीलोऽयमिति बुद्धेः तादा-त्म्यरूपैकजातीयसम्बन्धविषयकत्वात्, रूपविशेष्यकतत्प्रतीतेः परमते अत्यन्ताभेदसम्बन्धाविषयकत्वेऽपि बाधादिकृतविशेषस्यो[1]क्तत्वेनादोषत्वाच्च यत्तु अन्यथेत्यादेः कमप्यर्थमबुध्वा प्रलपितं, तन्महाचित्रम्। प्रमेयत्वेन-त्यादिकं तु शोभते। न ह्यस्मन्मतेऽननुगतेन व्यवहारविषयस्यानुगमः, किन्तु अननुगम एव तत्तद्भ्रमभेदकूटवज्ज्ञानत्वाद्यनुगतरूपेण जाति-रूपेण वा, प्रमात्वादिना प्रमेयत्वाद्यनुगमो वा। ब्रह्मणीत्यादिकं तु चित्रं; ब्रह्मणि सम्बन्धाभानेऽपि एकसद्व्यक्तिविषयकज्ञानस्य सर्वत्रा-क्षतत्वात्, सत्तायाः ऐक्यान्यसम्बन्धभानस्य सर्वसम्मतत्वाच्च। अधि-ष्ठेयेत्यादि युक्तमेव; सद्रूपमिव नीलादिकमधिष्ठानं स्यादिति मांप्रति त्वया आपादितम् ब्रह्माधिष्ठानं विषमसत्ताकत्वात् न नीलादि तद-भावादिति मदुक्तौ त्वदस्वीकारस्याप्रयोजकत्वात्, प्रत्यक्षस्य मिथ्या-त्वविरोधिसत्त्वग्राहकत्वस्य अद्याप्यसिद्धेश्च। अधिष्ठानमात्रेत्यादितु

[1] बाधाबाधादिकृतविशेष्य.

शोभते । सर्वमिथ्यात्ववादो हि शून्यवादः । अतएवास्तु तर्हि शून्यतैवेत्यादिबौद्धाधिकारीयपूर्वोक्तवाक्ये शून्यतायाः परतःसिद्धावनवस्थादिकमुक्त्वा स्वतस्सिद्धत्वमाशङ्क्य आयातोऽसि मार्गेणेत्यादिना अस्मन्मतप्रसक्त्या शून्यवादत्वहानिरुक्ता । अधिष्ठानमात्रसत्यतायां तु शून्यवादस्य मन्मताविशेषः । वाचस्पत्यादिभिरपि तत्वप्रमाविरहेण प्रपञ्चबाधो न स्यादिति शून्यवादो दूषित । खण्डने च सौगतब्रह्मवादिनोरयं विशेषः—'यदाद्यस्य सर्वमनिर्वाच्यं अन्त्यस्यात्मान्यत्' इत्युक्तम् । तस्माच्छून्याशून्यमतधीशून्योसीति व्यक्तम् । यदपि—"चक्षुरादिना धर्म्यादिग्रहेऽपीत्याद्ययुक्तम्; श्वैत्यानुमित्याद्यनिवर्तितपीतभ्रमनिवर्तकजातिविशेषावच्छिन्नधीजनकत्वेन प्रत्यक्षस्य प्राबल्यसम्भवात् । प्रत्यक्षागृहीतधर्मादिग्राहकत्वेनेत्याद्ययुक्तम्; यत्प्रमाणविषयगतविशेषस्य तदगृहीतस्य ग्राहकम् यत्प्रमाणं ततो हि तत्प्रबलम् । धर्मादिकं च न प्रत्यक्षविषय इति न प्रत्यक्षाच्छब्दः प्रबल इत्यदोषः" इति, तदपि तुच्छम्; जात्या प्राबल्यमित्यस्य हि प्रत्यक्षत्वमात्रेण प्राबल्यमित्यर्थः । तदनिवर्तितभ्रमनिवर्तकत्वादिना ततः प्राबल्यं तु पश्चादाशङ्क्य दूषणीयम् । किंच निर्दोषचक्षुषः त्वगनिवर्तितवंशोरगभ्रमनिवर्तकत्वात् त्वगपेक्षया प्राबल्यापत्तिः कथमुद्धृता? काठिन्यविशेषादिविषयकवंशत्वाचप्रत्यक्षस्यापि मण्डूकवसाञ्जनरूपचक्षुर्दोषसत्त्वे तादृशभ्रमानिवर्तकत्वात् । चाक्षुषविशिष्टबुद्धौ त्वाचबाधबुद्धिप्रतिबद्ध्यत्वस्य तार्किकाद्यसम्मतत्वाच्च । अत एव चक्षुरनिवर्तितवंशोरगभ्रमनिवर्तकत्वाच्चक्षुरपेक्षया त्वक्प्राबल्यं स्यादित्याशङ्कापि तवासङ्गतैव । अपि च यद्यदनिवर्तितभ्रमनिवर्तकं तत्ततः प्रबलमित्युक्तौ प्रत्यक्षानिवर्तितं यागादावधर्मत्वभ्रमं प्रति श्रुतेर्निवर्तकत्वात् प्रत्यक्षात्सा प्रबला ते स्यात्, प्रत्यक्षत्वेन उक्तनिवर्तकविशेषणे शाब्दत्वविशेषणमादायापि तथा नियमः किं न स्यात् । अथ यादृशविशिष्टविषयकयदनिवर्तितं

**'क्वचित्प्रत्यक्षतः प्राप्तमनुमागमबाधितम् ।'**
**इति तु परीक्षितप्रामाण्यप्रत्यक्षविषयम् ।**

---

भ्रमं प्रति तादृशविशिष्टविषयकतया यन्निवर्तकं ततस्तत्प्रबलं, प्रत्यक्षविषयविषयकतया [1] च श्रुतिर्नोक्तभ्रमनिवर्तिका, धर्मस्य प्रत्यक्षागोचरत्वादिति चेन्न ; आप्तोपदेशादिना शुक्त्यादौ रजतादिप्रत्यक्षनिवृत्तेरानुभाविकत्वेन शब्दात् प्रत्यक्षस्य प्राबल्यासिद्धेः वंशोरगादिस्थलीयापत्तेः तथाप्यनुद्धाराच्च । यत्प्रमाणविषयगतेत्याद्यपि न युक्तम् ; प्रत्यक्षविषययागादिगतस्यालौकिकश्रेयस्साधनत्व[2]रूपधर्मत्वादेः ग्राहकत्वात् शब्दस्य प्रत्यक्षात्प्राबल्यसम्भवात् । किञ्चातीन्द्रियं प्रत्यक्षागृहीतं घटादिगतं गुरुत्वादिविशेषमनुमानादि गृह्णातीत्यतो यत्प्रमाणफलागृहीतविशेषस्य यत्प्रमाणफलं ग्राहकं ततः तत्प्रबलमिति न नियमः । नापि फलवृत्तिजातिविशेषविशिष्टागृहीतविशेषान्तर्भावेन नियमः, गुरुत्वादिकं च न प्रत्यक्षत्वविशिष्टागृहीतमीश्वरप्रत्यक्षगृहीतत्वादिति वाच्यम्, शाब्दत्वादिजातिविशिष्टागृहीतविशेषाप्रसिद्धेः केनचित्पुरुषेण तदादिशब्दैः बुद्धिविशेषविषयत्वादिरूपेण विशेषमात्रगृहीतसङ्केतैः स्वरूपत एव सर्वविशेषग्रहणसम्भवात्, ईश्वरीयेन विवरणाद्युक्तभाविविषयकानुमितिरूपेण ज्ञानेन सर्वविशेषाणां गृहीतत्वाच्च, प्रत्यक्षत्वजातेरस्मन्मते अलीकत्वस्योक्तत्वाच्च यदपि च त्वाचप्रत्यक्षत इत्यादेः परीक्षितप्रामाण्यकप्रत्यक्षविषयकत्वेऽपि अस्मदिष्टसिद्धेः सन् घट इत्यादिरपि फलपर्यन्तं परीक्षितत्वादित्यादिरोदनं, तत् देहात्मज्ञानस्य [3] स्वाप्नादिज्ञानस्य च फलपर्यन्तं परीक्षितत्वेऽपि दुर्बलत्वाद्धेयम् । पाश्चात्यबाधादिकं तु तुल्यम् । **परीक्षितप्रामाण्यकप्रत्यक्षेति**—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।

---

[1] प्रत्यक्षविषयकतया.  [2] साधनवत्त्व.  [3] सिद्धेऽपि.

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ॥

इति स्मृतेः,

तस्मात्प्रत्यक्षदृष्टेऽपि[1] युक्तमर्थं परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान् न धर्मात्परिहीयते ॥

इति नारदोक्तेश्चेति भावः यदपि—“ तस्माद्दीक्षितेन सत्यमेव वदितव्यमथो खल्वाहुः कोऽर्हति मनुष्यस्सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं विह्येनेन पश्यतीत्येतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याह अथास्य श्रद्दधाति यद्यु वै स्वयं पश्यति न बहूनां च नान्येषां श्रद्दधाति तस्माद्विचक्षणवतीमेव वाचं वदेत्सत्योत्तरा हैवास्य वागुदिता भवति भवति ” इति दीक्षणीयेष्टेरर्थवादे ऐतरेयब्राह्मणवाक्यं प्रत्यक्षप्राबल्यबोधकम्; तत्र विचक्षणवतीमित्यस्य चक्षुस्संवादिनीमित्यर्थकत्वात्, सत्यं निहितमित्यस्य मानान्तरापेक्षया बलवद्व्यवस्थापितमित्यर्थकत्वाच्चेति । तदपि तुच्छम् । यदि हि चक्षुरेव मानान्तराद्बलवत् तदा त्वगाद्यपेक्षयाऽपि बलवत्स्यात् । यदि चक्षुस्संवादि वदनमेव सत्यं न स्यात् । चक्षुर्वदस्य प्रत्यक्षपरत्वेऽपि अतीन्द्रियादिविषये निर्दोषानुमानादिसंवादि वदनं सत्यं न स्यात् । तस्मादुक्तश्रुतिरेवं व्याख्येया सत्यं व्यावहारिकसत्यार्थकवाक्यं तन्मात्रोक्तिर्न मनुष्याणां सम्भवति, भ्रमबाहुल्यात्, तन्मूलकवाक्यानां बहुशः उच्यमानत्वात् । किञ्च ‘न ब्रूयात्सत्यमप्रियम्’ इत्यादिवचनेभ्यः ‘सत्यमेव वदितव्यम्’ इत्यनुपपन्नमित्यभिप्रायेण अथो खल्वाहुरित्यादिनाऽऽशङ्क्य ‘यद्भूतहितमत्यन्तं तद्धि सत्यं प्रचक्षते’ इत्यादिवचनोक्तलक्षणाक्रान्तवचनमेव सत्यं, तदपि मानान्तरेणोपलब्धम् यादृशं तादृशं वाच्यम्, न रागद्वेषादिना तद्विरुद्धं वाच्यम् । अतएव ॥

---

[1] ऊहात्मकज्ञानस्य.

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः ॥

इतीत्याशयेन समाधत्ते—विचक्षणवर्तीमिति । चक्षुरिति । विशेषदर्शनसाधनमित्यर्थः । विशेषेण चक्ष्यते दृश्यते अनेनेति व्युत्पत्तेः । 'मनोऽस्य दैवं चक्षुः' इति प्रजापतिविद्यास्थश्रुतौ मनसि चक्षुःपदप्रयोगात्, 'योऽयं दक्षिणेऽक्षिण पुरुषो दृश्यते इति श्रुतौ प्रमाणसामान्ये प्रमातृतया यः पुरुषो दृश्यत इत्यर्थात् प्रमाणसामान्ये तत्प्रयोगाच्च । तच्च साधनं द्विविधं, वाक्ये परदुःखाप्रयोजकत्वनिश्चयसाधनविचारः, वाक्यार्थोपलब्धिसाधनमानान्तरं च तत्र द्वितीयस्ययोगो वाचि आवश्यकः, अनुपलभ्यकथने प्रत्यवायादित्याशयेनाह—एतेनेति । प्रथमस्य योगोऽपि तस्यां तथा दुःखप्रयोजके कथिते प्रत्यवायादित्याशयेनाह—एतद्धेति सत्यमिति वाक्सत्यतायां मुख्यं प्रयोजकमित्यर्थः । प्रमाणगृहीतार्थकमपि परदुःखप्रयोजकं त्याज्यमित्येतदर्थं । मुख्यत्वोक्तिः । मानान्तरोपलब्धार्थकत्वस्य वाक्सत्यताप्रयोजकत्वे शिष्टव्यवहारमनुवदति । तस्मादाचक्षाणमिति अद्राक् वाक्यार्थं प्रतीतवानसीति प्रश्नः । अदर्शं प्रामितिवानहमित्युत्तरम् । अस्य वचनस्य श्रद्दधाति सत्यतां निश्चिनोति आचक्षाणस्य प्रमाणाकुशलत्वे आह यद्युवेति स्वयं श्रोता पश्यति वाक्यार्थं प्रमिणोति । एवंच वाक्यार्थग्राहकमानस्यैव दैवादृष्टत्वे वक्ता नापराध्यति, परिहारासामर्थ्यादित्यशयेनाह—सत्योत्तरेति । तस्मादागमाद्यपेक्षया प्रत्यक्षे श्रद्धालुत्वं चार्वाकसख्य[1]मात्रविजृम्भितमिति बोध्यम् ॥

किंच उक्तश्रुतिर्माधवीयभाष्ये एवं व्याख्याता—"सत्यमेव वाच्यमित्यस्य प्रायेण मनुष्याणामशक्यता 'अथो खलु' इत्यादिनोक्ता । सत्यमात्रोक्तिफलाय प्रकारान्तरं विधत्ते—विचक्षणवतीमिति ।

---

[1] सांख्य.

विचक्षणेति चतुरक्षरो मन्त्रस्तद्युक्तं वाक्यं वदेत्—देवदत्त विचक्षण गामानयेत्यादि वक्तव्यमित्यर्थः। तदाह आपस्तम्बश्च "लसितं विचक्षण इति नामधेयन्तेषु [1] निदधाति च लसितेति ब्राह्मणस्य, विचक्षणेति राजन्यवैश्ययोः" इति। उक्तमन्त्रस्य सत्योक्तिस्थानीयत्वं प्रतिपादयति–चक्षुर्वै इति चक्षुरिन्द्रियं नेत्रं, तद्विचक्षणं विशेषेण चष्टे पश्यत्यनेनेति व्युत्पत्तेरित्याह—एतेनेति। एतद्धेत्यादि। प्रत्यक्षानुमानादिप्रमाणानां मध्ये चक्षुरेव मनुष्याणां सत्यं निहितं, तथाच [2] यथावस्तुज्ञानसाधनत्वेनाभिमतं, चक्षुःपर्यायविचक्षणशब्दप्रयोगः सत्योक्तिस्थानीय इत्यभिप्रायः। चक्षुषो यथावस्तुज्ञानसाधनत्वमन्वयव्यतिरेकाभ्यामाह–तस्मादाचक्षाणेति। उदाहरणान्तरमाह—यद्यु वेति। निपातसमुदायः। च नेति शब्दः अपिशब्दसमानार्थ इति। तथाच वस्तुगत्या चक्षुषि यथावस्तुज्ञानसाधनत्वस्य असत्त्वेऽपि मनुष्याणां तथा अभिमत[3]त्वात् सत्यत्वं चक्षुप उक्तम्। अतो यथावस्तुज्ञानसाधनत्वमेव तस्य भाष्याभिप्रेतम्। अतएव तथा अभिमानस्यैवाग्रे उदाहरणम्। अन्यथा यथा वस्तुज्ञानसाधनत्वमात्रदृढत्वे उदाहरणतात्पर्ये चक्षुषा यथावस्तुज्ञानं, तद्विना नेत्येवोक्तं स्यात्। न तु अद्राक् अदर्शं श्रद्दधातीति। यस्माच्चक्षुषः तत्त्वदर्शनहेतुत्वं मनुष्याणामभिप्रेतं तस्मादाचक्षाणमाहुरद्रागितीति भाष्ये मनुष्याणामभिप्रेतमिति नोक्तं स्यात्। मनुष्याणामिति श्रुतावपि नस्यात्। मानान्तरापेक्षया बलवत्त्वं तु त्वया स्वमत्यनुसारेणाप्रामाणिकं सत्यशब्दार्थतयोक्तं सुदूरपराहतम्। तथा विचक्षणवतीमित्यस्य चक्षुस्संवादिनीमित्यर्थोऽप्यप्रामाणिक इत्युक्तम्। 'चक्षुर्वैसत्यम् अद्रागित्याह अदर्शमिति तत्सत्यम्' इति तैत्तिरीयश्रुतिरप्युक्तसमानार्थकत्वादविरुद्धा। यत्तु—"वाजसनेयिनो द्वौ विवदमानावे-

[1] नामधेयं तेषु. [2] 'तथाच . . . . चक्षुषः' इत्येतत्क्वचिन्न दृश्यते.
[3] नियमित.

बायातावहमदर्शमहमश्रौषमिति, य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दधते" इत्यामनन्ति ; तत्परीक्षितप्रामाण्यकप्रत्यक्षप्राबल्यानुवादः, अपरीक्षितप्रत्यक्षस्थले वैपरीत्यस्यैव लोके दर्शनादिति नास्मत्प्रतिकूलम् । तस्मादैतरेयब्राह्मणप्रथमाध्यायशेषवाक्यमस्मदनुकूलमेव ॥

'अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः' इत्युपक्रम्य ज्योतिष्टोमे श्रूयते—'तस्मादुच्चैॠचाक्रियते, उपांशु यजुषा, उच्चैस्साम्ना इति । तत्र उच्चैष्ट्वादिकमृगादिपदार्थमुद्दिश्य विधीयते । स किं तत्पदस्य मुख्यार्थो मन्त्रविशेषः ? उत उपक्रमस्थऋग्वेदादिपदगृहीततात्पर्यानुपपत्त्या लाक्षणिक ऋग्वेदादिविहितकर्माङ्गमन्त्रमात्ररूपोर्थः ? इति संशये, ऋग्वेदादिपदानां विध्यपेक्षितस्तुतिबोधकत्वेन गुणभूतार्थवादस्थत्वात् न प्रधानभूतविधिवाक्यस्थेषु ऋगादिपदेषु लाक्षणिकार्थतात्पर्यग्राहकत्वं, किन्तु वेदपदानामेव विधिस्थर्गादिपदानुरोधेन लक्षणया वेदैकदेशमन्त्रमात्रपरत्वमङ्गगुणविरोधन्यायात्, अपच्छेदन्यायेन पश्चात्तनविधेः प्राबल्यादनुवादे लक्षणाया अदोषत्वाच्चेति प्राप्ते—ऋग्वेदादेरुद्देश्यतया विधेयतया वा वाक्यार्थाप्रवेशे स्तूयमानत्वानुपपत्तेः, प्रधानस्यापि विधिवाक्यस्य स्वगतऋगादिपदेषु वेदलक्षणां विना निर्वाहाभावात् अङ्गगुणविरोधन्यायानवतारात् । अतएवापच्छेदन्यायस्याप्यप्रवृत्तेरेकवाक्यत्वाभावे सत्येव तन्न्यायेन परेण पूर्वोपमर्दस्वीकारात् विधिस्थर्गादिपदानामपि उद्देश्यसमर्पकत्वेनोक्तरीत्या अर्थवादोक्तार्थबोधकत्वावश्यकत्वेन चानुवादकत्वाल्लक्षणाया अदोषत्वाच्च तेष्वेव लक्षणा । न वेदपदेषु । न च वेदपदेष्वेव लक्षणया ऋगादिमन्त्राणामेव स्तूयमानत्वसम्भवात् न विधिस्थपदेषु लक्षणेतिवाच्यम् तेषु लक्षणाग्राहकाभावात्, विधेः पूर्वमनुत्पन्नतया पूर्वोत्पन्नेषु लक्षणारूपोपमर्दाक्षमत्वात् लक्षणां विनैवाऽग्नेः ऋगित्यादिना मन्त्रस्तुतिधीसम्भवेन वेदपदानां वैयर्थ्यापत्तेश्च । मन्त्रमात्रं च न वेदशब्दस्य मुख्यार्थः एकदेशाध्ययने-

**ननु प्रत्यक्षस्यासञ्जातविरोधित्वादुपक्रमन्यायेनैव प्राबल्यम्; उक्तं हि—**

**'असञ्जात विरोधित्वादर्थवादो यथाश्रुतः ।**
**आस्थेयस्ताद्विरुद्धस्य विध्युद्देशस्य लक्षणा' ॥**

**इति चेन्न; यत एकवाक्यस्थपरस्परसापेक्षपदत्वेन उभयोस्साम्ये सति । उपक्रमस्थवेदपदानुरोधेन उपसंहारस्थर्गादिपदानां मन्त्रमात्रवाचिनां कृत्स्नवेदपरत्वे निर्णीतेऽपि न प्रकृते तन्न्यायस्सम्भवति, उभयोस्साम्याभावात्, गृहीतप्रमाणभावश्रुत्यपेक्षया भ्रमविलक्षणत्वेनानिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वात् ।**

---

नापि वेदाध्यनविध्यर्थसिद्ध्यापत्तेः । तस्माद्वेदादिपदानां ऋग्वेदादिलक्षणाग्राहकत्वात् ऋग्वेदादिना यत्क्रियते विधीयते तत्कर्म उच्चैः कुर्यादित्यर्थपर्यवसानात् योग्यत्वान्मन्त्रमात्रस्य द्वारत्वलाभात् ऋग्वेदादिविहितकर्मादिमात्रस्योच्चैष्ट्वादिसिद्धिरिति वाक्यविनियोगप्रस्तावे तृतीये तृतीयाद्याधिकरणे 'श्रुतेर्जाताधिकारस्स्यात्' इत्यत्र चिन्तितम् । ऋगादिश्रुतेः मन्त्रजातेरधिकार उद्देश्यता स्यादिति पूर्वपक्षसूत्रम् । तथाच न्यायेन प्रथमोत्पन्नं प्रत्यक्षं श्रुत्याद्यपेक्षया प्रबलमिति शङ्कते— **ननु प्रत्यक्षस्येति** । एकवाक्यस्थेत्यनेनापच्छेदन्याया (न) वतारः; परस्परसापेक्षेत्यनेन विधेः प्रधानतयाऽपेक्षणीयत्ववदर्थवादस्याप्युक्तरीत्या विधिनिर्वाहकार्थसमर्पकत्वेन अपेक्षणीयत्वमित्यङ्गगुणविरोधन्यायानवतारस्सूचितः । ननु वेदपदानामेव मन्त्रमात्रपरत्वं किं न स्यात्? तत्राह—**उपक्रमस्थेति** । प्रथमप्रवृत्तेत्यर्थः । तथाच विधेः तत्प्रवृत्तिकालपश्चात्प्रवृत्तत्वान्न लक्षणारूपतदुपमर्दक्षमतेति भावः—**न्यूनबलत्वादिति** । तथाच परस्परसापेक्षत्वेन एकवाक्यगतत्वेन च पूर्वस्य परेण बाधासम्भवेऽप्यतथाभूतत्वेन प्रत्यक्षस्य पूर्वस्यापि प्रबलश्रुत्या बाध्यत्वमेव सम्भवतीति नोक्तन्यायावतार इति भावः—

**अन्यथा 'इदं रजतम्' इति भ्रमोऽपि 'इयं शुक्तिः' इत्याद्योप-**

---

**अन्यथेति ।** एकवाक्यत्वादिप्रयुक्तस्यापेक्षणीयत्वस्याभावेन बाध्यत्वसम्भवेऽपि प्रथमप्रवृत्तत्वमात्रेणोक्तन्यायेन प्राबल्याभ्युपगम इत्यर्थः । यत्तु 'प्रत्यक्षस्य प्रमात्वं फलपर्यन्तपरीक्षया निश्चितमिति न न्युनबलत्वम्' इति, तत्तुच्छम्; उक्तपरीक्षासत्त्वेऽपि निश्चितप्रामाण्यकश्रुतिविरुद्धार्थकत्वेन स्वतस्सम्भावितदोपत्वेन च अप्रामाण्यसंशयसम्भवादुक्तपरीक्षायाः स्वप्नादाविव प्रामाण्यानिश्चायकत्वात् । तृतीयतृतीये 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्' इत्यधिकरणे श्रुत्यादीनां विरोधे पूर्वापेक्षया परं दुर्बलं पूर्वसापेक्षतया विनियोजकत्वात्, श्रुत्यादिकं विना लिङ्गादेः विनियोजकत्वासम्भवात् । श्रुत्यादिकं कल्पयित्वा यथा विनियोजकं लिङ्गादिकं ततः पूर्वमेव लिङ्गादिनिरपेक्षश्रुत्यादिना विनियोगसम्भवे तदाकांक्षोच्छेदाल्लिङ्गादेः प्रवृत्त्यसम्भवात् । तत्र श्रुतिरङ्गाङ्गिभावबोधकतृतीयादिः, तत्कल्पकयोग्यता लिङ्गं, तत्कल्पकः पदयोस्सन्निधिःवाक्यं, तत्कल्पकोभयाकाङ्क्षा प्रकरणं, तत्कल्पकं पाठादिसादेश्यं स्थानं, तत्कल्पकं यौगिकमाध्वर्यवादिपदं समाख्येति । तत्र श्रुतिलिङ्गयोर्विरोधे 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादौ इन्द्रप्रकाशनसामर्थ्यरूपलिङ्गादैन्द्री नेन्द्राङ्गं, किन्तु श्रुत्या गार्हपत्याङ्गम् । न चाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृतिमात्राकाङ्क्षया अतिदेशकल्पनवदैन्द्रीगार्हपत्ययोः प्रकाश्यमन्त्राकाङ्क्षोच्छेदेऽपि[1] इन्द्रस्य स्मृत्यर्थं मन्त्राकाङ्क्षयैव उक्तलिङ्गस्य ऐन्द्रीविनियोजकत्वमास्तामितिवाच्यम् । ध्यानाद्युपायान्तरेणापि स्मृतिसम्भवेन मन्त्रपर्यन्तमाकांक्षाविरहात् । यद्यपि तृतीयादिश्रुतिः केवलकरणत्वस्य बोधिका, न तु गार्हपत्यादीनिरूपितकरणत्वस्य, तस्य 'ऐन्द्र्या गार्हपत्यम्, इति श्रुतपदसान्निधिरूपवाक्येनैव

---

[1] प्रकाश्यप्रकाशकाङ्क्षोच्छेदेऽपि.

**देशापेक्षया प्रबलं स्यात्। एतेन—"लिङ्गात् श्रुतेरिव शीघ्रगामित्वात् प्रत्यक्षस्य प्राबल्यम्। तदुक्तम्—**

**प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्।**
**शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयोः॥"**

**इत्यपास्तम्, परीक्षितस्य मन्थरगामिनोऽपि प्राबल्यात्।**

---

बोधनात्[1]। तच्च ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया प्रबलम्, यद्यप्यन्यदैवत्यः पशुरितिवत्। तथाच लिङ्गस्य वाक्यबाध्यतायामुक्तोदाहरणं युज्यते, न तु लिङ्गस्य श्रुतिबाध्यतायां, तथापि वाक्यस्यापि श्रुतिघटितत्वात् श्रुतिवाक्याभ्यां बाध्यस्यापि प्रधानेन व्यपदेशात् श्रुतिमात्रबाध्यत्वव्यपदेश इति तत्राप्युक्तोदाहरणं युक्तमिति चिन्तितम्। तथाच शीघ्रप्रवृत्तत्वाद्यथाश्रुतिर्लिङ्गापेक्षया प्रबला तथा श्रुत्याद्यपेक्षया प्रत्यक्षमिति शङ्कां निरस्यति—**एतेनेति**। लिङ्गापेक्षणीयतया लिङ्गात् प्रबलश्रुतेः तद्बाधकत्वेऽपि प्रत्यक्षस्योक्तरीत्या न्यूनबलत्वेन श्रुत्याद्यबाधकत्वेनेत्यर्थः। ननु प्रत्यक्षस्य उक्तरीत्या न्यूनबलत्वेऽपि श्रुत्याद्यपेक्षया शीघ्रगामित्वेन प्राबल्यम्, श्रुत्यादेराकाङ्क्षादिनिश्चायकमानान्तरसापेक्षत्वेन मन्थरगामित्वात्, तत्राह—**परीक्षितस्येति**। प्राबल्यहेतुयुक्तस्येत्यर्थः। अतएव ब्राह्मणवाक्यस्य मन्थरगामिनोऽपि मन्त्रलिङ्गात्प्राबल्यमुक्तम्। विवरणकारीयन्यायनिर्णयादौ च लिङ्गादेस्तात्पर्यवत्त्वेन प्रबलस्य श्रुत्याद्यपेक्षया प्राबल्यमुक्तम्। मन्थरगामित्वमात्रेण दुर्बलत्वे चन्द्रप्रादेशिकत्वादिप्रत्यक्षापेक्षया चन्द्राप्रादेशिकत्वाद्यागमानुमानाद्यपि दुर्बलं स्यादिति भावः दशमाष्टमे 'अविशेषेण यच्छास्त्रमन्यायत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात्, इत्यधिकरणे चिन्तितम्—ज्योतिष्टामे श्रुते। पदे जुहोति, वर्त्मनि जुहोति इत्यादौ, अन्यत्र श्रुते—

---

[1] बोधनसंभवात्.

'गार्हपत्ये पत्नीसंयाजान् जुहोति' इत्यादौ विशेषविहितगार्हपत्यादेः 'यदाहवनीये जुहोति' इति सामान्यविहिताहवनीयादिभिः विकल्पो बाधो वेति संशये, प्रत्यक्षस्य 'शरमयं बर्हिः' इत्यादिशास्त्रस्यानुमानिककुशाद्यतिदेशशास्त्रबाधकत्वं युक्तम्; तस्य तदपेक्षया शीघ्रप्रवृत्तत्वात्। सामान्यविशेषशास्त्रयोस्तु द्वयोरपि प्रत्यक्षत्वात्। शीघ्रप्रवृत्त्य[1]विशेषेण तुल्यबलत्वात् तद्विहितयोर्विकल्प इति प्राप्ते, अविशेषत्यादि सिद्धान्तः। होमत्वसामान्य जुहोतिवाच्यस्य सर्वहोमव्यक्तिषु सम्बन्धालक्षणया अविशेषेण यत्सामान्यशास्त्रं विशेषबोधतात्पर्यकं तत्सन्दिग्धं विशेषपरत्वेन निर्णेतुमशक्यम्। अतो विशेषविशिष्टं विशेषरूपेण विधायकं पदादिशास्त्रमारात् शीघ्रप्रवृत्तं[2] प्राकरणिकहोमविशेषविषयकत्वात् पदादिविशिष्टहोमविशेषोत्पत्तिवाक्यत्वात्, विषयान्तरे निरवकाशत्वाच्च सामान्यशास्त्रं तु अनारभ्याधीतत्वादुत्पन्नहोमविषयकत्वात् पदहोमादिविशेषातिरिक्ते सावकाशत्वाच्च दुर्बलम्। पत्नीसंयाजादिविशेषशास्त्रं लक्षणां विनैव प्रवृत्तत्वादपि[3] शीघ्रप्रवृत्तं, पत्नीसंयाजादिपदानां जातिवाचित्वाभावेन व्यक्तिविशेषशक्तत्वात् अत अतुल्यबलत्वाद्विकल्पो न युक्तः। अतएव न समुच्चयः; व्रीहियवादिवन्निरपेक्षकरणत्वेन पदादेराहवनीयस्य च विहितत्वाच्च। तस्माद्विकल्पस्य समुच्चयस्य वान्याय्यत्वाद्बाध एव सामान्यशास्त्रविहितस्येति सूत्रार्थः। यद्यपि व्रीह्यादिद्रव्यं विना यागादिस्वरूपनिष्पत्तिरूपदृष्टकार्याभावात् तस्य दृष्टार्थत्वसम्भवेऽपि आहवनीयादिकं विनापि प्रक्षेपरूपहोमनिष्पत्त्यादिरूपदृष्टकार्यसम्भवात् न तस्य दृष्टार्थतेति[4] विभिन्नादृष्टरूपकार्यजनकत्वेन समुच्चय एव युक्तः; एकेनापरजन्यादृष्टजननासम्भवात्। अतएव न 'देवताग्निशब्दक्रियमन्यार्थसंयोगात् इति सूत्रेण षष्ठे देवतादीनां प्रतिनिधिर्निषिद्धः। अग्नेर्दृष्टार्थत्वे तु प्रतिनिधिस्स्यादेव।

---

[1] प्रवृत्ति. [2] प्रवृत्तिक. [3] त्वात्तदपि. [4] सम्भवात्तस्यादृष्टार्थतेति.

**न च 'यदाहवनीये जुहोति' इत्यस्मात् 'पदे जुहोति' इत्यस्य विशेषविषयत्वेन प्राबल्यवत् घटविषयसत्त्वग्राहिणः प्रत्यक्षस्य सामान्यतो द्वैतनिषेधकश्रुत्यपेक्षया प्राबल्यमिति वाच्यम्; सामान्यविशेषन्यायस्य निश्चितप्रमाणभावोभयविषयत्वात् । अन्यथा 'अयं गौरश्वः' इत्यादेरपि गौरश्वो न भवतीत्यादितः प्राबल्यं भवेत् ।**

---

अतएव चानूयाजा अदृष्टेनोपकुर्वन्तो नाम न होमादिभिरुपहोमैः विकल्प्यन्ते बाध्यन्ते वेत्युक्तं दशमे। तथाप्याहवनीयादेः होमं प्रत्यवश्यापेक्षणीयत्वाभावेऽपि अधारतारूपदृष्टोपकारजनकत्वात् दृष्टार्थतैव। एवमपि नतस्यप्रतिनिध्यापत्तिः अवश्यापेक्षणीयदृष्टार्थस्यैव तत्स्वीकारात्। अतो न षष्ठोक्तिविरोधः । अदृष्टजनकत्वमप्याधारत्वं द्वारीकृत्य वाच्यम् । तच्च होमं प्रति पदादेराहवनीयस्य च निरपेक्षं प्रमितमिति तदन्यथानुपपत्त्या समुच्चयाभावः विशेषविधिना सामान्यविधिरिव सामान्यनिषेधोऽपि बाध्यते । अतो 'न हिंस्यात्' इत्यादौ वैधान्यहिंसानिषेधः; इष्टानिष्टसाधनत्वयोरविरोधेऽपि पुण्यजनकत्वस्य पापाजनकत्वव्याप्यत्वात् । अतएव 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' इत्यादिस्मृतिः, 'अशुद्धमिति चेन्न, शब्दात्' इति व्याससूत्रं च । तथाच यथा पदहोमादिशास्त्रेणाहवनीयादिशास्त्रं बाध्यते, सामान्यविषयकत्वात्, तथा प्रत्यक्षेण श्रुत्यादीति शङ्कते—**न च यदाहवनीयेति । भवेदिति ।** अत्र यथा 'न हिंस्यात्' इत्यादेः 'वैधान्यहिंसानिषेधपरत्वं सम्भवति, हिंसात्वसामान्यरूपेण वैधान्यहिंसायामनिष्टसाधनत्वबोधने लक्षणाविरहात् । नेह नाना' इत्यादौ तु सत्त्वप्रत्यक्षाविषय द्वैतसामान्याभावबोधकत्वं लक्षणयैव वाच्यमिति वैषम्यम् । अथ भावनाविध्यर्थत्वमते हिंसाकरणककृत्यभावे शाब्दभावनाविषयत्वबोधे वाच्ये वैधान्यहिंसाकृतिसामान्याभाव एव लक्षणया बोध्य इति चेन्न;

कृतिमुख्यविशेष्यकबोधस्य तन्मते स्वीकारेण हिंसाकृतित्वसामान्यरूपेण वैधान्यहिंसाकृतौ भावनाप्रयोज्याभावप्रतियोगित्वबोधस्य लक्षणां विनैव सम्भवात् । अथाद्वैतश्रुत्यादिरूपसामान्यबोधकप्रमाणस्य सावकाशत्वं लक्षणयाऽपीत्यत्राविशेषप्रमाणस्य सामान्यप्रमाणगतलक्षणारूपोपमर्दप्रयोजकत्वमदृष्टमपि प्रकृते कल्प्यत इति चेन्न; सावकाशत्वं हि विशेषप्रमाणविषयान्यत्र स्वारसिकप्रवृत्तिः, न तु लक्षणादिरूपोपमर्दप्रयुक्ता । वक्ष्यतेचाचार्यैः—'श्रुतेरपि निरवकाशत्वमनन्यपरत्वात्' इति । न श्रुत्यादेः सावकाशत्वेन प्रत्यक्षबाध्यतासम्भवः । किञ्च 'नेह नानास्ति किञ्चन, नात्र काचन भिदा, इदं सर्वं यदयमात्मा' इत्यादौकिमादि सर्वनाम्ना विशेषरूपेण बोधकत्वात् ॥

न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति ।
न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च ॥

'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽतेजस्कम्, अशब्दमस्पर्शमरूपमव्ययम् तथाऽरसं नित्यमगन्धवच्च यत्' इत्यादिश्रुतौ विशेष्यवाचकपदयोगात् पृथिवीमिथ्येत्यादिविशेषानुमानरीतेरुक्तत्वाच्च श्रुत्यादीनामपि विशेषरूपेण मिथ्यात्वविषयकत्वाद्विशेषरूपेण सत्यताविषयकप्रत्यक्षबाध्यतायां न प्रत्याशा । न चोक्तश्रुतौ पुण्यादौ आत्मनि सम्बन्धनिषेधात्[1] न पुण्यादिमिथ्यात्वबोधकत्वमिति वाच्यम्; "एवं विदित्वा परमात्मरूपम्" इत्युत्तरवाक्येन आत्मानमुद्दिश्य पुण्याभावादिविधानस्य स्वरसतः प्रतीतेः ममेति षष्ठ्याः सप्तम्यर्थकत्वात् । न च प्रत्यक्षायोग्यभूम्यादेरेव निषेध इति वाच्यम्; लक्षणापत्तेः । अदृष्टमव्यवहार्यमनिन्द्रियमविषयम्' इति नृसिंहतापनीयश्रुतौ "अशरीरं शरीरेषु, अपाणिपादोऽहमचिन्त्यशक्तिः, पश्याम्यचक्षुस्स शृणोम्यकर्णः, अप्राणो ह्यमनाः" इत्यादिश्रुतिषु प्रत्यक्षविषयत्वादिरूपदृष्टत्वादिनिषेधस्य स्फुट-

[1] आत्मसम्बन्धनिषेधात्.

त्वात्। न चादृष्टमित्यादिकं तत्पुरुष इति वाच्यम्; 'नान्तः प्रज्ञम्' इत्यादिबहुव्रीहिप्रायपाठात्, अबहुव्रीहित्यस्य अविनिगम्यत्वादिति ध्येयम्।

यत्तु 'उत्सर्गतः स्वतः प्रामाण्यस्य प्रत्यक्षेऽपि निश्चयावश्यकत्वात् सामान्यविशेषेत्याद्ययुक्तम्' इति, तत्तुच्छम्; औत्सर्गिकत्वादेव दोषसत्त्वे अपवादात्। अन्यथा औत्सर्गिकत्वहानिरिति स्ववचनार्थाबोधस्य स्फुटत्वाच्च ज्योतिष्टोमे श्रूयते—'त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति इत्यादौ विहितमुपांशुत्वमग्नीषोमीयापेक्षया पूर्वस्य ज्योतिष्टोमभागस्याङ्गमुत तद्गतपदार्थस्येति संशये, तत्पदार्थमुद्दिश्योपांशुत्वं विधीयते। अन्यथा सिद्धान्तेऽप्यग्नीषोमीयादिपदार्थानां मिथोऽनन्वयेन प्रत्येकोद्देशे वाक्यभेदापत्तेः। तत्पदं च पूर्वभागमेव परामृशति, न तु तद्गतपदार्थान्, तेषामप्रक्रान्तत्वात्। प्राचीनशब्दस्य लक्षणया क्वचित्तादृशपदार्थबोधकत्वेऽपि आकृत्यधिकरणन्यायेन पूर्वभागवाचकत्वात् यद्यपि पूर्वरूपेण पदार्थबोधकत्वमपि तस्य सम्भवति; तथाप्येकवचनान्तत्वेन नात्र नानापदार्थबोधकत्वम्। एकपदार्थबोधेन च यत्किञ्चिदित्यसङ्गतम्। अतस्तस्य समूहतात्पर्यग्राहकत्वेन सार्थक्यात् एकसमूहाभिप्रायेण एकवचनप्रयोगात् पूर्वसमूहबोधकत्वं तस्यावश्यकम्। तादृशे च समूहे भागितया ज्योतिष्टोमरूपप्रकृतयज्ञस्यान्वयः तदेकदेशपूर्वत्वे च निरूपकतयाऽग्नीषोमीयस्य अन्वयः। तथाच तादृशसमूहरूपभागस्यैव प्रक्रान्तस्य तत्पदेनोद्देश्यता। यद्यपि यज्ञस्येति पदं तस्मादित्यनेन व्यवहितम्; तथापि विधिवाक्यार्थे तदर्थान्वयः। अन्यथा अर्थवादवाक्यार्थ एव तदन्वये तस्य प्रवृत्तिविशेषकरत्वाभावापत्तेः। अस्तु वा तस्य त्सरायामेवान्वयः। तथापि ज्योतिष्टोमस्य प्रकृतत्वात् तदीयभागलाभः; सिद्धान्तेऽपि पदार्थविशेषणतयातदीयत्वस्यावश्यकत्वात्, अन्यथा अतिप्रसङ्गात्। तथाच तादृशभाग-

स्वरूपे साधनानर्थक्यात् तज्जन्यापूर्वे च मानाभावात् भागिज्योतिष्टोमजन्यपरमापूर्वविशिष्टतया भागोद्देशे नोपांशुत्वं विधीयत इति परमापूर्वप्रयुक्तं तत्। तथाच ज्योतिष्टोमविकारे अग्नीषोमीयपूर्वभागान्तर्गते स्वप्राकृत[1]पदार्थेष्वपितदूह इति प्राप्ते, यत्किञ्चिच्छब्दस्य बहुष्वेव प्रयोगात् स्वार्थपरत्वे सम्भवति समूहतात्पर्यग्राहकत्वेन तत्सार्थक्यस्य युक्तत्वात् यत्प्राचीनमित्यनेन एकवचनान्तेनैव समूहलाभे किञ्चित्पदवैयर्थ्यापत्तेश्च प्रथमोक्तत्वेन बलवतस्तस्यानुरोधेन चरमोक्तप्राचीनपदाश्रितस्यैकवचनस्य बहुत्वलक्षणासम्भवात् प्राचीनपदस्य पूर्वत्वरूपेण पदार्थबोधकत्वात् तेनेत्यनेन तत्तत्पदार्थजन्यावान्तरापूर्वसाधनोद्देशेनैवोपांशुत्वं विधीयते । एवंच योग्यत्वान्मन्त्रमात्रं द्वारं, समूहस्योद्देशत्वे तु घटकपदार्थाङ्गमन्त्रो द्वार[2]मिति गौरवम् अतएव एकवचनानुरोधेन भागस्यैव स्वघटकपदार्थजन्यापूर्वसम्बन्धित्वेनोद्देश्यता आस्तामित्यपि परास्तम् । किञ्चित्पदानर्थक्यादेरुक्तत्वाच्च । यत्तु "यज्ञत्सरयोरन्वयात् उपांशुत्वं परमापूर्वप्रयुक्तं, त्सर छद्मगतौ' इति स्मृतेः । यदुपांशुत्वानुष्ठानमेषा यज्ञस्य त्सरा यज्ञसाध्यपरमापूर्वलाभाय छद्मगतिः, यथा पक्ष्यादिलाभाय शनैः छद्मगतिरित्यर्थपर्यवसानात्" इति तन्न ; यज्ञसम्बन्धिपदार्थजन्यापूर्वलाभायेत्यर्थस्य न्यायानुसारिणः सम्भवात् । तथाचोक्तेष्वप्राकृतपदार्थेषु यूपावटास्तरणबर्हिर्धर्मवदुपांशुत्वस्य नोह इति नवमप्रथमे 'देशलब्धमुपांशुत्वं, तेषां स्यात् श्रुतिनिर्देशात् तस्य च तत्र भावात्' इति सूत्रेण सिद्धान्तितम् । देशलब्धमग्नीषोमीयात् पूर्वसम्बन्धितयोपात्तमुपांशुत्वं, तेषां पदार्थानां लिङ्गं स्यात्, यत्किञ्चिच्छ्रुतिनिर्देशात् । तत्र तादृशनिर्देशे सति पश्चात् तस्य 'प्राचीनम्' इत्यस्य भावात् उत्पन्नत्वात् तत्र तेषु पदार्थेषु तस्य उपांशुत्वस्य मन्त्रद्वाराभावात् । उपकारकतया सत्त्वात्-इति सूत्रार्थः । तथाच

[1] ष्वप्राकृत. [2] द्वार.

**न च यथा 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इत्यस्य यत्किञ्चिच्छब्दस्य यत्किञ्चित्प्रकृतवाचित्वेन सामान्यविषयत्वेऽपि दीक्षणीयाव्यतिरिक्ते सावकाशत्वात् 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात् इत्यनेन निरवकाशेन सङ्कोचः, तथा प्रत्यक्षेण निरवकाशेन वृत्त्यन्तरेणानेकार्थत्वेन वा विषयान्तरपरत्वेन सावकाशायाः श्रुतेः सङ्कोचः**

---

दीक्षणीयादिसकलप्राचीनपदार्थजन्यापूर्वसाधनोद्देशेन उपांशुत्वविधानप्रसक्तावपि 'यावत्या' इत्यादिविशेषविहितस्वरावरुद्धदीक्षणीयाप्रायणीयादिभिन्नप्राचीनपदार्थजन्यापूर्वसाधनोद्देशेन उपांशुत्वविधायकतया सावकाशं यत्किञ्चिदित्यादिवाक्यं सङ्कुच्यते, यथा यावत्येत्यादिना, तथा प्रत्यक्षेण तदविषये सावकाशश्रुत्यादिसङ्कोच इति शङ्कते—**न च यथेति**। **निरवकाशेनेति**। दक्षिणीयादिजन्यापूर्वसाधनोद्देशेन स्वरविशेषविधायकत्वेन दीक्षणीयादन्यत्रानवकाशेनेत्यर्थ। स्थितं हि नवमद्वितीयाधिकरणद्वितीयवर्णके 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयान्मद्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सू उच्चैः प्रवर्ग्येण उच्चैरग्नीषोमीय' इति। ज्योतिष्टोमे श्रुताः स्वरविशेषाः दीक्षणीयादिजन्यापूर्वसाधनोद्देशेन विधीयन्ते, ज्योतिष्टोमजन्यापूर्वप्रयोजकापूर्वसाधनीभूतदीक्षणीयाद्युद्देशेन वेति संशये साक्षात्पुरुषार्थासाधनत्वादवान्तरापूर्वमात्रं नोद्देश्यघटकमिति द्वितीयपक्षे प्राप्ते, पश्वादिवत्परम्परयापुरुषार्थसाधनस्याप्युद्देश्यत्वसम्भवात् ज्योतिष्टोमापूर्वघटितोक्तरूपापेक्षया आवश्यकत्वाल्लाघवाच्च दीक्षणीयादिजन्यावान्तरापूर्वसाधनत्वेनैव उद्देश्यता[1]। एवं प्रोक्षणादिरूपसन्निपत्योपकारकाङ्गानामुत्पवनादिरूपा धर्मा प्रोक्षणादिजन्यव्रीह्यादिनिष्ठापूर्वसाधनोद्देशेन, प्रयाजाद्यारादुपकारकाङ्गनामभिक्रमणादिरूपाधर्माः प्रयाजादिजन्यापूर्वसाधनोद्देशेन विधीयन्ते। एवंच ज्योतिष्टोमविकारं-

---

1 उद्देश्यत्वात्.

प्रत्यनङ्गभूतेषु मेष्यादिद्रव्येषूपाकरणादीनामूहः। पूर्वपक्षे तु ज्योतिष्टोमापूर्वस्थानापन्नापूर्वाभावेन प्राकृतकार्यभावादनूहः। तेषु दैक्षधर्मानतिदेशश्च। यत्तु भाष्ये—'अश्वमेधे त्रैधातवीया[1] दीक्षणीया भवति' इति वचनेन यजमानसंस्कारे दीक्षणीयाकार्ये विहितत्रैधातवीयायां दीक्षणीयाधर्मप्राप्तिः पूर्वपक्षे, सिद्धान्ते तु प्रसिद्धत्रैधातवीयाधर्मप्राप्तिः, इति प्रयोजनमुक्तं, तत्र पूर्वपक्षवत् सिद्धान्तेऽपि स्थानापत्तेः बाधकाभावात्। यदितु स्थानापत्त्यतिदेशापेक्षया त्रिविधातिदेशो[2] बलवानिति अष्टमोक्तेः नामातिदेशेन प्रसिद्धत्रैधातवीयाधर्मप्राप्तिरिति शङ्क्येत, तदा तत्पूर्वपक्षेऽपि तुल्यम्। वस्तुतो नेयं त्रैधातवीया, प्रसिद्धत्रैधावीयातः कर्मान्तरं, सत्यप्युपादेयगुणायोगे आख्यातासामाधिकरण्यात्। अतः सधर्मिकैव यजमानसंस्काराय विधीयत इति धर्मस्यानाकाङ्क्षितत्वात् न स्थानापत्त्यतिदेश इति। अत्र यद्यपि दीक्षणीयायाः यार्जुर्वेदिकत्वेनोपांशु यजुषेत्यनेनोपांशुत्वं, तथापि तच्चोदकेन बाध्यते। प्राक् स्विष्टकृतः प्रथमस्थाने[3] मध्यमेनेडाया शेषे तृतीयस्थानेनेत्येतत् स्थलवैपरीत्यस्य दर्शपूर्णमासीयस्य चोदकप्राप्तत्वात् चोदकाश्रितस्य प्रयोगवचनाश्रितोपांशुत्वादिनानावेदस्वरापेक्षया बलवत्त्वात्, तदपि यत्किञ्चित्प्राचीनमित्यादिना बाध्यते,[4] तदपि यावत्येत्यादिनेति बोध्यम्। स्विष्टकृतः प्राक् प्रथमस्थानेन नीचैः स्वरेण प्राक्[5] स्विष्टकृदुत्तरं मध्यमेन स्वरेण शेषे इडोत्तरं तृतीयस्थानिनोच्चैस्स्वरेणेति दर्शपूर्णमासीयवाक्यार्थः। न चाग्नीषोमीयात्प्राचीनासु दीक्षणयिाप्रायणीयोपसत्सु[6] यावत्येत्यादिना स्वरविशेषे विहिते यत्किञ्चिदित्याद्यपि निर्विषयकत्वात् निरवकाशमुपसत्सु उपांशुत्वस्यानुवादश्च स्यात् इति वाच्यम्; यत्किञ्चिदित्यादेः दीक्षणीयाद्यङ्गेषु विधायकत्वात्, यावत्येत्यादेः

---

1 उद्देश्यत्वात्. 2 त्रैधातवीयातिदेशो. 3 प्रथमस्थानेन. 4 साध्यते.
5 इडायाः प्राक्. 6 प्रायणीयाभिज्ञोपसत्सु.

दीक्षणीयादिस्वरूपमात्रे स्वरविशेषविधायकत्वात् । प्रवर्ग्ये तु साम्न एवोच्चैःस्वर उच्चैः प्रवर्ग्येणेत्यस्य तद्विधायकवचनस्य करणतावाचितृतीयायोगात्साम्नस्यैव करणत्वात् । ननु यत्किञ्चिदित्यादेः सामान्यविषयकत्वादेवाहवनीयादिवाक्यवत्सङ्कोचः न तु सावकाशत्वात् सामान्यविशेषन्यायश्च पूर्वमेवोक्तस्तत्राह—**यत्किञ्चिच्छब्दस्येति** । **प्रकृतवाचित्वेनेति** । विशेषबोधकत्वेनेत्यर्थः सर्वनाम्नां घटादिशब्दपर्यायतावारणाय बुद्धिविषयविशिष्टशक्तत्वेऽपि विशेषरूपेण शाब्दधीजनकत्वमावश्यकम्; अन्यथा विशेषरूपेण संशयस्य निवृत्त्यनुपपत्तेः । तथाच सामान्यविषयकत्वात् न सङ्कोचः, किन्तु सावकाशत्वादिति भावः । यत्तु 'विशेषबोधने प्रकरणसापेक्षतया यत्किञ्चिच्छब्दसङ्कोचः' इति, तत्तुच्छम्; अग्नीषोमीयात्प्राचीनं यत्किञ्चिदित्यनेन प्रकरणनिरपेक्षेणैव तत्पदार्थ[1]बोधसम्भवात्, अवान्तरापूर्वसाधनलक्षणार्थमवान्तरप्रकरणापेक्षणस्य तत्तत्स्वरूपपरिचयार्थं तत्तद्वाक्यापेक्षणस्य वा दीक्षणीयादिपदेऽपि तुल्यत्वात् । **वृत्त्यन्तरेणेति** । 'नेह नानास्ति' इत्यादौ आदरणीयं नाना नास्ति इह ब्रह्मणि तत्सत्त्वे[2] एकैवादरणीयास्ति' इति लक्षणा(दि)वृत्त्या विषयान्तरपरतेत्यर्थः । ननु स्वारसिकवृत्तेः सङ्कोचयोग्यता सावकाशता, न हि 'यजमानः प्रस्तरः' इत्यादेर्यजमानसादृश्यादिबोधकत्वं, 'सोमेन यजेत' इत्यादेः सोम[3]सम्बन्धिबोधकत्वं च, सावकाशत्वेन सङ्कोचात् । किन्तु मुख्यार्थतात्पर्यहीनश्रुत्यपेक्षया, बलवत्प्रत्यक्षबाध्यत्वात् । न चाद्वैतश्रुतेः बाध्यत्वं सम्भवति; तात्पर्यवत्त्वात्, प्रत्यक्षस्यानिश्चितप्रामाण्यत्वेन न्यूनबलवत्त्वाच्चेत्यत आह—**अनेकार्थत्वेनवेति** । 'अन प्राणने' इत्यस्य भावक्विबन्तस्य नकारपूर्वकस्य नानेतितृतीयान्तं रूपं जीवना-

---

1 तत्फलार्थ. 2 तत्सर्वैः. 3 साम.

किं न स्यादिति वाच्यम्; तात्पर्यलिङ्गैरुपक्रमादिभिः द्वैत-

भावेनेत्यर्थकं, 'अ मा नो नाः प्रतिषेधवाचकाः' इत्युक्तेः। तथाच माना विनाशेन किञ्चन नास्ति अस्त्येवेति न अस्थिरमित्यर्थः। तथाच ब्रह्मैव सेव्यं तदन्यस्य विनाशित्वेनास्थैर्यात्तत्प्राप्तेरपुरुषार्थत्वात्, 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यत्र तु इव-शब्दस्याल्पार्थकत्वादल्पमपि विनाशेन युक्तं यः सेव्यत्वेन पश्यति [1] स मुहुर्मियत इति व्याख्येयम्। अथवा इह ब्रह्मणि नानात्वं नास्तीत्यर्थो लक्षणया वाच्यः, 'हिरुक् नाना च वर्जने' इत्यमरात्। इह ब्रह्मणि पृथक्भाव(रूपवर्जन)विशिष्टं किमपि नास्तीत्यर्थः। अनेकार्थकत्वेनेति भावः। यत्तु—"तत्त्वमसीत्यादौ तदादिपदस्य तदीये लक्षणारूपवृत्त्यन्तरेण ब्रह्मैव सन् ब्रह्माप्येतीत्यादावनेकार्थत्वेन पूर्वब्रह्मपदस्यजीवार्थकतया अप्येतीत्यस्य सम्बध्नातीत्यर्थकतया विषया-न्तरपरता" इति व्याख्यानं, तत् शोभते; मिथ्यात्वबोधकश्रुतेः सत्यताप्रत्यक्षेण सङ्कोचस्य प्रकृतत्वात्, तदन्यत्र वृत्त्यन्तरादि [2] वर्णनस्य प्रकृतानुपयोगात्। उपक्रमादिभिरिति। बृहदारण्यके षष्ठे द्वितीय-ब्राह्मणान्ते—'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गः' इत्युपक्रमः। तादृश एव चतुर्थब्राह्मणान्ते उपसंहारः—'अभयं वै जनक प्राप्तोसि' इति, 'नैनं कृताकृते तपतः' इति च। तत्रैव फलं—'अनु मा शाधि' इति मानान्तराविषयत्वरूपापूर्वतासूचनम्। 'स यत्तत्र किञ्चित् पश्यत्यनन्वा-गतस्तेन भवति असङ्गो ह्ययं पुरुष इति, नेह नानास्ति किञ्चन, सलिल एको द्रष्टा अद्वैतो भवति' इत्यादिरभ्यासः। 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इत्याद्यर्थवादः। 'एष सेतु-र्विधरण एषां लोकानां यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः'

1 सेव(व्य)ते न पश्यति. 2 पूर्ववृत्यन्तरादि.

**निषेधपरत्वे अवधृते अद्वैतश्रुतेरपि निरवकाशत्वात्, प्रत्यक्षस्यापि व्यावहारिकद्वैतविषयतया सावकाशत्वात्, विरुद्धयोश्च द्वयोः 'अहं मनुष्यः' इत्यादिप्रत्यक्ष 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुत्योरिव तात्त्विकप्रामाण्यानुपपत्त्या कस्यचिद्व्यावहारिकं तस्यचित्तात्विकं प्रामाण्यमभ्युपेयम्, अत्यन्ता-**

---

इत्यादिकमात्मनो जगदुपादानत्व बोधकत्वात् कारणं विना कार्यं नास्तीत्युपपत्तिः । एवमन्यत्रापि बोध्यम्—**निरवकात्वादिति** । विषयान्तरपरतया सावकाशत्वाभावादित्यर्थः । किञ्च नात्र काचन भिदाऽस्ति इत्यादिश्रुत्या नेह नानास्तीत्यादिश्रुतेरेकार्थत्वस्योक्तत्वात् उक्तव्याख्यानं प्रलापः । न च भिदापदस्यापि विनाश्यर्थकतया यतो विनाशि अतो नास्तत्यिर्थ इति वाच्यम्; अत्र भिदामिव मन्यमानः शतधा मृत्युमाप्नोतीत्युत्तरासङ्गतेः । अत्र सावकाशनिरवकाशन्यायस्यापि निश्चितप्रामाण्यकोभयविषयकत्वम्; अन्यथा 'अयं गौरश्वः' इत्यादेरपि स सगौर्नाश्व[1] इत्यादिसङ्कोचकत्वं स्यादित्याशयेन—**श्रुतेरपीत्यपिशब्द** उक्तः । यत्तु—'सत्त्वप्रत्यक्षाविषये मिथ्यात्वबोधकतया अद्वैतश्रुतेः सामकाशत्वसम्भवेन प्रत्यक्षस्यापि तात्त्विकप्रामाण्यसंभवे व्यावहारिकप्रामाण्यस्य अप्रामाण्यपर्यवसितस्य तत्रोक्तिरयुक्ता' इति, तत्तुच्छम्; प्रत्यक्षाविषये व्यावहारिके मिथ्यात्वबोधनेऽपि त्वन्मतोपमर्दात् । अथ तत्राप्यनुमानादेः सत्वग्राहकस्य निरवकाशत्वेन मिथ्यात्वश्रुतिर्न प्रवर्तते[2], तर्हि तस्या निरवकात्वं स्थिरमेव । अथ उक्तानुमानादेः सम्भावितदोषत्वात् 'प्राबल्यमागमस्य' इत्यादिश्रुतेश्चाद्वैतश्रुतिबाध्यता, तदा सत्त्व[3]-प्रत्यक्षस्यापि सत एव सा अस्तु । किञ्च 'अशब्दमस्पर्शमरूपम्' इत्यादिश्रुतेः प्रत्याक्षाविषये कथं सावकाशत्वं; शब्दादेः प्रत्यक्षाविषयत्वे

---

1 गौणाश्व. 2 श्रुतिर्निवर्तेत. 3 सत्य.

मानाभावात्, 'देहेन्द्रियबुद्धिनास्ति, न लिप्यते लोकदुःखेने' त्यादौ देहदुःखादेः प्रत्यक्षाविषयत्वस्य कथमप्यसम्भवाच्च, पृथिवीत्वपटत्वादि-विशेषविशिष्टमिथ्यात्वानुमानस्योक्तस्य निरवकाशत्वाच्च। अपिच नेह नानेत्यादौ प्रत्यक्षा[1]विषयद्वितीयादिसामान्याभावो लक्षणयैव बोद्धव्यः, मुख्यवृत्त्या द्वितीयादिसामान्याभावस्यैव बोधात्। मुख्यवृत्त्युपमर्दश्च न सावकाशतया सङ्कोचात्, किन्तु बलवत्प्रमाणबाध्यत्वात्। बलवत्त्वं च श्रुतेरेव निर्णीततात्पर्यकत्वात्। यदिचामुख्यवृत्त्या विषयान्तरे श्रुतेः सावकाशत्वं तदा प्रत्यक्षस्यापि किञ्चित्कालबाध्यत्वरूपमिथ्यात्वाविरोधि-सत्वविषयकत्वेन तत्किं न स्यादित्युक्तम्। तेन 'उपांशु चरन्ति' इत्यादौ तु तत्पदस्य दीक्षणीयात्वादिरूपेणेव तदन्यरूपेणापि बोधस्य[2] मुख्यवृत्त्यैव सम्भवात् सावकाशत्वन्यायसम्भवः। तस्मादद्वैतश्रुतेः सावकाशत्वेन सङ्कोचोक्तिरुन्मत्तप्रलापः॥

द्वादशे द्वितीये स्थितं पञ्चदशरात्रे पञ्चदशसुत्याके सत्रविशेषे प्रथ-माहोऽग्निष्टुन्नामकं नाम्नाग्नेयाग्निष्टुद्विकारत्वात्तत्राग्नेयी सुब्रह्मण्या तदुत्तरत्र्य-हस्य ज्योतिर्गौरायुरिति नामकस्य नाम्नैकाहकाण्डोक्तज्योतिरादियागविका-रत्वात् तदीया ऐन्द्री सुब्रह्मण्या, अन्येष्वेकादशसु द्वादशाहविकारत्वा-त्तदीया ऐन्द्री सुब्रह्मण्या, सुब्रह्मण्या इन्द्र आयाहीत्यादिनिगदविशेषः। तत्र सुत्याकालीनसुब्रह्मण्यापाठे तत्तद्दिनभेदेन अनुष्ठेयत्वान्न विचारः। आतिथ्यान्ते उपसत्काले च सुब्रह्मण्यापाठे सर्वसुत्यार्थे तन्त्रत्वस्यैकादशे स्थापितत्वाद्विरोधप्रसक्तौ अग्निष्टुन्नामकस्य मुख्यत्वात्तदीयाग्नेयी एव पठनीयेति प्राप्ते भूयोऽनुग्रहाय ऐन्द्र्यैव कार्येति भाष्यम्। वार्तिके तु सुब्रह्मण्याया देवताप्रकाशनार्थत्वादिन्द्रप्रकाशनेनाग्निप्रकाशनरूपोपकारा-सिद्धेरन्यत उपकारलाभे अननुष्ठानरूपस्य प्रसङ्गस्य असम्भवाद्भेदेनैव सुब्रह्मण्यापाठ इति नेदमुदाहरणम्। अतएवैकादशे तन्त्रतोक्तिरपि

[1] प्रत्यक्षादि. [2] बाधस्य.

एकदैवत्यसुब्रह्मण्याविषयेति । तस्मात्काम्येष्टिकाण्डे 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्रायप्रदात्रे पुरोडाशमेकादशकपालं, दधिमधुघृतमापोधानास्तत्संसृष्टं प्राजापत्यं पशुकामः' इति श्रुते चित्रेष्टिवद्ध्यादि द्रव्यकानेकयागा आग्नेयपुरोडाशधानायागयोराग्नेयविकारत्वादमावास्यापौर्णमास्युभयधर्मकत्वेन न वक्ष्यमाणविरोधः । ऐन्द्रस्यैन्द्राग्नविकारत्वाद्धियागस्य दधियागविकारत्वादमावास्याधर्माः । मधुघृतोदकानां तु उपांशुयाजविकारत्वात् पौर्णमासधर्माः । तदिह पञ्चसु[1] सहक्रियमाणेषु आज्यभागयोः वार्त्रघ्नीवृधन्वतीमन्त्राणां हविरभिमर्शने चतुर्होतृपञ्चहोतृमन्त्रयोश्च विरोधः । 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इत्याभ्यां पौर्णमास्यङ्गाज्यभागयोः वार्त्रघ्नयोरमावास्याङ्गाज्यभागयोर्वृधन्यत्योः व्यवस्थयाप्रापणात् पौर्णमास्यमावास्याविकाराङ्गाज्यभागेष्वपि तासां व्यवस्थयैव प्राप्तेः । एवं 'चतुर्होत्राप्रौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामित्याभ्यामपि 'पृथिवी होता द्यौरध्वर्युः रुद्रोऽग्नीत् बृहस्पतिरुपवक्ता' इति चतुर्होतृमन्त्रस्य पौर्णमासीहविरभिमर्शने, 'अग्निर्होता अश्विनावध्वर्यू; त्वष्टाऽग्नीत् मित्र उपवक्ता' इति पञ्चहोतृमन्त्रस्य अमावास्याहविरभिमर्शने विहितत्वात्तत्तद्विकारेष्वपि तथा प्राप्तत्वात् । न चाज्यभागयोः हविरभिमर्शनस्य च सर्वानुद्दिश्य तन्त्रेणैकमन्त्रेणकरणे मन्त्रान्तरानुरोधेन पुनःकरणं युक्तम्; गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् । अत[2] ऐन्द्रदध्नोः प्रथमोक्तत्वेन मुख्यत्वात् असञ्जातविरोधित्वात्तदनुग्रहायामावास्याधर्मा वृधन्वतीपञ्चहोतृमन्त्रा एव कार्या इति प्राप्ते—मुख्यधर्मानुग्रहो यद्यपि प्रथमं बुद्धः; तथापि पाश्चात्यपर्यालोचनेन बहूनां धर्मबाधस्यायुक्तत्वात् भूयोनुग्रहानुरोधेनाल्पसङ्ख्यानां भूयोधर्मेषु प्रसाङ्गित्वमिति पौर्णमासीविकाराणां भूयसां धर्मा वार्त्रघ्नीचतुर्होत्रमन्त्राः कार्याः । 'आसन्नानि हवींष्यभिमृशति' इति वच-

[1] सप्तसु. [2] अथ.

**प्रामाण्यस्यान्याय्यत्वात् । तत्राद्वैतश्रुतेः व्यावहारिकप्रामाण्य-सम्भवे द्वैतग्राहिप्रत्यक्षादेः तात्त्विकं प्रामाण्यं भवेत् । तदसम्भवे तु बलादेवाद्वैतश्रुतेः तात्त्विकं प्रामाण्यमिति प्रत्यक्षादेर्व्याव-हारिकं प्रामाण्यं पर्यवस्यतीति कृतबुद्धयो विदांकुर्वन्तु । ननु पञ्चदशरात्रे प्रथमे अहन्यग्निष्टुन्नामके नामातिदेशेन एकाहाग्निष्टु-द्धर्मभूता सुब्रह्मण्या आग्नेयी प्राप्ता । तस्या अल्पविषयायाश्चतुर्दशा-**

---

नान्तरविहिताभिमन्त्रणानुवादेन चतुर्होत्रेत्यादिना मन्त्रविधानात् सकृदेव सर्वहविरभिमर्शनसम्भवात् । अविरुद्धधर्मविषये तु सर्वेषां तन्त्रता आवृत्तिः, योग्यधर्मविषये त्वावृत्तिः । इदमप्युदाहरणं उपांशुयाज-स्यामावास्यायामभावपक्षे । तत्र तद्भावपक्षे द्विविधमन्त्राणामप्यविरोधात् नेदमुदाहरणमित्यन्यंन्मृग्यमिति सिद्धान्तितं 'विरुद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वम्' इति सूत्रेण । तथाच तत्र यथाभाष्यरीत्या भूयोऽ-नुग्रहानुरोधेन उक्तमन्त्ररूपमुख्यधर्मांशे अतिदेशस्य बाधः, एवं प्रत्यक्षा-दिभूयोनुग्रहानुरोधेन अद्वैतश्रुत्तेः मुख्यार्थांशे बाध इति शङ्कते— **ननु पञ्चदशरात्र इति** । पञ्चदशयागार्थे क्रियमाण आतिथ्यान्तो-पसत्कालीनसुब्रह्मण्यापाठे इत्यर्थः । अत्र प्राप्ता या आग्नेयी तस्यास्तत्र प्राप्तया ऐन्द्रया यथा बाध इति योजना । आग्नेयीप्राप्तौ मानमाह—**प्रथम इत्यादि** । प्रथमाहविषयकेन नामातिदेशेन प्राप्तेत्यर्थः । तत्रापि हेतुः—**एकहाग्निष्टुद्धर्मभूतेति** । ऐन्द्रीप्रापक-मानमाह—**चतुर्दशाहस्स्वति** । नामातिदेशेनेत्यनुषक्तिशेषः । तथाच चतुर्दशाहस्सु प्रथमत्र्यहाविषयकेन नामातिदेशेन अव-शिष्टैकादशविषयकेन चोदकेन च प्राप्तया ऐन्द्रयेत्यर्थः । यथाश्रुतं त्वसङ्गतं[1] चोदनालिङ्गकातिदेशरूपेण चोदकेनावशिष्टेष्वेकादशाहस्वेवः[2]

---

1 त्वसंशयितं. 2 दशाहस्सु.

**ह्स्तु चोदकेन प्राप्तया ऐन्द्र्या सुब्रह्मण्यया बहुविषयया यथा बाधः, बहुबाधस्यान्याय्यत्वात् । तथा द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डसगुणोपासनावाक्यादिरूपबहुप्रमाणाबाधायाद्वैतवाक्यस्य प्रतीतार्थबाधः किं न स्यात्। तदुक्तं बहुप्रमाणविरोधे चैकस्याप्रामाण्यम् । दृष्टं शुक्तिरजतज्ञान इति चेन्न; दृष्टान्ते बहुविषयया बाधः अत्र बहुभिरिति वैषम्यत्, देहात्मैक्ये प्रत्यक्षानुमानशब्दाभासादिसत्त्वेऽपि देहात्मभेदबोधकस्यानन्यपरत्वेन प्राबल्यवदत्रापि अनन्यपरत्वेनाद्वैतश्रुतेः प्राबल्यात्,**

---

ऐन्द्रीप्राप्तत्वादित्थमेव[1] सामञ्जस्येऽध्याहारवशेन व्याख्यानं परेषां स्वमतिव्याख्यानार्थमेवेति ध्येयम्—**द्वैतग्राहीति** । द्वैतसत्त्वग्राहीत्यर्थः । **वैषम्यादिति** । 'भूयसां सधर्मत्वम्' इति सौत्रपदद्वयेन भूयोविषयक प्रमाणानुरोधेन स्वल्पविषयकप्रमाणबाध इति न्यायशरीरम् । न त्वेकस्मिन्नेव विषये भूयसां प्रमाणानामनुरोधेन स्वल्पप्रमाणबाध इति सर्वत्रैव शब्दानुमानाभासानां भूयसां सम्भवात्, भूयोविषयकैकप्रमाणेनस्वल्पविषकबहूनां प्रमाणानां बाधाभावापत्तेश्च किञ्च श्रुत्यनुमानदृश्यत्वाद्यन्यथानुपपत्तिरूपाणां नानाविधानां मिथ्यात्वग्राहकमानानां जीवेश्वरयोरैक्यबोधकानन्तश्रुत्यनुमानार्थापत्तीनां च बहूनामनुरोधेन द्वैतसत्त्वप्रत्यक्षमेव बाधितुमुचितम् । कर्मकाण्डसगुणोपसनावाक्यादिकं तु द्वैतमिथ्यात्वविरोध्यविषयकं मिथ्यात्वनिश्चयपूर्वमेव प्रवर्तत इति तद्बाधायाद्वैतवाक्यार्थबाधोक्तिः प्रलाप इति भावः । एकविषयकप्रत्यक्षतदुपजीव्यनुमानाद्याभासानां बहुत्वमात्रेण अनुग्राह्यत्वेऽतिप्रसङ्ग इत्याशयेनाह—**देहेति** । **प्राबल्यादिति** । निरवकाशत्वेनेत्यादिः । तर्हि प्रत्यक्षस्यापि निरवकाशत्वात्तात्त्विकप्रामाण्यव्यवहाराच्च

---

1 ऐन्द्रयाः.

विद्याविद्याभेदेन विद्वदविद्वत्पुरुषभेदेन च विरोधाभावात् ॥

**इति प्रत्यक्षप्राबल्यनिराकरणम्**

---

विरोधः; तत्राह—**विद्येति** । विद्या तात्त्विकविषयकमद्वैतश्रुतिजन्यज्ञानं, अविद्या व्यावहारिकविषयकं द्वैतप्रत्यक्षादीत्यर्थः—**विद्वदिति** । अविदुष एव प्रत्यक्षादौ दोषवशात् तात्त्विकप्रामण्यव्यवहारः । निर्दोषस्य विदुषस्तु विद्यायामेव तद्व्यवहार इति नोक्तविरोध इत्यर्थः ॥

अत्रेदमालोचनीयम्—विप्रतिषिद्धेत्याद्युक्ताधिकरणोत्तरं 'मुख्यं वा पूर्वचोदनाल्लोकवत्, इत्यधिकरणे स्थितं अध्वरकल्पायामिष्टौ 'आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेत' इति श्रुतयोराद्यस्यौषध[1]द्रव्यकत्वाद्विदैवत्यत्वाच्च ऐन्द्राग्नविकारः, तस्यापि वैकल्पिकद्वादशकपालद्रव्यत्वाच्च । सरस्वती तु उपांशुयाजविकारः, आज्यद्रव्यकत्वात् । तथाचाद्यस्य दार्शिकम्, द्वितीयस्य पौर्णमासिकं तन्त्रमित्याज्यभागमन्त्रहविरभिमर्शनमन्त्राणां पूर्ववत् विरोधे मुख्यत्वादाद्यायांदार्शिकाज्यभागादिमन्त्राः कार्याः, मुख्यत्वन्यायापवादकस्यामुख्यभूयस्त्वादेरभावादिति सिद्धान्तयित्वा[2] वार्तिकादौ मतान्तरमुक्तम् । तत्र 'विप्रतिषिद्धेत्यादि—मुख्यं वे' त्यादिसूत्राभ्यामेकाधिकरणम् । तत्रामुख्यभूयस्त्वं मुख्यत्वापवादकमिति पूर्वसूत्रेण पूर्वपक्षयित्वा मुख्यत्वमेवामुख्यभूयस्त्वापवादकं, लोके बहुभिरप्यमुख्यैर्मुख्यस्याबाधनात् प्रत्युत विपरीतदर्शनादिति । युक्तं चैतत्; भूयसां दुर्बलत्वे भूयस्त्वस्याकिञ्चित्करत्वात्, 'शतमप्यन्धानां न पश्यति' इति न्यायात् । उक्तं हि सत्प्रतिपक्षस्थले न्यायभाष्यादौ–'व्याप्तिपक्षधर्मते बलं, न तु भूयस्त्वम्' इति । दुर्बलत्वात् द्वैतसत्त्वप्रत्यक्षादेः अनिश्चितप्रामाण्यकत्वादिना श्रुतेर्नि-

---

1 श्रुतयोराद्य (स्यौ) औषध. 2 सिद्धान्त इति.

त्यनिर्दोषत्वादनन्यपरत्वाच्च प्राबल्यमिति भूयोनुग्रहन्यायोपन्यासः परस्य निरालम्ब एव। यत्तु—" भूयोनुग्रह आवश्यकः, न ह्यल्पवैगुण्ये सम्भवति भूयोवैगुण्यं प्रयोगवचनं क्षमते, पूर्वावगतमपि कारणान्तरवशाद्बाध्यत एव" इत्यादि शास्त्रदीपिकादावुक्तम्, तदुक्तयुक्तेरप्रयोजकम्; मुख्यो-पकारेण भूयसामुपकृतत्वाद्वैगुण्यभावात् । अतएव उपकारांशे साधनाका-ङ्क्षाविच्छेदेन भूयोधर्मांशे अतिदेशाप्रवृत्तावपि क्षत्यभावात्, भूयस्त्वादे र्बाधकत्वासम्भवाच्च । यदपि प्रथमप्रवृत्तस्य लोकेबहुभिः पश्चात्प्रवृत्तै रुपमर्दात् भूयस्त्वं मुख्यत्वबाधकमिति नव्योक्तं तच्चिन्त्यत्; दुर्बल-भूयस्त्वे तथा दर्शनाभावात् । समानबलभूयोभिर्बाध्यत्वं वाच्यम्; तदपि प्रमाणस्थले वक्तुमशक्यम्, असञ्जातविरोधित्वेन मुख्यस्य-बलवत्त्वात्समानबलत्त्वाभावात् सञ्जातविरोधित्वेन बाध्यत्वस्य भूय-स्त्वप्यविशिष्टत्वेन भूयसामपि समानबलवत्त्वाभावात् । न ह्येकेनो-पक्रमस्थेन प्रमाणेन प्रमाणानामुपसंहारस्थानां बहूनां बाधः । तस्माद-मुख्यस्यैव समानबलभूयोबाध्यत्वं वाच्यम् । तत्र तूदाहरणं न यथोक्तं, प्रत्यक्षादेर्न्यूनबलत्वात्, प्रकृतानुपयोगाच्च । तस्मादुक्तन्यायस्य अत्यन्तशिथिलत्वाद्वाक्यमात्रं त्वया दृष्टान्तीकृतम् । तदपि विषममित्या-शयेन 'दृष्टान्ते' इत्याद्युक्तम् । 'अपिचानन्यपरत्वेन श्रुतेः प्राबल्यात्' इत्यनेन प्रत्यक्षादेरद्वैतश्रुतिशेषत्वाद्दौर्बल्यम् । उक्तं हि वार्तिकादावपि— 'वात्स्यायनादीनां ब्रह्मण्येव समन्वयः' इति । उक्तं च—'मुख्यंवे' त्युक्ताधिकरणोत्तरं 'अङ्गगुणविरोधे च तादर्थ्यात्, इत्यधिकरणे मुख्यानां दक्षिणीयाद्यङ्गानां प्रधानस्य जघन्यस्य च सोमयागस्य, 'य इष्ट्या' इत्यादिविहितपर्व[1]काले अनुष्ठानविरोधे प्रधानस्यैव तत्काले अनुष्ठानं, अङ्गानां प्रधानसाद्गुण्यार्थत्वेन तद्विरोधे अङ्गसाद्गुण्यस्याकिंञ्चि-त्करत्वात्, लोके प्रधानेन पश्चात्प्रवृत्तेन एकेनापि प्रथमं प्रवृत्तानां

---

[1] पूर्व.

## प्रत्यक्षस्योपजीव्यत्वभङ्गः

ननु—उक्तन्यायैः प्रत्यक्षस्य जात्या प्राबल्याभावेऽपि उपजीव्यत्वेन प्राबल्यम्, उपजीव्यत्वं च अनुमानागमापेक्षित शेषार्थग्राहकतया। सा च क्वचित् साक्षात्, क्वचित्परम्परया-दृष्टं चापेक्षितैकदेशग्राहिणामप्युपजीव्यत्वम्। तद्विरुद्धग्रहणे तेन बाधश्च यथा घटविभुत्वानुमाने पक्षग्राहिणा अक्ष्णा, नरशिरश्शुचित्वानुमाने साध्यग्राहकेणागमेन, मनोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहकेणानुमानेन। किमु वक्तव्यमपेक्षिताशेषग्राहिणा स्वविरुद्धग्राहकस्य बाधः; चक्षुरादेश्च शब्दतज्जन्यज्ञानप्रामाण्याद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वादुपजीव्यत्वम्। दृष्टं च नरशिरःकपालाशुचित्वबोधकागमस्य तच्छुचित्वानुमानोपजीव्यशुचित्वागमसजातीयत्वेन तदनुमानात् प्राबल्यम्। न चेन्द्रियमपि स्वज्ञानार्थमनुमानमुपजीव-

बहूनां गुणीभूतानां उपमर्ददर्शनाच्च। अत एकादि[1]दीक्षापक्षे दीक्षणीयादौ पर्वकालबाधः। द्वादशदीक्षापक्षे त्वविरोधान्न सः अग्नीषोमीयादौ तु सर्वथाऽपि स इति अङ्गस्य प्रधानस्य च गुणानां धर्माणां विरोधे प्रधानस्य धर्मा एव कार्या इति सूत्रार्थः। तथा च प्रधानत्वादद्वैतश्रुतिरेवादरणीयेति भावः॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तद्वान्तखण्डानामक्षजास्त्रिबलं हतम्॥

इति प्रत्यक्षप्राबल्यभङ्गः

---

असमवायीति। असमवायिकारणेत्यर्थः—वक्तव्यमिति। बाधक्रियाविशेषणत्वान्नपुंसकं बाधइत्यनन्तरमितिशब्दोऽध्याहर्तव्यः।

[1] एकाह्नादि.

**तीति सम एव उपजीव्योपजीवकभावः । अज्ञातकरणतया ज्ञान-जननार्थमनुमानानपेक्षणात्, अनुमानागमादिना तु ज्ञान-**

**ज्ञानजननेति ।** स्वकार्ययावद्ज्ञानजननेत्यर्थः । तेन सविकल्पक-प्रत्यक्षस्यातीन्द्रियविशेषणज्ञानादिरूपानुमित्यादिसापेक्षत्वेऽपि न क्षतिः । विशेषणज्ञानत्वादिना हेतुत्वाभावमते तु यथाश्रुतमेव रम्यम् । यद्य-प्यतीन्द्रियपक्षसाध्यहेतुकानुमितिविशेषस्यप्रत्यक्षानपेक्षमेव जननम्, शब्दानुमानादिनैव व्याप्त्यादिधीसम्भवात् । न च किञ्चिद्विषयक-प्रत्यक्षत्वावच्छेदेनापि[1] नानुमित्यादिसापेक्षता, विशेषणधीत्वादिना हेतु-त्वानङ्गीकात् । किञ्चिद्विषयकानुमितित्वाद्यवच्छेदेन तु प्रत्यक्षसापे-क्षता, ऐन्द्रियविषयकानुमित्यादौ तत्सम्भवात् । तथा च किञ्चिद्विषयक-यज्जातीयप्रमासामान्यं यज्जातीयप्रमोपजीवकं तज्जातीयं तज्जातीयापेक्षया दुर्बलम्, अदृष्टाद्वारकोपजीवकत्वानिवेशात्, प्रत्यक्षस्य स्वजनकचक्षुरादि-जनकादृष्टप्रयोजकानुमानादिसापेक्षत्वेऽपि न क्षतिः— इति वाच्यम्; चक्षुर्घर्षणादाविष्टसाधनत्वानुमितिप्रयोज्यचक्षुषैव यस्य व्यक्तिविशेषस्य यच्चाक्षुषसामान्यं जातं तस्यानुमित्युपजीवकत्वात्, सविषयकान्यदद्वारी-कृत्य उपजीवकत्वानिवेशेऽपि विशुद्धमातापितृजन्यत्वादिपरोक्षसापेक्षे ब्राह्मणत्वादिप्रत्यक्षे तादृशोपजीवकत्वसम्भवात् । न चानुमित्यादिसामान्ये प्रमात्वेन ज्ञायमानज्ञानस्य हेतुत्वात् प्रमात्वग्राहकसाक्षिण उपजीव्यत्वेन तज्जातीयत्वेन चाक्षुषादिकं प्रबलमिति वाच्यम्, आवरणविषयतान-वच्छेदकप्रामाण्यकचाक्षुषादिज्ञातस्य हेतुत्वेन साक्षिणोऽनुपजीव्यत्वात् । अस्तु वाऽनुमित्यादौ जनकतया तदीयाप्रामात्वशङ्कानिरासकतया तत्स्व-रूपवत्त्वम् । शङ्कानिरासकतया च[2] साक्ष्युपजीव्यः ; तावतापि तज्जा-तीयत्वेन प्राबल्यं दुर्वचम् । तज्जातीयत्वं हि न तद्वृत्तिप्रत्यक्षत्व[3] जातिमत्त्वं ; तस्यास्मान् प्रत्यलीकत्वेन पूर्वोक्तत्वात् । नाप्यपरोक्षभ्रम-

1 प्रत्यक्षावच्छेदेनापि. 2 न. 3 प्रत्यक्षत्वादि.

**जननार्थमेव तदपेक्षणादिति विशेषादिति चेन्न—उपजीव्याविरोधात्। तथाहि–यत्स्वरूपमुजीव्यते, तन्न बाध्यते। बाध्यते च तात्त्विकत्वाकारः। स च नोपजीव्यते, कारणत्वे तस्याप्रवेशात्।**

---

निवर्तकत्वं, तस्य साक्षिण्यभात्, अज्ञाननिवृत्तिद्वारकत्वेन प्रमायामेव भा(वा)नात्। नाप्यपरोक्षधीप्रतिबन्धकत्वम्; तस्य प्रमायामपि सिद्धान्ते अनङ्गीकारात्, विपरीतनिश्चये सति अज्ञानाभावादेव भ्रमानुत्पादात् दोषाणां प्रतिबन्धकत्वादिना प्रमानुत्पादात्, परोक्षधीप्रतिबन्धकत्वरूपेण अनुमितेरपि प्रत्यक्षप्रमोपजीव्यसाक्षिसजातीयत्वसम्भवाच्च, साक्षिणो भ्रमप्रमासाधारणत्वेन तज्जातीयत्वेन प्राबल्यासम्भमाच्च। किञ्च उपजीव्यजातीयत्वमात्रेण न प्राबल्यम्, यदा हि नोपजीव्यत्वेन प्राबल्यं, किन्तु परीक्षितत्वेनेति पर एव वक्ष्यति, तदा परीक्षीतमुपजीव्यजातीयं प्रबलं वाच्यम्। न त्वपरीक्षितम्। तथाच परीक्षितप्रत्यक्षत्वेन प्राबल्ये न नः क्षतिः। अपि च उपजीव्यजातीयत्वेन न प्राबल्यं क्वापि क्लृप्तम्-अशुचित्वबोधकागमस्य आगमत्वेनैव प्राबल्यसम्भवादित्यादिदूषणानि सन्ति; तथापि स्फुटत्वात्तान्युपेक्ष्य वाचस्पत्याद्युक्तरीत्या समाधत्ते—**नोपजीव्येति। यत्स्वरूपमिति।** व्यवहारिकप्रामाण्यमित्यर्थः—**तात्त्विकाकारः।** त्रिकालाबाध्यविषयकत्वम्—**अप्रवेशादिति।** व्यावहारिकप्रमात्वेनैव प्रत्यक्षस्यागमानुमानजन्यधीकारणत्वं, न तु त्रिकालाबाध्यविषयकत्वेन। व्यावहारिकप्रमात्वं चाद्वैतश्रुत्यनुमानजन्यज्ञानपूर्वकालाबाध्यविषयकत्वम्। तस्य चाद्वैतश्रुत्यनुमानजन्यज्ञानेन स्वकाले द्वैतमात्रबाधकेनापि[1] नोपमर्द इति भावः। प्रमात्वेनापि न कारणत्वमिति तु किञ्चेत्यादिना वक्ष्यति। ननु पूर्वकालावच्छिन्नसत्त्वं

---

1 बोधकेनापि.

तदुक्तम्—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

इति किञ्चापेक्षितग्राहित्वमात्रेण चेदुपजीव्यता, तया च बाधकत्वम् । तदपेक्षितप्रतियोगिग्राहकत्वे 'इदं रजतमि' ति भ्रमस्य बाधोपजीव्यत्वात् कथं नेदं रजतमिति बाधबुद्धिस्तद्विरुद्धा उदीयात् । अथ निषेध्यार्थसमर्पकतया प्रतियोगिज्ञानत्वेन तस्योपजीव्यत्वेऽपि तत्प्रामाण्यं नोपजीव्यम्; न हि प्रतियोगिप्रमात्वेनाभावज्ञानजनकता; गौरवात्, प्रतियोगिभ्रमादप्यभावज्ञानदर्शनाच्च । किन्तु तद्ज्ञानत्वेनैव; लाघवात् । अतस्तद्विरुद्धविषयकं ज्ञानमुदीयादेवेति ब्रूषे, तुल्यमिदं प्रकृतेऽपि पक्षज्ञानत्वादिना कारणता, न तु तत्प्रमात्वादिना-

---

कारणत्वं मिथ्यात्वविरुद्धं; तत्राह—तदुक्तमिति । खण्डन इति शेषः—पूर्वसम्बन्धनियम इति । अनन्यथासिद्धत्वे सति कार्याव्यवहितप्राक्कालावच्छेदेन कार्यव्यापकत्वे इत्यर्थः । अन्यथासिद्धव्यभिचारिणोर्वारणायोक्तरूपमवश्यं हेतुत्वं त्वयापि वाच्यम् । सत्त्वं तु न तत्र निवेश्यते, व्यर्थत्वादित्याह—तुल्य इत्यादि । प्रमात्वादिनापीति । अप्रामाण्याशङ्कास्पदज्ञानं तु न निश्चय इति न तस्मात्कार्यापत्तिः । अथवा अनावृतप्रमात्वेन हेतुत्वेऽपि न क्षतिः; प्रातीतिकधीसाधारणस्य मिथ्यात्वेनाज्ञातविषयकत्वरूपप्रमात्वस्यैव तथात्वस्वीकारेण श्रुत्याद्युपजीव्यप्रत्यक्षेणावृतस्य[1] श्रुत्यादिजन्यज्ञानात्पूर्वमनपायात् । एवंच तत्प्रामाण्यं नोपजीव्यमित्यस्य पूर्ववाक्यस्य तदीयं भ्रमव्यावृत्तं प्रामाण्यं

---

1 प्रत्यक्षेनावृतस्य.

पीति। अथ यत्प्रामाण्यं स्वरूपसिद्ध्यर्थं अपवादनिरासार्थं च यत्प्रामाण्यमुमजीवति; तत्तस्योपजीव्यम्। यथा स्मृतेरनुभवः न च रजतभ्रमस्तथेति चेत् तर्हि व्याप्तिधियोऽपि नानुमित्युपजीव्यत्वं स्यात्, लिङ्गाभासादपि वह्निमति वह्निप्रमादर्शनात्। ननु येन विना यस्योत्थानं नास्ति, तत्तस्योपजीव्यमित्येव वक्तव्यम्। तथाच रजतभ्रमस्योपजीव्यत्वमस्त्येव, न तु प्राबल्यम्। न ह्युपजीव्यत्वमात्रेण प्राबल्यम्; किन्तु परीक्षिततया परीक्षा च सजातीयविजातीयसंवादविसंवादाभावरूपा। न च तौ रजतभ्रमे स्तः; प्रकृते चाक्षुषस्य परीक्षितत्वेन प्राबल्यम्

---

नोपजीव्यमित्यर्थः—**यत्प्रामाण्यं**। यद्धीनिष्ठप्रामाण्यम्—**अपवादेति**। स्वाभावधीरित्यर्थः। अबाधितविषयकानुभवेन अबाधितविषयिकैव स्मृतिर्जायते, अनुभूतमात्रवियकत्वादिति स्मृतेरबाधितविषयकत्वरूपं[1] प्रामाण्यमनुभवीयं तदधीनम् अतएव अबाधितविषयकधीजन्यस्मृतित्वरूपविशेषदर्शनेनाबाधिताविषयकत्वाभावधीनिरास इति स्मृतेः स्वजनकधीरुपजीव्येत्याह—**यथा स्मृतेरिति**। **दर्शनादिति**। परामर्शादिप्रमात्वं विनाप्यनुमित्यादेः प्रमात्वस्वरूपस्य सिद्धेः। अतएव प्रमापरामर्शादिजन्यत्वज्ञानस्य[2] अनुमित्यादौ प्रमात्वाभावधीनिरासं प्रति सर्वत्रा[3]-प्रयोजकत्वात् प्रमापरामर्शादिजन्यस्य गन्धप्रागभाववद्धटो गन्धवानित्यनुमित्यादेः प्रमात्वाभावेन प्रमाजन्यानुमितित्वादेः प्रमात्वव्यभिचारित्वाच्चा पवादानिरासकत्वात् प्रत्यक्षस्य परामर्शादेः नानुमित्यादावुक्तोपजीव्यतेति भावः—**सजातीयेत्यादि**। सजातीयः संवादः स्वसमानविषयकप्रमात्वेन निश्चितं ज्ञानान्तरं, विजातीयः संवादः स्वसमानविषयकप्रवृत्त्यादिरूपं कार्यं, विरुद्धविषयकज्ञानं सजातीयविसंवादः, विरुद्धविषयकप्रवृत्त्यादि-

---

[1] त्वादिरूपं. [2] जन्यस्य ज्ञानस्य. [3] सर्वत्र.

अस्ति हि 'सन् घटः' इति विशेषदर्शनजन्यज्ञानानन्तरं घटार्थक्रियाप्रत्यक्षे क्लृप्तदूरादिदोषाभावाच्च। एवमेव जीवेशाभेदश्रुतौ निषेध्यार्पकभेदश्रुतिः, साक्षिप्रत्यक्षं चादोषत्वात् परीक्षितमिति तदबाध्यम्। [1]एवमेव च दोषाभावादिज्ञानरूपपरीक्षायामपि अनाश्वासे वेदे पौरुषेयत्वाभावज्ञाने त्वदुक्तानुमाने च योग्यानुपलब्ध्यादिना हेत्वाभासादिराहित्यज्ञाने ब्रह्ममीमांसायां प्रत्यधिकरणं सिद्धान्त्यभिप्रेतार्थे उपक्रमाद्यानुगुण्यज्ञाने च अनाश्वासः स्यादिति प्रमाणतदाभासव्यवस्था न स्यात्—इति; परीक्षा हि प्रवृत्तिसंवादविसंवादाभावदोषाभावादिरूपा। तया च स्वसमानदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते धूमेन स्वसमानदेशकालीन

---

कार्यं विजातीयविसंवादः, ज्ञानान्तरं घठार्थक्रियेति पाठः। दूष्यन्यायामृतग्रन्थे तथा सत्त्वात्। ज्ञानानन्तरं घयार्थक्रियेति पाठेऽपि ज्ञानरूपसजातियसंवादानन्तरं विजातीयसंवादरूपजलाहरणादिरूपार्थक्रियेत्यर्थः। प्रमात्वेन निश्चितत्वलाभाय ज्ञाने जन्यान्तं विशेषणं विसंवादाभावेऽपि वर्तते। श्रुत्यादेरन्यविषयत्वादिकल्पनादित्यभिमानः। चन्द्रप्रादेशिकत्वादौ सजातीयविजातीयविसंवादव्यापको दूरत्वादिदोषः, तदभावादुक्तप्रत्यक्षे उक्तविसंवादाभाव इत्याशयेनाह—प्रत्यक्षे क्लृप्तेति। ननु दूरत्वाद्यागन्तुकदोषाभावेऽपि अविद्यारागपापविशेषरूपदोषयोगादुक्तप्रत्यक्षादीनां कथं परीक्षितत्वं? प्रसिद्धं हि श्रुत्यादौ तेषां दोषत्वं—"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृताः, अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति, इतिनुकामयमानः आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा कामरूपेण, विविदिषन्ति यज्ञेन, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः, जनैः स्वकर्मस्तिमितात्मनिश्चयैः" इत्यादौ, तत्राह—एवमेव च दोषेति। कालीनेति। प्रामाण्यस्येति च। विषयाबाध्यत्वे

**वह्निरिव। तथा च व्यवहारदशामात्राबाध्यत्वं देहात्मैक्यसाधारणं परीक्षितप्रमाणे व्यवस्थितमिति कथमत्यन्ताबाध्यत्वाभावग्राहकागमानुमानयोः प्रवृत्तिः न स्यात्? तस्माद्विश्वासप्रमाणतदाभासव्यवस्था जीवेशभेदादिकं च व्यावहारिकमित्युपपन्नमेव सर्वं जगन्मिथ्येति। ननु–प्रत्यक्षाप्रामाण्ये तत्सिद्धस्य व्याप्त्यादेर्बाधेनानुमेयादेः अनुमित्यादिप्रामाण्यस्य च बाधः अनुमेयादेर्व्याप्त्यादिना अनुमितिप्रामाण्यादिना च समानयोगक्षेमत्वात्। अन्यथा प्रातिभासिकव्याप्त्यादिमता बाष्पाध्यस्तधूमेन तात्त्विको व्यावहारिको वाऽग्निः व्यावहारिकव्याप्त्यादिमता धूमेन तात्त्विकोऽग्निः व्यावहारिकेणाबाधेन विरुद्धधर्माधिकरणत्वेन च विश्वस्य**

अन्वितं देशः तत्तद्विषयरूपः। तथाच परीक्षया स्वदेशस्वकालकालीनं[1] प्रामाण्यघटकमबाध्यत्वं व्यवस्थाप्यत इत्यर्थः। **वह्निरिवेति।** यथोदयनादिमते धूमलिङ्गकवह्न्यनुमितौ धूमकालीनवह्निर्विषयः तथा परीक्षालिङ्गकप्रामाण्यघटकाबाध्यत्वानुमितौ परीक्षाकालीनमबाध्यत्वमित्यर्थः। अथवा सजातीयसंवादविसंवादावबाधितविषयकत्वेन निश्चितज्ञानस्य समानविषयकत्वविरुद्धविषयकत्वरूपौ। तत्र बाधितत्वसामान्याभावस्याशक्यग्रहत्वेन उक्तत्वात् तत्तत्कालीनबाधितत्वाभावो निवेश्यः। तथाच तद्घटितेन संवादेन तद्घटितमेवानुमेयम्। न तु बाधितत्वसामान्याभावघटितं, अनुमितिविधेयतावच्छेदकस्यैव व्याप्तिनिरूपकतावच्छेदकत्वात्। व्यभिचर्यमाणत्वादशक्यग्रहत्वाच्च। एवं तत्तत्काले तथा निश्चितं यदद्वैतश्रुत्या जघन्य[2] ज्ञानं तद्विरुद्धविषयकत्वाभावेनाप्युक्तप्रमात्वं अनुमेयं तत्तत्काले दोषत्वेन गृह्यमाणं यत् तदभावेनापि तदेवानुमेयमित्यर्थः। **प्रमाणे** प्रमाणविषये। **व्यावहारिकेणेति।** व्यावहारिकेण अबाधेन विश्वस्य तात्त्विकं सत्त्वम्। व्यावहारिकेण

[1] स्वदेशकालगतं. [2] श्रुत्याद्यजन्यं.

जीवेशभेदस्य च तात्त्विकं सत्त्वं सिद्ध्येत्—इति चेन्न; एतावता हि व्याप्त्यादिसमानसत्ताकमनुमेयं सिद्ध्यत्वित्यापत्तेः फलितोऽर्थः। स चास्माकमिष्ट एव। न हि ब्रह्मभिन्नं क्वचिदत्यन्ताबाध्यमस्ति न चायमनुमेयादेः व्याप्त्यादिना समसत्ताकत्वानियमोऽप्यस्ति; व्यभिचारिणापि लिङ्गेन साध्यवति पक्षे अनुमितिप्रमादर्शनात्, ध्वनिधर्महस्वत्वदीर्घत्वादिविशिष्टत्वेन मिथ्याभूतैरपि नित्यैर्विभुभिर्वर्णैः सत्या शाब्दप्रमितिः क्रियत इति मीमांसकैरभ्युपगमात्, गन्धप्रागभावावच्छिन्ने घटे तात्त्विकव्याप्त्यादिमतापि पृथिवीत्वेनातात्त्विकगन्धानुमितिदर्शनात्, प्रतिबिम्बेन च बिम्बानुमितिदर्शनात्। न च तत्रापि बिम्बरहितावृत्तिरूपा व्याप्तिस्तात्त्विक्येवेति वाच्यम्; एवंसत्यवृत्तिगगना-

---

विरुद्धधर्मवत्त्वेन जीवेशभेदस्य तात्त्विकं सत्त्वमित्यर्थः। वर्णानां ह्रस्वत्वाद्यभावे हेतुः—**नित्यैर्विभुभिरिति**। आकाशादिवत् नित्यैः देशकालानवच्छिन्नैश्चेत्यर्थः। अकारस्य ह्रस्वत्वे सर्वदा सर्वदेशे तथोपलभ्येत, तस्यैकत्वात्। **मिथ्याभूतैः** बाधितत्वयोग्यैः। **क्रियते** प्रयुज्यते वर्णज्ञानत्वेन कारणत्वात्। **अतात्त्विकेति**। विशिष्टघटस्य केवलघटातिरेकात्तत्र गन्धोऽतात्त्विकः, तस्य तदनतिरेके प्रागभावस्य विशेषणत्वात् तत्र कालिकसम्बन्धेन प्रकारीभूतो गन्धोऽतात्त्विकः यदि च गन्धांशे प्रागभाव एव विशेषणमुच्यते, तथापि गन्धे प्रागभावस्येव प्रागभावेऽपि गन्धसंसर्गस्यारोपो वाच्यः; परस्पराध्यासात्। तथा च संसृष्टरूपेणातात्त्विक[1] एव गन्ध इति भावः। ननु–प्रयुक्तत्वं क्षेमसाधारणजन्यता. अन्यथा गगनाभावो बिम्बाभावादिति[2] व्यवह्रियत इत्याशङ्क्य यावतीषु स्वेतरव्यक्तिषु सतीषु यत्सत्त्वे उत्तरक्षणे यत्सत्त्वं तावतीषु सतीष्वपि तदभावे उत्तरक्षणे अवश्यं तदभाव

---

1 तात्त्विक. 2 बिम्बाभाव इति.

देरपि व्याप्यतापत्तेः । न च तत्र बिम्बपूर्वकत्वमेवानुमीयते, बिम्बव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपेणाप्रातिभासिकेन हेतुनेति वाच्यम्; प्रयुक्तत्वं हि न तज्जनकत्वजन्यत्वादिरूपम्; व्यतिरेकयोः परस्परं तदभावात् । किन्तु व्याप्यव्यापकभावः । तथाच बिम्बव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं हेतुः । स चाकाशादौ व्यभिचार्येव । तस्मात्तत्र प्रतिबिम्बेनैव बिम्बानुमानम्; अनुमेयस्य लिङ्गव्याप्त्यादिसमानसत्ताकत्वनियमस्यापास्तत्वात् । एतेन शब्देऽपि योग्यतासमानसत्ताकेन शब्दार्थेन भवितव्यम् । योग्यतावाक्यार्थयोः समानसत्ताकत्वनियमादिति कथं वेदान्तवाक्यार्थयोः समानसत्ताकत्वनियमादिति कथं वेदान्तवाक्यार्थो योग्यताबाधेऽप्यबाधितः स्यादिति परास्तम् । वेदान्तवाक्ये अखण्डार्थरूपवाक्यार्थाबाधरूपायाः योग्यतायाः अप्यबाधाच्च । न च तथापि वेदान्ततद्ज्ञानप्रामाण्यमिथ्यात्वे कथं तात्त्विकाद्वैतसिद्धिरिति वाच्यम्; शब्दतद्ज्ञानतात्त्विकत्वं हि न विषयतात्त्विकत्वे तन्त्रम्; इदं रजतमित्यनाप्तवाक्यस्य तज्जन्यभ्रमस्य च त्वन्मते तात्त्विकत्वेऽपि तद्विषयस्यातात्त्विकत्वात् ।

---

इति रीत्या क्षेमसाधारणजन्यत्वस्य प्रतिबिम्बाभावनिष्ठस्य प्रतिबिम्बघटितत्वेन अतात्त्विकत्वावश्यकत्वात् प्रतिबिम्बेतरभागस्य व्यर्थत्वाच्च । प्रतिबिम्बमेव बिम्बपूर्वकत्वेऽपि तादात्म्येन हेतुरित्याशयेन आह— **तस्मादिति** । अनुमेयमनुमितिविधेयतावच्छेदकं यदिच क्षेमसाधारणं जन्यत्वमखण्डं, तथापि प्रतिबिम्बा[1]भावत्वरूपावच्छेदकमिथ्यात्वात्तदपि मिथ्या, तस्य स्वसमानसत्ताकधर्मावच्छिन्नत्वनियमात् । अतएव शुक्तिरूप्याभावनिष्ठाज्ञानाभावजन्यतापि मिथ्या । चैतन्यस्य तु घटाद्यवच्छिन्नत्वं न स्वाभाविकमिति भावः **तद्ज्ञानेति** । तज्जन्यज्ञानेत्यर्थः । **तन्त्रं**

---

1 प्रतिबिम्ब.

**न च ज्ञानप्रामाण्यस्य मिथ्यात्वे विषयस्यापि मिथ्यात्वं शुक्तिरूप्यज्ञाने दृष्टमितिप्रकृतेऽपिज्ञानप्रामाण्यमिथ्यात्त्वे विषयस्यापि मिथ्यात्वं स्यादिति वाच्यम्; प्रामाण्यमिथ्यात्वं हि न विषयमिथ्यात्वे प्रयोजकम्; भ्रमप्रमाबहिर्भूते निर्विकल्पके विषयबाधाभावात्। किन्तु तद्भाववति तत्प्रकारकत्वादिरूपमप्रामाण्यमेव तथा। तच्च प्रकृते नास्त्येव। न चार्थाबाधरूपप्रामाण्यस्य मिथ्यात्वादर्थस्यापि मिथ्यात्वं स्यादिति वाच्यम्। अबाधितार्थविषयत्वं हि यत् प्रामाण्यं तस्य मिथ्यात्वम्। प्रकृते नार्थाबाधात् तद्बाधकप्रमाणासम्भवात् तस्य सर्वबाधावधित्वात्। किन्तु तद्विषयत्वरूपसम्बन्धबाधात्तथा। तथाचाबाधितार्थविषयत्वरूपप्रामाण्यमिथ्यात्वेऽपि नार्थो मिथ्या। विशिष्टस्यैकांशमिथ्यात्वेऽप्यपरांशसत्यत्वात्, यथा दण्डबाधनिबन्धनदण्डिपुरुषबाधेऽपि पुरुषो न बाधित एवेति॥**

**इति प्रत्यक्षस्योपजीव्यत्वभङ्गः.**

---

समव्यापकम्—**प्रयोजकं** व्याप्यम्। **भ्रमप्रमाबहिर्भूत इति।** तार्किकादिरीत्या स्वमते त्वबाधितविषयकत्वं प्रमात्वं तत्रास्त्येव। नन्वबाधितविषयकत्वरूपं प्रमात्वं यत्र मिथ्या तद्विषयकत्वं मिथ्यात्वव्याप्यमिति शङ्कते—**न चार्थेति। रूपेति।** घटितेत्यर्थः। **सर्वबाधावधित्वात्।** सर्वबाधकप्रमाविषयत्वात्। तद्बाधे तद्दृशप्रमा अनुपपन्नेति भावः। **सत्यत्वादिति।** त्वन्मतेऽपि सर्वदेशकालगताभावस्य सत्यत्वेऽपि तत्प्रतियोगिनः शुक्तिरूप्यादेः मिथ्यात्वादिति भावः। ननु ज्ञानविषयत्वविशिष्ट[1]रूपेण ब्रह्म मिथ्येत्याशङ्क्य, तथापि केवलरूपेण न मिथ्येति सदृष्टान्तमाह—**यथेति।** यत्तु—"अनुमेयं व्याप्त्याादिसमसत्ताकमेव[2]। अन्यथा त्वदनुमेयमिथ्यात्वमतात्त्विकं स्यात्। उक्त-

1 विशिष्टत्व. 2 व्याप्त्याादिविषयाबाधसमसत्ताकमेव.

नियमे व्यभिचारिलिङ्गकप्रमानुमितौ व्यभिचारोक्तिरयुक्ता; व्याप्त्यादिशब्देन विषयाबाधस्योक्तत्वात् । तथाचानुमेयमात्रस्य तत्समसत्ता; अस्त्येवेत्यव्यभिचारात् । गगनस्य व्याप्यत्वापत्तिस्तु इष्टैव; पक्षधर्मताधीविलम्बादेवानुमित्यभावात् । ध्वनिधर्मेत्याद्ययुक्तं; दीर्घत्वादिज्ञानस्यैव कारणत्वात्, तार्किकादिमते दीर्घत्वादेर्वर्णेषु सत्यत्वाच्च[1] । अखण्डवाक्यार्थेत्याद्ययुक्तम्; संसर्गस्यैव वाक्यार्थत्वात् । ज्ञानप्रामाण्यं मिथ्येत्ययुक्तं; मिथ्यात्वानुमितेरपि मिथ्यात्वांशे प्रामाण्ये मिथ्यात्वापत्तेः, जरद्गवादिवाक्यस्यापि मिथ्यात्वांशे प्रमात्वापत्तेश्च । यत्स्वरूपमुपजीव्यते तन्न बाध्यत इत्याद्ययुक्तम्; विषयाबाधस्यातात्त्विकत्वेऽनुमित्यादेरप्रामाण्यापत्तेः । अपेक्षितग्राहित्वमात्रेण चेदुपजीव्यतेत्याद्ययुक्तं; यद्धी प्रमात्वं यद्धीप्रमात्वे प्रयोजकं सा तस्या उपजीव्येत्यत्रादोषात् । प्रयोजकत्वं च योगक्षेमसाधारणम् । तत्र योगांशः स्वरूपसिद्ध्यर्थमित्यनेनोक्तः । क्षेमांशस्तु अपवादनिरासार्थमित्यनेनेति । परीक्षया स्वसमानदेशकालीनो विषयाबाधः सिद्ध्यतीत्याद्ययुक्तम्; मिथ्यात्वानुमितेः स्वदेशकालयोरपि घटादिनिषेधविषयकत्वेन उपजीव्यविरोधापारिहारात् । मिथ्यात्वप्रमाणेन घटादिस्वरूपस्यापि बाध्यमानत्वेन धर्मिग्राहकमानबाधात्" इत्यादि पलपितं, तन्न; मिथ्यात्वस्यातात्त्विकस्यैवानुमेयत्वात् । व्याप्त्यादिपदेन विषयाबाधोक्तिस्तु तवैवोचिता; प्रतिवादिना विचारे आधुनिकलक्षणया पण्डितेन शब्दाप्रयोगात् । विषयाबाधशब्दं प्रायः त्वद्गुरुः प्रस्मृतवान् । अन्यथा शतवारं व्याप्त्यादीति लाक्षणिकशब्दं न ब्रूयात् । किंच विषयाबाधरूपप्रामाण्यमिथ्यात्वे विषयो मिथ्या स्यादिति पश्चात् शङ्कितवान् । तदपि प्रायः विस्मृत्या । अन्यथा पूर्वोक्तं वदन्नुन्मत्तकल्पः स्यात् । अपि च विषयाबाधसमसत्ताकमनुमेयमस्मत्सम्मतमेव । गगनादेर्व्याप्यत्वं तु न युक्तम् । यद्यपि हि गगनादेरवृत्तित्वधीकाले व्याप्यतया

[1] असत्यत्वाच्च.

गगनादिप्रकारकधीः पक्षे न जायते । तत्रावृत्तत्वधीः या तस्याः तत्प्रकारकधीविरोधित्वस्य क्लृप्तत्वात् । तथापि व्याप्यगगनादिविशेष्यक-पक्षप्रकारकज्ञानादनुमित्युपपत्तिः । न च तद्वारणाय व्याप्यप्रकारकधीरेवानुमितिहेतुर्वाच्येति वाच्यम्; व्याप्यापेक्षया पक्षस्य लघुत्वेन पक्ष-प्रकारकनिश्चयत्वेनैव हेतुत्वात् । अन्यथा गुरुभूतव्याप्याभावाप्रकार-त्वादिगर्भनिश्चयत्वेन हेतुत्वे गौरवात्, अवृत्तित्वज्ञानाभावकाले व्याप्य-प्रकारकज्ञानसामग्र्या असत्त्वे गगनादिव्याप्यविशेष्यकज्ञानादनुमितेरप-लापापत्तेश्च । न च व्याप्यगगनादिविशेष्यकज्ञानादनुमितिरिष्टेति वाच्यम्; अवृत्तित्वेन ज्ञायमानहेतुकानुमितिस्वीकारे सर्वत्रैव गगनादिहेतुकानुमि-त्यापत्तेः । साध्याभाववद्वृत्तित्वरूपव्यभिचारज्ञानासम्भवात् । अपिच पक्ष-धर्मतापि गगनादौ कुतो न ज्ञायते? अवृत्तित्वाधियः प्रतिबन्धकत्वा-दिति चेन्न; तादृशधीसत्त्वेपि गगनीयो घट इत्यादिधीदर्शनात् तस्या-सम्भवात्; अन्यथा वृत्तिमत्त्वसामान्याभावधीः तत्प्रकारकज्ञान इव स्वामित्वादिसम्बन्धो धनादिवृत्त्यनवच्छेदक इति धीरप्यौचित्येन तत्सम्बन्धेन धनादिप्रकारकज्ञाने प्रतिबन्धिका स्यात् । तथाच तत्काले धनादिलिङ्गकानुमितिलोपापत्तिः । किंचोक्तव्याप्त्यादरे गग-नादौ जगद्व्याप्यत्वं व्यवह्रियेत । इष्टापत्तौ च अनुभवविरोधः । अत-एव गगनादौ व्याप्यत्वमुक्त्वा वृत्तिमत्त्वं हि विशेषणमिति दीधित्यादा-वुक्तम् । ध्वनिधर्मेत्यादि युक्तं; दीर्घत्वादेर्ज्ञानस्य कारणत्वेऽपि यथा कारणीभूतधीविषयदीर्घत्वादिविषय[1]सत्ताकं शाब्दबोधस्य विषयप्रामा-ण्यम्, तथा व्याप्त्यादिविषयसत्ताक[2]मनुमेयादीत्यत्र तात्पर्ये बाध-काभावात् । मीमांसकमते दृष्टान्ते तार्किकोक्तिस्तु शोभते । वेदान्त-वाक्ये ससर्गो नार्थ इति तु वक्ष्यते । मिथ्यात्वानुमितिप्रामाण्यस्य व्याव-हारिकत्वात् मिथ्यात्वमिष्टमेव । जरद्गवादिवाक्यस्य मिथ्यात्वप्रामाण्यं

---

[1] विषम. [2] मसत्ताक.

## प्रत्यक्षस्यानुमानबाध्यत्वविचारः

**किञ्च विपक्षबाधकसाचिवमनुमानमपि प्रत्यक्षबाधकम्। नन्वेवमपि "औदुम्बरीं स्पृष्ट्वोद्गायेत्," ऐन्द्र्या गार्हपत्यमुपतिष्ठते, शरमयं बर्हिर्भवति" इति श्रुतित्रयग्राहि प्रत्यक्षं यथाक्रमं 'औदुम्बरी सर्वा वैष्टयितव्या' इति स्मृतिरूपेण**

न व्यावहारिकम्। यत्स्वरूपमित्यादिकं युक्तमेव; अनुमित्यादेस्तात्त्विकप्रामाण्याभावस्येष्टत्वात्। स्वरूपसिद्ध्यर्थमित्यादेः अर्थवर्णनं तु शोभते; अनुभवादिप्रामाण्यस्य स्मृत्यादिप्रामाण्यं प्रति योगक्षेमसाधारणकारणत्वे मानाभावात्, अस्मदुक्तरीत्या स्वरूपसिद्ध्यादिशब्दार्थसम्भवात्। परीक्षयेत्याद्यपि युक्तम्; मिथ्यात्वानुमितेः घटादिनिषेधस्य बोधक[1]त्वेऽपि तस्य तात्त्विकत्वेन अतात्त्विकघटादिस्वरूपज्ञानस्य उपजीव्यस्याविरोधात्, घटादिदेशकालयोस्तत्समानसत्ताकतन्निषेधबोधन एव[2] विरोधात्। अन्यथा रूप्यादिमिथ्यात्वबोधेऽपि तदापत्तेः। मिथ्यात्वग्राहकमानेन घटादिज्ञानस्योपजीव्यत्वेऽपि तदीयतात्त्विकप्रामाण्यस्य अनुपजीव्यत्वात्, उपजीव्यस्यापि परीक्षितस्यैव प्राबल्यात्। परीक्षायाः[3] स्वसमानकालीनाबाध्यमात्रव्यवस्थापकत्वस्य त्वदीयरोदनसहस्रेणाप्यपरिहारादिति। तस्माद्यत्किञ्चिदेव प्रलपन् स्वकीयानामेव मान्योऽसि॥

सारस्वतैस्तर्करत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तखण्डानामखण्ड्यक्षोपजीव्यता॥

इति प्रत्यक्षस्योपजीव्यत्वभङ्गः.

---

**औदम्बरीम्**। उदुम्बरवृक्षविकाररूपां स्थूणाम्। **ऐन्द्र्येति**। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यादिकृचेत्यर्थः। **गार्हपत्यं** त्रेतान्तर्गतमग्निविशेषम्। **वेष्टनश्रुत्यनुमानेनेति**। ज्ञाय-

---

[1] बाधक. [2] तन्निषेधत एव. [3] परीक्षया.

**सर्ववेष्टनश्रुत्यनुमानेन 'कदाचन स्तरीरसि नैन्द्र सश्चसि दाशुषे' इति मन्त्रसामर्थ्यलक्षणेन इन्द्रशेषत्वश्रुत्यनुमानेन चोदनालिङ्ग-**

---

मानहेतोः अनुमानत्वमते। हेतुज्ञानस्यानुमानत्त्वमतेतु **स्मृतिरूपेणेत्यस्य।** स्मृतिविषयकेणेत्यर्थः । औदुम्बरीसर्ववेष्टनस्मृतिः तादृशश्रुतिमूलिका, बाधकाभावे सति शिष्टपरिगृहीतस्मृतित्वात्; या बाधकाभावे सति यदर्थक शिष्टपरिगृहीतस्मृतिः, सा तदर्थकश्रुतिमूलिका, यथा प्रत्यक्षश्रुतिमूलकस्मृतिरित्यनुमानरीतिः । **नेन्द्रेत्यादि** । कदाचनेत्यादिमन्त्रगतेनेन्द्रेत्यादिभागस्थेन्द्रादिपदानामिन्द्रादिप्रकाशनसामर्थ्यलक्षणेनेत्यर्थः । **शेषत्वश्रुतीति।** उक्तमन्त्रस्य उक्तसामर्थ्यम् उक्तमन्त्रस्य इन्द्रशेषत्वबोधकश्रुतियुक्तम्, उक्तसामर्थ्यत्वात्; यद्यन्निष्ठं यदर्थप्रकाशनसामर्थ्यं तत्तन्निष्ठस्य तदर्थप्रकाशनशेषत्वस्य बोधकश्रुतियुक्तं, प्रत्यक्षश्रुतिविनियुक्तमन्त्रसामर्थ्यवदिति बोध्यत् । **चोदनालिङ्गेति** । विधिवाक्यसादृश्येत्यर्थः । सोमारौद्रश्चरुः श्रुतिबोधितकुशबर्हिश्शेषताकः; तादृशापौर्णमाससदृशचोदनाकत्वात्, यद्यच्छ्रुतिबोधितयच्छेषताकयदीयचोदनासदृशचोदनाकं तत्तच्छ्रुतिबोधिततच्छेषताकं, यथा 'यद्ब्राह्मणानि पञ्च हवींषि तद्ब्राह्मणानीतराणि समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनातिदेशबोधितशेषताकमिति सामान्यतोऽनुमानं बोध्यम्। सादृश्यं च निर्वपतिधातुद्विदैवत्यत्वादिघटितं बोध्यम्। अधिकरणं तु लिख्यते प्रथमतृतीये चिन्तितं—ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये औदुम्बरी निखन्य स्थाप्यते। तस्याः सर्ववेष्टनं 'सर्वा औदुम्बरी वेष्टयितव्या' इति स्मृत्या विहितं "औदुम्बरीं स्पृष्ट्वोद्गायेद्" इति प्रत्यक्षश्रुत्या च तस्याः स्पर्शनं विहितम्। तदेवं प्रत्यक्षश्रुतिविरुद्धार्था-स्मृतिः प्रमाणं न वेति संशये शिष्टप्रणीतस्मृतित्वादविरुद्धार्थकस्मृतिवत् श्रुतिमूलकत्वसम्भवात् प्रमाणमेव सा । श्रुतिविरुद्धार्थकत्वेऽपि व्रीहियवादिश्रुतिवत्तन्मूलश्रुतेरुपपत्तेः। न चैवं श्रुतिलिङ्गादिषु पूर्वपूर्वेणो-

त्तरोत्तरबाधो न स्यादिति वाच्यम्; तेषु पूर्वेणाकाङ्क्षित्वे बोधिते तदाकांक्षोच्छेदेनोत्तराप्रवृत्तावपि प्रकृतस्मृतेः स्वमूलश्रुत्याकांक्षायाः प्रत्यक्षस्मृत्योच्छेदाभावेन तदनुमानसम्भवादिति प्राप्ते, कारणान्तरसत्त्वेऽपि जिज्ञासां विना अनुमित्यादेरनुत्पत्त्या परोक्षज्ञानमात्रे अनुमित्यर्थापत्त्योर्वा जिज्ञासा हेतुः । अतो वेष्टितत्वाभावेन स्पर्शश्रुतिलब्धेनौदुम्बर्याः परिच्छिन्नत्वात् वेष्टनजिज्ञासाविरहेण वेष्टनस्मृत्या न मूलीभूतश्रुत्यनुमितिः । किंच व्रीहियवादिशास्त्रयोस्तुल्यबलत्वेन विकल्पसम्भवाद्विरोधपरिहारेऽपि प्रकृते अनुमेयश्रुतेः सापेक्षत्वकल्प्यत्वादिना दुर्बलत्वान्न तथेति सा न प्रमाणम् । न च वस्त्रस्पर्शने स्पर्शश्रुत्यर्थसिद्धिः सम्भवतीति वाच्यम्; स्पार्शनप्रत्यक्षस्य स्पृशधात्वर्थत्वात्, वेष्टिते तु त्वक्संयोगाभावेन तदसम्भवात् । एवं प्रत्यक्षश्रुत्यविरुद्धायामपि यस्यां स्मृतौ लोभादिदृष्टमूलत्वसम्भवः साऽप्यप्रमाणम्। यथा 'वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णाति, यूपहस्तिनो दानमाचरन्ति' इति । यूपहस्ती यूपपरिव्यानवस्त्रम् । अत एव 'अपिवा कारणाग्रहणे प्रयुक्तानि' इत्यत्र लोभादिदृष्टकारणासम्भव एवाचारे श्रुतिमूलकत्वं वक्ष्यत इति भाष्यम् । नेदं युक्तम् । तथाहि— प्रत्यक्षश्रुतिविरोधे स्मृतिमूलश्रुतेः अभावः साधकाभावात्, बाधकाद्वा । नाद्यः; मन्वादिस्मृताविव शिष्टपरिग्रहादेः साधकत्वात्, जिज्ञासां विनाऽप्यनुमित्यादिदर्शनेन तस्या असाधकत्वात्, अवेष्टितत्वेनौदुम्बर्याः परिच्छेदेऽपि स्मृते मूलजिज्ञासासम्भवाच्च । नान्त्यः; बाधकं हि स्पर्शश्रुतिर्वा, वेष्टनश्रुत्यदर्शनं वा । नाद्यः; व्रीहियवादिवत्तदुपपत्तेः । नान्त्यः; मन्वादीनां तद्दर्शनसम्भवात् । किञ्च उक्तस्मृतिमूलश्रुतिः प्रत्यक्षैव 'तामूर्ध्वदेशेन परिवेष्टयति' इति साङ्ख्यायन[1]शाखाम्नानादित्युदाहरणमपि दुर्लभम् । अपिच स्मृतेरु-

[1] साङ्ख्यायनि.

द्रातृस्पर्शविषयमध्यमोत्तरभागान्यभागविषयकत्वेनाप्युपपत्तेः न स्पर्श-श्रुतिविरोधः। एवं शिष्टपरिगृहीतस्मृतेर्लोभादिमूलकत्वे मन्वादिस्मृतेरपि तदापत्तिः। 'अपिवा कारणाग्रहणे' इत्यादि वक्ष्यमाणाधिकरणे तु शिष्टपरिग्रह एव मुख्यहेतुः। दृष्टमूलासम्भवस्त्वन्वाचयमात्रम्। तस्मात् प्रत्यक्षश्रुतिविरुद्धस्मृतिमूलश्रुतिर्यद्यपि परप्रत्यक्षा सम्भवति। परप्रत्यक्षं च आत्मप्रत्यक्षतुल्यमेवेति सा स्मृतिः प्रमाणमेव। तथापि सा श्रुतिः यावन्न स्वप्रत्यक्षा तावत्प्रत्यक्षश्रुत्यर्थ एवानुष्ठेयो न तु तादृशस्मृत्यर्थः; अर्थवादादिना विधिमुन्नीयापि स्मृतिं प्रमाणयन्ति यथा स कृताकृत इत्यादिः सवनीयपुरोडाशविकल्पबोधकस्मृतिः। सा हि सवनीयपशौ देवतासंस्कारार्थ-प्राकृतपशुपुरोडाशस्य सोमं प्रत्यारादुपकारकसवनीयपुरोडाशस्य च छिद्रापिधानार्थत्वमर्थवादाभ्यां भ्रान्त्या रचिता। अत एव "सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यात् अन्येषामेवमर्थत्वात्" इति तादृशद्वितीयस्थाधिकरणे छिद्रापिधानरूपैकार्थत्वे विकल्पमाशङ्क्य निराकृतम्। "सुषिरो ह वा एतर्हि पशुर्यर्हि वपामुत्खिदातीति यद्व्रीहिमयः पुरोडाशो भवति अपिहित्या अछिद्रतायै, अनुसवनं सवनीया पुरोडाशा निरूप्यन्ते अपिहित्या अछिद्रतायै" इत्यर्थवादयोः स्तुति मात्रपरत्वेन उक्तैकार्थत्वाप्रापकत्वात्। तथाच तद्वदेव यद्यर्थवादाद्युन्नतिः विधिमूला स्मृतिः, तथा प्रत्यक्षश्रुतिसन्नद्याययोः विरोधे अर्थवादन्याया-भासादिमूलकस्मृतेरप्रामाण्यात् सा न प्रमाणमिति शङ्कासम्भवात्। एवंच 'विरोधेत्वनपेक्षं स्यादसति ह्यनुमानम्, इति सूत्रे अनपेक्षं उक्त-शङ्कानिरासकानपेक्षं प्रत्यक्षश्रुतिचोदितमनुष्ठेयं स्यात्। असति उक्त-शङ्काबीजे हि अनुमानं प्रत्यक्षश्रुत्यविरुद्धश्रुत्यनुमापकस्मृतिबोधितमनुष्ठेय-मित्यर्थः। एवमाशङ्क्यमाने प्रत्यक्षश्रुत्यविरुद्धस्मृतावपि तथा शङ्क्येत। तस्माच्छाक्यादीनां त्रयीबाह्यानामपि त्रयीप्रोक्ताहिंसादिधर्मवक्तृत्वेन क्षत्रि-

**रूपेण कुशश्रुत्यनुमानेन च बाध्यत इति सर्वमीमांसा उन्मृदिता स्यादिति चेन्न; वैषम्यात् । तथाहि—किमिदमापाद्यते श्रुतित्रयग्राहिप्रत्यक्षं ? अनुमानैः बाध्येतेति वा ? प्रत्यक्षविषयीभूतश्रुतित्रयमिति वा नाद्यः; विरोधाभावेन तद्बा-**

यत्वप्रसिद्ध्या च शिष्टत्वशङ्कया तदीयस्मृतेरपि वेदमूलकत्वमिति प्राप्ते, तेषामशिष्टत्वेन त्रयीतद्विदोः प्रसिद्धेः शिष्टैस्त्रैवर्णिकानां धर्मतया परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् वेदाप्रामाण्यवादिभिरेव तत्परिग्रहाच्च न सा प्रमाणम् । सूत्रं तु तथा व्याख्येयमिति वार्तिकम् । तदेवं सापेक्षत्वात कल्प्यश्रुतिमूलकत्वाच्च निरपेक्षक्लृप्तश्रुत्यपेक्षया दौर्बल्यात् तद्विरुद्धार्थकस्मृतिरप्रमाणमिति भाष्ये उक्तम् । वार्तिके तु स्वपरप्रत्यक्षयोः श्रुत्योः तुल्यत्वेन तादृशस्मृतेः प्रमाणत्वेप्युक्तशङ्कया तदर्थाननुष्ठानमुक्तम्; शिष्टपरिगृहीततादृशस्मृतावुक्तशङ्काया अप्यसम्भवात्, पश्चाद्वर्णकान्तरमुक्तम् । अनुमानाद्यपेक्षया प्रत्यक्षस्य तत्त्वेन प्राबल्यं तु न कुत्राप्युक्तम् । तथाप्युक्ताधिकरणे तदुक्तमिति भ्रान्त्या प्रत्यक्षापेक्षया अनुमानबलत्वे उक्ताधिकरणविरोधः स्यादित्याशयेन परेण वेष्टनश्रुत्यनुमानेनेत्युक्तम्[1] । यद्यपि सामर्थ्यरूपालिङ्गापेक्षया श्रुतेः प्राबल्यं तत्प्रवृत्तिपूर्वमाकांक्षोच्छेदकत्वात् । न तु प्रत्यक्षविषयत्वात्प्रत्यक्षविषयलिङ्गादीनामपि, वाक्याद्यपेक्षया प्राबल्यात् । अतएव 'पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रोक्तोच्छेदकत्वं हेतूकृतम् । तथाच श्रुत्यपेक्षया लिङ्गस्य तथा प्राबल्यं न शङ्कास्पदम् । तथापि प्रत्यक्षविषयत्वात् तत्प्राबल्यमिति भ्रान्त्या शेषत्व[2]श्रुत्यनुमानेनेत्याशङ्कितं परेणेति चोध्यम् । श्रुतिलिङ्गविरोधस्तु पूर्वमेवोदाहृतः । चोदनेति । 'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति विहितेष्टौ 'शरमयं बर्हिः' इति श्रुताश्शराः चोदकेन प्राप्तयहं कुशमयबर्हिः बाधन्ते

1 त्यनुमानेनाप्युक्तम् .  2 शेष.

न वेति संशये न बाधन्ते, पाषाणमयी भूरित्यत्रेवमयटा बहुशर-संयोगमात्रस्य प्राकृतकुशबर्हिषि विधानसम्भवात् । बर्हिःकार्योद्देशेन शरविधाने मयटो वैयर्थ्यापत्तेः, बर्हिः पदे लक्षणापत्तेश्चेति प्राप्ते, उक्त-संयोगविधानस्य अदृष्टार्थत्वापत्तेः दृष्टं स्तरणरूपं बर्हिःकार्यमुद्दिश्यशरा विधीयन्ते बर्हिःपदस्योद्देशवाचकत्वेन तवापि मते तत्रापूर्वसाधन-लक्षणावश्यकत्वेन मन्मते उक्तकार्यद्वाराऽपूर्वसाधनलक्षणायास्तत्रादोष-त्वात् । मयट्श्रुतिस्तु स्थानापत्त्यतिदेशप्राप्तलवनादिसंस्कारविशिष्टस्य शरविकारद्रव्यस्यानुवादः । न च चोदकेन कुशतत्कार्ययोः पूर्वं प्राप्ततयानुवादः । न च चोदकेन कुशतत्कार्ययोः पूर्वं प्राप्ततया पश्चात् स्वमात्रा[1]कांक्षयाऽन्वयभाजां शराणां कुश[2]विरोधेनैव अन्वयौ चित्यात् कुशाभावे प्रतिनिधित्वेन अन्वयोपपत्तेः न शराणां कुशबा-धकत्वमिति वाच्यम्; पदार्थविशिष्टोपकारविषयिण्याकांक्षया पदार्थ विशिष्टोपकारस्यातिदेशपक्षे तस्य शरविधिपर्यालोचनेन पदार्था[3]विशेषितो-पकारविषयकत्वकल्पनात् । अन्यथा शरविध्यानर्थक्यात् विकृत्याकांक्ष-यैव शराणां ग्रहणमिति कुशप्राप्तेरेवाभावात् तार्किकप्राप्त्या च प्राप्त-बाधव्यवहारः । अथवा उपकारस्यैव प्रथममाकांक्षयाऽतिदेशः पदार्थस्य पश्चात् । अतः पदार्थाकांक्षायां शरविधिनैव तच्छान्तेः न कुशाति-देश इति दशमचतुर्थे 'चोदनालिङ्गसंयोगेन तद्विकारः प्रतीयते' इत्यधि-करणे स्थितम् । चोदनाया लिङ्गं[4] निर्वपतियजत्यादिधातुः । अष्टाक-पालादिसङ्ख्या एकद्विदैवत्यत्वादिसम्बन्धघटितसादृश्येन तद्विकारः पौर्ण-मासधर्मकुशाद्यतिदेशे इति पूर्वपक्षसूत्रार्थः । अत्रापि क्लृप्तत्वनिरव-काशत्वादिना शरादिशास्त्रं कल्प्यसावकाशादिरूपकुशाद्यतिदेशापेक्षया प्रबलम् । न तु प्रत्यक्षविषयत्वेन, प्रत्यक्षाविषयस्यापि वैकृतमन्त्रलिङ्गादि-कल्प्यश्रुतेः प्राकृतमन्त्रादिप्रापकातिदेशबाधकत्वात् । तथाच प्रत्यक्षत्वेन

[1] अङ्गमात्रा. [2] कुशा. [3] पदार्थो. [4] चोदनालिङ्गं.

**ध्यबाधकभावस्य शास्त्रार्थत्वाभावात् अस्माभिरनभ्युपगमाच्च अनुक्तोपालम्भमात्रत्वेन निरनुयोज्यानुयोगापत्तेः । अतएव न द्वितीयः; प्रत्यक्षविषयीभूतश्रुतित्रयस्य लिङ्गबाधकत्वपरेऽपि शास्त्रे प्रत्यक्षस्य लिङ्गबाध्यत्वे विरोधाभावात् । न हि शब्द-प्रत्यक्षयोरैक्यमस्ति । शब्दस्य च सर्वप्रमाणापेक्षया बलवत्त्व-मवोचाम । तस्मात् मौढ्यमात्रमेतन्मीमांसाविरोधोद्भावनम् ॥**

---

दुर्बलत्वस्वीकारेऽपि प्रत्यक्षाविषयस्य शरादिशास्त्रस्य अनुमानरूपातिदेश-बाध्यत्वे आनर्थक्यापत्त्या 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इत्यादिन्यायेन अनुमानस्यैव बाध्यत्वम् प्रपञ्चसत्वप्रत्यक्षस्य तु त्रिकाला-बाध्यत्वरूपसत्ता[1]ग्राहित्वस्य उक्तत्वात्, व्यावहारिकसत्वाधिष्ठानसत्व-विषयकत्वेन सावकाशत्वाच्च । नोक्तन्यायेनानुमानबाधकत्वमिति । तथा-प्यनुमानत्वेनोक्ताधिकरणे प्रत्यक्षबाध्यतोक्तेति भ्रान्त्या कुशश्रुत्यनुमाने-नेत्यादि परेणाशङ्कितमिति ध्येयम् ॥

ननु प्रत्यक्षविषयकश्रुतेर्विरुद्धविषयकत्वात् प्रत्यक्षस्यापि तदि-त्यत आह—**अस्माभिरिति** । विरुद्धविषयकप्रमाणविषयकप्रत्यक्षे अनुमानबाध्यत्वस्येति शेषः । साक्षादनुमानविरुद्धार्थविषयकप्रत्यक्षस्यै-वानुमानबाध्यत्वस्य श्रुतेरन्यमानापेक्षया बलवत्त्वस्य चास्माभिः स्वीका-रात् स्वविषयश्रुतिद्वारा विरुद्धविषयकप्रत्यक्षस्य नानुमानापेक्षया दौर्बल्य-मस्मत्सम्मतमिति भावः । **मौढ्येति** । यत्तु—'श्रुतित्रयग्राहिप्रत्यक्षं बाध्येतेत्यापत्तिर्युक्ता प्रत्यक्षविषयश्रुतिः स्वविषयस्पर्शोपपादिका सर्व-वेष्टनादि बोधयति । अनुमानं तु सर्ववेष्टनादिति[2] विषयीभूतश्रुतिद्वारा प्रत्यक्षस्य विरुद्धविषयकत्वात् श्रुतित्रयं बाध्येतेत्यापत्तिरपि युक्ता; प्रत्यक्षविषयत्वेन हि श्रुतित्रयं बाधकं, न श्रुतित्वेन; अनुमितश्रुतेरपि प्रत्यक्षश्रुतिबाधकत्वापत्तेः' इति प्रलपितम्, तत् उक्तव्याख्याने निरव-

---

[1] रूपसत्त्वा. [2] वेष्टनादीति.

**ननु प्रत्यक्षस्य लिङ्गबाध्यते वह्न्यौष्ण्यप्रत्यक्षं शैत्यानुमानस्यात्मस्थायित्वप्रत्यभिज्ञानं च क्षणिकत्वानुमानस्य बाधकं न स्यात्। प्रत्युतानुमानमेव तयोर्बाधकं स्यादिति चेन्न; अर्थक्रियासंवादेन श्रुत्यनुग्रहेण च तत्र प्रत्यक्षयोः प्राबल्येनानुमानबाधकत्वात्। अपरीक्षितप्रत्यक्षं हि परीक्षितानुमानापेक्षया**

---

काशम्। स्वविषयश्रुतिद्वारा विरुद्धविषयकप्रत्यक्षस्यास्माभिरनुमानबाध्यत्वास्वीकारात् प्रत्यक्षविषयत्वेन श्रुतिर्बाधिका; वैकृतमन्त्रलिङ्गादिकल्प्यश्रुतेरतिदेशा[1]बाधकत्वापत्तेः। किन्तु निरवकाशत्वादिनेत्युक्तम्। अनुमितश्रुतेः प्रत्यक्षश्रुतिबाधकत्वापत्तिस्तु शोभते; उभयोः श्रुतित्वाविशेषात् बाध्यबाधकत्वानुपपत्तेः। किञ्च अनुमित[2]श्रुत्यपेक्षया प्राबल्यं प्रत्यक्षविषय[3]श्रुतित्वेन प्रकृते कथम्? प्रत्यक्षश्रुतेः स्वविषयस्पर्शनं सर्व[4] वेष्टनं विनानुपपन्नमित्यर्थापत्तिस्वरूपस्योत्थापनीयमानद्वारा अनुमेयश्रुतिविरुद्धविषयकत्वात् साक्षात् तत्प्रतिबन्धा[5]क्षमत्वात्। प्रत्युत प्रत्यक्षश्रुतिकल्प्यार्थापत्त्यपेक्षया अनुमानकल्प्यश्रुतिरेव प्रबला स्यात्, श्रुतित्वात्, कल्पकप्रमाणयोः बलाबलापेक्षया कल्प्यरूपप्रमेयबलाबलस्य प्रबलत्वात्। अथापि केनचिद्विशेषेणप्रमाणबलाबलमेव ग्राह्यम्; तथापि श्रुतित्वेनैव श्रुतिः प्रबला सम्भवत्यनुमानापेक्षयेति प्रत्यक्षविषयत्वविशेषणं व्यर्थमेवेति ध्येयम्-- **अर्थक्रियेति**। दाहादिकार्येत्यर्थः। श्रुत्यनुग्रहेण 'अजो नित्यः' इत्यादिश्रुत्यनुग्रहेण। यत्तु—"फलपर्यन्तपरीक्षाया जगत्सत्यत्वबोधकश्रुत्यनुग्रहस्य च सन् घट इत्यादिप्रत्यक्षेपि सम्भवात् तस्यापि औष्ण्यादिप्रत्यक्षवदनुमानापेक्षया प्राबल्यमुचितम्। किंच त्वन्मतेअस्तीत्येवोपलब्धव्यः' इत्यादेरप्यखण्डार्थत्वेनात्मनि स्थायित्वसंसर्गप्रमित्यसम्भवः। अयोग्यशृङ्गेत्यादि न युक्तम्। शृङ्गस्य योग्यत्वानियमात्, शृङ्गानुमानं प्रति प्रत्यक्षबाधोद्भावनसम्भवात्।

---

[1] रतिदेश. [2] अनुमेय. [3] प्रत्यक्षश्रुतिविषय. [4] सर्वा. [5] साक्षात्प्रतिबन्धा.

दुर्बलम्! 'नीलं नभः' इति प्रत्यक्षमिव नभोनिरूपत्वानुमानापेक्षया अतो न सामान्यतो दृष्टमात्रेण सर्वसङ्करापत्तिः। नन्वेवं पशुत्वेन शृङ्गानुमानमपि स्यात्। लाघवात् पशुत्वमेव शृङ्गवत्त्वे तन्त्रम्। न तु तद्विशेषगोत्वादिकम्, अननुगतत्वेन गौरवादित्येतत्तर्कसध्रीचीनत्वेन प्रत्यक्षापेक्षया प्राबल्यात्। अनुकूलतर्कसाचिव्यमेव हि अनुमाने बलम्। एवंच येनकेनचित्सामान्यधर्मेण सर्वत्र यत्किञ्चिदनुमेयम्, लाघवतर्कसाचिव्यस्य सत्त्वात्। तावतैव प्रत्यक्षबाधकत्वादिति व्यावहारिक्यपि व्यवस्था न स्यात्। न ह्यत्र प्रत्यक्षबाधादन्यो दोषोस्तीति चेन्न; अयोग्यशृङ्गादिसाधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्केष्वाभासत्वस्य त्वयापि वक्तव्यत्वेन व्यव-

---

अन्यथा शैत्यस्याप्ययोग्यस्य सम्भवेन तदनुमाने प्रत्यक्षबाधोद्भावनानुपपत्तेः" इति, तत्तुच्छम्; व्यावहारिकपरीक्षया तात्त्विकत्वासिद्धेरनुपदमुक्तत्वात्, जगत्सत्यत्वश्रुतेरन्यपरत्वादेः वक्ष्यमाणत्वात्तात्त्विकत्वाविषयकत्वात् 'अस्तीत्येवोपलब्धव्यः, अजो नित्यः' इत्यादीनामखण्डार्थत्वेऽपि नित्यत्वाद्युपाधिपरामर्शपूर्वक[1]खण्डप्रमितेरेव अनित्यत्वादिभ्रमनिवर्तकत्वसम्भवात्, सामग्रीविशेषजन्यज्ञानस्यैव विजातीत्यवेन उक्तभ्रमनिवर्तकत्वं[2] न तु नित्यत्त्वादिसंसर्गविषयकत्वादिना गौरवादित्यस्मत्सिद्धान्तस्य त्वादृशैः दुर्बोधत्वात्। शृङ्गयोग्यतानियमस्तु शृङ्गिणामेव युक्तः; पिशाचादिशरीरस्येव शृङ्गिशरीरस्यापि अनुद्भूतरूपस्य सम्भवेन तदीयशृङ्गस्य तादृशत्वेन अयोग्यत्वसम्भवात्, तदसम्भवेऽपि तादृशशृङ्गत्वेन सान्दिग्धस्यानुमानसम्भवाच्च। अयोग्यशैत्यस्य वह्न्यादावनुमाने प्रत्यक्षबाधो नोद्भाव्यत एव, किन्त्वप्रयोजकत्वमेव व्याप्तिग्राहकतर्काभावरूपमिति। अत्र नभसि नैल्यप्रत्यक्षस्य नलिरूप[3]त्वानुमा-

---

[1] मर्शकापूर्व.   [2] निवर्तकत्वात्.   [3] नीरूप.

स्थाया उभयसमाधेयत्वात् । न हि तर्काभाससध्रीचीनमनुमानं प्रमाणमिति केनाप्यभ्युपेयते । अत उपपन्नं सत्तर्कसचिवमनुमानं प्रत्यक्षस्य बाधकमिति ॥

इति प्रत्यक्षस्यानुमानबाध्यत्वासिद्धिः

---

## आगमबाध्यत्वविचारः.

किञ्च परीक्षितप्रमाणभावशब्दबाध्यमपि प्रत्यक्षम् । ननु प्रत्यक्षं यदि शब्दबाध्यं स्यात् तदा जैमिनिना 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः' इत्यद्यार्थवादस्य 'अदितिर्द्यौः' इत्यादिमन्त्रस्य च दृष्टविरोधेनाप्रामाण्ये प्राप्ते 'गुणवादस्तु' 'गुणादविप्रतिषेधः स्यात्' इत्यादिना गौणार्थता नोच्येत ।

---

नेन बाध्यत्वं यन्मूले उक्तं तत् तज्जन्यमिथ्यात्वधीविषयविषयकत्वम् । यदि तु प्रमात्वेनैव अभानापादकाज्ञानं प्रत्यपि निवर्तकता, दोषविशेषाणां प्रतिबन्धकत्वात् न चन्द्रप्रादेशिकत्वादिभ्रमनिवृत्तिः । ज्ञाननिवर्त्यत्वरूपमिथ्यात्वलक्षणे साक्षात्कारत्वेन आचार्याणां दृश्यनिवर्तकतोक्तिस्तु नैतन्मते तदा तज्जन्याप्रमाजन्याज्ञाननिवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वमेव । तदेवं शब्दबाध्यत्वं वक्ष्यमाणं बोध्यम् ॥

तर्कैः सारस्वतै रत्नैः चन्द्रिकाचन्द्रभूषणैः ।
दुरन्धध्वान्तहन्त्रीयमनुमित्याऽक्षबाध्यता ॥

इति प्रत्यक्षस्यानुमानबाध्यत्वम्.

---

तस्माद्धूम इत्यादि । तस्मादित्याद्यर्थवादस्य 'गुणवादस्तु' इति सूत्रेण 'अदितिः' इत्यादिमन्त्रस्य च 'गुणादपि प्रतिषेधः' इति सूत्रेण गौणार्थता सिद्धान्तत्वेन नोच्येतेत्यर्थः । दृष्टविरोधेनेति ।

प्रथमद्वितीये अर्थवादाधिकरणे 'वायुर्वै क्षेपिष्ठा' इत्यादेः धर्मप्रमानुत्पादकत्वं स्वार्थेचानुवादकत्वमित्येतावन्मात्रं 'स्तेनं मनोऽनृतवादिनी वाक्' इत्यादौ मनस्स्तेनत्वस्य वागनृतमात्रवादिनीत्वस्य च बाधितत्वात् मनः स्तेनसदृशं वागनृतप्रायवादिनीत्यर्थो वाच्यः । तथाच अनुवादत्वापत्त्या विधिकल्पकत्वं वाच्यम् । वाङ्मनसयोरनृतादियोगादन्येनापि तत्सेव्यमिति[1] तत्रापि नायमपूर्वविधिः; प्राप्तार्थत्वात्, 'नानृतं वदेत्' इत्यादिशास्त्रबाधापत्तेश्च । नापि अनृतान्येन कार्यं न साधयेत् स्तेयान्योपायेन न द्रव्यमर्जयेदित्यादिपरिसङ्ख्या, त्रैदोष्यात्, सत्यमेव वदेत् प्रतिग्रहादिना द्रव्यमर्जयेदित्यादिशास्त्रबाधाच्च । अतएवानृतं वदेदेवेत्यादिर्न नियमविधिरपि । नापि विकल्पः, कल्प्यत्वेनास्य दुर्बलत्वात् । तस्माच्छास्त्रविरोधेन विधिकल्पकत्वाभावादप्रामाण्यम् । एवं 'तस्मात् धूम एवाग्नेर्दिवा ददृशे नार्चिः, अर्चिरेवाग्नेर्नक्तं ददृशे न धूमः तस्माद्दिवाऽग्निरादित्यं गतो रात्रावादित्यस्तम्' इत्यादेः दृष्टविरोधादप्रामाण्यमिति 'शास्त्रदृष्टविरोधाच्च' इति सूत्रेणाशङ्क्य अन्येषामप्यर्थवादानामन्यप्रकारेणाप्रामाण्यमाशङ्क्य 'गुणवादस्तु' इति सूत्रेण बाधितार्थानां गौणार्थकत्वं प्रतिज्ञाय 'रूपात् प्रायात्' इत्यनेन 'दूरभूयस्त्वात्' इत्यनेन च अन्येन च सूत्रेण उपपाद्य, सर्वेषामर्थवादानां विध्यपेक्षितस्तुतिनिन्दाबोधकत्वेन प्रामाण्यमिति समाहितम् । तत्र 'हिरण्यं हस्ते भवत्यथ गृह्णाति' इति विधेः शेषभूते 'स्तेनं मनोऽनृतवादिनी वाक्' इत्यत्र स्तेनशब्दः प्रच्छन्नकारित्वेन स्तेनसादृश्यात्मकात् रूपात् स्तेनसदृशे गौणः; अनृतशब्दोऽनृतवाक्यबाहुल्यरूपात् प्रायाद्गौणः । वाङ्मनसयोः [2]स्तेनसदृशत्वादिना हिरण्यादूनत्वप्रत्ययात् नहिनिन्दान्यायात् हिरण्यस्तुतिः । न तु निन्दया निषेधोन्नयनं,

---

[1] तथा यवहर्तव्यमिति. [2] स्तेनसदृशत्वादेर्हिरण्यविधिस्तुत्यर्थत्वान्नहिनिन्दान्यायात्—पा.

क्लृप्तविध्येकवाक्यतासम्भवे तदयुक्तत्वात् । तस्माद्धूम एवेत्यादौ तु दृशिर्गौणो दूरभूयस्त्वात् गुणात्, तच्च भूयस्त्वेन दूरस्थैः दृश्यमानत्वम् । दिवा हि दूरस्थैः भूयस्त्वेन धूम एव दृश्यते नार्चिः, नक्तं च तैस्तेनार्चिरेव दृश्यते न धूम इति । तथाच "सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेति प्रातर्जुहोति, अग्निर्ज्योतिस्सूर्यस्स्वाहेति सायं जुहोति" इति मिश्रलिङ्गकमन्त्रविधेः शेषभूतं तस्माद्दिवेत्यादिकं तदुपपादकम् । तस्माद्धूमेत्यादिकं उभयोर्दैवतयोः मिलनादुभयदैवत्यहोमस्तुतेरुपपत्तिः । वस्तुतस्तु केवललिङ्गकमिश्रलिङ्गकमन्त्रविध्योर्मध्ये पठितमप्युक्तवाक्यद्वयं "अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति प्रातर्जुहोति" इति केवललिङ्गकमन्त्रविधेः शेषः; 'उभाभ्यां सायं हूयते उभाभ्यां प्रातः न देवताभ्यस्समदं दधाति' इत्युभयलिङ्गकमन्त्रविधेः अर्थवादान्तरस्याम्नानात् यस्माद्दिवाग्निरादित्यान्तर्गतिः तस्मादादित्यस्यैव ज्योतिष्ट्वात्तन्मात्रलिङ्गकमन्त्रः प्रशस्त[1] इत्युपपत्तिः । एवमर्चिरेवाग्नेर्नक्तमिति तत्रापि बोध्यमिति । प्रथमद्वितीये मन्त्राधिकरणे "तदर्थशास्त्रात् वाक्यनियमात् बुद्धि[2]शास्त्रात् अविद्यमानवचनात् अचेतनार्थबन्धनात् अर्थविप्रतिषेधात् स्वाध्यायवदवचनात् अविज्ञेयादनित्यसंयोगात् मन्त्रानर्थक्यम्" इति सूत्रे मन्त्रा अनर्थकाः 'बर्हिर्देवसदनं दामि' इत्यादौ शास्त्रविहितार्थकत्वेन अविधेयकत्वात् 'अग्निर्मूर्धा' इत्यादौ वाक्यक्रमनियमस्य स्वार्थबोधे अनुपयोगात् अदृष्टार्थत्वस्य सिद्धान्तेऽनङ्गीकारात्[3] अग्नीन् विहर' इत्यादिप्रैषमन्त्रे बुद्धार्थत्वात् 'चत्वारि शृङ्गा त्रयोऽस्य पादाः' इत्यादौ चतुश्शृङ्गत्वादियुक्तकर्मणोऽविद्यमानस्य वचनत्वात्[4] 'ओषधे त्रायस्वैनम्' इत्यादावचेतनार्थसम्बोधनात् 'अदितिर्द्यौरदितिरन्तरिक्षं' इत्यादौ अदितिशब्दरूपदेवताया द्युलोकाद्यभेदरूपार्थसम्भवात् मन्त्रमात्रेऽध्ययनाभासस्येवार्थज्ञानाभ्यासस्यावचना-

---

[1] प्रसक्त. [2] बुद्ध. [3] दृष्टार्थत्वस्य सिद्धान्तेऽङ्गीकारात्. [4] वचनात्.

**तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति**

---

दर्थज्ञानार्थत्वाभावात् 'अम्यक् सात इन्द्र ऋष्टिरस्मे' इत्यादौ अम्यगादिपदार्थस्य 'सृण्येव जर्भरी तुर्फरी जुषाणा' इत्यादौ वाक्यार्थस्याविज्ञेयत्वात्। 'किं ते कृण्वन्ति कीकटेषु गावः' इत्यादौ कर्मानङ्गकीकटाद्यनित्यार्थबोधकत्वात्। न चार्थवादस्येव मन्त्राणां स्तुतिपरत्वेन विधिना पदैकयवाक्यतेति वाच्यम्; प्रदेशान्तरस्थमन्त्राणां तदसम्भवात्। तस्मान्मन्त्राणामप्रामाण्यमित्याशङ्क्य 'अविशिष्टस्तु वाक्यार्थः' इत्यनेन वाक्यान्तरस्येव मन्त्राणां वाक्यार्थधीजनकत्वात् कर्मसम्बन्ध्यर्थ[1]प्रकाशनरूपदृष्टार्थसम्भवे नादृष्टार्थत्वं, किन्तु तदसम्भव इति अधीतवेदेन यत्सम्भवति तत्कुर्यादित्यस्य सिद्धान्तसिद्धप्रयोजनत्वसम्भवान्नानर्थक्यं स्वविनियोजकविधौ पदार्थविषया प्रामाण्यसम्भव इति समाधाय सूत्रान्तरैरुक्तशङ्का निराकृताः। तत्र मन्त्रवाक्ये क्रमनियमोऽदृष्टार्थ एव, बुद्धेर्विस्मरणादिसम्भवात्प्रैषमन्त्रसार्थक्यं, 'चत्वारि' इत्यादेः सूर्यप्रकाशकत्वाद्दिनयामरूप[2]शृङ्गचतुष्टयं विद्यमानार्थ[3] एव, ओषध्यादिसम्बोध्यता चैतन्यारोपात्, अदितिरित्यादेः गौणार्थकत्वाविरोधः,[4] अर्थज्ञानस्य अभ्यासावचनेऽपि प्रयोजनत्वमविरुद्धम्। अप्रसिद्धार्थस्तु निगमनिरुक्तादिना ज्ञेयः। कीकटादिपदानां कृपणादिगौणार्थपरतया कर्मसमवेतार्थकत्वमिति संक्षेपः॥

**तत्सिद्धीति।** 'यजमानः प्रस्तरः' इत्यादावपि यजमानादिपदं प्रस्तरादिनामधेयं स्यात्, सोमादिपदवत् रूढत्वात्; तदसम्भवेपि जघन्यप्रस्तरपदे स्रुग्धारणादिरूपप्रस्तरकार्यलक्षणया तदुद्दिश्याधारत्वेन यजमानो विधीयत इति प्राप्ते प्रत्यक्षविध्यश्रवणात् 'प्रस्तरमुत्तरं बर्हिषस्सादयति' इत्यादिविध्येकवाक्यत्वाच्च तद्विधेयप्रस्तरादिस्तुतिपरं यजमानेत्यादिकमित्यौदुम्बराधिकरणसिद्धम्। यजमानादिपदं तु गौणस्वार्थपरमिति

---

[1] सम्बद्धार्थ. [2] त्वादिनियमरूप. [3] विद्यमानाङ्ग. [4] त्वादिविरोधः.

तद्धटितवाक्यार्थधीद्वारा स्तुतिः। गौणत्वं च मुख्यार्थगतगुणघटितत्वम्। अस्ति च 'सिंहो देवदत्तः' इत्यादौ क्रूरादिरूपेऽर्थे। तत् 'खपुष्पं त्वत्सिद्धान्तः' इत्यादौ च बाधितार्थकत्वरूपो गुणः सिद्धान्तरूपे वाक्ये खपुष्पपदस्य स्वरूपात्मकमुख्यार्थगतो बोध्यः; सर्वेषां पदानां स्वरूपे निरूढलक्षणासत्त्वात्, खपुष्पपदे च समुदायशक्त्यभावेऽपि वाक्ये मीमांसकमते लक्षणासम्भवात्। एवंच तत्र प्रकारान्तरप्रलापः परेषां हेयः। चन्द्रो मुखमित्यादौ चन्द्रादिपदस्य चन्द्रसदृशार्थकत्वे गौणार्थकत्वं नोचेत् भाक्तस्तद्व्यवहारः। तथाच यजमानकार्यसिद्धिहेतुर्यजमानपदस्य गौणार्थः, गौणार्थगतस्य मुख्यार्थसम्बन्धस्य गौणीवृत्तित्वात् गौणार्थभिन्नगतस्य मुख्यार्थसम्बन्धस्यैव लक्षणात्वात् गौणीलक्षणयोर्भेदो बोध्यः। न्यायसुधायां तु—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥

इति वार्तिकोक्तौ शक्यघटितरूपेण बोधे लक्षणा, शक्याघटितशक्यनिष्ठगुणवत्त्वरूपेण बोधे गौणीति तयोर्भेद उक्तः। 'अग्निर्वै ब्राह्मणः' इत्यादावपि पूर्ववद्विधित्वे प्राप्ते अग्न्यादिशब्दस्य जननघटितोग्निजननस्थानजातरूपो गौणोऽर्थ; सृष्टिकाले ब्रह्मणो मुखादग्निब्राह्मणयोर्जननस्य श्रुत्युक्तत्वात्। एवं 'आदित्यो यूपः' इत्यादौ सारूप्यघटित आदित्यादिसदृशो गौणोऽर्थः। आदित्यादिपदस्य यद्यपि सारूप्यं सादृश्यं; तच्च तद्गततेजस्वित्वादिजातीयवत्त्वम्[1]। तथाच जननादिघटित[2]गुणोपि सारूप्यमिति न विशेषो भाति। तथापि सारूप्यस्य सादृश्यरूपत्वेन भेदघटितत्वं तत्सिद्ध्यादिस्तु तदघटितत्वम्। अथवा सारूप्यस्थले भेदांशस्य अधिकस्या[3]भानेपि जननाद्यघटितगुणभानमेव विशेषः। यत्तु चक्षुर्ग्राह्यसारूप्यमत्र भाति अन्यत्र तदन्यादिति, यदपि अत्र प्रकारतया आदित्यतेजस्वितासदृशतेजस्विता भाति मुख्या-

---

[1] तद्गततेजस्वित्वादिना सजातीयत्वम्. [2] जननाघटित. [3] अधिकरणस्या.

र्थस्य। 'अग्निर्ब्राह्मणः' इत्यादौ तु सादृश्यसम्बन्धेन अग्निजननसम्बन्धिजननं भातीति भेद इति तयोः मतयोर्विनिगमकाभावः। यजमानकार्यकारित्वादेरपि चक्षुर्ग्राह्यत्वसम्भवात्सम्बन्धविधया आदित्यतेजस्वितासादृश्यं भाति। अग्निजननादिसादृश्यं तु प्रकारतयेत्यस्यापि सम्भवात् आग्निजननस्थानजातत्वेन आदित्यवृत्तितावच्छेदकवैलक्षण्यविशिष्टतेजस्वितात्वेन च भानादुभयत्रापि गुणघटकसादृश्यभाने मानाभावाच्च। 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इत्यादावजादीनां तत्रतत्र विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य वा न सम्भवः। नापि 'अयज्ञिया वै माषाः' इत्यादाविव प्रतिनिधिनिषेधकत्वं, विध्येकवाक्यताभङ्गापत्तेः। अतः 'पुरस्तात्प्रतीचीनमश्वस्योपदधाति पश्चात्प्राचीनमृषभस्य' इति विध्यपेक्षितगवाश्वस्तुतिपरत्वं समासगतपशुपदस्य गवाश्वगतप्राशस्त्यजातीयविशिष्टरूपः प्रशंसाघटितो गौणार्थः। 'सृष्टीरुपदधाति' इत्यत्र तु प्रत्यक्षविधिश्रवणाद्विधित्वम्। तत्र यद्यप्युपधानमिष्टकानां चयनाङ्गत्वेनैव आक्षिप्येत,[1] तथाप्याक्षेपप्रवृत्तेः पूर्वमनेन प्रत्यक्षविधिना विधीयते। तत्फलं प्रतीष्टकमुपधानस्य तत्र चयनसमानकर्तृकत्वस्य च सिद्धिः। अन्यथा समुदितेष्टकोपधानं तस्य चयनभिन्नकर्तृकत्वं च स्यात्, आर्थिकत्वात्। सति त्वस्मिन् इष्टकासंस्कारद्वारा उपधानस्य चयनाङ्गताबोधकविधौ प्रतिप्रधानं गुणावृत्तिन्यायादङ्गप्रधानयारेककर्तृकत्वाच्च उक्तफलयोस्सिद्धिः। सृष्टिपदस्य तु लिङ्गप्रकरणप्राप्तसृष्ट्यसृष्टिमन्त्रसमूहरूपो गौणसृष्टिमन्त्रबाहुल्यरूपभूमघटितोऽर्थ इति भाष्यम्। उपधानमात्रे विधेये एकेन विधिना निर्वाहे 'प्राणभृत उपदधाति' इत्याद्यनेकोपधानविधीनां वैयर्थ्यापत्तेः। उपधानानुवादेन मन्त्रो मन्त्रविशिष्टोपधानं वा इष्टकासंस्कारार्थत्वेन विधीयते। तत्रोपधानविधिफलं पूर्वोक्तम्। मन्त्रविधिफलंतूपधाने मन्त्रनियमादिः। अन्यथा

---

[1] आक्षिप्यते.

**तत्सिद्धिपेटिकायां 'यजमानः प्रस्तरः' इत्यादेः गौणार्थता च नोच्येत। त्वयापि प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नोच्येत।**

---

मन्त्राणामिष्टकामात्रप्रकाशकत्वात्तदुपधान इव तद्ग्रहणादिष्वपि प्राप्तिस्स्यात्। अत उपधाने नियमो ग्रहणादिपरिसङ्ख्या वा फलम्। मध्यमचितिसम्बन्धोऽपि तत्फलं 'यो वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यात्' इत्यनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसम्बन्धविधानात्। अन्यथा तत्तच्चित्यवान्तरप्रकरणपठितानां मन्त्राणां चयनमहाप्रकरणेन सर्वस्यामन्त्यायां वा चितावेव निवेशः स्यात्। इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं च प्रत्यक्षब्राह्मणगतपदाविधेयमन्त्रकत्वम्। सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रकरणकोपधानकर्मणि मुख्यमपि गौण्या वृत्त्या सृष्टिप्रकाशकप्रायसमूहान्तर्गतमन्त्रकरणकोपधानकर्मेष्टकापरमिति करणविनियुक्तलोकंपृणामन्त्रकेष्टकाया अपि मध्यमचितिमात्रसम्बन्धापत्तेरिष्टकावाचीति पदविशेषणं वाच्यम्। सृष्टिप्रकाशकप्रायमन्त्राः सप्तदश, 'यत्सप्तदशेष्टका उपदधाति' इत्यर्थवादानुसारात्। तत्र सृष्टिप्रकाशकाः चतुर्दश, तेषु 'ब्रह्मासृज्यत' इत्यादिरूपेण सृजधातुप्रयोगात्। त्रयोऽन्येऽतो भूमघटितो गौणार्थ इति तु वार्तिकम्। 'प्राणभृत उपधाति' इत्यादौ तु प्राणभृत्पदाघटितमन्त्रापेक्षया स्वल्पेन प्राणभृत्पदघटितमन्त्रेण तत्पदाघटितमन्त्रैश्च घटितो यस्समुदायः तदन्तर्गतमन्त्रकरणकोपधानकर्मेष्टकारूपोऽल्पत्वरूपलिङ्गघटितो गौणार्थः।[1]सर्वमन्यत्पूर्ववदिति प्रथमचतुर्थे 'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः' इत्यधिकरणे स्थितम्। शब्दस्य प्रत्यक्षात्प्राबल्ये तत्सिद्ध्यादिघटितगौणार्थकथनं तत्रत्यं विरुद्ध्येतेत्यर्थः। **तत्सिद्धिपेटिकेति**। तत्सिद्धिशब्दयुक्तं सूत्रं पेटिका,

---

1. अल्पत्वं च अनधिकत्वम्। तेन समसंख्याकस्थलस्यापि लिङ्गसमवायेन ग्रहः। सर्वमन्यत्. (इत्यधिकः कोशान्तरे पाठः.)

श्रुतिविरोधे प्रत्यक्षस्यैव प्रामाण्यसम्भवात् । न च तात्पर्यलिङ्गानां उपक्रमादीनामत्र सत्त्वाऽद्वैतश्रुतीनाममुख्यार्थत्वमिति वाच्यम् । 'यजमानः प्रस्तरः' इत्यादावपूर्वत्वाद्येकैकलिङ्गस्य तात्पर्यग्राहकस्य विद्यमानत्वात् । एकैकलिङ्गस्य तात्पर्यनिर्णायकत्वे लिङ्गान्तरमनुवादकमेव । त्वन्मते प्रत्यक्षासिद्धे भेदे श्रुतिरिव किं बाहुल्येनेति चेन्न; वाक्यशेषप्रमाणान्तरसंवादार्थक्रियादिपरीक्षापरीक्षितस्य प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेव एतद्विरुद्धार्थग्राहिणः "धूम एवाग्नेर्दिवा ददृशे, अदितिर्द्यौः, यजमानः प्रस्तरः" इत्यादेः तद्विरोधेनामुख्यार्थत्वेऽप्यद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः । प्रत्यक्षादेर्हि परीक्षया व्यावहारिकप्रामाण्यमात्रं सिद्धम् । तच्च नाद्वैतागमेन बाध्यते । बाध्यते तु तात्त्विकं प्रामाण्यम् । तत्तु परीक्षया न सिद्धमेव । अतो न विरोधः । धूम एवाग्नेरित्यादेस्तु मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं व्याहन्येत । अतो विरोधात्तत्रामुख्यार्थत्वमिति विवेकः । यत्तु प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नाश्रीयेतेति, तन्न; षड्विधलिङ्गैर्गतिसामान्येन च अखण्ड एव अवधार्यमाणस्य तात्पर्यानुपपत्तेः, जीवेशगत-

---

संक्षेपेण सर्वेषां गोणार्थानां निर्णायकत्वादिति भावः । **अपूर्वत्वादीति** । प्रत्यक्षविरुद्धार्थस्य मानान्तराज्ञातवस्तुरूपमपूर्वत्वमित्यर्थः । **वाक्यशेषेति** । विधिवाक्यरूपेण वाक्यशेषेण सह अर्थवादानामेकवाक्यत्वानुरोधात् स्तुतिपरत्वनिश्चयादन्यपरैः तैर्न प्रत्यक्षादिविरुद्धार्थसिद्धिरिति प्रत्यक्षादिप्रबलमित्यर्थः । अथवा तस्माद्धूमेत्यादिवाक्यस्य शेषो मन्त्रादिविधिः । तेन दिवादृष्टाग्न्यधिकरणकहोमे मन्त्रविधानात् अग्न्यर्चिरादीनां दिवादर्शनादिप्रत्यक्षं वाक्यशेषपरीक्षितमिति भावः । **जीवेशगतेति** । ब्रह्मपदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्याहंपदवाच्यस्य अहंकाराद्युपहितचित्त्व

**सर्वज्ञत्वकिञ्चिद्ज्ञत्वादीनामैक्यान्वयानुपपत्तेश्च । तात्पर्यविषयीभूताखण्डप्रतीतिनिर्वाहाय लक्षणाङ्गीकरणस्यैव उचितत्वात्, तात्पर्यविषयीभूतान्वयनिर्वाहाय लक्षणाश्रयणस्य सर्वत्र दर्शनात्। न चैवं सति अमुख्यार्थत्वं स्यादिति वाच्यम्; तद्धि प्रतीय-**

रूप[1]किञ्चिज्ज्ञत्वविशिष्टस्य च ऐक्यबोधे उक्तविशेषणयोरपि ऐक्यमवश्यं बोध्यमित्यन्वयानुपपत्त्या लक्षणया शुद्धयोरैक्यबोध इति भावः। न चोपहितयोरेव ऐक्यं घटो द्रव्यमित्यादाविव बुध्यतामिति वाच्यम्; विशिष्टान्वयधीत्वेन मुख्यवृत्तिज्ञानकार्यता, उपहिता[2]द्यन्वयधीत्वेन अमुख्यवृत्तिज्ञानकार्यता। अतएव 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ सर्वत्र विशिष्टान्वय एवौत्सर्गिकः। अतएव च घटो द्रव्यमित्यादावमुख्यवृत्त्यैव उपहितान्वयः। मुख्यवृत्तिश्च विशिष्टशक्तिः, निरूढलक्षणा च। यदि च लाघवादुपहित एव शक्तिरिति नव्यमतमाश्रीयते, तदा उपहितशक्तिर्निरूढलक्षणा च मुख्यवृत्तिः। एवंच विशिष्टे उपहिते वा शक्तस्यापि ब्रह्मादिपदस्य विशेष्यमात्रशक्तत्वेन ज्ञानात् विशेष्यमात्रधीः वक्ष्यमाणा युज्यत एव; विशेष्यमात्रयित्वेन ज्ञायमानशक्तेरमुख्यवृत्तित्वात्। न च विशिष्टे उपहिते वा शक्तस्य पदस्य विशेष्यमात्रे शक्तिज्ञानं तच्छाब्दबुद्धौ न कारणं, किन्तु तस्य तत्र लक्षणाज्ञानमेवेति वाच्यम्; उपहितशक्तेर्विशेष्येऽपि सत्त्वात् लक्षणाया अन्याय्यत्वात्। अतएव बलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वशक्तस्यापि विधेः केवलेष्टसाधनत्वबोधकत्वम्। 'श्येनेनाभिचरन् यजेत' इत्यादौ शक्त्यैवेति तार्किकाः। मुख्यवृत्त्योपस्थितानामेकदेशान्वयबोधानुपधायकत्वादेवामुख्यवृत्तित्वमुक्तमुख्यवृत्त्वन्यवृत्तेरुपपद्यते। एवंच उपहितान्वयधीः लक्षणया। अथवा उपहितशक्तिज्ञानस्यैव यदा विशेषणान्वये तात्पर्यज्ञानादिसहकारिसमवहितत्वं, तदा मुख्यवृत्तित्वं;

[1] द्युपलक्षितत्वरूप. [2] तदुपहिता.

मानार्थपरित्यागेन अर्थान्तरपरत्वं वा ? अशक्यार्थत्वं वा ? नाद्यः; सामानाधिकरण्येन प्रतीयमानस्यैक्यस्यात्यागात् । नान्त्यः; जहदजहल्लक्षणाश्रयणेन शक्यैकदेशपरित्यागेऽपि 'सोऽयं देवदत्तः' इत्यादिवाक्य इव शक्यैकदेशस्यान्वयाभ्युपगमात् । विशेषणबाधेन विशेष्यमात्रान्वयस्यैवात्र लक्षणाशब्देन व्यपदेशात् । तथाचोक्तं वाचस्पतिमिश्रैः—"प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थम् । अद्वैतवाक्यं त्वनन्यशेषत्वान्मुख्यार्थमेव । उक्तं हि शाबरभाष्ये—'न विधौ परश्शब्दार्थः' इति" । यथाचापूर्वत्वाद्यैकैकतात्पर्यलिङ्गेन 'यजमानः प्रस्तरः' इत्याद्यर्थवादवाक्यानां न स्वार्थपरत्वं तथा वक्ष्यामः । नन्वन्यशेष-

---

यदा न तत्तदा न तदिति सर्वमुपपद्यत इति ध्येयम् । प्रतीयमानस्येति । नन्वखण्डमैक्यं प्रतीयत एव; नेत्यत आह— सामानाधिकरण्येनेति । अकार्यकारणद्रव्यबोधकसमानाधिकरणनामद्वयत्वावच्छेदेन अखण्डार्थत्वमानुभविकामिति विवरणाद्युक्तत्वात् अखण्डार्थता । अधिकं तु अग्रे वक्ष्यते । विशेष्यमात्रान्वयस्येति । विशेष्यमात्रान्वयबोधोपधायकधीविषयशक्तेरित्यर्थः । नन्वेवममुख्य[1]-वृत्तिज्ञानाधीनवाक्यार्थधीजनकत्वाद्वाक्यममुख्यार्थं[2] स्यादित्याशङ्क्य वाक्यस्यामुख्यार्थत्वं नोक्तरूपं, किन्तु वक्ष्यमाणमित्याशयेनाह— तथाचोक्तमिति । वक्ष्याम इति । उपक्रमोपसंहारयोरेकार्थनिष्ठत्वमभ्यासार्थवादौ चेति त्रयं शब्दगतम् । अज्ञातत्वरूपापूर्वत्वं फलं अबाधितत्वरूपोपपत्तिश्चेति षट्सु लिङ्गेषु अन्त्यत्रयमर्थनिष्ठम् । प्रामाण्यशरीरनिर्वाहद्वारा तात्पर्यज्ञापकमवश्यमपेक्षणीयं; मानान्तरेण ज्ञाने[3] निष्फले बाधिते वा प्रमात्वासम्भवेन तात्पर्यासम्भवात्, आद्यत्रयेप्यर्थवादस्याप्यावश्यकत्वमन्यथा विधेयप्राशस्त्यबुद्ध्यसम्भवेन विधिपर्यव-

---

[1] नन्वेवं मुख्य.　[2] वाक्यं मुख्यार्थं.　[3] ज्ञाते.

त्वानन्यशेषत्वे नामुख्यार्थत्वमुख्यार्थत्वयोः प्रयोजके, किन्तु मानान्तरविरोधाविरोधौ। अन्यशेषेऽपि मानान्तराविरोधे 'इयं गौः क्रय्या बहुक्षीरा' इत्यादौ च वेदे प्रस्तरादिवाक्यवद्-मुख्यवृत्तेरनाश्रयणात्। अनन्यशेषेऽपि 'सोमेन यजेत' इत्यादौ वैयधिकरण्येनान्वये विरुद्धत्रिकद्वयापत्त्या सामानाधिकरण्ये-नान्वये प्रत्यक्षाविरोधाय सोमवता यागेनेति मत्वर्थलक्ष-

---

सानासम्भवात्। इतरयोस्तु तात्पर्यस्य सन्देहे तन्निर्णायकतया उप-योगः। एवंचापूर्वत्वाद्येकैकमात्रेण न तात्पर्य[1]सिद्धिरिति प्रथमपरिच्छेद एव विशेषतो मिथ्यात्वानुमाननिरूपणोत्तरमक्षरतात्पर्याभ्यां वक्ष्यति। गन्यकानन्यनिगुणः तत्त्वावेदकश्रुतिबाध्यत्वात् व्यावहारिकाः। यद्यपि सा श्रुतिः शुद्धस्वरूपमात्रपरा; तथापि तत्परत्वस्य निर्गुणत्वधीद्वारक-त्वात् निर्गुणत्वेऽप्यवान्तरतात्पर्यस्वीकाराद्वा सगुणत्वबाधिका। 'यज-मानः प्रस्तरः' इत्यादौ तु स्तुतिधियो द्वारं यजमानकार्यकारी प्रस्तर इति वाक्यार्थधीरपि सम्भवतीति न यजमानप्रस्तराभेदे तात्पर्यं; येन विना हि महातात्पर्यं न पर्यवस्यति तत्रैवावान्तरतात्पर्यमिति द्वितीय-परिच्छेदे सत्त्वादिवाक्यानामखण्डार्थत्व[2]प्रकरणे वक्ष्यति। न चापूर्व-त्वात्सत्यकामत्वादौ श्रुतेस्तात्पर्यं, आरोपेणाप्युपास्यतासम्भवेन तात्पर्यं विनाऽप्युपपाद्यमानेऽन्यशेषे वाक्यार्थे अपूर्वेऽपि तात्पर्यास्वीकारात्। अतएव 'अजक्षीरेण जुहोति' इति विधेः शेषभूते जर्ति-लादिवाक्यार्थे तात्पर्यं न स्वीकृतमिति द्वितीयपरिच्छेदे आत्म-निर्गुणत्वप्रकरणेऽन्यत्र च वक्ष्यति। वैयधिकरण्येनेति। 'वाजपे-येन स्वाराज्यकामो यजेत, उद्भिदा यजेत पशुकामः' इत्यादौ वाजपेयादिपदं गुणपरम्। यद्यपि यागे वाजपेयादिगुणस्य नान्वयः, कारकाणां क्रियां प्रति गुणत्वेन मिथोऽनन्वयात्। आख्यातार्थक्रियां

---

[1] मात्रेण तात्पर्य. [2] वाक्यखण्डार्थत्व.

प्रति हि धात्वर्थः कारकमेव। 'पचति, ओदनं पचति' इत्यादौ पाकं करोति पाकेनौदनं साधयतीत्यादिविवरणात्। नापि क्रियायामेव करणत्वेन तस्यान्वयः; समानपदोपात्तत्वेन यागे करणत्वेन प्रथममन्विते आकांक्षाविरहात्। नापि कारकतया क्रियान्वयनियमेऽप्यकारकतया यागे तस्यान्वयः; भेदान्वयस्य बाधितत्वात्। धात्वर्थनामार्थयोः भेदान्वयस्याव्युत्पन्नत्वात्। नापि गुणपदस्य वाजपेयादिसम्बन्धिलक्षणया तदुत्तरतृतीयार्थाभेदस्य[1] यागेऽन्वयः, यागगतकरणत्वस्यैव वा तृतीयार्थस्य क्रियायामन्वयः, लक्षणाकल्पनापेक्षया गुणपदस्य यौगिकत्वेन नामधेयत्वस्योचितत्वात्। नापि स्वाराज्यादिकर्मिकायां क्रियायां यागस्य करणत्वेऽपि यागकर्मिकायां गुणस्य करणत्वम्; एकेनाख्यातेन क्रिययोः बोधने आवृत्त्यापातात् एकक्रियायां कर्मद्वयस्यान्वयासम्भवात्। तथापि क्रियायां यागस्य न करणत्वेनान्वयः, किन्तु करणकर्मसाधारणसम्बन्धित्वमात्रेण। तथाच करणत्वरूपं सम्बन्धमादाय स्वाराज्यादिकर्मणः कर्मत्वरूपं तमादाय गुणरूपकरणस्यान्वयः यागेन स्वाराज्यं वाजपेयेन यागं कुर्यादिति; इति प्राप्ते—क्रियया करणत्वादिरूपेणैव कारकस्य आकांक्षितत्वात्तद्रूपेणैव तस्यामन्वयो न सम्बन्धित्वमात्रेण। अतः प्रथमतः करणत्वेन यागे अन्विते अनाकांक्षत्वात् न गुणस्य करणत्वेनान्वय इति यागान्वयाय गुणपदस्य सम्बन्धिलक्षणादोषात् वाजमन्नं सुरारूपं यस्मिन्निति व्युत्पत्त्या नामत्वमेवोचितं, सुराग्रहविधानात्। न चैकक्रियायां यागस्य करणत्वेन कर्मत्वेन चान्वयस्सम्भवतीत्युक्तम्; यजेरावृत्तिप्रसङ्गाच्च, विरुद्धयोस्त्रिकयोर्बोधकत्ववैरूप्यापत्तेश्च। विधेयत्वं गुणत्वमुपादेयत्त्वमित्येकम्, अनुवाद्यत्वं प्रधानत्वमुद्देश्यत्वमित्यन्यदिति त्रिकद्वयम्। फलानुवादेन यागस्य, यागानुवादेन गुणस्य चोत्पत्तिविधौ यागस्याज्ञातज्ञाप्यत्वरूपे विधेयत्वानुवाद्यत्वे फलो-

[1] र्थभेदस्य.

**णाया आश्रयणात्। एवं विचारविधायके 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे 'तद्विजिज्ञासस्व' इति श्रुतौ च मानान्तराविरोधेन विध्यन्वयाय जिज्ञासाशब्देन विचारलक्षणायाः 'सर्वं खल्विदं**

---

द्देशेन यागस्य तदुद्देशेन गुणस्य च विनियोगविधौ यागस्य शेषशेषित्वरूपे गुणत्वप्रधानत्वे तादृशप्रयोगविधौ प्रकृतविधिप्रयुक्तकृतिसाध्यताधीविशेष्यत्वतदभावरूपे उपादेयत्वोद्देश्यत्वे। न च स्वाराज्यादिफलनिरूपितकरणत्वेन यागे प्रथममन्वितेऽपि यागनिरूपितकरणत्वेन गुणस्यान्वयोस्त्विति वाच्यम्; निरूपकविशेषस्य पश्चादेव ज्ञेयत्वेन करणत्वसामान्याकांक्षाविरहात्, तावतापि विशिष्टविधिगौरवरूपदोषानुद्धाराच्च। किंच भावनायां प्रथमतः फलान्वये बुद्धे फलविशिष्टभावनानिरूपितत्वेन फलनिरूपितत्वपर्यवसितेन करणत्वस्यादावाकांक्षितत्वेन बोधे च सति पश्चादेव तदाश्रययागनिरूपितकरणत्वस्य आकांक्षितत्वं वाच्यम्। उक्तबोधे च सोमादिभानाभावे सहोच्चरितानामेकधीजनकत्वनियमस्य[1] भङ्गापत्तेः। तद्भाने च सोमेन यजेतेत्यादावगत्या सोमादिपदेष्वपि मत्वर्थलक्षणाश्रयणं, तेषां कर्मणि योगाभावात् अप्रसिद्धार्थकरूढिकल्पनाया अन्याय्यत्वादिति प्रथमचतुर्थे 'नामधेये गुणश्रुतेः स्याद्विधानमितिचेत्' इत्यधिकरणे स्थितम्। तथाच फलकर्मिकायां भावनायां यागस्य तत्कर्मिकायां गुणस्यान्वयो[2] वैयधिकरण्येनान्वयः। सामानाधिकरण्येनान्वयस्तु तृतीयार्थाभेदस्य यागेऽन्वयः, अभेदसम्बन्धेन तत्रान्वयो वा, मीमांसकमते धात्वर्थक्रियायां कर्मत्वेनैव करणत्वेनाप्यन्वयात्, धात्वर्थे द्वितीयान्तेनेव तृतीयान्तेनापि नाम्नोपस्थितार्थस्यान्वयसम्भवात्। यागगतस्य यजिबोधितस्य करणत्वस्य तृतीयान्तनाम्नापि क्रियायामन्वयबोधो वेति भावः। **मानान्तरेति।** जिज्ञासायाः कृतसाध्यत्वग्राहकमानेत्यर्थः। **विध्यन्वयाय** विध्याक्षिप्त-

---

[1] मेकत्वनियमस्य. [2] स्यान्वये च.

ब्रह्म' इत्यादौ चामुख्यार्थतायाः स्वीकृतत्वात् सर्वस्यापि वाक्यस्यावाच्ये ब्रह्मणि लक्षणाया एवेष्टत्वेन अमुख्यार्थत्व-निषेधायोगाच्च अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबी-जस्य विध्यविधिसाधारणत्वाच्च । शाबरं तु वचनमर्थवाद-मुख्यत्वाय विधौ न लक्षणेत्येवंपरम् । तस्मान्न प्रत्यक्षं शब्दबाध्यमिति चेन्न; भावानवबोधात् । तात्पर्यविषयी-भूतार्थबोधकत्वं हि मुख्यार्थत्वम्; न शक्यार्थमात्रबोधकत्वम् । अन्यार्थतात्पर्यकत्वाच्च अमुख्यार्थत्वम् । न लाक्षणिकत्वमा-त्रम् । तथाचाद्वैतागमस्य स्वतात्पर्यविषयीभूतार्थबोधकत्वनिर्वा-हाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमुपपन्नमित्यवोचाम । एवं च 'सोमेन यजेत' इत्यादिविशिष्टविधेर्विशेषणे तात्पर्याभावात्

---

कृतिसाध्यत्वान्वयाय । वाक्यस्य अद्वैतवाक्यस्य । इष्टत्वेनेति । 'अद्वैतवाक्यं तु अनन्यशेषत्वान्मुख्यार्थमेव' इत्युक्तवाचस्पतिवाक्ये-नेति शेषः । तात्पर्यविषयीभूतेत्यादि । स्वकीयमुख्यतात्पर्यविषय-वाक्यार्थप्रतिपादकत्वमित्यर्थः । अर्थवादानां प्रतिपाद्यः प्राशस्त्यधी-द्वारीभूतो वाक्यार्थोऽवान्तरतात्पर्यस्य विषयो न मुख्यतात्पर्यस्य प्राशस्त्यं मुख्यतात्पर्यविषयोऽपि न वाक्यार्थः । वाचस्पतिमते तु मुख्यपदं न देयं, प्राशस्त्यधीद्वारा वाक्यार्थे तात्पर्यानङ्गीकारात् । विशेषणे तात्पर्याभावादिति । विशेष्यविशेषणयोः तात्पर्यभेदे वाक्यभेदापत्तिः । विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधिकल्पनाद्वारा विशेषणे तात्पर्य-मिति न सम्भवति विशेषणविधिना विशेषणे प्रमिते विशिष्टविधिः, विशिष्टविधौ च सति तदन्यथानुपपत्त्या विशेषणविधेः कल्पनमित्य-न्योन्याश्रयात् । अतो रेवत्यधिकरणकवारवन्तीयरूपविशेषण इव तात्पर्या[1]विषयेऽपि सोमादौ विशिष्टविधेः प्रामाण्यमिति भावः[2] ।

---

[1] तात्पर्य. [2] विशिष्टविधेः प्रामाण्याभावः.

**मत्वर्थलक्षणायामपि स्वार्थापरित्यागाच्च नामुख्यार्थत्वम्। जिज्ञासा-पदे तु ज्ञाधातुना इष्यमाणज्ञानलक्षणाङ्गीकारानङ्गीकारमत-भेदेऽपि सन्पदस्य विचारे जहल्लक्षणाभ्युपगमस्योभयत्र तुल्यत्वात्।**

एतस्यैव 'रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इत्यादावुक्तविशेषणस्य लौकिकप्रमाणाज्ञातत्वेन विशिष्टविधेः तद्धी[1]सापेक्षत्वादुक्तान्योन्याश्रयः । सोमेनेत्यादौ तु सोमादेः लौकिक-मानज्ञातत्वान्न स इत्यत आह—**मत्वर्थलक्षणायामपीति** । सोमादि-पदे सोमादिरूपस्वार्थसम्बन्धलक्षणायामपीत्यर्थः । यद्यपि पदमात्रस्य स्वार्थपरित्यागेऽपि तात्पर्यविषयवाक्यार्थबोधकत्वान्मुख्यार्थत्वमव्याहत-मिति वक्ष्यते ; तथापि पदस्य मुख्यार्थत्वात् वाक्यस्यापि तदिति कुचोद्यं परस्यानवकाशमित्याशयेनेदमुक्तम् । अमुख्यार्थपदघटितत्वेन वाक्यस्यामुख्यार्थत्वे पदमात्रस्य संसर्गलाक्षणिकत्वमते वाक्यमात्रम् । मतान्तरेऽपि सोऽयमित्याद्यखण्डार्थवाक्यं तथा स्यात् । अतः शक्या-घटितार्थकपदघटितत्वमेवामुख्यार्थत्वं वाक्यस्य परेणापि वाच्यमिति तद्रीत्यापि प्रकृते न दोष इति भावः । **इष्यमाणज्ञानेत्यादि** । इष्य-माणत्वेन पदादनुपस्थितस्य साधनाकांक्षाविरहेण साधनत्वेन सम्बन्धेन विचारे तदन्वयासम्भवात्तेन रूपेण धातौ लक्षणेति श्रीमदाश्रमप्रभृतयः केचित् । तथा सति विचारस्यापि साधनत्वेन अनुपस्थितस्य साध्या-कांक्षाविरहेण तेन रूपेण लक्ष्यत्वापत्तिः । अथ तथाऽनुपस्थितस्यापि विचारस्यान्वयार्हत्वे बाधकाभावः, अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वा-नभ्युपगमात्, तर्हि धातौ लक्षणा व्यर्थेत्यपरे । **सन्पदस्येति** । यद्यपि प्रत्ययार्थस्य विचारस्य प्रकृत्यर्थज्ञानोद्देशेन विधानं न सम्भवति, एक-पदोपस्थाप्ययोः 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र भक्षप्राथम्ययोरिव उद्देश्यविधेयभावासम्भवात् ; तथापि कर्तव्येत्यध्या[2]हृतपदार्थभावनायां

[1] तव. [2] कर्तव्य इत्यध्या.

**शक्यार्थपरित्यागेऽपि विधितात्पर्यनिर्वाहात् नामुख्यार्थत्वम्। न हि वाक्यार्थप्रतीत्यन्यथानुपपत्त्या पदमात्रे लक्षणायामपि वाक्यस्यामुख्यार्थत्वम्। प्रतीतस्यार्थस्यानन्यशेषत्वेन मुख्यत्वात्। यत्र पुनः प्रतीत एवार्थोऽन्यशेषत्वेन कल्प्यते, तत्र वाक्यस्यामुख्यार्थत्वमेव। अन्यद्धि पदतात्पर्यं, अन्यच्च वाक्यतात्पर्यम्। 'सैन्धवमानय, गङ्गायां वसन्ति' इत्यादौ वाक्यतात्पर्यैक्येऽपि पदतात्पर्यभेदात्**

---

ज्ञानसाधनविचारस्य करणत्वेनाथशब्दोपस्थितेष्यमाणमोक्षस्य कर्मत्वेना[1]-न्वय इति भाट्टमतरीत्या न दोषः। अस्मन्मते तु कर्तव्येत्यपि नाध्याहार्यं, ज्ञानरूपेष्टसाधनत्वस्य विचारे जिज्ञासापदेनैव लाभाद्विचारान्वितमुमुक्षानन्तर्यार्थका[2]थशब्दोपात्तमोक्षसाधनत्वस्य ज्ञाने पश्चाल्लाभसम्भवादिति। **अर्थस्य** वाक्यार्थस्य। **अनन्यशेषत्वेन** स्वप्रतिपादकवाक्यतात्पर्यविषयत्वेन। **अन्यशेषत्वेन** स्वप्रतिपादकवाक्यतात्पर्यविषयप्राशस्त्याद्युपपादकत्वेन। द्वारभूते वाक्यार्थे तात्पर्य[3]स्वीकारात् विवरणकारादिमतेऽपि मुख्यतात्पर्यास्वीकारात् उक्तमुख्यार्थलक्षणं नास्तीत्यर्थः। ननु स्वप्रतिपाद्यवाक्यार्थभिन्नतात्पर्यकत्वरूपमुख्यार्थकत्वं नार्थवादेषु सम्भवति, पदविधया तेषां प्राशस्त्याप्राशस्त्यबोधकत्वेन तत्तात्पर्याभावात्। प्राशस्त्यादिघटितविध्यर्थे तु सार्थवादविधेस्तात्पर्यं, न तु केवलार्थवादस्य। यदि प्राशस्त्यादावप्यर्थवादस्य तात्पर्यमुच्यते; तथापि तात्पर्यविषयार्थप्रतिपादकत्वरूपं मुख्यार्थत्वं स्यात्। न चार्थपदेन[4] वाक्यार्थनिवेशात् तद्दोष इति वाच्यम्; प्राशस्त्यादेरप्यर्थवादात्मकवाक्यार्थत्वात्, अत आह—**अन्यद्धीति**। **वाक्यतात्पर्यैक्य इति**। लवणतुरगयोः सैन्धवपदतात्पर्यभेदेऽपि 'सैन्धवमानय' इति वाक्यस्य स्वघटकपदार्थयोः संसर्गे तात्पर्यैक्यमित्यर्थः। यद्यपि पदतात्पर्य इव वाक्यतात्पर्येऽपि लवणादिपदार्थभेदनिवेशः, तथापि वाक्यार्थस्यापूर्वत्वा-

---

[1] कर्तव्यत्वेना. [2] र्यात्मका. [3] तात्पर्या. [4] चार्थवादेन.

'विषं भुङ्क्ष्व' इत्यादौ पदतात्पर्यभेदेऽपि वाक्यतात्पर्यभेदात् । अतएव 'इयं गौः क्रय्या बहुक्षीरा' इत्यादिवाक्यार्थस्यावश्यं क्रेतव्येति विधिशेषत्वेन तत्प्राशस्त्यलक्षणकत्वात् 'सोऽरोदीत्' इत्यादिवाक्यार्थस्य च 'बर्हिषि रजतं न देयं हिरण्यं दक्षिणा' इति विधिशेषत्वेन रजतनिन्दाद्वारा तत्प्राशस्त्यलक्षकत्वात् 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति वाक्यार्थस्य 'शान्त उपासीत'

---

लवणकर्मतात्वेन[1] निवेशासम्भवात् सैन्धवपदार्थकर्मतात्वेन निवेशात् वाक्यतात्पर्यैक्यम् । अथवा ऐक्येपीत्यादेः पदार्थविषयकत्वेन ऐक्येऽपि पदतात्पर्यभेदात् संसर्गविषयकान्यत्वादित्यर्थः । **विषमित्यादि** । विषभोजनेष्टसाधनत्वे तद्धीद्वारा द्विषदन्नभोजनानिष्ट[2]साधनत्वे च तात्पर्ययोर्भेदेऽपि विषादिपदानां विषादावेव तात्पर्यमित्यर्थः । तथाच स्वतात्पर्यविषयो यः स्वघटकपदार्थसंसर्गः तत्प्रतिपादकत्वं मुख्यार्थत्वं नार्थवादेषु, स्वघटकपदार्थसंसर्गभिन्नतात्पर्यकत्वममुख्यार्थत्वम्[3] तेषु प्राशस्त्यादितात्पर्यकत्वादस्त्येवेति भावेनाह—**अत एवेत्यादि** । **लक्षणकत्वादिति** । तथाच पुरुषेच्छाघटिततात्पर्यस्य वेदे अभावेऽपि तत्प्रतीतिशक्तत्वरूपं पदतात्पर्यं अर्थवादेष्वव्याहतमिति भावः । **सोरोदीदित्यादीति** । "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रुशीर्यत तद्रजतꣳहिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि रजतꣳ न देयम्" इत्यत्र बर्हिश्शब्दितयज्ञे रजतदानं निषिध्यते । 'यथाश्रद्धं दक्षिणां ददाति' इत्यादिना सामान्यविहितदक्षिणादाने रजतस्य स्वेच्छाप्राप्तत्वेन शास्त्राप्राप्तत्वान्न विकल्पः । 'हिरण्यं दक्षिणा' इति विधिशेषोप्यभवदित्यन्तपूर्वोक्तस्य पश्चात् 'तस्माद्रजतमदक्षिण्यमश्रुजम्' इत्यादिवाक्य नहिनिन्दान्यायेन हिरण्यस्तुतिपरत्वात्तद्द्वारा तत्प्राशस्त्यलक्षकमिति

---

1 कर्मतात्पर्यत्वेन. 2 भोजनादिष्ट. 3 कत्वं मुख्यार्थत्वं.

इति शमविधिशेषत्वेन अत्यनायाससिद्धत्वरूपतत्प्राशस्त्यलक्षकत्वादमुख्यत्वमेव। अतएव मानान्तरविरोध एव लक्षणेत्यपास्तम्। 'इयं गौः क्रय्या बहुक्षीरा' इत्यादिना प्राशस्त्यलक्षणायां व्यभिचारात्। परमतात्पर्यविषयीभूतार्थप्रतीतिनिर्वाहायैव सर्वार्थवादेषु लक्षणा। एतावांस्तु विशेषः—विधिप्राशस्त्ये लक्षणातः प्रागर्थवादवाक्यार्थज्ञानम्। तस्य प्रमाणान्तरविरोधे बाध एव। यथा 'प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यादौ। अतएव तत्र गुणवादमात्रम्। प्रमाणान्तराप्राप्तौ तु अनुवादमात्रं "अग्निर्हिमस्य भेषजम्' इत्यादौ। अतएव तदुभयत्राबाधिताज्ञातज्ञापकत्वरूपप्रामाण्यानिर्वाहादप्रामाण्यम्। यत्र पुनः प्रमाणान्तरप्राप्तिविरोधौ न स्तः तत्र प्रामाण्यशरीरानिर्वाहात् भूतार्थवादत्वम्।

हिरण्यदानविधिशेषः प्राशस्त्यलक्षकः। रजतदाननिषेधशेषवाक्यं तु अप्राशस्त्यलक्षकं बोध्यम्। **शमविधीति**। 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरः' इति विहितक्रतुशब्दितध्यानाङ्गशमविधित्यर्थः। **आनायाससिद्धत्वेति**। बलवदनिष्टाजनकत्वेत्यर्थः। **गुणवादमात्रमिति**। गौणार्थघटितमेव वाक्यार्थं द्वारीकृत्य प्राशस्त्यादिबोधकत्वम्, न तु बाधितं वाक्यार्थं द्वारीकृत्येत्यर्थः। **तदुभयत्रेति**। बाधितप्राप्तयोर्वाक्यार्थयोरित्यर्थः। **भूतार्थवादत्वमिति**। प्राशस्त्यादिधीद्वारा वाक्यार्थप्रमापकत्वमित्यर्थः। तात्पर्यविषय एव श्रुतेः प्राबल्यात् बाधिते च वाक्यार्थे द्वारभूते वाक्यस्य तात्पर्यास्वीकारात् वाचस्पतिमते तस्य न सिद्धिः। मतान्तरे द्वारीभूतवाक्यार्थे अवान्तरतात्पर्यस्वीकारेऽपि प्राप्त इव बाधिते तत्र न तत्स्वीकारः बाधकप्रमाणस्य व्यावहारिकप्रामाण्यावश्यकतया तद्विरोधेन 'यजमानः प्रस्तरः' इत्यादेः तादृशप्रामाण्यासंभवात् अनन्ताद्वैतश्रुतीनां परमतात्पर्यवतीनां तात्त्विकप्रामाण्यविरोधेन तादृशप्रामाण्यस्याप्यसम्भवात् मुख्यतात्पर्यविषयवाक्यार्थान्विते

**यथा 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादौ। अयमेव देवताधिकरणन्यायः। ननु तर्हि 'आदित्यो यूपः' इत्यादौ वाक्या-**

वाक्यार्थे[1] एव श्रुतेः मानान्तरापेक्षया प्राबल्याङ्गीकारात् प्रस्तरादिवाक्ये तदसम्भवात् गौणार्थघटितवाक्यार्थेनैव प्राशस्त्याद्युपपादनसम्भवात् बाधितार्थस्यानन्यथासिद्धप्रयोजनवत्त्वाभावात् तादृशप्रयोजनवत्येव[2] श्रुतेस्तात्पर्यात्। अतएव तत्सिद्ध्यधिकरणे बाधितार्थकस्थले गौणार्थव्यवस्थापनात् न श्रुत्या[3] बाधितार्थसिद्धिः। यद्यपि मतान्तरे संसर्गप्रमितिशक्तत्वं वाक्यतात्पर्यं, तथापि वाचस्पतिमते निराकांक्षप्रमितिशक्तत्वस्यैव तत्त्वान्न भूतार्थवादानां वाक्यार्थीभूत[4] संसर्गतात्पर्यम्। यदि च समिदाद्यङ्गवाक्यानां स्वार्थे तात्पर्यमावश्यकी च मुख्यार्थता, तदा प्रयोजनवद्वाक्यार्थान्वयिसंसर्गो निवेश्यः। प्रयोजनं च इष्टत्वेन प्रतीयमानं स्वर्गादि। अस्ति च तादृशसंसर्गप्रमितिशक्तत्वं समिदादिवाक्ये; स्वर्गाद्यन्वितप्रधानकरणकभावनारूपवाक्यार्थे समिदादिवाक्यप्रमितसमिदाद्युपकारसंसर्गान्वयात्। नास्ति च भूतार्थवादे; 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादिवाक्यार्थस्य अन्यत्रानन्वयात्। निराकांक्षत्वं वा प्रयोजनवत्त्वं प्रकृते वाक्यार्थस्य बोध्यम्। संसर्गश्च सर्वमतेषु स्वघटकपदार्थप्रतियोगिको वाक्यतात्पर्यलक्षणे निवेश्यः। अन्यथा पदे अतिव्याप्तेः। वस्तुतस्तु संसर्गस्य तादृशस्य निवेशे अखण्डार्थके सोऽयमित्यादिवाक्ये अव्याप्त्यापत्तेः प्रयोजनवद्वाक्यार्थघटको यः पदवृत्तिद्वयप्रतिपाद्योऽर्थस्तत्प्रमाशक्तत्वं वाक्यतात्पर्यं वाच्यम्। अखण्डार्थवाक्ये अखण्डस्यैवार्थस्य प्रयोजनवतो वाक्यार्थस्य घटकः। स एव प्राशस्त्यान्वितवाक्यार्थस्य घटकः। प्राशस्त्य[5]मेकयैवार्थवादवाक्यलक्षणया[6] प्रतिपाद्यते, न तु पदवृत्तिद्वयेनेति न भूतार्थवादे मुख्यत्वापत्तिरिति ध्येयम्। **देवताधिकरणेति।** चतुर्लक्षणीस्थेत्यादिः। तेन द्वादशलक्षण्या-

[1] तात्पर्यविषयवाक्यार्थे. [2] प्रयोजनवत्त्वे च (बा). [3] स्थापनात् श्रुत्या. [4] वाक्यार्थे भूत. [5] प्राशस्त्यान्वित. [6] वादलक्षणया.

**र्थप्रतीत्यर्थमेव लक्षणाङ्गीकारादमुख्यार्थत्वं न स्यात् । न स्याद्यद्यादित्यसदृशो यूप इति वाक्यार्थपर्यवसानं स्यात् । किन्तु गुणवृत्त्या प्रतीतस्यापि वाक्यार्थस्य 'यूपे पशुं बध्नाति' इति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वमस्त्येव । तेनैव नामुख्यत्व-मत्रैवादित्यपदगौणतयेति तत्सिद्धिपेटिकायां सर्वोदाहरणेष्ववा-न्तरवाक्यार्थप्रतीतये गुणवृत्तिप्रकाराः प्रदर्शिता इति द्रष्टव्यम् । कर्मप्राशस्त्यलक्षणा च सर्वार्थवादसाधारणी तत्रास्त्येवेति नामु-ख्यार्थत्वानुपपत्तिः । अत उपपन्नं प्रस्तरादिवाक्यवैषम्यमद्वैत-**

मुक्तन्यायाभावेऽपि न क्षतिः । अध्वरमीमांसकैः भूतार्थवादानामपि स्वार्थे प्रामाण्यं न स्वीक्रियते । तन्मते 'यन्न दुःखेन' इत्यादिस्वर्गादि-फलप्रतिपादकवाक्यानामपि प्रामाण्यं न स्यात्, अर्थधियः प्रमात्वं विनापि स्वर्गस्तुतिधीद्वारा महावाक्यार्थोपकारकत्वसम्भवात् । अथ मानान्तरप्राप्ति-विरोधहीनार्थविषयकत्वेन यन्न दुःखेनेत्यादौ प्रमात्वं बलादायातीति वाच्यम्; तत् 'इन्द्रो वृत्राय' इत्यादावपि समानमित्याशयेनाह— **अयमेवेति** । **पर्यवसानं** तात्पर्यम् । वाचस्पत्यन्यमतेऽपि मुख्यार्थत्वं निर-स्यति—**किन्त्वित्यादि** । **तेनैवेति** । तथाच स्वार्थे मुख्यतात्पर्याभावात् मतान्तरेऽपि न मुख्यार्थतेति भावः । **कर्मप्राशस्त्येति** । इष्टसाधनत्वविध्य-र्थमते बलवदनिष्टाजनकत्वरूपप्राशस्त्यं धात्वर्थे कर्मण्येवान्वितम्; तस्यैव प्रवृत्तिविषयत्वात्, शब्दभावनाया विध्यर्थत्वेऽपि[1] करणेतिकर्तव्यता-विशिष्टार्थभावनायां प्राशस्त्यस्यान्वयात् । उक्तभावनाकरणे धात्वर्थेऽपि तदन्वयोऽस्त्येव । उक्तार्थभावनायां प्राशस्त्यप्रकारशाब्दबोधस्य परं इतिकर्तव्यतात्वेन शब्दभावनायामन्वयः । विवेचितं चेदमस्माभिः सिद्धान्तबिन्दुटीकायाम् । **अस्त्येवेति** । अन्यथा 'विधिना त्वेकवाक्य-त्वात् स्तुत्यर्थेन विधीनां स्युः' इत्यर्थवादाधिकरणोक्तं विध्याकांक्षिता-

[1] विध्यर्थत्वमतेऽपि.

**वाक्यस्य । यच्चोक्तमर्थवादमुख्यार्थत्वाय विधौ न लक्षणेत्येवंपरं शबरस्वामिवचनमिति, तन्न; अश्वप्रतिग्रहेष्टौ 'प्रतिगृह्णीयात्'**

---

र्थबोधकत्वं न स्यात् । न वा अध्ययनविधिविषयत्वं स्यात्, प्रयोजनवदर्थापर्यवसानात् । न हि द्वारभूतो वाक्यार्थो विध्याकांक्षितोऽनाकांक्षितो वा प्रयोजनवान् । न च निष्प्रयोजने साकांक्षे श्रुतेर्मुख्यतात्पर्यम् । अतएव 'अर्थेऽनुपलब्धे तत्प्रमाणम्' इत्यनेन अर्थशब्दितसत्प्रयोजनेऽनधिगत एव तत्तात्पर्यमुक्तमिति भावः । **अश्वप्रतिग्रहेत्यादि ।** "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् सपर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वंप्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्" इत्यनारभ्यश्रुतेष्टिरग्निमत्कर्मसम्बन्ध्यश्वदाननिमित्तिका तादृशाश्वदानाङ्गं वेति पूर्वाधिकरणेन निर्णीतापि दातुः प्रतिग्रहितुर्वेति संशये, यद्यप्युपक्रमाधिकरणन्यायेन दातुरेव सम्भवति, "अनयत् प्रापयत्, देवतां दानसंप्रदानवरुणरूपां जलोदररूपेण परिणतां, आर्छत् प्राप्तवान्, वरुणपाशात् जलोदरात्, गृह्णाति जलोदररूपेण प्राप्नोति" इत्यर्थात्; तथापि मैत्रायणीयशाखायां— "अथैषोऽश्वः प्रतिगृह्यते स वा उभयतोदन्प्रतिगृह्यते निर्बभस्त्यस्येन्द्रियं च पशूंश्च वरुणो वा अश्वो वरुणदैवत्यो यो वा अश्वं प्रतिगृह्णाति वरुणं स प्रदीति तदश्वहविषा यष्टव्यं निर्वरुणत्वाय चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः कपालैरेवैनमाप्नोति यावन्तोऽश्वास्तावन्तः पुरोडशा भवन्ति सर्वत एवैनं मुञ्चति" इति वाक्ये प्रतिग्रहोपक्रमाया एवैतदिष्टेराम्नानात् तदनुरोधेन शाखान्तरीयोक्तवाक्यीयोपक्रमस्थेऽनयदित्यादिपदे प्रतिग्रहलक्षणेति प्रतिग्रहीतुरेवेयमिति प्राप्ते, दातुरेवेयम्, मैत्रायणीयवाक्ये तथावगमेऽपि उक्तवाक्ये प्रबलोपक्रमे लक्षणायां मानाभावात् तद्बलेन

**इति विधौ प्रतिग्राहयेदिति व्यवधारणकल्पनया अर्थवादानुसारेण प्रयोजकव्यापारलक्षणाया अङ्गीकरणात् । तस्माद्विधौ**

---

दातुरिष्टिरित्यत्र बाधकाभावात् मैत्रायणीयवाक्योक्तदूरस्थ[1] कर्मानुवादेन अश्वदानरूपोद्देश्यसम्बन्धबोधनानुपपत्तेः अस्य वाक्यस्य कर्मान्तरविधायकत्वसम्भवात् नामादीनामुपस्थापकानामभावेन शाखान्तराधिकरणन्यायासम्भवात् एतद्वाक्यीयदातुरुपक्रमानुरोधेन[2] मैत्रायणीयवाक्यीयोपक्रमस्यापि प्रयोजककर्तृत्वपरत्वव्याख्यानेन मैत्रायणीयवाक्योक्तकर्मण एव उक्तवाक्ये विधानसम्भवात् मैत्रायणीयवाक्योपक्रमस्यापि दातुरिष्टिपरत्वस्य वक्ष्यमाणत्वाच्च । तस्मादुपक्रमानुरोधेन विधिस्थे प्रतिगृह्णातौ प्रतिग्रहप्रयोजकव्यापारे दाने लक्षणा । अथवा आख्यातेन साक्षात् परम्परासाधारणकर्तृसामान्यमाक्षिप्यते । अन्यत्र साक्षात् तदाक्षेपेऽपि प्रकृते उपक्रमानुरोधेन तदसम्भवात् परम्परया तदाक्षेपः । अथापि साक्षात्कर्तुरौत्सर्गिकापेक्षस्य त्यागेन परम्पराकर्तुराक्षेपो न मुख्य इति लक्षणेति व्यवह्रियते इति तृतीयचतुर्थे चिन्तितम् । **व्यवधारणेति** । प्रयोजकीभूतदातृपरत्वेत्यर्थः । प्रयोजकव्यापारो दानं लक्षणाशब्दस्याक्षेपार्थ[3]कत्वपक्षे बहुव्रीहिणा आदातेति[4] तदर्थः । **विधावित्यादि** । मुख्यतात्पर्यविषयो वाक्यार्थो नान्यशेष इत्यर्थः । नन्वेवं—न चानन्यपरं वाक्यमुपचरितार्थं युक्तम्; उक्तं हि—'न विधौ परश्शब्दार्थः' इतीति भामत्यां 'विधौ विधायकशब्दे परो लक्ष्यश्शब्दार्थो न भवति' इति कल्पतरुव्याख्यानं न युज्यत इति चेन्न; भावानवबोधात्, उपचरितार्थत्वं हि तात्पर्यविषयीभूतब्रह्मात्माभेदान्यार्थबोधकत्वम् । तच्च कर्मविध्यपेक्षितकर्तृस्तुतिबोधकतया उपासनाबोधकतया वा तत्रोक्ताभेदसिद्ध्यननुकूलो लक्ष्योऽर्थो महावाक्ये न सम्भवति; तस्योक्ताभेदपरत्वादित्याशयेन लक्ष्यो नार्थ इत्यनेन

---

[1] वाक्योक्तरूपस्य दूरस्थ. [2] क्रमानुबोधेन. [3] स्यापेक्षार्थ. [4] दातेति.

**तात्पर्यवृत्तिवाक्ये प्रतीयमानवाक्यातिरिक्तोऽन्यः शेषी नास्तीत्येवंपरमेव तद्वचनम् । अतस्सिद्धमद्वैतागमस्य लाक्षणिकत्वेऽपि मुख्यार्थत्वात् प्रत्यक्षबाधकत्वमिति शिवम् ॥**

**इति प्रत्याक्षस्यागमबाध्यत्वम्.**

---

तात्पर्यविषयसिद्ध्यननुकूललक्ष्यो नार्थ इत्युक्तम् । विधायकवाक्ये अन्यशेषो नार्थ इत्युक्ते तु उपासनापरत्वखण्डनं न स्यात् । अतस्तथा नोक्तम् । लक्ष्यमात्रनिषेधे तु स्वसिद्धान्तविरोध एव; महावाक्ये भागत्यागलक्षणास्वीकारात्, प्रतिगृह्णीयादित्यादौ दाने, 'उच्चै ऋचा क्रियते' इत्यादौ ऋगादिपदे ऋग्वेदादौ लक्षणायाः सर्वसम्मतत्वाच्च । **मुख्यार्थत्वात् ।** मुख्यतात्पर्यविषयबोधकत्वात् । **बाधकत्वमिति ।** मुख्यतात्पर्यविषये श्रुतेः प्राबल्यस्य सर्वसम्मतत्वात् वाचस्पतिमत इव मतान्तरेऽपि बाधकत्वमित्यर्थः । यत्तु—"वाक्यशेषप्रमाणान्तरसंवादेत्याद्ययुक्तम्; परीक्ष(क्षा)या [1] अद्वैतश्रुतिसमानप्रामाण्यस्य प्रत्यक्षादिषु सिद्धत्वेन विरोधात् । षड्विधलिङ्गैः गतिसामान्येन चेत्याद्ययुक्तं; अन्योन्याश्रयात् । सिद्धेऽखण्डतात्पर्ये तन्निर्वाहाय अखण्डलक्षणया मानान्तरा[2]विरोधः । मानान्तराविरोधे च सति अखण्डतात्पर्य[3] सिद्धिः । लौकिकवाक्यस्य मानान्तरविरुद्धतात्पर्यकत्वेऽपि वेदवाक्यस्य न्यायगम्यतात्पर्यस्य मानान्तराविरुद्ध एव कल्पनात्तात्पर्यविषयार्थबोधकत्वं मुख्यार्थत्वमित्याद्ययुक्तम्, प्रत्यक्षस्यागमवाक्यबाधकत्वाभावे तत्त्वमस्यादौ भागत्यागलक्षणा, सोमेनेत्यादौ मत्वर्थलक्षणा च न स्यात् । न हि तत्त्वंपदवाच्ययोः सोमयागाद्योश्चाभेदबोधने प्रत्यक्षविरोधात् अन्यदोषः[4] । एवं सन्पदे[5]

---

[1]परीत्या [2]लक्षणाया मानान्तर- [3]अखण्डार्थत्व [4]अन्यशेषः [5]एवमन्यदेव

विचारलक्षणापि न स्यात् । न च तात्पर्यानुरोधात् तत्त्वमादिपदेषु लक्षणा, मानान्तरविरुद्धे तात्पर्यस्यैवाभावात् । किञ्च अन्यशेषत्वस्य अमुख्यत्वरूपत्वे प्रस्तरादिवाक्यमन्यशेषत्वात् अमुख्यमिति हेतुहेतुमत्त्वयोरसङ्गतिः ; अन्यशेषवाक्यार्थबोधके समिधो यजतीत्यादिवेदे तण्डुलान् पचतीत्यादिलौकिकवाक्ये च मुख्यार्थत्वव्यवहारो न स्यात् । अश्वप्रतिग्रहेत्याद्ययुक्तम् ; न हि तत्रार्थवादानुसारेण विधौ लक्षणा, किन्तु उपक्रमप्राबल्यात् । किञ्च तन्त्रसारे मैत्रायणीयशाखायां दात्रुपक्रमतोऽश्विमत्कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयत इत्युक्तत्वेन वचनात् अश्विमत्कर्मदानाङ्गत्वात् दातुरिष्टिर्नार्थवादप्राबल्यात्" इति प्रलपितम् ; तत् परवाक्यार्था[1]नवबोधादेव । तथाहि—अद्वैतश्रुतिप्रत्यक्षयोः प्रामाण्ये मिथ्यात्वेन यदि समे, तदेष्टापत्तिरुक्तैवाचार्यैः । अथ विषयतात्त्विकत्वेन, तदापि तन्निराकृतमेव । षड्विधलिङ्गैरित्यादि युक्तमेव, न्यायाधीनस्य प्रबलश्रुतितात्पर्यनिर्णयस्य दुर्बलमानान्तराविरोधनिरपेक्षत्वात् । श्रुतितात्पर्यनिर्णायकोपक्रमादीनामपि प्राबल्यप्रयोजकं निरवकाशत्वादिकमुक्तं, वक्ष्यते च । अतएव तात्पर्यविषयार्थेत्यादि युक्तमेव ; निर्णीततात्पर्यानुरोधेन तत्त्वमादिपदानामखण्डलक्षणाभ्युपगमात् सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविशेषणयोः सोमयागाद्योरभेदे च निर्णीतश्रुतितात्पर्याभावेन तदंशे प्रत्यक्षाद्यविरोधस्य अपेक्षणीयत्वात् तात्पर्यविषये हि श्रुतिः प्रबलेत्याद्युक्तम् । दर्शनरूपफलसाधनत्वाद्यनुरोधेन 'द्रष्टव्यः श्रोतव्य' इत्यादेर्विचारविधायकत्वनिर्णयात् तदेकवाक्यतया 'तद्विजिज्ञासस्व' इत्यादेः तन्मूलक—'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्य च धात्वर्थनिर्णयात्तदनुरोधाज्जिज्ञासापदे विचारलक्षणा युक्ता । अन्यशेषत्वममुख्यत्वमिति[2] तु परस्य भ्रमः ; अन्यार्थतात्पर्यकत्वममुख्यार्थकत्व[3]मित्यनेन स्वप्रतिपाद्यवाक्यार्थभिन्नतात्पर्यकत्वस्यैव अमुख्यार्थकत्वरूपत्वेना-

---

[1] तच्छाखावाक्यार्था. [2] शेषत्वं मुख्यत्व. [3] कत्वं मुख्यार्थ.

चार्यैरुक्तत्वात् । अतएव यत्र वाक्यार्थोऽन्यशेषत्वेन कल्प्यते, तत्रामुख्यत्वमित्यनेनोक्तामुख्यार्थकत्वे स्वतात्पर्यविषयप्रतीत्युपपादक-वाक्यार्थप्रतिपादकत्वरूपमन्यशेषार्थकवाक्यत्वं हेतुतयोक्तमाचार्यैरपीति अन्यशेषवाक्यार्थेत्याद्युक्तम्[1] । न ह्यंगवाक्यमुख्यार्थत्वे व्यवहारः सम्प्रतिपन्नः । तण्डुलान् पचतीत्यादिकं तु अनन्यशेषत्वात् मुख्यार्थ-मेव । न हि वाक्यार्थस्यान्योपकारकत्वमन्यशेषत्वं; येन तण्डुलपाक-कृतेः भोजनाद्युपकारत्वेन अन्यशेषता स्यात् । किन्तु स्वप्रतिपाद-कतात्पर्यविषयप्रतीत्युपपादकधीविषय[2]त्वम् । तथाच किं पचतीति प्रश्नो-त्तरोक्तवाक्यस्य स्वार्थ एव तात्पर्यात् नान्यशेषत्वम् । यदिचोक्तरूपान्य-शेषत्वं तत्रास्ति, तदा तत्रामुख्यार्थत्वमिष्टमेव । समिदादिवाक्यानां मुख्यार्थत्वप्रकारोऽपि दर्शित एव । न हि तत्रार्थवादेत्यादिकं तु शोभते । अर्थवादानुसारेण विधौ यत्र लक्षणाप्रसक्तिः तत्रैव हि त्वया निषिध्यते । सा चार्थवादस्थोपक्रमाद्यनुरोधेनैवेति तत्र तन्निषेधोसङ्गत एव । तदभावे तन्निषेधस्तु उन्मत्तप्रलापः । मन्मते च मुख्यतात्पर्यविषयस्य वाक्या-र्थस्याताद्दशत्वेन भ्रान्तिमत्पुरुषं प्रति ताद्दशहेतुना अन्यशेषत्वप्रति-षेधकं न विधावित्यादिवाक्यं युज्यते । न च 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इत्युक्तवाक्यान्तर्गतार्थवादस्य[3] प्रतिगृह्णातीत्युप-संहार एव लक्षणा, न तु विधाविति वाच्यम्; विधौ लक्षणां विना दातुरिष्ट्यसिद्धेः । मैत्रायणीयवाक्यगतिस्तूक्तैव । वचनाद्दातुरिष्टौ त्वधि-करणमेव व्यर्थं स्यात् । तन्नसारोक्तवाक्यं तु न युक्तम् । तथाहि—मैत्रा-यणीयोक्तवाक्ये 'यो वा अश्वं प्रतिगृह्णाति वरुणं स प्रदीति तदश्वहविषा यष्टव्यं निर्वरुणत्वाय' इत्यनेनाश्वग्रहीतुरश्वदं प्रति वरुणरूपजलोदरदातृ-त्वोक्तेः अश्वदातुरेव सवरुणत्वप्रतीतेर्निर्वरुणत्वाय तस्यैव यष्टृत्वं प्रतीयते । एवञ्च पूर्ववाक्ये प्रतिगृह्णत इति षष्ठ्यनादरे ग्रहीतारमनादृत्य सोऽश्वोऽस्य

---

[1] त्याद्ययुक्तम्. [2] पादकशब्दविषय. [3] वादस्थ.

## अपच्छेदन्यायवैषम्यभङ्गः

किञ्चापच्छेदन्यायेनाप्यागमस्य प्राबल्यम् । यथा हि 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यधिकरणे उद्गात्रपच्छेद-

दातुरिन्द्रियादीनि निर्बभस्ति भर्त्सयतीत्यर्थः । किञ्च वेदोपक्रमाधिकरणादावग्नेर्ऋग्वेद इत्याद्यर्थवादस्थर्ग्वेदादिरूपोपक्रमाद्यनुरोधेन 'उच्चैर्ऋचा क्रियते' इत्यादिविधिस्थर्गादिपदेषु ऋग्वेदाद्यर्थलक्षणा सर्वसम्मतैवेत्यर्थवादानुरोधेन विधौ न लक्षणेति प्रलाप एव ॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
अक्षस्यागमबाध्यत्वं द्योतितं ध्वान्तनाशकम् ॥

इति प्रत्यक्षस्यागमबाध्यत्वम्.

---

किञ्चापच्छेदेति । "अध्वर्युं विनिष्क्रामन्तं प्रस्तोता सन्तनुयात्तं प्रतिहर्ता, तमुद्गाता, तं ब्रह्मा, तं यजमानः" इति अध्वर्य्वादिकच्छं धृत्वा प्रस्तोत्रादीनां बहिष्पवमानस्तोत्रार्थं ज्योतिष्टोमे गमनमुक्तम् । तत्र विच्छेदे प्रायश्चित्तं—यदि प्रस्तोता अपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गाता अदक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात् । तत्रोभाभ्यां क्रियमाणे विच्छेदे प्रायश्चित्तमस्ति न वेति संशये, उभाभ्यां क्रियमाणस्य एकैककर्तृकत्वेन निर्देशासम्भवात् निमित्ताभावात् तत्र तन्नास्तीति प्राप्ते, क्रियानुकूलकृतिरूपकर्तृत्वस्य प्रत्येकपर्याप्तत्वात् उभयकर्तृकविच्छेदेऽपि निमित्तसत्त्वात्[1] तदस्त्येवेति युगपदुभाभ्यां क्रियमाणविच्छेदेऽपि प्रायाश्चित्तमावश्यकामिति 'विभागश्रुतेः प्रायाश्चित्तं यौगपद्येन विद्यते' इत्यधिकरणे षष्ठपञ्चमे स्थितम् । तदुत्तरं च 'विप्रतिषेधाद्विकल्पः स्यात्' इत्याधिकरणे स्थितम् । प्रतिहर्त्रुद्गात्रोः

---

[1] तत्सत्वात्.

युगपदपच्छेदे प्रायश्चित्तद्वयं समुच्चीयतें, सर्वस्वदानस्य पुनः प्रयोगे कर्तुं शक्यत्वात्। अथवा दक्षिणोत्कर्षविशिष्टपुनःप्रयोगमात्रमुद्गात्रपच्छेद-निमित्तकं, न[1] त्वदक्षिण्यमपि; तस्यार्थिकत्वेनानुवाद्यत्वात्। अतः पूर्वप्रयोगे सर्वस्वदानेऽपि न विरोध इति प्राप्ते, अदक्षिण्यस्य[2] नैमित्तिकत्वाभावेऽपि पूर्वप्रयोगे सर्वस्वदाने दक्षिणोत्कर्षस्याप्यनुपपत्तेः प्रथम-प्रयोगे न सर्वस्वदानम्। नापि पुनःप्रयोगे, प्रतिहर्त्रपच्छेदवति प्रयोग एव तद्विधानात्। अन्यथा एकस्मिन् प्रयोगे प्रतिहर्तुरपच्छेदे क्रतो-स्तद्वत्त्वाविशेषादुत्तरसर्वप्रयोगेषु पाक्षिकतया तदापत्तेः। निमित्तवति प्रयोगे[3] नैमित्तिकस्य दैवादकरणे प्रयोगान्तरेऽपि तदापत्तेः। अतो विरोधाददक्षिण्य[4]सर्वस्वदानयोर्विकल्पः। पुनःप्रयोगमात्रं त्वविरोधाद-दाक्षिण्येन[5] समुच्चीयते। तदपि विकल्प्यत इत्यन्ये। तदुत्तराधि-करणे—'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यत्र स्थितम्। यदा क्रमेणापच्छेदस्तदा तन्निमित्तकयोः विरोधे पूर्वनिमित्तकमेव कार्यं, असञ्जातविरोधित्वात्। अथवा विकल्पः, नैमित्तिकशास्त्रयोः सामान्य-विशेषविषयकत्वादेः अभावेन समबलत्वात्, अनुष्ठानवेलायां पौर्वा-पर्यस्य शास्त्रार्थानिर्णायकत्वादिति प्राप्ते, नैमित्तिकेन सर्वस्वदानेन नित्यस्य द्वादशशतादेरिव परापच्छेदनिमित्तकेन पूर्वापच्छेदनिमित्तकस्य बाधः। नित्यनैमित्तिकशास्त्रयोः पूर्वपरकालप्रवृत्तत्वं पूर्वप्रवृत्तस्य पश्चात्प्रवृत्तिरहितप्रयोगविषयकत्वकल्पना[6]सम्भवश्चेति हि द्वयं पूर्व-परापच्छेदनिमित्तकप्रायश्चित्तशास्त्रयोरप्यविशिष्टम्। तथाच शास्त्रार्थाव-धारणवेलायामेव पश्चात्तनानुष्ठानकालीनयोः पूर्वापरनिमित्तकप्रायश्चित्त-कर्तव्यताबुद्ध्योः[7] पौर्वापर्यमालोच्य व्यवस्थितविषयकत्वकल्पना युक्तैव। न च सञ्जात[8]विरोधित्वेन परविज्ञानस्यानुपपत्तिरिति वाच्यम्; इदं

---

1 त्वदाक्षिण्य. 2 अदाक्षिण्यस्य. 3 निमित्तप्रतियोगे. 4 ददाक्षिण्य. 5 ददाक्षिण्येन. 6 त्वस्य कल्पना. 7 बुद्धेः. 8 असञ्जात.

रजतमिति ज्ञानं बाधित्वा नेदं रजतमिति ज्ञानस्योत्पत्तेः यत्र पूर्वोत्तर. ज्ञानयोः मिथोऽपेक्षणीयता, तत्रैव पूर्वस्य परेण बाधनासम्भवात् पूर्वा[1]-विरुद्धविषयकतया अपरस्योत्पत्तेः पूर्वस्य परोपमर्द[2]कत्वात्; यत्र तु न सा, तत्र पूर्वं बाधित्वाऽपि परोत्पत्तिसम्भवात्, बाधितस्य सञ्जातस्याविरोधि[3]त्वात् परोत्पत्तेर्निर्विघ्नत्वात्। अतएव उत्पन्ने परज्ञानेऽपि न पूर्वज्ञानं भ्रमत्वज्ञापकं,[4] बाधितत्वात्। न च पूर्वस्य प्रथमतः कल्पितमपि भ्रमत्वं पश्चात्परबाधकल्पनया त्यज्यत इति वाच्यम्; परस्य बाधकान्तराभावात् प्रथमकल्पितत्यागे बीजाभावात्। न च पूर्वमेव परं बाधित्वा जायत इति वाच्यम्; पूर्वज्ञानोत्पत्तेः पूर्वं परस्यैवाभावात्, तद्बाधं विनापि पूर्वोत्पत्तिसम्भवेन अन्यथानुपपत्त्यभावात्। यत्तु—"पूर्वज्ञाने विस्मृते तेन परस्य भ्रमत्वकल्पनार्थं पूर्वज्ञानस्मरणं कल्प्यमिति परभ्रमत्वकल्पने गौरवम्; पूर्वभ्रमत्वकल्पनापक्षे तु पूर्वस्मिन् विस्मृतेऽपि न क्षतिः, उत्तरज्ञानविषयस्यैव अनुष्ठानसम्भवात्" इति, तन्न; परज्ञाने विस्मृतेऽपि च तेन पूर्वभ्रमत्वकल्पनाय तद्विषयानुष्ठानाय च परज्ञानस्मृतिकल्पनागौरवं तुल्यम्। तदुत्तरं च–'यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन्' इत्यधिकरणे स्थितम्। यदा प्रतिहर्त्रपच्छेदोत्तरमुद्गात्रपच्छेदः, तदा पुनःप्रयोगे सर्वस्वदानं द्वादशशतं वेति संशये 'यत्पूर्वस्मिन् दास्यन्' इत्यनेन क्रतुस्वभावतो यद्देयं तदुच्यत इति द्वादशशतमेव देयम्। यदा स्वाभाविकं द्वादशशतं प्रतिहर्त्रपच्छेदनिमित्तकं च सर्वस्वं दास्यन्नासीदित्युभयस्यैव प्राप्तत्वाद्विकल्प इति प्राप्ते—द्वादशशतं न दास्यन्नासीत्तस्य[5] सर्वस्वेन बाधितत्वात्। यद्यपि सर्वस्वमप्यदाक्षिण्येन दक्षिणोत्कर्षेण वा बाधितं पूर्वप्रयोगे, तथापि परनिमित्तात् पूर्वं यद्देयत्वेन प्रसक्तं तत्सर्वस्वमेवेति तदेव परनिमित्तो-

[1] पूर्व. [2] परानुपमर्द. [3] संजाताविरोधि. [4] व्यापकं. [5] द्वादशशतं दास्यन्नासीदित्यस्य.

त्तरमपि देयम् । यदा तु प्रतिहर्त्रपच्छेदो जघन्यः तदा पूर्वप्रयोग एव सर्वस्वं देयम्, न तु पूर्वापच्छेदनिमित्तकः पुनःप्रयोगः कार्यः । यद्यपि सर्वस्वदानेन सहादाक्षिण्यस्यैव विरोधः, तथाप्यदाक्षिण्यपुनःप्रयोगयोः समुच्चितयोरेव नैमित्तिकत्वेन एकाभावे इतरस्याप्यभावौचित्यात् 'केशश्मश्रु वपते' इत्यादौ श्मश्रुभावात् पत्नयाः[1] केशवपनाभाववत् । यद्यपि च दक्षिणोत्कर्षस्य पुनःप्रयोगाङ्गतया विधानावश्यकत्वादेव पूर्वप्रयोगे निर्दक्षिणत्वस्यार्थिकत्वाददक्षिणं [2]तमिष्ट्वेत्यनुवादः, तथाप्यनुवादस्य पाक्षिकत्वभयात् निर्दक्षिणत्वलोपे पुनःप्रयोगलोपः । वस्तुतस्तु स नानुवाद; 'तत्र तद्द्यात्' इत्यनेन पूर्वप्रयोगे दातव्यदक्षिणयोः पुनःप्रयोगाङ्गतया विधानेऽपि पूर्वप्रयोगाङ्गकत्रानत्यर्थं पूर्वप्रयोगेऽपि दक्षिणाया आवश्यकत्वेन अदाक्षिण्यस्याप्राप्तत्वात्तद्विधानस्यावश्यकत्वात् । यद्यप्येवमुद्गातृमात्रापच्छेदेन पुनःप्रयोगे ज्योतिष्टोमत्वादेव द्वादशशतादिप्राप्तया 'तत्र तद्द्यात्' इति तत्प्रापकतया न सार्थकम्; तथापि तत्र पूर्वप्रयोगे एकविंशत्यादिक्षिणापक्षकरणेपि पुनःप्रयोगे द्वादशशतादिप्राप्तया तन्निवर्तकत्वेन प्रतिहर्त्रुद्गात्रोः क्रमेणापच्छेदे पुनःप्रयोगे द्वादशशतादिनिवर्तकत्वेन च तत् सार्थकमेव । तथाच पश्चात् प्रतिहार्त्रपच्छेदे पुनःप्रयोगस्य न बाधः । 'केशश्मश्रु वपते' इत्यत्र तु द्वन्द्वसमासेन उपादेयगतत्वेन साहित्यस्योक्तत्वात् तद्विशिष्टमङ्गं; प्रकृते तु अरुणैकहायन्योरिव प्रकृतदेवतापनयदेवतान्तरसंयोगयोरिव प्रत्येकमेव क्रियान्वयान्नैकलोपे परलोपः । न ह्यारुण्यस्य उपांशुयाजे देवतान्तरसंयोगस्य वा अभावे एकहायन्या सोमक्रयस्य नानुष्ठानम् । अपनयस्य लोपेन उपांशुयाजस्य वा अनुष्ठानम् ।[3] 'तण्डुलान् विभजेत्' इत्यपनयवाक्ये हि [4]दर्शहविर्मात्रस्य पूर्वदेवतापनयो विधीयत इत्युपांशुयाजहविषोऽपि तदपनयात् 'अग्नये

[1] श्मश्रुभावापत्त्या. [2] कत्वाद्दक्षिणान्त. [3] उपांशुयाजसवनानुष्ठानम्. [4] दार्शिक.

**निमित्तकादक्षिणयागेन परेण प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य पूर्वसिद्धनिमित्तकस्य बाध इति स्थितम्, तथेहापि उदीच्यागमेन पूर्वस्य प्रत्यक्षस्य बाधः । ननु प्रतिहर्त्रपच्छेद-निमित्तकसर्वस्वदक्षिणयागस्य प्रतिहर्त्रपच्छेदे युगपदपच्छेदे क्रमेणापच्छेदेऽपि प्रतिहर्त्रपच्छेदस्य पश्चात्त्वे च सावकाश इति युक्तः उद्गात्रपच्छेदनिमित्तकादक्षिणयागेन बाधः । अन्यथा 'यदि प्रतिहर्त्रा अपच्छिद्येत सर्ववेदसं दद्यात्' इति शास्त्रमप्रमाणं स्यात् । अतएव 'विप्रतिषेधाद्विकल्पः स्यात्' इत्यधिकरणे द्वयोः युगपदपच्छेदे विकल्प उक्तः । किंच 'यद्युद्गाता**

दात्रे' इत्यादिना उपांशुयाजान्यहविषामेव देवतान्तरसंयोगविधानादुपांशु[1] याजस्याननुष्ठानमुक्तं षष्ठपञ्चमे । दर्शेप्युपांशुयाजमङ्गीकृत्य तस्मात्प्रतिहर्तुः पश्चादपच्छेदे पूर्वप्रयोगे सर्वस्वं दत्वा पुनःप्रयोगेऽपि सर्वस्वं देयम् । यदा तु आद्यप्रयोगे उद्गातुरपच्छेदः, तन्निमित्तकपुनःप्रयोगे च प्रतिहर्तुरपच्छेदः, तदा तत्र सर्वस्वं देयम्; नैमित्तिकत्वेन नित्यदक्षिणा[2]-बाधकत्वात् । न च पुनःप्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात् 'तत्र तद्द्या' दित्यनेन पूर्वप्रयोगाङ्गदक्षिणाया एव उत्तरप्रयोग-वृत्तित्वमात्रविधानात् अङ्गगुणविरोधन्यायेन अङ्गभूतपुनःप्रयोगाङ्गसर्वस्व-दक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गद्वादशशतादि देयमिति वाच्यम्; अपूर्वविधित्वात् दृष्टार्थत्वादिप्रसङ्गेन पूर्वप्रयोगाङ्गदक्षिणाया उत्तर-प्रयोगवृत्तित्वविधानानुपपत्तेः पुनःप्रयोगाङ्गदाक्षिणाया एव पुनःप्रयोग-वृत्तित्वात् । **परेणेति** । परसिद्धनिमित्तकेनेत्यर्थः । **अन्यथेति** । निरवकाशत्वेपि बाध्यत्व इत्यर्थः । **इतरस्मिन्नित्याधिकरण इति** । इत्युक्तमित्यत्रान्वेति । निमित्तकपूर्वप्रयोगस्थेति[3] पाठः । निमित्त-कान्तं सर्वस्वविशेषणम् । प्रयोगस्थेति पाठे तन्निमित्तकसर्वस्वयोगात्

[1] संयोगे विधिना उपांशु. [2] कत्वेन दक्षिणा. [3] प्रयोगस्थेति.

जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् अथेतरस्मिन्' इत्यधिकरणे उद्गात्रपच्छेदस्य प्रतिहर्त्रपच्छेदात्परत्वे उद्गात्रपच्छेदनिमित्तं पूर्वं प्रयोगं दाक्षिणाहीनं सम्पाद्य कर्तव्यज्योतिष्टोमस्य द्वितीयप्रयोगे 'तद्दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात्' इति श्रुत्युक्ता या दाक्षिणा सा पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्य सर्वस्वदित्साया अबाधेन सर्वस्वरूपैव। न तु या ज्योतिष्टोमे नित्या द्वादशशतरूपा। तस्मान्न प्रतिहर्त्रपच्छेदस्य सर्वथा बाधः, किन्तु प्रयोगान्तरे निक्षेप इत्युक्तम्। उक्तं हि टुप्टीकायां 'तस्य प्रयोगान्तरे निक्षेपः' इति। अपिच क्रमिकनिमित्तद्वयेन क्रमेणादक्षिणसर्वस्वदक्षिणयोः प्रयोगयोः सम्भवेन विरोध एव नास्ति। यथा बदरीफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोः। उक्तं ह्यपच्छेदाधिकरणे 'नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तोपजननात् प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्तेऽसति एवं कर्तव्यः' इति। तस्मादापच्छेदन्यायः सावकाशविषयः। अद्वैतागमेन प्रत्यक्षबाधे तु न प्रत्यक्षप्रामाण्यस्या-

---

प्रयोगस्य तन्निमित्तकतोक्तिः। निक्षेप इति। यद्यप्युक्तरीत्या प्रयोगान्तरे निक्षिप्ता तदङ्गमेवेति पूर्वप्रयोगाङ्गत्वं तस्यास्सर्वथा बाधितमेव, तथापि भ्रान्त्यैव परेणेदमुक्तम्। एवं कर्तव्य इतीति। यद्यपि नानेन वाक्येनाविरोधः[1] प्रतिपाद्यते, किन्तु बाध्यबाधकभाव एव। पूर्वं परस्य बाध्यं न तु परं पूर्वस्येति सयुक्तिकमुपपाद्य तस्मात्पूर्वदौर्बल्यमिति सौत्रपदेन तत्र सूत्रकारस्वारस्य[2] मुक्त्वा नैमित्तिकेन नित्यबाधं दृष्टान्त[3] यितुं शास्त्रदीपिकादौ प्रकृतवाक्यस्य उक्तत्वात्। अतएव नित्यमित्याद्यग्रिमग्रन्थो दृष्टान्तबोधकः। तथाच निमित्तं यत्र न जातं[4] तत्रान्यथा कर्तव्योपि यत्र यज्जातं तत्र अन्यथा

---

[1] वाक्येन विरोधः. [2] कारस्याशय. [3] सदृष्टान्त. [4] यत्र जातं.

वकाशोस्तीति चेन्न; उद्गात्रपच्छेदाभावे युगपदुभयापच्छेदे प्रतिहर्त्रपच्छेदस्य पश्चात्त्वे च ज्योतिष्टोमद्वितीयप्रयोगे प्रतिहर्त्रपच्छेदनिमित्तसर्वस्वदक्षिणयागप्रतिपादकशास्त्रस्य सावकाशत्ववत् व्यावहारिकप्रामाण्ये प्रत्यक्षस्यापि सावकाशत्वात् तत्रैकप्रयोगे विरोधवदत्रापि तात्त्विकत्वांशे विरोधात्। अतएव सगुणसप्रपञ्चश्रुत्योः निर्गुणनिष्प्रपञ्चश्रुतिभ्यां अपच्छेदन्यायेन बाध इति सुष्ठूक्तम्। तदुक्तमानन्दबोधाचार्यैः—

तत्परत्वात्परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं नायं सर्प इत्यादिवाक्यवत्॥

इति। ननु मानान्तराविरोधे श्रुतेस्तत्परत्वमसिद्धम्, परत्वं तु प्रमानन्तरभ्रमे व्यभिचारि दृश्यते। 'न क्वा सेट्' इति परं प्रति 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति पूर्वमपि बाधकम्। निर्दोषत्वं त्वर्थान्तरप्रामाण्येनान्यथासिद्धम्। तदुक्तम्—

तत्परत्वमसिद्धत्वात् परत्वं व्यभिचारतः।
निर्दोषताऽन्यथासिद्धेः प्राबल्यं नैव साधयेत्॥

इति चेन्न; प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं, श्रुतेस्तु, तात्त्विक-

क्रियत इत्यर्थकोक्तवाक्ये नित्यनैमित्तिकशास्त्रयोः व्यवस्थितविषयकत्वसम्भव एव बाध्यबाधकभावप्रदर्शनायोक्तः। बदरफलदृष्टान्तस्तु विषमः; तत्र कालभेदावच्छेदेन श्यामरक्तत्वज्ञानयोः बाध्यबाधकत्वात्। प्रकृते चैकस्मिन् प्रयोगे एकदा सर्वस्वदक्षिणात्वादक्षिणात्वज्ञानयोः बाध्यबाधकत्वावश्यकत्वात् यदा दाक्षिणा प्रसक्ता तदा निर्दक्षिणत्वस्य शास्त्रार्थ[1]त्वात् तथापीदमपि भ्रान्त्यैव परेणोक्तम्। **पश्चात्त्वे चेति।** चकारो द्वितीयप्रयोगे इत्यस्योत्तरं योज्यः। **द्वितीयेति।** प्रतिहर्त्रपच्छेदोत्तरजातोद्गात्रपच्छेदनिमित्तकेत्यादिः। परोक्तिमभ्युपगम्येदम्,

1 अशास्त्रार्थ.

**मिति विरोधाभावेन तत्परत्वसिद्धेः। परशब्देन च मानान्तरबाधितपरत्वं विवक्षितम्। तेन प्रमानन्तरभ्रमे न व्यभिचारः, तस्य तदुत्तरभाविमानबाधितत्वात्। 'न क्त्वा सेट्' इत्यस्य तु पाठतः परत्वेऽपि स्वभावसिद्धकित्त्वस्यानेन अपाकरणं विना पुनस्तत्प्रातिप्रसवार्थं मृडमृदेत्यादेः अप्रवृत्तेः तदपेक्षया अर्थतः**

---

द्वितीयप्रयोगस्थदक्षिणायाः पूर्वप्रयोगाङ्गत्वे सर्वदा बाधस्योक्तत्वात्। **अर्थतः पूर्वत्वमिति।** तथाच पाठलब्धादर्थलब्धस्य पौर्वापर्यस्य बलवत्त्वात्तेनैव व्यवस्थेति भावः। यत्तु 'व्यावहारिकप्रामाण्यमादाय प्रत्यक्षस्य सावकाशस्येोक्ति[1]र्न युक्ता, प्रामाण्यमात्रस्य तात्त्विकस्य स्वीकारात्, इति, तत्तुच्छम्; श्रुतिप्रत्यक्षयोः तात्त्विकप्रामाण्यविरोधे श्रुतेरतात्त्विकप्रामाण्यस्यासम्भवात् प्रत्यक्षस्यैव तदित्युक्तत्वात्, तत्र प्रतिकूलतर्कमप्रदर्श्य त्वदस्वीकारमात्रस्याप्रयोजकत्वात्। अतएव तत्परत्वादित्यादावसिद्धिः, प्रत्यक्षबाधिते तात्पर्याभावात्, द्वितीयहेतावपि मानान्तरबाधितेति विशेषणासिद्धिः। श्रुतेः प्रत्यक्षबाधिता[2]र्थकत्वादित्यपि तुच्छम्; प्रत्यक्षस्यानिश्चिततात्त्विकप्रामाण्यकत्वेन व्यावहारिकप्रामाण्ये सावकाशत्वेन च तात्त्विकप्रामाण्यं विना निरवकाशत्वादियुक्तश्रुतावबाधकत्वस्योक्तत्वात्। अन्यथा अन्यतरस्यैव तात्त्विकप्रामाण्यनिश्चयेन बाधकत्वनिश्चये तत्परत्वरूपापच्छेदन्यायानुसरणस्य वैफल्यात्। तस्मात्पररीत्या अन्य[3]तरस्यापि तदनिश्चये मद्रीत्या श्रुतेः तन्निश्चयेऽपि प्रकारान्तरेणापि श्रुतौ तन्निश्चयाय तदनुसरणात्परप्रलापोऽनव[4]काशः। यद्यपि 'मृड मृद' इत्यादिना पूर्वेणाप्यपवादन्यायेन 'न क्त्वा सेट्' इत्यस्य बाध इति, तदपि तथा, मृडेत्यादेः पूर्वप्रवृत्तिवैयर्थ्यस्योक्तत्वात्। यत्र हि अपवादशास्त्रार्थः उत्सर्गशास्त्रं विनापि सिद्धस्तत्र अपवादशास्त्रं पूर्वं

---

1 त्वोक्ति. 2 बाध्या. 3 तदन्य. 4 प्रलापानव.

पूर्वत्वमेव । अपवादापवादे उत्सर्गस्यैव स्थिरत्वादतो निर्दोषत्वमपि नन्यथासिद्धम् । तात्पर्यविषय एव प्रामाण्यस्याभ्युपेयत्वादित्यबोधमात्रविजृम्भितमपच्छेदन्यायवैषम्याभिधानमिति॥

इत्यपच्छेदन्यायवैषम्यभङ्गः

---

## मिथ्यात्वानुमितेः शैत्यानुमितिसाम्यभङ्गः

ननु यदि प्रत्यक्षबाधितमप्यनुमानं साधयेत् तदा वह्न्यनौष्ण्यमपि साधयेत् । तथाच कालात्ययापदिष्टकथा सर्वत्रोच्छिद्येत। न चौष्ण्यप्रतियोगिकाभावे साध्ये पक्ष एव प्रतियोगिप्रसिद्धिरिति तत्र बाधस्यावकाशः । प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्षसिद्धम्, तदविरुद्धं च मिथ्यात्वम्, तस्य पारमार्थिकसत्त्वविरोधित्वादतो न व्यावहारिकसत्त्वग्राहकेणाध्यक्षेण बाध्यत

---

प्रवर्तते। तत्रापि न नियमः, प्राकरणिकहोमादिबोधकत्वेन पदादिशास्त्रस्य अनारभ्याधीताहवनीयादिशास्त्रात्पूर्वप्रवृत्तत्वेप्यतादृशयोरुत्सर्गापवादशास्त्रयोः प्रवृत्तिक्रमे नियामकाभावेन युगपत्प्रवृत्तेः । तस्मात् सामान्यशास्त्रस्य सावकाशत्वादिकमेवानवकाशत्वादिमदपवादशास्त्रबाध्यत्वे बीजं, न तु पूर्वप्रवृत्तत्वमिति प्राकरणिकहोमादिबोधकत्वेन पदादिशास्त्रस्य यथा पूर्वप्रवृत्तिः, तथा मृडेत्यादेः किन्त्वनिषेधनिषेधरूपत्वात् किन्त्वनिषेधप्राप्तिसापेक्षतया 'न क्त्वा' इत्यादिप्रवृत्त्युत्तरमेव प्रवृत्तिरिति स्फुट एव ते परवाक्यार्थाबोधः ॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
अपच्छेदन्यायसाम्यं दुरन्तध्वान्तनाशनम् ॥

इत्यपच्छेदन्यायवैषम्यभङ्गः.

---

इति वाच्यम्; वह्निविशेषे औष्ण्याभावानुमाने शैत्यानुमाने वा तदभावात्। पक्षातिरिक्तस्य प्रतियोगिप्रसिद्धिस्थलस्य तत्र सत्त्वात्। न च यत्र प्रत्यक्षं प्रबलं तत्र बाधव्यवस्था, न चात्र तथेति न बाध इति वाच्यम्; प्रकृतेऽप्यौष्ण्यप्रत्यक्षसमकक्ष्यस्य प्राबल्य-प्रयोजकस्य विद्यमानत्वात्, अनौष्ण्यानुमितेः मिथ्यात्वानुमितेश्च समानयोगक्षेमत्वात्। न च मिथ्यात्ववादिनां प्रतिपन्नोपाधा-वौष्ण्यनिषेधग्राह्यनुमानेन मिथ्यात्वानुमितेः समत्वमिष्टमेवेति वाच्यम्; औष्ण्यानौष्ण्ययोः भावाभावरूपतया तदनुमिति-साम्येऽपि शैत्यानुमितिसाम्यस्यानभ्युपगमात्, शैत्यस्यौष्ण्या-भावरूपत्वाभावात्। तस्मात् बाधस्य दोषता वा त्याज्या, औष्ण्यप्रत्यक्षायजमानत्वप्रत्यक्षादेः सत्त्वप्रत्यक्षापेक्षया विशेषो वा वक्तव्यः। न चौष्ण्यप्रत्यक्षं परीक्षितोभयवादिसिद्धप्रामाण्यं, सत्त्वप्रत्यक्षं तु न तथेति विशेष इति वाच्यम्; सत्त्वप्रत्यक्षेऽपि प्रामाण्यासम्मतौ हेत्वभावात्। परीक्षायास्तुल्यत्वादिति चेन्मै-वम्; विरुद्धार्थग्राहित्वेन विशेषात्-प्रत्यक्षासिद्धायजमानत्वौष्ण्यादि-वच्छब्दलिङ्गग्राह्ययजमानत्वानौष्ण्याद्यपि व्यावहारिकमिति सम-त्वात् प्रत्यक्षेण बाध्यते। प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्ष-सिद्धं, तद्विरुद्धं च न मिथ्यात्वम्, तस्य पारमार्थिकसत्त्वविरो-धात्। अतो न व्यावहारिकसत्त्वग्राहकेण अध्यक्षेण बाध्यते। नन्वेवं वदतस्तव को वा अभिप्रायः? किं तात्त्विकविषयत्वात् बाधकेनैव[1] मिथ्यात्वानुमानादेर्न बाध्यता? उत सत्त्वमिथ्यात्व-ग्राहिणोः व्यावहारिकतात्त्विकविषययोः परस्परविरुद्धविषयत्वा-

---

वह्निविशेष इति। यत्र वह्नौ नानुमात्रा औष्ण्यमुपलब्धं

---

[1] बाधकतैव.

भावात् न बाध्यबाधकभावः? अन्त्येऽपि किमध्यक्षसिद्धव्यावहारिकसत्त्वमगृहीत्वैव तदसिद्धस्य तात्त्विकसत्त्वस्यैव अभावं गृह्णात्यनुमानादि? उत प्रत्यक्षविषयीकृतस्यैव तात्त्विकमभावम्? नान्त्यः; प्रत्यक्षविषयाभावग्राहिणि तद्बाधकत्वोक्त्ययोगात्। न द्वितीयः; प्रत्यक्षागृहीतप्रतिषेधकत्वेन अप्रसक्तप्रतिषेधापत्तेः, प्रत्यक्षविषयस्य तात्त्विकत्वापत्तेश्च। न प्रथमः; उपजीव्यप्रत्यक्षविरोधेन अनुमित्यादिविषयस्य तात्त्विकत्वासिद्धेरिति चेन्न; प्रथमे द्वितीये च पक्षे अनुपपत्त्यभावात्। तथाहि—प्रथमे पक्षे न तात्त्विकत्वासिद्धिः, यस्मात् 'इदं रजतम्' इत्यनेन 'नेदं रजतम्' इत्यस्य बाधादर्शनात् परीक्षितमेव बाधकमभ्युपेयम्। परीक्षा च प्रवृत्तिसंवादादिरूपा व्यवहारदशायामबाध्यत्वं विना अनुपपन्ना तद्दशाबाधग्राहिणं बाधते नाद्वैतश्रुत्यनुमानादिकमित्युक्तमेव। द्वितीयेऽपि पक्षे नाप्रसक्तप्रतिषेधः, परोक्षप्रसक्तेस्सम्भवात्। यत्तु केचिदात्मनि तात्त्विकसत्त्वप्रसिद्ध्या प्रसक्तिमुपपादयन्ति, तन्न; न हि प्रतियोगिज्ञानमात्रं प्रसक्तिः। किं तर्हि? निषेधाधिकरणकप्रतियोगिज्ञानम्। न चात्मा निषेधाधिकरणम्। तस्मात्परोक्षप्रसक्तिरेव दर्शनीया। अथवा मा भूत्प्रसक्तिः। अभावप्रत्यक्षे हि संसर्गारोपत्वेन सा उपयुज्यते। शब्दानुमानयोस्तु तस्याः क्वोपयोगः? न चाप्रसक्तौ निषेधवैयर्थ्यम्; अनर्थनिवृत्तिरूपस्य

---

तत्रेत्यर्थः। क्वोपयोग इति। ननु प्रसक्तिं विना प्रतिषेधे 'न तौ पशौ करोति न सोमे' इत्यादौ प्रतिषेधास्वीकारो न युज्यते; तथाहि—दशमाष्टमे 'अपूर्वे त्वर्थवादस्स्यात्' इत्यधिकरणे स्थितं—'आज्यभागावग्नीषोमाभ्यां यजति' इत्याज्यभागौ विधाय 'न तौ पशौ करोति न सोमेऽध्वरे' इति दर्शपूर्णमासप्रकरणस्थवाक्ये न तौ पशौ' इति न पर्युदासः; स हि पशुभिन्ने तौ करोतीत्येवंरूपो न। तथा सति

दर्शपूर्णमासोद्देशेन तयोर्विधायकवाक्येन प्रकृतवाक्यमवश्यमेकवाक्यतापन्नमिति व्यर्थं स्यात् । न हि तेन तयोरतिदेशः पशौ निवर्तते । अथ पशुप्रकरणस्थाज्यभागप्रापकातिदेशेन एकवाक्यतामङ्गीकृत्य 'आज्यभागान्यत् प्रकृतिवत्[1] कुर्यात्' इत्येवं पर्युदासो वाच्यः, भिन्नप्रकरणस्थयोः पदैकवाक्यत्वासम्भवेऽपि वाक्यैकवाक्यतासम्भवात्; सोऽपि न, अभावशक्तस्य नञो भिन्ने लक्षणाद्यापत्तेः प्रतिषेधस्यैव युक्तत्वात् । न च प्रतिषेधपक्षेऽपि विकल्पावश्यकत्वेन अष्टदोषतादोषः; फलमुखत्वात्, पर्युदासपक्षेपि तदावश्यकत्वाच्च । पशुप्रकरणे हि "अग्नये आज्यस्यावदीयमानस्य अनुब्रूहि, सोमायाज्यस्यावदीयमानस्यानुब्रूहि, अग्नय आज्यं प्रस्थितं प्रेष्य, सोमायाज्यं प्रस्थितं प्रेष्य[2]" इत्यादि प्रैषाणामुक्तत्वात्तेषां च लिङ्गा[3]दाज्यभागमात्राङ्गत्वादाज्यभागयोः पशावनुष्ठानं प्रतीयत इति विहितपर्युदस्तत्वात् विकल्पावश्यकत्वम् । तस्मात्प्रतिषेध एवासौ, तदर्थवादस्तु न सोम इति । यथा सोमे आज्यभागौ न कार्यौ तथा पशावित्याज्यभागयोः निन्दा । न च—यद्यपि सोमस्यापूर्वत्वेन आज्यभागयोः तत्राप्रसक्त्या न सम्भवति प्रतिषेधः, तथापि तदङ्गदीक्षणीयादिद्वारा तत्प्रसक्त्या सम्भवतीति वाच्यम्; तथा सति तत एव सोमाङ्गाग्नीषोमीयपशौ तद्विकृतिपश्वन्तरे च निषेधसिद्ध्या 'न पशौ' इत्यस्य वैयर्थ्यापत्तेः, पूर्वनिषेधैकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वाच्च । तस्मान्नान्तरिक्ष इत्यादिवत् न सोम इत्यनुवाद इति तदिदं विरुद्ध्येत, प्रसक्तिं विनापि सोमे प्रतिषेधसम्भवात्—इति चेन्न; प्रतिषेधस्य मानान्तरप्राप्तत्वान्निष्प्रयोजनत्वाच्च तात्पर्याविषयत्वेन [4] विध्यपेक्षितस्तुतौ न सोम इत्यादेः तात्पर्येपि प्रपञ्चे तात्त्विकत्वाभावस्य[5] वादिविप्रतिपत्त्या सन्दिग्धत्वेनाप्रा[6]प्तत्वात् निष्प्रपञ्चब्रह्मज्ञानार्थत्वेन

---

[1] प्रकृताविव. [2] प्रैष्य. [3] देवतालिङ्गा. [4] र्याविषयत्वे निषेधनिरन्तरायां विध्यपेक्षित. [5] स्वभावस्य. [6] त्वेन प्रा.

सप्रयोजनत्वाच्च तत्रैव श्रुतेस्तात्पर्यसम्भवेन बोधकत्वात्। यदि हि निषेधधीः प्रसक्तिसापेक्षा स्यात्, तदा नान्तरिक्ष इत्यादि न सोम इत्यादि वा नित्यानुवादोऽपि न स्यादिति द्वारीभूतवाक्यार्थाबोधे स्तुति-निन्दाबोधोपि न स्यात्। तदबोधेऽपि तद्बोधे 'गुणवादस्तु' इति सूत्रेण गौणार्थतापि बाधितार्थवादानां नोच्येत। तस्मान्निषेधतात्पर्य-मेव निषेधप्रयोजनवत्त्वाय प्रसक्तिसापेक्षम्। प्रयोजनवत्त्वं च प्रकृते तां विनापीति नानुपपत्तिः। न च 'तमेवं विद्वानमृतः' इत्यादिना सगुणस्यैव मोक्षहेतुज्ञानविषयत्वलाभान्निष्प्रपञ्चब्रह्मज्ञानं व्यर्थमिति वाच्यम्; 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते सोयमात्मा स विज्ञेयः' इत्यादिभिः शुद्धस्यैव तल्लाभात् तदनुसारेणैवंपदस्य शुद्ध-बोधकत्वात्। सगुणबोधकत्वेपि 'तमेव विदित्वाऽतिमृत्युमेति' इत्या-द्यनुसारेण तज्ज्ञानस्य स्वसाध्यचित्तैकाग्र्याधीनशुद्धज्ञानद्वारा मोक्ष-हेतुत्वपरमुक्तवाक्यमित्युपपत्तेः। वक्ष्यते चैतदाचार्यैरेव विस्तरेण द्वितीय-परिच्छेदे। एतेन—न पशावित्यादौ प्रतिषेधात् प्रसक्तेरावश्यकतया विकल्पस्थापनात् प्रसक्तिं विना ना भावधीरित्यपास्तम्। विकल्पो हि तत्र न निषेधबुद्धेः, प्रसक्तिसापेक्षत्वात्; किन्तु निषेधतात्पर्यस्य। अथ तस्य तत्सापेक्षत्वं, ततो विकल्पो वा कथमिति चेत्, प्रसक्तिर्हि यदि रागाधीना, तदापि रागविषयान्नित्यनिवृत्तिरूपप्रयो-जनवत्त्वेन निषेधे तात्पर्यम्; यदि शास्त्राधीना, तदापि तया तद्विषये जायमानप्रवृत्तेः पाक्षिकत्वसिद्धिरूपप्रयोजनवत्त्वेन निषेधे तात्पर्यम्। तादृशप्रयोजनवत्त्वानिश्चयेन निश्चीयमानं तात्पर्यं तत्सापेक्षमुक्तपाक्षि-कत्वसिद्ध्या च विकल्पस्यापि सिद्धिः। यद्यपि न तौ पशावि-त्यादिनिषेधशास्त्रं प्रत्यक्षं विशेषविषयकत्वादिमच्च; तथाप्यतिदेशादि-रूपस्य सामान्यविषयकत्वादिमतः प्रसञ्जकशास्त्रस्य न सर्वदा बाधकं, उक्तरीत्या तदुपजीव्यनिर्णीततात्पर्यकत्वात्। तस्यात्यन्तिकाबाधे च

स्व [1] मप्रमाणं स्यात् । अतस्तदांशिकबाधेनोक्तपाक्षिकत्वासिद्धिः । पदादिविशेषशास्त्रं तु आहवनीयादिसामान्यशास्त्रमनुपजीव्यैव प्रयोजनवदर्थशेषीभूतस्वार्थपरत्वेन निश्चीयत इति न तत्सापेक्षतया विकल्पः । न चाज्यभागाभाववाक्यस्यापि प्रयोजनवत्पश्वङ्गपरत्वेन ग्रहणसम्भवान्नोक्तरीत्या प्रसक्तिसापेक्षत्वमिति वाच्यम् ; आज्यभागाभावेऽपीतराङ्गैः पशूपकारस्सिध्यति, फलभूम [2] कल्पनाच्चाज्यभागयोरपि प्रवृत्तिः पाक्षिकीत्यस्यैवार्थस्य निषेधबलात्कल्पनोपपत्तौ उक्ताभावस्याङ्गत्वे मानाभावात्, तत्स्वीकारेऽपि निषेधे स्वतस्सिद्धप्राप्तेः [3] तात्पर्यविरोधिन्या ह्ानाय [4] शास्त्रीयप्रसक्तेरवश्यमुपजीव्यत्वाच्च । यत्तु–"विधिस्थल इव निषेधस्थलेऽपि सकलकारकविशिष्टभावनाया मुख्यविशेष्यत्वात् विधिप्रयोज्याभावस्य प्रकारतया तत्रान्वयादाज्यभागकरणकपशुकर्मकभावनात्वेन प्राप्तिर्निषेध [5]-स्योपजीव्यात्; तथाच 'न कळञ्जं भक्षयेत्' इत्यादौ विशिष्टभावनाप्रसक्तेः मूलीभूतेष्टसाधनत्वज्ञानस्य लौकिकत्वेन श्रौतनिषेधबाध्यत्वेऽपि [6] न तौ पशावित्यादावुक्तभावनाप्राप्तिमूलीभूतेष्टसाधनत्वज्ञानं तथा सम्भवति, शास्त्रीयत्वादिति पाक्षिकबाधेन विकल्पः । 'न तौ सोमे' इत्यादौ तु सकलकारकविशिष्टभावनाया अप्रसिद्धत्वात् उक्तान्वयासम्भवादन्यथाऽन्वयः" इति मतं, तत्र क्वचिदन्यथान्वयावश्यकत्वे उक्तान्वयकल्पनया उपजीव्यत्वकल्पने मानं चिन्त्यम् । यत्तु—'परोक्षप्रसक्तयुक्तिरयुक्ता ; सा हि नानुमानेन, श्रुत्याद्यननुगृहीतस्यानुमानस्यार्थासाधकत्वात् । न श्रुत्या, विकल्पापत्तेः' इति, तन्न ; अर्थासाधकत्वं यद्यर्थाप्रमापकत्वं, तदा तदिष्टं ; निषेधश्रुतितदुपजीव्यानुमानाभ्यां बलवद्भ्यां बाध्यत्वात्, उपजीव्यस्यापि लौकिकप्रमाणस्य श्रुत्या बाधदर्शनात् । यद्यनुमित्यजनकत्वं, तदा

---

[1] कबाधे च स्वय. [2] फलभ्रम. [3] स्सिद्धत्वात्प्राप्तेः. [4] विरोधिनाहवनीय. [5] प्राप्तनिषेध. [6] वाच्यत्वेऽपि.

**प्रयोजनस्य विद्यमानत्वात् । न च प्रत्यक्षविषयतात्त्विकत्वापत्तिः, तद्विषयाधिकरणस्यैव पारमार्थिकत्वव्यतिरेकस्य बोधनात् । तथाच न काप्यनुपपत्तिः । तदुक्तं खण्डनकृद्भिः—**

**पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।**
**विरोधादुपजीव्येन न बिभेति कदाचन ॥**

**इति । नन्वेवमप्यनौष्ण्यं तात्त्विकमिति तदनुमितिरपि न बाध्येत व्यावहारिकौष्ण्यग्राहिणा अध्यक्षेण । एवंच 'आदित्यो यूपः' इत्यादावपि—**

**तात्त्विकादित्यतां यूपस्याश्रित्य शरणं श्रुतिः ।**
**विरोधादुपजीव्येन न बिभेति कदाचन ॥**

**इत्याद्यपि स्यादिति चेन्न; अनौष्ण्यं तात्त्विकं स्यादिति कोर्थः ? यदि तत्त्वत औष्ण्यं नास्तीत्यर्थः, तदा अद्वैते पर्यवसानादिष्टा-**

---

तत्र बाधका[1]नवतारे तत्सम्भवात् श्रुत्या प्रसक्तिपक्षेऽपि न विकल्पः । 'विश्वं सत्यम्' इत्यादिवक्ष्यमाणश्रुतेस्स्तुतितात्पर्यानवधारण-[illegible] विश्वतात्त्विकताप्रसञ्जिकायाः तदवधारणे तात्पर्यविषय-स्तुतिद्वारभूतविश्वव्यावहारिकसत्यताबोधकत्वनिश्चयेन निषेधश्रुत्यपेक्षया न्यूनबलवत्त्व[2]निश्चयादिति ध्येयम् । **व्यतिरेकस्य बोधनादिति ।** ननु प्रातिभासिके व्यावहारिकत्वनिषेधे प्रातिभासिकत्वस्य व्यावहारिकत्ववत् व्यावहारिके प्रपञ्चे तात्त्विकत्वनिषेधे व्यावहारिकत्वं तत्र तात्त्विकं स्यादिति चेन्न; व्यावहारिकत्वस्यापि प्रपञ्चान्तःपातेन तत्रापि तात्त्विकत्वनिषेधात् । न चोपजीव्यप्रसक्तिविरोधात् श्रुतेर्निषेधाप्रमापकत्वमिति वाच्यम्, उक्तरीत्या प्रसक्तेरनुपजीव्यत्वादुपजीव्यत्वेऽपि लौकिकत्वेन सम्भावितदोषत्वात्, ज्ञानमात्रस्योपजीव्यत्वेन तात्त्विकप्रामाण्य-

[1] बाधा. [2] वत्त्वा.

पत्तिः । यदि व्यवहारतोऽपि नास्तीति, तदा व्यवहाराविसंवादादिरूपपरीक्षितत्वविशिष्टमौष्ण्यप्रत्यक्षं बाधकमिति नानौष्ण्यस्य तात्त्विकत्वासिद्धिः । एतेन शैत्यानुमानं व्याख्यातम् । एवमादित्ययूपभेदस्य तत्त्वतो व्यवहारतो वा निषेधे योज्यम्; श्रुतेरन्यशेषतया आदित्ययूपाभेदपरत्वाभावेन परीक्षितप्रत्यक्षविरोधेन गौणार्थतया स्तावकत्वोपपत्तेश्च । अतएव 'तात्त्विकादित्यतां यूपस्य' इत्यादिना अद्वैतश्रुतेः 'आदित्यो यूपः' इत्यादिश्रुतिसाम्यापादनमपास्तम् । न चानुमितिसिद्धमिथ्यात्वग्राहकत्वे सत्यद्वैतश्रुतिरनुवादिका स्यत्, यथा 'अग्निर्हिमस्य भेषजम्' इत्यादिश्रुतिः प्रमाणान्तरगृहीतहिमनिवारणशक्त्यनुवादिकेति वाच्यम्; स्वस्वचमत्कारानुसारिणोऽनुमानस्य सकलसाधारण्याभावेन तस्य श्रुत्यनुवादकत्वाप्रयोजकत्वात् । तदुक्तं 'तर्काप्रतिष्ठानात्' इत्यत्र वाचस्पतिमिश्रैः—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥

---

विशिष्टस्यानुपजीव्यत्वान्निषेधबाध्यत्वसम्भवात् । श्रुतेस्तु निर्दोषत्वेन तदधीनप्रसक्तेर्व्यावहारिकप्रामाण्यस्यावश्यकत्वेन, व्यावहारिकनिषेधबोधकेन 'न तौ पशौ' इत्यादिना नात्यन्तबाध[1] इत्युक्तप्रायत्वात् । व्यवहारतोऽपीति । तथाच व्यावहारिकौष्ण्यविरोधित्वं व्यावहारिकत्वपर्यवसन्नमनौष्ण्यस्य स्यादित्यर्थः । तात्त्विकत्वसिद्धिः व्यावहारिकौष्ण्यविरोधित्वासिद्धिः । स्वस्वचमत्कारानुसारिण इति । स्वस्वमात्रेण प्रमात्वेन गृह्यमाणस्येत्यर्थः । तथाच यस्य वादि[2]प्रत्यनुमानादिना अनुमानेष्वप्रामाण्यशङ्का, तं प्रति तन्निवृत्त्यर्थमपेक्षणीया श्रुतिः नानु-

---

[1] नान्त्यबाध. [2] वादिनः.

इति । दृष्टान्तीकृतश्रुतौ तु हिमनिवृत्तिकारणताया वह्नौ सर्वसाधारणप्रत्यक्षार्थापत्तिभ्यां अवसेयत्वाद्वैषम्यम् । तस्मान्मिथ्यात्वानुमानस्य न वह्निशैत्यानुमितिसाम्यम् ॥

इति मिथ्यात्वानुमानस्य शैत्यानुमितिसाम्यभङ्गः

---

## प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे बाधकम्

किञ्च परीक्षितत्वेनैव प्राबल्यं, नोपजीव्यत्वादिना । अनुमानशब्दबाध्यत्वस्य प्रत्यक्षेऽपि दर्शनात् । तथाहि—इदं रजतमिति प्रत्यक्षस्य अनुमानाप्तवचनाभ्यां नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन 'गौरोऽहम्' इत्यस्य 'अहमिहैवास्मि सदने जानानः' इत्यस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य च अनुमानागमाभ्यां 'पीतश्शङ्खस्तिक्तो गुडः' इत्यादेश्चानुमानाप्तवचनाभ्यां बाधो दृश्यते । ननु साक्षात्कारिभ्रमे साक्षात्कारिविशेष-

---

वादिका । श्रुतितात्पर्यं तु अन्यत एव निर्णीतमिति भावः । नन्वेवं परं प्रति नानुमानमुपन्यसनीयं, परस्याविश्वासादिति चेन्न; अविश्वस्य ब्रुवताऽपि[1] परेण दूषणानुपन्यासे विजयस्य जल्पकथास्थलीयानुमानफलस्याव्याहतत्वात्, वादकथायामपि शङ्काबीजाभावात् निर्दोषेऽनुमाने नाविश्वासः[2] । शङ्काबीजसत्त्वे तु नोपन्यस्यत एवानुमानम्, उपन्यस्यापि तच्छङ्कापसारणं श्रुत्या वा क्रियत इत्यदोषात् ॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
मिथ्यात्वशैत्यानुमयोरसाम्यं ध्वान्तभञ्जनम् ॥

इति मिथ्यात्वानुमते शैत्यानुमितिसाम्यभङ्गः.

---

1 अविश्वसताऽपि. 2 कोऽविश्वासः ?

दर्शनमेव विरोधीत्यभ्युपेयम्, अन्यथा परोक्षप्रमाया अपरोक्षभ्रमनिवर्तकत्वोपपत्तौ वेदान्तवाक्यानामपरोक्षज्ञानजनकत्वव्युत्पादनप्रयासो व्यर्थस्स्यादिति चेन्न; 'नायं सर्पः' इत्यादिवाक्यादिना सविलासाज्ञाननिवृत्त्यभावेऽपि भ्रमगताप्रमाणत्वज्ञापनेन भ्रमप्रमाणत्वबुद्धेः तद्विषयसत्यताबुद्धेश्च निवर्तनात्, तावता च भ्रमनिवर्तकत्वव्यपदेशात्, भ्रमे प्रामाण्यविभ्रमस्य तद्विषये सत्यताविभ्रमस्य च परोक्षत्वेनापरोक्षबाधानपेक्षत्वात् । न हि दुष्टकरणाजन्यत्वमबाधितविषयत्वं वा प्रामाण्यं कस्यचित् प्रत्यक्षम् । न वा सर्वदेशसर्वकालसर्वपुरुषाबाध्यत्वरूपं विषयसत्यत्वम् । अतस्तयोः परोक्षप्रमाबाध्यत्वमुचितमेव । तयोश्च बाधितयोः रजतादिभ्रमः स्वरूपेण सन्नपि स्वकार्याक्षमत्वादसन्निवेति बाधित इत्युच्यत इत्यनवद्यम् । ननु 'इदं रजतम्' इत्यत्र सयुक्तिकं प्रत्यक्षं बाधकं, न युक्तिमात्रम्, 'गौरोऽहम्' इत्यत्रापि मम शरीरमिति बलवत्प्रत्यक्षमेव[1], 'अहमिहैवास्मि सदने जानानः' इति तु प्रमाणमेव, जीवस्याणुत्वादिति चेन्न; रजताभेदशरीराभेदप्रत्यक्षयोः जाग्रतोः रजते युक्त्या[2] प्रतिबन्धाक्षमत्वे तद्विषयप्रत्यक्षोत्पत्तेरेवानवकाशात् । न च तत्र परम्परासम्बन्धेन कर्दमलिप्ते वस्त्रे 'नीलं वस्त्रम्' इतिवत् 'गौरोऽहम्' इति गौणम्, कर्दमवस्त्रयोरिव शरीरात्मनोः भेदानध्यवसायेन दृष्टान्तदार्ष्टान्तिकयोः वैषम्यात् । तथाचात्रैक्याध्यास एवोचितः । एवंच 'उष्णं जलम्' इत्यत्रापि यदि

---

युक्त्या प्रतिबन्धाक्षमत्व इति । ननु युक्तिरपि नोत्पद्येत, प्रत्यक्षेण प्रतिबन्धादिति चेन्न; युक्तिर्हि न प्रत्यक्षग्राह्यस्य अभावमवगाहते, किंतु तद्व्याप्यम् । तथाचेदं रजतत्वाभावव्याप्यवदिति ज्ञानरूपयुक्तेः

---

1 प्रत्यक्षमेव बाधकम्. 2 युक्त्याः.

कर्दमवस्त्रयोरिव तोयतेजसोर्भेदग्रहः; तदा गौणतैव। यदि च शरीरात्मवत् भेदानध्यवसायः, तदा अध्यास एव। तथाच युक्तिबाध्यमेवेति तदप्युदाहरणम्। यत्त्वहमिहैवेति प्रमाणमित्युक्तम्, तन्न; आत्मनः 'आकाशवत्सर्वगतश्च' इति सर्वगतत्वेन इहैवेति व्यवच्छेदस्याप्रामाणिकत्वात्। न च जीवोऽणुः, युगपदेव पादशिरोवच्छेदेन सुखदुःखानुभवात्। न ह्येकोणुरेकदा व्यवहितदेशद्वयावच्छिन्नो भवति। न च युगपत्प्रतीतिर्भ्रमः, उत्सर्गसिद्धप्रामाण्यापरित्यागे बीजाभावात्। विस्तरेण चैतदग्रे वक्ष्यामः। ननु—नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन न बाधः, लिङ्गाभावात्। न च परममहत्त्वद्रव्यानारम्भकत्वादेः लिङ्गत्वम्, त्वन्मते असिद्धेः। निस्पर्शत्वं तु तमसि व्यभिचारि। पृथिव्यादित्रयेतरभूतत्वादि चाप्रयोजकम्। तथाच नीरूपत्व-

---

इदं रजतमिति प्रत्यक्षाप्रतिबध्यत्वात्तदुत्तरोत्पत्तिसम्भवेन तया[1] रजतत्वाभावव्याप्यशुक्तित्वादिमति रजतत्वप्रकारकत्वहेतुना भ्रमत्वानुमितिरव्याहता। एतेन—'रजतादिप्रत्यक्षे विद्यमानेऽप्यरजतादिप्रत्यक्षं जायते स्वभावतो बलवत्त्वात्। अन्यथा क्वाप्यप्रामाण्यधीर्न स्यात्' इत्यपास्तम्; उक्तरीत्या भ्रमत्वधीसम्भवेन स्वभावतो बलवत्त्वकल्पने मानाभावात्, प्रतिबध्यतावच्छेदके तत्तद्व्यक्तिभेदकूटनिवेशे गौरवात्। अन्यथा विरोधिनिश्चयस्य क्वापि प्रतिबन्धकता न स्यादति ध्येयम्। **विस्तरेणेति।** उत्क्रान्त्यादिकं तु अणुत्वा[2]भावेप्यौपाधिकपरिच्छेदादुपपद्यते। किञ्चात्मनो द्रव्यत्वे मानाभावस्योक्तत्वात् परिमाणमात्रे मानाभावः। दृश्यमात्रसम्बन्धस्तु सत्तास्फुरणरूपत्वादुपपद्यत इत्यादि वक्ष्यत इत्यर्थः। **निस्पर्शत्वमिति।** अनुद्भूतस्पर्शो नास्तीति भावः।

---

[1] संभावत्। तथा.  [2] अणुत्वा.

**ग्राहकसाक्षिप्रत्यक्षमेव तद्बाधकं वाच्यम्; न च रूपग्रहणासमर्थस्य साक्षिणः कथं नीरूपत्वग्राहकत्वमिति वाच्यम्; पिशाचाग्राहकस्यपि चक्षुषः तदभावग्राहकत्ववदुपपत्तेः, परेणापि साक्षिणोपि रूपवत्तमोग्राहकत्वाभ्युपगमाच्च। अचाक्षुषेऽपि नभसि वायाविव चक्षुषैव रूपाभावग्रहणसम्भवेन चाक्षुषप्रत्यक्षबाधात्—इति चेन्न; 'नीलं नभः' इति प्रत्यक्षे जाग्रति रूपाभावग्रहणस्य चक्षुषा साक्षिणा चासम्भवात्। तथाच बलवती युक्तिरेव तद्बाधिका। न च लिङ्गाभावः, चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वात्, (न) रूपवदिति लिङ्गसम्भवात्। न चाप्रयोजकत्वम्; नभो यदि सरूपं स्यात् तदा चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौ रूपासम्बन्धितया विषयो न स्यादिति तर्कोपपत्तेः। न चेष्टापत्तिः, सविधे रूपासम्बन्धितया नभसस्सिद्धेः सर्वजनसम्मतत्वात्। नभसः साक्षिवेद्यतायामपि चक्षुरन्वयव्यतिरेकानुविधानमवर्जनीयमेव। अन्यथा अन्धस्यापि तद्ग्रहणं स्यात्। न च**

---

**तदभावेति।** तद्भेदेत्यर्थः। **रूपवत्तम इति।** 'नित्यानुभवग्राह्यं तमः' इति तत्त्वदीपनोक्तेः। तमस इव तदीयरूपादेरपि प्रातीतिकत्वात् साक्षिवेद्यत्वेऽपि व्यावहारिकस्य रूपादेरतत्त्वात्तदभावस्य नभसि साक्षिवेद्यत्वं परोक्तमयुक्तम्। न च तमसः प्रातीतिकत्वे गुहामध्यस्थमदृश्यमानं तमो न स्यादिति वाच्यम्; न हि[1] तादृशं तमस्स्वीक्रियते; अपितु जले वृक्षाधोऽग्रत्ववत् केनचिद्दृश्यमानमेव, अधिष्ठानज्ञानादिरूपनिमित्तनाशादेव तन्नाशसम्भवात्। आलोकं विनापि तन्नाशः, निमित्तनाशं विनाप्यालोकेन तन्नाश इत्यभिप्रायेण विवरणे आलोकनाश्यं तदुक्तमिति ध्येयम्। **अवर्जनीयमिति।** चक्षुस्संयोगावच्छिन्नालोकावच्छिन्नं नभः साक्षिवेद्यम्। यदितु महान्धकारेऽपि नभस्साक्षात्करोमीति व्यवहारः प्रामाणिकः,

---

[1] तर्हि.

पञ्चीकरणाद्रूपवदारब्धत्वेन नभसो नीरूपत्वं बाधितमिति वाच्यम्; त्रिवृत्करणपक्षे अस्य दूषणस्य अनवकाशात्। पञ्चीकरणपक्षेऽपि अपञ्चीकरणदशायां यस्मिन् भूते यो गुणः स पञ्चीकरणाद्व्यवहारयोग्यः भवतीत्येतावन्मात्राभ्युपगमात् नाकाशे रूपारम्भप्रसङ्गः। न च 'नायं सर्पः' इत्युक्तेऽपि किमेवं वदसि परमपि पुनः परामृश्य पश्यसीति प्रतिवचनदर्शनात् न शब्दमात्रं रज्जुसर्पादिभ्रमनिवर्तकम्, किन्तु प्रत्यक्षमेवेति वाच्यम्; प्रतिवचनस्थले भ्रमप्रमादादिशङ्काक्रान्तत्वेन 'नायं सर्पः' इत्यादेर्दुर्बलतया न भ्रमनिवर्तकत्वम्। यत्र तु तादृक्शङ्कानाक्रान्तत्वं, तत्र भ्रमनिवर्तकतैव। अतएव तादृक्शङ्कानाक्रान्तपित्रादिवचसि नेदृक्प्रतिवचनम्; किन्तु सिद्धवत्प्रवृत्त्यादिकमेव। ज्वालैक्यप्रत्यक्षमप्येवमेव युक्तिबाध्यम्। न च निर्वापितारोपितस्थले स्पष्टतरभेदप्रत्यक्षबाधितमित्यन्यत्रापि दीर्घेयं न ह्रस्वेति भेदप्रत्यक्षमेव तद्बाधकमिति वाच्यम्; निर्वापितारोपितातिरिक्तस्थले तावदयं विचारः। तत्र दीर्घेयं न ह्रस्वेति भेदप्रत्यक्षं वक्तुमशक्यम्। यैव ह्रस्वा सैवेदानीं दीर्घेति ह्रस्वत्व-

---

तदा चक्षुस्संयोगावच्छिन्नं नभ एव तथा। अन्यथा अन्धस्यापि तत तथा स्यात्। एवंच निमीलितनेत्रस्य तथा व्यवहारस्वीकारेऽपि न क्षतिः. चक्षुरन्तरे तत्संयोगसम्भवात्। न च नभसि चक्षुस्संयोगे मानाभाव इति वाच्यम्; अन्धस्य नभस्साक्षात्करोमीति व्यवहाराचादृशव्यवहा प्रति चक्षुस्संयुक्तनभस्त्वेन[1] हेतुत्वावश्यकत्वात्, चक्षुस्संयुक्ते नभस्या वरणस्वीकाराद्वा तदावश्यकत्वात्। एतेन—'रूपवत्यपि नभसि चक्षु स्संयोगास्वीकारेण तत्र रूपाचाक्षुषोपपत्तेः नभो यदीत्याद्युक्ततर्कामव

---

1 मनस्त्वेन.

दीर्घत्वाभ्यां उपस्थितयोरभेदस्य साक्षात्क्रियमाणत्वात् । तथा च ज्वालाप्रत्यभिज्ञा युक्तिबाध्यैव । सर्वदा पित्तदूषितनेत्रस्य 'पीतश्शङ्खः' इति प्रत्यक्षे चन्द्रप्रादेशिकत्वप्रत्यक्षे च परोक्षातिरिक्तस्य बाधकस्य शङ्कितुमप्यशक्यत्वात् युक्त्यादिबाध्यतैव वक्तव्या । ननु सर्वत्रैवात्र प्रकारान्तरेणासत्कल्पे प्रत्यक्षे मानान्तरप्रवृत्तिः । तथाहि—द्विविधं ज्ञानं द्विकोटिकमेककोटिकं च । अन्त्यमपि द्विविधम्, अप्रामाण्यशङ्काकलङ्कितं तदकलाङ्कितं च । तत्राद्यौ सर्वप्रमाणावकाशदौ, अर्थापरिच्छेदकत्वादप्रामाण्यशङ्काकलङ्कितत्वाच्च । अप्रामाण्यधीकलङ्कितत्वं च द्वेधा भवति, दुष्टकरणकत्वनिश्चयादर्थाभावनिश्चयाच्च । तथाच शैलाग्रस्थितविटपिनां प्रादेशिकत्वप्रतीतिर्दूरदोषनिबन्धना दृष्टेति दूरतरस्थस्य चन्द्रमसः प्रादेशिकत्वप्रत्ययो दोषनिबन्धन एवेति निर्णीयते । एवमाकाशे समीपे नीरूपत्वनिश्चयाद्दूरे रूपवत्त्वधीर्दूरदोषजन्येति प्रागेव निश्चीयते । 'पीतश्शङ्खः' इत्यादिप्रत्यक्षं तु प्राथमिकपरीक्षितप्रत्यक्षेण 'शङ्खो न पीतः' इत्यर्थाभावनिश्चयात् अप्रामाण्यज्ञानास्कन्दितमेवोत्पद्यते । एवं सावितृसुषिरादिप्रत्यक्षमपि । तथाच चन्द्रादिप्रादेशिकत्वप्रत्यक्षं दूरादिदोषनिश्चयात् 'पीतश्शङ्खः' इत्यादिप्रत्यक्षं प्राथमिकार्थाभावनिश्चयादेव

काशः' इति परास्तम् । वस्तुतस्तु नभो[1] यदि नीलं स्यात्तदा नीलत्वेन दूरस्थैः गृह्यमाणावच्छेदेन निकटस्थैरपि नीलत्वेन गृह्येतेत्यत्र तर्के नभो यदीत्यादेस्तात्पर्यम् । तथाच नीलत्वेन निकटस्थचाक्षुषाविषयत्वेन नभसि नैल्याभावानुमानं निर्विघ्नम् । एवं महान्धकारे शुक्लत्वेन चाक्षुषाविषयत्वादिना शौक्ल्याद्यभावोऽनुमेयः । न च शुक्लेऽपि नभसि शौक्ल्यं न गृह्यते, किन्तु नैल्यं दोषादिति वाच्यम्;

[1] तमो.

बाधितमिति पश्चादनुमानागमादिप्रसर इति न ताभ्यां तद्बाधः। येन हि यस्य भ्रमत्वं ज्ञायते तत्तस्य बाधकमित्युच्यते। न च चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्यागमादिना भ्रमत्वं ज्ञायते। भ्रमत्वज्ञानोत्तरकालमेव तत्प्रवृत्तेः। अप्रामाण्यज्ञानाकलङ्कितं तु स्वार्थपरिच्छेदकं निश्शङ्कप्रवृत्तिजननयोग्यम्। यथा 'वह्निरुष्ण एव' 'प्रस्तरो यजमानभिन्न एव' 'घटः सन्नेव' इत्यादि, तत्रान्यस्यावकाशदर्शनात् नान्येन बाध्यम्। न ह्यत्र प्रागिव दूरादिदोषधीर्वा अर्थाभावनिश्चयो वा कोट्यन्तरालम्बित्वं वा अस्ति। किञ्च क्वचित्प्रत्यक्षं प्रत्यक्षान्तरगौरवाद्युक्तिबाध्यं भवतु। क्वचिच्च लिङ्गादिकं श्रुतिगौरवात् श्रुत्यनुसारिप्रकरणादिबाध्यं भवतु। राजामात्य इव राजगौरवेण राजभृत्यबाध्यः। तथापि न युक्तिमात्रस्य प्रकरणमात्रस्य वा प्रत्यक्षलिङ्गादिबाधकत्वम्, प्रत्यक्षाद्यनुसारित्वस्य सर्वत्राभावात्। न हि प्रधान-

---

नीलेऽपि नभसि आलोकबाहुल्यदोषान्नैल्यं न गृह्यते, किन्तु शुक्लत्वं दोषादित्यस्यापि सम्भवात्। तस्माद्विनिगमकाभावात् नभसि रूपमात्रं प्रातीतिकं; अनुद्भूतरूपानङ्गीकारात्। अङ्गीकारेऽपि नभसस्तद्वत्त्वे मानाभावाद्योग्यनीलरूपाभावस्यैव साध्यत्वसम्भवान्न दोषः। **क्वचिच्च लिङ्गादिकमिति** दृष्टान्तत्वेन प्रकृतोपयुक्तम्। **प्रकरणमात्रस्य** प्रकरणादिमात्रस्य, **प्रत्यक्षाद्यनुसारित्वस्येति**। प्रत्यक्षसमानविषयकत्वस्य युक्तिमात्रे, श्रुतिसमानविषयकत्वस्य प्रकरणादिमात्रे चाभावादित्यर्थः। कचिद्बाधकजातीयत्वेन बाधकत्वे दोषमाह—**न हि प्रधानेत्यादि**। प्रथमतृतीये 'शिष्टाकोपेऽविरुद्धमिति चेन्न; शास्त्रपरिमाणत्वात्' इत्यधिकरणे स्थितम् स्मार्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिः विरोधे श्रौतत्वेन क्रमादीनामेव प्राबल्यादाचमनादिस्मृतीनामप्रामाण्यं; न हि 'क्षुत आचामेत्' इत्यादिना विहित-

**भूताचमनादिपदार्थविषयया 'आचामेदुपवीती दक्षिणाचारः' इत्यादिस्मृत्या पदार्थधर्मभूतक्रमादिविषयया 'वेदं कृत्वा वेदिं करोति' इति श्रुतिर्वेदकरणानन्तरं क्षुतनिमित्तकाचमनोपनिपाते**

---

माचमनादि वेदवेदिकरणयोर्मध्ये अनुष्ठितं चेत् 'वेदं कृत्वा वेदिं करोति' इत्यादिश्रुत्युक्तक्रमस्य प्रयोगविध्यवगतस्य अनुष्ठेययत्तारूपपरिमाणस्य पूर्वाह्णादिकालस्य च विरोध[1]स्सम्भवति । न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थेभ्य आचमनादिभ्यो दौर्बल्यमिति वाच्यम्; प्रमाणतत्त्वनिश्चयस्य प्रमेयतत्त्वनिश्चायकत्वेन प्रमाणबलाबलनिश्चयस्य प्रमेयबलाबलनिश्चयात्पूर्वप्रवृत्तत्वेन बलवत्त्वेन व्यवस्थापकत्वादिति प्राप्ते—यावत्प्रमाणगम्यपदार्थानां प्रासद्युत्तरं युगपदनुष्ठानासम्भवेनाकांक्षितस्य क्रमादेः श्रुत्यादिना निर्णयत्वात्पदार्थाविरोधेनैव कल्प्यत्वान्न पदार्थविरोधित्वम् । विरोधित्वेऽपि पदार्थानामेव प्राबल्यम् । प्रमाणानां हि न स्वरूपतो विरोधः; किन्तु विरुद्धविषयकत्वात् । तथाच प्रमाणबलाबलनिर्णयाय विषयविरोधालोचनकाले प्रमेयबलाबलाभ्यां शास्त्रार्थनिश्चये पाश्चात्त्यं प्रमाणबलाबलज्ञानमग्राह्यमित्युक्तश्रुत्या नोक्तस्मृतेर्बाध्यत्वरूपमप्रामाण्यम् । **वेदः** सम्मार्जनसाधनदर्भमुष्टिः, तस्य करणं बन्धनादिसंस्कार । **वेदिः** गार्हपत्याहवनीययोर्मध्ये चतुरङ्गुलखाता भूमिः, तत्करणं वेदेन सम्मार्जनादिः । शिष्टस्य 'वेदं कृत्वा वेदिं करोति' इत्यादिश्रुत्युक्तस्य स्मार्ताचमनाद्यनुष्ठानात् अकोपे ह्यन्यभावे सति अविरुद्धमेवंजातीयं स्मार्तमिति चेन्न, शास्त्रेण श्रुत्यादिना क्रमस्य प्रयोगवचनेन प्रयोगशीघ्रत्वादेश्च परिमितत्वात्प्रमितत्वादिति पूर्वपक्षसूत्रार्थः । सिद्धान्तसूत्रं तु अपिवेत्यादिकम् । वार्तिककारीयमधिकरणवचनं त्वन्यादृशं प्रकृतानुपयुक्तम् । **उपवीती दाक्षिणेति ।**

---

[1] अविरोध.

बाध्यत इति अन्यत्रापि तथा भवितव्यमिति चेन्नैवम्; यतो युक्तिरेवैषा। यद्यद्दूरस्थाल्पपरिमाणज्ञानं तत्तद्दूरदोषनिबन्धनमप्रमा, शैलाग्रस्थविटप्यल्पपरिमाणज्ञानवदिदमपि तथेति। तथा च एवंरूपया युक्त्यैव चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य बाधं वदन् युक्त्या न प्रत्यक्षस्य बाध इत्यनेनाजैषीः परं मन्दबुद्धे मन्दाक्षं न तु परम्। एवं 'पीतश्शङ्खः' इति प्रत्यक्षेऽपि प्राचीनार्थाभावप्रत्यक्षं न बाधकम्, तस्येदानीमभावात्। न च तत्स्मृतिर्बाधिका; तस्या अनुभवाद्दुर्बलत्वात्। केवलं यक्तयुत्पादन एव सोपयुज्यते। तेन युक्त्यागमाभ्यामेव उदाहृतस्थलेषु बाधः। यत्तु क्वचिद्युक्त्यादेः बाधकत्वदर्शनमात्रेण सर्वत्र न बाधकत्वं वक्तुं शक्यम्, युक्त्यादिबाधकताया अनुस्रियमाणप्रत्यक्षगौरवनिबन्धनत्वादित्युक्तम्; एतदनुक्तोपालम्भनम्। न हि मया क्वचिद्दर्श-

---

उपवीतच्छेदे पुनरुपवीतान्तरग्रहणे क्रमादेः बाधः, वामपार्श्वस्थपदार्थस्य दक्षिणहस्तेनानुष्ठाने प्रयोगशीघ्रत्वादिबाधः। **तत्स्मृतिः** तज्जन्यस्मृतिः। **दुर्बलत्वादिति।** गृहीतग्राहकत्वनियतजातीयत्वादिना दौर्बल्यमिति भावः। स्मृतेर्बाधकत्वेऽपि सिद्धं नस्समीहितं परोक्षस्यापरोक्षबाधकत्वादित्यपि बोध्यम्। यत्तु—'दूरस्थतरुपरिमाणादिप्रत्यक्षे नोक्तरीत्या युक्त्या बाधः, किन्तु दूरादिदोष[1]जन्यत्वधीसहकृतेन साक्षिणैव' इति, तत्तुच्छम्; यदि हि भ्रमत्वे साक्षिणोऽनावृतः सम्बन्धः, तदोक्तधीः क्वोपयुज्यते? तेनैव भ्रमत्वे व्यवहार[2]सम्भवात्। अन्वयव्यतिरेकाभ्यां सापि व्यवहारे[3] आवरणनिवृत्तौ वा [4]कारणं इति चेन्न; अपूर्वकल्पनापत्तेः। अथोक्तधीविशिष्टज्ञानस्यैव भ्रमत्वमनावृतं[5], तदा भ्रमोत्पत्तिद्वितीयक्षणोत्पन्नया तया विशिष्टज्ञाने

---

[1] दूरत्वादिना दोष. [2] भ्रमव्यवहार. [3] संविद्व्यवहारे. [4] कारणं, येनोक्तकल्पनापूर्वकल्पनापत्तिः इति पा. [5] भ्रमत्वमावश्यकमित्यानावृतं.

**नमात्रेण युक्तेर्बाधकता सर्वत्रोच्यते, अपितु चन्द्रप्रादेशिकत्व-शङ्खपीतत्वप्रत्यक्षादौ यावदागमादेः बाधकताप्रयोजकं दृष्टं ताव-त्सत्त्वेन । न च तत्रानुस्रियमाणं प्रत्यक्षमस्ति; यद्गौरवेण बाधकतायां अन्यथासिद्धिं ब्रूयाः । तस्माच्चन्द्रप्रादेशिकत्व-प्रत्यक्षस्य प्रपञ्चसत्त्वप्रत्यक्षस्य च तुल्यवदेव बाध्यता । युक्त्या-**

---

द्वितीयक्षण इव प्रथमक्षणेऽप्यनावृतं तत्स्यात् । आवृतं वा द्वितीय-क्षणेऽपि स्यात्, आवरणनिवर्तकाभावात् । अथाज्ञानैकत्वपक्षे तत्त-द्विषयाकारवृत्त्यभावविशिष्टाज्ञानस्य तत्तद्विषयावारकत्ववदुक्तधीविरहवि-शिष्टाज्ञानं भ्रमत्वावारकमिति, तदप्यपूर्वकल्पनम् । तस्माद्दोषजन्य-त्वादिलिङ्गकभ्रमत्वानुमित्यैव तदावरणाभिभव इति कल्पतरीतिरेव साध्वीति ध्येयम् । ननु नभोनैल्येनानुमानं बाधकं, सविधे नभसि नैल्य-सत्त्वेऽपि तस्य नीहारावगुण्ठनस्येव सामीप्यदोषादग्रहसम्भवादुक्त-तर्कानवतारेणानुमानासिद्धेरिति चेन्न; सामीप्यदोषात्तदग्रहो दूरत्व-दोषात्तद्ग्रहो वेत्यत्र विनिगमकाभावात् । न च दोषग्राह्यत्वे नभो-नैल्यस्य प्रातीतिकत्वेन अनन्तोत्पत्तिध्वंसकल्पनागौरवमिति वाच्यम्; तस्य व्यावहारिकत्वेपि अनन्ततच्चाक्षुषोत्पत्तिनाशकल्पनात् । किंच सामीप्यदूरत्वयोः दुर्वचत्वाद्विजातीयसंयोगादिमत्प्रदेशावच्छिन्नं नभः स्वनिष्ठविषयतासम्बन्धेन नैल्यविशेषचाक्षुषत्वावाच्छिन्नं प्रति हेतु-र्वाच्यः । तथाच तदपेक्षया लाघवाद्विजातीयसंयोगत्वेन नैल्यविशेष-हेतुत्वमेवास्तु । एतेन नभोनैल्यस्य व्यावहारिकस्य दैशिकाव्याप्य-वृत्तित्वशङ्कापि प्रत्युक्ता । सर्वावच्छेदेन सन्निकर्षात्तत्प्रत्यक्षवारणाय उक्तहेतुत्वावश्यकत्वेन लाघवात् उक्तहेतुत्वेन तत्प्रातीतिकत्वसिद्धेः । अतएव किन्त्वागमादिना बाधानन्तरमिति ग्रन्थे उक्तयुक्तिराचार्या-णामभिप्रेतेति ध्येयम् । यत्तु 'रूपवदवयवारब्धत्वादाकाशे रूप-

गमयोश्च तुल्यवदेव बाधकतेति। न हि चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकरणत्वनिश्चयः। नैकद्वयस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गात्। किन्तु आगमादिना बाधानन्तरमेव। तद्वत् प्रकृतेऽपि मिथ्यात्वसिद्ध्यनन्तरमेव अविद्यारूपदोषनिश्चयः। तथाच सर्वात्मना साम्यम्। यत्तु दृष्टस्य वस्तुनो बलवद्दृष्टं विना अन्यद्बाधकं नास्तीत्युक्तम्, तद्दुर्बलशब्दलिङ्गादिविषयम्। यदप्युक्तं विवरणे—'यत्राविचारपुरस्सरमेव प्रत्यक्षावभासमप्यनुमानादिना बाधितमुच्छिन्नव्यवहारं भवति, तत्र तथा भवतु। यत्र पुनः विचारपदवीमुपारूढयोः ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयः, तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिः'—इति, तदपि गृहीतप्रामाण्यकशब्दतदुप-

---

मुत्पद्यताम्' इति, तन्न; अस्मन्मते हि नारम्भवादप्रक्रियया रूपादिकं स्वाश्रयसमवायिरूपादिजन्यम्; जलादेः पञ्चीकृतस्य[1] गन्धाद्यापत्तेः, घटरूपाद्युत्पत्त्यव्यवहित[2] पूर्वक्षणे घटाद्यात्मना परिणतस्य कपालादेरेवाभावेन तदीयरूपादेः दूरत एवाभावात् घटरूपाद्युपधायकत्वासम्भवाच्च। किन्तु शक्तिविशेषविशिष्टस्यैव कारणत्वं तत्र स्वीक्रियते। सा च शक्तिः तेजस्संयोगविशेषे पाकजरूपादिजनक इवाकाशवायुव्यावृत्तपाञ्चभौतिकसंयोगेऽपि स्वीक्रियते। तथाच येषु येषु भूतेषु यादृशयादृशरूपादि अनुभवसिद्धं, तादृशतादृशकारणतावच्छेदकशक्त्याश्रयसंयोगानां तेषु तेष्वेव स्वीकारात् न दोषः। एष एव न्यायो 'वैशेष्यात्तु तद्वादः' इति सूत्रेऽभिप्रेतः। रूपादिमात्रस्यानादित्वे तु न कापि शङ्का, पृथिव्यादिजनकसामग्रीव्याप्यसामग्र्या एव नीलादिविशिष्टजनकत्वस्वीकारेणाकाशादेर्नीरूपत्वादिसम्भवात्। **दृष्टस्य** प्रत्यक्षविषयस्य। **दृष्टं** प्रत्यक्षम्। **गृहीतप्रामाण्येति**। मिथ्यात्वश्रुति-

---

[1] पञ्चभूतस्य. [2] द्युत्पत्त्यव्यवहित.

जीव्यनुमानातिरिक्तयुक्तिविषयम् ; एकत्र प्रामाण्यनिश्चये बलाबलचिन्ताया एवानवकाशात् ॥

इति प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे बाधकम्.

---

## भाविबाधोद्धारः

एवंच 'भाविबाधनिश्चयाच्च' इति यदुक्तं, तदप्युपपन्नमेव ; प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथा आगमेन बाधः, तथा प्रकारान्तरेणाबाधितस्य 'सन् घटः' इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकागमेन बाध इति निर्णयात् । एवंच भाविबाधशङ्कामादाय यत्परैर्दूषणमुक्तं तदनुक्तोपालम्भनतया अपास्तम् । वस्तुतस्तु बाधशङ्कामादायापि प्रत्यक्षस्य बाधकतोद्धारः समीचीन एव । प्रत्यक्षशब्दयोः बलाबलविचारात् प्राक् किमयं शब्द उपचरितार्थः ? आहोस्वित् प्रत्यक्षमप्रमाणम् ? इति शङ्कायामुभयोरबाधकत्वप्राप्तौ तात्पर्यलिङ्गैः श्रूयमाणार्थपरतया निश्चितस्यागमस्य उपचरितार्थत्वशङ्काव्युदासेन लब्धावकाशत्वसम्भवात् । न च शब्दलिङ्गयोः प्रत्यक्षाबाधकतया प्रत्यक्षान्तर-

---

निरवकाशत्वश्रुतित्वादिना तादृशी, तदुपजीवित्वाद्दृढतर्कयुक्तत्वाच्च तदनुमानमपि तादृशमिति भावः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
अक्षे लिङ्गाद्यबाध्यत्वे बाधकं ध्वान्तनाशकम् ॥

इति प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे बाधकम्.

---

लब्धावकाशत्वसम्भवादिति । प्रत्यक्षे बाधशङ्काया इत्यादिः ।

स्याप्रमाणतया शङ्क्यमानत्वेनाबाधकतया च बाधकसामान्याभावे निश्चिते बाधशङ्का न युक्तेति वाच्यम्; शब्दलिङ्गयोः प्रत्यक्षबाधकत्वस्य व्यवस्थापितत्वात्, प्रत्येकं विशेषाभावनिश्चयेऽपि विशेषाणामियत्तानवधारणदशायां संशयसम्भवात्, प्रत्यक्षस्याप्रमाणतया शङ्क्यमानत्वेन शङ्काविरहोपपादनस्यासम्भवद्युक्तिकत्वाच्च । अथैवं जाग्रदादिज्ञानस्याप्रमात्वे स्वप्नदृष्टस्य शुक्तिरूप्यादेश्च बाधासिद्धौ कथं दृष्टान्तासिद्धिः स्यादिति चेन्न; आरोप्यसत्ताधिकसत्ताकविषयत्वेनापेक्षिकप्रमाणत्वेन अन्यूनसत्ताकविषयत्वेन वा बाधकत्वात् । अतएव यदुक्तं बौद्धं प्रति भट्टवार्तिके—

---

**प्रत्यक्षस्येति** । प्रत्यक्षान्तरस्येत्यर्थः । यदि प्रत्यक्षान्तरत्वावच्छेदेनाप्रामाण्यशङ्का, तदा प्रत्यक्षमात्रे स्वविषयसत्त्वावगाहित्वस्य त्वयापि स्वीकारात्, विषयान्तरांश इव सत्त्वांशेऽप्यप्रामाण्यशङ्कासम्भवः । अथ तदवच्छेदेन सा न, तदा प्रत्यक्षान्तररूपस्य बाधकस्य शङ्कासम्भवादित्युभयथापि न शङ्काविरहोपपादनसम्भव इत्याशयः । **आरोप्यसत्ताधिकेति** । प्रातीतिकव्यावहारिकपारमार्थिकसत्तानां पूर्वपूर्वापेक्षया उत्तरोत्तरस्याधिक्यम् । तत्र पल्लवाविद्यावच्छिन्नं चैतन्यमाद्या, मूलाविद्यावच्छिन्नं तत् द्वितीया, शुद्धं तत्तृतीया । अथवा अज्ञानविषयतावच्छेदकत्वं द्वितीया, शुद्धचिदन्यत्वे[1] सति तदभाव आद्या, सुखादेर्व्यावहारिकत्वपक्षे विशेषणान्तरं देयम् । प्रातीतिकस्येव शुद्धचितोपि तदभावात्तदन्यत्वनिवेशः । बाध्य[2]-धीविषयसत्तापेक्षया उक्ताधिकसत्ताकविषयकत्वरूपमापेक्षिकप्रमाणत्वं विनापि स्वाप्नधियः स्वाप्नधीबाधकत्वस्य स्वयमुक्तत्वादाह—**अन्यूनेति** ।

---

[1] शुद्धचैतन्यत्वे. [2] साध्य.

**प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत् ।**
**स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किंकृतः ॥**

**इति, तत्सङ्गच्छते । ननु भ्रमकालीनापरोक्षबुद्ध्यविषयविशेष-**

---

**प्रतियोगिनि दृष्ट इति ।** प्रतियोगित्वेन मानसिद्धे जाग्रद्बोधे इत्यर्थः । प्रतियोगित्वं च उक्तसत्ताक[1]विषयकत्वम् । अथवा जाग्रद्बोधेन प्रतियोगिनि दृष्टे विषयीकृते इत्यर्थः । प्रतियोगित्वं च उक्तसत्ताश्रयत्वम् । **अस्माकं** ज्ञानातिरिक्तज्ञेयस्य उक्तसत्तावादिनाम् । **स्वप्नादीति** । आदिना शुक्तिरूप्यादिप्रातीतिकस्य व्यावहारिकस्य च सङ्ग्रहः । **मृषा** बाध्या । **तव** ज्ञानातिरिक्तं ज्ञेयं सर्वमलीकमिति वादिनो योगाचारस्य । **भेदः** बाध्यबाधकभावादिः । **किंकृत इति** । ज्ञानान्यविषये उक्तसत्तानङ्गीकारात् ज्ञानात्मकविषयस्य ज्ञानेन सह विषयविषयिभावसम्बन्धानुरोधेन[2] ज्ञानाद्भिन्नत्वेनापि स्वीकार्यतया भेदाभेदयोस्साहित्यविरोधात्, अभेदादिसम्बन्धमात्रस्य च सम्बन्धान्तरसापेक्षत्वादिना दुर्वचत्वात् । ज्ञानज्ञेयसम्बन्धसापेक्षासिद्धिको ज्ञेयांश इव ज्ञानांशोऽपि त्वन्मते बाध्यः स्यात्, इदं ज्ञानमिदं ज्ञेयमिति बुद्ध्योरन्यूनसत्ताकविषयकत्वाविशेषात् । अथास्तु तथैव माध्यमिकस्य शून्यवाद इति चेन्न; ज्ञानस्य लाघवेन क्षणिकत्वाद्यस्वीकारात्[3], तत्स्वरूपमात्रे सन्देहाद्यभावेन प्रकाश्यत्वाकल्पनाच्च स्फुरणस्वरूपबाधस्य अनुपलब्धेः तद्बाध्यत्वे मानाभावात्, स्फुरणरूपस्य तदन्यबाधकतायोग्यधीविषयताकल्पनस्योचितत्वादिति । त्वन्मते बाधकताप्रयोजकं रूपं दुर्वचमिति किंशब्देनाक्षिप्यत इति भावः । परमते शुक्तिरूप्यादेः असत्त्वस्वीकारेण तत्सत्ताधिकसत्तादेः अप्रसिद्ध्या न बाध्यत्वं सम्भवति, मन्मते तु सम्भवत्येवेत्याशयेनाह—**तत्सङ्गच्छत इति** । **भ्रमकालीनेति** । तादृशबुद्धिः अधिष्ठानसामान्यांशधीः, तदविषयो विशेषः

---

[1] सत्ताकसंज्ञा. [2] भावानुरोधेन. [3] यत्स्वीकारात्

विषयैव धीर्बाधिका दृष्टा, न च विश्वबाधिका धीस्तथेति चेन्न; अधिष्ठानतत्त्वज्ञानत्वेनैव भ्रमनिवर्तकत्वात्, विश्वनिवर्तकब्रह्मज्ञानस्य तथात्वात्। न च सप्रकारिकैव धीः भ्रमनिवर्तिका, इयं तु निष्प्रकारिका कथं तथेति वाच्यम्; निवर्तकतायां सप्रकारकत्वस्य गौरवादप्रवेशात्। ननु आवश्यकः सप्रकारकत्वानियमः, व्यावृत्ताकारज्ञानत्वेनैव भ्रमनिवर्तकत्वात्, अन्यथा अनुवृत्ताकारज्ञानादपि तन्निवृत्त्यापत्तेरिति चेत्, सत्यम्; व्यावृत्ताकारत्वेन ज्ञानस्य भ्रमनिवर्तकता, न तु विशेषप्रकारकत्वनियमः। तथाहि—व्यावृत्ताकारता हि द्वेधा भवति, विशेषणादुपलक्षणाच्च। तत्राद्ये सप्रकारकत्वनियमः, द्वितीयेऽपि धर्मान्तरस्य यदुपलक्षणं तस्माद्व्यावृत्ताकारत्वे सप्रकारकतैव।

---

शुक्तित्वादिः। **धीस्तथेति**। तद्धीविषयस्य शुद्धस्य प्रपञ्चोपहितभानेप्यवश्यं भासमानत्वात्। अथवा विशेषो व्यावर्तकधर्मः, शुद्धं च न तथेति भावः। **अधिष्ठानतत्त्वज्ञानेति**। अन्यविषयत्वानिरूपिता या भ्रममूलाज्ञानविषयनिष्ठविषयता तच्छालिज्ञानेत्यर्थः। **व्यावृत्ताकारत्वेन**। व्यावृत्तविषयकत्वेन। ग्राह्याभावादिरूपो यो व्यावर्तकधर्मः तदाश्रयविषयकत्वेनेति यावत्। **विशेषणादिति**। व्यावृत्ताकारबुद्धौ भासमानं व्यावर्तकधर्ममादायेत्यर्थः। तादृशधर्माश्रयविषयकत्वरूपेति यावत्। **उपलक्षणादिति**। उक्तभासमानान्यव्यावर्तकधर्ममादायेत्यर्थः। तादृशधर्माश्रयविषयकत्वरूपेति यावत्। **धर्मान्तरस्येति**। उत्तृणत्वादिरूपस्य धर्मान्तरस्य तद्व्याप्येन काकादिना यत्रोपस्थितिस्तत्र तस्योत्तृणत्वादेः ज्ञापकरूपोपलक्षणकाकाद्याश्रयाविषयकज्ञानस्योत्तृणत्वाभावादिभ्रमानिवर्तकस्य काकाद्यप्रकारकत्वेऽपि उत्तृणत्वादिप्रकारकत्वात्सप्रकारकतैवेत्यर्थः। न च—उत्तृणत्वव्याप्यकाकादिमत्ताज्ञानस्यैव तादृशभ्रमविरोधित्वसम्भवात् उत्तृ-

णत्वादिधर्मान्तरोपस्थितिः व्यर्था, यत्र तादृशकाकादिमत्ताज्ञानं गृहादौ नास्ति, तत्र तादृशभ्रमनिवृत्तये सम्बन्धि[1] ज्ञानविधया काकादिधी-जन्योत्तृणत्वादिस्मृतिजन्यतद्विशिष्टबुद्धेरुपयोगित्वेऽपि 'काकवन्तो गृहाः' इत्यादिवाक्यार्थबोधस्थले तादृशकाकादिमत्ताज्ञानस्यैव तादृशभ्रम-विरोधित्वसम्भवात्—इति वाच्यम्; 'इदानीं गृहा नोत्तृणाः' इत्यादिभ्रमे इदानीं तादृशकाकवन्त इत्यादिज्ञानस्यैव निवर्तकतया काकासत्त्व-दशायां तदसम्भवेन उत्तृणत्वाद्युपस्थित्यधीनताद्विशिष्टबुद्धेरावश्यकत्वात्। न चोत्तृणत्वव्याप्यतया काकादिज्ञानाय पूर्वमुत्तृणत्वाद्युपस्थित्यावश्य-कत्वात् तादृशज्ञानेन पुनः तदुपस्थितिकल्पना व्यर्थेति वाच्यम्; व्याप्य-त्वसंस्कारविशिष्टकाकादिज्ञानस्यैव उपस्थापकत्वात्। यद्यपि रजतादि-भ्रमनिवर्तकस्य शुक्तित्वादिप्रकारकज्ञानस्य व्यावर्तकतावच्छेदकीभूतेन रजतभेदव्याप्यत्वादिना न शुक्तित्वादिविषयकत्वम्; तथापि तस्य तादृशभ्रममूलाज्ञानसमानविषयकत्वेन उक्ताज्ञानोच्छेदकत्वेन भ्रमनिव-र्तकत्वम्। अतो वस्तुगत्या व्यावर्तकतावच्छेदकरूपविशिष्टं यत्त-त्प्रकारकज्ञानं भ्रमनिवर्तकं वाच्यम्। तथाच शुद्धब्रह्मणोऽपि तादा-त्म्येन द्वैताभावव्याप्यत्वात्[2] तादात्म्येन स्वसम्बन्धिनि तस्मिन् ज्ञाते[3] युक्तैव द्वैतभ्रमनिवृत्तिः। अतएव तादात्म्येन स्नेहाद्यभावव्याप्यत्वेन ज्ञाने[4] स्नेहादिभ्रमनिवृत्तिः तार्किकादिभिः स्वीक्रियते। न हि तैः स्नेहाद्यभावस्य तादात्म्येन व्याप्यः स्नेहवानिति भ्रमः स्वीक्रियते। अतएव वस्तुगत्या व्याप्यं यत् स्वं तादात्म्येन तद्प्रकारकत्वेऽपि ब्रह्म-ज्ञानस्य भ्रमनिवर्तकत्वमव्याहतम्। यादृशस्य हि ज्ञानस्य तार्किका-दिभिः यादृशभ्रमप्रतिबन्धकत्वमुच्यते तादृशस्य तादृशभ्रमोच्छेदकत्व-मस्माभिरप्युच्यते। तथाच तादात्म्येन तदभावव्याप्यं तद्वदिति

---

[1] काकादिसम्बन्धि. [2] द्वैताभावस्य व्यापकत्वात्. [3] ज्ञाने. [4] ज्ञाते
[5] व्याप्यं यत्तद्वदिति.

भ्रमेच्छाविरहविशिष्टं तदभावव्याप्यज्ञानं तादृशभ्रमे प्रतिबन्धकमुच्यत एव तैः। तत्र यद्यपिच्छाजन्यस्यास्मन्मते ज्ञानत्वाभावादुक्तेच्छाविरहो बाधकतावच्छेदके न निवेश्यते, अनुभवबलाच्च व्याप्यत्वानवगाहिज्ञानस्यापि बाधकत्वं; तथापि व्याप्यत्वेन ज्ञातविषयकज्ञानस्य भ्रमविरोधित्वमविवादमेव। अथ तदभावादिव्याप्यत्वानवगाहिज्ञानस्य तद्भ्रमविरोधित्वं स्वविषये तदभावत्वाद्यवगाहित्वे तदभावा[1]दिव्याप्यत्वप्रकारकोद्बुद्धसंस्कारविशिष्टत्वे वा नान्यथेति परेषामाग्रहः, तथापि नास्माकं क्षतिः; शुक्तित्वादौ रजतभेदादिव्याप्यत्वप्रकारकसंस्कारविशिष्टस्य तत्प्रकारकज्ञानस्य शुद्धब्रह्मणि द्वैताभावादिव्याप्यत्वप्रकारकसंस्कारविशिष्टस्य तज्ज्ञानस्य रजतस्य द्वैतस्य च भ्रमे विरोधित्वसम्भवात्। न चैवं द्वैताभावव्याप्यत्वविशिष्टविषयकज्ञानस्यापि द्वैतभ्रमविरोधित्वसम्भवेन शुद्धज्ञानस्यैव श्रुत्यादिना तद्बोधनं विरुद्धमिति वाच्यम्; उक्तविशिष्टविषयकस्य शुद्धविषयकस्य वा चिरसञ्चितसद्द्वैतब्रह्मवासनाभिरप्रामाण्यज्ञानानास्कन्दितत्वाभावेन श्रवणादिपाटवोत्तरज्ञानविशेषस्यैव तत्सम्भवात्, तस्य चोद्बुद्धतादृशसंस्कारवैशिष्ट्यावश्यकत्वात् शुद्धविषयकत्वेऽपि तादृशभ्रमविरोधित्वसम्भवात्। शुद्धान्यविषये तत्त्वमस्यादिश्रुतेः तात्पर्ये प्रयोजनाभावात् शुद्धमात्रतात्पर्यग्राहकतयोपक्रमादिकं लिङ्गं प्रवृत्तमिति तदनुसारेण तमेव विदित्वेत्यादिश्रुत्या तथा बोधनस्य युक्तत्वात्। अथ तथाप्यनुपस्थितेन गिरिदर्यादिवर्तिवस्तुमात्रगतविशेषणावच्छिन्नप्रतियोगिताकाभावव्याप्यत्वेन संस्काराभावात् तेन रूपेण द्वैतभ्रमनिवृत्तिः कथमिति चेत् स्वत एव, कारणाभावात्; तादृशभ्रमस्य निवृत्तिर्हि विश्वसत्यत्वमतेऽनुत्पादः। कारणोच्छेदपूर्वकोच्छेदस्तु मन्मत एवोपस्थितरूपेण द्वैतं सदिति भ्रमं प्रति तेन रूपेण द्वैताभावव्याप्यत्वेन संस्कृतसद्रूपज्ञानस्य विरोधित्वमित्येतन्मात्रं सर्वसम्मतमित्युक्तम्॥

---

[1] तादृशाभावा.

किञ्च ब्रह्मणि तादात्म्येन दृश्यप्रकारकभ्रममात्रस्य जडत्वादिभाननियमादनात्ममात्रं जडतया दुःखतया मिथ्यात्वेन च भाति, आत्मा तु चिद्रूपत्वादिनेति विवरणाद्युक्तेः दृश्यभ्रमं प्रति पूर्णानन्दस्वरूपज्ञानं विरोधीत्युक्तम्; जडत्वादिधर्मस्य पूर्णानन्दस्वरूपत्वात्। स्वीक्रियते हि परैरपि घटे तादात्म्येन घटान्यभ्रमे घटत्वादिविषयकज्ञानस्य विरोधित्वम्। अन्यथा घटो घटादन्य इति भ्रमापत्तेः। न चैवमपि निर्विकल्पकस्य ब्रह्मज्ञानस्य विरोधित्वानुपपत्तिरिति वाच्यम्; घटत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टनिष्ठ [1]प्रकारतानिरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन प्रत्यक्षं प्रति तदिच्छाविरहविशिष्टज्ञानत्वेन घटत्वनिष्ठेन अनवच्छिन्नविषयतासम्बन्धेन प्रतिबन्धकत्वं हि परैः स्वीक्रियते। जातिमान् घटान्य इत्यनाहार्यप्रत्यक्षोदयादनवच्छिन्नेति। घट इति ज्ञाने सत्यपि तादृशप्रत्यक्षोदयादवच्छेदकत्वेऽप्यनवच्छिन्नेति देयम्। तथाच पूर्णानन्दरूपतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदविशिष्ट [2] प्रकारतानिरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन प्रत्यक्षे तदिच्छाविरहविशिष्टज्ञानत्वेन [3] पूर्णानन्दस्वरूपनिष्ठेन अनवच्छिन्नविषयतासम्बन्धेन विरोधित्वस्यापि सर्वसम्मतत्वात्, चरमब्रह्मज्ञानकाले जडत्वादिरूपेण ज्ञाने मुमुक्षोरिच्छाविरहात् चरमस्य ब्रह्मनिर्विकल्पस्य सर्वसम्मतमेव तादृशज्ञानविरोधित्वम्। तथाच मन्मते ज्ञानस्येच्छाजन्यत्वास्वीकारेणोक्तेच्छाविरहविशिष्टरूपेण ब्रह्मज्ञानस्य विरोधित्वास्वीकारेऽप्यनात्मज्ञानं प्रत्य(क्ष)प्रामाण्यज्ञानानास्कन्दितब्रह्मज्ञानत्वेन विरोधित्वं स्वीक्रियते; जडत्वादेः प्रतिबध्यतावच्छेदके निवेशाभावेन लाघवात्। अपिचेच्छा(द्व)घटिताज्ञानसामग्री अनिच्छाविषयज्ञानविरोधिनीति परेषां सम्मतमिति ब्रह्मनिर्विकल्पस्य मोक्षहेतुत्वेन श्रुत्यादिसिद्धस्य तार्किकशिरोमण्यादिसम्मतस्य च मुमुक्षोरत्यन्तमिष्टतया अन्यज्ञानस्य तदभावेन

---

[1] विश्वनिष्ठ. [2] विशेष. [3] मानत्वेन.

**यदि तु स्वरूपोपलक्षणाद्याव्यावृत्ताकारता, तदा निष्प्रकारकतैव ; उपलक्षणस्य तत्राप्रवेशात्, स्वस्य च स्वस्मिन्नप्रकारत्वात्, न च प्रमेयत्वादिवत् स्वस्यैव स्वस्मिन् प्रकारत्वमिति वाच्यम् ; त्वयापि केवलान्वयिन्येव अगत्या तथा अङ्गीकारात् । न तु सर्वत्र । अथ आकारप्रकारयोः अभेदात् ब्रह्माकारतैव ब्रह्मबुद्धेः तत्प्रकारतेति चेन्न ; विशिष्टबुद्धेः विशेष्याकारत्वेपि तदप्रकारकत्वात्, आकारप्रकारयोर्भेदात् । आकारश्च वृत्तिनिष्ठः कश्चिद्धर्मोऽसाधारणव्यवहारहेतुरिति वक्ष्यते । तस्माद्यथाकाशपदाच्छब्दाश्रयत्वोपलक्षितधर्मिस्वरूपमात्रं ज्ञायते, तद्वदत्रापि द्वितीयाभावाद्युपलक्षितब्रह्म-**

---

प्रत्युत द्विष्टतया[1] च ब्रह्मनिर्विकल्पस्य अन्यधीमात्रविरोधित्वं सर्वसम्मतमित्यादिकमभिप्रेत्याह—**यदि तु स्वरूपेति । उपलक्षणस्येति ।** व्यावृत्ताकारबुद्धावविषयस्य व्यावर्तक[2]धर्मस्येत्यर्थः । **तत्र** व्यावृत्ताकारबुद्धौ **अप्रवेशात्** अप्रकारत्वात् । **स्वस्य चेति ।** ननु स्वं स्वस्य रूपमित्यादिव्यवहारात् 'आनन्दं ब्रह्मणो रूपं, तस्य भासा' इत्यादिश्रुत्यनूदितत्वाच्च स्वस्य स्वस्मिन्नपि कल्पितसम्बन्धोऽस्तीति कथं स्वस्य स्वस्मिन्नप्रकारत्व[3]मिति चेत्, न ; ज्ञानविशेषविषयत्वादिरूपभेदविशिष्टाकारेण सम्बन्धप्रतियोगित्वानुयोगित्वयोः सम्भवेऽपि शुद्धस्वरूपेण तदसम्भवात्, सम्भवे वा तस्य प्रातीतिकत्वेन व्यावहारिकविषयकभ्रमविरोधिधीविषयत्वायोगात् । त्वयाऽपीत्यपिना प्रतिवाद्यन्तरसमुच्चयः । अस्मन्मते केवलान्वयित्वस्यैवानङ्गीकारात् । अङ्गीकारेऽपि प्रमेयत्वं प्रमेयमित्यादौ विशेष्यविशेषणयोः प्रमेयत्वयोः भेदस्वीकारात् । **कश्चिदिति ।** विषयता[4]शब्देन परैर्व्यवहार्य इति भावः । धर्मिस्वरूपमात्रस्योपलक्ष्यत्वं च परसम्मत्या[5] निर्णेतुं दृष्टान्तमाह—**तस्माद्यथेति ।**

---

[1] तद्विशिष्टतया [2] अव्यावर्तक. [3] स्वस्मिन् प्रकारत्व. [4] विषयिता. [5] परसम्मतत्वात्.

स्वरूपज्ञानं व्यावृत्ताकारं द्वैतनिवर्तकमपरोक्षम् । यथाच शब्दात् तादृक्ज्ञानसम्भवः, तथा वक्ष्यते । न च बाधकधियां भ्रमतद्धेतुत्वज्ञान[1]दोषाध्यस्तदृष्टादीना[2]मबाधकत्वं दृष्टमिति कथं ब्रह्मज्ञानस्य तद्बाधकत्वं घटतामिति वाच्यम्; यथाहि स्वप्ने द्रष्टारं दुष्टकरणवन्तं कल्पयित्वा तस्य भ्रमं कल्पयति, तत्र जागरज्ञानेन सर्वेषां निवृत्तिदर्शनात् । जाग्रद्दशायामपि मनुष्यप्रतिकृतौ चैतन्यं कल्पयित्वा तत्समीपवर्तन्यनादर्शे एव आदर्शत्वं कल्पयित्वा स्वप्रतिबिम्बमयं पश्यतीति कल्पयति, तदा नायं चेतनो न चायमादर्श इति प्रमया सर्वनिवृत्तिदर्शनाच्च नेयमदृष्टचरी कल्पना । तथाचेयं शुक्तिरित्याद्यधिष्ठानज्ञानं रज्जां सर्पभ्रममिव द्रष्ट्राद्यध्यासं मा निवीवृतत् । तत् कस्य हेतोः? तदधिष्ठानसाक्षात्कारत्वाभावात् । ब्रह्मज्ञानं तु आकाशादिप्रपञ्चभ्रममिव

---

उक्तं हि शब्दमणौ अपूर्ववादे आकाशस्मृतिजनकसंस्कारस्य शब्दाश्रयत्वविषयकत्वनियमकल्पनेन शब्दाश्रयत्वांशेपि संस्कारोद्बोधनियमसम्भवेनाकाशशब्दादशक्यस्यापि शब्दाश्रयत्वस्य भानं; अस्तु वा तदपि शक्यं, यदि नियतोपस्थितिः । वस्तुतः सैव नास्ति । अस्तु वा पदादपि निर्विकल्पकमिति निर्विकल्पकमाकाशनिष्ठानवच्छिन्नविषयताकम् । तेनाकाशांशे सुबर्थस्य सङ्ख्यादेः कर्मत्वादौ सुबर्थे चाकाशस्य प्रकारत्वेऽपि न क्षतिः । तथाच यत्र धर्मस्य नियतोपस्थितिः, धर्मिणामानन्त्येनानुवृत्तधर्मं विना शक्तिग्रहासम्भवश्च, तत्रैव धर्मेऽपि शक्तिरिति 'जात्याकृतिव्यक्तयः पदार्थः' इति न्यायसूत्राभिप्रेतं आकाशादिपदाद्धर्मिस्मृतिः[3] कदाचिदष्टद्रव्यान्यद्रव्यत्वेनापीति शब्दाश्रयत्वेन उपस्थित्यनियमात् धर्म्यनानन्त्याच्च शुद्धाकाश एव तत्पदशक्तिः स्वीक्रियत इति कारणीभूतशक्तिग्रहे शब्दाश्रयत्वादिना धर्मीभूतेऽपि कार्यभूते

---

1 तद्धेत्वज्ञान. 2 द्रष्ट्रादीना. 3 धर्मास्मृतिः.

**द्रष्टुर्दोषादिभ्रममपि निवर्तयेदेव । तत्कस्य हेतोः? अशेषभ्रमाधिष्ठानतत्त्वसाक्षात्कारत्वात् । एवंच बाधबुद्धित्वं न दोषाद्यबाधकत्वे प्रयोजकम्, अपितु तद्भ्रमाधिष्ठानतत्त्वसाक्षात्कारभिन्नत्वमिति द्रष्टव्यम् । ननु कल्पितत्वादुक्तदृष्टान्तेन तत् बाध्यताम्, इह तु कथमिति चेत्, हन्त ब्रह्मव्यतिरिक्तस्य सर्वस्य कल्पितत्व-**

---

स्मरणे शब्दानुभवे वा शुद्ध एव भातीति धर्मस्वरूपमात्रस्य ज्ञापकधीविषयत्वात् । शब्दाश्रयत्वादिकमुपलक्षणम्, तापसत्वविशिष्टस्य जटा इवेति यथा तार्किकैः स्वीक्रियते, तथा द्वितीयाभाववत्त्वादिविशिष्टब्रह्मज्ञानाधीनलक्षणज्ञानाधीनज्ञाने शुद्धब्रह्मणो भानात् द्वितीयाभावादिकमुपलक्षणमित्यस्माभिः स्वीक्रियत इति धर्मिमात्रस्योपलक्ष्यत्वम् । वृत्तिज्ञानाधीनज्ञानविषयत्वं वा नास्माकमेवेति भावः । न च तथापि एकनामार्थमात्रविषयकशाब्दबोधे परासम्मतिरिति वाच्यम्; एको द्वावित्यादौ तदभावात् तत्र शाब्दबोधानङ्गीकारे शृणोमीत्यनुभवबाधापत्तेः । अन्यथा शाब्दानुभवमात्रमपलप्येतेति भावः ॥

यत्तु—"प्रत्यक्षे बाधशङ्काया लब्धावकाशत्वमुक्तमयुक्तं; प्रत्यक्षविषयसत्त्वे फलपर्यन्तपरीक्षायाः श्रुतितात्पर्यग्राहकलिङ्गेभ्यो बलवत्त्वात्, श्रुतावेव शङ्काया लब्धावकाशत्वात् प्रत्यक्षाविरुद्धार्थे लिङ्गानां तात्पर्य[1] ग्राहकत्वाच्च । अधिष्ठानतत्त्वज्ञानत्वेनैव भ्रमनिवर्तकत्वमित्याद्यपि न युक्तम्; स्वाश्रयान्योन्याभावासमानाधिकरणधर्मस्तत्त्वमिति द्रव्य[2] वर्धमानोक्तेः धर्मिस्वरूपस्य तत्त्वरूपत्वाभावात् । व्यावृत्ताकारता द्वेधेत्यादिकमप्ययुक्तम्; उपलक्ष्ये कश्चिद्धर्ममादधत एवोपलक्षणत्वात् । अतएव 'इत्थंभूतलक्षणे' इति सूत्रस्य कश्चित्प्रकारं प्राप्त इत्थंभूतः, तस्य लक्षणे ज्ञापके तृतीयेत्यर्थ इति व्याख्यानम् । अस्तु वैतद्यथातथा । तथापि स्वरूपमात्रज्ञानं न बाधकं, भ्रमविषयीभूत-

---

[1] तात्पर्या. [2] नव्य.

**मङ्गीकुर्वतां अस्माकमिदमनिष्टं महदापादितं देवानांप्रियेण । ननु साक्षिप्रत्यक्षं न बाध्यम्, दोषाजन्यत्वात्; प्रत्युत श्रुतिजनिताद्वैतज्ञानमेव बाध्यम्, तात्पर्यभ्रमरूपदोषजन्यत्वादिति चेन्न;**

---

स्वरूपानपहारकत्वाद्विषया[1]पहारो बाध इति परैरपि स्वीकारात्"— इति, तत्तुच्छम्; फलपर्यन्तव्यवहारस्य तात्त्विकतानिर्णायकपरीक्षात्वस्य[2] पूर्वमेव निरासात् । अन्यथा इन्द्रजालस्यापि तदापत्तेः, बलवच्छ्रुत्याश्रितत्वेन तात्पर्यलिङ्गानां बलवत्त्वात्, तत्त्वं तु धर्मि[3]स्वरूपमपि वर्धमानोक्तौ स्वसम्बन्धिप्रतियोगिकभेदवदसम्बन्धि तत्त्वमिति विवक्षितत्वात् । अन्यथा धनादिकं धन्यादेर्वैशेषिकाभिमतविशेषादेः तत्स्वरूपं च तत्त्वं न स्यात् । तथाच स्वस्य स्वस्मिंस्तादात्म्याङ्गीकारे तादात्म्येन स्वसम्बन्धिस्वप्रतियोगिकभेदवति तदात्म्येनासम्बद्धत्वात् स्वमपि स्वस्य तत्त्वम् । तदनङ्गीकारे तु स्वभिन्ने तेन सम्बन्धेन असम्बन्धित्वे सति तेन सम्बन्धेन स्वसम्बन्धित्वं स्वभेदशून्यत्वं चेत्यन्यतरवत् स्वस्य तत्त्वमित्येव विवक्षितम् । वस्तुतस्तु अनारोपितं तत्त्वमिति लक्षणे सर्वस्यापि भ्रमप्रकारत्वरूपारोपितत्वेन अप्रसिद्धिमाशङ्क्य, वर्धमानेन तथोक्तत्वादस्मन्मते चाधिष्ठानतत्त्व[4]शब्देन अज्ञानविषयसम्बन्धिनोऽनारोपित[5]स्वरूपस्योक्त्या तदज्ञानविषयस्य अवच्छेदकत्वभेदशून्यत्वान्यतररूपसम्बन्धवत्त्वे सति तदज्ञान[6]कार्यविलक्षणस्य पर्यवसितार्थस्य सुप्रसिद्धत्वात् परप्रलापानवकाश इति ध्येयम् । उपलक्ष्ये काञ्चिद्धर्ममादधत एवोपलक्षणत्वमिति त्वस्मदविरुद्धम्; [7]ज्ञानविषयत्वस्यैव तादृशधर्मत्वात् । कश्चित्प्रकारमित्यादिसूत्रव्याख्याने च प्रकारशब्दः 'एकधैवानुद्रष्टव्यः' इत्यादिश्रुतौ एकधैव निर्विकल्पेन घटो ज्ञात

---

[1] कत्वादिति विषया. [2] परीक्षाक्षमस्य. [3] धर्म. [4] ष्ठानत्व. [5] विषयस्यानारोपित. [6] तज्ज्ञान. [7] त्वस्मद्विरुद्धम्.

इत्यादिलौकिकव्यवहारे च थाप्रत्यय इव स्वरूपार्थको न धर्मार्थकः । तत्स्वरूपप्राप्तिश्च धर्मस्वरूपस्य सम्बन्धो धर्मिस्वरूपस्य स्वस्मिन् कल्पितं तादात्म्यं तद्भेदाभावोपहितत्वं वा धर्म[1] सम्बन्धमात्रस्य प्रकार-प्राप्तिरूपत्वे जटाभिस्तापस इतिवत् शब्दाश्रयत्वादिना गगनस्वरूप-मिदं सत्तया घट इत्यादिप्रयोगस्य सर्वसिद्धस्य अपलापापत्तेः । न हि गगनघटत्वादिशुद्धस्वरूपस्योक्तरीत्या शब्दजन्यधीविषय[2] त्वं स्मृतिविषयत्वं वा बोधयदुक्तवाक्यगततृतीयापदमसाधु । अथानुमापक-रूपोपलक्षण एव तृतीया उक्तसूत्रेण विधीयत इति उक्तविषयत्व-बोधने तृतीया न साधुः । अतएव संक्षिप्तसारव्याकरणे 'हेतुविद्धो-त्रादेः' इति सूत्रेणानुमापक एव ज्ञापके तृतीयां विधाय धूमे-नाग्निमानित्युदाहृतमिति मन्यसे, तथापि गन्धसमनियतत्वादिना पृथिवी-स्वरूपमिदमित्यादौ तृतीयाप्राप्त्यर्थमुक्तरूप एव सूत्रार्थो वाच्यः । न हि तत्र किञ्चिद्धर्मविशिष्टस्य अनुमापकमुपलक्षणम् । अपितु तद्वदन्यावृत्तित्वरूपव्याप्त्या शुद्धपृथिवीत्वस्य । तथा च द्वितीयाभाव-रूपत्वादिना ब्रह्मस्वरूपमिदमित्यपि प्रयोगस्संभवतीति द्वितीयाभाव-रूपत्वादिकमप्युपलक्षणमिति न किञ्चिदप्यनुपपन्नम् । किञ्चोक्तसूत्रे चिह्नशब्दितभेदकेपि तृतीया विवक्षिता । उदाहृतं च तत्र 'कमण्डलुना मैत्रः' इति । मुग्धबोधव्याकरणेऽपि साधनहेतुविशेषणभेदककर्तृषु तृतीयां विधाय 'नेत्रैः पुण्येन भूषाभिर्नाम्ना दृष्टशिवो जनैः' इत्युदाहृतम् । तथाच इत्थंभूतलक्षणशब्देन इतरभेदानुमापकरूपस्य भेदकस्यापि सङ्ग्राह्यतया इतरभेदस्य चाभावादौ ब्रह्मणि च तत्स्व-रूपतया प्रकारं प्राप्त इति व्याख्याने प्रकारपदस्य धर्मार्थकत्वम-सङ्गतमित्युक्तभेदरूपस्वरूपानुमापकस्य द्वितीयाभावरूपत्वादेः इत्थंभूत-लक्षणत्वमव्याहतम् । वस्तुतस्तु अनुमापक एव उपलक्षणशब्दः

---

1 धर्मि. 2 जन्यज्ञानविषय.

**चैतन्यस्य स्वरूपतो दोषाजन्यत्वेऽपि तदवच्छेदिकाया अविद्या-वृत्तेर्दोषजन्यत्वात्, तत्प्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थ-त्वात्। अद्वैततात्पर्यग्रहस्य च प्रत्यक्षाद्यविरोधेन प्रमारूपतया**

---

प्रयुज्यते। उपलक्षणशब्दार्थ एव इत्थंभूतलक्षणेति सौत्रशब्दार्थ इति ते भ्रमः। स्वविशेष्यान्वितानन्वयि उपलक्षणमित्यपि हि व्यवहार-स्तान्त्रिकाणाम्। अतएव गोत्वेनोपलक्षितं व्यक्तिस्वरूपं गोपदशक्यं धेनुपदशक्यवदित्याशङ्क्य गोत्वस्य व्यक्तिबोधे भानावश्यकत्वान्निराकृतं मणौ शक्तिवादे। उक्तं च तत्र—"गोत्वविशिष्ट एव कार्यान्वयात् गोत्वं विशेषणं नोपलक्षणं, तदन्येन कार्यान्वये उपलक्षणं, यथाऽयं वासस्वी देवदत्तशब्दवाच्य इत्यत्र वासः" तस्माद्विशेषणशब्दव्यव-हार्यभिन्ने उपलक्षणशब्दप्रयोगात् व्यावृत्ताकारधी[1]विषये विशेषणपदस्य तदन्यत्र उपलक्षणशब्दप्रयोगो युक्त एवेति परन्त्रस्याशयःबोधः स्वस्यास्तु वा यथातथेत्यनेन त्वयैव सूचितः। विषयापहारो बाध इत्यत्र तु विषयोऽज्ञानप्रयुक्तरूपो विवक्षितः। तथाच शुद्धस्य उपहितविषयक-भ्रमविषयत्वेऽपि[2] न क्षतिः। नन्वविद्यावृत्तिं विनापि विषयेषु सुखादिषु साक्षिणः सम्बन्धसम्भवात् तदङ्गीकारो व्यर्थस्तत्राह—**तत्प्रतिबिम्बित-चैतन्यस्येति**। शुक्त्याद्यवच्छिन्नब्रह्मचैतन्याध्यस्तरजतादेः साक्षिसम्ब-न्धार्थं अविद्यावृत्तिरवश्यं वाच्या। तत्र चाविद्यैव कारणमिति सुखादिष्वपि सा आवश्यकी; विषयतासम्बन्धेन तदुत्पत्तौ अज्ञातविषयभेदस्य हेतु-त्वात् घटादौ तदनुत्पत्तिरतीतावस्थसुखादौ उक्तभेदस्यासत्त्वात् तत्रापि तदनुत्पत्तिः। अविद्यासुखादौ[3] तत्कालीनमनोवृत्तौ च एकस्या एवा-विद्यावृत्तेस्स्वीकारादविद्यावृत्त्यवच्छिन्नचैतन्यस्य साक्षिपदार्थता उप-पद्यते। न च शुक्तिरूप्यादिभिन्नकालीनसुखादावनन्ताविद्यावृत्तिकल्पने गौरवात् शुक्तिरूप्यादिस्थलीयदोषविशेषाणामेव अविद्यावृत्तिहेतुत्वं न

---

[1] साकारविधि. [2] उपहितविषयत्वेऽपि. [3] अविद्याधीनसुखादौ, नर्काधीन.

त्वविद्यामात्रदोषस्येति वाच्यम्; तथा सति सुखादि[1]स्मरणापेक्षायक-संस्कारानुपपत्तेः ज्ञाननाशस्यैव संस्कारत्वात्। न च सुखाद्यवच्छिन्नचैतन्यस्य सुखादिकालीनमनोवृत्तेर्वा नाशः सुखादिसंस्कार इति वाच्यम्; उक्तविनाशस्य सुखादिसूक्ष्मावस्थारूपत्वात्, सुखाद्यभिन्नत्वेऽपि[2] उक्तविदभेदाभावेन सुखादिविषयकत्वासम्भवात्, चैतन्य-निष्ठतादात्म्यवृत्तिनिष्ठाकारसाधारणविषयतात्वप्रकारतात्वादेः अनुगत-स्याभावाच्च। सुखाद्यनुभित्यादिवृत्तिनाशरूपसंस्कारसाधारण्याय स्मृति-हेतुतावच्छेदके आकाररूपविषयतानिवेशस्य आवश्यकत्वाच्चैतन्य[3]ता-दात्म्यमात्रनिवेशासम्भवात्। एवंच साक्षिरूपस्य अविद्याप्रतिबिम्बित-चैतन्यस्य शुक्तिरूप्याद्यधिष्ठानशुक्त्याद्यवच्छिन्नचैतन्यरूपत्वं जीवस्यैव जगदुपादानत्वादिति पक्षेऽपि शुक्तिरूप्यादावविद्यावृत्तिसिद्धिः। एवंच सुषुप्तौ जीवस्येव प्रलये ईश्वरस्याविद्यावृत्तिसिद्धिः, अतीतप्रपञ्चस्मृ-तेरेव तत्र मानत्वात्। प्रपञ्चसूक्ष्मावस्थारूपप्रलयस्य तत्कालीनवृत्तिं विना पश्चात्स्मृतेरनुपपत्तेः, तां विना सदा सर्वज्ञत्वानुपपत्तेः। उक्तं च तथा विवरणादौ। यदि च अविद्यावृत्तिर्नास्तीत्याग्रहः, तदापि साक्षिणो विषयीभूतसुखमनोवृत्त्यादेः अविद्यारूपदोषजन्यत्वादेव बाध्य-ता; तत्पक्षे साक्षिण एव भ्रमत्वात्तस्य चाजन्यत्वाद्विषयेष्वेव दोषज-न्यत्वस्य बाध्यत्वव्यवस्थापकत्वात्। अनादिपदार्थेष्वपि क्षेमसाधा-रणस्याविद्यारूपदोषजन्यत्वस्य सत्त्वात्। न चाविद्यावृत्तेरुक्तरीत्या सिद्धावप्यविद्योपहितचैतन्यस्यैव बिम्बप्रतिबिम्बरूपेशजीवानुगतस्य सा-क्षिपदार्थत्वसम्भवे तद्वृत्तिप्रतिबिम्बितस्य तदुक्तिरयुक्तेति वाच्यम्; वृत्तिप्रतिबिम्बितस्यैव भासकत्वेन तत्पदार्थत्वानपायाच्छुद्धचैतन्यस्य ईश्वरस्य वा जगदुपादानत्वपक्षे वृत्तिद्वारैव साक्षिणि जगत्सम्बन्धस्य वाच्यत्वात्। अन्यथा अनावृतविषयतादात्म्याश्रयतादात्म्यादिसम्बन्धत्वे

[1] शुक्त्यादि. [2] द्यवच्छिन्नत्वेऽपि. [3] कत्वाच्चेतर.

**दोषत्वाभावात् न तज्जन्यमद्वैतज्ञानं बाध्यम्; भ्रमजन्यत्वस्य विषयबाधाप्रयोजनत्वाच्च। न च बाधकतुल्यमानताकद्वैतश्रुतिसंवादिद्वैतप्रत्यक्षं कथं बाध्यमिति वाच्यम्; द्वैतस्य प्रत्यक्षादिलौकिकमानासिद्धत्वेन तद्बोधकश्रुतेरनुवादकतया फलवदज्ञातस्वार्थतात्पर्यकाद्वैतश्रुतिसाम्याभावात्। ननु बाधकधीबोध्यं न बाध्यम्, भेदश्च बाधकधीबोध्यः; तया स्वविषयस्य भिन्नत्वेनैव ग्रहात्, नेदं रजतमितिवदभिन्नतया उदासीनतया ग्रहणे बाध-**

---

गौरवात्, ब्रह्मज्ञानान्यस्य आवरणा[1]नाशकत्वपक्षे तत्सम्बद्धत्वासम्भवाच्च, यदाकारवृत्तिप्रतिबिम्बितं यच्चैतन्यं तत्तत्साक्षिपदार्थ इत्यभिप्रायाच्च, अविद्यावृत्तिद्वयस्य युगपदुत्पत्तिस्वीकारात् परस्पराकारकत्व मेकस्या एव वा वृत्तेः स्वस्वेतराकारकत्वमिति नानुपपत्तिः। एतेन शुद्धचिदेव साक्ष्यस्त्वित्यपि प्रत्युक्तम्। यदेव हि विषयसम्बद्धतया भासकं तदेव साक्षि, न च शुद्धं तथा, कैवल्येऽपि तत्त्वापत्तेः। यत्तु मनउपहितमेव चैतन्यं साक्षि, अन्यथा एकमनोवच्छिन्नस्य प्रमातुरन्यमनस्तद्धर्मादिप्रत्यक्षत्वापत्तेरिति; तन्न रम्यम्; अहंपरमनआदिकं साक्षात्करोमीति व्यवहारे तत्तन्मनोवच्छिन्नसाक्षिणः परमनआदिविषयकस्य विषयत्वात्तस्य च बाधितत्वादविद्योपहितस्य साक्षित्वे बाधकाभावेन मनोभेदेन साक्षिपदार्थभेदे मानाभावात्। अन्यथा तत्तच्छरीरतत्तत्कालावच्छिन्नेन चैतन्येन शरीरान्तरकालान्तरीयसुखादिकं प्रत्यक्षीक्रियेतेति तद्वारणाय तत्तच्छरीरकालावच्छिन्नस्यैव साक्षिपदार्थत्वापत्तेः। तत्तच्छरीरावच्छिन्नस्य शरीराद्यन्तरीयसुखाद्यसम्बन्धान्नोक्तापत्तिश्चेत्तर्हि तत्तन्मनोवच्छिन्नस्य मनोन्तरासम्बन्धोपि सम[2]इति विभावनीयमिति दिक्। पश्चाद्बाध्यतात्पर्यधीर्भ्रम एवेत्यत आह—**भ्रमजन्यत्वस्येति**। लिङ्गा-

---

[1] आवरण. [2] न सम.

कत्वायोगादिति चेन्न; बाधकधियो भेदविषयत्वानभ्युपगमात् इयं शुक्तिरित्येव बाधबुद्ध्युदयात्। तस्यास्तु नेदं रजतमिति भेदबुद्धिः फलम्। व्यावृत्ताकारतैव बाधधिय आवश्यकी। सा च स्वरूपोपलक्षणबलान्निष्प्रकारकब्रह्मज्ञानेऽपि अस्तीति न बाधकधीबोध्यत्वं भेदस्य। ननु—स्वप्नविलक्षणं फलपर्यन्तपरीक्षायामिति चेच्छङ्का स्यात्तदा अद्वैतश्रुतिप्रत्यक्षतत्प्रामाण्यशङ्कायामद्वैतश्रुतिरपि न सिद्ध्येत्। बाधेऽपि बाधशङ्कायामबाधितबाधप्रसिद्धिरपि न स्यात्। बाधितबाधशङ्कायाश्च अबाध्यत्वाविरोधि-

---

भासादिजन्यप्रमानुमित्यादिसाधारण्येनेति शेषः। मिथ्यात्वधीरूपे बाधे दृश्यत्वादेः स्वप्रयोजकाज्ञानसहितस्य विषयस्योच्छेदरूपे बाधे चाधिष्ठानतत्त्वज्ञानस्य प्रयोजकत्वमिति भावः। **बाधकधिय इति**। यावत्या इत्यादिः। तेन रजतभेदाज्ञानजन्यभ्रमबाधकबुद्धेः भेदविषयकत्वेऽपि न क्षतिः। **इत्येवेत्यादि**। एतावन्मात्राकाराया अपि बाधबुद्धेरुदयादित्यर्थः। **बाधकधीति**। बाधकधीमात्रेत्यर्थः। यथाश्रुते शुक्तित्वादिना ज्ञानेऽपि[1] रजतान्यत्वादिरूपेण अज्ञानाधीनभ्रमस्य तेन रूपेण ज्ञानादेव बाधादसङ्गतिरिति ध्येयम्। **शङ्का स्यादिति**। प्रत्यक्षे बाधकशङ्का स्यादित्यर्थः। किञ्च बाधकं बाधितं वा शङ्क्येत अबाधितं वा, नान्त्य इत्याह—**बाधेऽपीति**। बाधपदानि बाधकार्थकानि, प्रत्यक्षे यद्बाधकमाशङ्क्यं तत्रापि बाधकशङ्कासम्भवेन अबाधितबाधकरूपायाः शङ्काकोटेः **प्रसिद्धिः** ज्ञानमपि न स्यादित्यर्थः। आद्ये त्वाह—**बाधितेति**। बाधितं बाधकस्य तत्त्वज्ञानत्वाभावेन अबाधकत्वात् तच्छङ्कायामपि बाधकाबाध्यत्वरूपं सत्त्वं प्रत्यक्षविषये ज्ञातुं

---

[1] यथाश्रुते चाबाध्यशुक्तित्वादिना ज्ञाते तेनापि.

त्वात्। भाविबाधेऽपि बाधशङ्कापातेन स्वक्रियाव्याघातश्च स्यात्। शङ्काप्रत्यक्षेऽपि शङ्कायां शङ्कापि न सिद्ध्येत्। एवं सर्वत्र शङ्काप्रसरात् सर्वविप्लवापत्तिरिति चेत्-मैवं मंस्थाः। यतः समत्वेन प्रमाणान्तरे उपस्थित एव निश्चितेऽपि सत्त्वादौ शङ्का भवतीति ब्रूमः, न तु निश्चितमात्रे शङ्का भवतीति। तथाच यदुक्तं बौद्धं प्रति भट्टवार्तिके—

दुष्टज्ञानगृहीतार्थप्रतिषेधोऽपि युज्यते।
गृहीतमात्रबाधे तु स्वपक्षोपि न सिद्ध्यति॥

इति, तदपि न विरुद्ध्यते; गृहीतमात्रबाधस्य तच्छङ्कायाश्चानुक्तेः। ननु सत्त्वादिप्रत्यक्षे क्लृप्तदूरादिदोषाभावनिश्चये कथं शङ्कोदयः? न च क्लृप्तानामभावनिश्चयेऽपि अक्लृप्तस्य

---

शक्यत इत्यर्थः। **भाविबाधे** ब्रह्मतत्त्वज्ञाने। **स्वक्रियेति**। वेदान्तश्रवणादिप्रवृत्तीत्यर्थः। **शङ्काप्रत्यक्षे** बाधकविषयकशङ्कायाः प्रत्यक्षे। **शङ्कायां** अप्रामाण्यशङ्कायाम्। **शङ्कापि** बाधकस्य शङ्कापि। **सत्त्वादौ** प्रत्यक्षविषयगते सत्त्वादौ। **दुष्टज्ञानेति**। शुक्तिरूप्यादेरागन्तुकदोषयुक्तधीविषयत्ववत् दृश्यमात्रस्य अविद्यारूपदोषयुक्तधीविषयत्वात् **प्रतिषेधो** बाधो युज्यते। धीविषयत्वस्य दोषयुक्तत्वं च दोषप्रयुक्तनिष्ठत्वम्। तेन ब्रह्मधीविषयत्वस्यापि कस्यापि कथंचिद्दोषयुक्तत्वेऽपि न क्षतिः। दोषप्रयुक्तस्यैव अविद्याप्रयुक्तत्वेन बाध्यतायोग्यत्वमिति भावः। गृहीतमात्र बाध्यमिति माध्यमिकमते तु **स्वपक्षोऽपि न सिद्ध्यति** स्फुरणस्वरूपस्य बाधानुपलम्भेन अविद्याप्रयुक्तत्वाकल्पनात् जन्यधीविषयरूपगृहीतमात्रस्य बाधासम्भवादिति भावः। यद्यपि प्रत्यक्षसमत्वेन श्रुत्यादिव्रातमुपस्थितं, तथापि प्रत्यक्षविषयसत्त्वादौ न बाधकशङ्का घटत इति शङ्कते—**ननु सत्त्वादीति**।

**शङ्का स्यात्। शब्दे क्लृप्तवक्तृनिबन्धनदोषस्य नित्यत्वेन वेदे अभावेऽपि दोषान्तरशङ्कायाः सुवचत्वात्। न च स्वाप्नप्रत्यक्षे तदा दूराद्यभावनिश्चयेऽपि अप्रामाण्यदर्शनेन तद्वदत्रापि शङ्केति वाच्यम्; शून्यमेव तत्त्वमिति स्वाप्नवेदेऽपि तदा भ्रान्त्यादिदोषाभावनिश्चयेऽपि अप्रामाण्यदर्शनस्य वेदेऽपि समानत्वात्। स्वप्नवैषम्यानुभवस्तूभयत्रापि समान इति चेन्न; सत्त्वप्रत्यक्षाद्वैतागमयोः क्लृप्तदोषाभावनिश्चयस्य समानत्वेन प्रामाण्यशङ्कायामप्रतिबन्धकत्वात्। न हि सत्प्रतिपक्षे उभयत्र दोषाभावनिश्चयः किमत्र तत्त्वमिति जिज्ञासां प्रतिबध्नाति; विरुद्धविशेषादर्शनकालीनस्यैव विशेषदर्शनस्य शङ्काप्रतिबन्धकत्वात्**

---

**किमत्रेति।** अत्र अनयोः परामर्शद्वयविषयव्याप्तिपक्षधर्मतयोः किं तत्त्वनयानिनिर्णयः। **जिज्ञासामिति।** अनयोरन्यतरद्बाध्यमिति धीप्रतिबन्धद्वारेति शेषः। ननु दोषाभाववत्त्वावच्छेदेन अबाध्यत्वनिश्चयात् बाध्यत्वव्यावर्तकस्य दोषाभावस्योक्तान्यतरत्वावच्छेदेन निश्चय उक्तधीप्रतिबन्धद्वारा उक्तजिज्ञासां कुतो न प्रतिबध्नातीत्यत आह— **विरुद्धेति।** विरुद्धघटितो यो विरुद्धार्थग्राहित्वरूपो विशेषः, तदनिश्चयकालीनस्यैव दोषाभावरूपबाध्यत्वव्यावर्तकनिश्चयस्य बाध्यत्वधीरूपे शङ्कायां प्रतिबन्धकत्वादित्यर्थः। मिथो विरुद्धार्थग्राहित्वेन परामर्शयोर्ज्ञाने तद्विषयीभूतव्याप्त्यादौ जातेऽपि दोषाभावनिश्चये भ्रमत्वग्रहात् न तस्य बाध्यत्वधीप्रतिबन्धकत्वमिति, तद्वदेव प्रत्यक्षश्रुत्यादिमानयोः मिथो विरुद्धग्राहित्वेन ग्रहात् प्रत्यक्षविषयसत्त्वादौ जातेऽपि निर्दोषत्वनिश्चये भ्रमत्वग्रहात् न बाध्यत्वधीप्रतिबन्ध इति भावः। वस्तुतस्तु सत्त्वादिप्रत्यक्षे क्लृप्तदोषाभावनिश्चय एव न सम्भवति अधिष्ठानसत्त्वादेरेव सान्निध्यादिरूपेण प्रत्यक्षं प्रति दोषतया क्लृप्तेन घटादौ ज्ञेयत्वात्। तथाचाधिष्ठानसत्त्वसम्बन्धाकाराविद्यावृत्तेरुक्तस-

अवच्छेदकवृत्त्यनित्यत्वेन च साक्षिप्रत्यक्षस्य दोषजन्यत्वोक्तेः। अतएव यदुक्तं तार्किकैः-"तदेव ह्याशङ्क्यते; यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा न भवन्ति। उक्तं च भट्टवार्तिके बौद्धं प्रति—

'इह जन्मनि केषांचित् न तावदुपपद्यते।
योग्यवस्थागतानां तु न विद्मः किं भविष्यति॥'

इति। तथाच प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वादिह च उत्पत्तिस्वतस्त्वापवादस्य दोषस्य ज्ञप्तिस्वतस्त्वापवादस्य बाधस्य च अदर्शनात्। निर्मूलशङ्कायाश्च स्वक्रियादिविरोधेनानुत्थानाभ्युपगमात् स्वस्थं प्रत्यक्षस्य प्रामाण्यम्" इति, तदपि निरस्तम्;

---

म्बन्धस्य वा दोषजन्यत्वसम्भवात्तदवच्छिन्नानादिनोऽपि दोषजन्यत्वेन बाध्यत्वमित्याशयेनाह—**अवच्छेदकवृत्तीति**। अवच्छेदकस्य उक्ताविद्यावृत्तेरुक्तसत्त्वस्य वा सम्बन्धेत्यर्थः। अतएव यदुक्तमित्यादि उक्तं तार्किकैः तदेवेत्यादि उक्तं च वार्तिके **इहेत्यादि**। तथाच प्रत्यक्षस्य प्रामाण्यं तत्त्वावेदकत्वरूपं सुस्थमित्यादि यत्तदप्यत एव निरस्तमित्यर्थः। **जन्मनि** जन्मावधि मरणपर्यन्तकाले उपपद्यते प्रत्यक्षादिबाध इति शेषः। **न विद्म इति**। प्रत्यक्षादेस्तात्त्विकप्रामाण्यप्रच्युतिपूर्वकं वेदान्ततात्त्विकप्रामाण्यस्थितिर्यद्यपि भाविष्यतीति सम्भाव्यते, तथापि सर्वबाधो न भाविष्यत्येवेति न बौद्धमतासिद्धिरिति भावः। शङ्काया एवेत्येवकारेण स्वव्याघातिकायाः निर्मूलायाश्च शङ्काया अस्वीकारादित्यर्थः। श्रूयमाणार्थपरतया निश्चितत्वेनागमे शङ्काव्युदासात् प्रत्यक्ष एव बाधशङ्काया लब्धावकाशत्वोक्त्या श्रुतिजन्यज्ञाने बाधशङ्काविरहेण न श्रवणादिप्रवृत्तिरूपस्वरूपक्रियाव्याघातः। प्रत्यक्षे च बाधकशङ्काश्रुतिमूलकत्वात् न निर्मूलेति भावः। ननु

आगमादिप्रामाण्यमूलकशङ्काया एव स्वीकारात् । रूप्यादिनिषेधस्य तु 'नेदं रजतम्' इत्यादेरद्वैतश्रुत्यनुगुणत्वेन नाप्रामाण्यशङ्कास्कन्दनम् । अतो न वृद्धिमिच्छतो मूलहान्यापत्तिः । नापि सन् घट इत्यादेः नेदं रजतमित्यनेन समानयोगक्षेमता; अद्वैतश्रुतिविरोधाविरोधाभ्यां विशेषात् । अतएव सौषुप्तिकानन्दानुभवस्याप्यप्रामाण्ये कथमात्मन आनन्दरूपता तात्त्विकी, आनन्दश्रुतेरनुभूतातात्त्विकानन्दानुवादकत्वोपपत्तेरित्यपास्तम्; आनन्दस्य ब्रह्मरूपत्वेन अद्वैतश्रुतिविरोधाभावेन तदप्रामाण्यप्रयो-

---

नेदं रजतमित्यादिप्रत्यक्षस्यापि भ्रमबाधकत्वकाले भ्रमत्वशङ्कासम्भवः, तथाचाकाशादिमिथ्यात्वानुमितौ दृष्टान्ततया मूलीभूतशुक्तिरूप्यादिमिथ्यात्वहानिस्तत्राह—**रूप्यादीति** । सत्त्वप्रत्यक्ष इवाद्वैतश्रुतिविरुद्धार्थकत्वस्य बीजस्याभावात् नोक्तप्रत्यक्षे भ्रमत्वशङ्का, अद्वैतश्रुत्या द्वैतमिथ्यात्वं शुक्तिरूप्यादिबाधकाले न निश्चितं, श्रवणादिना तस्यास्तत्र तात्पर्यानिश्चयात् । अतो न मिथ्याविषयकत्वरूपभ्रमत्वनिश्चयः । तन्निश्चयेप्यज्ञानावच्छेदकविषयकत्वादिरूपव्यावहारिकप्रामाण्यस्य अन्यूनसत्ताकविषयकत्वस्य बाधकताप्रयोजकस्य न क्षतिः । इत्थंच श्रवणादिहीनया तया मिथ्यात्वसंशयेन उक्तभ्रमत्वसंशयेपि न क्षतिरिति भावः । **अनुगुणत्वेन** विरुद्धार्थकत्वाभावेन । **तदप्रामाण्येति** । यद्यपि सौषुप्तानुभवोऽज्ञानोपहितानन्दरूपत्वाविषयांशे भ्रम एवेत्येवं वक्तुं युक्तम्; तथापि तदंशे भ्रमत्वे उपहितविषयकस्य शुद्धविषयकत्वनियमेन अवश्यविषयीभूतशुद्धांशेऽपि भ्रमत्वमिति पराभिप्रेतनिरासायेदमुक्तम् । शुद्धानन्दरूपतदंशे अप्रामाण्येति तदर्थः । **अतएव** शुद्धानन्दांशे अप्रामाण्यप्रयोजकाभावादेव । सौषुप्तानुभवस्य शुद्धानन्दविषयकत्वेऽपि तद्विरोध्युपहिताकारत्वेन व्यावृत्ताकारत्वाभावात् न व्यावृत्ताकारधीजनकानन्दश्रुत्यनुवादकमिति भावः । **अत्य-**

**जकाभावात् । अतएव नानन्दश्रुतेरप्रामाण्यम् । तदुक्तं खण्डने—**

**अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।**
**अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम् ॥**

**इति । उक्तं च सुरेश्वरवार्तिके—**

**अतोऽवबोधकत्वेन दुष्टकारणवर्जनात् ।**
**अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः ॥**

**इति । अत्र चाक्षादिवदिति निदर्शनं व्यावहारिकप्रामाण्यमात्रे-**

---

**न्तेति ।** यद्यपि कलहादिस्थले अत्यन्तमसति विरोधिधीविषयीभूतेऽप्यर्थे शाब्दं ज्ञानमानुभाविकं भ्रमरूपं शब्दः करोति, तथाप्यत्र सद्वितीया[1]त्वादिधीविषयत्वेन तादृशेऽप्यद्वितीयशुद्धानन्दे प्रमामेव करोति ; उत्पत्तौ स्वतस्त्वापवादकस्य वाक्यार्थभ्रमप्रमादादेः शब्ददोषस्य ज्ञप्तौ स्वतस्त्वापवादकस्य मानान्तरबाधितार्थकत्वग्रहस्य कलहादिस्थले सत्त्वेपि अद्वैतानन्दबोधकश्रुतौ **अबाधात्** उक्तापवादकाभावात् **स्वतः** प्रामाण्येन **निश्चलां** नियतसम्बन्धाम् । यत उत्पत्तौ ज्ञप्तौ चात्र ज्ञानप्रामाण्यस्य स्वतस्त्वमनपवादकं, अतः प्रमामत्र करोतीत्यर्थः । **अवबोधकत्वेनेति ।** अज्ञातज्ञापकत्वेनेत्यर्थः । तथाचानुवादकत्वलक्षणमप्रामाण्यं निरस्तम् । उत्पत्तौ स्वतःस्त्वापवादकं निरस्यति—**दुष्टेति ।** ज्ञप्तौ तन्निरस्यति—**अबाधादिति । निदर्शनमिति ।** यथा व्यावहारिकप्रामाण्ये आगन्तुकदोषाप्रयुक्तविषयकत्वं व्यवस्थापकं, तथा तात्त्विकप्रामाण्ये दोषसामान्याप्रयुक्तविषयकत्वमिति स्वापवादकदोषाप्रयुक्तविषयघटितप्रामाण्यपदार्थत्वेन साधारणधर्मेण दृष्टान्तदार्ष्टान्तिकतेति भावः ॥

यत्तु—"स्वप्ने द्रष्टारमित्याद्ययुक्तं; दुष्टकरणस्य कल्पितत्वेन अदुष्टत्वात्, यो यो यद्भ्रमद्रष्टा तस्य तद्बाधेऽप्यबाधनियमस्य

---

[1] सत्त्वद्वितीय.

णेति द्रष्टव्यम् । एवंच तात्त्विकप्रामाण्याभावेऽपि प्रत्यक्षा-

---

अक्षतेः । वृत्तिप्रतिबिम्बितस्य साक्षिताप्ययुक्ता ; वृत्तेर्विषयि-त्वापत्त्या विषयत्वासम्भवात्, वृत्त्य[1]न्तरोपहितभास्यत्वेऽनवस्थापत्तेः । चिन्मात्रस्य साक्षितौचित्यात् भ्रमजन्यत्वस्य विषयबाधाप्रयोजकत्वा-दित्ययुक्तम्; बाध्यधीतत्कारणयोरेकविषयकत्वे भ्रमजन्यत्वस्य बाधप्र-योजकत्वसम्भवात्, योग्यताभ्रमजन्यशाब्दबोधे तथा दर्शनात् । द्वैतस्य प्रत्यक्षादिलौकिकमानेत्याद्यपि न युक्तम्; प्रत्यक्षादिगृहीतव्यावहारिक-सत्त्वद्वैतान्यपारमार्थिकद्वैतग्राहकत्वेन द्वैतश्रुतेरनुवादकत्वात् । इयं शुक्तिरित्येवेत्याद्ययुक्तम्; रजतशुक्त्योरभेदग्रहे भ्रमानिवृत्तेः भेदग्रहे तन्निवृत्तेरानुभविकत्वात् । अतएव पीतश्शङ्ख इति भ्रमस्य शङ्खत्व-प्रत्यक्षेऽप्यनुवृत्तिः, न तु पीतभेदप्रत्यक्षे । एवं समत्वेन प्रमाणान्तर इत्याद्ययुक्तम्; शब्दो ज्ञात एव प्रमाकरणमिति तत्प्रामाण्यं प्रत्यक्षो-पजीवकं, इन्द्रियं तु न तथेति तत्प्रामाण्यं न शब्दोपजीवकमित्युप-जीव्येन प्रत्यक्षेण शब्दस्यासमत्वात् । न हि सत्प्रतिपक्ष इत्याद्ययुक्तम्; सत्प्रतिपक्षन्यायेन प्रत्यक्ष इव श्रुतावपि शङ्कापत्तेः । अतएवागमादिप्र-माणमूलकेत्याद्ययुक्तम् । मूलहान्यापत्तिसमाधानमपि न युक्तम्; नेदं रजतमिति ज्ञाने शङ्कास्पदश्रुत्यानुगुण्यरूपस्य विशेषस्याप्रयोजकत्वात्"— इति, तत्तुच्छम्; मन्मते द्रष्टृ[2]मात्रस्य कल्पितत्वात्, तेन अद्रष्टृत्वादि[3]-सिद्धेः । वृत्तेस्तूपाधित्वेऽपि विशेषणत्वाभावेन न विषयित्वम् । यथाच विषयत्वेऽपि नानवस्था, तथोक्तम् । शुद्धचितः साक्षित्वं तु प्रत्युक्तम् । स्वविषयविषयकभ्रमजन्यत्वं न बाधप्रयोजकं, लिङ्गाभासधीजन्यानुमित्या-दौ व्यभिचारात् । स्वविषयतापर्याप्त्यधिकरणविषयकभ्रमजन्यत्वादिकमपि प्रतियोगिता अभावीया इत्याकारायां लिङ्गाभासजन्यानुमितौ व्यभिचा-

---

[1] व्यक्त्य. [2] दृष्ट. [3] अदृष्टत्वादि.

**दीनां व्यावहारिकप्रामाण्याभ्युपगमात् न स्वक्रियाव्याघातः । न वा—**

**प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥**

रीत्यादि बोध्यम् । प्रत्यक्षादिसिद्धद्वैतेन लौकिकवैदिककार्यमात्रनिर्वाहे [1] पारमार्थिकद्वैतान्तरपरत्वं यत् श्रुतेः कल्प्यते तत्प्रायस्तद्वैतं [2] गले बद्ध्वा मरणाय लोकवेदबहिर्भूताय [3] । कथं च तर्हि द्वैतश्रुतिसंवादित्वेनाबाध्यं प्रत्यक्षमिति त्वद्गुरुणोक्तं त्वयोपपादितम्? कथं वा प्रत्यक्षाद्यगृहीतं श्रुतिघटकपदैरुपस्थाप्य ब्रह्म तु उपहितरूपेण प्रत्यक्षादिगृहीत-मुपाध्यंशानुद्बुद्धसंस्कारविषयः तैः स्मारयितुं शक्यम्? न च पार-मार्थिकद्वैतमपि व्यावहारिकद्वैतोपहितरूपेण प्रत्यक्षादिगृहीतं तद्रूपानु-द्बुद्धसंस्कारविषयः तदनुपहितरूपेण पदैरुपस्थाप्यत इति वाच्यम्; उक्तोपहितरूपेण प्रत्यक्षादिना तद्ग्रहणे मानाभावात् । सत्तास्फुरण-रूपस्य ब्रह्मणः प्रपञ्चोपहितरूपेण तेन ग्रहणं त्वविवादम् । रजत-शुक्त्योरभेदग्रहेऽप्यनुवर्तमानभ्रमस्तु रजतभेदाज्ञानकार्यत्वात् तद्भेदज्ञा-नान्निवर्तते, बाधकमात्रं न भेदविषयकमित्याचार्याभिप्राय इत्युक्तम् । न च शुक्तित्वज्ञानस्यापि शुक्तित्वं रजतभेदव्याप्यमित्याकारोद्बुद्धसंस्का-रविशिष्टस्यैव बाधकत्वात् बाधकमात्रं भेदविषयकमेवेति वाच्यम; प्रमाया एव बाधकत्वादुक्तसंस्कारस्य तदुपाधित्वेन बाधककोट्य-प्रवेशात्, अनुभवानुरोधेन उक्तसंस्काराविशेषितज्ञानस्यापि बाधक-त्वाच्च । किंच यद्विशिष्टाधिष्ठानधीत्वेन बाधकता, तन्न बाधकधीबा-ध्यमित्येव त्वया वाच्यम् । अन्यथा रजतादेः बाध्यस्यपि भेदप्र-तियोगित्वेन बाधकधीविषयत्वेन व्यभिचारात् । तथाच न नः क्षतिः ।

1 निर्वाहात्. 2 तत्प्रशस्तद्वैतं. 3 गर्ह्यभूताय.

**इत्यादिस्मृतिविरोधः । तस्मात् सिद्धं बाधनिश्चयेन तच्छङ्कया वा प्रत्यक्षादेः अद्वैतागमानुमानाद्यविरोधित्वम् ॥**

**इति भाविबाधोपपत्तिः.**

---

न हि यद्भेदप्रकारकत्वेन या धीः बाधिका स भेदस्तद्बाध्य इति नस्सम्मतम् । न च 'नेह नानास्ति किञ्चन, शिवमद्वैतम्' इत्यादिश्रुतिजन्यज्ञानस्य द्वैताभावविशिष्ट[1] विषयकत्वेन द्वैताभावबाधकत्वात् व्यभिचार इति वाच्यम्; न हि द्वैतत्वावच्छिन्नाभावस्य स्वविशिष्टब्रह्मविषयकत्वेन बाधकं तत्; किन्तु तादृशाभावाभावविशिष्ट[2] ब्रह्मज्ञानत्वेन। किंचनेतिसर्वनाम्ना तत्तदसाधारणरूपावच्छिन्नाभावानां बोधनात् यद्विशिष्टाधिष्ठानधीत्वेन बाधकत्वं यत्तन्निरूपितं बाध्यत्वं न तस्येति द्वैताभावाभावस्यापि बाध्यत्वं नानुपपन्नम् । शिवमद्वैतमित्यादिश्रुतिजन्यधीस्त्वखण्डविषयकत्वेनैव बाधिकेति ध्येयम् । पीतभेदप्रत्यक्षनिवर्त्यो भ्रमः पीतभेदाज्ञानकार्य इति नोक्तरीतिक्षतिः[2] । शब्दस्य यद्यपि प्रत्यक्षमुपजीव्यं, तथापि न तत्त्वाविकप्रामाण्यमुपजीव्यमित्युक्तम् । किञ्च चक्षुरादीन्द्रियनिष्ठं प्रमाकरणत्वमपि शाब्देष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यघर्षणाद्यधीनचक्षुरादिसापेक्षमिति कथं न शब्दोपजीवकम्, इन्द्रियत्वावच्छेदेनातथात्ववत् शब्दज्ञानत्वावच्छेदेनापि न प्रत्यक्षोपजीवकत्वम् । सत्प्रतिपक्षन्यायेन श्रुतावपि शङ्कापात्तिस्तु प्रत्यक्ष एव शङ्काया लब्धावकाशत्वेनैव पूर्वमेव प्रत्युक्ता; पूर्वं सत्प्रातिपक्ष[3]वदन्यतरत्वेन बाध्यत्व[4] शङ्कायामपि पश्चाच्छ्रुतेर्बलवत्त्वप्रतिसन्धानेन प्रत्यक्ष[5] एव शङ्कावकाशात् । किञ्च श्रुतौ शङ्कायामपि नास्माकं क्षतिः; बाध्यज्ञानापेक्षया अन्यूनबलत्वस्यैव बाधकतायां प्रयोजकत्वसम्भवात् ।

---

[1] द्वैतभावविशिष्टब्रह्म. [2] तादृशाभावे विशिष्ट. [3] रीतिरिति भावः. [4] सपक्ष. [5] बाधकत्व. [6] प्रत्यक्षत्व.

## विश्वसत्यत्वानुमानभङ्गः

स्यादेतत् । अध्यक्षस्य भिन्नविषयत्वादिना बाधाक्षमत्वेऽपि अनुमानमेव बाधकं स्यात् । तथाहि—ब्रह्मप्रमान्येन वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्येन वा मोक्षहेतुज्ञानान्येन वा अबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यत्, विमतं वा सत्, पारमार्थसद्वा, प्रातिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात्, ब्रह्मवत्, व्यतिरेकेण शशशृङ्गवद्वेति चेन्न ।

---

सूचितं चेदमाचार्यैः स्वाप्नगजादिज्ञानस्य स्वाप्नगजाद्यभावधीबाध्यत्वं वदद्भिः । पूर्वं स्फुरणरूपस्य कदापि बाधानुपलम्भपराहता च श्रुतौ शङ्काबाध्यता । अतएवान्यूनबलत्वेन बाधकत्वे न्यूनबादापत्ति प्रत्युक्ता । अपिच श्रुतिविषये ब्रह्मणि बाध्यत्वं ज्ञानोच्छेद्यकारणत्वं ज्ञानोच्छेद्यप्रयोजनकत्वं वा स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिकं वा शङ्कनीयम् । न च तत्सम्भवति, ब्रह्मण्यकारणकत्वाप्रयोजककत्वानधिकरणकत्वानां त्वयापि स्वीकारात् । अतएव स्वात्यन्ताभावसामानाधिकरण्यादिकमपि न तथा, तत्रात्यन्ताभावप्रतियोगित्वस्य मानाभावादिना पूर्वं निरस्तत्वाच्च । यत्तु परैः प्रत्यक्षस्य पारमार्थिकसत्त्वग्राहित्वमत्रोपपादितं, तत्पूर्वमेव 'न [illegible] तद्योग्यत्वं वा' इत्यादिना आशङ्क्य दूषितत्वान्नेह दूषितम् ॥

रत्नैः सारस्वतैस्तर्कैश्चन्द्रिकाचन्द्रभूषणै. ।
दुरन्तध्वान्तनाशाय भाविबाधोपपादनम् ॥

इति भाविबाधोद्धार..

---

भिन्नविषयत्वादिनेति । श्रुत्यनुमानविषयमिथ्यात्वाविरोधिव्यावहारिकसत्त्वविषयत्वादिनेत्यर्थ. । आदिपदात्रिकालाबाध्यसद्रूपतादा-

त्वन्मते प्रातिभासिकस्याप्यसत्त्वेन व्यर्थविशेषणतया व्याप्यत्वासिद्धेः । अस्मन्मतमाश्रित्य हेतूकरणे च देहात्मैक्ये ब्रह्मज्ञानेतराबाध्ये व्यभिचारात् । न हि प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वादन्यत् । त्वया हि प्रातिभासिकस्य शुक्तिरूप्यादेरपक्षत्वाय सत्यन्तमाद्यं विशेषणत्रयं विकल्पेन पक्षे प्रक्षिप्तम् । तत्र ब्रह्म वृत्तिव्याप्यमिति मतेनाद्यम् । तदनभ्युपगमे तु शाब्दप्रमां प्रति तात्पर्यप्रमा हेतुरिति मतेन द्वितीयम् । अन्योन्याश्रयात् न सा हेतुरिति मतेन तृतीयम् । तथाच

---

त्म्यस्य विषयत्वेऽपि [1] सद्रूपकलिततादात्म्यविषयकत्वपरिग्रहः । **व्याप्यत्वासिद्धेरिति** । व्याप्यत्वलक्षणे व्याप्यतावच्छेदकान्तराघटितहेतुतावच्छेद[illegible]म् । अशक्तिविशेषव्यापकतया व्यर्थविशेषणत्वस्य पुरुषनिग्राहकत्वं न तु हेत्वाभासत्वमिति मते तु व्याप्यत्वे प्रयोक्तृनिग्राहकान्यहेतुनिष्ठत्वासिद्धेरित्यर्थः । **अस्मन्मतमिति** । देहात्मैक्यस्य त्वन्मते अनङ्गीकारेऽपि अस्मन्मतानुसारिहेतुप्रयोगे अस्मन्मतसिद्धदेहात्मैक्ये व्यभिचारवारणमावश्यकमिति भावः । ननु प्रतिभासमात्रशरीरत्वादिरूपं प्रातिभासिकत्वं हेतौ निवेश्यं, तस्य च देहात्मैक्ये सत्त्वान्न व्यभिचार इत्यत आह — **त्वया हीति** । **अन्योन्याश्रयादिति** । शब्दैकगम्यार्थे तात्पर्यप्रमा शाब्दधीपूर्वमसिद्धा । न च शाब्दधीजननानुकूलशक्तिरूपतात्पर्यं तत्पूर्वमपि प्रमातुं शक्यत इति वाच्यम् ; शाब्दभ्रमशक्तत्वस्यातात्पर्यत्वात्, शाब्दप्रमाशक्तरूपस्य तस्य वाक्यार्थाबाधरूपप्रमात्वघटितत्वेन शाब्दप्रमापूर्वं प्रमातुमशक्यत्वात् । तथाच शाब्दप्रमातात्पर्यप्रमयोः परस्पराधीनत्वादुत्पत्तावन्योन्याश्रयादित्यर्थः । कर्मप्राशस्त्यादौ वेदान्ततात्पर्यभ्रमजन्यो यश्शाब्दबोधः तदन्याबाध्यं कर्म[2] प्राशस्त्यादि, तत्र बाधवारणाय प्रमितिस्थले ज्ञानं निवेशितम् । **तृतीयमिति** । स्वग्रन्थे त्वयैव तथोक्तत्वादिति शेषः । तथाच

**प्रातिभासिकस्यासत्त्वानाधिकरणत्वमङ्गीकृतमेव; अन्यथा तुच्छ-वारकासत्त्वानधिकरणत्वविशेषणेनैव तद्व्यावृत्तावेतावत्प्रयासवैय-र्थ्यापत्तेः। एवंच देहात्मैक्यस्यापि पक्षत्वे बाध एव। बाधे च सति पक्षविशेषणस्य पक्षत्वस्यासिद्ध्याश्रयासिद्धिरपि। अतएव स्वबाधकाभिमताबाध्यदोषजन्यज्ञानाविषयत्वे सतीति वा, स्वबा-धकाभिमतबाध्यबाधाविषयत्वे सतीति वा, स्वसमानाधिकरण-कर्मप्रागभावसमानकालीनज्ञानाबाध्यत्वे सतीति वा विशेषण-प्रक्षेपेऽपि न निस्तारः। देहात्मैक्ये पूर्वोक्तदोषाव्यावृत्तेरेव।**

पक्षतावच्छेदके ब्रह्मप्रमान्या[1]बाध्यत्वादिनिवेशे च **अङ्गीकृतमेवेति।** तथाच देहात्मैक्यस्य असदन्यत्वब्रह्मप्रमेत्यादिविशेषणयोः सत्त्वेन पक्ष-त्वावश्यकत्वेन प्रतिभासमात्रशरीरत्वरूपप्रातिभासिकत्वस्य हेतौ निवेशे स्वरूपासिद्धिः। ब्रह्मज्ञानान्यबाध्यत्वरूपतन्निवेशे च व्यभिचारः। न च पक्षीयव्यभिचारो न दोष इति वाच्यम्; अनुकूलतर्कसत्त्वे पक्षीयव्याभिचारसंशयस्य अप्रतिबन्धकत्वेऽपि प्रकृते व्यभिचारनिश्चय-सम्भवादिति भावः। **पक्षत्वे** पक्षत्वात्। **बाध एव** बाधोऽपि **पक्षत्वस्य** साधकबाधकमानाभावरूपस्य आश्रयासिद्धिमध्येऽसिद्धिबा-धयोः प्राचीनैर्व्यवहारादित्युक्तम्। नव्यमते तु बाध एव; अनु-मित्युद्देश्यतावच्छेदकप्रकारधीविषयस्यैव आश्रयासिद्धित्वात्। **स्वबाध-केत्यादि।** स्वं प्रातिभासिकं रूप्यादि, तद्बाधकाबाध्यः काचादिदोषः, तज्जन्यभ्रमज्ञानविषयः तदेव रूप्यादि, तदन्यत्वं व्यावहारिकमात्रे। **बाधाविषयत्व इति।** नेदं रूप्यमित्यादिबाधस्य रूप्यादिबाधका-बाध्यस्य निषेध्यत्वेन विषयो रूप्यादि, तदन्यत्वं व्यावहारिकमात्रे। **समानाधिकरणं** स्वसमानाधिकरणं यत्करणं यत्कर्म तत्प्रागभाव-समानकालीनज्ञानं ब्रह्माविषयकं तद्बाध्यं रूप्यादि। **पूर्वोक्तेति।**

[1] प्रामाण्ये.

**यत्तु–प्रथमे साध्ये व्यावहारिकसत्त्वमादाय सिद्धसाधनम्, द्वितीयसाध्ये तु वादिनः परमार्थत्वविशेषणं व्यर्थम्; व्यावर्त्याप्रसिद्धेरिति, तन्न; व्यावहारिकसत्त्वं सत्त्वेन व्यवहारमात्रमिति मतेन प्रथमप्रयोगादनुगतम्। पृथग्व्यावहारिकं सत्त्वमिति तु मते द्वितीयः प्रयोगः। न च विशेषणं व्यर्थम्; परार्थानुमाने परं प्रति सिद्धसाधनोद्धारस्य तत्प्रयोजनत्वात्। ईश्वरानुमाने जन्यं कृतिजन्य-**

---

स्वबाधकजाग्रद्बोधबाध्यस्वाप्नादिप्रातिभासिकदोषजज्ञानविषये स्वाप्नादिप्रातीतिकविशेषे बाधादिकं बोध्यम्। आद्ये द्वितीयेऽपि स्वाप्नगजादौ स्वबाधकजाग्रद्बोधबाध्यस्वाप्नगजाद्यभावबुद्धेः निषेध्यत्वेन विषये तद्बोध्यं, जाग्रद्बोधस्यापि तद्बाधनयोग्यत्वात्। स्वबाधनोपधायकं तु तत्तद्धीविश्रान्तमननुगतत्वान्न निवेश्यम्। तृतीये त्वसिद्धिः; ईश्वरनिष्ठज्ञानस्यैव स्वसमानाधिकरणेश्वरप्रसादकोपरूपकर्मप्रागभाव (वा) समानकालीनत्वेन तद्बाध्याप्रसिद्धेः, 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति न्यायेनान्तःकरणनिष्ठकर्माप्रसिद्धेः। स्वत्वबाधकत्वदोषत्वादेरनुगतस्याभावेन तत्तत्प्रातिभासिकव्यक्तिभेदकूटपर्यवसानेन दुर्ज्ञेयत्वं तु पक्षत्रयेऽपि, ब्रह्मज्ञानबाध्यशुक्तिरूप्यादिप्रातीतिके बाधव्यभिचारादिकं तु पक्षषट्केऽपि बोध्यम्। परेणैव दूषणमाशङ्क्य यदुद्धृतं शिष्यव्युत्पादनाय तदनुमोदते—**यत्त्विति। व्यवहारमात्रमिति।** एकमेवाधिष्ठानीभूतं ब्रह्मसत्त्वं कल्पिततादात्म्येन सदाकारस्य दृश्यप्रतीतिमात्रे प्रकार इति मते सादिदमिति धीप्रकारस्वरूपैक्यादिसाधनेन सिद्धसाधनम्। त्रिकालाबाध्यत्वोपलक्षितस्वरूपात्यन्ताभेदस्य प्रपञ्चे प्रतिवादिना अनङ्गीकारादिति भावः। अनुगतं सादिदमिति धीप्रकारव्यावहारिकमात्रविशेष्यकधीप्रकारः पृथग्व्यावहारिकान्यविषयकसदिदमिति धीप्रकारादन्यद्वयर्थमिति सादिदमिति धीप्रकारस्य वादिमते परमार्थत्वानियमेन तन्मा-

**मित्यत्र मीमांसकं प्रति जन्यत्वस्येव विश्वपरमार्थत्ववादिनं प्रति परमार्थत्वस्य प्रमेयत्वादिवदुपरञ्जकत्वेन विशेषणत्वोऽपपत्तेश्च। तस्मात् पूर्वोक्त एव दोषः। हेतौ च व्यर्थविशेषणत्वदोषः। यद्यपि मतद्वयेपि अप्रामाणिकस्यापि निषेधप्र-**

---

त्रैक्यस्य साधनसम्भवे परमार्थेति प्रकारविशेषणं व्यर्थमित्यर्थः। **जन्यत्वस्येवेति**। ईश्वरानङ्गीकारेण तदीयनित्यकृतेरनङ्गीकारिणं मीमांसकं प्रति जन्यत्व[1]मव्यावर्तकमिति भावः। **उपरञ्जकत्वेनेति**। अव्यावर्तकत्वेनेत्यर्थः। प्रतिवादिवादिनोम्सिद्धं व्यावर्तकत्वं नापेक्षते, किन्तु तयोरन्यतरसिद्धमिति भावः। उक्तं हि मण्यादौ—"अदृष्टद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि, समवेतत्वे सति प्रागभावप्रतियोगित्वात्; यदेवं तदेवं यथा घटः। न च जन्यत्वव्यावर्त्याप्रसिद्धिः; प्रमेयो घट इतिवदव्यावर्तकत्वेऽपि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात्" इत्यादि। ननु ब्रह्मज्ञानेतराबाध्यत्वमप्रसिद्धम्; मन्मते ज्ञानमात्रस्य सद्रूपब्रह्मावगाहित्वेन तदितरबाध्यत्वाप्रसिद्धेः। अथ ब्रह्ममात्रविषयकज्ञानं निवेश्यं[2], तदापि परमते तदप्रसिद्धम्। अतः पक्षहेत्वोरप्रसिद्धदोषः कुतो नोच्यते? किञ्च प्रातिभासिकस्य अप्रामाणिकत्वेन तदन्यत्वमप्रसिद्धम्; वेदान्ततात्पर्यप्रमाजन्यत्वस्य शुद्धब्रह्मशाब्दप्रमात्वरूपस्वावच्छेदकघटितत्त्वात्, मोक्षहेतुत्वस्य च विजातीयज्ञानत्वरूपस्वावच्छेदकघटितत्वात्तादृशावच्छेदकाप्रसिद्धेरप्रसिद्धिः परमते, तत्राह—**यद्यपीति**। **अप्रामाणिकस्येति**। अप्रसिद्धस्य प्रमाणाविषयस्य चेत्यर्थः। अहृदयवाचामहृदयमेवोत्तरमिति न्यायेन स्वमतासिद्धस्यापि पर[3]प्रसिद्धिमात्रेण निषेधप्रतियोगितया प्रयोगः। प्रमाणाविषयस्यापि

---

1 अजन्यत्व. 2 निवेश्यते. 3 परमत.

तियोगित्वाभ्युपगमादारोपितत्वेन उभयसम्मतत्वरूपस्य वा प्रतिभासमात्रशरीरत्वरूपस्य वा प्रातिभासिकत्वस्य प्रसिद्धिरस्ति । अन्यथा सिद्धान्तेऽपि मिथ्यात्वानुमाने प्रातिभासिकान्यस्यैव पक्षीकर्तव्यत्त्वाद्दोषसाम्यं स्यात् तथापि हेतौ प्रातिभासिकत्वविशेषणं व्यर्थम् । अनधिकरणत्वे सति असत्त्वानधिकरणत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वोपपत्तेः । शुद्धमेव हि ब्रह्म दृष्टान्तत्वेन अभ्युपेयम् । धर्मवतो दृष्टान्तत्वे साध्यवैकल्यापत्तेः । साध्यं तु बाधाभावरूपत्वादधिकरणस्वरूपमेव न धर्मः । धर्म्यतिरिक्ताभावानभ्युपगमस्योक्तत्वात् । तथाच चक्षुस्तैजसत्वानुमाने रूपादिषु मध्ये इत्यस्यासिद्धिवारकस्यापि व्याप्तिग्रहौपायिकत्वेन व्यभिचारवारकविशेषणतुल्यतया यद्यपि सार्थकत्वम् । व्यभिचारवारकस्यापि सार्थकत्वे व्याप्तिग्रहौपयिकत्वमात्रस्य तन्त्रत्वात् । तथापि 'क्षित्यादिकं न कर्तृजन्यं

---

भ्रमविषयत्वमात्रेण निषेधप्रतियोगित्वधीश्च मतद्वयेऽपि स्वीक्रियत इति भावः । अभ्युपगमात् प्रसिद्धिरस्तीत्येका योजना । पक्षहेत्वोः सत्यन्तस्य प्रसिद्धिरस्तीत्यर्थः । देहात्मैक्यादौ बाधव्यभिचारादिवारणाय प्रातीतिकव्यावर्तकसत्यन्तस्थले विशेषणान्तरमाह—**आरोपितत्वेनेति ।** अभ्युपगमादित्यनुषज्यते तेनैतादृशप्रातिभासिकस्यापि [illegible]ऽपि न क्षतिः । प्रातिभासिकत्वस्य प्रसिद्धिरस्तीत्यपरायोजना । **अनधिकरणत्वेति ।** अस्मद्रीत्या प्रातिभासिके व्यभिचारप्रसक्तेरिदम् । **साधकत्वेति** । व्याप्तिग्रहौपयिकत्वेत्यर्थः । ननु ब्रह्मण्यज्ञानविषयत्वाद्यधिकरणत्वसत्त्वादनधिकरणत्वाभावेन व्याप्त्यग्रहात् व्याप्तिग्रहौपयिकतया तत्सार्थकं, तत्राह **शुद्धमेवेति** । उक्ताधिकरणत्वं चोपहित एव, न शुद्धे ब्रह्मणीति भावः । **तैजसत्वानुमानेति ।** चक्षु-

**शरीराजन्यत्वात्' इत्यत्र शरीरस्येव व्याप्तिग्रहानुपयोगित्वेन प्रातिभासिकत्वस्य वैय्यर्थ्यमेव। आकाशादावजन्यत्वकर्तृजन्यत्वाभावयोरिव निर्धर्मके ब्रह्मणि अनधिकरणत्वपरमार्थसत्त्वयोर्व्याप्तिग्रहोपपत्तेः। तथा च एकामसिद्धिं परिहरतो द्वितीयासिद्ध्यापत्तिः। स्वरूपासिद्धिपरिहारार्थं विशेषणं प्राक्षिपतो व्याप्यत्वासिद्धिरित्यर्थः। व्याप्तावनुपयोगस्य दर्शितत्वात्।**

---

स्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादालोकवदित्यत्र मध्यान्तानुपादाने दृष्टान्ते हेत्वभावेन साध्यहेत्वोः सहचाराग्रहात् मध्यान्तं व्याप्तिग्राहकमिति भावः। ननु व्याप्तेरिव पक्षधर्मताया अपि ग्राहकत्वेन सार्थक्यं कुतो न स्यात्, व्याप्तिग्राहकस्यापि सार्थकत्वेऽनुमितिप्रयोजकत्वस्यैव तन्त्रत्वसम्भवात्तत्राह—**व्याप्ताविति**। एवेति शेषः। तथाच यद्विशेषणविनाकृतस्य व्याप्यतावच्छेदकत्वसम्भवः, तद्व्यर्थं, तद्घटितस्य गौरवेणानवच्छेदकत्वात्। न च व्याप्यतायाः स्वरूपसम्बन्धरूपस्य अतिरिक्तस्य वा अवच्छेदकत्वम्यानङ्गीकारादन्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य गुरावपि स्वीकारान्नोक्तरीत्या वैयर्थ्यस्य दूषणत्वमिति वाच्यम्; व्याप्यताया उक्तावच्छेदकत्वस्यानङ्गीकारे कारणतादेरपि तदापत्तेः दण्डः कारणमित्यादिधीरिव धूमो व्याप्य इत्यादिधीरपि ह्यवच्छेदकत्वावगाहिनी सम्भवत्येव। अतएव कम्बुग्रीवादिमत्त्वादिना व्याप्तिर्नेष्यत एव। तथाच स्वविशिष्टव्यापकसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकादिरूपव्याप्तिधीविरोधित्वात् व्याप्यत्वासिद्धिविषयोऽनावच्छेदकत्वशून्यहेतुतावच्छेदकरूपस्य व्यर्थविशेषणत्वस्य हेत्वाभासत्वं स्वरूपासिद्धिमात्रवारकविशेषणघटितहेतावपि तदक्षतमिति भावः। स्पष्टश्चायमर्थो मण्यादावीश्वरवादादौ। तत्र हि—शरीराजन्यत्वे व्यर्थ-

**किञ्च व्यावहारिकसत्त्वमात्रेणैव उपपत्तेः उक्तहेतोरप्रयोजकत्वम् । परमार्थसत्त्वे बाधानुपपत्तिलक्षणप्रतिकूलतर्कपरा-**

---

विशेषणत्वं, लाघवेनाजन्यत्वस्यैव व्याप्यत्वात् । ननु व्यर्थत्वमसिद्धम्, पक्षधर्मतौपयिकत्वात्, व्यभिचारवारकस्यापि सार्थकत्वे अनुमितिप्रयोजकत्वस्यैव बीजत्वादित्याशङ्क्य, नीलधूमे नीलत्वमपि न व्याप्यतावच्छेदकं, गौरवात्, किन्तु धूमत्वमेव, दण्डत्वेन कारणत्वे रूपमिव । एवं शरीराजन्यत्वेऽपि न शरीरमवच्छेदकं, गौरवात् । येन विशेषणेन विना व्याप्तिः न गृह्यते, तस्यैव व्याप्यतावच्छेदकत्वनियमात् । अतएव गन्धस्यैव व्यञ्जकत्वादित्यत्र रूपादिषु मध्य इति विशेषणं विना व्याप्त्यग्रहात् तत्सार्थकमेवेत्यादि समाधानमुक्तम् । उक्तं च तत्र पक्षधरैः—'गौरवमेव तदहेतुतायां बीजम्' इति । किञ्च यद्विनापि यदवच्छेदेन व्याप्तिर्गृहीतुं शक्यते, तत्तत्राधिकत्वान्निग्रहस्थानम् । अतएव परं प्रति तेन रूपेण व्याप्तेरुपन्याससम्भवेन अनुपयुक्तकल्पत्वात् उक्तविशेषणघटितहेतुतावच्छेदकघटितमेव व्याप्यत्वं वाच्यम् । तथाचोक्तविशेषणघटितत्वविशिष्टहेतुतावच्छेदकस्य व्याप्यत्वासिद्धिविधया हेत्वाभासत्वमिति सर्वथा व्याप्यत्वासिद्धिर्दुर्वारा । उक्तं च तत्रैव—यन्निष्ठा यन्निरूपिता व्याप्तिः येन विशेषणेन विना गृहीतुं न शक्यते, तत्र तद्विशेषणं तद्व्याप्यतावच्छेदकं ; अकर्तृकत्वनिरूपितजन्यत्वाभावनिष्ठव्याप्तेः[1] शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं धूमे नीलत्वमिवेत्यादिपूर्वोक्तशङ्काग्रन्थेऽप्युक्तम् । न शरीराजन्यत्वे नीलधूमादौ च व्याप्तिरिति विशेष्यमात्रे सा । तथाच स्वरूपासिद्धिः ; तद्वारणाय विशेषणोपादाने व्याप्यत्वासिद्धिरिति । अतएव स्वसमानाधिकरणव्याप्यतावच्छेदका-

---

[1] निरूपितजन्यत्वाभाव.

**घाताच्च ननु ब्रह्मण्यसत्प्रातिभासिकव्यावृत्तिरूपं हेतुं प्रति व्यावर्तकतया प्रयोजकत्वेन परमार्थसत्त्वं क्लृप्तम्। अपृथिवीव्यावृत्तिं प्रति पृथिवीत्वस्येव असद्व्यावृत्तिं प्रति तद्विरुद्धसत्त्वस्यैव प्रयोजकत्वात्। ज्ञानत्वानन्दत्वादिकं तु न तत्प्रयोजकम्। साक्षादसत्त्वाविरोधित्वात्, प्रपञ्चे तदभावाच्च। तथाच ब्रह्मविश्वसाधारणं परमार्थसत्त्वमेव तत्प्रयोजकम्। न च विश्वमिथ्यात्वात् परमार्थसत्त्वमपि न विश्वसाधारणम्। ज्ञानत्वानन्दत्वादिवदिति वाच्यम्। अन्योन्याश्रयापत्तेरिति चेत्। अयुक्तमेतत् न हि प्रातिभसिकासतोरेका व्यावृत्तिरुभयी वा समव्याप्ता। येनैकप्रयोजकप्रयोज्या भवेत्। किन्तु प्रातिभासिकव्यावृत्ति-**

---

न्तरघटितत्वं व्यर्थविशेषणत्वं, तदभावविशिष्टहेतुतावच्छेदकं व्याप्तिघटकमिति दीधित्यादावुक्तमनादेयम्। ईश्वरवादीयपक्षधरीये 'अथ तादृशधर्माघटितत्वमपि विशेषणम्' इति वाक्ये पूर्वोक्तसाध्यसम्बन्धितावच्छेदकस्यैव तादृशपदेनोक्तत्वात् स्वसामानाधिकरण्यादिविशेषणस्य स्वकपोलमात्रकल्पितत्वेन निर्युक्तिकत्वात्। धूमप्रागभावादौ व्यर्थविशेषणत्वस्य उचितत्वात् यदि च निग्रहस्थानत्वरूपा[1] व्याप्यत्वासिद्धिरेव व्यर्थविशेषणस्य दोषत्वं न तु हेत्वाभासत्वमिति मतमाद्रियते, तथापि व्याप्तिग्रहानौपयिकमात्रस्य तत्तान्त्रिकसम्मतमित्यसिद्धिमात्रवारकस्यापि प्रातिभासिकत्वस्य प्रकृते तदावश्यकमिति ध्येयम् **प्रातिभासिकासतोरिति।** प्रातिभासिकत्वेन भेदः, असत्त्वेन च भेदः नैकः; न वा तौ समव्याप्तावित्यर्थः। ननु प्रातिभासिकासतोरन्यतरत्वेन याव्यावृत्तिः[2] तत्प्रयोजकतया ब्रह्मणि सत्त्वं सिद्धमित्याशङ्क्य, क्लृप्तस्य ब्रह्मप्रपञ्चान्यतरत्वस्यैव तत्प्रयोजकत्वसम्भवात्, अन्यथा ब्रह्मासदन्यतरव्यावृत्तिप्रयोजकतया प्रातीतिके

---

[1] विशेषणत्वस्यानन्वितत्त्वात्तद्घटिते च निग्रह (पा). [2] व्याप्तिः.

**प्रयोजकं ब्रह्म विश्वासत्साधारणमेव वक्तव्यम् । असत्यपि प्रातिभासिकत्वाभावात् । एवमसद्व्यावृत्तावपि प्रयोजकं ब्रह्म विश्वप्रातिभासिकसाधारणमेव वक्तव्यम् । प्रातिभासिकेऽप्यसत्त्वाभावात् । तथाच तत्प्रयोजकद्वयसमावेशादेव ब्रह्मण्युभयव्यावृत्त्युपपत्तौ नीलत्वघटत्वरूपावच्छेदकद्वयसमावेशोपपन्ननीलघटत्ववत् नातिरिक्तप्रयोजककल्पनायामस्ति किञ्चिन्मानमिति कृतबुद्धय एव विदांकुर्वन्तु । नित्यत्वं चोपाधिः तुच्छप्रातिभासिकयोः नित्यत्वव्यतिरेके साध्यव्यतिरेकदर्शनात् ।**

---

मिथ्यात्वं सिद्धमित्यस्यापि मया वक्तुं शक्यत्वादुभयमतक्लृप्तातिरिक्तप्रयोजकासिद्धौ न मानमित्याशयेनाह—**अतिरिक्तप्रयोजकेति । नित्यत्वव्यतिरेक इति ।** सति सप्तम्या अवच्छिन्नत्वलाभात् नित्यत्वव्यतिरेकव्यापकस्य साध्यव्यतिरेकस्य लाभः । ननु—देहात्मैक्ये बाधाद्युक्तिरयुक्ता; मन्मते तस्यैवाप्रसिद्धत्वात्, सत्यत्ववादिमिथ्यात्ववाद्युभयसिद्धमिथ्यात्वकं यत्तदन्यत्वस्य प्रातितिक[1]व्यावर्तकसत्यन्तार्थत्वसम्भवाच्च । अनधिकरणत्वे सतीत्यादिहेतुसम्भवात् प्रातिभासिकत्वं व्यर्थमित्यपि न युक्तम्; ब्रह्मण्यनधिकरणत्वासिद्धेः, व्याप्त्यग्रहादधिकरणत्वसामान्याभावस्य हेतावप्रवेशेनोक्तवैयर्थ्यासम्भवाच्च । प्रातिभासिकव्यावृत्तिप्रयोजकं ब्रह्मविश्वासत्साधारणमित्याद्ययुक्तम्; तव मते त्रिषु एकस्या व्यावृत्तेरसम्भवात् ब्रह्माणि हि तत्स्वरूपा सा विश्वस्मिन् व्यावहारिकभेदरूपा, असत्तु निर्धर्मकत्वात् न तद्वत्, किन्तु सैवासन्निष्ठा । अतएव न ब्रह्मादिष्वनुगतं प्रयोजकमस्ति,, ब्रह्मासतोनिर्धर्मकत्वात् । ब्रह्मविश्वयोस्तु प्रातिभासिकासद्व्यावृत्तिरेका सम्भवतीति तत्प्रयोजकं सत्त्व[2]मावश्यकम् । नित्य-

---

[1] प्रातिभासिक, [2] नित्य,

त्वमुपाधिरित्यपि न युक्तम्। सत्त्वाभावं विनापि नित्यत्वाभावसम्भवेन अनित्यत्वस्य साध्याभावासाधकत्वात्। उक्ततर्केण सत्त्वव्याप्तत्वेन गृहीतहेतोः अव्यापकत्वेन उपाधेः[1] साध्याव्यापकत्वग्रहाच्चेति" इति चेन्न; मन्मतमाश्रित्य प्रयोगे बाधाद्युक्तेः। त्वन्मते प्रयोगेऽपि निर्दोषत्वेनोभयसिद्धस्यैव हेतोस्त्वयामां प्रति प्रयोज्यत्वात्; अन्यथा अतिप्रसङ्गात्। उभयवादीत्याद्युक्तावपि न निस्तारः। न हि त्वया तार्किकेण वा सत्यत्ववादिना देहात्मैक्यस्य मिथ्यात्वमुच्यते, तार्किकेण तस्य भ्रमविषयत्वाङ्गीकारेपि मिथ्यात्वानङ्गीकारात्। भ्रमविषयत्वरूपमिथ्यात्वनिवेशे च स्वरूपासिद्धिः, साधनवैकल्यं च। किञ्च जीवगतेऽनणु[2]त्वादौ त्वयैव मिथ्यात्वस्वीकारेण तत्र त्वन्मते बाधव्यभिचारादि। एवमस्मान् प्रति जीवाणुत्वादौ तत्। न चाहं मनुष्य इत्यादिप्रत्यये मन्मते मम शरीरमिति विशेषदर्शनात् स्वामित्वादिदेहसम्बन्धस्यैव भानेन देहात्मैक्याभानेप्युक्तविशेषादर्शनकाले तद्भ्रमस्याङ्गीकारात् तन्मिथ्यात्वमुभयसम्मतमिति वाच्यम्। तथाप्येकस्य मिथ्यात्वस्य उभया[3]सम्मतत्वात् त्वया हि तत्र सर्वदेशकालव्यावृत्त्यत्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वमुच्यते, न तु सदसद्विलक्षणत्वादिरूपं, उक्तप्रतियोगित्वरूपमिथ्यात्वनिवेशे[4] चासदन्यत्वस्य वैयर्थ्यम् तदनुपादानेप्युभाभ्यां सिद्धत्वं ज्ञातत्वं प्रमितत्वं वा; आद्ये वस्तुमात्रस्यैव उक्तमिथ्यात्वेन ज्ञातत्वादप्रसिद्धिः, उभयज्ञातमिथ्यात्ववदन्यत्वनिवेशे ज्ञातान्तवैयर्थ्यं तुच्छस्योक्तमिथ्यात्वेनास्मद[5]ङ्गीकारात्तद्व्यावर्तनासम्भवः। असदन्यत्वनिवेशे त्वन्मते वैयर्थ्यमुक्तम्। द्वितीयेऽपि प्रमितत्वान्तं व्यर्थम्, तुच्छव्यावर्तनासम्भवश्च। उक्तमिथ्यात्ववदन्यत्वमात्रं निवेश्यं, न त्वसदन्यत्वमित्युक्तावपि सदोषोसदन्यत्वस्यापि सत्त्वेन प्रतीत्यर्हत्वरूपस्यास्मान् प्रति सार्थकत्वेन निवे-

---

[1] उपायैः. [2] अणु. [3] उभय. [4] वेशोद्वा सत्पदस्य. [5] पा ॥ नङ्गीकारात्.

शेपि सन्दिग्धासिद्धिः । पक्षे उक्तमिथ्यात्वस्य सन्दिग्धत्वादिति दिक् । प्रातिभासिकत्वं व्यर्थमिति तु युक्तमेव, अभावरूपस्य हेतुप्रविष्टस्य ब्रह्मणि सत्त्वात् । अथा[1]भावरूपत्वनिवेशे स्वरूपासिद्ध्यापत्त्या भावाधिकरणमेव निवेश्यम् तच्च ब्रह्मणि नास्तीति चेन्न; तन्निवेशेऽपि साधनवैकल्यापत्तेः व्याप्त्यग्रहादभावरूपत्वस्यैव व्याप्तिग्राहकत्वेन सार्थक्यात् । अधिकरणत्वसामान्याभावेत्यादिकं तु न यूक्तम् । शरीरा[2]जन्यत्वे शरीरांशवैयर्थ्यं हि न स्वसमानाधिकरणव्याप्यतावच्छेदकान्तर[3]-घटितहेतुतावच्छेदकरूपं, जन्यत्वसामान्यत्वाभावत्वरूपव्याप्यतावच्छेदकान्तरस्य हेतुतावच्छेदकस्य शरीराजन्यत्वस्याघटकत्वादसमानाधिकरणत्वाच्च । किन्तु पूर्वव्याख्यातरूपम् । तथाच सामान्याभावस्य हेतावनिवेशेऽपि वैयर्थ्यमक्षतम् । न च शरीरांशोपि तत्र न व्यर्थ इति तादृशमेव व्यर्थत्वं वाच्यमिति वाच्यम्; तान्त्रिकसम्मतबीजसत्त्वे त्वदवचनाप्रयोजकत्वात्, विशेषाभावकूटस्यैव सामान्याभावत्वेन स्वसमानाधिकरणेत्यादेरपि सत्त्वाच्च । न च प्रातिभासिकत्वावच्छिन्नप्रतियोगिताकभेदस्यैव हेतौ निवेश्यत्वादधिकरणत्वसामान्याभावो न निविष्ट इति वाच्यम् तथापि ब्रह्मज्ञानान्याबाध्यत्वादिरूपस्य तस्य निवेशे कार्ये अबाध्यत्वादेरेव हेतुत्वसम्भवेन इतरवैयर्थ्यात् । न च सामान्याभावत्वस्य सामान्यावच्छिन्नप्रतियोगिताकाभावत्वरूपत्वे सामान्यघटितविशेषाभावबुद्धावपि तद्धीनियमः स्यात्, अतः सामान्यभिन्नावच्छिन्नसामान्यावच्छिन्नप्रतियोगिताकाभावत्वं तद्वाच्यम्, तथाच विशेषाभावे तस्याप्रवेशान्नोक्तरूपं वैयर्थ्यमिति वाच्यम्; विशेषाभावबुद्धौ सामान्याभावत्वधीनियमेऽपि सामान्याभावसंसर्गावगाहिबुद्धौ विशेषाभावकूटनिरूपितविशेषणतया भानस्वीकारेण अनतिप्रसङ्गात्, सामान्यभावत्वस्य

---

[1] अतथा. [2] शरीर. [3] च्छेदकधर्मान्तर.

**अतएवानिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वादित्यपि न हेतुः। किञ्च प्रमात्वं तद्वति तत्प्रकारकत्वं तत्त्वावेदकत्वं वा। आद्ये दृष्टान्तस्य साधनवैकल्यम्। न हि परमार्थसतः शुद्धस्य**

सामान्यभिन्नानवच्छिन्नत्वघटितत्वे मानाभावात्, अन्यथा तादृशप्रतियोगितान्तरकल्पने गौरवात्। अथाभावरूपे ब्रह्मणि निर्धर्मके न हेतुतावच्छेदकं, किन्तु तत्प्रतियोगित्वमेव अन्यत्र, अतएव व्याप्यत्वमपि न तत्रेति मन्यसे; तर्हि व्याप्तिग्रहाभावात्तवैव विपत्तिः। ब्रह्मादित्रिषु एकं व्यावृत्तिप्रयोजकमित्यादि युक्तमेव। यद्यपि ब्रह्मणि तत्स्वरूपे अन्यत्र धर्मस्वरूपे व्यावृत्तिप्रयोजके, तथापि त्वयोक्तं तदैक्य[1]मङ्गीकृत्योक्तत्वात्। तथाच त्वयैव स्वविपद्बीजमिदं चिन्तितम्। अतएव ब्रह्मविश्वयोस्तु प्रातिभासिकासद्व्यावृत्तिरेकेति ते व्यामोह एव। एकैकव्यावृत्तेरिव तस्या अप्यनैक्यात्। अथ व्यावृत्तितत्प्रयोजकयोः अनैक्येपि ज्ञानविशेषविषयत्वेनानुगतरूपेण प्रयोज्यप्रयोजकत्वमिति चेन्न; एवमपि ब्रह्मप्रपञ्चोभयमात्रविषयकधीविषयत्वादेरेव प्रयोजकत्वसम्भवात् प्रपञ्चे सत्यत्वासिद्धेः। वस्तुतस्तु प्रयोजकाभावेऽपि न क्षतिः। न ह्येकधर्मविशिष्टे एव उक्तव्यावृत्तिधीरिति नियमे मानमस्ति। अतएव तर्काभावादुक्तहेतोः साध्यव्याप्यत्वाग्रहेण नित्यत्वस्य साध्यव्यापकताग्रहसम्भवात्। व्यापकीभूतोपाध्यभावे व्याप्यभूतसाध्याभावव्याप्यत्वग्रहः, नित्यत्वाभावो यदि सत्त्वाभावव्यभिचारीस्यात् तदा सत्त्वव्यापकप्रतियोगिको न स्यादिति तर्कात्। **अतएवेति**। बाधानुपपत्तिरूपप्रतिकूलतर्कपराघातात् नित्यत्वोपाधिमत्वाच्चैवेत्यर्थः। **अनिषेध्यत्वेनेति**। विषयत्वान्वयिस्वाधिकरणवृत्तिनिषेधप्रतियोगित्वविषयत्वानिरूपितत्वेनेति तदर्थः। **न हि परमार्थत्वेति**। **ब्रह्मणोऽज्ञानमित्यादि**

[1] प्रातिभासिकस्य तदैक्य.

ब्रह्मणस्सप्रकारकज्ञानविषयत्वम् । न च धर्मवतो दृष्टान्ततेत्युक्तम् । तस्य पक्षकुक्षिनिक्षिप्तत्वेन निश्चितसाध्यवत्त्वाभावात् । द्वितीये तत्त्वावेदकत्वस्य अबाधितविषयत्वरूपत्वेन साध्यविशेषपर्यवसानात् हेतुग्रहे सिद्धसाधनम् । हेतुग्रहे तु स्वरूपासिद्धिः । यत्तु प्रमाविषयत्वमात्रेणैव परमार्थत्वोपपत्तौ विशेषणे व्यर्थे इति, तन्न; पुरोवर्तिनं रजततया जानामीत्याद्यनुव्यवसायरूपप्रमाविषये प्रातिभासिके व्यभिचारवारकत्वात् । साक्षात्पदस्य तत्रैव च मिथ्यात्वप्रमितेः साक्षाद्विषये व्यभिचारवारकत्वात् । अनिषेध्यत्वेनेत्यस्य न ह्यनुव्यवसायमिथ्यात्वप्रमे न भवतः । नाप्यनिषेध्यत्वेन ईश्वरं प्रति साक्षादपरोक्षत्वं

ज्ञाने अज्ञानविषयत्वाद्युप[1]हितस्यैव भानमिति भावः शुक्तिरूप्यादेरपि स्वाश्रये स्वप्रकारकधीविषयत्वात् मन्मते व्यभिचारः, परमतेऽपि यद्यपि तस्यासत्वेन तदाश्रयाप्रसिद्ध्या न व्यभिचारः, तथापि ब्रह्मणोऽप्याश्रयाप्रसिद्ध्या साधनवैकल्यम् । अथ स्वकीययत्सम्बन्धवति स्वप्रकारकधीविषयत्वं हेतुः, तत्सम्बन्धावच्छिन्नप्रतियोगिताकसर्वदेशकालवृत्त्यभावा[2]प्रतियोगित्वं साध्यम् । अतएव रजतादेस्तादात्म्यादिसम्बन्धेन मिथ्यात्वं, न तु विषयितादिसम्बन्धेनेति । तथाप्यधिष्ठानचैतन्ये रजतस्य यः सम्बन्धः तेन तस्य मिथ्यात्वमवश्यं वाच्यम् अधिष्ठानचिदेव तस्याभावः । तथाच तदंशे तेन सम्बन्धेन रजतप्रकारके रजतमत्र नास्तीति ज्ञाने प्रमात्वाभावादनिषेध्यत्वेनेति व्यर्थम् । न ह्याधार एवाभाव इति प्राभाकरादिमते सुखादः[3] स्वध्वंसादिरूपात्मनि समवायान्यसम्बन्धः कल्प्यते; क्लृप्तसम्बन्धेनैव निर्वाहात् । एव रजततदाकारवृत्त्योरिव तयोस्सम्बन्धस्यापि कल्पितत्वात् साक्षादित्यपि व्यर्थम् । यत्त्वित्या-

[1] त्वादुप. [2] वृत्त्यन्ताभावा. [3] सुखादेः.

हेतुः। सत्यत्वसिद्धिं विना अनिषेध्यत्वेनेत्यस्य असिद्धेः। तथाचान्योन्याश्रयः। न चेश्वरज्ञानविषयस्य प्रपञ्चस्य मिथ्यात्वे तस्य भ्रान्तत्वप्रसङ्गः। मिथ्याभूतस्य मित्यात्वेनेव ग्रहणात्। ऐन्द्रजालिकवत् भ्रान्तत्वायोगात्। अन्यथा सविषयकभ्रमज्ञातृत्वेन भ्रान्तत्वस्य दुर्वारत्वापत्तेः। अथ निषेध्यत्वेन ज्ञाने तत्पालनार्थमीश्वरस्य प्रवृत्तिर्न स्यात् ऐन्द्रजालिकप्रवृत्तिवदीश्वरप्रवृत्तेरपि तथाविधत्वात्। नापि सप्रकाराबाध्यार्थक्रियाकारित्वं हेतुः; सप्रकारकजाग्रद्बोधाबाध्यस्वप्नजलावगाहन-

---

दिकं तु भाष्योक्तमनास्थयानुदितमिति ध्येयम्। **तस्य** तत्र। **भ्रान्तत्वप्रसङ्गः** विशेषदर्शिनां भ्रान्तत्वव्यवहारप्रसङ्गः। **मिथ्यात्वेनेति**। तथाच स्वसमानाधिकरणविशेषदर्शनाकालीनस्य बाधितविषयकज्ञानस्य आश्रयत्वं भ्रान्तव्यवहारे विषयकालीनान्तविशेषणानुपादाने उक्तविशेषदर्शनकालीनस्य सोपाधिकभ्रमस्याश्रये पुरुषेऽप्यहं भ्रान्त इति व्यवहारस्स्यादिति भावः। **अन्यथा** उक्तविशेषदर्शनकालीनभ्रममादाय भ्रान्तत्वव्यवहारे। **सविषयकभ्रमज्ञातृत्वेनेति**। विषयतापर्याप्त्यधिकरणं यन्मुखादिविशिष्टदर्पणादि तद्विशिष्टभ्रमस्य मिथ्यात्वेन यत् ज्ञातृत्वं तेनेत्यर्थः। **भ्रान्तत्वस्य**। भ्रान्तत्वव्यवहारस्य। यथाश्रुते बाधितविषयकज्ञानत्वरूपभ्रान्तत्वस्येष्टत्वादसङ्गतेः। **तथाविधत्वादिति**। विसंवादित्वेन ज्ञायमानत्वादित्यर्थः। संवादित्वेन ज्ञायमानप्रवृत्तौ प्रमातृत्वेन ज्ञायमानस्योपादानप्रत्यक्षादेः हेतुत्वेप्यतादृशप्रवृत्तावतादृशस्य तस्य हेतुत्वमविरुद्धमिति भावः। **सप्रकाराबाध्येत्यादि**। सप्रकाराबाध्यं यदर्थक्रियाकारि तत्त्वादित्यर्थः। जाग्रद्बोधेति। मनोवच्छिन्नचैतन्यादेरधिष्ठानत्वपक्षे जाग्रद्बीबाध्यत्वेपि

प्रियासङ्गमादिविशेषिताप्रमाणीभूतज्ञानस्यार्थक्रियाकारित्वदर्शनेन तद्विषये तत्र ज्ञानमेव सुखादिजनकं तच्चाबाध्यमेवेति मतं, तदसत्। ज्ञानमात्रस्य हि तादृक्सुखाजनकत्वेन किञ्चिद्विशेषितस्यैव तथात्वं वाच्यम्। ज्ञाने च विशेषो नार्थातिरिक्तः। तदुक्तम्—

'अर्थेनैव विशेषो हि निराकारतया धियाम्'।

इति। अर्थेनेति अर्थ एवेत्यर्थः। तथाच मिथ्याभूतविशेषितस्य

ब्रह्माधिष्ठानकत्वपक्षे तदबाध्या स्वाप्नधीरिति भावः। **सङ्गमादी**त्यादिना सोयमित्यादिवाक्यजन्यनिष्प्रकारकघटादिभि[illegible]परिग्रहः। विशेषितेत्यनेन सङ्गमादेरर्थक्रियाकारित्वं दर्शितम्। नन्वर्थस्य प्रियासङ्गत्वादिना कारणतावच्छेदकत्वे गौरवात ज्ञाने जातिविशेष एव तथा कल्प्यताम्, तत्राह— **तदुक्तमिति निराकारतयेति।** ज्ञानगतविशेषाङ्गीकारे तेनैव ज्ञानाकारेण ज्ञानाभिन्नेन नीलादिरूपेण नीलं जानामीत्यादिव्यवहारोपपत्तौ नीलादिबहिरर्थमात्रलोपापत्तेः बहिरर्थाघटितस्य विशेषस्य ज्ञानेऽनुपलब्धेश्च तादृशविशेषो ज्ञानेनाङ्गी[1]-क्रियते। अतएवानुमितित्वादिकं नाखण्डो ज्ञानधर्मः, किन्तु व्याप्तिपक्षधर्मताधीजन्यत्वादिरूपः। इन्द्रियजन्यत्वाद्यनुपस्थितौ साक्षात्कारत्वादिकं न प्रतीयत एवेति भावः। किञ्च सुखादि[2]जनकतावच्छेदकत्वेन कल्प्यमाना जातिः ज्ञाने अर्थे वा स्वीकार्येत्यत्र न विनिगमकम्, स्वाप्नार्थस्य सुखादिसामानाधिकरण्यासम्भवात्। न च जाग्रदर्थस्य साक्षिसम्बन्धाभावकाले सुखादिसामानाधिकरण्याभावेन तस्याहेतुत्वमिति वाच्यम्; अर्थप्रत्यक्षमात्रस्य कारणतास्थले तस्य हेतुतासम्भवात्, ज्ञानमात्रस्य हेतुतास्थलेऽपि स्वाप्नार्थेषु जाग्रज्ज्ञानेषु

---

1 ज्ञानेऽङ्गी. 2 श्रुत्यादि.

**जनकत्वाभ्युपगमे मिथ्याभूतस्यापि जनकत्वाद्व्यभिचार एव। तथा चोक्तं शास्त्रदीपिकायां बौद्धं प्रति— "अथ सुखज्ञानमेवार्थक्रिया तच्चाव्यभिचार्येव। न हि क्वचिदप्यसति सुखे सुखज्ञानमस्तीत्याशङ्क्य सत्यमेतत् न तु तेन पूर्वज्ञानप्रामाण्याध्यवसानं युक्तम्। अप्रमाणेनापि प्रियासङ्गमविज्ञानेन स्वप्नावस्थायां सुखदर्शनात्"। इति। ननु विषयविशेषोपलक्षितस्यैव ज्ञानस्य सुखजनकत्वमस्तु, तत्कुतो विषयस्य जनकत्वमिति चेन्न; स्वरूपाणामननुगततया ज्ञानत्वादेश्च अतिप्रसक्ततया अनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावादुपलक्षणत्वासम्भवात्। ननु विशेषणत्वमप्यसम्भवि अनागतज्ञानजन्ये तत्कालाविद्यमानस्य विषयस्य पूर्वभावित्वरूपजनकत्वासम्भवादिति चेन्न; स्वव्यापारजन्ये व्यापारिणोऽसतोजनकत्ववत् स्वज्ञानजन्येऽप्यसतोजनकत्वसम्भवात् अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेनैव अभ्युपगमात्।**

---

च सा जातिरिति वक्तुं शक्यत्वात्। स्वाप्नेन प्रियादिना[1] जाग्रत्कालीनेन व्यवहारिकप्रियादिज्ञानेन च सुखाद्युत्पत्तिसम्भवात्-जातिसाङ्कर्यस्यादूषकत्वात् दृष्टिसृष्टिवादे अर्थ एव तत्सम्भावाच्च स्वाप्नज्ञानस्याप्रमात्वे संवादमाह—**तथाचोक्तमिति**। यथा स्वव्यापारादिसम्बन्धेन कारणत्वं, तथा स्वज्ञानसम्बन्धेनेत्याह—**स्वव्यापारेति**। यद्यतीतादिकं सूक्ष्मरूपेण विद्यमानं न स्यात्, तदा वर्तमानध्वंसप्रतियोगित्वादिरूपासत्त्वस्य ज्ञानविशेषविषयत्वादेश्च वर्तमानकालावच्छेदेन आश्रयो न स्यात्; न ह्याश्रयासम्बद्धकालोऽवच्छेदकस्सम्भवतीत्याशयेनाह—**अतीतेति**। यदायदा यज्ज्ञानस्वरूपाबाधः, तदा तद्विषयाबाध इति नियमात् स्वाप्नज्ञानं बाध्य-

---

[1] प्रियादीनां.

अन्यथा ध्वंसप्रागभावप्रतियोगित्वतद्ज्ञानविषयत्वादीनामनाश्रयत्त्वापत्तेः। प्रमाणबलात् कारणत्वाभ्युपगमस्यात्रापि तुल्यत्वात्। किञ्च स्वरूपाबाध्यस्य विषयाबाध्यत्वदर्शनेन विषयबाधे स्वरूपबाध्यस्यावश्यकतया स्वप्नादिज्ञानं सदेवेत्यस्य वक्तुमशक्यत्वात्। अनादित्वस्य विषमव्याप्तस्योपाधित्वाच्च न चार्थक्रियाकारित्वं प्रति परमार्थसत्त्वस्य ब्रह्मणि प्रयोजकत्वेनावधारणादकारणककार्योत्पत्तिरूपविपक्षबाधकतर्केण हेतोस्साध्यव्यापकतया तदव्यापकतया उपाधेः साध्याव्यापकत्वमिति वाच्यम्; प्रातिभासिकरज्जुसर्पादौ भयकम्पादिकार्यकारित्वदर्शनेन प्रातिभासिकसाधारणस्य तुच्छव्यावृत्तस्य प्रतीतिकालसत्त्वस्यैव अर्थक्रियाकारित्वं प्रति प्रयोजकत्वात्। प्रातिभासिकस्यार्थक्रियाकारित्वानभ्युपगमे सप्रकाराबाध्येति हेतुविशेषणवैय्यर्थ्यापत्तेः। कस्मिन्नपि देशे कस्मिन्नपि काले केनापि पुरुषेणाबाध्यत्वं हि परमार्थसत्त्वम्। तदपेक्षया प्रतीतिकालसत्वस्य लघुत्वाच्च। किञ्च शुद्धस्यार्थक्रियाकारित्वाभावात् साधनविकलत्वम्। उपहितस्य पक्षनिक्षेपात् साध्यविकलत्वम्। आरोपितमिथ्यात्त्वकत्वादित्यपि न हेतुः; आरोपितत्वं प्रातिभासिकत्वं चेत् प्रपञ्चे हेतोरसिद्धिः। तत्सिद्धेः पारमार्थिकसिद्ध्युत्तरकालीनत्वात्। व्यावहारिकत्वं चेच्छुक्तिरूप्यादौ व्यभिचारः। उभयसाधारण्येप्ययमेव दोषः। कल्पकरहितत्वादित्यपि न हेतुः। असति व्यभि-

---

मित्याह—**किञ्चेति**। **अकारणकेति**। सत्यकारणहीनेत्यर्थः। यदि मिथ्याभूतं कारणं स्यात् तदा सत्यं स्यात्, यन्नैवं, तन्नैवं, यथा नृशृङ्गम्। अथवा कारणं यदि सत्यं न स्यात् तदा कारणं न स्यात्, यथा नृशृङ्गमिति तर्को बोध्यः—**कालसत्वस्य**। काल-

चारात् । यथाश्रुतस्यासिद्धेश्च । ननु नासिद्धिः, शुद्धं हि चैतन्यं न कल्पकम्; अदृष्टत्वात् । नोपहितम्, कल्पितत्वादेवान्यथानवस्थानात् । तथा च यावद्विशेषाभावे कल्पकसामान्याभावसिद्धिरिति चेन्न; शुद्धस्याप्यनाद्यविद्योपधानवशेन कल्पकत्वोपपत्तेः । कल्पकत्वं हि कल्पनां प्रत्याश्रयत्वं विषयत्वं भासकत्वं वा; तच्च सर्वं कल्पनासमसत्ताकल्पेन शुद्धत्वाव्याघातकम् । तदुक्तं संक्षेपशारीरके—

आश्रयत्वविषयभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इति । अस्तु वा उपहितस्य कल्पकत्वम् । न चानवस्था ।

---

सम्बन्धस्य । **शुद्धत्वाव्याघातकमिति** । शुद्धस्याविद्योपहितादिरूपानुगमात् । वस्तुतः शुद्धत्वेपि अविद्यादिरूपां कल्पनां प्रत्याश्रयादिरूपत्वाविरोधादिति भावः । शुद्धस्य कल्पनासम्बन्धाभावपक्षेऽपि न क्षतिरित्याशयेनाह—**अस्तुवेति** । यत्तु—"प्रमाविषयत्वहेतौ साधनवैकल्योक्तिरयुक्ता; विशेष्यावृत्तीत्यादि[1]प्रमात्वे दोषाभावात् । तत्त्वावेदकत्वरूपेऽपि न साध्याविशेषः; अर्थसत्त्वाग्रहेऽपि शब्दादिना सद्विषयकत्वग्रहसम्भवात् । अनिषेध्यत्वेनेत्यंशस्यासिद्धेरित्यादिकमयुक्तम्; निषेध्यत्वेन ज्ञातस्य पालनाय प्रवृत्त्यसम्भवात् । न ह्यैन्द्रजालिकः स्वमायाकृतं पालयति, किन्तु दर्शयति । ईशस्तु पालयति 'एष लोकपाल.' इत्यादिश्रुतेः, 'सेयं देवतैक्षत' इत्यादिश्रुतेरनिषेध्यत्वेन सर्वज्ञतोक्तेः, 'यस्सर्वज्ञः सर्ववित्' इत्यादावुक्तस्य सामान्यविशेषाभ्यां ज्ञानस्य निषेध्यत्वाविषयकत्वासम्भवाच्च । व्यापारिण इवासतो[2]ऽप्यतीतादेः जनकत्वोक्तिर्नयुक्ता; व्यापारपूर्वकाले हि

---

[1] वृत्तित्वादि. [2] इव सतो.

सतो व्यापारिणः तज्जनकत्वं, न तु व्यापारजन्यफलजनकत्वम्। अतीतादेस्तु मिथ्यात्वेन कालत्रयेप्यसतो न जनकत्वं, असद्वैलक्षण्या, पेक्षया [1]लाघवेन सत्त्वस्यैव कारणत्वप्रयोजकत्वात्। स्वज्ञानस्य कारणत्वमात्रेण मिथ्यार्थस्य कारणत्वं तु नोपपन्नम्। विद्यमानध्वंसप्रतियोगित्वादिकं तु अविद्यमानेऽपि स्वीक्रियते, विद्यमाने तदसम्भवात्। कारणत्वं तु नाविद्यमाने सम्भवति; पूर्वभावित्वरूपत्वात्। ज्ञानस्वरूपबाधाभावे विषयस्याप्यबाध इत्यप्ययुक्तम्; मिथ्यागजादेरसत्त्वेऽपि तज्ज्ञाने सत्त्वानुभवस्य तज्ज्ञानमासीदित्यस्य सत्त्वात्, साक्षिण्यबाधेऽपि तद्विषयस्य रूप्यादेः बाधाच्च। प्रतीतिकालसत्त्वमर्थक्रियाकारित्वे प्रयोजकमित्यपि न युक्तम्; तस्य सत्त्वेन प्रतीयमानरूपत्वेन तुच्छेऽप्यर्थक्रियापत्तेः। आरोपितमिथ्यात्वे च हेतौ नोक्तदोषः, आरोपितपदेन मिथ्यात्वेन उभयसम्मतत्वोक्तेः ब्रह्मजगतोर्मिथ्यात्वं तादृशं न तु रूप्यादेः" इति प्रलपितम्, तन्न; विशेष्या[2]वृत्तीत्यादिप्रमात्वनिवेशे हि स्वरूपासिद्धिः। न हि प्रपञ्चज्ञाने तादृशप्रमात्वं पूर्वं निर्णीतम्, किन्तु शुक्तिरूप्यादेरिव विशेष्यवृत्तित्वेऽपि तदभावसम्भवेन मिथ्यात्वसन्देहात् सान्दिग्धं सद्विषयकत्वमपि न निर्णीतम्। प्रपञ्चे सत्त्वसन्देहे तद्ज्ञाने तत्सन्देहस्याप्यौचित्यावर्जितत्वाच्छब्दादिना आपाततो निर्णयेपि तत्र प्रमात्वसंशयात् तद्विषयीभूते सद्विषयकत्वसंशयात्, ऐन्द्रजालिको न स्वकृतं पालयतीति तु चित्रम्; इन्द्रजालाधिष्ठानानिमित्तपालनस्य विरोध्यैन्द्रजालिकान्तरनिरसनस्य चेन्द्रजालपालनत्वात्, ईशस्यापि जगत्पालनस्य तादृशत्वात्। सेयमित्यादौ ईक्षणमात्रमुक्तम्। न त्वनिषेध्यत्वेन सामान्यविशेषाभ्यां ज्ञानं त निषेध्यत्वेनापि सम्भवति, स्वाधिष्ठाने दृश्यं नास्तीति वियदादि नास्तीति[3] ज्ञानस्य तादृशत्वात्।

---

[1] अद्वैतलक्षणापेक्षया.　[2] ष्यावृत्तित्वादि.　[3] नानास्तीति.

**अविद्याध्यासस्य अध्यासान्तरानपेक्षत्वात् । स्वपरसाधारणसर्वे-निर्वाहकत्वोपपत्तेः अकल्पितस्य कल्पकत्वादर्शनाच्च । कल्पित-**

---

व्यापारिणस्तु व्यापारजन्याजनकत्वे कथं व्यापारव्यापारिता? तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारतायास्तान्त्रिकोक्तत्वात् का वा तत्र तद्धेतुत्वेऽनुपपत्तिः? कार्यवति साक्षात्सम्बन्धेन असतोपि व्यापारिणो व्यापारसम्बन्धेन सत्त्वात् कार्याव्यवहितप्राक्कालावच्छेदेन कार्यवन्निष्ठो यो व्यापारसम्बन्धावच्छिन्नाभावः तदप्रतियोगित्वात् । अन्यथाऽदृष्टादेः परस्परासम्बन्धेन रूपादिभोग्यजनकत्वानुपपत्तेः । यागादेश्च स्वर्गादि-जनकत्वान्यथानुपपत्तया धर्मादिकल्पना तार्किकमीमांसकाद्युक्ता न स्यात् । स्वर्गकामो यजेतेत्यादेश्च अप्रामाण्यं स्यात् । न हीष्टप्रयो-जकत्वं विध्यर्थः, इष्टकारणकारणत्वरूपस्य तस्य इष्टकारणत्वापेक्षया गुरुत्वात् । अत एव 'अग्निकामः काष्ठमाहरेत्' इत्यादिलौकिक-वाक्ये 'पूर्णाहुत्या सर्वान् कामानवाप्नुयात्' इत्यादिश्रुतौ[1] चेष्ट-कारणकारणत्वे लक्षणैव । अत एव 'अविभागात्तु नैवं स्यात्, उत्पत्तौ विध्यभावात्' इति सूत्रयोर्व्याख्याने सप्तमे शाबरभाष्ये उक्तं यथा 'गोमयैः पचन्ति, तुषपक्वा भवन्ति इत्यादौ अग्निसाध्ये पाके गोमयादीनां करणत्वं, तथा यागस्यापूर्वद्वारा स्वर्गसाधनत्वम् । उक्तं च तत्र तन्त्ररत्ने अनेन भाष्येण यागस्य फलसाधनत्वमुपपादयता तस्य तदनुपपत्त्या यागसाध्यमपूर्वमेव यजेतेत्यादेरर्थ इति प्राभाकरमतं निरस्तम् । किञ्च तन्मते उक्तवाक्ये गोमयादिपदे तत्साध्याग्नाविव सर्वेभ्यो दर्शपूर्णमासावित्यादावपि दर्शादिसाध्यापूर्वे दर्शादिपदे लक्षणा स्यादित्यादिलाघवेन सत्त्वं कारणत्वे प्रयोजकमिति तु न युक्तम्; त्रिकालाबाध्यत्वरूपतदपेक्षया कालसम्बन्धस्यैव लाघवेन तत्त्वात्,

---

[1] श्रौते.

अतीतादावपि सूक्ष्मरूपे तत्सत्त्वात् । अतएव स्वज्ञानकारणत्व-मात्रेण मिथ्यार्थस्य कारणत्वानुपपत्तिकरणं स्वाज्ञानादेव विद्यमान इव अविद्यमानेऽपि विद्यमानध्वंसप्रतियोगित्वादिकं यथा न सम्भवति[1] तथोपदिष्टम् । पूर्वभावित्व चोक्तरूपं यागादावस्त्येव, व्यापारादि-सम्बन्धावच्छिन्नतदभावस्य तदीयव्यापारादिसम्बन्धविरुद्धत्वात् । अत-एव संयोगेन गगनादेः पृथिवीत्वादिव्यापकत्वपरे तदभाववतोऽपि पृथिव्यादेर्वृत्त्यनियामकसंयोगेन तत्सम्बन्धित्वादित्यादिदीधित्यादिवाक्ये उत्पत्त्यादिकालावच्छेदेन पृथिव्यादौ गगनादेः वृत्त्यनियामकसंयोगे-नाभाव इत्यर्थकत्वं व्याचक्षते । यदि च तत्र सर्वदा तदभाव इत्यर्थ-कत्वं, तथापि न क्षतिः । तद्वदेव प्रकृतेऽपि स्वप्रतियोग्यसम्बन्धि यत्कार्यसम्बन्धि तद्वृत्त्यभावाप्रतियोगित्वस्य सत्त्वादिति ध्येयम् । तज्ज्ञा-नमासीदित्यनुभवस्तु न बाध्यत्वविरोधी, बाध्येष्वेव मन्मते अतीतसत्ता-सम्बन्धात् । अन्यथा अत्रेन्द्रजालमासीत् अत्र गन्धर्वनगरमासीदिति धीर्नस्यात् । त्वन्मते परं तदनुपपत्तिः, प्रातीतिकस्यखपुष्यवदसत्त्वा-भ्युपगमात् । न हि भवति खपुष्पमासीदिति । साक्षिस्वरूपबाधाभा-वस्तु न, उपहितस्य साक्षित्वेन तस्यापिबाधात् । जन्यज्ञानान्तर्भावे[2]-नोक्तनियमो वा, विषयबाधकबाध्यतायोग्यत्वं हि तन्नियमे प्रयोजकम् । तच्च जन्यस्यैव, [3] ज्ञानस्य विषयोपादानाज्ञानोपादेयत्वात् । प्रतीति-कालसत्त्वं तु प्रतीतिकालसम्बन्ध इत्युक्तमिति तुच्छत्वानापत्तिः[4] । आरोपितमिथ्यात्वहेतावारोपितपदेन मिथ्यात्वेनोभयसिद्धोक्तावपि जीवा-नणुत्त्वादिमिथ्यात्वस्य त्वया मया च मिथ्यात्वेन सम्मतत्वात् तत्र व्यभि-चारो मन्मतरीत्या दुर्वारः ; मन्मते तस्य सत्त्वाभावनिश्चयात् । किञ्च उक्तसिद्धत्वं यदि ज्ञातत्वं, तदा शुक्तिरूप्यादिमिथ्यात्वेऽपि कदाचित्व-यामिथ्यात्वेन ज्ञेयत्वात् त्वन्मतेऽपि व्यभिचारः । यदि प्रमितत्वं, तदा-

---

[1] यथा संभवति. [2] र्भावेण. [3] ज्ञानविषयाज्ञानाविषयोपादानत्वात् [4] तुच्छे त्वनापत्तिः.

**प्रतिबिम्बविशिष्टआदर्शादेरादर्शान्तरे प्रतिबिम्बकल्पकत्वदर्शनाच्च, बिम्बस्य द्वितीयादर्शसम्मुखत्वाभावेन तत्र कल्पकत्वायोगात्। अन्यथा अतिप्रसङ्गात्। विस्तरेणचैतदग्रे वक्ष्यामः। तदेवं निराकृताः परमार्थसत्त्वे साध्ये षडमी हेतयः। एवमन्येऽपि निराकार्याः। अथ विमतं न सद्विलक्षणम्, असद्विलक्षणत्वा-**

---

तदसिद्धं; प्रपञ्चे सत्त्वसिद्धेः पूर्वं तन्मिथ्यात्वे मिथ्यात्वज्ञानस्य प्रमात्वासिद्धेः। नच व्यावहारिकप्रमात्वं निवेश्यं, न तु तात्त्विकं, तथाच तत्त्वावेदकत्वरूपप्रमात्वस्य तत्रासिद्धावपि मतद्वयेपि व्यवहारकालाबाध्यमिथ्यात्वकप्रकारकत्वरूपस्य व्यावहारिकप्रमात्वस्य निश्चयोऽस्त्येव; प्रपञ्चमिथ्यात्वं हि प्रातीतिकम्, यदि वा व्यावहारिकं, उभयथाऽपि तन्मिथ्यात्वं व्यवहाराकालाबाध्यमिति वाच्यम्; व्यवहाराकालाबाध्यमिथ्यात्वकप्रकारकत्वानिवेशे हि व्यवहारकालाबाध्यमिथ्यात्वाश्रयमिथ्यात्वं पर्यवसितहेतुः। तथाच यस्य प्रातीतिकस्य मिथ्यात्वे [1] ब्रह्मज्ञानाव्यवहितपूर्वं स्वप्नकाले वा मिथ्यात्वभ्रमः, तत्रापि हेतुसत्त्वात् व्यभिचारः। बाध्यपदेन बाधयोग्यत्वानिवेशेऽपि स्वाप्नभ्रमस्य मूलाविद्योपादानकत्वमते स्वाप्नमिथ्यात्वस्य व्यवहारकालबाधयोग्यत्वाभावात्। ततश्च तद्वारणाय तत्त्वावेदकरूपाया उभयवादिसिद्धप्रमाया निवेशे तात्त्विकमिथ्यात्वाश्रयमिथ्यात्वं पर्यवसितहेतुरिति हेतुविशेषणासिद्धिपर्यवसानम्। यदि च यद्यत्प्रातीतिकमिथ्यात्वं तद्भिन्नदकूटवन्मिथ्यात्वं हेतुरुच्यते, तदा दुर्ज्ञेयता। अप्रयोजकत्वं तु स्फुटम्। यदपि शुद्धस्य कल्पकत्वोक्तिरयुक्ता, नित्यमुक्तिश्रुतीविरोधात्, तत्त्वतो नित्यमुक्तेः जीवेऽपि सत्त्वात्। अतएव कल्पकस्याभावादाश्रयत्वविषयत्वादिकमपि न शुद्धस्य। न च शुद्धमेव कल्पकं, देहाद्यभावात्। नाप्युपहितं, अविद्याध्यासस्य स्वपरनिर्वाहकत्वे मानाभावात्। आदर्शान्तरे प्रति-

---

[1] ब्रह्मज्ञानव्यवहितपूर्वसत्वकाले.

**दात्मवदिति अनुमानान्तरं भविष्यतीति मतम्, तन्न; प्रातिभासिके शुक्तिरूप्यादौ व्यभिचारात्। न च तत्रासद्विलक्षणत्वहेतुरेव नास्तीति वाच्यम्; असद्विलक्षणत्वाभावे हि अपरोक्षतया प्रतीतिरेव न स्यात्। ननु तर्ह्यसद्विलक्षणत्वे तद्विरुद्धसद्विलक्षणत्वायोगः। तथाच साध्यस्यापि विद्यमानत्वान्न व्यभिचार इति चेन्न; सत्त्वे सर्वजनसिद्धबाधविरोधात्। गजादौ गोवैलक्षण्येऽपि तद्विरुद्धाश्ववैलक्षण्ययोगवत् सद्वैलक्षण्येऽपि असद्वैलक्षण्ययोगोपपत्तेः प्रथममिथ्यात्वनिरुक्तावुक्तत्वात्। ननु विमतं न चैतन्याज्ञानकार्यम्। न तत्कार्यधीविषयः। न तत्कार्यसत्त्ववत्।**

---

बिम्बं तु न कल्पितमिति वक्ष्यत इति, तदपि तुच्छम्; जीवेऽपि हि तत्त्वतो नित्यमुक्तिरिष्टैव। कल्पकत्वं तु देहाद्यभावेऽपि युक्तम्, तस्य तदव्याप्यत्वात्। उपहितस्यापि युक्तमेव तत्, तस्यानादित्वेन देहाद्यनपेक्षत्वात्। न च तस्य स्वान्यं प्रति कल्पकत्वसम्भवेऽपि स्वं प्रति कथमाश्रयत्वं भासकत्वं चेति वाच्यम्; घटाभावादेः कल्पितस्वाश्रयत्वस्येव तत्र तस्य सम्भवात्, तस्याश्रितत्वभास्यत्वाभावेऽपि क्षतिविरहाच्च। शुद्धस्येव तस्यापि स्वप्रकाशत्वसम्भवात् अस्वप्रकाशत्वरूपः मिथ्यात्वहेतुस्तु तत्साधारणः कार्यः। तदिदमुक्तं अविद्याध्यासस्य अध्यासान्तरानपेक्षत्वा[1]दित्यादि। **बाधविरोधादिति।** न च बाधोपपत्तये रूप्यादेरसत्त्वं प्रत्यक्षोपपत्तये च सत्त्वं कल्प्यतां, त्वन्मते सत्त्वासत्त्वयोः निषेधस्येव विधेरपि समुच्चयसम्भवादिति वाच्यम्; बाधोपपत्तये हि प्रतिपन्नाधिकरणवृत्त्यभावप्रतियोगित्वं स्वीकर्तुमुचितं, न तु सत्त्वेना[2]प्रतीयमानत्वघटितमसत्त्वं, तदघटितं तत्तु रूप्यादाविष्टम्। प्रत्यक्षोपपत्तये च साक्षि-

---

1 न्तरापेक्षत्वा. 2 सत्त्वेन.

**न तद्ज्ञानबाध्यसत्त्ववद्वा । तस्मिन्नपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानत्वात् । यदेवं तदेवं यथा घटे अपरोक्षेपि अनिषेध्यत्वेन साक्षाद्भासमानः पटो न घटाज्ञानकार्यादिः । विपक्षे च तदापरोक्ष्ये तदज्ञानव्याहतिरेव बाधिका । न चासिद्धिः, अधिष्ठानतया सुखादिसाक्षित्वेन तदानीमपि चैतन्यापरोक्ष्यादिति चेन्न; सामान्याकारेणापरोक्ष्येपि शुक्त्यादौ रजतादेरनिषेध्यत्वेन साक्षाद्भासमानतया तत्र व्यभिचारात् । अथ व्यावृत्ताकारेण यस्मिन् भासमाने यदनिषेध्यत्वेन साक्षात् भासते, तन्नतदज्ञानकार्यादीति व्याप्तिरिति मन्यसे, तर्ह्यसिद्धिः। न हि चैतन्यमिदानीं भ्रमनिवर्तकत्वाभिमतव्यावृत्ताकारापरोक्षप्रतीतिविषयः । तथा सति आदिष्ठानमेव न स्यात् । यदा तु**

---

सम्बन्धो[1]ऽपेक्ष्यते न तु तात्त्विकत्वरूपं सत्त्वम् । सत्त्वासत्त्वयोर्मिथोविरहत्वं[2] तु खण्डितमेव **व्यावृत्ताकारेण** भ्रमनिवृत्तिस्वरूपयोग्यज्ञानेन । यत्तु भ्रमनिवर्तकत्वाभिमतज्ञानान्यून[3]विषयकापरोक्षस्यहेतौ निवेशात् तादृशाधिष्ठानज्ञानस्येदानीमपि सत्त्वात् अज्ञानव्याहतिरिति तत्तुच्छम्; स्वरूपचैतन्यस्य स्वाविषयकत्वात्, स्वविषयकत्वेपि अज्ञानाविरोधित्वात् । उक्तान्यूनविषयकापरोक्षस्य अज्ञानविरोधित्वे प्रामाण्यशङ्कास्पदवृत्तेरपि तदापत्तेस्तद्व्यावृत्तविरोधितावच्छेदकत्वेन लाघवेन कल्प्यस्य जातिविशेषस्य मुक्त्यनुपधायकज्ञाने सत्त्वे[4] मानाभावात् अज्ञानविरोधितावच्छेदकविशिष्टापरोक्षस्य हेतौ निवेशनीयस्येदानीमभावात्, तदिदमुक्तं **न हि चैतन्यमिदानीमित्यादि । न हीति ।** यत्तु 'नैकत्वसाक्षात्कारवतः प्रतिबिम्बदर्शने प्रवृत्तिः, किन्तु भेदज्ञानवतः, अतएव बालानां तत्र बालान्तरधीः' इति, तत्तुच्छम्;

---

[1] साक्षात्सम्बन्धो. [2] विरोधित्वं. [3] ज्ञानाज्ञान. [4] ज्ञानसत्त्वे.

वेदान्तवाक्यजन्यवृत्तौ व्यावृत्ताकारतया अपरोक्षं तदा अनिषेध्यत्वेन प्रपञ्चे आपरोक्ष्यशङ्कापि नास्ति । अतः प्रमाणजन्यासाधारणाकारभानस्यैवाज्ञानविरोधित्वान्नापरोक्षतामात्रेणाज्ञानपराहतिप्रसङ्गः । यत्त्वज्ञानपदेन ज्ञानाभावोक्तौ सिद्धसाधनम्, अनिर्वचनीयाज्ञानोक्तौ च तस्य खपुष्पायमाणत्वेन प्रतियोग्यप्रसिद्धिरिति; तत्तुच्छम्; असत्प्रतियोगिकाभावं स्वीकुर्वतः पराभ्युपगममात्रेणैव प्रतियोगिप्रसिद्धिसम्भवात् । ननु विमतं न आत्मन्यध्यस्तम्, आत्मसाक्षात्कारवत्प्रवृत्तिविषयत्वात्, यदेवं तदेवं यथा घटसाक्षात्कारवत्प्रवृत्तिविषयो घटो न तत्राध्यस्तः। न चासिद्धिः; ईशजीवन्मुक्तयोः आत्मसाक्षात्कारवतोरपि जगद्रक्षणभिक्षाटनादौ प्रवृत्तेः । शङ्खे अध्यस्तमपि पीतत्वं न शङ्खश्वेतत्वसाक्षात्कारवत्प्रवृत्तिविषय इति न तत्र व्यभिचार इति चेन्न; प्रतिबिम्बे व्यभिचारात् । स हि मुखैक्यसाक्षात्कारवत् प्रवृत्तिविषयो मुखे अध्यस्तः, तद्व्यतिरेकेणोपलभ्यमानत्वस्योपाधित्वाच्च । एवंच विमतं नेश्वरमायाकल्पितम्,

बालानां विशेषादर्शनात् एकत्वानिश्चयेपि विशेषदर्शिनामेक[1]त्वजानतामेव तद्दर्शने प्रवृत्तेरानुभाविकत्वात् । अतएव दर्पणाद्युपाधिसन्निधानरूपदोषविशेषाजन्यभ्रमस्यैव विशेषदर्शनविरोधित्वमिति तार्किकादीनां सम्मतम् । उक्तं च दीधित्यादौ—'निर्णयात्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने साधारणस्य निर्णयात्मनो वा विपरीतज्ञानस्य प्रतिबन्धकत्वात्' इति । **तद्व्यतिरेकेणोपलभ्यमानत्वस्येति** । तदविषयकोपलब्धिविषयत्वस्येत्यर्थः । प्रपञ्चोपलब्धिः सद्रूपब्रह्मविषयिकैवेति प्रपञ्चे साधनाव्यापकत्वमुपाधेर्बोध्यम् ।

[1] दर्शनादेक,

एतेन—उक्तोपाधिः सर्वपक्षवृत्तित्वेन साधनव्यापकः, व्यतिरेकेणेत्यस्य भेदेनेत्यर्थे शुद्धं ब्रह्म न जानामि घटस्फुरणमिति भेदेन प्रपञ्चोपलम्भात् । विनेत्यर्थेपि तदविषयकोपलब्धिविषयत्वपर्यवसाना दासंसारमज्ञानानावृतस्य[1] ब्रह्मणो रूपादिहीनस्य घटाद्युपलम्भाविषयत्वादिति निरस्तम् । यथाच शुद्धं ब्रह्म घटादिधीविषयः, तथोपपादितं तद्व्यतिरेकेणानुपलभ्यमानत्वादिति मिथ्यात्वहेतूपपादने । किञ्च साक्षात्कारवत्त्वं विशेषणमुपलक्षणं वा आद्ये असिद्धिः; न हि यदाऽऽत्मसाक्षात्कारः तदा द्वैते ज्ञानं प्रवृत्तिर्वा । उक्तं हि विवरणादौ ज्ञानिनं प्रकृत्य 'कदाचिदद्वैतज्ञानं कदाचिद्द्वैतज्ञानम्' इति । उक्तं च पूर्वमाचार्यैः दृश्यत्वहेतूपपादने-- 'अज्ञानतत्कार्याविषयक ज्ञानस्यैव तदुभयनिवर्तकत्वात्' इति । यथाच द्वैता[2]विषयकज्ञानं जायते तथा तत्रैवोक्तम् । द्वितीये तु दृष्टशुक्तिताकेपि धर्मिणि वर्षाद्यन्तरे रजतादावध्यस्ते प्रवृत्तेर्व्यभिचारः । न चैवमीशस्य नित्यमद्वैतदर्शित्वात् द्वैते प्रवृत्तिर्ज्ञानं च न स्यादिति वाच्यम्; ईशस्य हि यदद्वैतज्ञानं तन्नद्वैतदर्शनविरोधि, तत्त्वावच्छेदकजातिविरहात् । अतएव तदादाय नासिद्ध्यद्धारः, साक्षात्कारमात्रस्य अव्यावर्तकत्वेन स्वविरोधिसाक्षात्कारस्यैव हेतौ निवेश्यत्वात् । अथैवं प्रतिबिम्बे व्यभिचारोक्तिरसङ्गता, मुखैक्यसाक्षात्कारस्य तदनिवर्तकत्वादिति[3] चेन्न; यस्य हि साक्षात्कारस्य उपाध्यपगमक्षेण तन्निवर्तकत्वं तत्साक्षात्कारवत एव तत्र पूर्वक्षणे प्रवृत्तिसम्भवात् । न चैवमीशस्येव जीवस्यापि संसारावस्थायां भ्रमा[4]विरोधितत्त्वज्ञानाविशेषात् ईश्वरस्यैव तत्त्वदर्शित्वं श्रुतिबोधितं कुत इति वाच्यम्; ईशं प्रत्यावरणाभावात् । अतएव सर्वज्ञत्वेऽपि तत्र न भ्रान्तत्वव्यवहारः,

---

[1] मज्ञानावर्तितस्य (मज्ञानावृत्तस्य). [2] द्वैत. [3] दर्शननिवर्तक. [4] भ्रम.

**तं प्रत्यपरोक्षत्वात् यदेवं तदेवं यथा चैत्रं प्रत्यपरोक्षो घटो न चैत्रमायाकल्पितः। विमतं न जीवकल्पितम्, तस्मिन् सुषुप्तेऽप्यवस्थितत्वात्, आत्मवत्। न चासिद्धिः, प्रत्यभिज्ञानात्। अदृष्टादेरभावे पुनुरुत्थानायोगाच्चेत्यपि निरस्तम्; आद्ये ऐन्द्रजालिकं प्रत्यपरोक्षे तन्मायाकल्पिते व्यभिचारात्। मायाविद्ययोरभेदेन देहात्मैक्यभ्रमे व्यभिचाराच्च। द्वितीयेत्वसिद्धेः। न च प्रत्याभिज्ञया प्रपञ्चस्य स्थायित्वसिद्धेर्नासिद्धिः। सुषुप्तिकालस्थायित्वासाधकत्वस्य प्रत्याभिज्ञाया दृष्टिसृष्टिसमर्थने वक्ष्य-**

---

आवरणस्यैव तत्र प्रयोजकत्वादिति ध्येयम्। **ऐन्द्रजालिकमिति**। न च तत् मायाकल्पितं तेन न दृश्यत इति वाच्यम्; तथा सति तदुपादानकप्रवृत्तिः तस्य न स्यात्, तत्र तत्प्रत्यक्षस्यहेतुत्वात्। दृश्यते हि स स्वमायानिर्मिताम्रफलादानच्छेदनदानादौ प्रवृत्तः। अतएव मायायुद्धे स्वमायानिर्मितगजतुरगशस्त्रादिव्यापारे प्रवर्तन्ते। न हि तावत्पदार्थानां दर्शनं विना तेष्वसाधारणतत्तद्व्यापारे प्रवृत्तिर्घटते। किञ्च हरिवंशादौ प्रद्युम्नशम्बरयुद्धादौ—

ततो मायां परां चक्रे देवशत्रुः प्रतापवान्।
सिंहान् व्याघ्रान् वराहांश्च तरक्षून् ऋक्षवानरान्॥
मुमोच धनुरायम्य प्रद्युम्नस्य रथोपरि।
गन्धर्वास्त्रेण चिच्छेद सर्वांस्तान् खण्डशस्तदा॥

प्रद्युम्नेन तु सा माया हता तां वीक्ष्य शम्बरः।
अन्यां मायां मुमोचाशु दानवः क्रोधमूर्छितः॥

निहतां हस्तिमायां तु तां समीक्ष्य महासुरः।
सैंह्मीं मायां महातेजाः सोऽसृजद्दानवेश्वरः॥

**माणत्वात्, अदृष्टादेः कारणात्मना अवस्थितत्वेन पुनरुत्थान-सम्भवाच्च। मिथ्यात्वमात्मान्यसर्ववृत्ति न, मिथ्यामात्रवृत्तित्वात्। शुक्तिरूप्यत्ववदित्यपि न, मिथ्यात्वन्यूनवृत्तित्वस्योपाधित्वात्। मिथ्यात्वं च सदसद्विलक्षणत्वं सद्विलक्षणत्वमात्रं वा।**

---

सिद्धान् विद्रावितान् दृष्ट्वा माययाष्टापदेन वै।
शम्बरश्चिन्तयामास कथमेनं निहन्मि वै॥

इत्यादौ स्वमायानिर्मितदर्शनं स्पष्टमेव। तस्मादैन्द्रजालिकेन स्वमायानिर्मितं न दृश्यत इति प्रलापमात्रम्। वदन्ति चैन्द्रजालिकाः—'मायानिर्मितं द्रक्ष्यामः' इति। ईशेन यदृश्यते तदपि तन्मायाकल्पितं सम्भवतीत्यप्रयोजकत्वमपि बोध्यम्। **कारणात्मनेति।** कारणगतसंस्कारात्मनेत्यर्थः। न च तर्हि तत्रैवोक्तसाध्यं साधनीयमिति वाच्यम्; अवस्थितत्वं हि स्थूला[1]वस्थावत्त्वं वाच्यम्। अन्यथा अवस्थितत्वेतरवैयर्थ्यापातात्, अबाधितशुक्तिरूप्यादिसूक्ष्मावस्थायां व्यभिचाराच्च। अत्रेदं बोध्यम्—ऐन्द्रजालिकेन द्वित्रिदिनस्थायि स्वमायानिर्मितमपि प्रदर्श्यते। तच्च तस्मिन् सुषुप्ते व्यवस्थितमेवेति व्यभिचारः। दृश्यते हि मायाविनि स्वमायोपसंहारमकृतवति दैवान्मृते तन्मायानुवर्तनं यथा गयाप्रदेशपूर्वप्रदेशे क्वचित्सदोष्णोदककुण्डं बदरिकाश्रमेऽपि तत्। अथ कस्यचित्तपोमाहात्म्यात्तत्, न तु मायात इति चेन्न; वल्लसकारणवह्न्यादिसंयोगं विना तपोमाहात्म्यमात्रेण तदसम्भवात्। **मिथ्यामात्रेति।** प्रतियोगित्वविषयत्वादौ व्यभिचारात् मात्रेत्युक्तम्। **न्यूनवृत्तित्वस्येति।** न च प्रमेयत्वे आत्मान्यसर्वान्तर्गततुच्छावृत्तौ मिथ्यात्वान्यूनवृत्तौ साध्याव्यापकत्वमिति वाच्यम्; प्रमेयत्वस्य मिथ्याभूते स्वस्मिन्नवृत्त्या मिथ्यात्वन्यूनवृत्ति-

---

1 सकला.

**आद्ये सिद्धसाधनम् । तस्यात्मान्यसर्वमध्यपतितासद्वृत्तित्वाभावात् । द्वितीये तु हेतौ मिथ्यापदस्य सदसद्वैलक्षण्यपरत्वे स्वरूपासिद्धिः । सद्वैलक्षण्यरूपे पक्षे तुच्छसाधारणे सदसद्विलक्षणेतरावृत्तित्वरूपहेत्वभावात् । तस्यापि सद्वैलक्षणण्यमात्रपरत्वे सन्दिग्धानैकान्तिकता, साध्याभाववत्यात्मभेदे हेतुसन्दे-**

त्वात् । प्रमेयत्वे प्रमेयत्वान्तरं तु न प्रमेयत्वत्वेन रूपेण, सम्बन्धप्रतियोगित्वानुयोगित्वविरहेणाधाराधेयभावविरहात् । न च प्रमेयत्वे मिथ्यात्वमसिद्धमिति वाच्यम्; घटः प्रमेयत्व मित्यारोपसत्त्वात् । तथाच येन रूपेण साध्ये वृत्तिर्निविष्टा, तेन रूपेणोपाधाविति न दोषः । न चैवं मिथ्यात्वस्यापि स्वावृत्तित्वेन मिथ्यात्वन्यूनवृत्तित्वात् साधनव्यापकत्वमिति वाच्यम्; व्यावहारिकमिथ्यात्वे मिथ्यात्वस्य पूर्वमसिद्धत्वात् । अतएवासदन्यत्वादावपि न साध्याव्यापकत्वम् । असदन्यत्वादिभिन्नत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादरे तु सुतरां न दोषः । किञ्च सदुपरागेण असतोऽपि प्रमाविषयत्वात्, अन्यथा आत्मान्यसर्वमध्यपतितासद्घटितसाध्यप्रमाया असम्भवात् प्रमेयत्वादेः स्ववृत्तित्वमतेऽपि साध्यव्यापकत्वमक्षतम्—**सर्वमध्येति** । न च सर्वपदेन असदन्यत्सर्वं[1] वाच्यमिति वाच्यम्; असत्त्वस्य त्वन्मते शुक्तिरूप्यादावपि स्वीकारेण सर्वपदवैयर्थ्यापत्तेः । मन्मतरीत्या सदसदन्यत्वस्य पक्षे निवेशेऽपि सदन्यत्वमात्मव्यक्तित्वावच्छिन्नभेद एव निवेश्यः । अन्यथा त्रिकालाबाध्यत्वरूपसत्त्वस्य गुरुत्वेन तेन रूपेण भेदाप्रसिद्धेः । तथाचात्मासद्भ्यां भिन्नत्वं स्वाश्रयसर्ववृत्ति, नेत्यनुमाने बाध एव । गुरोरवच्छेदक[2]त्वपक्षेऽपि मन्मते सदन्यत्वस्य आत्मान्यत्वरूपतया माम्प्रति बाधएव । तथा च मन्मते दुष्टहेतोः मां प्रत्युपन्यासस्ते

[1] असदन्यसर्व. [2] रसवच्छेदक.

**हात्। अप्रयोजकत्वादिकं च पूर्वोक्तं दूषणमनुवर्तत एव। आत्मा परमार्थसदन्यः पदार्थत्वादनात्मवत्। न च कल्पितात्मप्रतियोगिकभेदेनार्थान्तरम्। कल्पितमिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधनापत्तेरित्यपि न। व्यावहारिकपदार्थमादाय सिद्धसाधने अतिप्रसङ्गाभावात्, अनानन्दत्वस्योपाधित्वाच्च। अथ आत्मा यावत्स्वरूपमनुवर्तमानानात्मवान्, यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान् वा, पदार्थत्वात् भावत्वाद्वा घटादिवत्। अत्र पञ्चमप्रकाराविद्यानिवृत्त्यभ्युपगमपक्षे सिद्धसाधनपरिहाराय साध्ययोः भावरूपपदमनात्मविशेषणमित्यपि मन्दम्। यावत्स्व-**

---

शोभते। सत्यत्वं, प्रातिभासिकान्यसर्ववृत्ति न, सत्यमात्रवृत्तित्वादित्याभाससाम्यमप्रयोजकत्वं चेत्याह—**अप्रयोजकत्वादिकमिति**। **पदार्थमिति**। आत्मभेदपदार्थमित्यर्थः। न चात्मनि त्वन्मते तद्भेदस्यास्वीकारात् न सिद्धसाधनमिति वाच्यम्; जीवत्वाद्यवच्छेदेन शुद्धस्य तदनवच्छेदेनापि शुद्धे जीवादेः भेदसत्त्वात् 'तस्य भासा' आनन्दं ब्रह्मणो रूपम्, इत्यादिश्रुत्यनूदितस्य जीवत्वाद्यनवच्छेदेनैव शुद्धात्मनि तत्प्रतियोगिकभेदस्य व्यावहारिकस्य सिद्धान्ते स्वीकाराच्च। 'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इत्यादिपञ्चपाद्याद्युक्तभेदस्य व्यवहारकालाबाध्यत्वात् **अनानन्दत्वस्येति**। न च परमार्थसदैक्यरूपं साध्याभावं विनाप्यानन्दत्वस्योपाध्यभावस्योपपन्नत्वान्न तस्य तद्व्याप्यताग्राहकस्तर्क इति वाच्यम्; खण्डनयुक्तिभिरेकस्य साक्षिस्वरूपस्य बाधासम्भवेन परमार्थसत्त्वेऽपि परमार्थसद्भेदस्य अवश्यं बाधात्, 'नाल्पे सुखमस्ति भूमैव सुखम्' इत्यादिश्रुत्या सद्वृत्त्यभावप्रतियोगित्वरूपस्य परिच्छेदस्यानन्दरूपताविरोधित्वोक्तेश्च। भावाद्वैतमते तात्त्विकस्याभावरूपानात्मनः स्वीकारादाह—**भावरूपेति**।

**रूपमित्यस्य यत्किञ्चित्स्वरूपपरत्वे सिद्धसाधनात्, आत्मस्वरूपपरत्वे साध्याप्रसिद्धेः । न हि यावदात्मस्वरूपमनुवर्तमानोऽनात्मा प्रसिद्धोऽस्ति । तथा सति अनुमानवैयर्थ्यात् । अथ स्वरूपपदस्य समभिव्याहृतपरत्वात् व्याप्तिग्रहदशायां दृष्टान्तस्वरूपं पक्षधर्मताग्रहदशायां च आत्मस्वरूपमेव प्राप्यत इति न साध्याप्रसिद्धिः, न वा सिद्धसाधनमिति चेन्न; शब्दस्वभावोपन्यासस्यानुमाने अनुपयोगात् । स्वज्ञानबाध्येत्यत्र स्वशब्देऽपि तुल्योऽयं दोषः । अतएव धीमता बन्धनिवृत्तिः स्वप्रतियोगिविषयविषयकज्ञानाबाध्यानात्मसमकालीना, उक्तज्ञानाबाध्यभावरूपानात्मसमानकालीना वा, बन्धनिवृत्तित्वात्, निगलबन्ध-**

---

उदाहरणवाक्यस्थस्वपदस्य दृष्टान्तपरत्वे पदार्थत्वस्य यावत्तत्स्वरूपानुवर्तमानानात्मवत्त्वव्यभिचारित्वेन[1] व्यापकता[2]ग्रहासम्भवः, स्वात्मकपदार्थत्वस्य हेतुत्वेन तद्वारणेऽपि स्वत्वान्यवैयर्थ्यं स्वरूपासिद्धिश्च । प्रतिज्ञाहेतुवाक्यस्थस्वपदयोः पक्षपरतया पक्षरूपस्वपदार्थघटितसाध्यहेत्वोः[3] प्रतिज्ञाहेतुवाक्यनिर्दिष्टयोः उदाहरणादिवाक्ये व्याप्यव्यापकत्वादिलाभासम्भवात् कुतोऽस्य गमकत्वमित्यादिजिज्ञासानिवर्तकत्वासम्भवः । तथाच उक्तशब्दस्वभावोऽनुमानानुपयुक्त इत्याशयेनाह— **शब्दस्वभावेति** । उक्तं च मणावीश्वरवादे - कार्यत्वहेतुस्वोपादानाभिज्ञजन्यत्वसाध्ययोः व्याप्तिग्रहः किं घटोपादानान्तर्भावेन? किं वा तत्तदुपादानान्तर्भावेन? किं वा उपादानमात्रान्तर्भावेन? आद्ये व्यभिचारः । द्वितीये तत्तदुपादानत्वस्य अननुगतत्वात् कथं व्यापकताग्रहः? अथ तच्छब्दस्य समभिव्याहृत परत्वान्न दोष इति चेन्न; अनुमाने शब्दस्वभावोपन्यासस्य अप्रयोजकत्वात् । तृतीये तु सिद्धसाधनमिति स्वपदस्य पक्षदृष्टान्तान्यतरपरत्वेऽपि सिद्धसाधनम् । स्वप्रागभावव्यतिरिक्ते-

---

1 व्यभिचारे न 2 व्यावर्तक. 3 साध्यहेतुत्वेन.

**न्निवृत्तिवदित्यपि निरस्तम्; पक्षदृष्टान्तयोः बन्धपदार्थस्यैकस्याभावेन स्वरूपासिद्धिसाधनवैकल्यान्यतरापातात् । स्वपदे चोक्तस्साध्याप्रसिद्धिदोषः । हेतौ च बन्धेतिविशेषणवैयर्थ्याद् व्याप्यत्वासिद्धिः । अप्रयोजकत्वं च कस्याश्चिन्निवृत्तेरनात्मसमानकालीनत्वदर्शनात् । निवृत्तिमात्रस्य तथात्वसाधने संसार-**

---

त्यादिविवरणोक्तानुमानं तु पश्चात्परिष्कार्यमिति ध्येयम् । **बन्धपदार्थस्येति ।** तत्तत्स्वातन्त्र्यविरोधिरूपनानार्थकं बन्धपदम् । अतएवाविद्यावतामपि निगडादिविमोके[1] निर्बन्धत्वं, व्यवहरन्ति । आत्मान्यनिवृत्तेर्हेतुत्वेऽपि व्यर्थ[2]विशेषणत्वं, अप्रकाशितार्थप्रकाशत्वादित्यविद्यानुमानहेतौ तु प्रकाशपदस्य आलोकप्रमान्यतरपरत्वेऽपि न क्षतिरिति भावः । यत्तु 'बन्धेति न व्यर्थम्, निवृत्तिविशेषलाभार्थत्वात्' इति; तत्तुच्छम् । निवृत्तौ हि विशेषो न जातिः, किन्तु प्रतियोगिविशेषानुयोगित्वं तन्मात्रं हेतुः, तद्विशिष्टनिवृत्तित्वं वा; अन्त्ये विशेषणं व्यर्थमेव । आद्येऽपि यदि निगडादिबन्धरूपविशेषप्रतियोगिकत्वं हेतुः, तदा तदसिद्धम् । अज्ञानप्रतियोगिकत्वं यदि हेतुः, तदा साधनवैकल्यम्, सप्रतियोगिकत्वेतरवैयर्थ्यं च तद्व्यक्तित्वादिहेतुत्वेऽप्युक्तदोषः, अज्ञाननिवृत्तेः ब्रह्मरूपत्वपक्षे सिद्धसाधनं च तत्त्वधीपूर्वकालबाधित[3]शुक्तिरूप्यादिरूपानात्मकालीनत्वस्य ब्रह्मणि सत्त्वात्तस्या[4]ब्रह्मान्यत्वपक्षेपि नाना जीवपक्षे तत्साध्ये स्वप्रतियोगीत्यत्र तदज्ञाननिवृत्तेरेव स्वपदेन धार्यत्वात् एकजीवपक्षेऽपि जीवन्मुक्तिपक्षे तत् । सद्योमुक्तिपक्षे तु साध्याप्रसिद्ध्यादि । **स्वपद इति ।** दृष्टान्तपरत्वे निगडरूपबन्धप्रतियोगिविषयाद्यप्रसिद्धिः, पक्षपरत्वे च अज्ञान[5]रूपबन्धविषयप्रसिद्धावपि तद्विषयकज्ञानाबाध्यानात्माप्रसिद्धिरिति भावः । **तथात्वसाधन इति ।**

---

[1] विमोच(क्ष)के. [2] कार्य. [3] तत्र पूर्वकालीनाबाधित. [4] तस्य. [5] ज्ञान.

**कालीनायाः दुःखनिवृत्तेः समानाधिकरणदुःखप्रागभावकालीनत्वदर्शनमिव दुःखनिवृत्तिमात्रस्य तथात्वसाधने। नन्वेवं सामान्यानुमानेषु निराकृतेषु विशिष्यानुमानं भविष्यति। आत्मधीर्न स्वविषयविषयकधीबाध्या धीत्त्वात् शुक्तिधीवदित्यपि बालभाषितम्; स्वविरोध्यविषयकप्रत्ययविषयकत्वस्योपाधित्वात्। अन्धोऽयं रूपज्ञानवानित्यन्धस्य रूपविषयतया कल्पितं यत् ज्ञानं तस्य रूपं नान्धगम्यमिति स्वविषयविषयकप्रत्ययबाध्यत्वदर्शनेन व्यभिचारात्। कल्पितत्त्वात्तत्र तद्बाधने प्रकृतेऽपि वृत्तेः**

---

यत्तु 'स्वकारणानात्मसहभावं विना निवृत्तिर्न जायेतेत्यनुकूलतर्कः प्रकृतानुमाने विशेषः' इति तत्तुच्छम्; चरमनिवृत्तेर्हि कारणमुपादाननाशादि। तच्चाभावरूपम्। अदृष्टं तु न तत्कारणं, तस्याभोगतत्साधनेतरत्वात्। उक्तं च तथा वर्धमानाद्यैः। तस्यान्यस्य वा भावस्य[1] तत्कारणत्वेऽपि तत्पूर्वसत्त्वमपेक्ष्यते न समकालत्वम्। [illegible] च न चरमनिवृत्तावुपादानं, भावाद्वैतमते स्वविशिष्टं भावं वा जन्यं प्रत्येव तस्योपादानत्वात् **रूपं नान्धगम्यमिति**। ननु स्वविषयमात्रविषयकधीबाध्यत्वाभावस्य साध्यत्वे नायं दोष इति चेन्न; इदं रूपं तन्नेतिभ्रमविषयीभूतस्यान्धप्रत्यक्षाविषयत्वाभावरूपतत्त्वाभावस्य अन्धप्रत्यक्षविषयत्वरूपस्येदं तदिति वाक्यजप्रमायाः कल्पितोक्तप्रत्यक्षविषयमात्राविषयिण्या बाधेन व्यभिचारे प्रकृतग्रन्थतात्पर्यात्। न ह्युक्तप्रमायां तद्रूपान्याद्विषयः, समानाधिकृतपदद्वयजन्यत्वेन मन्मते निर्विकल्पकत्वात्। स्वविषयताया अन्यूनानतिरिक्तविषयताकज्ञानाबाध्यत्वोक्तावपि बाध्यज्ञानस्यापीदं तदिति वाक्यजन्यत्वेन निर्विकल्पकत्वे तत्रैव स्थले व्यभिचारः; उपलक्षणविधया व्यावृत्ताकारत्वस्यैवारोप्याकारत्वस्य सम्भवात्, बाधकत्वस्यैव बाध्यत्व-

---

[1] (चिद्वि) चाभावस्य.

**कल्पितत्वं समम्। धीपदेन चैतन्यमात्रविवक्षायां तु सिद्धसाधनमेव। आत्माधिष्ठानकभ्रमहेतुः न स्वकार्यभ्रमाधिष्ठानज्ञानबाध्यः, भ्रमहेतुत्वात्। यदवं तदेवं यथा शुक्त्यधिष्ठानकभ्रमहेतुकाचादीत्यपि न साधु। व्यावृत्ताकाराधिष्ठानज्ञानानवधित्वस्य स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वा उपाधित्वात्, दूरादिदोषादुपलादौ यत्र चाकचक्यकल्पना तेन चाकचक्यदोषेण शुक्ताविव रजतकल्पना, तत्राधिष्ठानज्ञानेन चाकचक्करूप्ययोरुभयोरपि**

स्याप्युक्तवाक्यजन्यज्ञाने सम्भवात्। स्वपदस्य पक्षपरत्वे विशिष्टधर्मावच्छिन्नाभावाप्रसिद्धिश्च, लाघवेन बाध्यत्वत्वमात्रस्यावच्छेदकत्वात्। स्वविषयमात्रविषकत्वनिवेशे रूपं चाक्षुषं न वेति ज्ञानं रूपं चाक्षुषमिति धीबाध्यमिति तत्रापि व्यभिचारो बोध्यः—**धीपदेनेति**। आत्मव्यवहारप्रयोजकधीरात्मधीरीति भावः। काचादावंशतस्सिद्धसाधनात्—**आत्माधिष्ठानकेति**। **व्यावृत्ताकोरत्यादि**। यस्माद्व्यावृत्ततया ज्ञातं[1] स्वजन्यभ्रमाधिष्ठानं स्वजन्यभ्रमनिवर्तकं तदन्यत्वस्येत्यर्थः। अविद्यादिद्वितीयाभावोपलक्षितस्यब्रह्मणोधीर्भ्रमनिवर्तिकेत्यविद्यादौ तदस्तीति बोध्यन्। यद्यपि व्याप्यभ्रमस्य भ्रमानुमितिजनकस्य ह्रदो निर्वह्निरित्यादिज्ञानेन बाधात् स्फुटो व्यभिचारः; तथापि भ्रमत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतानिवेशे[2] व्याप्यभ्रमस्य दोषविधया सर्वत्र व्यापकभ्रमेष्वकारणत्वाद्धेत्वभावादेव न व्यभिचार इत्याशयेन स्थानान्तरे तमाह—**दूरादीति** न च चाकचक्यज्ञानं हेतुः, तच्च न बाध्यं मन्मत इति वाच्यम्; ज्ञायमानचाकचक्यस्यापि हेतुत्वसम्भवात् न च चाकचक्यस्यैकस्याभावेन, भावेऽपि तद्धीमात्रेण भ्रमानुत्पादात् तत्तद्धीव्यक्तित्वेनैव तत्तद्भ्रमहेतुत्वमिति वाच्यम्; प्रातीतिकतत्तच्चाकचक्यव्यक्ति[1]त्वेनैव हेतुत्व-

[1] ज्ञानं. [2] निवेशेधार्मिताव च्छेदकताप्रत्यासत्त्या कार्यकारणभावः इत्याधिकः पाठः.

**बाधदर्शनेन व्यभिचाराच्च । ब्रह्मान्यानादि परमार्थसत् अनादित्वात् ब्रह्मवदित्यपि न भद्रम् । ध्वंसाप्रतियोगित्वस्योपाधित्वात् । ब्रह्म देशकालसम्बन्धं विना नावतिष्ठते पदार्थत्वात् घटवदित्यपि न । कालसम्बन्धं विना नावतिष्ठते इत्यस्य यदा ब्रह्म तदा अवश्यं**

---

सम्भवात् । आरोपितं न हेतुरिति प्रलापस्तु प्रत्युक्त एव, शुद्धब्रह्माहेतुत्वपक्षे आरोपितस्यैव हेतुत्वाच्च । यत्तु— "व्यावृत्ताकारेत्यस्य पक्षमात्रव्यावर्तकत्वेन आद्यस्योपाधेः पक्षेतरस्वरूपता, द्वितीयोपाधौ तु साधनव्यापकता, तत्रारोपितस्य तदधिष्ठानकभ्रमा[2]हेतुत्वेन साधनाव्यापकत्वसन्देहस्याप्यभावात्" इति तत्तुच्छम् ; स्वजन्यभ्रमाधिष्ठानं यस्माद्व्यावृत्तं तद्भेदरूपोपाधौ तत्प्रतियोगिरूपविशेषणस्य उक्तचाकचक्यादिरूपविपक्षादपि व्यावर्तकत्वेन पक्षमात्राव्यावर्तकत्वात् , साध्यव्यापकताग्राहकतर्कसत्त्वे पक्षमात्रव्यावर्तकत्वमदूषणमित्यस्यदीधित्यादौ प्रदर्शितत्वाच्च । द्वितीये च न साधनव्यापकतानिश्चयः ; तत्रारोपितस्य तदधिष्ठानकप्रमा[3]हेतुत्वे युक्त्यभावादुक्तचाकचक्यादौ साधनाव्यापकत्वस्यैव[4] निश्चयात्, पक्षे चानारोपितत्वं साधयितुं त्वयाऽद्यापि यत्यते, न तु निश्चीयत इति व्यभिचारसन्देहाधायकतया सन्दिग्धोपाधित्वस्य निर्विवादत्वाच्च उक्तोपाधेरसत्त्वे उक्तसाध्यानुपपत्तेः साध्यव्यापकताग्रहादुक्तोपाध्यभावो यदिसाध्याभावव्यभिचारी स्यात्तदा [illegible] न स्यादिति तर्कसत्वान्नाप्रयोजकतेति ध्येयम् । **ब्रह्मान्यानादीति** । अत्र पक्षे हेतौ चानादित्वं प्रागभावाप्रतियोगित्वं चेत्तदा तुच्छे बाधव्यभिचारौ, तद्वत्भावत्वं चेत्तदापि भावत्वमभावभिन्नत्वं चेत्तदा स्वरूपासिद्धिः । अविद्यादेरपि पूर्णानन्दाद्यभावत्वात् सत्तादात्म्यं चेत्तदापि त्वन्मते तदन्यवैयर्थ्यम्, शुक्तिरूप्यादेस्त्वया तदनङ्गीकारात्, तन्मात्रेहेतुत्वे च

---

[1] वृत्ति. [2] भ्रम. [3] भ्रम पा. [4] व्यापकत्वेऽस्यैव.

**कालसम्बन्ध इत्येवंरूपा व्याप्तिरित्यर्थः । तथाच सिद्धसाधनम् । न हि यस्मिन् काले ब्रह्म तस्मिन् काले ब्रह्मणः कालसम्बन्धो नास्ति । एवं यत्रात्मा तत्र कालसम्बन्ध इति दैशिकव्याप्तावपि सिद्धसाधनम् । न हि देशकालासम्बन्धः कदाप्यास्ति । परममुक्तौ तु न देशो न काल इति सुस्थिरं सिद्धसाधनम् । ब्रह्मान्यद्वैदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्यविषत्त्वात् ब्रह्मवदित्यपि न साधु । पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वस्योपाधित्वात् । साक्षिवेद्यं सुखादि परमार्थसत् । अनिषेध्यत्वेन**

अविद्यायाः पञ्चमप्रकारनिवृत्तेरपि सत्तादात्म्याभावे दृश्यत्वानुपपत्तेः लाघवेन कार्यमात्रे सदुपादानकत्वात् तस्यां व्यभिचारः । अतएवध्वंसाप्रतियोगित्वं सर्व[1]पक्षवृत्तित्वेन साधनव्यापकमिति परास्तम्; अभावान्यत्वस्य पक्षहेत्वोर्निवेशासम्भवात्, सत्तादात्म्यनिवेशे प्रागभावादौ साधना[2]-व्यापकत्वात् पक्षेप्युपाधेः सन्देहे नसन्दिग्धोपाधित्वसम्भवाच्च । **सुस्थिरमिति**[3] । देशकालसम्बद्धं मन्मते सत्त्वेन प्रतीयमानं सर्वम् । ब्रह्मणोप्यविद्यादिदेशकालसम्बन्धात् । तथाच तदन्यभेदसाधने सिद्धसाधनम् । तुच्छान्यत्वाभ्युपगमात्, परममुक्तौ देशाद्यसम्बद्धस्यापि ब्रह्मणः तादृशभेदस्य देशकालसम्बन्धरूपस्य परममुक्त्यन्यकाले ब्रह्मणि स्वीकाराच्च देशादिद्वयवैयर्थ्यं च । अत एव देशकालासंसृष्टसत्ताया अत्यन्ताभावे साध्येऽपि तदुभयम्; सत्तावत्त्वे न निश्चिते विशिष्टाभावस्य देशादिसम्बन्धरूपत्वात्? यत्किञ्चित्कालावच्छिन्नं देशकालासम्बद्धान्यत्वमादाय अर्थान्तरं च । तद्वारणाय यदायदा ब्रह्म तदा देशादिसम्बन्धमित्युक्तावाचार्य[4] दूषणं बोध्यम् । **पारमार्थिकत्वेनेत्यादि** । परमार्थं परमप्रयोजनमर्हति यत् तत्त्वेन विशिष्टा या श्रुतिस्तत्तात्पर्यविषयत्वस्येत्यर्थः ।

1 असर्व 2 साधन (बाधेन पा.) 3 सुस्थिरमित्यदेशकालसंबन्धित्वं
4 वाच्याचार्याय.

**दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात्, आत्मवदित्यपि न; शुक्तिरूप्यादिषु व्यभिचारात्। तेषां दोषजन्यवृत्तिविषयत्वेऽपि दोषाजन्यसाक्षिविषयत्वात्, शुद्धस्य वृत्तिविषयत्वानभ्युपगमे दृष्टान्तस्य साधनविकलत्वाच्च। दोषजन्यज्ञानाविषयत्वविवक्षायां वा असिद्धो हेतुः। साक्ष्यवच्छेदिकाया अविद्यावृत्ते दोष-**

---

तथाच मोक्षोपधायकप्रमाविषयत्वं श्रुतिजन्यधीमात्रप्रयोजनरूपत्वं वोपाधिर्लभ्यते; तादृशविषयतायोग्यताया विवक्षितत्वात्। एतेन साधनविशेषितोऽयमुपाधिरिति ईश्वरानुमाने शरीरजन्यत्ववदाभास इति परास्तम्, वस्तुतस्तु साधनाविशेषितत्वं नाभासताप्रयोजकं; उपाधेर्दूषकताबीजविघटकरूपस्यैव तत्त्वेन दीधित्यादावुक्तत्वात्। [1]साध्याव्यापकतादिग्राहकतर्कस्तु पूर्ववत्। **साक्ष्यवच्छेदिकाया इति।** न च दोषजन्यत्वेनोभयवादिसिद्धं यत् ज्ञानं तदविषयत्वं वाच्यम्, अविद्यावृत्तिस्तु न तथेति वाच्यम्; तथा सति जीवपरयोरैक्ये जविानणु[2] त्वे च तात्त्विकत्वसिद्ध्यापत्तेस्त्वन्मते व्यभिचारात्, शुक्तिरूप्यादौ व्यभिचाराच्च। न हि तज्ज्ञानमुभयसिद्धं तादृशमस्ति; मया अविद्यानिवृत्तेस्त्वया तदन्यस्य तत्वाङ्गीकारात्। पूर्वोक्तरीत्या उभयसिद्धत्वस्य दुर्वचत्वात्। अथोभयसिद्धो यो दोष स्तदजन्यज्ञानविषयत्वं वाच्यम्, शुक्तिरूप्यादिधीजनकदोषः उभयसिद्धः, न तु सुखादिधीजनकदोषः, मम मते सुखादेस्साक्षिमात्रवेद्यत्वादिति चेन्न; त्वन्मते सुखादेरिव मन्मते शुक्तिरूप्यादेस्साक्षिमात्रवेद्यत्वपक्षे व्यभिचारात्।दोषत्वेनोभयसिद्धकाचादिजन्यप्रत्यक्षादिविषयकाचादौ व्यावहारिके स्वरूपासिद्धेश्च। अथ भ्रमविषयत्वेनो भयसिद्धं यद्यत्तदन्यत्वं हेतुः, तदा जीवानणु[3]त्वादावुक्तदोषः, दुर्ज्ञेयतासिद्धत्वस्य ज्ञातत्व प्रमितत्वरूपत्वविकल्पाद्युक्तदोषापत्तिश्चेति ध्येयम्।

[1] साध्यव्यापकेति पा ॥ [2] जीवाणुत्वे. (जीवानन्यत्वे). [3] जीवाणु

जन्यत्वात् । असद्गोचरशाब्दज्ञानात्मकविकल्पस्य दोषाजन्यत्वेन असति व्यभिचारश्च । आत्मनो वृत्तिविषयत्वाभ्युपगमे दोषजन्यदेहात्मैक्यभ्रमविषयत्वात् साधनविकलो दृष्टान्तः । तदनभ्युपगमे तु अविषयत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वोपपत्तौ दोषजन्यज्ञानेति विशेषणवैयर्थ्यात् व्याप्यत्वासिद्धिः । तावन्मात्रं च पक्षे स्वरूपासिद्धमित्यन्यत्र विस्तरः । विमतं परमार्थसत् स्वविषयज्ञानात्पूर्वभावित्वात् आत्मवदित्यपि न; दृष्टिसृष्टिपक्षे असिद्धेः । विषमव्याप्तस्यानादित्वस्य उपाधित्वाच्च । अन्योन्याभावातिरिक्ततद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभा-

---

**भ्रमविषयत्वादिति** । विशिष्टात्मगोचराया अहमाकारवृत्तेश्शुद्धात्माऽपि विषय इति भावः । **साधकत्वेति** । व्याप्तिग्रहयोग्यत्वेत्यर्थः । तथाच व्याप्तिग्रहानुपयुक्तत्वेन वैयर्थ्यमिति भावः । उक्तरीत्या ज्ञानमात्रस्यैव दोषजन्यत्वेन [illegible] विषयतात्वावच्छिन्नप्रतियोगिताकाभावत्वेन हेतुत्वं वाच्यम् । तथाच ज्ञानान्तविशेषणस्य प्रतियोगितानवच्छेदकत्वेऽपि प्रतियोग्यंशे विशेषणत्वं वाच्यम् । तथाच स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वरूपमपि व्यर्थ[1]मिति ध्येयम् । **दृष्टिसृष्टीति** । न च प्रतिकर्मव्यवस्थाभावापत्त्या स पक्षो न युक्त इति वाच्यम् । तद्व्यवस्था हि केनचिदेव कदाचिदेव कश्चिदेव ज्ञायते इत्येवंरूपा । सा च तत्पक्षेऽप्यस्ति; तत्तन्मनोवछिन्नचैतन्येषु तत्तद्विषयाणां तत्तत्काल एवाध्यासादित्युक्तापत्तेर्मौढ्यमूलकत्वात् । अत्र विशेषानुमानेष्वाद्यद्वितीययो स्स्वपदस्य पक्षदृष्टान्तपरत्वविकल्पेन पूर्वोक्तसाध्यवैकल्यादिदोषः । द्वितीये भ्रमत्वस्यैकस्याभावात् तत्तद्भ्रमं प्रत्येव तत्तद्व्यक्तित्वेन दोषाणां हेतुत्वेन तन्निवेशेऽननुगमः । तावदन्यतमत्वेन हेतुत्वानां हेतुत्वेऽपि दृष्टान्तमात्रवृत्तिहेतुत्वस्यैव तत्त्वेन हेतु-

---

[1] वैयर्थ्यं.

त्वसम्भवेनेतरवैयर्थ्यम् । तच्च स्वरूपासिद्धम् । पदार्थत्वहेतुः पदशक्यत्वं चेत् स्वरूपासिद्धम् । पदलक्ष्यत्वं चेत् पदत्वलक्ष्यत्वयोरननुगतत्वात् पक्षदृष्टान्तयोरनुगतहेत्वभावात् स्वरूपासिद्धिसाधनवैकल्ये । अन्यतमत्वेन हेतुत्वेपि वैयर्थ्यासिद्ध्यादिकम् । तद्धीविषयत्वेन हेतुत्वे चाप्रयोजकत्वादिकम् । दोषाजन्येत्यादिहेतावपि दोषत्वस्य तत्तद्भ्रमजनकत्वरूपस्याननुगमादुक्तदोषः । किञ्चिद्भ्रमजनकत्वमात्रनिवेशे भ्रमान्तरविषये व्यभिचारः । दोषाणामन्यतमत्वेन निवेशेऽपि दोषाजन्यज्ञानाप्रसिद्धिः । वस्तुमात्रस्यैव किञ्चिद्भ्रमं प्रति दोषत्वात् । स्वज्ञानात्पूर्वभावित्वादित्यत्रापि पूर्वभावित्वस्य पूर्वकालवृत्तित्वरूपत्वात् यत्किञ्चित्ज्ञानपूर्वभावित्वं शुक्तिरूप्यादौ व्यभिचारि । यावत्स्वज्ञानपूर्ववृत्तित्वं घटादावसिद्धम् । यत्किञ्चित्स्वप्रत्यक्षपूर्ववृत्तित्वं शुक्तिरूप्यादावपि, सन्निकर्षादिना तत्रापि प्रत्यक्षोत्पत्तौ बाधकाभावात् । सुखादौ साक्षिमात्रवेद्यत्वे तत्रासिद्धिः । तस्य पक्षबहिर्भावेऽपि स्वप्रत्यक्षोत्पत्तिकालोत्पन्नपरिमाणविशेषादावसिद्धिः । संयु[1]क्तसमवायमात्रेण तत्प्रत्यक्षानुदयेन तावदवयवावच्छिन्नसंयोगवत्समवायहेतुत्वे तत्तत्पुरूषीयत्वस्य कार्यकारणतावच्छेदके निवेशे गौरवात् । पुरुषनिष्ठपरम्परासम्बन्धेन तावदवयवावच्छिन्नसंयोगस्यैव लाघवेन तत्प्रत्यक्षहेतुत्वेन तदुत्पत्तिकालेऽपि तत्प्रत्यक्षसम्भवात् । न चैवं तत्परिमाणोत्पत्तेः पूर्वमपि तत्प्रत्यक्षापत्तिः; तदवयवावच्छिन्नत्वस्य गुरुत्वेन विजतीयसंयोगत्वेनैव हेतुत्वात्तादृशस्य तत्पूर्वमसत्त्वात् । यावत्स्वप्रत्यक्षपूर्ववृत्तित्वं तु सुतरामसिद्धम्; ईशयोगिप्रत्यक्षाणां साक्षिणश्च स्वविषयपूर्वमपि सत्त्वात् । अयोगिजीवयावज्जन्यप्रत्यक्षनिवेशेऽपि व्याप्तिग्रहानौपयिकत्वेन यावज्जन्यपूर्ववर्तित्वेतरांशवैयर्थ्यम् । तदनुपादाने

[1] संयुक्तसमवेतसमवायेति पां.

**वत्त्वं एतद्धटसमानाधिकरणावृत्ति अन्योन्याभावातिरिक्तैतद्धट-समानाधिकरणैतद्धटप्रतियोगिकाभावमात्रवृत्तित्वात् एतद्धट-प्रागभाववत्त्ववत्। व्यधिकरणधर्मावच्छिन्नाभावपक्षे व्यधिकरण-धर्मानवच्छिन्नेत्यपि विशेषणीयम्। अत्र च स्वसमानाधिकरणः स्वसमानकालीनो योऽत्यन्ताभावस्तदप्रतियोगित्वलक्षणसत्त्व-सिद्धिरित्यपि न साधु। साधनावच्छिन्नसाध्यव्यापकस्यैत-द्धटप्रतियोगिकजन्यजनकान्यतरमात्रवृत्तित्वस्योपाधित्वात्। न च पक्षीभूतधर्मस्यात्यन्ताभाववृत्तित्वसन्देहे साधनाव्यापक-त्वसन्देह इति वाच्यम्; विपक्षसाधकतर्कानवतारदशायां**

---

चासिद्धिरिति परोक्तिः प्रलापमात्रमिति ध्येयम्। **अन्योन्येत्यादि।** तद्धटभेदनिष्ठेऽभावत्वे बाधादतिरिक्तान्तं, समवायेन तद्धटात्यन्ताभावनि-ष्ठाभावत्वे बाधात् **एतद्धटसमानाधिकरणेति** । सामानाधिकरण्यं समवायिवृत्तित्वं, कपालरूपादौ बाधात् **एतद्धटप्रतियोगिताकाभा-वेति** । हेतौ च तद्धटभेदत्वे समवायावच्छिन्नतद्धटात्यन्ताभावत्वे घटा-त्यन्ताभावत्वे मेयत्वादौ च व्यभिचारात् क्रमेण विशेषणानि सार्थकानि; प्रागभाववत्त्वादौ साधनवैकल्याद्दृष्टान्ते। **एतद्धटेति** । शुद्धसाध्य-मेतद्धटासमानकालीने तत्तद्व्यक्तित्वेपीति [illegible] --**साधना-वच्छिन्नेति। अन्यतरेति।** एतद्धटप्रतियोगिकं यदेतद्धटस्य जन्यं जनकं च तयोरन्यतरदेतद्धटस्य प्रागभावो ध्वंसश्च, तन्मात्रवृत्तित्वस्येत्यर्थः। साध्यसमव्याप्तिरक्षार्थं **मात्रेति** । विषमव्यापकस्याप्युपाधित्वं साध्य-व्याप्यत्वांशस्य दूषकताया मनुपयोगादिति निष्कृष्टमते तु तन्नोपादेयम्। **सन्देह इति** । एतद्धटे मिथ्यात्वसन्देहकाले तत्समवायिनि समवायेन तदत्यन्ताभावस्य सन्देहात् पक्षे अत्यन्ताभाववृत्तित्वसन्देहः। तद्धट-ध्वंसप्रागभावकाले च तद्धटवति तदत्यन्ताभावो नाभ्युपेयते। तत्काले

**सान्दिग्धोपाधेरपि दूषणत्वसम्भवात्। घटात्यन्ताभावत्वे च व्यभिचारात् । संयोगसम्बन्धेन घटवत्यपि भूतले समवायसम्बन्धेन**

---

तद्घटो नास्तीति बुद्धेस्तद्घटप्रागभावाद्यवगाहित्वेनोपपत्तेः, पूर्वापरघटध्वंसप्रागभाववति घटो नास्तीति धीस्तु नापाद्या, नास्तीत्याकारकबुद्धेः प्रतियोगिविशेषणीभूतघटत्वादिविशिष्टव्यधिकरणसंसर्गाभावविषकत्वात् । तत्तद्व्यधिकरणत्वं च तदवच्छेदकावच्छिन्नस्य तत्सामानाधिकरण्यस्य अभाववत्त्वादिरूपम् । अतस्संयोगादिमत्यपि सयोगो नास्तीत्यादिधीः । वस्तुतस्तस्यां घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वेनैवाभावभानात् । अन्यथा प्रतियोगिताया अवच्छिन्नत्वे मानाभावेनासिद्ध्यापत्तेः प्रागभावादिकालेऽप्यत्यन्ताभाव आवश्यकः । तथाच पक्षस्य तद्घटासमानकालीने तद्घटात्यन्ताभावे निश्चयेन पक्षे साधनवत्तानिश्चयादुपाध्यभावनिश्चयाच्च साधनाव्यापकत्वमुपाधेर्निश्चितमेव । न चान्यतरवृत्तित्वस्य मात्रार्थाविशेषितस्योपाधित्वकल्पे साधनाव्यापकत्वासम्भव इति वाच्यम्; तस्यापि तद्घटात्यन्ताभावत्वे साधनाव्यापकत्वसम्भवात् । न चैवं तद्घटसमानाधिकरणतद्घटात्यन्ताभावत्वतद्घटाभावत्वयोस्साध्या — व्यापकत्वमिति वाच्यम्; तयोस्साध्यवत्त्वानिश्चयादिति ध्येयम् । **सन्दिग्धेति** । यत्र व्यभिचारसंशयविरोधी तर्कोऽवतरति, तत्र व्यभिचारसंशयरूपस्वकार्याक्षमत्वात् सन्दिग्धोपाधिर्न दूषणम् । यत्र तु स नावतरति तत्रोक्तस्वकार्यक्षमत्वात् स दूषणमेवेति भावः । **संयोगेत्यादि** । न च समवायेन तद्घटवति वृत्तेर्निवेशान्नायन्दोष इति वाच्यम्, समवायेन घटवत्यपि सयोगेन घटात्यन्ताभावसत्वादित्यस्य प्रकृतग्रन्थार्थत्वात् । समवायेन तद्घटाभावस्य हेतौ निवेशे तु साधनवैकल्यमिति भावः । ननु समवायान्यसम्बन्धानवच्छिन्नप्रतियोगिताकघटात्यन्ताभावत्वं हेतौ निवेश्यं, तथाच नोक्तव्यभिचारो न वा साध-

**घटात्यन्ताभावसत्त्वात् साध्याभाववति हेतोर्वृत्तेरित्यलमतिविस्तरेण ॥**

**इत्यद्वैतसिद्धौ विश्वसत्वानुमानभङ्गः.**

---

# अथविश्वमिथ्यात्वे विशेषतोऽनुमानानि

**मिथ्यात्वे च विशेषतोऽनुमानानि—ब्रह्मज्ञानेतराबाध्य**

नवैकल्यं, तत्राह—**साध्याभाववतीति**। समवायावच्छिन्नप्रतियोगिताकघटात्यन्ताभावस्य नित्यत्वात् तद्घटसमानकालीनत्वेन घटात्यन्ताभावत्व मुक्तसाध्याभाववदिति भावः। ननु तद्घटसमवाय्यवच्छिन्नं यत्तद्घटकालवृत्तित्वं तद्वृत्तित्वाभावस्साध्यः, तथाच समवायेन तद्घटाभावो नोक्तवृत्तित्ववान्, तद्घटसमवाय्यन्यावच्छेदेनैव तस्य तद्वृत्त्वादिति न व्यभिचारः, तत्राह—**अलमिति**। मन्मते मिथ्यात्वघटकात्यन्ताभावस्य प्रतियोग्यविरुद्धत्वेन देशकालावच्छिन्नवृत्तिकत्वाभावेन सिद्धसाधनम्। प्रातिभासिकतद्घटात्यन्ताभावमादाय व्यभिचारः। तदन्यत्वेन समानकालीनविशेषणेऽपि बाधव्यभिचारौ, पूर्वोत्तरकालीनात्यन्ताभावयोरेव प्रागभावध्वंसरूपतया स्वीकारसम्भवात्। एकया अत्यन्ताभावव्यक्त्यैव ध्वंसादिबुद्ध्युपपत्ते स्संसर्गाभावव्यक्त्यन्तराकल्पनात्, तद्घटात्यन्ताभावे तद्घटसमानकालीनत्वावश्यकत्वात् उक्तावच्छिन्नत्वानिवेशे बाधाद्यावश्यकत्वात्, तन्निवेशे सिद्धसाधनमिति भावः॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
विश्वसत्त्वानुमानानां भञ्जनं ध्वान्तभञ्जनन्॥

इति विश्वसत्यत्वानुमानभङ्गः.

---

**ब्रह्मज्ञानेत्यादि**। ब्रह्मज्ञानान्याबाध्यं[1] यद्ब्रह्मान्यत्तद्वृत्तिरस-

[1] ब्रह्मज्ञानेतेरबाध्यं.

ब्रह्मान्यासत्वानधिकरणत्वं पारमार्थिकसत्वाधिकरणावृत्ति, ब्रह्मा-

त्वाभाव इत्यर्थः । **पारमार्थिकसत्त्वेति** । सामान्यानुमानोक्तरीत्या धीविषयत्वादिरूपं पारमार्थिकसत्त्वं बोध्यम् । अतो न सिद्धसाधनादि-पूर्वोक्तदोषः । [1]व्यावहारिकं पारमार्थिकसत्त्वाधिकरणवृत्तित्वमत्र निवे-श्यम् । एतेन—" ब्रह्मस्वरूपस्य तस्या[2]धिकरणाप्रसिद्धिः कल्पितस्य तदधिकरणत्वस्य तत्रैव प्रसिद्धावपि शुक्तिरूप्यत्वे साध्याप्रसिद्धिः; तद्वद्वृत्तित्वस्य मिथ्यात्वन्तु न सिद्धम्, येन तत्सत्वेऽपि तदभावसत्वान्ना-प्रसिद्धिः, पारमार्थिकसद्वृत्तित्वेऽपि किञ्चिदवच्छेदेन तदभावसत्त्वमादाय सिद्धसाधनापत्त्या पारमार्थिकसद्वृत्ति यद्यत्तदन्यत्वस्यैव साध्यीकार्यत्वात्, तस्य च शुक्तिरूप्यत्वे ब्रह्मनिष्ठे न प्रसिद्धिः" इत्यादि परास्तम् । अवच्छिन्नब्रह्मनिष्ठेऽपि शुक्तिरूप्यत्वे शुद्धब्रह्मावृत्तित्वानपायाच्च । अवृ-त्तित्वमात्रं न व्याप्तिग्राहकं, दृष्टान्तावृत्तित्वात् । अतो ब्रह्मावृत्तित्वं हेतूकृतम् । न च ब्रह्मण्यवृत्तित्वसत्त्वात्तत्रैव तस्या व्याप्तिग्राहकत्वं शंक्यम् । आनन्दत्वादिधर्मरूपत्वेन ब्रह्मणोऽपि स्ववृत्तित्वात्तस्य प्राती तिकत्वात्तदभावोऽपि तस्येति चेन्न; तथापि ब्रह्मणि दृष्टन्ते साध्यवैक-ल्यापातात्, सद्रूपत्वेन ब्रह्मणः प्रपञ्चवृत्तित्वात् परमते पारमार्थिक-सद्वृत्तित्वात् । अत एव साधनवैकल्यमपि, प्रपञ्चवृत्तित्वस्य ब्रह्मनिष्ठ-स्याद्यापि मिथ्यात्वासिद्धया ब्रह्मण्यवृत्तित्वासिद्धेः । यद्यपि केवलस्या-सत्त्वाभावस्य पारमार्थिकसद्वृत्तित्वम्, तथाप्युक्तपक्षतावच्छेदकविशिष्ट-रूपेण तदभावरूपसाध्यवत्त्वमक्षतम् । अतएव ब्रह्मान्येति सार्थकम् । प्राती-तिकवृत्तित्वविशिष्टस्सन्नसत्त्वाभावः पारमार्थिकावृत्तिरिति परेषां सिद्धम् । अतोऽबाध्यान्तम् । न चैवमपि ब्रह्मज्ञानबाध्यप्रातीतिकवृत्तित्वविशि-ष्टस्य पारमार्थिकावृत्तित्वेन परेषां सिद्ध इति वाच्यम्; परैः पातीतिक-मात्रस्य ब्रह्मज्ञानान्यबाध्यत्वाङ्गीकारात्, सर्वं प्रातीतिकं प्रतिपन्नोपाधौ

1 व्यवहारिकपारमार्थिकरणे वृत्तीति पा. 2 ब्रह्मस्वरूपसत्त्वस्या.

**वृत्तित्वात्, शुक्तिरूप्यत्ववत् परमार्थसद्भेदवच्च । विमतं मिथ्या, ब्रह्मान्यत्वात्, शुक्तिरूप्यवत् । परमार्थसत्त्वं स्वसमानाधिक-**

---

नास्तीति बाधसम्भवाच्च, यथोक्तपक्षे साध्यस्य परेषामसिद्धत्वात् । **शुक्तिरूप्यत्ववदिति** । शुक्त्यवच्छिन्नचैतन्यवृत्तेरपि शुक्तिरूप्यत्वस्य शुद्धब्रह्मावृत्तित्वमिति भावः । यद्युपहितवृत्तेरशुद्धवृत्तित्वनियमः, तथापि न क्षतिरित्याशयेनाह—**परमार्थसद्भेदवदिति** । न च परमार्थसद्भेदोऽपि ब्रह्मवृत्तिः, अन्यथा परमार्थसत्त्वस्य ब्रह्मस्वरूपस्य स्वधर्मत्वानुपपत्तेरिति साधनवैकल्यमिति वाच्यम्; तत्र ब्रह्मवृत्तित्वस्य प्रातीतिकत्वेन तदभावस्य पररीत्यापि सम्भवात्, दृष्टान्तस्य परमार्थसत्त्वावच्छिन्नप्रतियोगिताकभेदस्य ब्रह्मण्यभावाच्च, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदादिनैव धर्मतानिर्वाहात् व्यावहारिकस्य परमार्थावृत्तेर्वा भेदस्य दृष्टान्तत्वे निर्दोषत्वाच्च । अतएव भेदस्य विभागवत् प्रतियोगिवृत्तित्वेऽपि न क्षतिः । वस्तुतस्तु परमार्थसत्प्रतियोगिकत्वविशिष्टस्य दृष्टान्तत्वात्तादृशस्य ब्रह्मणि सत्त्वे मानाभावान्न साधनवैकल्यम् । अतएव च न साध्यवैकल्यम् । अतएव च शुक्तिरूप्याद्युपहितवृत्तित्वेऽपि नोक्तभेदस्य शुद्धब्रह्मवृत्तित्वशङ्का, तदतिरिक्तस्थल एव तथा नियमस्वीकारात् । अतएव महाकालान्यत्वविशिष्टघटादेः महाकालावृत्तित्वं पराभ्युपगतम् । **मिथ्या** । सद्विलक्षणम् । तेनासद्व्यावृत्तमिथ्यात्वस्यासम्भवेऽपि [1] नासति व्यभिचारः । **ब्रह्मान्यत्वादिति** । उक्तरीत्या ब्रह्मणि व्यभिचारादिकं परिहार्यम् । **स्वसमानाधिकरणान्योन्येत्यादि** । अन्योन्याभावो व्यावहारिकः प्रतियोग्यवृत्तिर्वा ग्राह्यः, तेन ब्रह्मनिष्ठं ब्रह्मभेदं प्रातीतिकमादाय न दोषः । स्वसमानाधिकरणतादृशभेदप्रतियोगिवृत्ति यद्यत्तावदन्यत्वकूटं साध्यम् । अथवा स्वप्रतियोगिवृत्तित्वं स्वसामानाधिकरण्यं

---

[1] त्वस्यासत्यभावेपि. (त्वस्याभावेपि पा.)

**रणान्योन्याभावप्रतियोग्यवृत्ति; सदितरावृत्तित्वात्, ब्रह्मत्ववत्। ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकम्, सत्त्वसमानाधिकरणत्वात्, असद्वैलक्षण्यवत्। व्याप्यवृत्तिघटादिः जन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगी, अभावप्रतियोगित्वात्,**

---

चेत्युभयसम्बन्धेन उक्तभेदविशिष्टं यत्तदन्यत्वं साध्यम्। तेन स्वपदार्थस्य पक्षदृष्टान्तसाधारणस्यैकस्याभावेऽपि न क्षतिः। **सदितरेति**। परमार्थसदन्येत्यर्थः। **सत्त्वव्यापकमिति**। अबाध्यनिष्ठभेदप्रतियोगितानवच्छेदकमित्यर्थः। **एकत्वं**। यत्किञ्चिदेकत्वम् न सत्त्वव्यापकम् नानावस्तुषु सत्त्वस्वीकारात्। यद्वा पञ्चमप्रकाराविद्यानिवृत्तिपक्षे तस्या ब्रह्मान्यत्वादेकत्वमविनाशित्वादिरूपं पक्षीकृतमिति ध्येयम्। सयोगादिवदव्याप्यवृत्तित्वेनार्थान्तरं स्यादतो—**व्याप्यवृत्तिरिति**। दैशिकसम्बन्धावच्छिन्ना वृत्तिः किञ्चिदवच्छिन्ना यस्य तदन्य इत्यर्थः। घटगोत्वादेः कालिकसम्बन्धावच्छिन्नवृत्तेः कपालाद्यवच्छिन्नत्वादवच्छिन्नान्तम्। समवायेन घटादेरव्याप्यवृत्तित्त्वे त्वाह—**आदिगिति**। गोत्वादीत्यर्थः। घटादौ तु अवच्छिन्नवृत्तिकान्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव शुक्तिरूप्यादिदृष्टान्तेन साधनीयमिति भावः। भेदप्रतियोगित्वमादाय सिद्धसाधनं स्यादतो। **मात्रेति**। अजन्यसमानाधिकरणान्यस्याप्रतियोगीति पर्यवसितं साध्यम्। कपालादिनाशनाश्यघटादौ समानाधिकरणान्यध्वंसप्रतियोगित्वेन बाधात्—**अजन्येति**। अन्यान्तविशेषणम्। **अभावप्रतियोगित्वादिति**। न चाभावेति व्यर्थमिति वाच्यम्; अभावसंयोगादिप्रतियोगितासु सम्बन्धावच्छिन्नत्वादितदभावाभ्यां विलक्षणासु प्रतियोगितात्वस्यैकस्याभावेनाभावीयप्रतियोगितागतरूपेण हेतुतालाभाय तदुपादानात्। अन्यथा सयोगादिप्रतियोगितारूपेण हेतुत्वे गुणादौ भागासिद्धेः। तासु तस्यैकस्य स्वीकारे तु प्रतियोगितासम्बन्धेन

**अभिधेयत्ववत् । अभिधेयत्वं हि परमते केवलान्वयित्वादन्योन्याभावमात्रप्रतियोगी । स च समानाधिकरण एव । अस्मन्मते तु मिथ्यैवेति नोभयथापि साध्यवैकल्यम् । अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः,**

---

अभावो[1] हेतुर्बोध्यः । **मते त्विति** । अभिधेयत्वमित्यनुषज्यते । **मिथ्यैवेति** । स्वसमानाधिकरणात्यन्ताभावप्रतियोग्यपीत्यर्थः । अत्र अजन्यो य स्स्वसमानाधिकरणान्याभावस्तत्प्रतियोगी, स्वमते खपुष्पवत्, तथापि परप्रसिद्धस्य खपुष्पस्येव भेद स्साधयितुं शक्यत एव । अथवा अजन्याभावसामान्यस्य स्वसामानाधिकरण्यं प्रतियोगित्वं चेत्युभयसम्बन्धेनाभावस्साध्यः । स्वसामानाधिकरण्यपदार्थस्स्वाधिकरणसंयुक्तत्वाभावादिः[2] गुणादौ प्रसिद्धो निवेश्य । तेन सामानाधिकरण्यसामान्याभावाप्रसिद्धावपि न दोषः । तथाच घटादौ पक्षे संयुक्तत्वाभावघटितेन, गुणादौ पक्षे समवेतत्वाभावादिघटितेन उभयसम्बन्धेनाभावसामान्याभावस्साध्य इति ध्येयम् । **प्रतियोग्यवच्छिन्नवृत्तिरिति** । प्रतियोगी अवच्छिन्नो येन तत्प्रतियोग्यवच्छिन्नं, तेन तदवच्छिन्ना वृत्तिर्यस्य स इत्यर्थः । गोत्वादेरपि कालवृत्तित्वे गवादिदेशस्यावच्छेदकत्वात् न गोत्वाद्यवच्छेदकावच्छिन्नवृत्तिकत्वाप्रसिद्धिः । अथवा अवच्छिन्नवृत्तिकान्यत्वं साध्यम्; परमते गोत्वाद्यभावस्य का[3]लवृत्तित्वे गवादिभिन्नदेशस्यावच्छेदकत्वात् न तत्र सिद्धसाधनम् । ननु—"पूर्वकल्पो न युक्तः; त्वन्मतेऽत्यन्ताभावस्यावच्छिन्नवृत्तिकत्वस्यायुक्तत्वात् । द्वितीयकल्पोऽपि न युक्तः, कालिकसम्बन्धेन गोत्वाद्यभावस्य विशेषणतया कालवृत्तित्वस्य गवादिभिन्नावच्छिन्नत्वेन तत्र सिद्धसाधनाभावेऽपि समवायादिना गोत्वाद्यभावे सिद्धसाधनात्" इति चेन्न; कालत्रये कुत्रापि दृश्यं नास्तीत्यनुभवेन अत्यन्ताभावस्यावच्छिन्नवृत्तिस्वीकारेणाऽऽद्य

---

1 अभावे. 2 भावादिर्ति. 3 भाववृत्तित्वे.

**नित्याभावत्वात्, अन्योन्याभाववत् । अत्यन्ताभावत्वं –**

---

दोषाभावात्, गवि तन्नाशकाले गोत्वं समवायेन नास्तीत्याद्यनुभवेन परमते समवायाद्यवच्छिन्नगोत्वाद्यभावस्याप्यवच्छिन्नवृत्तिकत्वेन द्वितीयदोषस्याप्यभावात् । अतएव ज्ञायमानसामान्यस्य प्रत्यक्षकारणत्वे भाविघटादौ घटत्वाद्यभावात् व्यभिचोरण सामान्यज्ञानस्य कारणत्वं दीधित्यादावुक्तम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेन कुत्रचिदत्यन्ताभावे सिद्धसाध्यकत्वस्यादोषत्वाच्च । एवंच पूर्वकल्पेऽत्यन्ताभावे प्रतियोग्यवच्छेदकावच्छिन्नत्वस्य द्वितीयकल्पेऽनवच्छिन्नत्वस्य [1] च [2]साधर्म्यमव्याहतं, प्रतियोग्यवच्छेदकावच्छेदेनाभावस्याग्रहणात् प्रतियोग्यवच्छेदकावच्छिन्नत्वभ्रमः परेषामिति दिक् । **नित्याभावत्वादिति ।** सदातनाभावत्वादित्यर्थः । ध्वंसादौ व्यभिचारात्सदातनेति । अविद्यादेः पूर्णानन्दाद्यभावत्वात् पूर्णानन्दरूपप्रतियोग्यवच्छेदकाप्रसिद्ध्या व्यभिचारः । न च तत्त्वज्ञानोत्तरकालस्यैव तदवच्छेदकत्वेन कल्पितत्त्वान्नाप्रसिद्धिरिति वाच्यम्; तथाप्यविद्यादौ तत्कालावच्छिन्नत्वस्याभावात् तत्पूर्वकालावच्छिन्नत्वाच्च कल्पद्वयेपि व्यभिचारात् —अतोऽभावेति । भावविलक्षणेत्यर्थः । **अन्योन्याभाववदिति ।** आद्यसाध्ये गोत्वादिभेदस्य गोत्वाद्यवच्छेदकगवाद्यवच्छिन्नत्वात् गोत्वादितद्भेदयोः कालवृत्तित्वे गवादेरवच्छेदकत्वात् न साध्यवैकल्यम् । । द्वितीयसाध्ये तु तस्य किञ्चिदवच्छिन्नदैशिकवृत्तिकान्यत्वरूपस्य विवक्षितत्वे भेदमात्रं दृष्टान्तः । दैशिकेत्यस्यानिवेशे तु वाच्यत्वादिकं । तस्य कालिकवृत्तेरप्यनवच्छिन्नत्वात् । न चोक्तरीत्या घटादौ तन्नाशकालावच्छेदेन तद्भेदोऽपीति साध्यवैकल्यमिति वाच्यम्; भेदमात्रस्य व्याप्यवृत्तित्वमते तदभावात् मतान्तरे [3] सन् (त्) पदार्थभेदस्यदृष्टान्तत्वसम्भवाच्च ।

---

[1] नवच्छिन्नवृत्तिकत्वस्य. [2] साधनम्. [3] सनपदार्थभेदस्यामादृष्टान्तत्व.

**प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्ति, प्रतियोग्यवच्छिन्नवृत्तिमात्रवृत्तिवा, नित्याभावमात्रवृत्तित्वात्, अन्योन्याभावत्ववत् । घटात्यन्ताभाववत्त्वं प्रतियोगिजनकाभावसमानाधिकरणवृत्ति, एत-**

---

आद्यसाध्यं स्वनिष्ठप्रतियोगितानिरूपकत्वस्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन विषयवत्वं[1] पर्यवसितं बोध्यम् । तेन किञ्चित्प्रतियोगिनिवेशे सिद्धसाधनादि, स्वप्रतियोगिनिवेशे पक्षदृष्टान्तसाधारणस्य स्वत्वस्याभावेन तदन्यतरनिवेशे साध्यवैकल्यबाधावित्यादिकं न दोषः । **प्रतियोग्यशेषेति** । अशेषप्रतियोगीत्यर्थः । पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्याभावरूपो यः प्रतियोगी तदधिकरणवृत्तिस्सर्वोप्यत्यन्ताभावस्तन्मात्रवृत्तित्वं पक्षे सिद्धम् । अतोऽशेषेति । तथाच स्वप्रतियोग्यधिकरणताव्यापकाधिकरणतानिरूपकं यद्यत्तद्भेदकूटवदवृत्तित्वं साध्यम् । स्वप्रतियोगिकत्वं स्वासामानाधिकरण्यं चेत्युभयसम्बन्धेन विषयविशिष्टं यत्तदवृत्तित्वं स्वावच्छेदकविशिष्टवदवृत्तित्वं स्वनिरूपकं चेत्युभयसम्बन्धेन प्रतियोगिताविशिष्टं यत्तदवृत्तित्वं वा पर्यवसितम् । तादृशविषयविशिष्टं च सर्वावयवनाशजन्यो घटादिनाशः । **प्रतियोग्यवच्छिन्नेत्यादि** । स्वप्रतियोग्यवच्छेदकावच्छिन्नभिन्नावृत्ति अवच्छिन्नवृत्तिकावृत्तीति वार्थः । दृष्टान्त उक्तरीत्या बोध्यः, शेषं पूर्ववत् । **प्रतियोगिजनकेति** । स्वप्रतियोगिजनकेत्यर्थः । स्वसमानाधिकरणपदार्थोऽत्यन्ताभावस्तत्प्रतियोगिजनकाभावश्च तद्धटप्रागभावः । तत्सामानाधिकरण्यं चानवच्छिन्नं निवेश्यम । तेन तादृशाभावकालेन तद्धटध्वंसकालेन वा अवच्छिन्नं तत्सामानाधिकरण्यं तद्धटात्यन्ताभावनिष्ठमादाय न सिद्धसाधनादि । तत्कपालनाशजन्यतद्धटध्वंसत्वे व्यभिचारात् कालीनान्तम् । कपालनाशनाश्यघट[2] व्यक्तिनिवेशे तु तन्नोपादेयम् । अनादिप्रतियो-

---

[1] विषयकत्वं. [2] घटवृत्ति.

**त्कपालसमानकालीनैतद्घटप्रातियोगिकाभाववृत्तित्वात्, प्रमेयत्ववत्। एतत्कपालमेतद्घटात्यन्ताभावाधिकरणम्, आधारत्वात्, पटादिवत्। ब्रह्मत्वं, न परमार्थसन्निष्ठान्योन्याभावप्रतियोगि-**

---

गिकाभावत्वादौ व्यभिचारात् **एतद्घटप्रतियोगिकेति**। तद्घटसंयोगत्वादौ व्यभिचारादभावेति। वस्तुतस्तु—एतद्घटेति। एतत्कपालनाशनाश्यघटेत्यर्थः, एवंच तत्सामानाधिकरण्ये अनवच्छिन्नत्वं विशेषणम् तद्घटप्रागभावकालावच्छिन्नं तत्समानाधिकरण्यमादाय सिद्धसाधनवारणाय। तद्घटध्वंसत्वे व्यभिचारात् कालीनान्तम्। येन तद्घटसमवायिनि तद्घटात्यन्ताभावो न स्वीक्रियते तं प्रत्यनवच्छिन्नत्वं न देयम्। ननु स्वप्रतियोगिसमानाधिकरणवृत्तित्वसाधनेऽपीष्टसिद्धौ किमिति जनकाभावनिवेश इति चेत्। अयं भावः—तद्बीज घटाद्युत्पत्तेः पूर्वं तत्समवायिनि प्रतीयमानतदभावस्य परेणापि स्वीकारात् तस्य चात्यन्ताभावान्यत्वे तद्देशकालावच्छिन्नवृत्तिकत्वे च मानाभावात् गौरवाच्च। प्रतियोगिकाले तत्सत्त्वेपि औपनिषददर्शनापरिशीलिनं पुरुषं प्रत्यावृतत्वस्वीकारादेवाप्रकाशोपपत्तेः। प्रतियोगिजनकत्वेन पराङ्गीकृतोऽभावोऽत्यन्ताभाव एव। अन्यथा तस्य विनाशित्वे गौरवात्। न चैवं प्रतियोगिमति तत्कालावच्छेदेन तदत्यन्ताभाव इति धीः गवादौ गोत्वाद्यभाव इति धीश्च प्रमात्वेन व्यवह्रियेतेति वाच्यम्; अत्यन्ताभावे हि अवच्छिन्नत्वानङ्गीकारादेव आद्या, आवृतत्वाङ्गीकारादेव द्वितीया धीर्न प्रमात्वेन व्यवह्रियते। त्वयापि गवादौ तन्नाशादिकाले गोत्वाद्यभावोऽङ्गीक्रियत इत्युक्तम्। विवृतमधिकमेतत्सूत्रमुक्तावलौ नः। **अधिकरणमिति**। अनवच्छिन्नाधिकरणतावदित्यर्थः। तेन तद्घटानवच्छेदकावच्छिन्नतदत्यन्ताभाववत्त्वमादाय न सिद्धसाधनम्। **न परमार्थसदिति**। मिथ्यातुच्छविलक्षणवृत्तिभेदप्रतियोगितानवच्छेदकत्वं साध्यम्। तेनाबाध्यानिष्ठभेदघटितात् सत्त्वव्यापकमिति पूर्वसाध्याद्भेदः।

**तावच्छेदकम्, ब्रह्मवृत्तित्वात्, असद्वैलक्षण्यवत्। परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठः, परमार्थसत्प्रतियोगिकत्वात्,**

---

हेत्वन्तरेण पूर्वसाधितसाधनेऽपि न क्षतिरिति तदेव वा साध्यम्। **भेद इति**। स्वप्रतियोग्यवृत्तिरित्यादिः। तेन परमार्थतदन्योभयभेदादौ[1] न बाधः। न च तत्रापि मिथ्याभूतत्वात् परमार्थनिष्ठत्वं नास्तीति व्यर्थमुक्तविशेषणमिति वाच्यम्; तथापि ब्रह्माभिन्ने परमार्थत्वनिषेधस्य प्रकृतानुमानफलस्यानुरोधेन तदावश्यकत्वादन्यथा, परमार्थनिष्ठत्वमात्रमिथ्यात्वेनैव ब्रह्मवृत्तिभेदे साध्यस्योपपाद्यतया प्रपञ्चवृत्तिभेदेऽपि तेनैव उक्तसाध्योपपत्त्या उक्तफलसिद्धेरुक्तविशेषणे दत्ते तु विनिगमकाभावाद्विशेषणीभूतस्य परमार्थत्वस्य प्रपञ्चेऽभावमादायापि साध्यं पर्यवस्यतीति ध्येयम्। **प्रतियोगिकत्वादिति**। न च परमते संयोगादौ घटत्वाभावादौ च व्यभिचार इति वाच्यम्; तस्य पक्षसमत्वात्परमार्थसन्निष्ठत्वेन हेतुना तत्र परमार्थप्रतियोगिकत्वाभावानुमानस्य वक्ष्यमाणतया हेत्वभावाच्च। अथैवं सप्रतियोगिकत्वस्यैव साधकत्वसम्भवेन परमार्थसदिति व्यर्थमिति चेन्न; तदभावे हि संयोगादेरभावस्य प्रतियोगितासु प्रतियोगितात्वरूपानुगतधर्माभावेन संयोगादिप्रतियोगिताया निवेशे संयोगादेरेव पक्षीकार्यतया तत्र साध्यसिद्धेः परमार्थ[2]निष्ठत्वामिथ्यात्वेनापि सम्भवात् ब्रह्मान्यस्यापरमार्थत्वालाभ स्स्यात्। सति च तस्मिन् विशेषणे सप्रतियोगिकत्वमभावनिष्ठमेव लभ्यते। मन्मते ह्यभाव एव परमार्थसत्प्रतियोगिकः, संयोगादेः ब्रह्मण्यनङ्गीकारात्तादात्म्यमपि तादृशं यद्यपि; तथाप्यभावीयप्रतियोगिताविशेषो निरूपकतासम्बन्धेन हेतुस्तद्विशेषणाल्लभ्यत इति न दोषः। यद्यपि परमार्थत्वावच्छिन्नप्रतियोगितायास्तत्वेन हेतुत्वे सिद्धसाधनम्, ब्रह्मत्वावच्छिन्नप्रतियोगिताया-

---

1 तेन्योभयभेदाभेदौ. 2 न परमार्थ.

**परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववत् । भेदत्वावच्छिन्नं, सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत्, अभावत्वाच्छुक्तिरूप्य-प्रतियोगिकाभाववत्। परमार्थसन्निष्ठो भेदो न परमार्थसत्प्रतियो-गिकः, परमार्थसदधिकरणत्वात्, शुक्तिरूप्यप्रतियोगिकभेदवत्। मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकम्, सकलमिथ्यावृत्ति-**

स्तत्त्वेन हेतुत्वे तु साधनवैकल्यम्; तथापि तयोरन्यतरत्वेन तद्बोध्यम्। यदि तु प्रतियोगितापदार्थमात्रेऽनुगतं प्रतियोगितात्वं स्वीक्रियते, तदा सप्रतियोगिकत्वस्यैव हेतुत्वे तात्पर्यम् । **परमार्थसत्त्वावच्छिन्नप्रति-योगिकाभाववदिति** । तादृशाभावश्च भेद एव, परमते परमार्थ-सत्त्वस्य मेयत्वादिवदत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् अलीकेऽपि-वृत्तिविषयत्वरूपस्य परमार्थस्य सत्त्वात्, मन्मतेऽपि मिथ्यात्वग्राहकमानेन वियत्वादे[1]रत्यन्ताभावप्रतियोगितावच्छेदकत्वासिद्धावपि मानाभावेन तस्य तदसिद्धेर्गुरुत्वाच्च तत्तद्धीव्यक्त्यपेक्षयेति ध्येयम् । **सद्विलक्षणेति** । सद्विलक्षणं यत् स्वप्रतियोगिस्वाधिकरणयोरन्यतरत् तत्सम्बन्धित्वं साध्यम्। सद्विलक्षण [2]वृत्तिप्रतियोगितानिरूपकत्वं सद्विलक्षणवृत्त्यधिकरणतानि-रूपकं चेत्येतयोरन्यतरत्वं पर्यवसितम् तेन स्वपदार्थाननुगमेऽपि न स्वरूपासिद्ध्यादि । **न परमार्थसत्प्रतियोगिक इति** । संयोगादेः पूर्ववत्पक्षसमत्वान्न व्यभिचारः । **परमार्थसदधिकरणकत्वादिति** । साधिकरणकत्वस्य हेतुत्वे तात्पर्यम् । यदि तु सर्वास्वधिकरणतासु अधिकरणतात्वन्नास्ति, तदा उक्तरीत्या अन्यतमत्वेनैव निरूपकतासम्ब-न्धेन हेतुता बोध्या। तच्च तावदधिकरणतामात्रविषयकतद्धीविषयत्वं ताव-दधिकरणताभिन्नभिन्नत्वेन हेतुत्वे तु दृष्टान्तीयाधिकरणताव्यक्तीतरांशवै-यर्थ्यम् । **सकलमिथ्यावृत्तित्वादिति** । स्वविशिष्टव्याप्यमिथ्यात्वक-त्वात् स्वावच्छिन्नाभाववद्वृत्तिमिथ्यात्वकं यद्यत्तद्भेदकूटवत्त्वादिति यावत्।

1 विषयत्वाभावादेः.  2 तद्विलक्षण.

**त्वात्, मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा; दृश्यत्ववत्। दृश्यत्वं परमार्थसद्वृत्ति, अभिधेयमात्रवृत्तित्वात्,**

---

**मिथ्यात्वं** मिथ्यात्वत्वम्। **व्यापकं** व्यापकतावच्छेदकम्। तेन मेयत्वादिरूपेण व्यापकत्वमादाय न सिद्धसाधनम्। **अत्यन्ताभावाप्रतियोगित्वादिति।** तादृशात्यन्ताभावप्रतियोगितानवच्छेदकत्वे तात्पर्यम्। नचात्यन्ताभावप्रतियोगितानवछेदकत्वस्यैव साधकत्वसम्भवेनान्यवैयर्थ्यमिति वाच्यम्; साधनवैकल्यापत्तेः। न च मेयत्वं ब्रह्मत्वं वा दृष्टान्तोऽस्त्विति वाच्यम्; मन्मते मेयत्वस्यापि तदभावात् ब्रह्मत्वस्यापि परमते घटादिनिष्ठोक्तात्यन्ताभावप्रतियोगितावच्छेदकत्वात्। स्वरूपसम्बन्धावच्छिन्नाहि प्रतियोगिता हेतौ साध्ये च निवेश्या। अन्यथा स्वरूपासिद्धिबाधयोरापत्तेः। यदि तु ब्रह्मत्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगितायामपि मानाभावात् परमतेऽपि न ब्रह्मत्वमवच्छेदकं तदाऽस्तु तदेव हेतु। न च स्वरूपासिद्धिः; मिथ्यात्वत्वस्य तत्तद्धीविषयत्वापेक्षया गुरुत्वेन उक्तावच्छेदकत्वाभावात्। न चैवं प्रपञ्चे मिथ्यात्वस्याभावेप्युक्तसाध्योपपत्तिरिति वाच्यम्। उक्तोभयान्यवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकं यद्विशिष्टव्यापकतावच्छेदकं तदन्यत्वस्य साध्यत्वात्। प्रपञ्चे मिथ्यात्वाभावे च मिथ्यात्वत्वसमनियतलघुधर्मस्यावच्छेदकत्वात्तस्य च मिथ्यात्वव्यापकतावच्छेदकत्वेन मिथ्यात्वत्वे साध्यानुपपत्तेरिति ध्येयम्। **दृश्यत्वं परमार्थसद्वृत्तीति।** दृश्यत्वं दृक्प्रतियोगिकत्वविशिष्टं व्यावहारिकं तादात्म्यम्। प्रपञ्चनिष्ठस्य ब्रह्मतादात्म्यस्य ब्रह्मण्यपि सत्त्वात् बाधः। अत आद्यम्। ब्रह्मणि ब्रह्मणः प्रातीतिकतादात्म्ये बाधादन्त्यं विशेषणम्। न च तयोर्ब्रह्मवृत्तित्वम्मिथ्येति साध्यसत्त्वान्न बाध इति वाच्यम्; तथाप्यनुमानफलस्य ब्रह्मान्यसर्वमिथ्यात्वासिद्धेस्तद्विशेषणफलत्वात् तदभावे परमार्थवृत्तित्वमिथ्यात्वेनैव साध्यसिद्ध्योक्तफलालाभात् स्वरूपासिद्धेश्च। **अभिधेयमात्रवृत्तित्वात्।** अवाच्यावृत्तित्वात्

**शुक्तिरूप्यत्ववत् । दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्यम्, दृश्येतरावृत्तिधर्मत्वात्, प्रातिभासिकत्ववत् । उभयसिद्धमसद्विलक्षणं मिथ्यात्वासमानाधिकरणधर्मानधिकरणम्, आधारत्वात्, शुक्तिरूप्यवत् । प्रतियोग्यवच्छिन्नो देशः, अत्यन्ताभावाश्रयः, आधा-**

[1]ब्रह्मावृत्तित्वादिति यावत् । पक्षभेदादाद्यानुमानाद्भेदः, ब्रह्मान्यवृत्तित्वविशिष्टत्वं वा हेतुः, रूप्यादिपदानां प्रत्येकाभिधेयवृत्तित्वानां तत्त्वेन हेतुत्वे वा तात्पर्यम् । एतेन शब्दार्थभेदाच्छक्तिरूपाभिधाया भेदात् सर्वाभिधेयसङ्ग्रहाभाव इत्यादि परास्तम् । **धर्मत्वादिति** । परमते गगनाद्यवृत्तिपदार्थे साध्यसामानाधिकरण्यघटितव्याप्त्यभावाद्धर्मेति । तदघटितव्याप्तेस्साध्यत्वे तु तन्नदेयम् । शुक्तिरूप्यादावंशतास्सिद्धसाधनात् **उभयसिद्धमिति** । उभयवादिसिद्धमित्यर्थः । उभयसिद्धं यदसत्तद्भिन्नत्वन पक्षत्वेऽपि स दोषो ब्रह्मणि बाधश्च, अबाध्यत्वादिधर्मसत्त्वात् । अतस्तन्न कृतम् । तथाचासद्भिन्नत्वेनोभयसिद्धं पक्षः, शुद्धं ब्रह्म न परसिद्धमिति न दोषः । इत्थं च **आधारत्वात्** इत्यस्य ब्रह्मप्रतियोगिकतादात्म्यानुयोगित्वादित्यर्थः । वस्तुतस्तु अबाध्यत्वादेर्ब्रह्मस्वरूपत्वात् भ[illegible]ब्रह्मण्यस्तीति हेतुर्यथाश्रुत एव, पक्षसमत्वेन ब्रह्मणि व्यभिचाराप्रसक्तेः । उक्तोभयसिद्धत्वं च सर्वदेशकालवृत्त्यत्यन्ताभावाप्रतियोगिकत्वेन [illegible][2]रूपं यद्यप्यप्रसिद्धम्; ब्रह्मणः पराप्रमितत्वात्, प्रपञ्चस्यापि तथा मदप्रमितत्वात्[3] शुक्तिरूप्यादेरुभाभ्यां तथा प्रमितत्वाभावात्, तथापि ब्रह्मप्रातीतिकतुच्छेभ्यो भिन्नत्वादिरूपं तद्ग्राह्यम् । यदि तु ब्रह्मणः पक्षसमत्वात् परमतेपि साध्याभाववत्त्वेनानिश्चय इत्यालोच्यते तदा ब्रह्मेति न देयम् । **प्रतियोग्यवच्छिन्न इति** । घटादिः घटत्वाद्यभावस्यानवच्छिन्नाधिकर-

1 ब्रह्मावृ　　2 संमतत्वादि.　　3 परप्रमितत्वात्.

**रत्वात्, कालवत्। आत्मत्वावच्छिन्नम्, परमार्थसत्त्वाधिकरण-प्रतियोगिकभेदत्वावच्छिन्नराहितम्, परमार्थसत्त्वात्, परमार्थसत्त्वा-वच्छिन्नवत्। परमार्थसति परमार्थसद्भेदाङ्गीकारवादिमतेऽपि सद्भेदो न परमार्थसत्त्ववन्निष्ठः, किन्तु घटत्वाद्यवच्छिन्ननिष्ठ**

णतावानित्यर्थः। तेन घटादेः स्वनाशकालाद्यवच्छेदेन घटत्वाद्यभाव-वत्त्वेऽपि न सिद्धसाधनम्। समवायादिसम्बन्धेन घटत्वादेरत्यन्ता-भावस्य दैशिकविशेषणतया अधिकरणत्वं साध्यम्। **कालवदिति।** घटादिभिन्नकालवदित्यर्थः। **किन्तु घटत्वावच्छिन्नेति।** न च पर-मार्थस[1]द्धटो नेत्यादिप्रतीतेः परमार्थसत्त्वोपहिते तद्भेदविषयकत्वान्नेदं युक्तमिति वाच्यम्; तस्य घटत्वाद्युपहितप्रतियोगिकभेदावगाहित्वेऽपि परमार्थत्वोपहितप्रतियोगिकभेदाविषयकत्वात्। न च परमार्थसत्त्वोप-हितनिष्ठां घटत्वाद्यवच्छिन्नां प्रतियोगितां विषयीकुर्वन्त्या परमार्थसत्त-त्त्वोपहितं नेति प्रतीत्या तदवगाहनमावश्यकमिति वाच्यम्; तादृश-प्रतीतेस्तार्किकसम्प्रदाया[2]सम्मतत्वात्। प्रतियोग्यंशे प्रकारतावच्छेदकता-पर्याप्त्यधिकरणमेव हि प्रतियोगितावच्छेदकतया भातीति तत्सम्मतम्। अतएव पर्वतवृत्तिधूमवन्निष्ठाभावप्रतियोगितावच्छेदकं न वह्नित्वमिति धीः पर्वतवृत्तित्वाविशेषितधर्मावच्छिन्नप्रतियोगिताकं भेदं नावगाहत इति व्यभिचारधीकालेपि तादृशधीसम्भवेन तस्या अनुमितिहेतुत्व खण्डयन्ति। अथवा आत्मत्वम्, परमार्थप्रतियोगिकभेदकूटान्तर्गतया कयापि व्यक्त्या न व्याप्यम्, परमार्थवृत्तित्वात्, परमार्थत्ववदित्यत्र तात्पर्यम्। परमार्थत्वे परमार्थप्रतियोगिकभेदत्वावच्छिन्नव्याप्यतासत्त्वेपि तत्तद्भेदव्यक्तित्वावच्छिन्नं प्रति व्याप्यता नास्ति, स्वप्रतियोगिनि परमार्थे तस्याभावादिति। परमार्थभेदवृत्त्युभयावृत्तिधर्मावच्छिन्नं प्रति या व्याप्यता तदभावरूपसाध्यं तत्रास्त्येव। आत्मान्यपरमार्थस्वीकारे च

1 सिद्धघ. 2 सम्मतत्वात्

**एव। शुक्तिरूप्यम्, मिथ्यात्वेन प्रपञ्चान्न भिद्यते, व्यवहारविषयत्वात्, ब्रह्मवत्। साध्यसत्त्वमत्र त्रेधा—स्वस्यामिथ्यात्वेनोभयोर्मिथ्यात्वेनोभयोरमिथ्यात्वेन वा। तत्रान्तिमपक्षस्यासम्भवात्पक्षे साध्यसिद्धिपर्यवसानं मध्यमपक्षेण। दृष्टान्ते तु**

---

तद्भेदव्यक्तिव्याप्यमतत्त्वमिति[1] तत्र तत्त्वाभावसाधनं परस्यानिष्टमिति ध्येयम्। **मिथ्यात्वेन प्रपञ्चान्न भिद्यत इति।** मिथ्यात्वहेतुकप्रपञ्चभेदवत्त्वस्य अभाववदित्यर्थः। उक्तभेदवत्त्वं च स्वविशेष्यिका या प्रपञ्चभेदव्याप्यमिथ्यात्वप्रमा तज्जन्यानुमितिविषयो यः प्रपञ्चभेदस्तद्वत्त्वम्। तद्धेतुकत्वस्य तत्प्रमाघटितत्वावश्यकत्वात्। न हि भवति निर्धूमो धूमेन वन्हिमानिति। यत्रोक्तभेदवत्त्वं स्थाप्यं स स्वपदार्थः। तथाच मिथ्यात्वव्यापकं यन्मिथ्यात्वसमानाधिकरण तत्त्वेन रूपेण प्रपञ्चभेदस्याभावः पर्यवसितसाध्यम्। स्वमते उक्तरूपविशिष्टस्य प्रपञ्चभेदस्याप्रसिद्धावपि घटत्वेन पटस्येव उक्तरूपेण प्रपञ्चभेदस्याभावो नाप्रसिद्धः। व्यवहारेत्याविवक्षितम्। **स्वस्येति।** यत्र साध्यं स्थाप्यं तस्येत्यर्थः। **उभयोरिति।** स्वस्य प्रपञ्चस्य चेत्यर्थः। **अन्तिमपक्षस्येति।** आद्यपक्षासम्भवेनेत्यादिः। तेनाद्यपक्षासम्भवानुक्त्या न न्यूनता। परमतेऽपि पक्षे मिथ्यात्वस्वीकारात् तत्राद्यान्त्यपक्षयोरसम्भवः। तयोस्सम्भवे तु प्रपञ्चाभिन्नेऽपि पक्षे मिथ्यात्वरूपविशेषणाभावात् उक्तविशिष्टरूपेण प्रपञ्चभेदाभावसम्भव इति भावः। **मध्यमेति।** मिथ्यात्वसमानाधिकरणप्रपञ्चभेदाश्रयेऽपि पक्षे उक्तविशिष्टरूपेण न तादृशभेदः। मिथ्यात्वव्यापकत्वरूपविशेषणस्य तदभावात्[2], प्रपञ्चस्सत्यः[3] पक्षो मिथ्येति स्वीकारे तूक्तविशिष्टरूपेण पक्षे प्रपञ्चभेदस्य सत्त्वान्न साध्यपर्यवसानम्। अतएव स्वस्य मिथ्यात्वं प्रपञ्चस्य सत्यत्वमिति पक्षः साध्य[4]-

---

[1] भारमत्वमिति　[2] तत्राभावात्.　[3] सत्य. तथाच सिद्धसाधनम्. इत्यधिकः पाठः.　[4] साध्यपर्यवसितमिथ्यात्वं प्रपञ्चस्य सत्त्वे च पर्यवसानात्. इत्यधिकपाठः.

**प्रथमपक्षेणेति विवेकः। विमतं मिथ्या, मोक्षहेतुज्ञानाविषयत्वे सत्यसदन्यत्वात्, शुक्तिरूप्यवत्। मोक्षहेतुज्ञानविषयत्वम् परमार्थसत्त्वव्यापकम्, परमार्थसत्त्वसमानाधिकरणत्वात्, पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्ववत्। एतत्पटात्यन्ताभावः एत-**

---

पर्यवसानानुपयुक्तत्वात् पूर्वं न विकल्पित इति भावः। **प्रथमेति।** दृष्टान्तस्योभयसम्मत्यपेक्षणे मन्मते अन्त्यपक्षस्यासम्भवात् उभयमतेऽपि मध्यपक्षासम्भवात् प्रथमपक्षेणैव तत्र साध्यसिद्धिः। दृष्टान्तस्य प्रतिवादिमात्रसम्मत्यपेक्षणे तु चरमपक्षेणापि तत्र सा सम्भवति। प्रथम इव चरमेऽपि मिथ्यात्वरूपविशेषणाभावात् उक्तरूपेणाभावस्य सम्भवादिति बोध्यम्। **परमार्थसत्त्वसमानाधिकरणत्वादिति।** न च परमार्थसत्त्वस्यैव तादात्म्येन हेतुत्त्वसम्भवादन्यांशवैय्यर्थ्यमिति वाच्यम्; तत्समानाधिकरणत्वनिष्ठव्याप्तेस्तत्त्वेनावच्छेदासम्भवात्। अस्तु वा तस्यैव हेतुत्वे तात्पर्यम्। न च स्वरूपासिद्धिरिति वाच्यत्; परमार्थसत्त्वस्याबाध्यत्वव्यापककिञ्चिद्बुद्धिविषयत्वरूपस्य पक्षीकृते मोक्षप्रयोजकत्वविशिष्टे स्वस्मिंस्तादात्म्यसत्त्वात्। **श्रुतितात्पर्यविषयत्वेति** श्रुतिनिष्ठशक्त्यधीनप्रमाविषयत्वेत्यर्थः। तादृशे ज्योतिष्टोमादिनिष्ठे 'सोमेन यजेत' इत्यादिश्रुतिजन्यधीविषयत्वे साध्यवैकल्यादाह— **पारमार्थिकत्वेनेति।** अबाध्यत्वव्यापकेति तदर्थः। स चोक्तविषयत्वविशेषणं, तादृशं च विषयत्वं परमते विश्वं सत्यमित्यादिश्रुतिजन्यधीविषयत्वम्। मन्मते तत्त्वमस्यादिश्रुतिजन्यधीविषयत्वमेव। पक्षदृष्टान्तयोरभेदेऽपि तत्त्वावच्छेदकभेदान्न दोषः; पक्षतावच्छेदकसामानाधिकरण्येनानुमितेरुद्देश्यत्वपक्षस्यापि प्रकृते वक्ष्यमाणत्वात्। पटान्तरप्रतियोगिकात्यन्ताभावे सिद्धसाधनात् **एतदिति** पक्षे दत्तम्। तन्त्वन्तरनिष्ठत्वस्य सिद्धत्वात्साध्ये **प्येतदिति।** पटान्तरप्रागभावे

**तन्तुनिष्ठः; एतत्पटानाद्यभावत्वात्, एतत्पटान्योन्याभाववत्। तन्तुनाशजन्यपटनाशस्य कदापि तन्तुवृत्तिता नास्तीति तत्र व्यभिचारवारणायानादिपदम्। यस्य पटस्याश्रयविभागेन नाशस्तदत्यन्ताभावस्य पक्षत्वेत्वनादिपदमनादेयमेव। अत्र चैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छिन्नस्य पक्षीकरणान्न सम्बन्धान्तरेणात्यन्ताभावमादाय अंशतस्सिद्धसाधनम्; पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्। समवायसम्बन्धावच्छिन्नो व्यधिकरणधर्मानवच्छिन्नश्च य एतत्पटात्यन्ताभावस्स एव वा पक्षः। तन्तुशब्देन च पटोपादानकारणमुक्तम्। तत्र च प्रागभावस्य सत्त्वान्न तेन व्यभिचारः। कार्यकारणयोरभेदेन सिद्धसाधनादिदूषणानि प्रागेव तत्त्वप्रदीपिकानुमानोपन्यासे निराकृतानि। यद्वा समवायसम्बन्धावच्छिन्नोऽयमेतत्पटात्यन्ता-**

---

व्यभिचाराद्धेतौ—**एतदिति। पटेति।** व्यक्तिविशेषपरिचायकम्, न तु हेतौ प्रविष्टम्। **पक्षत्वे त्विति।** तस्य पक्षत्वे हेतावपि तत्पट एव निवेश्यः; अन्यथा स्वरूपासिद्धेः। तथाच अनादीति व्यर्थत्वान्न देयमिति भावः। **उद्देश्यत्वादिति।** न चैवं पक्षे एतदिति व्यर्थमिति वाच्यम्; तद्व्यक्तिप्रतियोगिकात्यन्ताभावत्वेनैवास्मिन् कल्पे पक्षत्वेन, पटत्वेन निवेशाभावात्। **व्यधिकरणेति।** एतत्पटत्वान्येत्यर्थः। तेनोभयत्वाद्यवच्छिन्नात्यन्ताभावमादाय न सिद्धसाधनम्। ननु तत्पटप्रागभावः तत्तन्त्ववच्छिन्नचैतन्याविद्ययोरेव वर्तते न तु तत्तन्तौ, सिद्धान्ते तस्य तत्पटानुपादानत्वादिति तत्र तत्तन्तुनिष्ठत्वाभावाद्व्यभिचारः, तत्राह—**तन्तुशब्देनेति।** तत्तन्तुशब्देनेत्यर्थः। **पटोपादानेति** तत्पटोपादानेत्यर्थः। **प्रागेवेति।** ।चित्सुखाचार्यास्त्वित्यादिग्रन्थ इति शेषः। समवायान्यसम्बन्धेन तत्पटात्यन्ताभावे सिद्धसाधनादयमिति तत्परिचायकमाह—**समवायेति।**

**भावः, एतत्तन्तुनिष्ठः; एतत्पटप्रतियोगिकात्यन्ताभावत्वात्, सम्बन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववदिति विशिष्यानुमानम्। अव्याप्यवृत्तित्वानधिकरणत्वे सति उक्तपक्षतावच्छेदकवत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगि, अनात्मत्वात्, संयोगवत्। न च विश्वात्यन्ताभावे व्यभिचारः, तस्य अधिकरणस्वरूपत्वे अनात्मत्वहेतोरेवाभावात्, अतिरिक्तत्वे तस्य**

---

एतत्पटत्वान्यधर्मानवच्छिन्नप्रतियोगिताकेत्यस्याप्युपलक्षणम्। एतत्तन्तुनाशजन्यतत्पटनाशे व्यभिचाराद्धेतावत्यन्तेति। नाशानाश्य[1]पटव्यक्तिनिवेशे तु तन्न देयम्। वस्तुतस्तु अत्यन्ताभावे[2]त्वितरवैयर्थ्यम्, तत्तन्तुत्वात्यन्ताभावस्यापि पक्षसमत्वेन तत्राव्यभिचारात्। तथाचात्यन्ताभावत्वमेको हेतुः। तन्तुनाशानाश्यपटव्यक्त्यभावत्वमपरो बोध्यः। अव्याप्यवृत्तित्वमादाय सिद्धसाधनादिवारणाय सत्यन्तम्। **उक्तेति**। ब्रह्मप्रमान्याबाध्येत्यादिपरकीयाद्यानुमानीयेत्यर्थः। **स्वसमानाधिकरणेति**। सामानाधिकरण्यं प्रतियोगिता चेत्युभयसम्बन्धेन अत्यन्ताभावस्साध्यः, उक्तपक्षतावच्छेदकसमानाधि[3]करणप्रतियोगितावच्छेदकत्वं स्वाश्रयनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वं चेत्युभयसम्बन्धेनात्यन्ताभावस्साध्यमिति तु पर्यवसितम्। तेन स्वपदार्थस्य पक्षदृष्टान्तोभयसाधारणस्याभावेऽपि न बाधसाध्यवैकल्यादि, न वा उभयाभावादिप्रतियोगितामादाय सिद्धसाधनमिति ध्येयम्। **व्यभिचार इति**। तस्य ब्रह्मस्वरूपत्वेनाधिकरणाप्रसिद्ध्या नोक्तसाध्यम्, विश्वाभावत्वविशिष्टरूपेण तु हेतुसत्त्वमिति भाव। शुद्धब्रह्मणि व्यभिचारो विश्वाभावत्वोपहिते वा, नाद्यः; तत्र हेत्वभावात्। नान्त्यः, तत्र साध्यसत्त्वादित्याशयेनाह — **तस्येति**। **अभावादिति**। एवंचाभावमात्रस्य ब्रह्मणि व्यभि-

---

1 तादृशनाश्य. 2 अत्यन्ताभावत्वेतर. 3 करणधर्मे स्वप्रति.

**मिथ्यात्वेनात्यन्ताभावप्रतियोगितया साध्यस्यैव सत्त्वात्। न च अत्यन्ताभावस्यात्यन्ताभावे तत्प्रतियोगित्वलक्षणमिथ्यात्वासिद्धिरिति वाच्यम्; अभावेऽभावप्रतियोगित्वस्य भावगताभावप्रतियोगित्वाविरोधित्वात्। प्रागभावस्यात्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगित्वस्य घटादौ सर्वसिद्धत्वात्। उपपादितं चैतत् मिथ्यात्वमिथ्यात्वे। अत्र चाव्याप्यवृत्तित्वानाधिकरणशब्देन एकदेशावच्छेदेनाविद्यमानत्वं पक्षविशेषणं विवक्षितम्। एतेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोक्तौ बाधः, अवयववृत्तित्वानधिकरणत्वोक्तौ घटादीनामपक्षत्वापत्तिरिति दूषणद्वयमपास्तम्। अनात्मत्वहेतुस्तु जडत्वहेतुव्याख्यानेनैव व्याख्यातः। अतएव नित्यद्रव्यान्यदव्याप्यवृत्तित्वानाधिकरणमुक्त-**

---

चारित्वादात्मत्वप्रतियोगित्वं निशेषगनिति द्रष्टव्यम्। **मिथ्यात्वेन।** ज्ञाननिवर्त्यत्वेन। **अत्यन्ताभावप्रतियोगितया।** स्वाधिकरणब्रह्मनिष्ठात्यन्ताभावप्रतियोगितया। नन्वेवं विश्वस्य सत्यतापत्तिः, विरुद्धयोरेकनिषेधे अपरस्य [illegible]दिति शङ्कते **न चेति। अत्यन्ताभाव इति।** बोध्ये इति शेषः। **मिथ्यात्वासिद्धिरिति।** निषेधस्यात्यन्ताभावस्य प्रतियोगिनि मिथ्यात्वासिद्धिरित्यर्थः। **भावगतेति।** प्रतियोगिगतेत्यर्थः। **मिथ्यात्व इति।** तत्र हि विरुद्धयोरेकमिथ्यात्वेऽपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेदित्यादिग्रन्थे मिथ्यात्वस्य मिथ्यात्वप्रतिपादनपर इत्यर्थः। **एकदेशावच्छेदेनेति।** दैशिकसम्बन्धावच्छिन्ना किञ्चिदवच्छिन्ना वृत्तिर्यस्य तदन्यत्वं विवक्षितमित्यर्थः। घटादेः कपालाद्यवच्छेदेन कालवृत्तित्वादाद्यमवच्छिन्नान्तम्। **बाध इति।** उक्तप्रतियोगित्वाभाववति उक्तप्रतियोगित्वसाधने बाध इत्यर्थः। **अपास्तमिति।** न च कपाले अग्रे घटो न तु मूले, तन्तुषु दशान्यभागे पटो न तु दशास्विति प्रतीतेः घटादे-

**पक्षतावच्छेदकवत्, केवलान्वय्यत्यन्ताभावप्रतियोगि, पदार्थत्वात्, नित्यद्रव्यवदित्यपि साधु। दृष्टान्तश्चायं पररीत्या। स्वमते तु**

---

देशा[1]वच्छिन्नवृत्तित्वस्य उक्तरूपस्य सत्त्वादयुक्तमेतदिति वाच्यम्; समग्रमिदं कपालद्वयम्, घटस्समग्रः, एते तन्तवः, पटः कश्चिदप्यत्र, कपालादेरंशो न घटाद्यन्य इति प्रतीत्या अवच्छिन्नवृत्तिकत्वाभावसिद्ध्योक्तप्रतीतेरसिद्धेः, कपालाद्याधेयत्वविषयकतया उक्तप्रतीतेर्मन्मते भ्रमत्वाच्च। न चैवमपि कपालादौ स्वनाशकालावच्छेदेन घटादिसमवायाभावादन्यकालावच्छेदेनैव तत्समवायात् घटादीनामपक्षतापत्तेस्तादवस्थ्यमिति वाच्यम्; प्रपञ्चसत्त्वमते ध्वंसप्रागभावाभ्यामेव घटादिनाशकाले कपालादौ घटादिकं नास्तीति बुद्ध्युपपत्तेः, तत्र तदत्यन्ताभावसत्त्वे मानाभावात्, घटत्वावच्छिन्नव्यधिकरणध्वंसादिविषयकत्वस्वीकारादेव घटादिमति किञ्चिद्घटादिध्वंसादिकमादाय तादृशप्रतीत्यापत्त्यभावात्। एतेन नष्टकपालादौ घटादि नास्तीति धीरपि व्याख्याता; प्रतियोगितासम्बन्धेनेव विशेषणतासम्बन्धेन नष्टकपालेऽपि घटध्वंससत्त्वसम्भवात्। अत्यन्ताभावानवगाहितत्प्रतीत्या घटादेरवच्छिन्नवृत्तिकत्वासिद्धेः। **केवलान्वयीति**। वृत्तिमदत्यन्ताभावाप्रतियोगीत्यर्थः। गगने परमते साध्यवैकल्यवारणाय वृत्तिमदिति। गगनादेः परमते स्वाभा[2]वाभावत्वस्वीकारे तु तन्न देयम्। अधिष्ठानचिद्रूपात्यन्ताभावस्यात्यन्ताभावाप्रतियोगित्वात् तत्प्रतियोगित्वमनात्ममात्रेऽस्तीति बोध्यम्। **पदार्थत्वादिति**। ब्रह्माविषयकविषयत्वादित्यर्थः। ब्रह्मणि व्यभिचाराद्विशेषणम्। **स्वमते त्विति**। स्वमते आकाशादेर्वृत्तिमत्त्वस्वीकारात् साध्यस्य तत्रोक्तानुमानात्पूर्वमसिद्धत्वात्स न दृष्टान्तः। तथाच नित्य-

---

[1] दशा. [2] स्वाभाववत्व. स्वाववत्त्वास्वी.

**शुक्तिरूप्यवदित्येव । न च स्वरूपेणात्यन्ताभावप्रतियोगित्वेऽत्यन्तासत्त्वापातः, तद्वैलक्षण्यप्रयोजकाभावादिति वाच्यम्; उत्पत्तिनिवृत्त्योरन्यतरप्रतियोगित्वेन परिहारात् । आत्मत्वावच्छिन्नधर्मिको भेदो न परमार्थसत्प्रतियोगिकः, आत्माप्रतियोगित्वात्, शुक्तिरूप्यप्रतियोगिकभेदवत् । न च घटपटसंयोगे व्यभिचारः, हेतुमत्तया निर्णीते अङ्कुरादाविव साध्यसन्देहस्यादोषत्वात् । एवमन्येऽपि प्रयोगा यथोचितमारचनीया विपश्चिद्भिरिति दिक् ॥**

---

द्रव्यान्यदिति न देयमेवेति भावः । **इत्येवेति** । न च शुक्तिरूप्यात्यन्ताभावस्य शुक्त्यवच्छिन्नचिदात्मकतदधिष्ठानरूपत्वात्तस्य च घटादावत्यन्ताभावप्रतीतेर्न केवलान्वयित्वमिति वाच्यम्; अवच्छिन्नचितोऽधिष्ठानत्वेन शुद्धचितोऽप्यधिष्ठानत्वात् तस्यापि तदत्यन्ताभाववत्वेन उक्तसाध्यस्य शुक्तिरूप्ये सत्त्वात् । शुक्तिरूप्यादेर्मूलाविद्योपादानकत्वपक्षे उक्तशङ्काविरहाच्च । **स्वरूपेणेति** । उक्तरूपेणेति शेषः । **तद्वैलक्षण्येति** । अत्यन्तासद्वैलक्षण्येत्यर्थः । **परिहारात्** । असद्वैलक्षण्यसिद्धेः, निवृत्तिप्रतियोगित्वमात्रस्यासद्वैलक्षण्य[1]साधकत्वे भावाद्वैतमते पञ्चमप्रकाराविद्यानिवृत्तेस्तदसिद्धिः उत्पत्तिप्रतियोगित्वमनादौ न तत्साधकम् । अतोऽन्यतरविशेषः । **आत्माप्रतियोगित्वादिति** । न चाप्रतियोगित्वमात्रस्य ब्रह्मनिष्ठस्य साधकत्वसम्भवादात्मेति व्यर्थमितिवाच्यम्; ब्रह्मणो दृश्याभावरूपत्वेन सप्रतियोगिकत्वात् । तन्मिथ्यात्वस्य पूर्वमसिद्धत्वात्परं प्रति दृष्टान्तत्वासम्भवात्.[2] स्वनिष्ठप्रतियोगित्वानिरूपकत्वसम्बन्धेन आत्मन एव हेतुत्वे तात्पर्यसम्भवाच्च । **अदोषत्वादिति** । साध्याभाववत्त्वांशे संशयात्मकव्यभिचारज्ञानस्य व्याप्तिधीविरोधित्वे सन्दिग्धसाध्यपक्ष-

[1] द्वैलक्षण्या　　[2] पर प्रति तस्य हेतुत्वासम्भवात्. पा.

हेतवोऽभीष्टसिद्ध्यर्थं सम्यञ्चो बहवश्च नः ।
अल्पाः परस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम् ॥
अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्नात् ।
प्रवक्ष्यते दोषगणः परेषां न खेदनीयन्तु मनोऽधुनैव ॥

इत्यद्वैतसिद्धौ विश्वमिथ्यात्वे विशेषतोऽनुमानानि.

---

## अथ विश्वमिथ्यात्वस्यागमबाधोद्धारः.

नन्वस्तु शब्दबाधः, तथाहि—"विश्वं सत्यं, यच्चिकेत सत्यमित्तन्न मोघं, याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः" इत्यादिश्रुतिभिः, असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इत्यादिस्मृतिभिः, 'नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिसूत्रैश्च विश्वस्य सत्यत्वप्रतिपादनादिति चेन्न; श्रुतेस्तत्परत्वाभावात् । तथा हि, "विश्वं सत्यम्मघवाना युवोरिदापश्च न प्रमिणन्ति व्रतं वाम् । अच्छेन्द्रा ब्रह्मणस्पती हविर्नो अन्नं युजेव वाजिना जिगातम्" इति ऋक्संहितादिती-

---

कानुमानमात्रलोपापत्तेः. नव्यैरपि व्याप्तिग्राहकाभावसहकृतस्यैव तादृशसंशयस्य तद्विरोधित्वस्वीकारात् प्रकृते चानुकूलतर्काणां भूयसां वक्ष्यमाणत्वात् न स विरोधीति भावः ॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय विशेषा सत्यतानुमा ॥

इति विश्वमिथ्यात्वे विशेषतोनुमानानि.

---

जगदाहुरिति । सत्यभिन्नं जगदिति मतमासुरत्वेनोक्तम् ।

**याष्टकवाक्यस्यायमर्थः**—हे इन्द्राब्रह्मणस्पती! मघवाना मघवानौ मघमिति धननाम, धनवन्तौ मखवन्ताविति वा, विश्वं सर्वं सत्यं कर्म सद्भूतत्वात् फलस्यावश्यं भावित्वाद्वा, तादृशं कर्म युवोरित् युवयोः इत् इत्थमवधारणे वा । युवामेवोद्दिश्य सर्वाणि कर्माणि अनुष्ठेयानीत्यर्थः। आपो व्यापनशीला देवताः, चनेत्येतत्पदद्वयसमुदायः, ऐकपद्यन्त्वध्यापकसम्प्रदायसिद्धम् । वां युवयोर्व्रतं सङ्कल्पं कर्म वा न प्रमिणन्ति न हिंसन्ति। 'मीङ् हिंसायाम्' क्र्यादिकः । किन्त्वनुमोदन्त इति यावत्, नोऽस्माकं हविर्दध्यादिकमन्नं च पुरोडाशादिकं च अच्छ अभिलक्ष्य वाजिना वेगवन्तावश्वाविव युजा युक्तौ सन्तौ जिगातं देवयजनमागच्छतम् । (जिगातिर्गतिकर्मा, जौहोत्यादिकः) अन्नं घासं प्रति अश्वाविवेति वा । यद्वा हे इन्द्राब्रह्मणस्पती! विश्वं सत्त्वेन

---

अतो जगत्सत्यमिति शिष्टमतमित्यभिमानः । **कर्म सद्भूतत्वादिति** । "यो वै धर्मस्सत्यं वै तत्तस्माद्धर्मं वदन्तमाहुस्सत्यं वदति" इति श्रुतौ धर्मस्य सत्यशब्दार्थत्वोक्तेः "ऋतं पिबन्तौ" इत्यादिश्रुतौ सत्यशब्दसमानार्थऋतशब्देन कर्मफलमात्रोक्तेश्च सत्यशब्देन प्रकृते धर्मरूपं कर्मोक्तम् । सतो ब्रह्मणो भव इति व्युत्पत्तेरिति भावः । अद्वैतश्रुतेरिव विश्वं सत्यमित्यादिश्रुतेरपि स्वार्थतात्पर्यग्राहकमस्ति । "आपश्च न प्रमिणन्ति" इत्यस्य वाक्यशेषस्य व्यापनशीला देवा अपि प्रमाविषयीकुर्वन्तीत्यर्थकत्वेन विश्वसत्यतायाः प्रमाविषयत्वरूपोपपत्तिबोधकत्वादिति पश्चात्परो वक्ष्यति, तदपि निरवकाशमित्याशयेन चनेत्येतत्पदद्वयतया व्याचष्टे—**चनेत्येतदिति** । यत्तु चनशब्दस्याखण्डस्याव्ययेषु पाठादेकपदत्वेन माधवीयभाष्ये वाक्यान्तरे व्याख्यातत्वात्, "नेह नानास्ति किञ्चन" इत्यादौ त्वयापि तथा स्वीकाराच्च, पदद्वयत्वेन व्याख्या न युक्तेति, तत्तुच्छम्; क्वचिदेकपदत्वेन व्याख्यातत्वेऽपि सर्वत्र

परिदृश्यमानं जगत्, युवयोरित् युवयोरेव युवाभ्यामेव सृष्टम्। अथवा—युवयोरेव विश्वं सर्वं स्तोत्रं सत्यं यथार्थम्। यद्यद्गुणजातं स्तुत्या प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न त्वारोपितमित्यर्थः। आपो व्यापनशीला देवताः, अबुपलक्षितानि पञ्चभूतानि वा। युवयोर्व्रतं जगदुत्पादनाख्यं कर्म न हिंसन्ति इत्थं महानुभावौ युवां जिगातम्। शेषं पूर्ववद्व्याख्येयम्। तथाच स्तुतिपरतया नास्य विश्वसत्यत्वे तात्पर्यम्। 'शाक्मना शाको अरुणस्सुवर्ण आयो महश्शूरस्सनादनीलः। यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता' इत्यस्याप्यष्टमाष्टकस्थस्येन्द्रस्तुतिपरतया न विश्वसत्यत्वे तात्पर्यम्। तथाहि—शाक्मना शाकैव शाक्मा तेन शाक्मना बलेन। शाकः शक्तः, स्वशक्त्यैव सर्वं कर्तुं शक्त इत्यर्थः। न हीन्द्रस्य सहायान्तरापेक्षाऽस्ति, इन्द्रत्वादेव। अरुणः अरुणवर्णः कश्चिच्छोभनवर्णः पक्षी

---

तथा व्याख्याने मानाभावात्। पदद्वयत्वेन व्याख्यातयोरपि बहुस्थलेष्वध्ययनसम्प्रदायसिद्धस्यैकपदस्य दर्शनात्। तथाहि—द्वितीयाष्टकप्रथमाध्यायीयैकादशवर्गीयायां षष्ठ्यां चतुर्थ्यामृचि "ददाति मह्यं यादुरि" इत्यत्र यादुरीत्यस्याध्ययनसम्प्रदायसिद्धे ऐकपद्येऽपि दुरी आदरवती या मह्यन्ददातीति पदभेदेन माधवीयभाष्ये व्याख्यातम्। एवं—न हि देवो न मर्त्यो महस्तव क्रतुं परः। मरुद्भिरग्न आगहि" इत्यादौ ऐकपद्येनाधीयमानस्यापि नहीत्यादर्नैवेति पदभेदेन व्याख्यातम्। वामनसूक्ते सलिलमित्यस्यैकपद्येन पठ्यमानानामपि सकारलिकारलकाराणां परमात्मजीवतदैक्यपरतया पदभेदेन श्रुत्यन्तरप्रमाणोपन्यासपूर्वकं व्याख्यानं माधवीयभाष्ये कृतम्। "अरुणो मासकृद्वृक" इत्यत्र अरुणो मा इत्यस्य पृथक्पदत्वेन पठ्यमानस्यापि मासकृदित्येकपदत्वेन निरुक्तकारैर्व्याख्यातम्। न त्वारोपितमिति। न प्रातीतिकमित्यर्थः।

आगच्छतीत्यध्याहारः ; उपसर्गश्रुतेः। यो महो महान्, शूरो विक्रान्तः सनात्पुराणः अनीलोऽनीडः, नीडस्याकर्ता। न हीन्द्रो अग्निवत्कुत्रचिदपि यज्ञे वृक्षे निकेतनं करोति । एवं सुपर्ण इत्यादिरूपकेण इन्द्रमाह । स इन्द्र इदमिदानीं कर्तव्यमिति यच्चिकेत जानाति तत्सत्यमित्सत्यमेव । न मोघं न व्यर्थम् । स स्पार्हं स्पृहणीयं वसु निवासार्हं धनं जेता जयति शत्रुभ्यस्सकाशात् । उत अपि दाता ददाति च स्तोतृभ्यः । जेता दातेति तृजन्तेन 'न लोक' इत्यादिना षष्ठीप्रतिषेधः । एवमेवान्यदपि सत्यत्वप्रतिपादकमुन्नेयम् । 'याथातथ्यतोऽर्थान् व्यदधात्' इत्यपि वाक्यं न प्रपञ्चसत्यत्वे प्रमाणम् । तस्य पूर्वसृष्टप्रकारेण सर्जन-

---

**आगच्छतीति** । न चाभिव्याप्त्यर्थकत्वसम्भवादध्याहारो न युक्त इति वाच्यम्; अभिव्याप्तेः कर्मालाभेन साकाङ्क्षतापत्तेः । न च यच्चिकेत तदभिव्याप्य तत्सत्यमेव ज्ञेयं सर्वमित्यर्थ इति वाच्यम्; यद्योगप्राथम्यबलादेरभिव्याप्तिलाभात् "न तज्जलं यत्र सुचारुपङ्कजम्" इत्यादिवदाङ्शब्दानपेक्षणात् । स्पार्हं वसु अभिव्याप्य जेता दातेत्यर्थस्तु न सम्भवति, आसत्त्यभावात् । **याथातथ्यतोऽर्थान्व्यदधादिति** । यद्यपि "याथातथ्यतोऽर्थान्" इतीशावास्योपनिषदि पठ्यते, दूष्यपरग्रन्थेऽपि तथैव पाठो दृश्यते, तथापि श्रुत्यन्तरस्थयथातथार्थानित्यादिकमेवाविशेषाद्गृहीतम् । **पूर्वसृष्टेति** । ननु "यथार्थं तु यथातथम्" इत्यव्ययवर्गेऽमरोक्तेर्याथातथ्यशब्दस्य स्वार्थिकतद्धितान्तस्य सत्यार्थकत्वमेवोचितमिति चेत्, न; तथ्यशब्दस्यपि [1]सत्यार्थकत्वेन याथेत्यस्य त्वन्मते वैयर्थ्यापत्तिः;[2] "कविर्मनीषी परिभूस्स्वयंभूः" इति पूर्वभागस्थकव्यादिपदानां क्रान्तदर्शित्वादिविशिष्टरूपार्थानां त्वन्मते वाक्यार्था-

---

[1] सत्यार्थकत्व. [2] र्थ्यापत्तेः.

**मर्थः । न तु जगत्सत्यत्वं जगत्सर्जनगतसत्यत्वं वा ।**

---

नुपयोगात् । मन्मते तु—यतः क्रान्तमतीतं सर्वं दृष्टवान्, यतश्च मनीषी मनसा ईष्टे ऊहापोहकुशलः, यतश्च पूर्वसृष्टविरुद्धमिच्छतामसुराणां परिभवसमर्थः, यतश्च स्वयमन्यनैरपेक्ष्येण पूर्वसृष्टप्रकारेण जगद्भावनसमर्थः, ततो हेतोर्याथातथ्येन पूर्वं यथा तथा व्यदधादित्यर्थ उपपद्येततराम् । वस्तुतो न प्रत्ययस्स्वार्थो वैयर्थ्यात्, किन्तु यथा-तथाशब्दस्य यादृशतादृशार्थकतया तद्भावार्थकः, पञ्चम्यर्थस्तसिश्च ल्यब्लोपे, तथाच यादृश तादृशभावं प्रतिसन्धाय व्यदधादित्यर्थः । त्वन्मते तु प्रत्ययोऽपि व्यर्थ । यथातथार्थानित्यादिवाक्येऽपि त्वन्मते यथाशब्दो व्यर्थः, तथाशब्दस्यापि सत्यार्थकत्वात् । अतएव तथागत-शब्दस्य बौद्धबोधकस्य सत्यज्ञानार्थकत्वममरटीकादावुक्तम् । 'धाता यथापूर्वमकल्पयत्' इति श्रुत्येकवाक्यतया मदीयार्थ एव युक्तः । किञ्च यथाशब्दस्य योग्यतावीप्सासादृश्यपदार्थानतिवृत्त्यर्थकत्वेन शाब्दिकोक्तत्वात् प्रकृते च अनतिक्रमरूपपदार्थानतिवृत्त्यर्थकत्वसम्भवात् त्वन्मतरीत्या तादात्म्येन तथा अनति[1]क्रमोक्तौ तथ्यतोऽर्थानित्यनेनैव विवक्षितार्थसिद्ध्या यथेत्यस्य वैयर्थ्यात् । उपादानतया[2] तथ्यानतिक्रमोक्त्या सत्योपादानकान्सर्वानर्थान् व्यदधादित्यर्थलाभेन उपादानसत्यत्वाज्जगत्सत्यं भाति न तु वस्तुतस्सत्यमिति श्रुतितात्पर्यलाभात्त्वन्मतविरुद्धमेवेदं वाक्यमित्याशयेनाह—**न जगत्सत्यत्वमिति** । न च त्वन्मतेऽपि तथ्यत इत्यनेनैव तथ्यहेतुलाभसम्भवेन याथेति व्यर्थमिति वाच्यम्; निमित्तहेतुभ्रान्तिनिरासाय कार्यतादात्म्याश्रयहेतुलाभार्थकत्वेन तद्-वैयर्थ्यात् । यत्तु परिभावयतीति परिभूरिति व्याख्यानं, तत्परिभवतेस्स-कर्मकत्वाज्ञानात् । सकर्मकत्वं तु स्पष्टम् । 'परिभूतस्स नागरैः' इत्यादि-

---

1 तथ्यानति. 2 उपादानयाथा.

**यत्र च स्तुत्यादिपरत्वं नास्ति, तत्रापि प्रत्यक्षसिद्धानुवादकतया 'अग्निर्हिमस्य भेषजम्' इत्यादिवाक्यवन्न तत्परत्वम्। न च त्वन्मते सर्वत्र ब्रह्मसत्त्वस्यैव स्फुरणात्तदतिरिक्तस्य कालत्रयाबाध्यत्वरूपस्य घटादिसत्त्वस्य प्रत्यक्षेणाप्राप्तेस्तद्बोधकत्वेन श्रुतेर्नानुवादकत्वमिति वाच्यम्; इतरसत्त्वबाधपुरस्सरत्वाद्ब्रह्मसत्त्वस्फुरणाभ्युपगमस्य तत्रैव सत्यादिपदप्रवृत्तिस्वीकारेण तदतिरिक्तविश्वसत्यत्वस्य शाब्दबोधाविषयत्वात्तदादायानुवादकत्वापरिहाहारात्। अथ 'पृथिवी इतरभिन्ना, न हिंस्यात्सर्वा भूतानी'त्यादौ घटादावेकदेशे प्रत्यक्षेण, ब्राह्मणादावेकदेशे वाक्यान्तरेण, विधेयसिद्धावपि सर्वत्रासिद्धत्वाद्यथा नानुवादकत्वं, तथा विश्वमात्रसत्यत्वस्य प्रत्यक्षेणाप्राप्तत्वान्नानुवादकत्वमिति मन्यसे, मैवम्; दृष्टान्ते हि पृथिवीत्वं हिंसात्वं चैकोऽनुगतो धर्म इति**

---

प्रयोगात्। ननूक्तवाक्येषु स्तुत्यादिपरत्वेऽपि विश्वसत्यताया देवताधिकरणन्यायेन सिद्धिरस्तु, वाक्यान्तरस्य च विश्वसत्यताबोधकस्य स्तुत्यादिपरत्वाभावस्य सम्भावितत्वात्तत्सिद्धिरस्तु, तत्राह—**यत्र चेति**। तत्रापीत्यपिना उक्तवाक्येष्विति समुच्चीयते। **अनुवादकतये**त्युपलक्षणम्। अद्वैत[1] श्रुत्यनुमानादिविरुद्धार्थकतयेत्यपि बोध्यम्। **तत्परत्वमिति**। तत्प्रमापकत्वमित्यर्थः। मानान्तरेण प्राप्ते बाधिते चान्यपरत्वस्य देवताधिकरणेनापि प्रमापक[2]त्वाव्यवस्थापनात्, अप्राप्त एव च श्रुतितात्पर्यान्न तत्सिद्धिरिति भावः। एतेन यद्यपीशकृतजगदनुवादेन न सत्यत्वविधिस्सम्भवति, अनुमान[3]मात्रेण जगत ईशकृतत्वासिद्ध्याऽनुवादायोगात्तस्यापि विधाने वाक्यभेदापत्तिः; तथापि देवताधिकरणन्यायात्सत्यकामादिवाक्यात्सत्यत्वविशिष्टेशस्येव याश्चिकेतेत्यादि-

---

[1] द्वैत.  [2] देवताधिकरणेदेवताप्रमापक.  [3] अनुवाद.

**तदवच्छेदेन विधेयस्याप्राप्तत्वेन तत्र नानुवादकत्वं युक्तम्, इह तु विश्वत्वन्नाम नैको धर्मोस्ति । किन्तु विश्वशब्दस्सर्वनामत्वात्तेन तेन रूपेण घटपटादीनामुपस्थापकः । तेषु च प्रत्येकं सत्त्वं**

---

वाक्येऽपि सत्यत्वविशिष्टजगत्स्रष्टृत्वस्येशे सिद्धिरित्यपास्तम् । **सर्वनामत्वादिति ।** [1]बुद्धिविषयविशिष्टसर्वशक्तत्वादित्यर्थः । तथाच यथा तथादेर्बुद्धिविषयविशिष्टशक्तत्वेऽपि घटत्वादिविशेषरूपेण शाब्दानुभवजनकत्वम्, अन्यथा तेन रूपेण संशयनिवृत्त्याद्यनुपपत्ते, तथा विश्वादिपदानामिति भावः । एतेन जगदादिशब्दवद्विश्वशब्दस्य सर्ववृत्तिधर्मप्रकारेण बोधकत्वमित्यपास्तम् । यथा हि सर्वशब्दस्य पुत्रत्वपशुत्वादिविशेषरूपेण बोधकत्वम्, अतएव सर्वेभ्यो दर्शपूर्णमासावित्यादिना तादृशरूपावच्छिन्नसाधनताबोधनात्तादृशरूपेणैव कामनया दर्शपूर्णमासानुष्ठानं, विधिबोध्यतावच्छेदकरूपेणैव हि कामनयाऽनुष्ठितं कर्म फलाय भवति । अत एव येनयेन रूपेण पुत्रत्वादिना कर्मान्तरफलमुपदिष्टम्, तेनतेन रूपेणैवोपहितं दर्शपूर्णमासयोः फलम् न त्वन्यरूपेणेति सिद्धान्तः । यत्तु—'हिंसात्वावच्छेदेन न किञ्चिद्विधीयते किन्तु भूतेषु हिंसाभाव इति हिंसात्वानुगमोक्तिर्व्यर्था' इति, तत्तुच्छम्; पृथिवीत्वावच्छेदेन इतरभिन्नत्वस्येव भूतहिंसात्वावच्छेदेन बलवदनिष्टसाधनत्वस्याप्राप्तत्वेन विधेयत्वात् । भूतेषु हिंसाभावो विधीयत इति तु स्वमौढ्यप्रकटनम्, अज्ञातज्ञाप्यत्वरूपविधेयत्वस्य भूतहिंसानिष्ठे बलवदनिष्टसाधनत्व एव वाच्यत्वात्, भूतनिष्ठस्य हिंसाभावस्य मानान्तरज्ञातत्वात्, भूतोद्देशेन हिंसाभावविधायकत्वस्योक्तवाक्ये केनाप्यस्वीकाराच्च । **तेषु च प्रत्येकमिति ।** न च प्रत्यक्षेण घटादिषु घटत्वादिना सत्त्वे गृहीतेऽपि परमाण्वादौ तत्त्वेन सत्त्वं न गृहीतमित्यगृहीत-

---

[1] विधि.

**गृहीतमेवेति कथं नानुवादकत्वम्, प्रकारवैलक्षण्याभावात्। न चैकशाखास्थविधिवाक्यैकार्थशाखान्तरस्थविधिवाक्यस्य पुरुषान्तरं प्रतीव येन पुंसा वादिविप्रतिपत्त्यादिना घटादिसत्ता प्रत्यक्षेण न निर्णीता तं प्रत्यर्थवत्त्वेन नानुवादकत्वमिति वाच्यम्;**

---

ग्राहित्वान्नानुवादकत्वमिति वाच्यम्; घटत्वाद्यवच्छेदेन प्रत्यक्षाभासस्येव परमाणुत्वाद्यवच्छेदेन लिङ्गाभासादेस्सत्त्वग्राहकत्वात्। न हि परमाण्वादि सदिति लोको न जानाति। मन्मते सर्वप्रत्ययवेद्य इति मण्डनोक्तेः 'अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः। अक्ष्यादीनाम्' इति वार्तिकोक्तेश्च धीमात्रस्य स्वविषयब्रह्मसत्त्वावगाहित्वस्वीकाराच्च। **एकशाखास्थेति**। एकवेदीयैकशाखास्थेत्यर्थः। **एकार्थेति**। समानार्थेत्यर्थः। एकवेदीयासु नानाशाखासु पठ्यमानानां 'अग्निहोत्रं जुहोति' इत्यादीनां समानार्थकवाक्यानां पुरुषभेदं प्रति प्रवृत्तत्वाद्यथा नानुवादकता, तथा विश्वसत्त्वग्राहकयोः प्रत्यक्षश्रुत्योरित्यर्थः। पुनःश्रुतिरूपाभ्यासादिभिश्शाखाभेदेनोक्तानां कर्मणां भेद इति प्राप्ते, अभ्यासादीनां स्ववाक्योक्तकर्मपरत्वमात्रज्ञापकत्वाद्विहितविधानायोगादेव कर्मभेदकत्वम्। भिन्नशाखास्थवाक्यानां तु स्वस्वाध्येतृपुरुषान्प्रति एकस्यैव कर्मणोऽज्ञातज्ञाप्यत्वरूपविधेयत्वसम्भवान्न तद्बोध्यकर्मभेदः[1]। एकवेदस्था एका शाखा अध्येतव्येति हि शास्त्रार्थः। 'अध्वर्युं वृणीते' इत्यादावेकत्वस्येव 'स्वाध्यायोऽध्येतव्यः' इत्यादावपि स्वीयत्वैकत्वयोर्विनियोगदशायां विवक्षितत्वात्। 'वेदानधीत्य वेदौ वा' इति वचनानुरोधेन वेदान्तरस्थशाखान्तराध्ययनस्यापि शास्त्रार्थत्वादेकवेदस्थत्वानिवेशः। अत एव वेदभेदेऽपि पुरुषाभेदादेकत्रैव वाक्ये कर्मोत्पत्तिरपरत्र गुणाद्यर्थं श्रवणम्। अतएव च एकस्मिन्कर्मणि विरुद्धानामङ्गानां नानाशाखागतानां विकल्पः। स च तत्तत्पुरुषभेदेन न व्यवस्थितः, तेषां प्रकरणा-

---

[1] कर्मभेदस्य.

**एवं सत्यनुवादस्थलस्यैवाभावप्रसङ्गात् । न च सर्वाविवादस्थलमेवोदाहरणम्, सर्वाविवादस्य निश्चेतुमशक्यत्वात् । पुरोवादपूर्वकत्वादनुवादस्यात्रायं पुरोवाद इत्यस्यैवाभावान्न शाखान्तरस्थवाक्यानुवादकत्वप्रसङ्गः । यत्तु—बृहदारण्यकभाष्ये देहभिन्नात्मबोधिकाया 'अस्तीत्येवोपलब्धव्य' इत्यादिश्रुतेः प्रत्यक्षप्राप्तानुवादित्वमाशङ्क्य वादिविप्रतिपत्तिदर्शनादित्यादिना तत्परिहृतम् । तथाच प्रत्यक्षसिद्धसत्त्वग्राहकत्वेऽपि वादिविप्रतिपत्तिनिरासार्थकत्वेन नानुवादकत्वं प्रकृतेऽपीत्युक्तम्; तदयुक्तम्; भाष्यार्थानवबोधात् । तथाहि तत्र वादिविप्रतिपत्तिदर्शनेन देह-**

---

दिना शुद्धक्रत्वर्थत्वावगत्याऽध्येतृतत्तत्पुरुषार्थत्वाभावात् । अविरुद्धानां तु समुच्चयः । 'बह्वल्पं वा स्वशाखोक्तं ग्राह्यम्' इत्यादिकं चानुकल्पविधानार्थमिति द्वितीयस्यान्त्याधिकरणे स्थितम् । **सर्वाविवादस्येति ।** न च 'अग्निर्हिमस्य भेषजम्, अस्यामोषधयो जायन्ते' इत्यादिवाक्यार्थे सर्वाविवाद इति वाच्यम्; अग्नेर्हिमनिवृत्तिजनकत्वरूपे वाक्यार्थे स्वभाववादयदृच्छावादयोर्विवादात्, अवयव्यनङ्गीकारमते ओषधिरूपस्थूलद्रव्योत्पत्तिरूपेऽर्थेऽपि विवादाच्च । **अत्रायं पुरोवाद इत्यस्येति ।** अत्र तद्वेदीयैकशाखाध्येतृपुरुषे अयमग्निहोत्रं जुहोतीत्यादितद्वेदीयशाखान्तरीयो वादो वाक्यं पुरः पूर्वमग्निहोत्रादेरज्ञातस्य ज्ञापक इत्यस्यार्थस्येत्यर्थः । यदि हि तद्वेदीयैकशाखावाक्यं तद्वेदीयशाखान्तरवाक्याध्येतारं प्रति ज्ञापकं स्यात्, तदा ज्ञातज्ञापकत्वेनानुवादकं स्यात् । न चैवमस्तीति भावः । यत्तु—"वेदद्रष्टृप्रथमव्यक्त्यपेक्षया पुरोवादस्य सम्भवात् सादिप्रत्यक्षस्यानादिवेदापेक्षया पुरोवादत्वासम्भवाच्च प्रतिपत्तृव्यवस्थया नानुवादकत्वं युक्तम्" इति, तन्न युक्तम्; प्रथमं वेदद्रष्टारं प्रति तद्वेदीयशाखान्तरवाक्यस्यानुवादकत्ववत्सत्त्वप्रत्यक्षवन्तं प्रति सत्त्वश्रुतेरनुवादकत्वानपायात्, प्रत्यक्षस्याप्यनादित्वेन वेदात्पुरोवादत्वसम्भवात्;

व्यतिरिक्तत्वेनात्मनः प्रत्यक्षतैव नास्ति । अन्यथा प्रत्यक्षप्रामाण्यवादिनश्चार्वाकादेस्तत्र विप्रतिपत्तिर्न स्यादित्युक्तम् । न तु वादिविप्रतिपत्तिनिरासेनास्तीत्यादेस्सार्थकत्वमननुवादकत्वं वा। तथाचोक्तं तत्रैव 'तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारविशेषोपाये च शास्त्रं प्रवर्तत' इति । ननु चातुर्मास्यमध्यपर्वणोः 'द्वयोः प्रणयन्ति' इति वाक्यस्य

---

अन्यथा अग्निर्हिमस्य भेषजमित्यादेरप्यनुवादत्वासम्भवात् । **चार्वाकादेरिति** । न चैवं सत्त्वेन विश्वस्य प्रत्यक्षतापि नास्ति, अन्यथा तत्रावयोर्विवादो न स्यादिति वाच्यम् ; विश्वसत्त्वयोस्सम्बन्धे हि नावयोर्विवादः, त्वया सत्यस्य मया मिथ्याभूतस्य तस्याङ्गीकारात्, अधिष्ठानसत्तासम्बन्धो मिथ्या जायते जगतीति मया स्वीकारात् । **प्रवर्तत इति** । प्रमापयतीत्यर्थः । **चातुर्मास्यमध्यपर्वणोरिति** । वैश्वदेवं वरुणप्रघासाः साकमेधाः शुनासीरीयं चेति पर्वचतुष्टयात्मकस्य चातुर्मास्याख्यकर्मणो मध्यपर्वणोरित्यर्थः । **चातुर्मास्यप्रकरणे**—'द्वयोः प्रणयन्ति तस्मात् द्वाभ्यामेति, ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाश्च साकमेधाश्च' इति श्रुतम् । तत्र सधर्मकं सौमिकं प्रणयनमुत प्राकृतमधर्मकमिति संशये प्राकृतस्य चोदकप्राप्तत्वेन वाक्यसार्थक्याय सौमिकं तदत्र विधीयते । अतएव तत्रोत्तरवेदेस्सत्त्वेन तत्प्राप्तौ 'न वैश्वदेवे उत्तरवेदिमु[1]पयन्ति न शुनासीरीये' इति तत्पर्युदासस्सङ्गच्छते । तेन तयोरुत्तरवेदिभिन्नास्सौमिकप्रणयनधर्मा कार्याः । यत्तु 'उपात्र वपन्ति' इत्युत्तरवेदेरुत्पत्तिवाक्यम्, यच्च उत्तरवेद्यामग्निं निदधाति' इति तस्या विनियोगवाक्यम्, तन्मध्यमयोः पर्वणोः प्राकृतप्रणयनकाल एवोत्तरवेदिमात्रविधायकमिति प्राप्ते, प्रकृतिवच्छब्देनोपस्थितत्वात्प्राकृतमेव प्रणयनमत्रातिदेशप्रवृत्तेः पूर्वं विधीयते अनूद्यते वा । ननु तत्र किं प्रयोजनम्? नेतरयोः पर्वणोः

---

1 पवपन्ति.

परिसङ्ख्या त्रैदोष्यापत्तेः, प्रणयनाभावेऽग्न्यभावेन तयोर्योगानुपपत्तेश्च ; नाप्यर्थवादत्वेन स्तुतिधीः[1], विध्यन्तराभावादिति चेदुच्यते—उत्तरवेदिरूपगुणप्राप्तिः प्रयोजनम् । एतद्वाक्याभावे हि पर्वचतुष्टयेऽपि प्राकृतप्रणयनप्राप्त्या देशापेक्षायामुत्तरवेदिविधानं चतुष्टयेऽपि स्यात् । एतद्वाक्यसत्त्वे तु पर्वद्वयीयप्रणयनस्यैव विशिष्योपदेशेनोपस्थितत्वात्तत्रैवोत्तरवेदिस्तदीयाग्निनिधानमेव च द्वारं सिध्यति । अत इतरपर्वणोरुत्तरवेदिपरिसङ्ख्यैव प्रयोजनमिति । अथ तद्वाक्यस्य प्रथमोत्तमे मध्यमे वा पर्वणी विषय इति संशये[2] मध्यमविषयकत्वे तत्रैवोत्तरवेदिप्राप्तेः प्रथमोत्तमयोस्तत्पर्युदासानुपपत्तेः प्रथमोत्तमे विषयस्ततश्च तत्रैव प्राप्ताया उत्तरवेदेस्तत्रैव निषेधाद्विकल्पः । द्वाभ्यामेतीत्याद्यर्थवादस्तु लक्षणया प्रथमोत्तमपर इति प्राप्तौ, लक्षणाविकल्पयोरन्याय्यत्वान्मध्यम एव तद्विषयः । ततश्च प्रथमोत्तमयोरुत्तरवेद्यप्राप्त्या तयोस्तन्निषेधो नित्यानुवादः । तत्प्रयोजनं चोपात्रवपन्तीत्यादेर्वरुणप्रघासावान्तरप्रकरणबाधः । तद्बाधाभावे हि तदवान्तरप्रकरणपठिताया उत्तरवेदेस्तन्मात्राङ्गत्वप्रसक्त्या त्रिषु पर्वसु निषेधो नित्यानुवादस्स्यान्न द्वयोः । तद्बलात्तु अवान्तरप्रकरणबाधान्महाप्रकरणेन सर्वपर्वाङ्गत्वप्रसक्तौ मध्यमयोरुत्तरवेद्युपसंहारो युज्यते । न चैवं प्रथमोत्तमयोः पर्युदासेनावान्तरप्रकरणबाध इवोत्तरवेद्युत्पत्तिविनियोगविध्योर्मध्यममात्रविषयत्वमपि सिध्यतीति द्वयोः प्रणयन्तीति व्यर्थमिति वाच्यम् ; उत्तरवेद्यामग्निं निदधातीत्यनेन हि उत्तरवेदेर्विधिर्न निधानानुवादेन ; निधानमात्रे तत्प्राप्त्यापत्तेः । नाग्निनिधानानुवादेन, विशिष्टोद्देशासम्भवात् । नाग्निमात्रानुवादेन. गार्हपत्यादावपि उत्तरवेद्यापत्तेः । किन्तु अतिदेशप्रवृत्तेः पूर्वमुत्तरवेदिविशिष्टं प्राकृतनिधानमेवाग्न्युद्देशेन विधीयते । उत्तरवेदिप्राप्तिमात्रं तत्फलम् । अतश्चौपदेशिकप्रणयनविध्यभावे प्रणीताग्निनिधान इव कपालतापाद्यर्थाग्नि[3]निधानेऽपि-

---

[1] स्तुतिः. [2] इति विषयसंशये. [3] कपाले होमार्थमग्नि.

**चोदकप्राप्ताग्निप्रणयनव्यतिरिक्ताग्निप्रणयनविधायकत्ववत् प्रत्य-**

तदापत्तिः । औपदेशिकप्रणयनविधिसत्त्वे तु तस्यैव पुरस्स्फूर्तिकस्य देशापेक्षायामातिदेशिकविधित पूर्वमुत्तरवेदिरूपदेशविधानान्न तापाद्यर्थाग्नि[1]निधाने उत्तरवेद्यापत्तिः। अत एवौपदेशिकप्रणयनविधिसत्त्वेऽपीतरपर्वणोरातिदेशिकप्रणयने उत्तरवेदिस्स्यादित्यपास्तम् । औपदेशिकप्रणयनस्य पुरस्स्फूर्त्या तत्रैवोत्तरवेदिविधानादिति वार्तिकोक्तदूषणत्यागेन भाष्यानुसारी पन्थाः। वार्तिकानुसारी तु—प्राकृतं सौमिकं वा प्रणयनमिति प्राप्ते, न सौमिकम्, अनुपस्थितत्वात्; नापि प्राकृतम्, तस्याहवनीयोत्पादकत्वेन आहवनीयापादानकत्वासम्भवात् । 'आहवनीयाद्द्वावग्नी प्रणयतोऽध्वर्युश्च प्रतिप्रस्थाता च' इति शाखान्तरवचने प्राकृतप्रयणनोत्तरमाहवनीयापादानकप्रणयनान्तरविधित्वावगतेः, साकमेधेऽपि बोधायनादिकल्पसूत्रानुसारेण तादृशप्रणयनान्तरविध्यवगतेः, ताभ्यामेकवाक्यतया 'द्वयोः प्रणयन्ति' इत्यस्यापि तादृशप्रणयनविधायकत्वनिश्चयेन प्राकृतप्रणयनार्थकत्वानुपपत्तेः । तस्मादप्राकृतमपूर्वं प्रणयनमत्र विधीयमानं द्वाभ्यामित्याद्यर्थवादान्मध्यमयोरेव तस्य चापेक्षितो देश उत्तरवेदिरुक्त[2]वाक्याभ्यामुत्पत्तिविनियोगाभ्यां विधीयत इति तयोरपि मध्यमविषयत्वमेव । एवंच प्रथमोत्तमयोस्तत्प्रतिषेधो नित्यानुवादो भाष्यमत इवावान्तरप्रकरणबाधार्थः । याज्ञिकास्तु पशुबन्धवत् सौमिकानेव धर्माननुतिष्ठन्ति, उत्तरवेदिपरिमाणमात्रं शम्यामात्रमौपदेशिकं कुर्वन्ति । तन्मते प्रणयन्तीति बहुवचनमपि ब्रह्महोत्रादिसत्त्वादुपपद्यत इति सर्वमेतत्सप्तमतृतीये स्थितम् । एवंच वार्तिकोक्तिमाश्रित्याह—**प्रणयनविधायकत्ववादिति** । नेह नानेत्यादिश्रुत्या साक्षिस्वरूपे तदन्यसर्वनिषेधेन विश्वसत्त्वयोस्सम्बन्धस्यापि निषेधाद्विश्वसत्त्वश्रुतेर्न त्रिकालनिषेधाप्रतियोगित्वम्, तात्त्विकसत्त्वसम्बन्धो वा विश्वस्मिन्विषय इत्याशये-

1 तादृशाऽर्थाग्नि.　2 वेदिरुत्तर.

**क्षप्रामव्यावहारिकसत्त्वविलक्षणत्रिकालनिषेधाप्रतियोगित्वरूपस - त्त्वप्रमापकत्वं प्रकृतेऽस्त्विति चेन्न; त्रैकालिकसत्त्वनिषेधकश्रुति-विरोधेन विश्वसत्यत्वश्रुतेः त्रैकालिकसत्त्वपरत्वाभावात्। न च वैपरीत्यमेव किं न स्यात् विनिगमकाभावादिति वाच्यम्; तात्पर्यान्यथानुपपत्तिगतिसामान्यानामेव विनिगमकत्वात्। अद्वैतश्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेता। तत्र त्रिविधं तात्पर्यलिङ्गम्—प्रामाण्यशरीरघटकमर्थनिष्ठमज्ञातत्वं, अबाधितत्वं, प्रयोजन-**

---

नाह—**न त्रैकालिकेति**। त्रैकालिको यस्सत्त्वनिषेधस्स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तद्बोधकनेहनानेत्यादिश्रुतिविरोधेनेत्यर्थः। **तात्पर्येति**। तात्पर्यग्राहकलिङ्गषट्केत्यर्थः। अन्यथानुपपत्तिश्च वक्ष्यमाणा। गतिसामान्यमद्वैतावगतिरूपकार्येण सर्वेषां वेदान्तानां समानत्वं, षण्णां लिङ्गानां पञ्च स्वसामग्रीबलान्निर्णीयन्ते, उपपत्तिरूप[1]-मबाधितत्वं तु वक्ष्यमाणानुपपत्तिगतिसामान्याभ्यामिति षण्णां निर्णयेन तात्पर्यनिश्चय इति वक्तुं लिङ्गानां तात्पर्योपयोगितां घटयन्विवेकमाह—**तत्र त्रिविधमिति। प्रामाण्यशरीरेति**। ज्ञाते बाधिते निष्प्रयोजने वा विषये प्रमातृभिः प्रमाणं न व्याप्रियत इति यादृशविषयकज्ञानमुद्दिश्य प्रमाणव्यापारे प्रवृत्तिः, तादृशविषयकज्ञानमेव प्रमेत्युच्यते। तथाच ज्ञाताद्यर्थे दैवात्प्रमाणजन्यमपि ज्ञानं न[2] प्रमा, प्रमाणध्वंससंयोगादिवत्। अतोऽज्ञानाबाधितसप्रयोजनार्थविषयकधीरूपप्रमानुकूलशक्तिमत्त्वरूपे तात्पर्ये घटकत्वेनाज्ञातत्वादित्रयोपयोगः। इत्थं च ज्ञातत्वाद्येकैकलिङ्गमात्रेण यत्परेण 'यजमानः प्रस्तरः' इत्यादौ तात्पर्यमाशङ्कितम्, यच्चोपपत्त्याद्येकैकमात्रेण विश्वं सत्यमित्यादौ तच्छङ्किष्यते, तद्भ्रान्त्यैवेति बोध्यम्। अतएव "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्र-

---

[1] उपपत्तिसत्त्व. [2] प्रमा इति-पा.

**वत्त्वं च । त्रिविधं तु शब्दनिष्ठमतिप्रसङ्गवारकं—उपक्रमोपसंहारयोरैकरूप्यं, अभ्यासः, अर्थवादश्चेति । तत्र शब्दनिष्ठलिङ्गत्रये तावन्न विवादः, सर्वासामेवोपनिषदामेवं प्रवृत्तत्वात् । मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया च अज्ञातत्वं सप्रयोजनत्वं च निर्विवादमेव अबाधिततत्त्वमात्रं सन्दिग्धम् । तच्चान्यथानु-**

---

माणं बादरायणस्यानपेक्षत्वात्'' इति जैमिनीयसूत्रे प्रमात्वशरीरघटकविषयेऽबाधितत्वं प्रविष्टमित्याशयेन औत्पत्तिक इत्यनेन कारणदोषोऽव्यतिरेक इत्यनेन बाधक[1]ज्ञानाभावो विवक्षितः । अज्ञातत्वं प्रविष्टमित्याशयेन अनुपलब्ध इति, सप्रयोजनत्वं निविष्टमित्याशयेनार्थ इत्युक्तम् । उक्तं च शास्त्रदीपिकादौ । विशेषणत्रयेणाबाधितागृहीतार्थग्राहि ज्ञानं प्रमाणमिति [2]प्रमाणलक्षणं सूचितमिति भावः । एवंच लिङ्गशब्दस्तत्र विशेषणतया ज्ञापकत्वात्प्रयुज्यत इति बोध्यम् । **अतिप्रसङ्गवारकमिति** । यत्र पूर्वत्रिकं द्वयोरर्थयोरस्ति, अभ्यासादित्रयान्यतमच्च एकत्रैवार्थे, तत्राभ्यासाद्यन्यतमहीनार्थेऽपि तात्पर्योपपत्तिरूपस्यातिप्रसङ्गस्य, अभ्यासादिहीनेऽर्थेऽपि तात्पर्येऽभ्यासादिवैयर्थ्यापत्त्या वारकमित्यर्थः । एवं चेदं वाक्यं यद्येतदर्थतात्पर्यकं न स्यात्तदा एतदर्थेऽभ्यासादि युक्तं न स्यात् । एतदर्थतात्पर्यकमिदं नार्थान्तरतात्पर्यकमेकवाक्यत्वेन गृहीतत्वादित्यादितर्कावतारे आपाद्याभावनिश्चयादिविधयाभ्यासादिनिश्चयस्य तात्पर्यनिश्चयोपयोगितेति । यत्रोक्तातिप्रसङ्गस्तत्रैवाभ्यासादेस्तद्वारकतयोपयोग इति ध्येयम् । ऐकरूप्यमेकार्थनिष्ठता । यथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रमस्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इत्युपसंहारस्य चाद्वैतनिष्ठता । अभ्यासोऽनन्यपरपुनश्श्रवणम् । यथा उक्तवाक्यस्य नवधा श्रवणम् । अर्थवादो 'येनाश्रुतं श्रुतम्' इत्यादिप्राशस्त्यबोधकं वाक्यम् अद्वैतब्रह्मप्राप्तिसाधनश्रवणादौ प्रवर्तकत्वादद्वैतब्रह्मतात्पर्यग्राहकम् । यद्य

---

1 बाधकाज्ञान इति पा. 2 लक्षणं इति–पा.

**पपत्तिगतिसामान्याभ्यां च निर्णीयते। न हि सर्वप्रपञ्चनिषेध-रूपमद्वैतं व्यावहारिकम्। येन तत्र श्रुतेर्व्यावहारिकं प्रामाण्यं स्यात्। अतस्तत्र तात्त्विकमेव प्रामाण्यम्। द्वैतसत्त्वं तु व्याहारिकम्। अतस्तत्र न श्रुतेस्तात्त्विकं प्रामाण्यम्, परस्परविरुद्धयोर्द्वयोस्तात्त्विकत्वायोगात्, वस्तुनि च विकल्पासम्भवात्, तात्त्विक-व्यावहारिकप्रामाण्यभेदेन च व्यवस्थोपपत्तेः, अतत्परत्वेनावधारितस्य विश्वसत्यत्ववाक्यस्यैवान्यथा व्याख्यातुमुचितत्वात्। तथाहि चतुर्धा हि सामानाधिकरण्यम्; अध्यासे 'इदं रजतम्' इत्यादौ, बाधायां 'स्थाणुः पुमान्' इत्येवमादौ, विशेषणविशेष्य-**

---

प्यज्ञातत्वादित्रयविशिष्टार्थप्रमापकत्वरूपं तात्पर्यमभ्यासादिहीनार्थेप्यज्ञातत्वादित्रयनिर्णये शक्यं निर्णेतुम्; तथापि तादृशार्थे प्रयोजनवत्त्वाद्यभावनिर्णायकतयाऽर्थातरीयाभ्यासादेरज्ञातत्वादित्रयाभावनिर्णयद्वारा उक्ततात्पर्याभावनिर्णायकत्वमिति ध्येयम्। अन्यथाऽनुपपत्तिं विवेचयति— **न हि सर्वेत्यादि**। द्वैतस्य तात्त्विकत्वे व्यावहारिकत्वे वा तद्बुद्धौ सत्यां व्यावहारिकाद्वैतबुद्ध्यसम्भवात्। न च तस्यामसत्यामेवाद्वैतबुद्धिरिति वाच्यम्; नाहं ब्रह्मेत्यादिधीरूपायास्तस्यास्सर्वदा सम्भवात् तां बाधित्वा श्रुत्यादिबलवत्प्रमाणेन तदुत्पादे च द्वैतस्यातात्त्विकत्वं सिद्धमिति भावः। **सामानाधिकरण्यमिति**। समानविभक्तिकमिथस्साकाङ्क्षनामद्वयत्वरूपं पदयोस्सामानाधिकरण्यमित्यर्थः। **अध्यास इति**। भिन्नसत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितमित्यर्थः। **बाधायामिति**। बाध्यमानतादात्म्योपलक्षितस्याधिष्ठानस्य बोधकाकाङ्क्षाघटितमित्यर्थः। [1]स्थाणुः पुमानित्यादेः स्थाणुत्वेन ज्ञातः पुमानित्यर्थकत्वात्। [2]तत्स्थाणुतादात्म्येन बाध्यमानेनोपलक्षितः पुमानधिष्ठानं प्रतीयत इति भावः **विशेषणविशेष्यभावेनेति**। समानसत्ता-

---

[1] तत्रस्थाणुः. [2] स्थाणुतादा.

भावे 'नीलमुत्पलम्' इत्यादौ अभेदे 'तत्त्वमसि' इत्येवमादौ। अत्र च बाधायामभ्यासे वा सामानाधिकरण्योपपत्तेर्न सत्यत्वबोधकश्रुतेः षड्विधतात्पर्यलिङ्गोपेताद्वैतश्रुतिबाधकत्वम्। नन्वात्मन आनन्दत्वबोधिका श्रुतिरपि 'सुखं सुप्तोऽस्मि' इति साक्षिप्रत्यक्ष-

---

कयोस्तादात्म्यबोधकाकाङ्क्षाघटितमित्यर्थः। **अभेदेनेति**। अखण्डार्थबोधकाकाङ्क्षाघटितमित्यर्थः। **अध्यासे वेति**। वाकारो व्यवस्थितविकल्पः। शुक्तिरूप्यादौ विश्वान्तर्गते बाधिते बाधायां अबाधिते वियदादौ त्वध्यासे सामानाधिकरण्यमित्यर्थः। यत्तु—"न हि सर्वेत्यादिना बाधिततया प्रतीयमानस्यापि वाक्यार्थत्वमर्थान्तरानुपपत्तेरित्युक्तम्, तथाच त्वन्मते तत्त्वमसीत्यादौ तत्त्वंपदवाच्ययोरैक्यमपि वाक्यार्थस्स्यात्, अर्थान्तरानुपपत्तेः। अथ लक्षणया शुद्धयोरैक्यरूपमर्थान्तरमुपपद्यत इत्युच्यते, तर्ह्यद्वैतवाक्येऽपि स्वतन्त्राद्वितीयमर्थोऽस्तु। अन्यथा 'यजमानः प्रस्तरः' इत्यादेर्यजमानप्रस्तरयोः व्यावहारिकाभेदोऽर्थोऽस्तु। प्रत्यक्षादेस्तु प्रातीतिकस्तयोर्भेदो विषयः, तत्त्वमसीत्यादेरपि वाच्ययोस्तात्त्विकाभेदः, प्रत्यक्षादेस्तु व्यावहारिकभेद इति स्यात्। गतिसामान्यं तु अभ्यासपर्यवसन्नमबाधितत्वासाधकम्, त्वन्मते सर्ववेदान्तवाक्यानामभ्यस्तानामप्यखण्डार्थत्वात्। व्यावहारिकतात्त्विकरूपविषयभेदेन श्रुत्योर्व्यवस्थोक्तिर्न युक्ता, अन्योन्याश्रयात्। विनिगमकाभावात् अध्यासे बाधायां वा सामानाधिकरण्यमयुक्तम्, तयोरद्याप्यसिद्धेः" इति तत्तुच्छम्, यदि हि वाच्ययोरैक्ये उपक्रमादिकं स्यात्, न स्याच्च 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते सोऽयमात्मा स विज्ञेय' इत्यादिश्रुतिः तदा तादृशैक्यं वाक्यार्थस्स्यात्। 'आत्मैवेदमग्र आसीन्नान्यत्किञ्चन मिषत्' इत्यादिनिष्प्रपञ्चात्मोपक्रमादिसत्त्वात्, उक्तश्रुतेर्मन्दमतिकृताया 'विश्वं सत्यमित्यादिश्रुतिबाधितत्वशङ्कायाश्च व्यावहारिकतात्त्विकविषयभेदव्यवस्थया परिहारात्, अद्वितीयात्मैव तत्त्वमसीत्यादेरर्थः। अतएव

स्वतन्त्र एक एवेत्येवंरूपं स्वतन्त्राद्वितीयमपि न तदर्थः । यजमानप्रस्त-रयोस्तु न व्यावहारिकाभेदो वाक्यार्थः, तं विनाऽपि गौणार्थद्वारा स्तुति-बुद्ध्युपपत्तेः । अन्यथा तयोर्धर्मसाङ्कर्यं व्यावहारिकं प्रतीयेत । एक-नाशेऽप्यपरावस्थित्यनुपपत्तेश्च । गतिसामान्यं तु अबाधितत्वबोधकमेव, अद्वैतबोधकानि सर्वशाखागतानन्तवाक्यानि यद्यद्वैत[1]तात्पर्यकानि न स्युः, तदा लक्षणान्यशेष[2]त्वादिकल्पनादुष्टानि स्युरित्यादि तर्कोपस्था पकत्वात्, तादृशवाक्यानां मिथस्संवादविसंवादाभावरूपपरीक्षासम्पाद-कत्वाच्च । तथाच वाक्यानामखण्डार्थत्वाद्गतिसामान्यं नाबाधितत्वबोधक-मित्युक्तिर्मौढ्यादेव । न ह्यबाधितत्वप्रकारेण प्रमापकं वाक्यमिति नस्स-म्मतम् । तात्त्विकातात्त्विकविषयतया श्रुत्योर्व्यवस्था तु युक्तैव, अद्वैत-श्रुतिः तात्त्विकप्रमाणम्, अव्यावहारिकप्रमाणत्वे सत्यज्ञातसप्रयोजनार्थक-श्रुतित्वात्, तात्त्विकप्रमाणत्वेन पराभ्युपगतश्रुतिवत् । अन्यथा प्रामा-ण्यानुपपत्तिरनुकूलतर्कः । न च विरोधपरिहाराय 'विश्वसत्त्वश्रुतिः न तात्त्विकप्रमाणं' तात्त्विकनिषेधप्रतियोगिविषयकत्वादित्यनुमानस्य अव-श्यापेक्षणीयत्वं निषेधतात्त्विकत्वं च पूर्वानुमानादिति परस्पराश्रय इति वाच्यम्; विश्वसत्त्वश्रुतिविरोधो हि पूर्वानुमाने विश्वसत्त्वश्रुतेस्ता-त्त्विकप्रमाणत्वनिश्चयाधीनः, स च नास्त्येव, अद्वैतश्रुताविव तस्याम-व्यावहारिकप्रमाणत्वानिश्चयेन उक्तहेत्वभावात् । उक्तमानाप्रामाण्यसंश-यस्तु पूर्वानुमाने साध्यसंशयसम्पादको न विरोधी । तदप्रामाण्य[3]-संशयस्तु उक्ततर्कमूलकविशेषदर्शनादिना निरसनीय इत्यन्योन्याश्रया-भावात् । किञ्च अद्वैतं यदि प्रातीतिकं स्यात् व्यावहारिकं वा स्यात् तदा 'अदृश्यमव्यवहार्यम्' इत्यादिश्रुत्यर्थो न स्यात् मोक्षहेतुधीविषयो न स्यात् । व्यावहारिकबन्धनिवृत्तेर्व्यावहारिकतत्त्वज्ञानादनुपपत्तेः उप-

[1] तात्पर्यजनकानि स्युः. [2] दोष [3] न विरोधी तत्र प्रामाण्य. न विरोधि-तयाप्रामाण्य. वा.

**सिद्धानन्दानुवादिनी सत्त्वश्रुतिवद्भवेदिति चेन्न; साक्षिण उपहितानन्दविषयत्वेन श्रुतेश्च निरूपाधिकानन्दविषयत्वेन भिन्नविषयत्वादनुवादत्वायोगात् । तथा हि स्वरूपानन्दो गृह्यते । स्वरूपं चाज्ञानोपहितमेव साक्षिविषयः । ननु तत्त्वमसीत्यादौ नवकृत्वोऽभ्यासवत् पिपासितस्य जलगोचरप्रमाणसम्प्लववदैक्ये षड्विधतात्पर्यलिङ्गवद्भावरूपाज्ञाने प्रत्यक्षासिद्धे 'तम आसीत्' इत्यादिश्रुतिवत् सत्त्वश्रुतिर्दार्ढ्यार्थेति चेन्न; अशेषविशेषग्राहिप्रत्य-**

पत्तौ वा मोक्षहेतुधीविषयस्यापि बाधापत्तेः, बाध्यबाधकधीविषययोस्स मानसत्ताकत्वेन विनिगमकाभावात् । तस्मान्ना[1]तात्त्विकम् । उक्तश्रुतिधीविषयत्वाभ्यां अद्वैतवाक्यार्थरूपमखण्डं ब्रह्म यदि व्यावहारिकं तदा बाध्येत । न च बाध्यते, साक्षिस्वरूपत्वादनुपलभ्यमानबाधकत्वात् । तस्मान्न व्यावहारिकमित्यादियुक्तिसचिवोक्तानुमानादद्वैतश्रुतेस्तात्त्विकं प्रमाण्यम् । द्वैते तु नैवं युक्तिः । प्रत्युत द्वैतं यदि तात्त्विकं स्यात् तदा दृश्यं न स्यात्, संसृष्टं न स्यात्; दृश्यत्वात्संसृष्टत्वाच्च न तात्त्विकम्, दृगादिसंसर्गस्य निर्वक्तुमशक्यत्वादित्यादियुक्तिसचिवानुमानादिना विश्वसत्यत्वश्रुतेरतात्त्विकविषयकत्वसिद्धिः । अतएवाध्यासबाधयोस्सामानाधिकरण्यमित्यपि निश्चेतुं शक्यमेव; प्रपञ्चस्य व्यावहारिकत्वनिश्चयेनाध्यासत्वादिनिश्चयात् । न च व्यवहारदशायामध्यासत्वादिनिश्चयाभावेन तादृशसामानाधिकरण्यानुपपत्तिरिति वाच्यम्; अध्यासत्वादिघटितरूपेण हि विश्वं सत्यमित्यादिवाक्यान्न बोधः, किन्तु वस्तुगत्या भिन्नसत्ताकयोस्तादात्म्यं बाध्यमानम्, तादात्म्यं वा तादात्म्यत्वेन बुध्यते विचारदशायामेव[2] अध्यासत्वादिनिर्णयेन उक्तसामानाधिकरण्यनि[3]रासः । अतएव शुक्तिरूप्याद्यंश एव उक्तवाक्यस्य बाधायां सामानाधिकरण्यमित्युक्तम् । **भिन्नविषयत्वादिति** । न चैवं विश्वं

[1] तस्मान्न. [2] इति. [3] निर्णयः.

**क्षप्राप्त तद्दार्ढ्यार्थमन्यानपेक्षणात् । पिपासितस्य शब्दलिङ्गानन्तरं जले प्रत्यक्षमपेक्षितम्, न तु प्रत्यक्षानन्तरं शब्दलिङ्गे । न च तर्हि 'तम आसीत्' इत्यादेर्न किञ्चिदवेदिषमिति प्रत्यक्षसिद्धाज्ञानादार्ढ्यार्थत्वं न स्यादिति वाच्यम्; 'तम आसीत्' इत्यस्य सृष्टिपूर्वकालसम्बन्धित्वेनाज्ञानग्राहितया सुषुप्तिकालसम्बन्धित्वे नाज्ञानग्राहकं प्रत्यक्षमपेक्ष्य भिन्नविषयत्वेनैव प्रामाण्यसम्भवात् ।**

---

सत्यमित्यादिश्रुतेरपि प्रत्यक्षागृहीततात्त्विकसत्त्वग्राहकत्वमिति वाच्यम्। अन्यथानुपपन्नाद्वैतश्रुतिविरोधादिना निरस्तत्वात् । **दार्ढ्यार्थमिति** । फलपर्यन्तप्रत्यक्षे भ्रमत्वशङ्काविरहस्य सिद्धत्वात् तद्रूपदार्ढ्यसिद्धयेऽन्यानपेक्षेति भावः । **सृष्टिपूर्वकालेति** । 'नासदासीन्नो सदासीत्तम आसीत्' इत्यादिश्रुतौ तदानीमिति पदसत्त्वात्तदर्थप्रलया[1]भिन्नातीतकालसत्त्वमासीदित्यनेनोक्तमिति भावः । यद्यपि सदसद्विलक्षणकार्यत्वादिति हेतुकानुमानादिनापि प्रपञ्चे सदसद्विलक्षणकारणपूर्वकत्वग्रहणात्सृष्टिपूर्वकालीनत्वेनाप्यज्ञानं गृहीतम्, तथाऽपि विपरीतानुमानादिना तादृशानुमानाद्यप्रामाण्यशङ्कावतामनिपुणपुरुषाणामननुवादिकैवोक्तश्रुतिः ॥

यत्तु 'एतावन्तं कालं ब्रह्म नावेदिषम्' इत्यनुभवेन ब्रह्मधीपूर्वकालमात्रगतत्वेनाज्ञानग्रहणादुक्तश्रुतिरनुवादिकेति, तत्तुच्छम्; ब्रह्मधीपूर्वकाल[2]वृत्तित्वेन ग्राहकानुभवेन प्रलयवृत्तिताग्राहकश्रुतेरनुवादत्वायोगात् । उक्तकाल[3]त्वप्रलयत्वरूपप्रकारभेदात् । किञ्चोक्तसाक्ष्यनुभवस्योक्तश्रुतिग्राह्यसदसद्विलक्षणत्वाग्राहकत्वात्, . भ्र॰प्रमा।साधारणत्वेन भ्रमत्वशङ्कास्पदत्वेनोक्तश्रुतिसापेक्षत्वाच्च, नोक्तश्रुत्यनुवादकताप्रयोजकत्वम् । अत एव ब्रह्म न जानामीति साक्ष्यनुभवस्य तच्छङ्काप्यसङ्गतैवाभ्युपेत्याचार्यैस्समाहिता । सत्त्वप्रत्यक्षे तु न भ्रमत्वशङ्केति न दार्ढ्यार्थं श्रुतिसापेक्षता । एतेन प्रळयकालीनसाक्षिणा सृष्टिपूर्वकालीन-

---

[1] प्रलयभिन्नेति-पा. [2] काला. [3] उक्तकाले.

त्वेनाज्ञानं गृह्यत इत्यपि परास्तम्। तत्तत्कालत्वेन सुखादिकालस्य साक्षियोग्यत्वेऽपि सृष्टिपूर्वकालत्वप्रळयत्वादिरूपोक्तश्रुतिग्राह्यतावच्छेदकरूपेण कालस्य तद्योग्यत्वे मानाभावादिति ॥

'अश्वस्तूपरो गोमृगस्ते प्राजापत्याः' इत्यश्वमेधे पशुत्रयं विहितम्। तत्रैकप्रयोगत्वेन तन्त्रेणाध्रिगुप्रैषे पठनीये अश्वस्य चतुस्त्रिंशद्वङ्क्रिकत्वादितरयोः प्रत्येकं षड्विंशतिवङ्क्रिकत्वात् पूर्वाधिकरणरीत्या समस्यवचने षडशीतिरेषां वङ्क्रय इति प्राप्तम्। तत्र 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति' इत्यौपदेशिकेन मन्त्रेण षड्विंशतिपदयुक्तस्याध्रिगुप्रैषान्तर्गतमन्त्रस्यातिदेशिकस्य बाधात् अश्वस्य चतुस्त्रिंशदित्यादिमन्त्रः, इतरयोस्तु द्विपञ्चाशदनयोर्वङ्क्रय इति समास इत्यपि प्राप्तम्। तत्र 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति प्रकरणे समाम्नातवाक्ये किं विधीयत इति चिन्तायाम्, न तावत्प्रतिषेधः; स हि चतुस्त्रिंशत्पदमात्रस्य, तद्युक्तर्चो वा नोभयम्, विहितनिषेधेन विकल्पापत्तेः। अन्ते ऋग्लक्षणापत्तेः ऋक्प्रतिषेधे षडशीतिरिति समासस्यैव प्राप्तेष्षड्विंशतिपदयुक्ताध्रिगुप्रैषस्याप्राप्तया तस्यापि विधाने वाक्यभेदापत्तेश्च। षड्विंशतिपदे षडशीतिसमासपदोपेताध्रिगुलक्षणयानुवादत्वोक्तौ लक्षणादोषात्, अतो न गिरा गिरेतिवत् न चतुस्त्रिंशदिति निषेधानुवादः षड्विंशतिपदस्य चतुस्त्रिंशत्पदस्थानीयत्वसिद्ध्यर्थः। षड्विंशतिरिति ब्रूयादिति च 'ऐरं कृत्वोद्गेयम्' इतिवद्विधिः। तद्बलादेव षड्विंशतिपदे अश्ववङ्क्रिसङ्ख्यालक्षणा। एवकारस्तु न विधिविरोधी, मानाभावात्। 'अत्र ह्येवावपन्ति' इत्यादौ [1] तस्यातत्त्वात्, षड्विंशतिपदायोगव्यावृत्तिरूपस्य चतुस्त्रिंशत्पदरूपान्ययोगव्यावृत्तिरूपस्य वा षड्विंशतिपदविधानफलस्यानुवादतया एवकारसार्थक्योपपत्तेश्च। तस्मादश्वे 'षड्विंशतिर्वाजिनो देवबन्धो' रित्यादिमन्त्रः, इतरयोस्तु

---

[1] तस्यतत्त्वात् इति पा.

प्राकृत एव ' द्विपञ्चाशदनयोर्वङ्क्रय ' इत्यादिमन्त्रस्समासेनेति प्राप्ते, निषेधेनैवान्ययोगव्यावृत्त्यनुवादासिद्धेरयोगव्यावृत्त्यनुवादस्यापि व्यर्थत्वात्, पदमात्रेण स्तुत्यनुपपत्तेश्च नैवकारोऽनुवादः ' नापि विधायकः ; षड्विंशतिपदस्य पक्षे प्राप्तया तदयोगाप्रसक्तेरयोगव्यावृत्तिविध्यसम्भवात् षड्विंशति पदविधानावश्यकत्वेन तत एव तस्याः प्राप्तत्वात् । अतएवान्ययोगव्यावृत्तेरपि न विधायकः, तत्त्वेऽपि विकल्पापत्तेश्च । अतएव अत्र ह्यवावपन्तीत्यादावेवकारार्थविधौ ' न तौ पशौ ' इत्यादिवद्विकल्पापत्तिरुक्ता कौस्तुभे ॥

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपताऽनुवादरूपता वा व्युत्पत्तिसिद्धा । न च वैशेषिकमन्त्रे षड्विंशतिपदस्य प्रतिप्रसवस्सम्भवति । न वा प्राकृत एवाध्रिगौ षडशीतिपदप्राप्तौ तत्प्रतिप्रसव ; तथात्वे ' न चतुस्त्रिंशदि ' ति निषेधानुवादानुपपत्तेः, वैशेषिकमन्त्रेणाश्वांशे प्राकृताध्रिगुबाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च । तूपरगोमृगयोर्द्विपञ्चाशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तितादवस्थ्याच्च । तस्मादेवकाररूपतात्पर्यग्राहकानुरोधात् षड्विंशतिपदे षडशीतिपदयुक्ताध्रिगुप्रैषलक्षणया तस्यैव प्रतिप्रसवरूपोऽनुवादः ' षड्विंशतिरित्येव ब्रूयादि ' ति । ' न चतुस्त्रिंशदि ' त्यत्र तु चतुस्त्रिंशत्पदे तदादिकमन्त्रलक्षणया तन्निषेधो विधीयते, तत्पदमात्रनिषेधे षड्विंशतिरित्येवेत्यादेरनुवादत्वानुपपत्तेः । मन्त्रनिषेधे तु [1]विहितप्रतिषेधाद्विकल्पसिद्धेः,अभावपक्षेऽतिदेशप्राप्तस्य षडशीतिपदयुक्ताध्रिगोरेव न्यायप्राप्तत्वेन तदनुवादत्वमुपपद्यते । आश्वलायनमते तु षड्विंशतिः । 'षड्विंशतिश्चतुस्त्रिंशदेषां वङ्क्रयः ' इत्यादिरूपस्याध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणयानुवादः । एतेन एवकारयुक्तवाक्येनोक्तप्रैषस्य प्रतिप्रसवविधिः । वाचनिकेन वाऽध्रिगुप्रैषेण पाठप्राप्तस्य[2] वैशेषिकमन्त्रस्य बाधात् ' न चतुस्त्रिंशदि ' ति निषेधो नित्यानुवादः ।

[1] विवक्षित. [2] वा प्राप्तस्य.

**ननु 'षड्विंशतिरस्य वङ्क्रयः' इति मन्त्रस्याश्वमेधे चोदकप्राप्तस्य 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इति वैशेषिकमन्त्रेणापोदितस्य**

वैशेषिकमन्त्रस्य च चतुस्त्रिंशदित्यादेर्वाचस्तोमादौ विनियोगान्न वैयर्थ्यम् । एवञ्च विकल्पोऽपि नाष्टदोषदुष्टो भविष्यति । एवकारश्चायोगस्यान्ययोगस्य वा व्यावृत्त्यनुवाद इत्यपास्तम् । निषेधपूर्वकैवकारस्य स्वसमभिव्याहृतार्थानुवाद्यताज्ञापकत्वात् । यच्छब्दादिवत् विधिविरोधित्वात् । अतएव 'उपवासाः पतन्ति' इत्युक्ते उपवासानेव कुरु न गच्छेत्यत्र गमननिवृत्तिरेव विधेया, न तूपवास इति सर्वसिद्धम् । यत्र तु न निषेधपूर्वकैवकारो यथा 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् अत्र ह्येवापतन्ति' इत्यादौ तत्रैवकारसम्बन्धस्य विधानेऽपि न क्षतिः । प्रकृते विकल्पस्तु बहुवचनान्तपाशमन्त्रवन्न विरुध्यते, तदभावे तु वैशेषिकमन्त्रस्य प्रकरणबाधो दोषः । न चाध्रिगुप्रैषस्याविधेयत्वेऽपि एवकारार्थस्य वैशेषिकमन्त्ररूपान्यनिवृत्ते[1] र्विधेयत्वसम्भवेन न चतुस्त्रिंशदित्येवानुवादः किं न स्यादिति—वाच्यम्; तावतापि शास्त्रप्राप्तस्य निवृत्तिविधानेन विकल्पानपायात् । अतएवात्र ह्येवावपन्तीत्यादावप्राप्तपरिसङ्ख्यैवाङ्गीकृता कौस्तुभे । तन्त्ररत्नकारस्य तु तत्रैवकारार्थविधिमङ्गीकुर्वतस्तत्र विकल्पापत्तिः । तद्वदेवेहापि तदभावापत्तिः । न चैवमपि विनिगमनाविरह इति वाच्यम्; एवकारस्य अयोगान्ययोगव्यावृत्तिरूपसन्दिग्धार्थकत्वेन तद्युक्तवाक्यस्य चरमत्वेन च न चतुस्त्रिंशादित्यस्यैव निषेधविधायकत्वादिति नवमचतुर्थे स्थितम् । तथाच वैशेषिकमन्त्रेणापोदितस्य[2] प्राकृतमन्त्रस्य न चतुस्त्रिंशदित्यादिना यथा प्रतिप्रसवः, तथा मिथ्यात्वश्रुत्याऽपोदितस्य जगत्सत्यत्वस्य 'विश्वं सत्यम्' इत्यादिश्रुत्या प्रतिप्रसव इति न साऽनुवाद इति शङ्कते—**ननु षड्विंशतिरित्यादि । इति मन्त्रेति ।** इत्यादिमन्त्रेत्यर्थः ।

1 न्ययोगनिवृत्तेः. 2 णापादितस्य.

षड्विंशतिरित्येव ब्रूयादिति वचनवत् प्रत्यक्षप्राप्तजगत्सत्त्वस्य मिथ्यात्वश्रुत्याऽऽपाततोऽपोदितस्य प्रतिप्रसवार्थं सत्त्वश्रुतिरिति चेन्न ; मिथ्यात्वश्रुतेः प्रत्यक्षबाधकत्वाभ्युपगमे तस्या बलवत्त्वेन तद्विरोधात् सत्यत्त्वश्रुतेरन्यपरत्वाद्देवताधिकरणन्यायासम्भवाच्च प्रातिप्रसवार्थत्वस्य वक्तुमशक्यत्वात् । ननु सत्त्वप्रत्यक्षप्रामाण्ये तेनैव मिथ्यात्वश्रुत्यनुमानादिबाधः, तदप्रामाण्ये न तेन सत्वश्रुतेरनुवादकत्वम्—इति चेन्न ; प्रत्यक्षाप्रामाण्येऽपि तत्सिद्धबोधकस्यानुवादकत्वसम्भवात् । न हि प्रमितप्रमापकत्वमनुवादकत्वम्, किन्तु पश्चाद्बोधकत्वमात्रम् । पश्चात्त्वं च प्रमाणावधिकमप्रमाणावधिकं चेति न कश्चिद्विशेषः । न च श्रुतेस्सर्वसिद्धप्रमाणभावायाः सदर्थत्वायाननुवादकत्वाय च प्रत्यक्षाप्राप्तताात्त्विकसत्त्वविषयत्वमवश्यं वक्तव्यम् । तथाचाप्रमाणेन प्रत्यक्षेण कथं श्रुतेरनुवादकत्वमिति वाच्यम् ; सत्त्वांशस्य प्रत्यक्षसिद्धत्वेऽपि वाक्यार्थस्य

---

**षड्विंशतिरित्येवेति** । न चतुस्त्रिंशदिति ब्रूयादित्यादिः । **अन्यपरत्वात्** स्तुतिपरत्वात् । ननु स्तुतिपरादपि विश्वसत्त्ववाक्यात 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादितो द्वारभूतवाक्यार्थ इव विश्वसत्त्वं सिद्ध्यतु, तत्राह—**देवतेति** । मानान्तरबाध्यार्थे तन्न्यायासम्भवः, प्रमापकत्वासम्भवेन तद्व्यवस्थापकत्वासम्भवादिति भावः । ननु भ्रमप्रत्यक्ष[1]प्राप्तार्थस्य श्रुतिविषयत्वे श्रुतेरप्रामाण्यं स्यादित्यत्र मदुक्तदूषणपर्यवसानम्, न तु प्रमितबोधकत्व[2]रूपस्यानुवादकत्वस्यानुपपत्तौ, तथाच नेदं समाधानं युक्तमिति चेन्न ; देवताधिकरणन्यायसिद्धं प्रमाण्यं विश्वसत्त्वांशे[3] श्रुतेर्न सम्भवतीति पूर्वमेवोक्तत्वात्, क्रियादिसमभिव्याहारसिद्धवाक्यार्थरूपस्तुत्याद्यंशे प्रामाण्यस्य व्यावहारिकस्य वक्ष्यमाणत्वाच्च, प्रामाण्याभावस्यास्मदिष्टत्वेन तत्र दूषणपर्यवसानोक्तेरुन्मत्तप्रलापत्वात् । **वाक्यार्थस्येति** ।

---

[1] ननु प्रत्यक्ष. [2] प्रमितिबाधकत्व. [3] विश्वसत्तादौ.

**क्रियादिसमभिव्याहारसिद्धस्यापूर्वत्वेन तद्विषयतयैवाननुवादकत्वोपपत्तावद्वैतश्रुतिविरुद्धतात्त्विकसत्त्वाविषयत्वकल्पनायास्तदर्थमयोगात् । परमार्थसद्विषयता तु सर्वश्रुतीनां शुद्धब्रह्मतात्पर्यकत्वेनैव । अवान्तरतात्पर्यमादाय व्यावहारिकसद्विषयतेति**

स्तुत्यादिरूपस्येत्यर्थः । **क्रियादीति** । क्रिया प्रमिणन्तीत्यादिपदसमुदायलभ्यवाक्यादिरूपा, [1]आदिपदात् व्यावहारिकसत्त्वबोधकविश्वं सत्यमित्यादिसङ्ग्रहः । क्रियादिपदसमुदायलभ्यवाक्यार्थद्वारकं स्तुत्यादिरूपमपूर्वं विधिसमभिव्याहृतविश्वसत्त्वादिवाक्यप्रमेयमित्यर्थः । अथवा स्तुतिधीद्वारीभूतो न प्रमिणन्तीति अपूर्ववाक्यार्थः तस्य विश्वं सत्यमित्यादिवाक्ये सत्त्वा[2]द्विश्वसत्त्वांशेऽनुवादत्वेऽपि न क्षतिरित्यर्थः । यद्वा क्रिया भावना, आदिना तदंशस्वर्गादिरूपसाध्यादितद्बोधकपदसमभिव्याहारेण स्तुत्यादिरूपापूर्वार्थ एवार्थवादाधिकरणन्यायेनोक्तवाक्यप्रमेय इत्यर्थः । सदर्थत्वायेति—यदुक्तं तत्र सत्त्वं तात्त्विकत्वं व्यावहारिकत्वं वा, अन्त्ये तात्त्विकविषयत्वमवश्यमित्यसङ्गतं, आद्ये त्वाह—**परमार्थसद्विषयतेति** ॥

ननु—'सत्यं ज्ञानम्' इत्यादिवाक्यस्यापि ब्रह्मविदाप्नोतीत्यादिक्रियासमभिव्याहारसत्त्वात् क्रियाघटितवाक्यार्थमादाय प्रामाण्यसम्भवाद्ब्रह्मणोऽपि तात्त्विकत्वासिद्धिः ; किंच सत्यं ज्ञानमित्यादिवत्सिद्धार्थकान्यपि विश्वसत्यताबोधकानि 'विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् । जहि प्रतीचोऽनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु' इत्यादीनि सन्ति । किञ्च त्वन्मते जरद्गवादिवाक्यस्यापि लक्षणया अखण्डब्रह्मपरत्वसम्भवेन तद्विलक्षणं प्रामाण्यं न कर्मकाण्डे सिद्ध्यति । अवान्तरतात्पर्यविषयस्य बाधितत्त्वेन तमादाय ब्रह्मणि प्रामाण्यं [3]पर्यवसितमिति चेत्, भ्रान्तोऽसि, ब्रह्मविदाप्नोतीत्यादिवाक्ये हि न क्रियाघटितवाक्यार्थे तात्पर्यम्, ब्रह्मविदो

[1] प्रमिणन्तीत्यादिरूपा. [2] न सत्त्वा. [3] अपर्यवसित.

ब्रह्माज्ञाननिवृत्तिरूपायां परासौ ज्ञातत्वेन तदसम्भवात् । अपितु तद्बोधनद्वारा ब्रह्म स्तुत्वा[1] सत्यत्वाद्युपलक्षितं तदज्ञातं ज्ञाप्यते । तथाचोपलक्षणतया सत्यत्वादिव्यावृत्तब्रह्मज्ञानाद्ब्रह्मसत्यत्वादिभ्रमसंशयनिवृत्तेः कथं न ब्रह्मसत्यत्वादेरुक्तवाक्यात्सिद्धिः ? विश्वमाप्रा इत्यादिवाक्यस्य तु सिद्धार्थकत्वम्, आख्यातान्तपदार्थाघटितार्थकत्वं विधिवाक्यार्थापर्यवसितार्थकत्वं वा । नाद्यः, आप्रा इत्यादेराख्यातान्तस्य स्फुटत्वात् । व्याख्यातं च माधवीयभाष्यादौ—"विश्वमन्तरिक्षं च त्वं स्वेन महित्वा महिम्ना आपूरितवानिति, अन्यस्त्वावान् त्वदाश्रयो नकिर्नेति च सत्यमित्यर्थ इति जहीत्यादेरपि ये प्रातिकूल्येनाञ्चन्ति, ये च तानन्नु, ये च पराञ्चन्ति, तान् विघ्नभूतान् हत्वा विश्वं स्वकार्यसमर्थतया सत्यं कुरु । ततस्तत्स्वकार्याय विष्टं आविष्टमस्त्वित्यर्थः" इति । नान्त्यः, मन्त्रार्थवादानां प्रयोजनवदर्थपर्यवसानाय समभिव्याहृतविधिवाक्यार्थपर्यवसितद्रव्यदेवतास्तुत्यादिप्रतिपादकत्वावश्यकत्वात् । तथाचोक्तवाक्यानामपि प्रत्यक्षादिसिद्धसत्त्वांशेऽनुवादत्वेऽपि स्तुत्यादौ तद्द्वारभूतापूर्ववाक्यार्थे च व्यावहारिकप्रमासम्भवान्न सत्यत्वप्रमापकत्वम् । किञ्च तेषामालोच्यमानोऽर्थस्त्वत्प्रतिकूल एव । तथाहि विश्वमन्तरिक्षं चापरिच्छिन्नेन स्वस्वरूपमहिम्ना त्वमाप्रा अतोऽन्यस्सर्वोऽपि त्वावान् त्वत्सम्बन्धी सन् सत्यं अद्धा साक्षात् त्वत्सम्बन्धं विना तु न किः न सत्यमित्यर्थः । मा किं मा किर्न [2]किरिति त्रयोऽपि वर्जन इति शाब्दिकाः । तथा विघ्नभूतानसुरान् हत्वा अस्मदनुकूलं विश्वं कुरु । तद्यद्यपि मिथ्या, तथापि त्वयोपादानेन सत्येन विष्टं व्याप्तं सत् सत्यमस्त्वित्यर्थः कृतधीगम्यः । जरद्गवेत्याद्ययुक्तम्; न हि जरद्गवादिवाक्ये अखण्डब्रह्मपरताग्राहकमुपक्रमाद्यस्ति, न वा स्वार्थानुष्ठानाधीनचित्तशुद्धिद्वारा ब्रह्मबोधतात्पर्यकत्वं कर्मकाण्डस्येव तस्य सम्भवति । बाधितार्थद्वारा कर्म-

[1] ब्रह्मस्तुत्या. [2] मा किं न किं न किः.

**कर्मकाण्डप्रामाण्योपपादने वक्ष्यते । न च—प्रत्यक्षं स्वप्रामाण्यनिर्णयार्थं श्रुतिसंवादमपेक्षत इति न तेन श्रुतेरनुवादकत्वम् । अन्यथा सत्यं ज्ञानं, नेह नानेत्यादिश्रुतिरप्यनुवादिनी स्यात् । ब्रह्मसत्त्वस्य लोकतो भ्रमाधिष्ठानत्वेन लिङ्गेन च, मिथ्यात्वस्य दृश्यत्वाद्यनुमानेनावेदमूलप्रवाहानादिविज्ञानवादादिना च प्राप्ते**

---

काण्डस्य ब्रह्मप्रमापकत्वं तु सम्भवत्येव; परमतात्पर्यविषयस्य ब्रह्मणोऽबाध्यत्वात्, बाधितेऽप्यर्थे पूर्वमबाधात्, 'सत्यस्य सत्यं, प्राणा वै सत्यं, तेषामेष सत्यः' इत्यादिश्रुतिभिः प्रपञ्चस्य न्यूनसत्त्वावगमाच्च, न्यूनसदर्थविषयकत्वरूपं व्यावहारिकं प्रामाण्यं कर्मकाण्डस्य सम्भवत्येव । त्वन्मते तु 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ हे वसन्त इत्याद्यर्थवत्, तत्त्वमसीत्यादौ अतत्त्वमसीत्याद्यर्थवच्च. जरद्गवादिवाक्येऽपि तादृशार्थस्सम्भवत्येव ॥

**लोकत इति** । अज्ञोऽहं सन्निति प्रत्यक्षादिनेत्यर्थः । ननु 'सत्यं ज्ञानमनन्तम्' इत्यादिवाक्येन ज्ञानस्य विनाशित्वादिरूपान्तशून्यत्वप्रतिपादनात्कथमुक्तप्रत्यक्षेण तस्यानुवादकत्वमिति चेत्, तथापि सत्यत्वज्ञानत्वांशे सन्नहं जानामीत्यादिप्रत्यक्षेणानुवादत्वसम्भवात्, निरवयवद्रव्यत्वादिनाऽनन्तत्वस्याप्यनुमानसम्भवाच्च । **मिथ्यात्वस्येति** । सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वस्येत्यर्थः । तेन विज्ञानवादे ज्ञानातिरिक्तार्थस्यालीकत्वात् स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वाबोधकत्वेऽपि नासङ्गतिः । विज्ञानवादशास्त्रस्य वेदमूलकत्वे तादृशानुमानादिनेव तेनापि वेदस्य नानुवादत्वमत उक्तं **अवेदमूलेति** । यदि विज्ञानवादशास्त्रमाधुनिकं स्यात्तदा प्रवाहानादिवेदानुवादकतायां न प्रयोजकं, प्रवाहानादित्वात्तु भवेत्प्रयोजकमित्याशयनोक्तं—**प्रवाहानादीति** । ननु विज्ञानवादे घटाद्याकारज्ञानस्य मिथ्यात्वाप्रतिपादनात् नेह नाने ति श्रुत्या च तत्प्रतिपादनान्न तेन सोऽनुवाद इत्यतो **वादादिनेति** । आदिना शून्यवादपरि-

रीति वाच्यम्; यदि हि दृष्टेऽप्यर्थे प्रत्यक्षं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत तदा श्रुतिसंवादविरहिणि दृष्टे कुत्रापि निश्शङ्कप्रवृत्तिर्न स्यात्। न स्याच्चैवं 'अग्निर्हिमस्य भेषजम्' इत्याद्यप्यनुवादकम्। न चेष्टापत्तिः; मानान्तरगृहीतप्रमाणभावप्रत्यक्षानिर्णीते मानान्तरस्याननुवादकत्वे जगत्यनुवादकत्वकथोच्छेदप्रसङ्गात्। न च 'सत्यं ज्ञानं, नेह नाना' इत्यादेरप्यनुवादकतापत्तिः। अनुवादकता हि न तावत्प्रत्यक्षेण; ब्रह्मत्वसामानाधिकरण्येन सत्त्वादिकं हि अनेन प्रतिपादनीयम्, तच्च न प्रत्यक्षगम्यम्। नाप्यनुमानेन,

---

ग्रहः। **ब्रह्मत्वसामानाधिकरण्येनेति**। ब्रह्मत्वसत्त्वयोस्सामानाधिकरण्यधीद्वारेत्यर्थः। तच्च तादृशप्रतिपादनं च। **गम्यमिति**। लभ्य[1]मित्यर्थः। ब्रह्म न सदित्यादिभ्रमनिवृत्तिरुक्तधीद्वारा जायमानात्सत्यत्वाद्युपलक्षिताखण्डविषयकज्ञानादेव न तु सन्नहमित्यादि प्रत्यक्षात्, तत्सत्त्वेऽपि तादृशभ्रमानुवृत्तेरित्युक्तप्रत्यक्षं नोक्तश्रुतिसमानाकारं, न वा तत्समानप्रयोजनमिति, न तेन तस्यानु[2]वादकतेति भावः। अथ भिन्नाकारत्वेऽपि समानप्रयोजनकं ब्रह्म सत्यं भ्रमादिघ्नत्वादित्यनुमानमनुवादकता[3]प्रयोजकमस्तु, तत्राह—**नापीति**। वस्तुतो ब्रह्म न सदित्यादिभ्रमनिवर्तकत्वेऽपि तत्त्वमसीत्यादिवाक्यगततत्पदलक्ष्यस्वरूपप्रमारूपप्रयोजनस्योक्तानुमानादसिद्धेः तदसिद्धौ च तत्स्वरूपाज्ञानानिवृत्त्या तत्र तज्ज्ञानप्रामाण्ये वा संशयेन तत्त्वमसीत्यादिवाक्यार्थे तज्ज्ञाने चाप्यौचित्यावर्जितस्य संशयस्य प्रामाण्यसंशयस्य वा दुर्वारत्वान्नानुमानेनोक्तश्रुतेरनुवादत्वशङ्केति ध्येयम्। न चोक्तस्वरूपे[4] लक्षणाज्ञानार्थं तद्धीः, असम्प्रज्ञातसमाधि[5] रूपविशेषणांशेऽनुद्बुद्धसंस्कारजन्यस्मरणरूपा वा वाच्येति तत एव

---

[1] लक्ष्य. [2] तस्या अनु [3] दित्यनुमानं वादकथा. [4] स्वरूपलक्षणाज्ञानार्थं. [5] रूपा विशेषणांशे.

**न हि तर्कस्सर्वदेशकालीनपुरुषसाधारण इत्यादिना प्रागेव निराकृतत्वात्। नापि प्रवाहानादिविज्ञानवादिमतेन; तस्यापौरुषेयश्रुत्यवधिकपूर्वत्वाभावात्। न च—सत्त्वश्रुतेस्सत्त्वप्रत्यक्षानपेक्षत्वान्न सापेक्षानुवादकत्वम्, निरपेक्षानुवादकत्वं तु धारावहनवन्नाप्रामाण्यहेतुः। उक्तं हि नयविवेके--'सापेक्षानुवादे हि न प्रमितिः। न तु दैवादनुवादे धारावहनवत् इति**

---

तत्स्वरूपाज्ञाननिवृत्तौ किमुक्तप्रमयेति वाच्यम्; अप्रमया तद्धिया तदज्ञानानिवृत्तेः, निरुद्धमनस्साक्षिणस्स्मृतेर्वा प्रमात्वाभावात्। अतएव तत्त्वंपदलक्ष्यौ शास्त्रेणैव प्रमातव्यावलौकिकत्वादिति सिद्धान्तबिन्द्वादावाचार्यैरुक्तम्। यत्तु उक्तश्रुतिः, न ब्रह्मत्वसामानाधिकरण्येन सत्त्वबोधिका अखण्डार्थत्वादिति; तदुक्तार्थानवबोधात्। **न हि तर्क इति।** येषामनुमानाकौशलेन विरुद्धतर्काभासेन वा अनुमाने भ्रमत्वशङ्का, तेषां तच्छून्या ब्रह्मसत्त्वादिधीरुक्तश्रुतिभ्यामेवेति· न तयोरनुवादकतेति भावः। विवरणादावविद्यादेर्भावरूपत्वाद्यनुमानं तु निपुणं पुरुषं प्रत्येव प्रवृत्तम्। अस्ति च तत्रापि 'नासदासीत्' इत्यादिश्रुतिरभावादिरूपासदन्यत्त्वबोधिका। यत्तु अहं सन्नित्यादिप्रत्यक्षं ब्रह्मसत्त्वानुमाने भ्रमत्वशङ्कानिवर्तकमिति, तत्साक्षिप्रत्यक्षस्य ब्रह्मत्त्वसामानाधिकरण्येन सत्त्वाविषयकत्वात् भ्रमसाधारण्यादेरुक्तत्वाच्च [1]परिदूनम्। **पूर्वत्वाभावादिति।** पूर्वं निश्चायकत्वाभावादित्यर्थः। अनिश्चायकत्वे हेतुं पौरुषेय[2]त्वं ज्ञापयितुं श्रुतौ तदभावं ज्ञापयति—**अपौरुषेयेति।** प्रतिसर्गं नास्तिकशास्त्राणां सत्त्वेपि सर्गादिकालीनवेदोत्पत्तेः पश्चादेव भ्रमप्रमादादिदोषयुक्तैर्नास्तिकैः क्रियमाणत्वात्, विज्ञानवादे घटादिज्ञानस्य मिथ्यात्वाङ्गी[3]कारात्, शून्यवादे च साक्षिसाधारणपक्षतावच्छेदकावच्छेदेन

---

[1] परिहृतम्. [2] यकत्वे तु पौरुषेय. [3] मिथ्यात्वादङ्गी.

**वाच्यम्; यतो लाघवादनुवादकत्वमेवाप्रामाण्ये प्रयोजकम्, न तु सापेक्षानुवादकत्वम्, अनधिगतार्थबोधकत्वस्य प्रामाण्यघटकस्य तावतैव गतार्थत्वात्। न च तर्हि धारावाहनबुद्धावप्रमाण्यम्; तस्या वर्तमानार्थग्राहकत्वेन तत्तत्क्षणविशिष्टग्राहकतयानुवादकत्वाभावात्। किन्तु श्रुतेरतत्परत्वे प्राप्तत्वमात्रमेव प्रयोजकम्। अन्यथा वैफल्येन स्वाध्याय-**

---

मिथ्यात्वसाधकस्य धीविषयत्वादिहेतोस्साक्षिव्यावृत्तधर्मावच्छेदेन मिथ्यात्वबोधकश्रुत्यनुवादत्वाप्रयोजकत्वात्, नेह नानास्तीत्यनेन सत्तादात्म्यविशिष्टमनूद्य तत्र मिथ्यात्वस्योक्तश्रुत्या विधानात्, शून्यवादे च [1]सद्रूपस्यैव अनङ्गीकारेण तथा [2]बोधनाभावात्, न नास्तिकशास्त्रेण श्रुत्यनुवादतेति भावः। यत्तु—"वेदस्यापौरुषेयत्वेन मानान्तरापेक्षयाऽनुवादत्वाभावे 'उरु प्रथस्व' इत्यादिमन्त्राणां पुरोडाशप्रथनादिरूपस्वार्थप्रकाशनसामर्थ्यरूपलिङ्गेन विनियोगसिद्धेः 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति' इति ब्राह्मणवाक्यमनुवादकमिति मन्त्राधिकरणोक्तं विरुध्येत' इति, तत्तुच्छम्; श्रौतलिङ्गादिषु श्रौतत्वादेरनादित्वात्, पौरुषेयशास्त्रेष्विवाप्रामाण्यशङ्काविरहाच्च। न हि मानान्तरमात्रापेक्षया श्रुतेरननुवादत्वं ब्रूमः। किंतु सादित्वपौरुषेयत्वादिनाऽवेदमूलकत्वसदोषत्वादिशङ्कायुक्तनास्तिकशास्त्राद्यपेक्षया। अतएव यत्र फलपर्यन्तपरीक्षादिना नाप्रामाण्यशङ्का, यथा अवघातादेर्वैतुष्यादिसाधनग्राहकलौकिकमाने तेनानु[3]वादताप्रसक्तेः व्रीहीनवहन्तीत्यादेर्नियमतात्पर्यकत्वं स्वीकृतम्। **वर्तमानेति**। वर्तमानकालविशिष्टेत्यर्थः। न

क्षणानामतीन्द्रियत्वान्न प्रत्यक्षतेति प्रत्यक्षमण्याद्युक्तम्[4] शङ्क्यम्, संयुक्तादिविशेषणतया स्थूलकालस्येव क्षणानामपि ग्रहणयोग्यत्वात्।

---

[1] तद्रूपस्यैव. [2] बाधनाभावात्. [3] मानेनानु. [4] प्रत्यक्षप्रामाण्याद्युक्तं.

**विधिग्रहणानुपपत्तेः। अपिचेयं सत्त्वश्रुतिरपि सत्त्वप्रत्यक्षसापेक्षत्वात्सापेक्षानुवादिन्येव। न हि सत्त्वप्रत्यक्षं विना तन्मूलशक्त्यादिग्रहमूलकशब्दप्रवृत्तिसम्भवः। अतएव यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिद्ध्यति; द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकार्थप्रवृत्तेः, प्रमात्रपेक्षया त्वनुवादकत्वम्। प्रमाता ह्यव्युत्पन्नः प्रथमं प्रत्यक्षादिभ्यो यथा अर्थमवगच्छति, न तथा आम्नायतः, तत्र व्युत्पत्त्यपेक्षत्वादिति वाचस्पतिमतमप्येतमर्थं संवादयति। तेनाम्नायस्य**

---

क्षणानां तादात्म्येन प्रतिबन्धकत्वकल्पने मानाभावात्। उक्तं हि शास्त्रदीपिकादौ[1] घटोऽत्र दृष्टो न वेति पृष्टो वदति—सन्निहितक्षणे मया दृष्ट इतीति। यदि च क्षणानामतीन्द्रियत्वे तुष्यसि, तदा क्षणविशिष्टेत्यस्य क्षणव्यावर्तितो यस्तत्तद्बुध्युत्पत्तिद्वितीयक्षणविनाशिस्थूलकालस्तद्विशि[2](ष्टपरतया धारावाहिकबुद्धीनां स्वोत्पत्तिक्षणद्वितीयक्षणविनाशिस्थूलकालविशि)ष्टार्थग्राहकत्वेन अननुवादता बोध्या। वस्तुतस्तु 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इति सिद्धान्ते स्वोत्पत्तिक्षणग्राहित्वं सर्वप्रत्ययानां न सन्निकर्षादिप्रयुक्तम्, किंतु ज्ञानसामान्यसामग्रीज्ञानोत्पत्तिक्षणाविशिष्टार्थविषयकमेव ज्ञानं जनयतीति नियमप्रयुक्तम्। अतएवेच्छादेर्मदंशादिविषयकत्वं न कारणनियम्यमिति पक्षधरादयः। एवंच वेदजन्यबुद्ध्यनुमित्यादिधाराभ्युपगमेऽपि न द्वितीयादिबुद्धेरनुवादतेति ध्येयम्। **अन्यथा वैफल्येनेत्यादि**। अध्ययनस्याक्षरावाप्त्यर्थत्वपक्षे अनुवादत्वप्रयुक्तवै[3]फल्यस्यादोषत्वेऽपि क्रतुविध्य[4]पेक्षितवाक्यार्थज्ञानार्थत्वपक्षे तादृशज्ञानस्यान्यतस्सिद्धौ तदुद्देशेनानुवादकवाक्याध्ययने 'स्वाध्यायोऽध्येतव्यः' इति विधिना प्रवृत्त्यनुपपत्तेरित्यर्थः।

---

1 शास्त्रदीपिकोन्मेकटीकादौ. 2 अयं कुण्डलितः पाठः क्वाचित्कः 3 वैकल्य. 4 क्वचिद्विध्य.

**व्युत्पत्त्यपेक्षत्वेन प्रत्यक्षसापेक्षत्वस्यैवोक्तेः । न च—वादिविप्रतिपत्तिनिरासप्रयोजनकत्वेन न निष्प्रयोजनानुवादकत्वम्, सप्रयोजनानुवादकत्वं तु न स्वार्थपरत्वविरोधि ; विद्वद्वाक्ये समुदायद्वित्वापादनरूपप्रयोजनवत्त्वेनानुवाद्यस्वार्थपरताया दृष्टत्वात् ।**

---

**प्रत्यक्षसापेक्षत्वस्येति** । न चैवं सत्यं ज्ञानमित्यादिवाक्यस्यापि शक्यसम्बन्धरूपलक्षणाज्ञानापेक्षितशक्यज्ञा नापेक्षणीयेन[1] सन्नहमित्यादिप्रत्यक्षेणानुवादस्स्यादिति वाच्यम्; ब्रह्मत्वसामानाधिकरण्येन सत्त्वाग्राहकत्वादिना उक्तरोदनस्य परिहृतत्वात् ॥

**विद्वद्वाक्य इति** । "य एवं विद्वान् पौर्णमासीं यजते स यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति; य एवं विद्वानमावास्यां यजते स यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति वाक्य इत्यर्थः । उक्तवाक्यं अपूर्वकर्मणोर्विधायकं वा, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिना पौर्णमास्यमावास्याकालयोगित्वेन श्रूयमाणानां षण्णामनुवादकं वेति संशये, अनुवादकत्वे वैयर्थ्याद्विधायकमेव । यदाग्नेय इत्यादौ यो दीक्षित इत्यादाविव च यच्छब्दस्य विधिविरोधित्वाभावात् । अत एव पौर्णमास्यमावास्यापदे अपि नामधेये । 'पौर्णमास्यां पौर्णमास्या यजते, अमावास्यायाममावास्यया' इति वाक्याभ्यामुक्तकर्मानुवादेन कालविधानात् । यद्यप्युक्तवाक्ये रूपं न श्रूयते तथापि 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इति वचनेन आज्यभागक्रमाम्नातानामपि ऋचां क्रमं बाधित्वा उक्तकर्मद्वयाङ्गत्वेन विधानान्मान्त्रवर्णिकाग्निसोमदेवताया ध्रौवाज्यरूपद्रव्यस्य च लाभसम्भवात्, यदाग्नेय इत्यादिवाक्यैरेव वोक्तकर्मणी पौर्णमास्यमावास्याशब्दाभ्यामनूद्य द्रव्यदेवताविधानसम्भवाद्रूपलाभः । एवञ्च 'दर्श-

---

[1] शक्यज्ञानमपि लक्षणीयेन.

पूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येन आग्नेयादियागसाधारण्येन तदसाधारण्येन [1]वा उक्तकर्मद्वयप्रयाजादीनां फलसम्बन्धः, कालयोगिषु द्वित्वस्येव द्वित्वेन प्रसिद्धाज्यभागादिषु कालयोगस्याप्रसिद्धत्वेन यजिसङ्कोचे विनिगमकाभावात्, राजसूयन्यायेन प्रकरणात्सर्वेषामेव फलसम्बन्धौचित्यात्, न तु षण्णामेवेति प्राप्ते नोक्तवाक्यं विधायकम्, यदाग्नेय इत्यादौ यच्छब्दस्य कर्तृसामानाधिकरण्याभावादप्रसिद्धप्रस्तूयमानार्थकत्वेन विध्यविरोधित्वेऽपि प्रकृते कर्तृसामानाधिकरण्येन प्रसिद्धकर्तृपरामर्शकत्वसम्भवात्, श्रूयमाणतच्छब्दपर्यन्तवाक्यार्थविधिविरोधित्वस्यानपवादात्, एवं शब्दसमभिव्याहारेण प्रसिद्धार्थकत्वनिश्चयाच्च । उक्तं हि वार्तिके—

क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् ।
कर्तृयुक्तस्स एवान्यप्रापितार्थानुवादकृत् ॥ इति ।

रूपालाभाच्च, वार्त्रघ्नीवाक्यं हि आज्यभागाङ्गतया लिङ्गक्रमप्राप्तानां वार्त्रघ्नीवृधन्वतीमन्त्राणां कालद्वारा कर्मद्वारा वा व्यवस्थामात्रविधायकम्, न त्वपूर्वस्य कर्माङ्गत्वस्य बोधकम्, गौरवात् । यदाग्नेय इत्यादिकमपि न द्रव्यदेवताविधायकम्; प्राप्तकर्मानुवादेनानेकविधाने वाक्यभेदात् । यदि हि नानागुणविशिष्टा भावना विधीयेत, तदा तदन्यथानुपपत्त्या कल्प्येषु विशेषणविधिषु न श्रूयमाणविधेर्व्यापारः[2] । भावनायाः प्राप्तत्वे तु विशेषणेष्वेव विधिव्यापारादेकगुणविधाने गुणान्तराक्षेपासम्भवात् विध्या[3]वृत्तिलक्षणो वाक्यभेदः । उक्तं हि वार्तिके—

शब्दव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ इति

ननु अनेकगुणान्वितभावनायामप्राप्तायामिव प्राप्तायामपि प्रवर्तनारूपविध्यन्वयस्य सम्भवादनेकगुणानां प्राप्तकर्मानुवादेन विधाने को दोष

---

1 चोक्तकर्म. 2 व्यापारः कल्प्यः. 3 विध्यन्तरावृत्ति.

इति चेत्, एकविधायकत्वस्य वाक्यस्वाभाव्यस्य भङ्ग एव दोषः । अन्यथा अनेकेषु प्रमापकत्वरूपतात्पर्यभेदेन वाक्यस्यावृत्त्यापत्तेः । न हि सकृत्प्रतिसंहितं वाक्यं नानार्थान्प्रमापयितुमीष्टे 'सकृदुच्चारितश्शब्दस्सकृदर्थं गमयती' ति व्युत्पत्तेः । किञ्च भावनायां विधिसम्भन्धस्य वाक्यान्तरेण लब्धत्वाद्गुणविशिष्टभावनायां विध्यन्वये तात्पर्यं वाच्यम् । तथा चैकप्रतिसन्धानविषयेण विधिपदेन नानागुणेषु विध्यन्वयधीर्नसम्भवति । न हि घटः पटो रूपीत्यत्र सकृत्प्रतिसंहितरूपिपदेनोभयत्र रूप्यन्वयः; 'सकृदुच्चरितश्शब्दस्सकृदर्थं गमयती' ति व्युत्पत्तेः । भावनायास्तु क्रियास्वाभाव्येन सकृत्प्रतिसंहिताख्यातोपस्थिताया अपि नानागुणान्वयार्हत्वात् गुणान्वयानुरोधेन[1] प्रधानावृत्तेरन्याय्यत्वाच्च । न चाग्नेय इत्यादौ देवताविशिष्टद्रव्यस्य तद्धितेनोक्तत्वादेकस्यैव तस्य प्राप्तकर्मभावनानुवादेन विधिसम्भव इति वाच्यम्; कारकत्वेनोपस्थितदेवताया हि भावनायामेवान्वयो, न तु द्रव्ये, कारकत्वेनानुपस्थितानामेव वृत्तिशब्दैकदेशार्थानां 'अश्वाभिधानीम्' इत्यादौ मिथोन्वयात् । अथैवमनुवादत्वे वाक्यं व्यर्थमिति चेन्न; एकेन पौर्णमासीपदेनामावास्यापदेन च आग्नेयादित्रिकयोरुक्त्या साहित्यप्रतीत्या समुदायसिद्धौ तद्गतद्वित्वस्यैव दर्शपूर्णमासाभ्यामित्यधिकारवाक्ये बोधादाग्नेयादि[2]षण्णामेव फलसम्बन्धस्य विद्वद्वाक्यरूपानुवादप्रयोजनत्वात् । यथाहि विद्वद्वाक्ये पौर्णमासीमित्याद्येकवचनं पौर्णमास्यादिकालयोगित्वरूपसामान्यगत[3]स्यैकत्वस्य पाशाधिकरणन्यायेन बोधकं, तथा अधिकारवाक्ये द्विवचनमपि समुदायान्तर्गताग्नेयादिरूपनामार्थैकदेशसमुदायद्वयगतद्वित्वस्य बोधकम् । यत्तु द्विवचनस्य बहुत्वे लक्षणा, तस्यां च स्वशक्यद्वित्वाश्रयस[4]मुदायघटकाग्नेयादिपर्याप्तत्वरूपसम्बन्धरूपायां तात्पर्यग्राहकं विद्व-

[1] नानागुणान्वयानुरोधेन. . . . . . . . . . . . . . [2] आग्नेयादियागानामेव. [3] सामान्यावगत. [4] समुदिताग्ने.

**अतएव तत्र वाक्यैकवाक्यतोक्ता । अन्यथा अर्थवादवत्पदैकवाक्यतैव स्यात्—इति वाच्यम्; प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासरूपप्रयोजनवत्त्वेन प्रमाणान्तरस्य सप्रयोजनतया स्वार्थपरत्वोक्तौ 'अग्निर्हिमस्य भेषजम्' इत्याद्यपि तेनैव प्रयोजनेन सप्रयोजनं स्वार्थपरं च स्यात् । तथाच न प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासार्थमन्यापेक्षा दृष्टान्ते तु समुदायानुवादेन द्वित्वसम्पादनस्योद्देश्यस्यान्यतो लब्धुमशक्य-**

द्वाक्यमिति मतं; तत्र लक्षणाकल्पने मानाभावः । नामार्थतावच्छेदके समुदाये स्वाश्रयतद्धटकत्वसम्बन्धेनाग्नेयादिनामार्थे वा द्वित्वाश्रयत्वसम्भवात् । न चैवं 'पौर्णमास्यां पौर्णमास्या' इत्यादिवाक्यद्वयं व्यर्थमितिवाच्यम्; त्रिकयोः प्रयोगद्वयविधायकत्वस्यैकादशे वक्ष्यमाणत्वात् । अन्यथा आग्नेयादीनां प्रत्येकमुत्पत्तिवाक्य कालयोगात्प्रत्येकं प्रयोगापत्तेरिति द्वितीयद्वितीये स्थितम् ॥

स्वार्थपरतां घटयति—**अत एवेति । वाक्यैकवाक्यतेति ।** अधिकारवाक्यापेक्षितसमुदायप्रतीतिप्रयोजकतेत्यर्थः । सा चैकपदोपात्तत्वेन साहित्यप्रतीतिद्वारेत्युक्तम् । **द्वित्वसम्पादनस्येति ।** अधिकारवाक्याधीनद्वित्वबोधनस्येत्यर्थः । ननु—प्रत्यक्षासिद्धेऽपि भावरूपाज्ञाने विप्रतिपत्तेस्त्वयाङ्गीकारात्तत्र श्रुत्यनुमानाद्युपन्यासाच्च, प्रत्यक्षविषयत्वादिना मीमांसकादिसिद्धेऽपि वाय्वादौ तार्किकादीनां विप्रतिपत्तेश्च, प्रत्यक्षे विप्रतिपत्त्याहितप्रामाण्यसंशयेन तद्विषयेपि संशयसम्भवात्तन्निरासरूपं प्रयोजनं सत्त्वानुवादश्रुतेस्सम्भवत्येवेति—चेत्, भ्रान्तोऽसि, नह्यज्ञानं भावरूपत्वेन कस्यापि प्रत्यक्षासिद्धम्? येन तत्र तद्रूपेण विप्रतिपत्तिर्न स्यात् । न वा प्रत्यक्षो वायुरित्यादौ तार्किकादीनामिव व्यवहारकालाबाध्यो घटादिरित्यत्र कस्यापि विप्रतिपत्तिः । त्रि[1]कालाबाध्य-

[1] त्रिकालबाध्य.

**तया तेन प्रयोजनेन स्वार्थपरत्वस्य वक्तुं शक्यत्वात् ।**

विषयकत्वं तु श्रुतेः पूर्वमेव निरस्तम् । अन्यथा प्रत्यक्षादिगृहीत-सत्वविलक्षणसत्वग्राहकत्वादननुवादत्वस्यैव सत्वात्सप्रयोजनानुवादत्वोक्तिस्तव विरुध्येत । **तेन प्रयोजनेनेति** । एतेन—वादिविप्रतिपत्ति-निरासप्रयोजनेन न स्वार्थपरता, न हि तत्स्वतः पुरुषार्थः, न वा चित्रादिफलपश्वादिवत्सर्वेषामर्थिनां सुखप्रयोजकत्वेन काम्यम्, न वा विद्व-द्वाक्यीयसमुदायसिद्धिरिव स्वतः पुरुषार्थस्वर्गादिमद्वाक्यापेक्षितम् । न च—प्रपञ्चसत्त्वस्य विप्रतिपत्त्यभावेन निश्चये कर्मानुष्ठानात्स्वर्गादि-मत्कर्मवाक्यापेक्षित एव विप्रतिपत्तिनिरास इति—वाच्यम्; विधिषु श्राद्ध एवाधिकारीत्यनेन मिथ्यात्वनिश्चयाभावस्यैव कर्मानुष्ठानेऽपेक्षा भामत्यादावुक्ता न तु सत्वानिश्चयस्य । यदा तु विचारसहकृतबलवत्प्र-माणेन प्रपञ्चो मिथ्यात्वेन निश्चितः, तदा न कर्मानुष्ठानेऽधिकारः, नवा सत्यत्वनिश्चयस्य तदोपयोगः, पूर्वप्रवृत्तसर्वमानं बाधित्वैव मिथ्या-त्वनिश्चयस्य जायमानत्वादित्यादि सूचितम् ॥

यत्तु—"अग्निर्हिमस्य भेषजम्" इत्यादावपि द्वीपविशेषवर्तिनां विप्रतिपत्तेस्तन्निरासरूपेण प्रयोजनेन स्वार्थपरत्वमिष्टम्, पुरुषविशेषं प्रत्येव च तस्यानुवादकत्वमिति, तत्तुच्छम्; विधिसमभिव्याहृतानामर्थवादानां विध्येकवाक्यतानुरोधेन विध्यर्थान्वयिस्तुत्यर्थकत्वस्यावश्यकत्वात्तत्प्रयो-नेनैव सप्रयोजनार्थकत्वाच्च । न चैवं तादृशार्थवादेषु स्वार्थपरतापत्ति-स्तवा[1]सङ्गतति—वाच्यम्; यदि विश्वं सत्यमित्यादिश्रुतेस्तुतिपरत्वं विध्येकवाक्यतासम्पादकमुत्सृज्य विप्रतिपत्तिनिरासरूपप्रयोजनेन स्वार्थ-परता स्यात्, तदा अग्निर्हिमस्येत्यादावपि तथा स्यात्, अविशेषादि-त्यभिप्रायेण तदापत्तेराचार्यैरुक्तत्वात् । किञ्चानारभ्याधीतानां पर्णता-दीनामपूर्वसाधनीभूतजुह्वाद्यङ्गत्वं न स्यात्, जुह्वादीनां पर्णमयत्वादौ

[1] तवागतेति

**एतदभिप्रायं च पूर्वोक्तं नयविवेकवाक्यम् । न चानुवादकत्वेऽपि नैष्फल्यमात्रं नत्वप्रामाण्यम्, याथार्थ्यमेव प्रामाण्यं न त्वनधिगतार्थगन्तृत्वे सति याथार्थ्यमिति–वाच्यम्? तात्पर्यविषये शब्दः प्रमाणम् । "यत्परश्शब्दः स शब्दार्थः" इत्यभियुक्ताभ्युपगमात् । अन्यथा स्वाध्यायविधिग्रहणानुपपत्तेरुक्त-**

कस्यचिद्विप्रतिपत्तिसम्भवेन तन्निरासप्रयोजनकानुवादतायामपि स्वार्थपरतासम्भवात्, दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वात् । विप्रतिपत्तिनिरासस्य पुरुषमात्रप्रयोजनापर्यवसानं तु विश्वसत्यत्वश्रुतावपि तुल्यमित्युक्तम् । एवं पूषानुमन्त्रणमन्त्रादीनामुत्कर्षो न स्यात्, विप्रतिपत्तिनिरासार्थकस्वार्थपरत्वसम्भवे लिङ्गकल्प्यश्रुत्या विनियोगस्यान्याय्यत्वादित्याशयेन "अग्निर्हिमस्य भेषजम्" इत्यादीत्यत्रादिपदस्योक्तत्वात् । अग्निर्हिमस्येत्यादावुक्तापत्तौ नाचार्याणामास्था । **एतदभिप्रायमिति** । सापेक्षानुवादे हि न प्रमितिः, न तु दैवादनुवादे, धारावहनवदिति नयविवेकोक्तेर्निष्प्रयोजनानुवादे न प्रमितिः । प्रयोजनवदनुवादे तु प्रमितिः, यथा धारान्तःपातिद्वितीयादिबुद्धिः केवलघटाद्यंशेऽनुवादरूपापि तत्तत्क्षणविशिष्टविषयकाज्ञाननिवृत्तिरूपप्रयोजनसत्त्वेन प्रमितिरित्यर्थ इति भावः । एवंचान्यतोऽसिद्धप्रयोजनवदबाधित विषय एव प्रमात्वलक्षणे निवेश्य', न तु तत्राज्ञातत्वमपि निवेश्यम् । औत्पत्तिकसूत्रस्थेनानुपलब्धिपदेनापि लक्ष्यभूतप्रमाज्ञानीयप्रकृतप्रयोजनवदुपलब्धेरविषयत्वविवक्षणान्न तदनुपपत्तिरिति बोध्यम् ॥

वस्तुतस्तु विद्वद्वाक्यादीनां न स्वार्थपरतायामुक्ताधिकरणस्यतात्पर्यम्? अपितु स्वार्थानुवादाधीनसमुदायसिद्धिद्वारा अधिकारवाक्य[1]प्रमेये षण्णां फलसम्बन्धे तेषां तात्पर्यमित्यत्र तस्य तात्पर्यं, धूमोऽस्तीति वाक्यस्य वह्निमत्तायामिव । एवंचाधिगतार्थे प्रमात्वस्वीकारे बीजाभा-

---

1 प्रमेयैः.

**त्वाच्च । न ह्यन्यतस्सिद्धेऽर्थे शास्त्रतात्पर्यम् । अतो न तत्र प्रामाण्यम् । यदाहुर्भट्टाचार्याः—'अप्राप्ते शास्त्रमर्थवत्' इति । नन्वः यमनुवादो न 'वायुर्वै क्षेपिष्ठा देवता इत्यादिवत् स्तुत्यर्थे न वा दध्ना जुहोतीत्यादिवदन्यविधानार्थः; अनुवाद्यत्वेऽप्यन्यविधानाय प्रमाणानूदितस्य तात्त्विकत्वनियमात् । न हि 'व्रीहीन् प्रोक्षति' इत्यादावारोपितव्राह्यादेर्धीः, अनुवाद्यस्यासत्त्वे ह्याश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुमितिवेद्य इवानुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितस्स्यादिति चेन्न; अस्यानुवादस्याप्राप्तान्यप्राप्त्यर्थत्वात् । न च प्रामाणानूदितस्य तात्त्वि-**

---

वेन सौत्रमुक्तपदं यथाश्रुतार्थकम् । विश्वसत्वस्य च मानान्तराधिगतत्वान्न तत्र श्रुतेस्तात्पर्यम् । विप्रतिपत्तिनिरासाधीनतद्धीद्वारा कर्मानुष्ठानतात्पर्यकत्वं तु न तस्यास्सम्भवति ! प्रपञ्चसत्यत्वविप्रतिपत्तावपि मिथ्यात्वनिश्चयाभावेन कर्माधिकारानपायादित्युक्तम् । तत्सम्भवेऽपि तस्या न विश्वसत्वपरता सिद्धा, किन्तु कर्मानुष्ठानपरतेति विश्वमिथ्यात्वं निर्विघ्नमेव । अत एव अथ[2] व्यावहारिकसत्वपरेत्यादिना आचार्यैरग्रे तस्याः कर्मानुष्ठानपरत्वं वक्ष्यत इति ध्येयम् ॥

**न ह्यन्यत इति ।** यत्तु ज्ञातेऽपीष्टार्थे क्रियासमभिव्याहारेण तात्पर्यं वाक्यस्याविरुद्धं बालभाषितस्येवेति । तत्तुच्छम्? बालभाषितस्य हि अन्यतोऽसिद्धसुखविशेषजनकवाक्यार्थधीप्रयोजकत्वात्स्वार्थे धूमोऽस्तीति वाक्यस्य वह्न्यनुमिताविव सुखसाक्षात्कारे वा तात्पर्यं युक्तम् । प्रकृते तु सत्वश्रुतेरन्यतोऽसिद्धप्रयोजनाभावान्न तदित्युक्तत्वात् । **स्तुत्यर्थ इति ।** स्तुतिधीद्वारमित्यर्थः । **इत्यादिवदिति ।** इत्यादौ जुहोतीत्याद्यंश इवेत्यर्थः । **अप्राप्तेति ।** अज्ञातनिषेधज्ञापनेत्यर्थः । तथा-

---

[1] अथवा.

कत्वनियमः, स्वप्नाध्याये नेदं रजतमिति वाक्ये च व्यभिचारात्। अथ तत्र ज्ञानविषयतया निषेध्यतया चानुवाद इति न तात्त्विकत्वम्, तर्हि प्रकृतेऽपि 'नेह नाना' इति निषेधार्थत्वादस्यानुवादस्य न तात्त्विकत्वमिति गृहाण। अतएव न वाक्यार्थस्यासत्त्वप्रसङ्गः, तात्पर्यविषयस्य सत्त्वात्। अथ 'किञ्चन' इत्यनेनैवानुवादस्य कृतत्वात्किमधिकेनेति चेन्न; सामान्यतो निषेधस्य हि किञ्चनेत्यनेन निषेध्यसमर्पणेऽपि

---

चान्यविधानायैवायमनुवाद इति भावः। **स्वप्नाध्याय इति**। स्वप्नफलोक्तिरूपे ग्रन्थ इत्यर्थः। **ज्ञानविषयतया**। भ्रमविषयतया। **निषेध्यतया** स्वसमानाधिकरणनिषेधप्रतियोगितया। **इति न तात्त्विकत्वमिति**। भ्रमविषयादेस्तात्त्विकत्वासंम्भवो विधानायानुवाद्यस्य ज्ञानमात्रमपेक्षितम्, न तु तात्त्विकत्वमिति भावः। **निषेधार्थत्वात्** स्वसमानाधिकरणनिषेधप्रतियोगिबोधकत्वात्। **न तात्त्विकत्वमिति** तद्विषयस्य विश्वसत्यत्वस्येत्यादिः। **अतएव** उक्तानुवादस्याज्ञातनिषेधज्ञापनार्थत्वादेव। **तात्पर्यविषयस्य** निषेधस्य **सत्त्वात्** तात्त्विकत्वात्। निषेधस्य मिथ्यात्वघटकस्य व्यावहारिकत्वपक्षे तदेव सत्त्वशब्दार्थः। तथाच तत्पक्षेपि कर्मकाण्डवद्व्यावहारिकप्रामाण्यं वाक्यस्याक्षतमिति भावः। यत्तु अनुवाद्यासत्त्वे तन्निष्ठो विधेयसंसर्गोप्यसन् स्यादिति परेणोक्तं, तदप्यत एव परास्तं बोध्यम्। नेदं रूप्यमित्यादावसत्यपि रूप्ये निषेधस्य विधेयस्य परेण तात्त्विकप्रतियोगित्वरूपसंसर्गाभ्युपगमात् 'व्रीहीन् प्रोक्षति' इत्यादौ प्रातीतिकव्रीह्यादिकं नोद्देश्यं, अपूर्वसाधनत्वात्, न हि सर्वमनुवाद्यं विधेयापेक्षया न्यूनसत्ताकमिति ब्रूम इति ध्येयम्। **सामान्यत इति**। आकाशत्वादिनानाधर्मैरित्यर्थः। **किंचनेत्यनेनेति**। सर्वनाम्नेति शेषः। **निषेध्यसमर्पणेऽपीति**। आकाश-

**विशिष्य निषेधे विशिष्य निषेध्यसमर्पणस्योपयोगात्। अथ निषेधवाक्यस्य न निषेध्यसमर्पकवाक्यान्तरापेक्षा; अन्यथा 'न**

---

त्वादिविशेषरूपैर्निषेध्यसमर्पणेऽपीत्यर्थः। **विशिष्य निषेध इति**। आकाशत्वादिप्रत्येकनिषेधांशे इत्यर्थः। **विशिष्य निषेध्यसमर्पणस्य** आकाशत्वादिप्रत्येकरूपेण निषेध्यबोधकवाक्यस्य। **उपयोगात्** किंचनेति प्रक्रान्तपरामर्शिसर्वनाम्ना बोधनायोपयोगात्। तथाच विश्वसत्यतात्वादिप्रत्येकरूपेण विश्वं सत्यमित्यादिवाक्ये 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यादिवाक्ये चाकाशत्वादिना यत्प्रक्रान्तं तदेव सर्वनाम्ना परामृश्य निषिध्यत इति सर्वनाम्ना परामर्शार्थं पूर्वं विश्वसत्त्वादिकं श्रुत्याऽनूद्यत इति भावः। अथवा किंचनेत्यनेन सामान्यतो निषेधाधिकरणा[1]नन्तर्भावेन निषेध्यसमर्पणेऽपि विशिष्य तत्तदधिकरणान्तर्भावेन निषेधं प्रति तत्तदधिकरणे निषेध्यसमर्पणस्य प्रतियोगिप्रसक्तेरुपयोगादित्यर्थः। निषेधाधिकरणविशेषे प्रतियोगिप्रसञ्जकतयोक्तवाक्यानामुपयोग इति भावः। विशिष्य प्रक्रान्तबोधकसर्वनाम्नो विशेषरूपबोधकवाक्यसापेक्षत्वात् ब्रह्मणि प्रपञ्चनिषेधवाक्ये तत्र प्रपञ्चप्रसञ्जकवाक्यस्यैव 'विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सोम्य स आदेशः, तत्सत्यं स आत्मा, सत्यस्य सत्यम्, तेषामेष सत्यम्' इत्यादिवाक्येषु प्रपञ्चासत्यत्वबोधकेषु प्रपञ्चसत्यताप्रसञ्जकस्य विश्वं सत्यमित्यादिवाक्यस्योपयोगाच्च। एवं 'सोम्य सः' इत्यस्य यथा मृदेव सत्या न तद्विकारः, एवं ब्रह्मैव सत्यं न तद्विकार इत्यर्थकत्वम्, तत्सत्यमित्यस्य तदेव सत्यमित्यर्थकत्वम्। 'ऐतदात्म्यमिदं सर्वम् इत्येतत्पूर्ववाक्यपरिपोषणस्य तदैव सम्भवात्। एतेन किंचिनेत्यनेन सामान्यतो निषेध्यसमर्पणेऽपि विशिष्य निषेध्यसमर्पणस्य तदसाध्यत्वेन तत्र विश्वं सत्यमित्याद्युपयुक्तमित्यर्थोऽसङ्गतः, सर्वनाम्नः किंशब्दस्य विशेषरूपेण दृश्यत्वादिसामान्यरूपेण[2] वा उप-

---

[1] करणादन्तर्भावे निषेध्य. [2] चोपस्थापक.

**कलञ्जं भक्षयेत्' इत्यादावपि निषेध्यसमर्पणार्थं 'कलञ्जं भक्षयेत्' इत्यादिवाक्यान्तरसापेक्षत्वप्रसङ्ग इति चेन्न ; सर्वत्रापेक्षानियमाभावात्, सति सम्भवे प्रकृते त्यागायोगात्, 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इत्यादौ वाक्यान्तरप्राप्तस्य निषेधदर्शनाच्च। न च तद्वदेव विकल्पापत्तिः, सिद्धे वस्तुनि विकल्पायोगात्, ग्रहणाग्रहणवाक्ययोरुभयोरपि मानान्तराप्राप्तविषयत्वेन तुल्यबलत्ववदिह सत्त्वश्रुतेर्मानान्तरप्राप्तविषयत्वेन निषेधश्रुतेश्चाप्राप्तविषयत्वेन तुल्यबलत्वाभावाच्च। अत**

---

स्थापकत्वसम्भवादिति परास्तम् । यद्यपि विश्वं सत्यमित्याद्यनुवादः स्तुत्यर्थ इत्यपि सम्भवति । उक्तं चाचार्यैस्तद्व्याख्यानावसरे तथा पूर्वम् । तथाप्यन्यविधानार्थताया अपि सम्भवात् परेणात्र तद्दूषणस्य कृतत्वाच्च तन्निरासपूर्वकं सापि व्यवस्थाप्यत इति बोध्यम् । **कलञ्जं भक्षयेदित्यादीति** । तथाच प्रतियोगिप्रसञ्जकवाक्याभावेऽपि विशेषरूपेण निषेधाधिकरणान्तर्भावेन च प्रतियोगिप्रसक्तेर्मानान्तरेण सम्भवाद्यथा निषेधोपपत्तिर्न कलञ्जमित्यादौ, तथा नेह नानेत्यादावपीति भावः । **सति सम्भव इति** । यथा प्रत्यक्षादिमानान्तरेण विशेषरूपेण प्रतियोगिप्रसक्तिस्सम्भवति, तथा उक्तवाक्येभ्योपीत्यर्थः । यद्यप्युक्तवाक्यानि विनापि प्रसक्तिरस्ति, तथापि निषेधवाक्यार्थतात्पर्यज्ञापकतया तेषामुपयोगः । लोकेऽपि हि मानान्तरप्रसक्तनिषेधवाक्यतात्पर्यं मानान्तरानुवादेन ज्ञापयन्ति—इदं रजतमिति दृष्टं परन्तु न तथेति, एवं विश्वं सत्यमिति प्रमिणन्ति, परन्तु न सत्यमिति निषेधतात्पर्यज्ञापको मानान्तरानुवादः । अतएव चनेत्यस्य [1] छेदेन व्याख्यानाभावेऽपि न क्षतिरित्यपि बोध्यम्! ननु सत्यत्वासत्यत्वयोरेकत्रासम्भवेऽपि क्वचिद्दृश्ये चासत्यत्वं क्वचिद्दृश्ये च सत्यत्वं स्यात्तत्राह—**षोडशीति** । आशङ्कते—

---

[1] भेदेन.

**एवं निषेधवाक्यप्राबल्यात्तदनुरोधेनेतरन्नीयते। अथाप्राप्तान्य-प्राप्त्यर्थत्वेऽप्यलौकिकस्य 'आपश्च न प्रमिणन्ति' इत्यादिपदार्थसंसर्गस्य विधेयस्य सत्त्वान्न निषेध्यार्थानुवादकत्वमिति चेन्न; तदन्यपरत्वस्य प्रागेवोक्तत्वात्। ननु 'यत्तन्न' इति निषेधानुवादलिङ्गाभावान्नानुवादः, न; यत्किञ्चिल्लिङ्गाभावेन लैङ्गिकाभावस्य वक्तुमशक्यत्वात्। ननु तर्हि 'तत्सत्यम्' इत्याद्यपि 'न सत्तन्नासदुच्यते' इति 'असद्वा इदमग्र असीत्' इति च निषेधाय 'सन् घटः, सत् घटज्ञानं, सत् सुखस्फुरणम्' इत्या-**

---

**अप्राप्तान्येति।** **अलौकिकस्य** लौकिकमानाविषयस्य। **आपश्चनेति।** व्यापनशीला देवाः चन अपि प्रमिणन्तीति देवप्रमेयत्वसंसर्गस्येन्द्रकर्तृक जगत्सर्जनादौ विधेयस्य सत्त्वादित्यर्थः। **अन्यपरत्वस्य** स्तुतिपरत्वस्य निषेधाविधानपरत्वस्य वा। तथाच उक्तसंसर्गस्य न विधेयत्वम्। इन्द्रकर्तृकव्यावहारिकसत्यजगत्सर्जनस्य श्रुत्यादिना प्रमेयत्वस्य साक्षिसिद्धत्वात्, अस्मदादिकं प्रतीव देवान्प्रत्यपि श्रुत्यादिना तस्य प्रमेयत्व सम्भवात्, अनुमानादिना देवप्रमेयत्वस्यास्माभिर्ज्ञातुं शक्यत्वात्। एवं न हिंसन्तीत्यर्थोपि न विधेयः; तस्यापि मानान्तरेण ज्ञातत्वात्, निष्प्रयोजनत्वात् तद्धिंसाबोधकवाक्यान्तराविरुद्धत्वाच्च। किन्तु स्तुतौ निषेधे वा तात्पर्यमुक्तवाक्यस्येति भावः। **यत्तन्नेति**—निषेधार्थानुवादस्य यत्तदिति यल्लिङ्गं तदभावादित्यर्थः। न कलञ्जं भक्षयेदित्यादौ निषेधार्थेऽपि प्रतियोग्यनुवादे तादृशलिङ्गाभावान्न तदावश्यकमित्याह— **न यत्किञ्चिदिति।** **लिङ्गाभावेन** अनुवादत्वव्यञ्जकाभावेन। यत्तु एकमप्यनुवादलिङ्गं प्रकृते नेति, तत्तुच्छम्; रजतमिदं ज्ञातम्, परन्तु नेदं रजतमित्यादाविव ज्ञातार्थकत्वस्यैव तल्लिङ्गस्य सत्त्वात्। सन् घट इत्यादौ ब्रह्मणि सत्त्वसम्बन्धो न भातीत्यत आह—**सद्घटज्ञानमिति।** ज्ञानं वृत्तिरूपं सत्त्वेन भातीत्यत आह—**सत्सुखेति।** सुखस्फुरणं तु

**दिसिद्धब्रह्मसत्त्वानुवादि स्यादिति चेन्न; ब्रह्मत्वसामानाधिकरण्येन सत्त्वस्य प्रत्यक्षादिभ्योऽप्राप्तेः, शून्यवादप्रसङ्गेन तस्य निषेधायोगाच्च, 'इदं सर्वं यदयमात्मा' इत्यत्र अनुवादलिङ्गसम्भवेन कल्पनाच्च। एवमानन्दश्रुतेरपि 'अदुःखमसुखं समम्' इति निषेधाय न प्रत्यक्षप्राप्तानन्दानुवादित्वम्, दुःखसाहचर्येण**

---

चिदेव, सिद्धान्ते सुखादौ वृत्त्यनङ्गीकारात्। **ब्रह्मत्वेति।** ब्रह्मत्वसामानाधिकरण्येन या सत्त्वप्राप्तिर्ब्रह्म सत्यमिति धीः तस्याः प्रत्यक्षादिभ्योऽभावादित्यर्थः। तथाच उक्तप्रत्यक्षादिना तत्सत्यमित्यादिवाक्यं नानुवादः, उक्तप्रत्यक्षासिद्धं [1]यत्तद्ब्रह्म न सत्यमिति भ्रमनिरासरूपं प्रयोजनं, तत्साधकत्वात्। यदि ह्युक्तं प्रत्यक्षं ब्रह्मसत्यमित्याकारं स्यात्, तदा उक्तप्रयोजनसाधकं स्यात्। तत्सत्यमिति वाक्यजमखण्डज्ञानं तु ब्रह्म सत्यमित्याकारधीद्वारकत्वादुक्तप्रयोजनकामिति भावः। अथवा ब्रह्मत्वसत्त्वयोस्सामानाधिकरण्यं ताभ्यामुपलक्षितयोरैक्यम्, ब्रह्मत्वविशिष्टे सत्त्वसम्बन्धश्च चतुर्धा उक्तेषु सामानाधिकरण्येष्वभेदे सामानाधिकरण्यस्याखण्डैक्यपर्यवसानात्। विशेषणविशेष्यभावे सामानाधिकरण्यस्य च समानसत्ताकधर्मद्वयसामानाधिकरण्ये पर्यवसानात्तयोरप्राप्तेरित्यर्थः। तथाचोक्तप्रत्यक्षं नाखण्डविषयकम्। [2]न ब्रह्म न सत्यमिति भ्रमनिवर्तकमिति न तेन तत्सत्यमिति श्रुतिरनुवाद इति भावः। इदं सर्वमित्यादौ शाखान्तरीयवाक्ये निषेधार्थानुवादे यदिति लिङ्गस्य दृष्टत्वात्तदेकार्थतया विश्वं सत्यमित्यादावपि तत्कल्प्यत इत्याह—**इदं सर्वमिति।** न चैवमपि यत्तदिति लिङ्गाभावस्तदवस्थ इति वाच्यम्; नेह नानास्ति किञ्चनेत्यादौ किंशब्दस्य, नेतीत्यादौ चेतिशब्दस्य यत्पदार्थपरामर्शकत्वेन तच्छब्दतुल्यत्वात्, यत्तदोर्नित्यसम्बन्धेन यच्छब्दबलादेव तच्छब्दकल्पनसम्भवाच्च॥

---

[1] यत् ब्रह्म न सत्यमिति इति पा, [2] ब्रह्म सत्यमिति.

वस्तुतस्तु यत्तदोरेकतरेणोत्तरवाक्यस्थेनान्यतरस्य पूर्ववाक्यस्थस्य समभिव्याहारो नापेक्ष्यते । अतएव—

साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ॥

इत्यादौ तथा दृश्यत इति मम्मटोक्तेस्तच्छब्दसमानार्थकिमितिशब्दयोरप्युत्तरवाक्यस्थयोर्यच्छब्दसमभिव्याहारानपेक्षत्वात् । प्रकृते यच्छब्दावश्यकत्वं परेण मौढ्यादेवाशङ्कितमिति ध्येयम् । अत्र सन् घट इत्यादौ घटाद्युपहितसद्रूपस्यैव भानेन[1] शुद्धब्रह्माभानात्तत्सत्यमिति श्रुत्यनुवादत्वं परस्यासम्भवदुक्तिकमेव । न च—

सर्वप्रत्ययवेद्येऽस्मिन्ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयश्शब्देन प्रतिपाद्यते ॥

इति मण्डनोक्तेश्शुद्धं ब्रह्म सर्व[2]धीवेद्यमिति वाच्यम्; व्यवस्थिते घटाद्यवच्छिन्नसद्रूपेण विशेषेणावस्थिते ब्रह्मरूपे सर्वधी[2]वेद्येऽपि प्रपञ्चस्य प्रकृष्टो बाधरूपो विलयो यस्मा[3]ज्जातः तत्तादृशं ब्रह्म शब्देन श्रुत्यैव प्रतिपाद्यत इति तदर्थात्—

परागर्थप्रमेयेषु या फलत्वेन[4] सम्मता ।
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥

इति वार्तिकोक्तेरपि वेदान्तमेयशुद्धब्रह्माणि घटाद्यवच्छिन्नस्फुरणरूपफलतादात्म्यमर्थः । तेन घटस्फुरणं सदित्यादिप्रत्यक्षमपि नोक्तश्रुत्यनुवादताप्रयोजकम् । न चोपहितविषयकबुद्धौ शुद्धस्याभाने तदुत्तरं शुद्धसंशयादि स्यादिति वाच्यम्; शुद्धसंशयादावपि तस्याविरोधित्वात् । ब्रह्मणश्शुद्धस्योपस्थित्यभावेनोक्तापत्त्यसम्भवात् उपस्थितौ वा उक्तापत्तेरिष्टत्वाच्च ॥

---

[1] भाने इति. [2] सर्वधा. [3] ज्ञानात्तादृशं, ज्ञातादिति वा पा. [4] फलत्वेन हि.

**सुखस्यापि वैषयिकस्यैव ग्रहणेन तन्निषेधाय ब्रह्मरूपसुखानुवादायोगात् । एतच्च सर्वमुक्तं विवरणे—निष्प्रपञ्चास्थूलादिवाक्यानुसारेण 'इदं सर्वं यदयमात्मा' इत्यादीनि निषेधसमर्पकत्वेनैक्यतां प्रतिपद्यन्ते । सुषुप्तौ निष्प्रपञ्चतायां पुरुषार्थत्वदर्शनात्'**

---

**वैषयिकस्येति ।** न च दुःखपदवाच्यस्येव सुखपदवाच्यस्यापि सर्वस्य ग्रहणौचित्येन आत्मसुखस्यापि निषेध्यतेति वाच्यम्; विषयसम्बन्धजन्यवृत्ति[1]विशेषावच्छिन्नात्मनस्सुखपदवाच्यत्वेन तस्य सर्वस्य निषेध्यत्वेऽपि तत्पदलक्ष्यसुखस्वरूपनिषेधासम्भवात् । **इदं सर्वं यदयमात्मेत्यादीनीति ।** नेतिनेतीत्यात्मेत्यादौ निष्प्रपञ्चात्मबोधार्थमिदं सर्वमित्यादिना सप्रपञ्चात्मानुवाद इत्यर्थः । इदं सर्वमित्यादौ बाधायामपि सामानाधिकरण्यसम्भवादाह— **आदीति ।** तेन 'मयि सर्वं प्रतिष्ठितं, सच्च त्यच्चाभवत्' इत्यादिसङ्ग्रहः । **ऐक्यतां** एकवाक्यतां । **पुरुषार्थत्वदर्शनादिति ।** सुषुप्तौ भासमानं साक्षिसुखं यद्यपि जाग्रत्स्वप्नयोरपि भाति, मा न भूवं हि भूयासमिति परप्रेमदर्शनादन्येच्छानधीनेच्छारूपस्य परप्रेम्णः सुखरूपत्वेनाभासमाने आत्मन्यसम्भवात् । भासत एव परमप्रेमास्पदत्वलक्षणं सुखं जाग्रदादाविति विवरणोक्तेश्च; तथापि कष्टं कर्मेति लोकानुभवात्, जाग्रत्स्वप्नयोस्सदा स्थूलसूक्ष्मोपाधिक्रियाजन्य[2]दुःखसत्त्वात्, विषयसुखानामपि—

न तदस्ति सुखं लोके यन्न दुःखकरं भवेत् ।
तदसम्प्राप्तिविच्छेदक्षयेष्वसुख[3]कृद्यतः ॥

इति वार्तिकोक्तरीत्या तदप्राप्त्यादिप्रयुक्तदुःखमूलत्वाच्च सुषुप्त्यवच्छिन्नसुखं जाग्रदादिसुखापेक्षयाऽतिशयितम् । लोकानां च तथाऽननुभवो[4] विवेकाभावात्, नरकसुखासक्तसूकरादिवत् । तथाच दुःख-

---

[1] विषयाव. [2] जनक. [3] क्षयेऽप्यसुख. [4] अनुभवः.

**इति । अथ—निष्प्रपञ्चता न पुरुषार्थः, मूर्छायां तत्त्वादर्शनात्; न च तदा तदज्ञानमात्रं न तु तदभाव इति वाच्यम्; समं सुषुप्तावपीति—चेन्न; मूर्छायां स्वरूपसुखस्फुरणाभावात् । तथा च सूत्रम्—'मुग्धेऽर्धसम्पत्तिः परिशेषात्' इति । सुषुप्तिमुक्तिकालीनानिष्प्रपञ्चतायां स्वरूपसुखानुभवेन तस्याः पुरुषार्थत्वात् । तथाच श्रुतिः—'द्वितीयाद्वै भयं भवति' इति । अथ 'तस्मा-**

---

मिश्रितदुःखमूलजाग्रदादिप्रपञ्चशून्यत्वेन यथा जाग्रदादिसाक्षिसुखापेक्षया सौषुप्तसाक्षिसुखमतिशायितत्वेन पुरुषार्थ इति व्यवह्रियते, तथा तदपेक्षयापि मुक्तिसुखमतिशयितत्वेन व्यवह्रियते, तादृशप्रपञ्चतन्मूलाविद्याशून्यत्वादित्याशयः । सुषुप्तावपीत्यपिः हेतौ, तेन तदभावान्नासङ्गतिः । **सुखस्फुरणेति** । सुखस्यानावृतत्वेत्यर्थः । तदानीमुक्तप्रमा[1]नुदयेन साक्षिण आवृतत्वम् । अतएव दुःखाभावोऽपि न तदा स्फुरतीति भावः । **मुग्धे** मूर्छावस्थारूपे मूढे आवृत इति यावत् । [illegible] शेषः । **अर्धसम्पत्तिः** सुषुप्तिरूपसम्पत्तेरर्धं परिशेषात् ज्ञानेन्द्रियाणामुपरमेऽपि कर्मेन्द्रियाणामनुपरमात्पूर्णसम्पत्त्यभावात्, [2] कर्मेन्द्रियाणामनुपरमश्च मुखहस्तादिचेष्टाविशेषादिति सूत्रार्थः । सुषुप्तौ जाग्रदादिप्रपञ्चाभावः "सुषुप्तिकाले सकले विलीने पुनश्च जन्मान्तर कर्मयोगात् । ततस्तु जातं सकलं विचित्रं, एवमेवास्मादात्मनस्सर्वे प्राणास्सर्वे लोकास्सर्वे देवास्सर्वाणि भूतानि व्युच्चरान्ति" इति सुषुप्तौ लीनप्रपञ्चसृष्टिबोधकश्रुतिभ्यस्सिद्ध[3] इत्याशयेनाह— **सुषुप्तिमुक्तीति । पुरुषार्थत्वात्** जाग्रदादिस्वरूप[4]सुखानुभवापेक्षया अतिशयितपुरुषार्थत्वात् । ननु यत्किञ्चित्प्रपञ्चाभावस्सुषुप्ताविव जाग्रत्स्वप्नयोरप्यस्तीति कथं सौषुप्तसुखस्य जाग्रत्सुखापेक्षयाऽतिशयस्तत्राह— **तथाच श्रुतिरिति । द्वितीयादिति ।** विषयादिरूपात्स्वाभिन्नात् भयं भवतीति, देहेन्द्रियविषयरूपस्य सुखसाधनस्याप्युक्तरीत्या भयहेतुत्वमित्यर्थः ।

[1] प्रमा. [2] कर्मेन्द्रियानुपरमश्च. [3] साध्य. [4] स्वरूपस्य.

देकाकी न रमते' इति श्रुतेस्सप्रपञ्चतापि पुरुषार्थः, न ; तस्या दुःखसाधनत्वेन पुरुषार्थत्वायोगात्, कर्मकाण्डवदस्याश्श्रुतेरविवेकिपुरुषपरत्वाच्च। ननु 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति भेदज्ञानस्य मोक्षहेतुत्वश्रवणात्कथं न सप्रपञ्चता पुरुषार्थ इति चेन्न; तत्वमतेः पूर्वं ममापि प्रेरकपृथक्त्वदृष्टेस्सगुणब्रह्मज्ञानवत् प्रेरकत्वेन ब्रह्मज्ञानस्यापि परम्परयोपकारकत्वात्, 'एकधैवानुद्रष्टव्यम्' इत्यादिवाक्यस्वार-

यद्यपि द्वितीयपदेनानात्ममात्रमुक्तम्; तथापि जाग्रत्स्वप्नरूपभयहेत्वभावमात्रेण सौषुप्तसुखस्य जाग्रदादिसुखापेक्षया अतिशयः। मुक्तिसुखस्य तु भयहेतुसामान्याभावत्वेनावस्थात्रयसुखापेक्षयाऽतिशय इति भावः। **सप्रपञ्चतेति**। जाग्रत्स्वप्नसुखमित्यर्थः। **पुरुषार्थः** सुषुप्तिसुखतुल्यपुरुषार्थः। **तस्या** जाग्रत्स्वप्नसुखस्य। **दुःखसाधनत्वेनेति**। दुःखोपधायकक्रियाविशिष्टत्वेन, विषयाप्राप्त्यादिप्रयुक्तकालान्तरीण[1]दुःखस्वरूपयोग्यत्वेन चेत्यर्थः। **पुरुषार्थत्वायोगात्** सौषुप्तसुखतुल्यपुरुषार्थत्वायोगात्। **अविवेकीति** येषां विवेकाभावाज्जाग्रत्स्वप्नसुखे उक्तदुःखसाधनत्वाग्रहः, तेषां तत्र बलवद्द्वेषसामग्र्यभावादिच्छायां सत्यां तत्सम्पादकविषयाभावादेकाकित्वे रत्यभाव[2]स्यानुवादिका श्रुतिर्न तु तावता तत्सुखस्य सौषुप्तसुखतुल्यत्वं तच्छ्रुत्या लभ्यत इति भावः। **न मतेरिति**। प्रेरकत्वेन पृथक्त्वेन च मत्वा मुच्यत इति नोक्तश्रुत्यर्थः। किंतु तत्वमतेः पूर्वं प्रेरकत्वेन पृथक्त्वेन च स्थितमीशमात्मानमखण्डं ज्ञात्वा मुच्यत इत्यर्थ इति भावः। पृथक्त्वप्रेरकत्वाभ्यां मत्वेत्यर्थकत्वेऽपि न क्षतिरित्याशयेनाह—**सगुणेति**। दहराकाशादिरूपेत्यर्थः! प्रेरकत्वादिना द्विधादिदर्शनमेकधादर्शनोक्त्या व्यावर्तितमित्याह— **एकधेति**। विषयरूपो ज्ञाननिष्ठप्रकारो धाप्रत्ययार्थः। एकपदमखण्ड-

[1] कालान्तरीय. [2] देकाकित्वात्क्रयभाव.

**स्यादभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वात् । अत एव प्रेरकत्वज्ञानस्य जोषहेतुत्वमुक्तम् । तथोत्तरत्रापि 'वेदविदो विदित्वा**

---

रूपकेवलार्थकम् । अतएव नेह नानेत्यग्रिमवाक्येन कैवल्योपपादनं "अद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" "अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः,

प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्" ॥

इत्यादिश्रुतिस्मृतिसहस्रं च सङ्गच्छत इति भावः । न च सङ्ख्यावाचकादेकशब्दात् धाप्रत्ययविधानात् केवलार्थकोत्तर[1]स्सोऽसाधुरिति वाच्यम्; कैवल्यस्यापि बुद्धिविषयत्ववद्गौणैकत्वसङ्ख्यात्वात । एको देव इत्यादौ नाम्ना, येन जातानि जीवन्तीत्यादावेकवचनेन च तस्यैव प्रत्ययात् । अन्यथा साद्वितीयत्वशङ्कानुपमदात्, तादृशसङ्ख्योपलक्षितबोधकस्यापि सौत्रसङ्ख्याशब्देन ग्रहीतुं शक्यत्वात्, एकशब्दस्य सङ्ख्यावाचकत्वेऽपि विषयितारूपैकप्रकारयुक्तदर्शनलाभेन निर्विकल्पकदर्शनलाभसम्भवात्, सविकल्पकस्य विशेष्यतादिरूपनानाप्रकारयुक्तत्वेन व्यावर्तनसम्भवात् । **अभेदज्ञानस्येति** । चिन्मात्ररूपाखण्डाभेदज्ञानस्येत्यर्थः । **जोषेति** । ब्रह्मलोकाद्यवच्छिन्नप्रीतिविशेषरूपजुष्टशब्दार्थेत्यर्थः । अतएवाव्यवहितोत्तरत्वबोधकं तत इति पदमपि सङ्गच्छते । प्रेरकत्वमतेर्मोक्षहेतुत्वे तु मध्ये जोषोक्तिरसङ्गता । तेनेति तृतीया तु अमृतत्वासौ मननस्य प्रयोज्यतां ज्ञाप्यतां वा बोधयतीत्यपि बोध्यम् । यद्यपि जुष्टः शमादिसामग्र्या प्राप्तस्सन्नात्मानं क्षेत्रज्ञं प्रेरितारमीश्वरं च

---

[1] र्थका:त्ततः.

लीना ब्रह्मणि तत्परा योनिमुक्ताः। तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः' इत्यभेद एव श्रूयते। अतो न भेदज्ञानस्य मोक्षहेतुत्वम्। एतेन नेह नानेति श्रुतिरेव विश्वं सत्यमित्यबाध्यत्वरूपबाधनिषेधाय विज्ञानवादिप्राप्तविश्वनिषेधानुवादिनी किं न स्यादिति निरस्तम्। भावाभावयोः परस्परविरहरूपत्वे समेपि भावग्रहो निरपेक्षत्वान्नाभावग्रहमपेक्षते, अभावग्रहस्तु सप्रतियोगितया भावग्रहमपेक्षते। अतो नेति श्रुतेरेव सत्वश्रुत्यपेक्षा,

पृथक् तदुभयविलक्षणाखण्डरूपेण मत्वा तेनामृतत्वमेतीत्यर्थ उक्तवाक्ये सम्भवति; तथाप्युत्तरवाक्येन पौनरुक्त्याद्यापत्त्या न तथार्थः। उत्तरं हि वाक्यं—'उद्गीथमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च। अत्रान्तरं वेदविदो विदित्वा लीना' इत्यादिकं, प्रेरितारं मत्वा अमृतत्वमेतीत्युद्गीथमात्रमेतन्नत्वमृतत्वोपधायकहेतुनिर्णायकम्। तस्मिंस्त्रयमित्यादिना सर्वान्तरत्वेनोच्यमानं 'परमं तु ब्रह्म वेदविदो विदित्वा' वेदने[1] करणेन साक्षात्कृत्य उक्तब्रह्मणि लीना उपाधिमात्रलयेनैकीभूताः योनिमुक्ता जन्महीना भवन्तीत्यर्थकमित्याशयेनाह—**तथोत्तरत्रेति**। श्वेताश्वतरीयोक्तवाक्योत्तरं द्वितीयाध्यायेऽपि तथोक्तमित्याशयेनाह—**तदात्मतत्वमिति**। वीतशोक इत्यस्योत्तरं 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्' इति वाक्यम्। तथाच युक्तः त्रिरुन्नतमित्यादिना पूर्वोक्तयोगविशिष्टस्सन् दीपोपमेन स्वप्रकाशेन, येनात्मनस्तत्त्वेनानारोपितरूपेणाभिन्नं ब्रह्मतत्वं प्रपश्येत्, तत्तु तदखण्डमेव प्रकर्षेण श्रवणाद्युत्तरं सम्यग्वेदान्तवाक्येन ईक्षित्वा साक्षात्कृत्य एको द्वितीयशून्यस्सन् कृतार्थो भवते भवति प्राप्नोति तदात्मतत्त्वामिति वेत्यर्थ इति जीवपरयोरैक्यधीरेव मोक्षहेतुरिति भावः। **एतेनेति**। पुरुषार्थभूतनिष्प्रपञ्चसुखबोधकवाक्यशेषत्वस्य सप्रपञ्चवाक्ये

[1] वेदनेनेति.

**न तु सत्त्वश्रुतेर्नेति श्रुत्यपेक्षा; अन्यथा अन्योन्याश्रयापत्तेः। ननु—उत्सर्गापवादन्यायोऽस्तु। यथा हि 'न हिंस्यात् सर्वा भूतानि' इति श्रुतिरविशेषप्रवृत्तापि हिंसात्वसामान्यस्य प्रत्यक्षादिप्राप्तत्वान्निषेध्योपस्थितौ नाग्नीषोमीयवाक्यमपि निषेध्यसमर्पणायापेक्षते, तथा 'नेति' इत्यादिश्रुतिरविशेषप्रवृत्ताऽपि**

---

व्यवस्थापनेनेत्यर्थः। **न तु सत्त्वश्रुतेरिति**। न च सत्त्वश्रुतेरबाध्यत्वविषयकत्वाद्बाध्यताप्रसञ्जकनेति[1]नेतीत्यादिश्रुत्यपेक्षा युक्तेति वाच्यम्; सन् घट इत्यादिप्रत्यक्षगृहीतमबाध्यब्रह्मतादात्म्यं घटादौ सत्त्वश्रुतिर्बोधयति, न तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। येन तादृशाभावप्रतियोत्वस्य घटादौ प्रसञ्जिकां नेतीत्यादिश्रुतिमपेक्षेत। उक्ततादात्म्यस्य भावरूपत्वान्न तदभावरूपप्रतियोगिप्रसञ्जिकामपि तामपेक्षते। ब्रह्मविशेषणत्वेनाबाध्यत्वज्ञानं प्रति बाध्यत्वज्ञानापेक्षणेऽपि विश्वबाध्यत्वयोस्संसर्गबोधनं श्रुत्यधीनं नापेक्षितम्। किञ्च सत्त्वश्रुतेर्यदि त्रिकालबाध्यत्वस्य यदिवाव्यवहारकालबाध्यत्वस्याभावो विषयः; उभयथापि प्रतियोगितावच्छेदकेन कालाघटितबाध्यतात्वेन न बोधिकोक्तश्रुतिः; किंतु स्वसमानाधिकरणात्यन्ताभावप्रतियोतात्वरूपबाध्यतात्वमात्रेण। यदितु सन् घट इत्यादिप्रत्यक्षे मायावच्छिन्नचैतन्यसम्बन्धरूपं सत्त्वमेव विषयः, तस्यैव तत्त्वदीपनादौ व्यावहारिकसत्तात्वोक्तेः, तदा सत्त्वश्रुतेरापि तदेव विषयो न तु बध्यत्वाभावः। सर्वथा नेतीत्यादिश्रुतिर्न सत्त्वश्रुत्यपेक्षणीया। किञ्च सत्त्वश्रुत्या प्रपञ्चे बाध्यत्वाभावस्य बोध्यत्वेऽपि नेतीत्यादिश्रुत्या, 'एवं सौम्य स आदेश' इत्यदिश्रुत्या च तदभावस्य प्रपञ्चे बोधानात्तदंशेऽनन्यशेषत्वं[1]तस्या अव्याहतमिति भावः[2]। **नाग्नीषोमीयवाक्यमिति**। तथाचाग्नीषोमीयवाक्यमपवादशास्त्रं सदुत्सर्गशास्त्रस्य न हिंस्यादित्यस्य बाधकमित्युत्सर्गापवादन्याय इति भावः।

---

1 नित्यशेषत्वं. 2 भावात्.

**प्रत्यक्षप्राप्तघटादिसत्त्वरूपनिषेध्यमादाय निराकाङ्क्षा सती न प्रत्यक्षाप्राप्तधर्माधर्मादिसत्यत्वबोधिकां 'विश्वं सत्यम्' इत्यादिश्रुतिमपि निषेध्यसमर्पणायापेक्षितुमर्हति। यत्र तु मानान्तरेण निषेध्यस्याप्राप्तिस्तत्र निषेध्यसमर्पणाय श्रुत्यन्तरमपेक्षत एव। यथा षोडशिग्रहणाग्रहणयोः मानान्तरेण निषेध्योपस्थितावपि वाक्यापेक्षणे अग्नीषोमीयहिंसाया अपि निषिद्धत्वेनाधर्मत्वं स्यात् इति चेत्, मैवम्; अग्नीषोमीयवाक्यस्य निषेधविषयन्यूनविषयत्वेनानन्यशेषतया स्वार्थतात्पर्यवत्त्वेन च न निषेध्यसमर्पण-**

---

**न प्रत्यक्षाप्राप्तेति।** यद्यपि धर्माधर्मस्वर्गनरकादेर्न प्रत्यक्षादिना प्राप्तिरिति दूष्यग्रन्थे उक्तम्, नरकादेरित्यस्य नरकादिसत्यत्वस्येत्यर्थ इति तदीयैर्व्याख्यातम्; तथाच प्रत्यक्षादीत्यादिना धर्मादिसत्यत्वस्यानुमानादिनाप्यप्राप्तिरिति[1] पराभिप्रेतम्। तथापि धर्मादिकं, सत्, वेदविहितत्वादित,[2] इत्यनुमानेन मन्मते 'सर्वप्रत्ययवेद्ये' इत्यादिमण्डनोक्त्या धर्मादिग्राहकमानेन च धर्मादिसत्यत्वं[3] गृह्यत इति आदिपदं भ्रान्त्यैव परेणोक्तमित्याशयेन तद्विहाय प्रत्यक्षाप्राप्तेत्येव धृतम्। यद्यपि एवं धर्मादेरनुमानादिसिद्धं सत्त्वमिव घटादेः प्रत्यक्षसिद्धं सत्त्वमपि विश्वं सत्यमित्यादिश्रुतिर्नेतीत्यादिश्रुत्या निषेधायानुवदतीति नोत्सर्गापवादन्यायावकाश इति स्पष्टम्। न चानुमानाकुशलं प्रति धर्मादिसत्त्वबोधकत्वाद्विश्वसत्त्वश्रुतिर्नानुवाद इति वाच्यम्; धर्मिग्राहकमानेनैव धर्मादिसत्यतासिद्धेः। न हि धर्मादिप्रमाता तत्सत्यत्वं व्यावहारिकं न प्रमिणोतीति सम्भवति। तथा सति धर्मादिग्राहकशास्त्रादिमानस्य व्यावहारिकप्रामाण्यभङ्गापत्तेः। यत्र त्वर्थक्रियादिसंवादाभावः, तत्रानुमानाकौशलादियुक्तं पुरुषं बोधयन्ती मिथ्यात्वादिश्रुतिरनुवाद इत्याचार्यैरुक्तम्; तथापि परं लालयन् प्रकारान्तरेण समाधत्ते—**मैवम्; अग्नीषोमीयेति। न्यूनविषयत्वेति।**

---

[1] दिनाप्यर्थाप्तिरिति. [2] वेदविहितत्वात्. [3] नित्यत्वं.

**द्वारेण निषेधवाक्यशेषता। विश्वं सत्यमित्यादेस्तु निषेधविषयसमविषयत्वेन स्वार्थतात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषतोचितैव। अत एव प्रत्यक्षाप्राप्तधर्मादिसत्त्वोपस्थापनेन वाक्यसाफल्यमपि। स्वार्थतात्पर्यरहितत्वेन च नाग्नीषोमीयवाक्यतुल्यत्वमित्युक्तम्। अतो दृश्यत्वादिहेतोर्धर्माद्यंशेऽपि श्रुत्या न बाधः। अथवा व्यावहारिकसत्त्वपरेयं विश्वसत्यत्वश्रुतिः। न च व्यावहारिकसत्त्वे सर्वाविप्रतिपत्तेस्तत्प्रति-**

---

अग्नीषोमीयहिंसाया निषेध्यत्ववादिनाऽवैधहिंसाया अपि निषेध्यत्वस्य वाच्यतया निषेध्यमात्रमग्नीषोमीयवाक्यस्य न विषय इति भावः। **स्वार्थतात्पर्यरहितत्वेनेति।** स्तुत्यादितात्पर्यकत्वाद्विश्वसत्वे स्वार्थे न तात्पर्यमिति भावः। **साफल्यमिति** परभ्रान्त्यनुसरणम्, धर्मादिसत्त्वस्याप्युक्तरीत्या प्राप्तत्वात्। यत्तु विश्वं सत्त्यमित्यादिवाक्यमपि धर्मादिमात्रसत्त्वविषयकत्वान्नेतीत्यादि [1] श्रुतेः सर्वदृश्यनिषेधबोधकत्वेन निषेधन्यूनविषयकमिति, तत्तुच्छम्; नेति नेतीत्यादिश्रुतिर्हि इतिशब्दोपात्तनानाधर्मावच्छिन्नप्रतियोगिताकान्नानानिषेधान् बोधयतीति विश्वसत्ववाक्यं यदि धर्मादेरेव सत्त्वं बोधयेत्, तथापि धर्मादौ सत्यतात्वावच्छिन्नाभावबोधकत्वांशे नेतीत्यादिश्रुतिसमानविषयकमेव, निषेध्यतावच्छेदकरूपावच्छिन्नविषयताकत्वस्यैव समानविषयकत्वस्योपक्षणीयत्वात्। तावतैव प्रतियोगितावच्छेदकविशिष्टप्रसक्तेर्निर्वाहात् न हिंस्यादिति वाक्यस्य तु भूतहिंसात्वावच्छेदेन बलवदनिष्टाजनकत्वाभावबोधकत्वे[2] हिंसात्वावच्छेदेनोक्ताजनकत्वरूपप्रतियोगिप्रसक्तिसापेक्षत्वात् अग्नीषोमीयवाक्यं तादृशप्रसक्तिजनकमनपेक्षणीयमेव। **व्यावहारिकसत्त्वपरेति।** व्यावहारिकसत्त्वानुवादद्वारा वाक्यबोध्यप्रवृत्त्यादिपरेत्यर्थः। द्वारीभूतार्थेऽवान्तरतात्पर्यस्वीकारमतेऽपि 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादौ

---

[1] श्रुतिनिषेध्यसर्वदृश्योबोधकत्वन. [2] त्वेन.

**पादनवैयर्थ्यम्; दशाविशेषे स्वर्गनरकादिसत्त्वप्रतिपादनेन तत्प्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्त्योरेव तत्तत्प्रयोजनत्वात्। व्यावहारिकत्वं च ब्रह्मज्ञानेतराबाध्यत्वम्, न त्वबाध्यत्वम्, मिथ्यात्वबोधकश्रुतिविरोधात्। न चैवं दृढभ्रान्तिजनकत्वादत्यन्ताप्रामाण्यापत्तिः; स्वप्नार्थप्रतिपादनवदुपपत्तेः। एतावानेव विशेषः—**

मानान्तरप्राप्तिबाधाभ्यां हीनार्थ एव तत्स्वीकारेण विश्वसत्यत्वादौ ताभ्यां युक्ते तदसम्भवात्। **दशाविशेष इति**। परलोकानङ्गीकर्तृवादि· विप्रतिपत्त्या स्वर्गादौ सत्यतासन्देहदशायामित्यर्थः। यद्यपि सत्यं मिथ्येति सन्दिग्धमपि स्वर्गादिकं स्वप्नविषय इव भवति प्रवृत्त्याद्युद्देश्यम्; तथापि व्यावहारिकादि सत्यमलीकं वेति सन्दिग्धं तन्न तथेति व्यावहारिकसत्त्वप्रतिपादनेनोक्तसंशयनिवृत्तिद्वारा प्रवृत्त्यादौ तात्पर्यमिति भावः। श्रुतिविरोधादित्युपलक्षणम् व्यावहारिकसत्यत्त्वस्य प्रत्यक्षादिसिद्धस्यानुवादद्वारोक्तप्रवृत्त्यादिपरत्वे सम्भवति अपूर्वस्य बाध्यत्वसामान्याभावस्य विधायकत्वे[1] गौरवादित्यपि बोध्यम्। **दृढभ्रान्तीति**। श्रुतिजन्यभ्रान्तेर्मानान्तरबोधितार्थविषयकत्वेन संवादाद्भ्रमत्वशङ्कानास्पदत्वं दृढत्वमिति भावः। **अत्यन्ताप्रामाण्येति**। उक्तदृढभ्रान्तिजनकत्वव्यवहारेत्यर्थः। **स्वप्नार्थप्रतिपादनवदिति**। 'सधीः स्वप्नो भूत्वेमं लोकमनुसञ्चरति' इत्यादि शुद्धत्वं[2]पदार्थप्रतिपादनार्थानुवादरूपा, 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्' इति स्वप्नदर्शनफलप्रतिपादनार्थानुवादरूपा वा श्रुतिरिवेत्यर्थः। व्यावहारिके विश्वसत्त्वे चावान्तरतात्पर्याभावं स्फुटयति—**एतावानिति**। तत्स्वाप्न[3]मिथ्यात्वश्रुतिर्द्विधार्था, नेह नानेत्यादिरधिकरणाभावयोस्संसर्गबोधिका 'प्रपञ्चोपशमं शिवमद्वैतं, अस्थूलमनणु, इत्यादिस्त्वखण्डब्रह्मार्था समानाधिकरणनाम्नोस्सोऽयमित्यादाविवाखण्डार्थत्वस्य सिद्धान्ते स्वीकारात्, तत्राऽऽद्याया अख-

[1] न विधायकत्वम्. [2] शुद्धपर्थं. [3] तत्स्वाप्नं.

तत् प्रातिभासिकं इदं तु व्यावहारिकमिति। ननु मिथ्यात्वश्रुतेर्लक्षणया अखण्डचिन्मात्रपरत्वेन सत्त्वबोधनाविरोधित्वमेव, न ; अखण्डार्थबोधस्य द्वितीयाभावबुद्धिद्वारकत्वेन जगत्सत्यत्वविरोधित्वात्। न च प्रपञ्चसत्यत्वश्रुतेरप्रामाण्यप्रसङ्गः ; अतत्त्वावेदकत्वस्यावान्तरतात्पर्यमादायेष्टत्वात्। परमतात्पर्येण तु तत्त्वावेदकत्वं सर्वश्रुतीनामपि समम्। प्रातिभासिकव्यावृत्तस्य व्यावहारिकस्य तद्वति तत्प्रकारकत्वादिरूपस्य निराकर्तुमशक्यत्वादासां व्यावहारिकं प्रामाण्यमव्याहतमेव। 'असद्वा इदमग्र आसीत्' इत्यादिश्रुत्यनुरोधेनापि 'तत्सत्यम्' इत्यादिश्रुति र्न ब्रह्मणि व्यावहारिकसत्वपरा ; ब्रह्मणो व्यवहारातीतत्वात्। तस्यापरमार्थत्वे च निरधिष्ठानतया शून्यवादापत्तेः, किञ्चित्तत्वमगृहीत्वा च बाधानुपपत्तेः। अतएव सत्वश्रुतिविरोधेन

---

ण्डार्थधीकारणं अधिकरणे प्रपञ्चाभावसंसर्गबोधं प्रति जनकत्वात् प्रपञ्चसत्यताधीविरोधित्वं स्पष्टम्। द्वितीयाया अपि द्वितीयाभावोपलक्षिताखण्डब्रह्मरूपव्यावृत्ताकारत्वेन तद्विरोधित्वमुक्तं व्यावृत्ताकारता द्वेधेत्यादिग्रन्थेनेत्याशयेनाह—न अखण्डेति। द्वारकत्वेनेति। आद्यायाः श्रुतेः द्वितीयाभाववत्त्वेन बुद्धाववान्तरतात्पर्यम्। द्वितीयायास्तु द्वितीयाभावोपस्थितिद्वारा तदुपलक्षित[1]बोधपरत्वमिति भावः। अवान्तरतात्पर्यमिति। उक्तप्रवृत्त्यादावित्यादिः। तत्प्रकारकत्वादीत्यादिना व्यवहारकालाबाध्यविषयकत्वादेस्सङ्ग्रहः। अगृहीत्वा चेति। चकाराद्बाधानुपपत्तिमात्रस्य हेत्वन्तरस्य समुच्चयः। तेनाधिकसत्ताकवस्तुज्ञानस्यैव बाधकत्वपक्षे तात्त्विकविषयज्ञानं विना न व्यावहारिकप्रपञ्चबाध इति तात्त्विकं ब्रह्मावश्यकम्। बाध्यान्यूनसत्ताकविषयकज्ञानस्यैव बाधकत्वपक्षे तु साक्षिरूपं ब्रह्म न बाध्यम्, साक्षिणो बाधानुपपत्तेः। तद्बाधे साक्ष्यन्तर-

---

[1] बाध.

**मिथ्यात्वश्रुतिरेवान्यपरेत्यपि न, षड्विधतात्पर्यलिङ्गोपेतत्वेन मिथ्यात्वश्रुतेरनन्यपरतया प्रबलत्वात्, वैदिकतात्पर्यविषयस्य च तात्त्विकत्वानियमेन तात्पर्यज्ञापकानामपि लिङ्गानामर्थतथात्व**

---

स्वीकारापत्त्याऽनवस्थापत्तेरित्यर्थो लभ्यते । अत्रास[1]द्वेत्यादिवाक्यं नासद्बोधकम्; असतः प्रकृतवाक्यार्थानन्वयात्, तत्र मानाभावाच्च । किंतु स्वबोधकं 'तद्धैक आहुः' इत्यादिना स्व[2]बोधनद्वारा सत्त्वैव सोम्येदमित्येतत्तात्पर्यकत्वात् । अतएव कथं नु खल्वित्यादिनाऽर्थहीनत्वेनोक्तवाक्यमेवाक्षिप्यत इति न परकीयशङ्कावकाश इति ध्येयम् । यत्तु—'द्वितीयाभावस्य ब्रह्मातिरिक्तत्वेऽखण्डार्थविरोधित्वान्न तद्बोधे द्वारता, तस्य ब्रह्मरूपत्वे तु तद्वारिका धीरपि न जगत्सत्त्वविरोधिनी' इति, तत्तुच्छम्; द्वितीयरूपलक्षणादिज्ञानस्येव द्वितीयाभावरूपद्वितीयज्ञानस्याप्यखण्डार्थबुद्धौ प्रयोजकत्वेनाप्रतिबन्धकत्वात् । द्वितीयत्वेन सद्वैतत्वज्ञानस्यैवाद्वैतधीप्रतिबन्धकत्वात् । किञ्च अधिष्ठानज्ञानं भ्रमोत्पत्तौ विरोधि, न तु भ्रमोऽधिष्ठानज्ञानोत्पत्तौ, युक्त्या द्वैतस्य बाधितत्वादपि न तद्धीर्विरोधिनी, व्यावहारिकप्रामाण्यानपवादात्, अखण्डार्थधीप्रयोजिकेति द्वितीयाभावस्य ब्रह्मातिरेकेऽपि क्षतिविरहात् । ब्रह्मरूपत्वेऽपि द्वितीयाभावत्वेन ब्रह्मधीद्वारकधीर्विरोधिन्येवेत्यलं मूढविडम्भनेन । ननु यत्र तात्पर्यं त[3]स्याऽद्वैतस्य सिद्धावपि न तस्य तात्त्विकत्वं सिद्ध्यति, तस्य व्यावहारिकत्वेऽपि तद्बोधकश्रुतेः कर्मकाण्डवत् प्रामाण्योपपत्तेस्तत्राह—**वैदिकतात्पर्येति** । वेदपरमतात्पर्येत्यर्थः । **तथात्व इति** । तात्त्विकत्व इत्यर्थः । **पर्यवसानादिति** । अद्वैतवाक्यस्य पदार्थशोधनद्वाराऽखण्डवाक्यार्थमहातात्पर्यकत्वेऽपि अखण्डवाक्यार्थस्यैवाद्वैतरूपस्य तात्त्विकत्वासिद्धिरिति भावः । नन्वेवं निश्वसत्वेऽपि श्रुतेस्तात्पर्ये लिङ्गमस्ति 'आपश्च न प्रमिणन्ति' इति प्रामा-

---

1 असदेवेत्यादि. 2 स्वबाधन. 3 द्वैतस्य,

एव पर्यवसानात् । सत्वश्रुतिवाक्यस्थपदानां चान्यपरत्वान्न सत्त्वे तात्पर्यलिङ्गाशङ्का । ननु यदि सत्त्वश्रुतिः प्रत्यक्षप्राप्तार्थत्वान्न स्वार्थपरा, तर्हि मिथ्यात्वश्रुतिरपि तद्विरुद्धार्थत्वात् स्वार्थपरा न स्यात्, तत्प्राप्तितद्विरोधयोस्तात्पर्याभावहेत्वोरुभयत्रापि समत्वादिति चेन्न; प्रत्यक्षापेक्षया चन्द्राधिकपरिमाणबोधकागमस्येव मिथ्यात्वबोधकागमस्यापि बलवत्त्वेन प्रत्यक्षप्राप्तानु[1]-वादिसत्त्वश्रुत्यपेक्षयाऽपि बलवत्वात्, प्राप्तार्थाप्राप्तार्थयोर्मध्ये प्राप्तार्थस्याप्राप्तविध्यर्थत्वेनान्यशेषत्वानियमात्, अप्राप्तार्थस्यानन्यशेषत्वेन बलवत्वाच्च । अन्यथोभयोरप्यप्रामाण्यापत्तेः । तदुक्तं संक्षेपशारीरके—'अतत्परा तत्परवेदवाक्यैर्विरुद्ध्यमाना गुणवाद एव' इति । अतएवानन्यशेषमिथ्यात्वश्रुतिविरोधान्न प्रत्यक्षागृहीतत्रिकालाबाध्यत्वरूपसत्यत्वपरा जगत्सत्यत्वश्रुतिरित्युक्तम् । अद्वैतश्रुतेश्च प्राबल्ये निरवकाशत्वतात्पर्यवत्त्वादिकमेव प्रयोज-

---

णिकत्वरूपायाः तत्र मोघमित्यर्थक्रियाकारित्वरूपायाश्चोपपत्तेर्वाक्यशेषे उक्तत्वादिति विश्वसत्त्वमपि तात्त्विकमस्तु, तत्राह—**सत्त्वश्रुतीति** । **अन्यपरत्वादिति** । अस्मन्मते श्रुतिमात्रस्य [2]ब्रह्मपरमतात्पर्यकत्वात् पररीत्यापि स्तुत्यादिद्वारा वादिविप्रतिपत्तिनिरासद्वारा वा कर्मप्रवृत्तिनिवृत्तिपरमतात्पर्यकत्वादित्यर्थः । चकारान्मानान्तरप्राप्तिबाधाभ्यां विश्वसत्त्वे तात्पर्यासम्भवः । **तद्विरुद्धेति** । प्रत्यक्षतदनुवादिश्रुतिविरुद्धेत्यर्थः । **प्रत्यक्षप्राप्तानुवादिसत्त्वश्रुतीति** । प्रत्यक्षं च तत्प्राप्तानुवादिश्रुतिश्चेत्युभयेत्यर्थः । प्रत्यक्षापेक्षया बलवत्त्वमागमत्वादिना विवेचितम् । श्रुत्यपेक्षयापि यद्यपि तत्तद्विवेचितम्; तथापि दूषणान्तरनिराचिकीर्षया भूयो विवेचयति—**प्राप्तार्थेति** । अतत्परा विश्वसत्त्वादिश्रुतिः । गुणवादः तत्परवाक्यार्थशेषीभूतार्थबोधकृत् । **अतएव** जगत्सत्त्वश्रुते र्गुणवादत्वा-

---

1 प्राप्तार्थेति पा ।। 2 ब्रह्मतात्पर्य.

**कम्, न, निषेधवाक्यत्वम्। एतेन निषेधवाक्यत्वेन प्राबल्ये क्ङिति तद्धिते वृद्धिविधायकात् 'किति च' इति सूत्रात्सामान्यतो गुणवृद्धिनिषेधकं 'क्ङिति च' इति सूत्रं बलवत्स्यात्, अग्नीषोमीयवाक्यादहिंसावाक्यं षोडशिनो ग्रहणवाक्यादग्रहणवाक्यं 'सत्यं ज्ञानम्' इत्यादिवाक्यात् 'असद्वा इदमग्र आसीत्' इत्यादिवाक्यं च बलवत्स्यादित्यपास्तम्, सामान्यविशेषभावादिना सावकाशत्वनिरवकाशत्वादिरूपबलवैपरीत्यात्, 'विश्वं सत्यम्' इत्यादेस्तु व्यावहारिकसत्यविषयतया अन्यशेषतया च सावकाशत्वादेः प्रागुक्तत्वात्। तस्मान्न सत्त्वश्रुतिविरोधः। नापि—**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।**
**एतां बुद्धिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः॥**

---

देव। **सावकाशत्वेति।** सावकाशत्वादिरूपं निरवकाशत्वादिरूपं च यद्बलं वैपरीत्यं च तत्तथेति समाहारद्वन्द्वो व्युत्क्रमेण [1] चान्वयः। अथवा सावकाशत्वेतीदं सावकाशत्वादिपरम्। तथाच सावकाशत्वादिरूपं यन्निरवकाशत्वादिबलस्य वैपरीत्य तस्मादित्यर्थः। 'क्ङिति च' इति निषेधस्तु इग्लक्षणगुणवृद्ध्योः। किति चेति विहिता वृद्धिस्तु नेग्लक्षणा। इग्लक्षणत्वं हीक्पदमुच्चार्य विहितत्वम्। तथाच भिन्नविषयत्वादत्र सामान्यविशेषन्यायोक्तिर्भ्रान्त्यैव परस्येत्यपि बोध्यम्। यत्तु दार्ढ्यादिप्रयोजकतया विश्वसत्त्वश्रुतिस्तत्परैवेति, तन्निरस्तमेव। यदपि 'यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि [2] तवेत्तत्सत्यमङ्गिरः, अजो न क्ष्मां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिस्सत्यैः' इत्यादिश्रुतिभिर्मन्त्रत्वादिविशेषरूपेणैव सत्यत्वबोधनात्सामान्यतो मिथ्यात्वबोधकनेतीत्यादिश्रुतिबाध इति, तदपि तुच्छम्; सर्वनाम्नेत्यादिपदेन दृश्यत्वादिरूपेणेव मन्त्रत्वादिविशेषरूपेणापि मन्त्रादेर्मिथ्यात्वबोधनात्। मन्त्रादिसत्त्वे स्तुत्यादि-

[1] व्युत्पत्तिक्रमेण. [2] तवेतत्सत्य.

इत्यादिस्मृतिविरोधः ; सद्विविक्तत्ववादिनो मम जगत्यसद्वैलक्षण्याङ्गीकारेण तत्प्रतिपादकस्मृतिविरोधाभावात् । ननु 'नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रद्वयेन जगतः पारमार्थिकसत्त्वबोधनेन विरोधः, न चानेन शून्यवादिनिरासार्थेनासद्वैलक्षण्यमात्रप्रतिपादनान्न विरोधः ; अर्थक्रियाकारित्वलक्षणस्यासद्वैलक्षण्यस्य शून्यवादिमतेऽपि सत्त्वेन तन्मतनिरासार्थत्वानुपपत्तेः, निषेधाप्रतियोगित्वरूपस्यासद्वैलक्षण्यस्य त्वयाप्यनङ्गीकारात्, असद्वैलक्षण्यमात्रस्य साधने सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्च, व्यावहारिकसत्यत्वमात्रेण स्वप्नवैलक्षण्यस्य (त्वयाप्यङ्गीकारात्, असद्वैलक्षण्यमात्रस्य) तन्मतेऽपि सत्त्वाच्च । तदुक्तं बौद्धैः—'द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना' इति चेन्न ; सूत्रार्थानवबोधात् । तथाहि—सद्रूपाद्ब्रह्मणो जगत्सर्गं वदतस्समन्वयस्य सर्वमसदित्यनुमानेन विरोधसन्देहे—

न सन्नासन्न सदसन्न चानुभयतत्त्वकम् ।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥

---

परोक्तश्रुतेस्तात्पर्याभावाच्च । तत्प्रतिपादकेति । जगति सद्विविक्तत्वस्यासद्वैलक्षण्यस्य च प्रतिपादकेत्यर्थः । उक्तस्मृतौ हि यतोऽनीश्वरमीश्वरानुपादानकमतोऽसत्यं सत्योपादानशून्यं,[1] अतश्च बाधावधिरूपप्रतिष्ठाशून्यं जगदिति ये माध्यमिकादयो वदन्ति तन्निन्दया सत्येश्वरोपादानकं तत् स्वबाधावधिसहितमिति प्रतिपादितम् । तथाच सदुपादानकत्वाद्बाध्यत्वाच्च सदसद्विलक्षणमिति मन्मतमेव तदिति भावः । शास्त्रदर्पणोक्तामधिकरणरचनामाह---**तथाहीत्यादि** । **वदतः** प्रतिपादयतः । **समन्वयस्य** प्रथमाध्यायस्य । **तर्कपीड्यत्वादिति** । तर्कविरुद्धरूपादित्यर्थः । तथाच **न सत्** बाधयोग्यत्वात्, **ना सत्** कालादि-

[1] पादानजन्यं.

**इति ब्रह्मसाधारण्यान्मिस्तत्त्वतायां प्राप्तायां सूत्रेण परिहारः। सतो ब्रह्मणो नाभावः न शून्यत्वं, उपलब्धेः सत्त्वेन प्रमाणात्प्रतीतेः । तथाच किञ्चित्परमार्थसदवश्यं शून्यवादिनापि स्वीकार्यम् । अन्यथा बाधस्य निरवधिकत्वप्रसङ्गादिति सूत्रार्थः। स च न प्रपञ्चमिथ्यात्वविरोधी । तथाचोक्तम्—**

**बाधितोपद्रवो[1] मानैर्व्यावहारिकमानता ।**
**मानानां तात्त्विकं किञ्चिद्वस्तु नाश्रित्य दुर्भणा ॥**

---

सम्बन्धात्, **न सदसत्** विरोधात्, **न चानुभयतत्त्वकम्** तात्त्विकयोः सदसद्भेदयोरभाववत् सदसद्भिन्नत्वाभ्यां निर्वक्तुमशक्यत्वादिति बोध्यम् । **विमतमिति** सत्त्वेन प्रतीत्यर्हमित्यर्थः । तेन तुच्छे न बाधासिद्धी । चरमसाध्यद्वये तु धीविषयत्वमात्रेण पक्षता, तुच्छेऽपि हेतुसाध्ययोस्सत्त्वात् । **ब्रह्मसाधारण्यादिति ।** पक्षतावच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वादित्यादिः । **न शून्यत्वमिति ।** ब्रह्म न बाध्यं बाधायोग्यत्वादित्यत्र तात्पर्यम् । **निरवधिकत्वेति ।** बाध्याधिकसत्ताकवस्तुशून्यत्वेत्यर्थः । न [2]च तदनुपपन्नमित्याशयेनाह—**तथाचोक्तमिति ।** शास्त्रदर्पण इति शेषः । **मानैः** वस्तूनामपह्नवो **बाधितः,** तात्त्विकत्वं सिद्ध्यति । यदि तात्त्विकं न स्यात्तदा बाधशून्यप्रमेयं न स्यात्, शुक्तिरूप्यादिवत्, बाधशून्यत्वं चाग्रे व्यावहारिकेत्यादिना उपपादनीयमिति भावः । अथवा मानानामबाधितविषयकत्वरूपप्रामाण्यस्यौत्सर्गिकत्वात् वस्तूनामपह्नवो बाधो बाधितो न सम्भवति । ननु बाधकप्रमाणादौत्सर्गिकस्यापवादोऽस्तु, तत्राह— **व्यावहारिकेति ।** बाधितविषयकेत्यर्थः । **अनाश्रित्य** बाधकविषयत्वेनास्वीकृत्य, । यद्यद्बाधकज्ञानं तद्बाध्यापेक्षयाऽधिकसत्ताकविषयं, अन्यथा समबलत्वेन बाध्यबाधकत्वानुपपत्तेः । अतस्तात्त्विकविषयकधीरेव व्यावहारिकमानबाधिकेति भावः । अथवा **अनाश्रित्य**

---

1 बाधितापन्हवो. 2 तदनुपपन्नमिति.

**इति। नापि स्वप्नवैधर्म्योक्त्ययोगः, तस्याः 'विमतं निस्तत्त्वम्, तर्कपीड्यत्वात्, मरुमरीचिकाजलवत्' इत्यनुमाने बाध्यत्वप्रमाणागम्यत्वदोषजन्यत्वाद्युपाधिप्रदर्शनपरत्वात्। विज्ञानवादनिराकरणपरेणापि नानेन सूत्रेण विरोधः। रूपादिरहितब्रह्मजगदुपादानत्वप्रतिपादकसमन्वयस्य नीलाद्याकारं विज्ञानं साधयताऽनुमानेन विरोधसन्देहे—**

**स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्याऽर्थस्य सहेक्षणात्।**
**तद्भेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम्॥**

**विमता धीः, न ज्ञानव्यतिरिक्तालम्बना, धीत्वात्, स्वप्नधीवत्,**

---

साक्षित्वेनास्वीकृत्य, साक्षिणोऽपि बाधस्वीकारे साक्ष्यन्तरं तत्साधकं वाच्यम्; तद्बाधकसाधकमपि साक्ष्यन्तरमित्यनवस्थानात्स्फुरणं नास्तीति बाधानुपलब्धेश्च साक्षिरूपं ब्रह्म तात्त्विकमेव वाच्यमिति भावः। **उपाधिदर्शनेति**। बाध्यत्वादेस्स्वप्नधर्मस्य ब्रह्मादावभावप्रदर्शनेन स्वप्नादौ निश्चितसाध्यव्यापकत्वं ब्रह्मणि साधनाव्यापकत्वं च दर्शितमिति भावः। विमता नीलाद्यनुभवरूपा धीः, न ज्ञानव्यतिरिक्तालम्बना, न स्वान्यन्नविलक्षणनीलादिका, नानुभवत्वशून्यविषयिकेति यावत्। [1]बाह्यरूपसमानसत्ताकनीलादितादात्म्ययुक्तेति वाऽर्थः। आस्तिकमतेऽनुभवत्वशून्य एव नीलादिः, औपनिषदमतेऽपि नीलादितादात्म्यमनुभवनिष्ठं नानुभवस्वरूपसमसत्ताकमिति न सिद्धसाधनमिति भावः। **धीत्वात्**। अनुभवत्वात्। **स्वप्नधीवदिति**। अनुभवविषयकस्वप्नधीवदित्यर्थः। औपनिषदमते स्वप्नस्यावच्छिन्नानुभवस्य शुद्धानुभवविषयतारूपतादात्म्यान्न साध्यवैकल्यम्। न च तादृशानुभवविषयस्य जडस्यानुभवत्वशून्यत्वात्तदवस्थमेव तदिति वाच्यम्; अनुभवविषयकत्वावच्छेदेनानुभवाविषयकत्वसत्त्वात्। औपनिषदं प्रत्यनुभवत्वाश्रयाविषयकत्वमेव वा साध्यम्।

---

[1] स्वस्वरूप.

**विपक्षे च ज्ञानाभानेऽप्यर्थभानप्रसङ्गो बाधकः । न हि भिन्नयोरश्वमहिषयोस्सहोपलम्भनियमोऽस्ति । तस्मान्न ज्ञानातिरिक्तं सदिति प्राप्ते परिहारसूत्रं 'नाभाव उपलब्धेः' इत्यादि ।**

**बाधेन सोपाधिकतानुमाने उपायभावेन सहोपलम्भः ।**

---

नीलाद्यनुभव[1] विषयकत्वावच्छेदेनानुभवविषयकत्वस्यास्तिकैरनङ्गीकारान्न सिद्धसाधनम् । योगाचारेण तु एकव्यक्तेरेवानुभवत्वनीलत्वादिस्वीकारेण नीलत्वाद्याश्रयविषयकत्वावच्छेदेनैवानुभवविषयकत्वं स्वीक्रियत इति न बाधः । एवं—नीलाद्यनुभवः स्वसमसत्ताकनीलत्वादिसंसर्गयुक्तः, अनुभवत्वात्, यो यद्विषयकानुभवस्स तद्वृत्त्यसाधारणधर्मस्य समानसत्ताकसंसर्गवान्, यथा अनुभवविषयकानुभवोऽनुभववृत्त्यनुभवत्वस्य स्वसमानसत्ताकसंसर्गवानिति सामान्यतो व्याप्तिरपि बोध्या । बुद्ध्याऽर्थस्य सहेक्षणादित्यादे रनुकूलतर्कप्रदर्शनपरत्वमाह—**न हीति** । तथाच सहोपलम्भ[2]नियमजज्ञानभेदेनार्थानिरूपणम् । अतो ज्ञानत्वात् ज्ञानमर्थाकारकमिति बुद्ध्येत्याद्यर्थ इति भावः । ननु बौद्धमते तुच्छस्य ज्ञानत्वशून्यस्यापि ज्ञानविषयत्वाद्व्यभिचारस्तत्राह—**तस्मान्न ज्ञानातिरिक्तं सदिति** । ज्ञानत्वशून्यं न सत्[3] न तुच्छविलक्षणमित्यर्थः । तथाच तुच्छविलक्षणविषयकज्ञानत्वमेवानुभवत्वम् । तुच्छज्ञानं तु विकल्पो नानुभव इति न व्यभिचार्यनुभवत्वमिति भावः । **बाधेनेति** । सहार्थे तृतीया । ज्ञानादत्यन्तभेदेनार्थस्य मानैरुपलम्भात् ज्ञानज्ञेययोर्भेदाभेदवादिनोऽनुमानं बाधितार्थकं बाध्यत्वाद्युपाधियुक्तं चेत्यर्थः । **उपायेति** । यथा प्रभा उपायभूता रूपग्रहे विषयसन्निकृष्टत्वात् तावतापि न रूपं प्रभात्मकं, तथा ज्ञाने उपायभूतो विषयस्तज्ज्ञाने विषयीभवति, विषयोपरागेणैव ज्ञानग्रहात् । परोक्षज्ञानेऽपि गृह्यमाणे विषयज्ञानस्योपायत्वा

---

1 त्वावच्छेदेन. 2 नियमात् ज्ञानाभेदेनार्थो. 3 सत्तुच्छविलक्षणमित्यर्थः.

**सारूप्यतो बुद्धितदर्थभेदः स्थूलार्थभङ्गो भवतोऽपि तुल्यः॥**

**सूत्रार्थस्तु—नाभावः ज्ञानातिरिक्तस्यार्थस्य नासत्त्वम्; किंतु व्यवहारदशाबाध्यार्थक्रियाकारित्वरूपं सत्त्वमेव उपलब्धेः—ज्ञानातिरेकेण प्रमाणैरुपलब्धेः। स्वप्नवैधर्म्योक्तिर्बाध्यत्वाद्युपाधिप्रदर्शनाय। तेन बाधात्सोपाधिकत्वाच्च पूर्वानुमानं दुष्टमित्यर्थः। तस्मान्नैवमपि विरोधशङ्का। तदुक्तम्—"तस्मान्न ज्ञानाकारोऽर्थः,**

---

द्विषयस्योपायत्वोक्तिः। अथवा उपायो ज्ञानग्रहस्य [1] विषयग्राहकतानियामकं ज्ञानविषयकत्वं, तस्य भावेन विद्यमानत्वेन, सर्वथापि सहोपलम्भो नोक्तसाध्यसाधक इति भावः। ननु ज्ञानमात्रेण सकलव्यवहारोपपत्तौ ज्ञानात्यन्त[2]भिन्नार्थकल्पने गौरवम्, तत्राह—**सारूप्यत इति**। अपिशब्दः काकाक्षिन्यायेनोभयसम्बद्धः। स्थूलार्थभङ्गेऽपि सारूप्यतो ज्ञानतदर्थयोरत्यन्तभेदः सौत्रान्तिकस्येव तव योगाचारस्यापि आवश्यकत्वेन तुल्यः। सौत्रान्तिको हि स्थूलमवयविनं पृथिव्यादिचतुष्टयान्यगुणादिकं चानङ्गीकुर्वन्नपि परमाणुसङ्घातमेवार्थमङ्गीकृतवान्। अन्यथा ज्ञाने विषयस्य प्रतिबिम्बरूपं सारूप्यं तदभ्युपगतं न स्यात्, त्वयाऽपि तथाऽनङ्गीकारशालिना तथाऽङ्गीकार्यम्। अन्यथा सारूप्यशब्दितं विषयात्मकरूपस्य साहित्यं तदभ्युपगतं न स्यात्। न च विषयतादात्म्यं स्वसमसत्ताकमेव ज्ञाने सारूप्यं ममेति वाच्यम्? तादात्म्य[3]स्वीकारेऽपि तस्य स्वसमसत्ताकत्वे मानाभावात्, एकस्मिन् ज्ञानस्वरूपे तात्त्विके सर्वविषयाणां तादात्म्यस्वीकारेण निर्वाहेऽनन्तज्ञानोत्पत्तिकल्पने गौरवात्। न चौपनिषदानामपि विषयाणामनन्तानामुत्पत्तिस्तुल्येति वाच्यम्; औपनिषदानामनादिविषयकज्ञानस्थले कस्याप्युत्पत्तेरकल्पनात्तव तत्रापि ज्ञानोत्पत्तिकल्पनादिति भावः। **बाध्यत्वाद्युपाधीति**। स्वप्नधीर्बाध्येति

---

[1] विषयग्रहता. [2] ज्ञानादत्यन्त. [3] तदार्थ.

किंतु बाह्यः, स चार्थक्रियाकारित्वसत्त्वोपेतोऽप्यद्वैतश्रुतिवशाद्ब्रह्मणि कल्पितो न परमार्थसन्निति सिद्धान्तस्य सुगतमताद्भेदः" इति । उक्तं चात्मतत्त्वविवेके—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधके बलिनि वेदनये जयश्रीः ।
नो चेदनित्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

इति । धर्मिग्राहकमानबाधश्च प्रागेव परिहृत इति शिवम् ॥

इति विश्वमिथ्यात्वस्यागमादिबाधोद्धारः.

---

तत्र साध्यव्यापकता, जाग्रद्धीश्च न बाध्येति तत्र साधनाव्यापकतेति भावः । ननु मिथ्यात्वानुमाने मानसिद्धस्यैव पक्षीकार्यत्वाद्धर्मिग्राहकमानबाधस्स्यात्तत्राह—**धर्मीति** । धर्मिग्राहकमानगतं व्यावहारिकं प्रामाण्यमुपजीव्यम् । एतच्च न मिथ्यात्वानुमानेनापसार्यते । यच्च तात्त्विकं प्रामाण्यमपसार्यते, तन्नोपजीव्यमित्यादिना पूर्वं तत्परिहृतमित्यर्थः ॥

तर्कैस्सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
मिथ्यात्वस्यागमाद्यैरप्यबाधाद्भ्रान्तभञ्जनम् ॥

इति विश्वमिथ्यात्वस्यागमादिबाधोद्धारः.

University of Mysore

Oriental Library Publications

GENERAL EDITOR

M. S. BASAVALINGAYYA, M.A.,
*Curator, Govt. Oriental Library, Mysore.*

SANSKRIT SERIES No. 78

# अद्वैतसिद्धिः

गुरुचन्द्रिकाख्यव्याख्यासमलङ्कृता

द्वितीयसम्पुटम्

# THE ADVAITASIDDHI

WITH THE

## GURUCHANDRIKA

Vol. II

EDITED BY

VIDVAN S. NÁRAYANASWAMI SASTRI



MYSORE
PRINTED AT THE GOVERNMENT BRANCH PRESS
1937

# द्वितीयसंपुटगतानां विषयाणमनुक्रमाणिका.

# शुद्धाशुद्धपत्रिका.

| पृष्टम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 4 | 24 | पुस्तक | पुस्तके |
| 6 | 15 | वबोध | त्वबोध |
| 13 | 2 | ्व्यहारः | व्यवहारः |
| 25 | 20 | सद्रपस्य | सद्रूपस्य |
| 44 | 3 | विषंयित्व | विषयित्व |
| 50 | 23 | समवते | समवेत |
| 60 | 10 | तज्ज्ञन | तज्ज्ञान |
| 65 | 11 | शुद्ध | (शुद्ध |
| 65 | 12 | व्यवहार. | व्यवहारः) |
| 76 | 22 | न्याये—द. ढ. | न्याये दढ |
| 121 | 21 | वास्विति | वास्त्विति |
| 123 | 19 | काल | काले |
| 124 | 17 | ऽहेतुकप्रतिसन्धानप्यङ्कर | हेतुकप्रतिसन्धानेऽप्यङ्कुर |
| 137 | 12 | धर्म 3 | धर्म2 |
| 143 | 17 | भाव | भावा |
| 219 | 20 | भागान्वय. | भागन्वयः |
| 219 | 21 | द्भवाः | द्भवः |
| 220 | 7 | ज्ञानाऽपूर्व | ज्ञानात्पूर्व |
| 243 | 11 | आपादेत | आपादिते |
| 245 | 14 | भेदाथर्कत्वं | भेदार्थकत्वं |
| 266 | 11 | द्रोधः | द्रोधः |
| ,, | 20 | एको द्व | एको द्वा |
| 270 | 18 | हिरुह्नाना | हिरुङ्नाना |
| 292 | 12 | सतायोग | सत्तायोग |
| 431 | 4 | युष्माकामन्य | युष्माकमन्य |
| ,, | 23 | त्यदि | त्यादि |

# सव्याख्या अद्वैतसिद्धिः

## द्वितीयसम्पुटम्

## अद्वैतसिद्धिः

---

### अथासतः साधकत्वोपपत्तिः

ननु सत्त्वसाधकानां मिथ्यात्वसाधकानुमानेभ्यः प्राबल्यम्, मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वाबोधने सर्वमिथ्यात्वासिद्धिः । तद्बोधने परस्परव्याहति-

---

## गुरुचन्द्रिका

---

### अथासतः साधकत्वोपपत्तिः

परस्परेति । मिथ्यात्वसाधकानां न्यायवाक्यघटकप्रतिज्ञादीनामनुमितेश्च मिथो व्याघातः; प्रतिज्ञया मिथ्यात्वस्य हेतुवाक्यादिना हेतुत्वादेश्चाबाध्यत्वलाभः, प्रतिज्ञाद्यधीनानुमित्या च मिथ्यात्वादिरूपस्य दृश्यमात्रस्य मिथ्यात्वरूपबाध्यत्वलाभ इति व्याघातात् । एवं पक्षादौ तद्विशेषणीभूतधर्माणामभावस्य मिथ्यात्वानुमित्या विषयीकरणादाश्रयासिद्ध्यादिकम् । तथाचोक्तव्याघातादिसत्त्वेन[1] मिथ्यात्वसाधकं दुर्बलमिति भावः । प्रतिज्ञादिना मिथ्यात्वादेरबाध्यत्वं कथं लभ्यते ?

---

[1] समत्वेन ग.

राश्रयासिद्ध्यादिकं चेति चेन्न; मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वबोधनेऽपि व्याहत्यभावात्, प्रतिज्ञादिभिस्तेषां त्रिकालाबाध्यत्वरूपसत्त्वाप्रतिपादनात्। ननु

---

तेन तस्य तथा बोधनात्, तस्य तत्प्रमेयत्वानुपपत्तेर्वा। नान्त्यः; व्यवहारकालाबाध्यत्वेनैव तत्प्रमेयत्वोपपत्तेरित्याशयेनाह—मिथ्यात्वेति। आद्यं प्रत्याह—प्रतिज्ञादिभिरिति। त्रिकालाबाध्यत्वेति। तदर्थकपदस्य प्रतिज्ञादावभावान्न तस्य तद्बोधकत्वम्, धीमात्रस्य त्रिकालाबाध्यरूपसद्रूपविषयकत्वपक्षेऽपि सद्रूपतादात्म्येन स्वविषयं[1] धीमात्रमवगाहते, न तु त्रिकालाबाध्यत्वरूपसत्त्वेनेति भावः॥

नन्वेवमप्याश्रयासिद्ध्यादिकं स्थितमेव; न च मिथ्यात्वानुमितेः पूर्वमाश्रयासिद्ध्यादिनिश्चयाभावात्तस्या उत्पत्तिरविरुद्धेति वाच्यम्; कार्यकालेऽपि बाधबुद्ध्यभावस्यापेक्षणीयत्वेन मिथ्यात्वानुमितेर्दृश्यमात्रस्य स्वाधिकरणनिष्ठाभावप्रतियोगित्वावगाहिन्या उत्पत्त्यसम्भवात्, प्रतिज्ञादिजन्यमिथ्यात्वबोधेन तस्याः पूर्वमप्याश्रयासिद्ध्यादिविषयीकरणाच्चेति, चेन्न; व्याहत्यभावादित्यनेनैवाश्रयासिद्ध्यादिकृतस्यानुमित्यादिव्याघातस्यापि निरसनात्। तथाहि—अनुमित्या प्रतिज्ञादिजन्यबोधेन वा पक्षतावच्छेदकविशिष्टे मिथ्यात्वं बोध्यते। न च तावता आश्रयासिद्धिधीः[2]; पक्षविशेषणतावच्छेदकरूपेण पक्षनिष्ठाभावप्रतियोगित्वानिश्चयस्याजातत्वात्। एवं न स्वरूपासिद्ध्यादिकमपि, हेतुतावच्छेदकादिविशिष्टे पक्षादिनिष्ठाभावप्रतियोगित्वनिश्चयाभावात्। विशेषानुमाने उक्तरूपविशिष्टे स्वाश्रयनिष्ठाभावप्रतियोगितात्वविशिष्टप्रकारकनिश्चयेऽपि नाश्रयासिद्ध्यादिशङ्कापि। किञ्चाश्रयासिद्ध्यादिलक्षणे प्रतियोगिव्यधिकरणाभावस्यावश्यं निवेश्यत्वान्मिथ्यात्वघटकाभावस्य चातथात्वान्न दोषः॥

---

[1] त्वविषयं क. [2] सिद्धिबाधधीः.

साधकत्वान्यथानुपपत्त्या परमार्थसत्त्वमायाति; परमार्थसत एव साधकत्वात्, साधकतायाः प्राक्सत्त्वघटितत्वात्, न तु धीमात्रविषयत्वमपरोक्षधीविषयत्वं सत्त्वेन तादृशधीविषयत्वं वा साधकताप्रयोजकम्; तुच्छे नित्यातीन्द्रिये चाव्याप्त्यतिव्याप्तिभ्याम्। तत्त्वेन ज्ञानमपि न तत्र प्रयोजकम्; वह्नित्वेनाज्ञातेऽपि वह्नौ दाहकत्वदर्शनात्, वह्नित्वेन ज्ञातेऽपि गुञ्जापुञ्जे तददर्शनाच्च। नापि त्रिचतुरकक्ष्यास्वबाधिता सत्त्वप्रतीतिस्तन्त्रम्; आत्मनो गौर-

---

यत्तु प्रतिज्ञादिभिस्त्रिकालसत्त्वाग्रहणेऽपि कदाचित्सत्त्वेन स्वविषयग्रहणात्[1] त्रिकालासत्त्वग्राहिण्या मिथ्यात्वानुमितेर्निरोध इति, तत्तुच्छम्; तैः कदाचित्सत्त्वेनापि स्वविषयाग्रहणात् तत्तद्बोधक[2]पदाभावादेरुक्तत्वात्। अथ धीमात्रस्य स्वकालाबाध्यविषयकत्वेन साक्षिणा ग्राह्यत्वनियमः, तथापि तस्यौत्सर्गिकत्वेन मिथ्यात्वग्राहकबुद्धौ तदपवादसम्भवान्न दोषः। न हि स्वतः प्रामाण्यवादे [3]प्रामाण्याभावग्राहकसामग्रीसत्त्वेपि स्वतःप्रामाण्यधीः। वस्तुतस्त्वज्ञातविषयकानिश्चयत्वरूपेण सर्वदृश्ये मिथ्यात्वनिश्चयात्पूर्वं मिथ्यात्वाज्ञानकाले वा मिथ्यात्वेनाज्ञातं यत्तद्विषयकानिश्चयत्वरूपेण मूलाज्ञानतत्प्रयुक्तान्यतराविषयकनिश्चयत्वरूपेण जातिविशेषरूपेण वा प्रमात्वेनैव धीमात्रस्य साक्षिग्राह्यत्वनियमो न तूक्तनियम इत्युक्तप्रायम्। तथाच तादृशप्रमात्वग्रहकालेपि मिथ्यात्वानुमितौ न विरोध इति ध्येयम्॥

साधकत्वेति। प्रतिज्ञादेः सिद्धिजनकत्वेत्यर्थः। ननु सत्यत्वरूपं सत्त्वं न साधकताघटकम्, किंतु धीविषयत्वादिरूपं, तत्राह—न तु धीति। धीमात्रं धीत्वविशिष्टं साधकता[4]घटकसत्त्वरूपम्।

---

[1] स्वविषयग्रहणात्. [2] तत्र तद्बोधक ख. [3] प्रामाण्यभाव ख. [4] धीत्वविशिष्टं साधकताप्रयोजकं साधकता इति—ग.

त्वेनानित्यत्वस्य नभसो नैल्येन स्पर्शवत्त्वस्य चापत्तेः । 'गौरोऽहं' 'नीलं नभ' इत्यादिप्रतीतावपि त्रिचतुरकक्ष्यास्वबाधात्, यौक्तिकबाधस्य त्वन्मते प्रकृतेऽपि भावादिति—चेन्न; यादृश्या बुद्ध्या तव नभोनैल्यादिधीव्यावृत्तया घटादौ सत्त्वसिद्धिः, तादृग्बुद्धिविषयत्वस्यैव साधकत्वे तन्त्रत्वात् । अत एव 'लोकप्रसिद्धिस्तन्त्रं' इतीष्टसिद्ध्युक्तमप्युक्ताभिप्रायेण सम्यगेव। एवं त्रिचतुरकक्ष्यास्वबाधिता वादिप्रतिवादिप्राश्निकादीनां सत्त्वबुद्धिस्तन्त्रमित्युपपन्नमेव। गुञ्जापुञ्जस्य वह्नित्वे आत्मनो गौरत्वे नभसो नीलत्वे च तादृग्बुद्धिविषयत्वस्य तवाप्यसम्प्रतिपत्तेः । अन्यथा तेषामपि तत्र सत्त्वसिद्धिप्रसङ्गात् । अथ—यादृश्या शब्दे क्लृप्तदोषरहितया बुद्ध्या तव ब्रह्मणि सत्त्वसिद्धिः, तादृश्या प्रत्यक्षे क्लृप्तदोषरहितया मम जगति सत्त्वसिद्धिरस्तु, साधकतुल्यत्वादिति—चेन्न; ब्रह्मसत्त्वबुद्धिवज्जगत्सत्त्वबुद्धेरबाधितत्वाभावात्, त्रिकालाबाध्यत्वरूपस्य सत्त्वस्य प्रत्यक्षाविषयताया उक्तत्वाच्च। न च बुद्धिविषयत्वस्य तन्त्रत्वे वह्नित्वेनाज्ञातस्य वह्नेरदाहकत्वप्रसङ्गः, अमृतत्वेन ज्ञातस्य च विषस्य संजीव-

---

तादृग्बुद्धीति । व्यावहारिकसत्त्वेन धीरेव तादृशीति भावः । उक्तमेतत्खण्डने । कथं पुनरसतः कारणत्वमवसेयम्? प्राक्सत्त्वनियमानभ्युपगमादसत्वस्य सर्वासत्त्वविशेषादिति चेन्न; इदमस्मान्नियतप्राक्सदिति बुद्ध्या विशेषात् । न चातिप्रसङ्गः; यादृश्या त्रिचतुरकक्षा[1]बाधानवबोधविश्रान्तया वस्तुसत्तानिश्चयस्ते, तादृश्यैव कारणतानिश्चयो ममापीति । आत्मनो गौरत्व इति । पारलौकिकफलोद्देशेन वैदिककर्मानुष्ठानायापेक्षितेन देहात्मनोर्भेदनिश्चयेन आत्मगौरत्वादे[2]र्व्यवहार-

---

1 कक्ष्या. 2 व्यवहारकाल इत्यारभ्य न तु तद्धीरित्यन्तो ग्रन्थः—क पुस्तके न दृश्यते.

कत्वप्रसङ्ग इति वाच्यम्; वह्नौ तादृग्बुद्धिविषयत्वस्येश्वरादिसाधारणस्य सत्त्वात्। विषे सञ्जीवकत्वप्रसङ्गस्य नभोनैल्यादितुल्यत्वात्। वस्तुतस्तु—ज्ञाताज्ञातसाधारणं व्यावहारिकं सत्त्वमेव साधकत्वे तन्त्रम्; तच्च ब्रह्मज्ञानेतराबाध्यत्वमेव; तच्च न मिथ्यात्वघटितम्; अत्यन्ताबाध्ये ब्रह्मज्ञानबाध्ये च तुल्यत्वात्। अत एव नेदं परमार्थसत्त्वव्याप्यम्। एवं च परमार्थसत्त्वस्य साधकतायामतन्त्रत्वेन तदभावेऽपि न साधकतानुपपत्तिः। एतेन व्यावहारिकत्वं ब्रह्मज्ञानबाध्यत्वं वा, व्यावहारिकविषयत्वे सति सत्त्वं वा, सत्त्वेन व्यवहारमात्रं वा। नाद्यः मिथ्यात्वासिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयात्। न द्वितीयः; तस्यास्माकं मिथ्यात्वाविरोधि[1]त्वेनेष्टत्वात्। न तृतीयः; सत्त्वाभावे साधकत्वानुपपत्तेरिति निरस्तम्; उक्तनिरुक्तेरदुष्टत्वात्। न च हेत्वादीनां व्यावहारिकसत्त्वे साध्यस्यापि व्यावहारिकसत्त्वमेव स्यात्, अनुमितिविषयसाध्यस्य परामर्शविषयहेतुना समानसत्ताकत्व-

---

काले बाधात् व्यवहारकालाबाध्यसत्त्वधीर्न तत्रेति भावः। नैल्यादितुल्यत्वात्। नैल्यादेस्साधकताप्रसङ्गतुल्यत्वात्। उक्तखण्डनवाक्ये व्यावहारिकसत्त्वनेव कारणताघटकमभिमतम्। मिथ्याभूतेऽपि तदङ्गीक्रियते, बुद्धिबलात् 'सत्यस्य सत्यम्' इत्यादि श्रुतिबलाच्चेत्याशयेन बुद्ध्या विशेषादित्युक्तम्, न तु तद्धीः कारणताघटिका, गौरवादित्यभिप्रेत्याह—वस्तुतस्त्वित्यादि। व्यावहारिकसत्यमेवेत्येवकारेण पारमार्थिकसत्त्वमेव प्रयोजकमिति नियमो व्यवच्छिद्यते। तेन प्रातीतिकसत्त्वस्यापि प्रयोजकतया वक्ष्यमाणत्वेऽपि न क्षतिः। तत्त्वावेदकत्वेत्यत्र तत्त्वं व्यवहारकालाबाध्यमबाध्यं वा, आद्ये आह—सत्त्वेनेति।

[1] त्वविरोधि

नियमादिति वाच्यम्; दृश्यत्ववन्मिथ्यात्वस्यापि व्यावहारिकत्वेन समानसत्ताकत्वस्येष्टत्वात्, समानसत्ताकत्वनियमासिद्धेश्च, धूलीपटले धूमभ्रमादपि वह्न्यनुमितिप्रमादर्शनात्, गन्धव्याप्यपृथिवीत्वप्रमातोऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे बाधास्फूर्तिदशायामनुमितिभ्रमदर्शनाच्च। मिथ्यात्वस्य मिथ्यात्वेऽपि तत्त्वावेदकश्रुतिवेद्यत्वोपपत्तिः; सत्त्वेन सत इव मिथ्यात्वेन च मिथ्याभूतस्यापि प्रमाणगम्यत्वाविरोधात्, एकांशे तत्त्वावेदकत्वाभावेऽप्यपरांशे तत्त्वावेदकत्वोपपत्तेः। ननु व्यावहारि-

---

व्यावहारिकसत्त्वेनेत्यर्थः। प्रमाणेति। व्यावहारिकप्रमाणेत्यर्थः। द्वितीये आह--एकांश इति। मिथ्यात्वांश इत्यर्थः। अशान्तर इति। मिथ्यात्वघटकात्यन्ताभावस्य तात्त्विकत्वे तदंशे तत्त्वावेदकत्वम्, तस्य व्यावहारिकत्वे[1] तु परमतात्पर्यविषयाद्वैतब्रह्मांशे तादिति भावः॥

यत्तु—'मिथ्यात्वेन मिथ्यात्वबोधकत्वं श्रुतेर्न युक्तम्, ब्रह्मण इव मिथ्यात्वस्यापि तात्त्विकस्यैव श्रुत्या बोधनस्य युक्तत्वात्, मिथ्यात्वबोधकवाक्ये मिथ्यात्वेन मिथ्यात्वबोधकपदाभावाच्च' इति, तन्मुखमस्तीत्युक्तम्; सत्यं ज्ञानमित्यादिश्रुतिगतसत्यादिपदेन बाधाभावेन च ब्रह्मणः सत्यत्वसिद्धावपि मिथ्यात्वस्य तदसम्भवात्। नेह नानेत्यादिश्रुत्या मिथ्यात्वादिसाधारणसर्वदृश्यमिथ्यात्वबोधनात्। यदपि ब्रह्मज्ञानान्याबाध्यत्वं न साधकत्वे प्रयोजकम्; किंत्वबाध्यत्वम्, लाघवात्, ब्रह्मणो वृत्त्यविषयत्वपक्षे जगतोऽपि ब्रह्मज्ञानेतरबाध्यत्वाच्च, शुक्तिज्ञानस्यापि सद्रूपब्रह्मविषयकत्वेन शुक्तिरूप्येऽपि ब्रह्मज्ञानान्या[2] बाध्यत्वसत्त्वाच्चेति, तदपि तथा; बाध्यत्वं हि ज्ञानजन्याविद्याध्वंसजन्यध्वंसप्रतियोगित्वादिरूपं 'सविलासाज्ञाननिवृत्तिर्बाध' इति विव-

---

1 व्यावहारिकत्वं—ख. 2 ज्ञानान्य—ख.

कत्वं साधकतायामतन्त्रम्, अज्ञानादिसाधके परमार्थसति साक्षिणि तदभावादिति चेन्न; ब्रह्मज्ञानेतराबाध्यत्वस्यात्यन्ताबाध्येऽपि सत्त्वस्योक्तत्वात्। त्रैविध्यविभागे पारमार्थिकव्यावृत्तव्यावहारिकत्वनिरुक्तावपि जनकतायां तत्साधारण्येऽप्यदोषात्। वस्तुतस्तु साक्ष्यप्यज्ञानोपहित एवाज्ञानादिसाधकः; स च

---

रणाद्युक्तेः। तथाच जन्यताया अवच्छेदकभेदेन भेदात् ब्रह्मज्ञानजन्यता ज्ञानान्तरजन्यता चान्यतरत्वेन त्वया निवेश्येति, ब्रह्मज्ञानाद्यजन्य[1]तात्वेन निवेशे लाघवमेव स्फुटम्, गौरवं तु दूरे। किञ्च ब्रह्मज्ञानान्य[2] बाध्यत्वं तद्योग्यतारूपं वाच्यम्, अन्यथा ब्रह्मज्ञानबाध्यप्रातीतिकासाधारण्यापत्तेः। तच्च मूलाज्ञानतत्प्रयुक्तान्यतरभिन्नदृश्यत्वम्, तदभावश्च ब्रह्मतद्धीबाध्यसाधारणः, उक्तान्यतरत्वं वा प्रयोजकम्। तथाच बाध्यतात्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन [3]बाध्यत्वं विशिष्टाभावापेक्षया लाघवं तत्र स्फुटमेव। कालसम्बन्धित्वादेस्तुच्छव्यावृत्तस्य प्रयोजकत्वे तु सुतराम्। शुद्धब्रह्मणो वृत्त्यविषयत्वमतेऽपि न दोषः, येन रूपेण प्रपञ्चबाधकता, तेन रूपेण निवेशात्, जातिविशेषस्यैव तादृशरूपत्वात्, वृत्त्युपहितब्रह्मान्यविषयकज्ञानस्यान्यान्तेन विवक्षितत्वाद्वा। अतएव शुक्तिज्ञानस्य तद्रूपाभावान्नोक्त[4]दोषः। शुक्तिरूप्ये [5]तादृशाबाध्यत्वोक्तिस्तु शोभते; ज्ञानमात्रस्य ब्रह्मज्ञानत्वे तदन्यबाध्यत्वाप्रसिद्धेः॥

**अज्ञानादिसाधक इति**—यद्यपि साक्षी अज्ञानादिसिद्धिरेव न तज्जनकः, नार्थज्ञानादौ[6] संशयाद्यभावप्रयोजकः; अज्ञानस्यैव स्वसंशयाद्यभावप्रयोजकत्वात्। ज्ञानादेरिवाज्ञानस्यापि तार्किकादिरीत्या स्वाभावधीप्रतिबन्धकत्वात्। [7]तथाप्यज्ञाने साक्षिण एव स्वसंशयाद्यभाव-

---

[1] ज्ञानजन्य—ख. ब्रह्मज्ञानान्यज्ञान—ग. [2] ज्ञानान्या. [3] बाध्यत्वविशिष्टा—ग. [4] तद्रूपान्ताभावेनोक्त. [5] तादृश. [6] नाप्यज्ञातांशे, नाप्यज्ञानादौ—क. ख. ग. [7] तथाप्यज्ञानस्य साक्षिसम्बद्धस्यैव—क, सम्बद्धस्यैव—ग.

**व्यावहारिक एव, अनुपहितेन परमार्थसदाकारेण तस्यासाधकत्वात् । एवंच व्यावहारिकसत्त्वमेव सर्वत्र साधकतायां प्रयोजकमिति स्थितम् । यथा चाज्ञानोपहितस्य साक्षित्वेऽपि नात्माश्रयादिदोषः, तथोक्तं दृश्यत्वहेतूपपादने प्राक्, अग्रे च वक्ष्यते । यत्र च यत्साधकं व्यावहारिकं, तत्र तद्व्यावहारिकम् । यत्र तु साधकं प्रातीतिकं, तत्र फलमपि तथैव, न तु व्यावहारिकमिति सर्वविधिप्रतिषेधादिव्यवहारासङ्करः । अत एव लोकस्यापि**

---

प्रयोजकत्वम् । मन्मते घटज्ञानादेरप्युक्तप्रतिबन्धकत्वाभावात् । घटज्ञानादेस्साक्षिभास्यत्वनियमेन साक्षिण एव तत्संशयादिप्रतिबन्धकत्वात् । अज्ञानज्ञानकार्ये चाज्ञानज्ञानत्वादिना कारणत्वं साक्षिण एवाज्ञानोपहितस्येति भावः । **परमार्थसदाकारेणेति** । शुद्ध [1] ब्रह्म न जगत्कारणमिति मतावलम्बनाच्च न दोष इति भावः । **व्यावहारिकसत्त्वमेवेति** । एवकारात्पारमार्थिकसत्त्वमप्रयोजकमित्यर्थः । तेन 'यत्र तु साधकं प्रातीतिक'मिति वक्ष्यमाणं न विरुद्धम् । नन्वेवं व्यावहारिकप्रातीतिकयोः कारणत्वे स्वाप्नेन यागादिना स्वर्गादिकं, ब्रह्महत्यादिना च नरकादिकं व्यावहारिकं स्यात्, तयोः प्रातीतिकमेव स्वर्गादि फलं, अनेन कर्मणा मम स्वर्गादिकं भविष्यतीति परोक्षतया स्वर्गादिप्रतीतेरिति स्वीकारे व्यावहारिकयागादिनापि प्रातीतिकमेव स्वर्गादि स्यात्, एवं व्यावहारिकदण्डादिना प्रातीतिकघटाद्यपि स्यात्तत्राह— **यत्र चेति** । **तद्व्यावहारिकमिति** । तद्व्यवहारसिद्धमित्यर्थः । **तथैव** व्यवहारसिद्धमेव । यादृशस्य यादृशफलं व्यवहारतः प्रमितं तादृशस्य तादृशमेवेति भावः । **न तु व्यावहारिकम्** । न तु व्यावहारिकसत्त्वाश्रय एव । **व्यवहारासङ्करः** । उक्तसङ्करस्याभावः । एतेन—

---

[1] ब्रह्म जग-ख.

**व्यतिक्रमे विचारस्य यादृच्छिकबाधात् भ्रान्तत्वापत्तिरित्युदयनोक्तमपि निरस्तम् ; व्यावहारिकसत्त्वेन लोकमर्यादानतिक्रमात् ।**

---

व्यावहारिकयोरेव साध्यसाधकभावे प्रातीतिकसवितृसुषिरादिकमप्रातीतिकानिष्टसाधकं न स्यात्, शुभाशुभस्वप्नदर्शनादेर्व्यावहारिकराज्यादिसूचकत्वं न स्यादित्यादि प्रत्युक्तम् । यथामानसिद्धस्य साध्यसाधकभावस्यैव प्रकृतग्रन्थार्थत्वात् । अतएव धूलीपटले धूमभ्रमादित्याद्युक्तम् । स्वाप्नार्थस्य शुभाशुभसूचकत्वमित्यादि वक्ष्यते च । किञ्च मन्मते प्रपञ्चस्य मिथ्यात्वेऽपि त्वां प्रति साधकतया दृश्यत्वाद्युपन्यसितुं मया शक्यत एव ; त्वद्रीत्या त्वद्बोधनसम्भवात् ॥

योपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ॥

इति बौद्धं प्रति भट्टोक्तेः[1] । परमतासिद्धः, स्वमतासिद्धः साधकत्वेनोपन्यासार्हः, तत्र साधकस्य पश्चाद्वक्तुं शक्यत्वात् । स्वमते परमते [2]वाऽसिद्धस्तु न तथेत्यर्थकत्वादविरोधात् । न हि शब्दप्रयोगे स्वमतसिद्धत्वमर्थस्यापेक्षितम् । अपिच पारमार्थिकसत्तासम्बन्धस्य प्रयोजकत्वेऽपि आरोपितेऽपि सोऽस्त्येवारोपितः । अनारोपितस्तु न मन्मते प्रसिद्धः ।

सत्यत्वं न च सामान्यं, मृषार्थ[3] परमार्थयोः ।
विरोधात् न हि सिंहत्वं सामान्यं सिंहवृक्षयोः ॥
तुल्यार्थत्वेऽपि तेनैष मिथ्यासंवृति[4] शब्दयोः ।
वचनार्थमुपन्यासो लालावक्त्रासवादिवत् ॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पितेति[5] च ।
कल्पनापि च भिन्नस्य नैव निर्वस्तुके[6] भवेत् ॥

---

1 भेदोक्तेः -क. 2 चासिद्ध इति पा ॥ ख. ग. 3 दृष्टार्थ. 4 संवृत्ति-ख. ग. 5 कल्पनेति-क. ख.ग. 6 निर्वस्तुका.

भट्टाचार्यवचनानि विरुद्धत्वेन भासमानानि सत्त्वत्रैविध्यनिरूप-

इति बौद्धं प्रति भट्टोक्तिस्तु युक्तैव । तेनाधिष्ठानस्याबाध्यस्वरूपस्यान-ङ्गीकारेण तत्सम्बन्धस्य कल्पितस्यापि वक्तुमशक्यत्वात् । अतएव कल्पनापीत्यादिना तदुक्तम् । अतएव च—

तस्माद्यन्नास्ति नास्त्येव यच्चास्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ॥

इति बौद्धं प्रति भट्टोक्तिरपि युक्तैव । अबाध्याधिष्ठानाङ्गीकारं विना प्रपञ्चे तद्बाध्य[1]त्वासम्भवात्, निस्साक्षिकस्य चरमबाधस्यासम्भवाच्च । आस्तिकमते त्रिकालाबाध्यं सत्यं यत्स्वीक्रियते तद्विलक्षणं व्यवहार-कालाबाध्यरूपं व्यावहारिकसत्यं मया स्वीक्रियत इति स्वपरमतयोः सत्यद्वयकल्पनाया माध्यमकीयाया अयुक्तत्वात् । योगाचारस्यापि विज्ञानमेव परमार्थसत्यं, तत्र कल्पितो नीलाद्याकारो व्यावहारिकसत्यः, विशुद्धविज्ञाननिर्णयात्पूर्वमबाध्यत्वादिति कल्पनाया अयुक्तत्वात, क्षणि-कत्वेन मिथ्याविज्ञाननिष्ठस्य कल्पनाधिष्ठानत्वस्य तदभ्युपगतस्य पूर्वोक्त-रीत्याऽसम्भवात् । अतएव तयोर्मतयोरेव—

तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिता ।
[2]तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥

इत्याद्युत्तरवार्तिकेन निरासः । अस्मन्मते तु प्रपञ्चस्य खण्डनयुक्तिभि-र्बाधात्, स्फुरणस्वरूपस्य ब्रह्मणस्त्वधिष्ठानत्वेन बाधानुपलम्भेन बाध-साक्षित्वेन चाबाधात्, 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेषसत्य' इति श्रुतिभिश्च सत्यद्वयकल्पना युक्ततमैव । विस्तरेण च सत्त्वत्रैविध्यमग्रे उपपादयिष्यत इत्यभिप्रेत्याह—भट्टेति । तथाच परमार्थसत एव साधकतेति नियमाभावात्सामान्यतः कालसम्बन्धित्वरूपेण तुच्छवैलक्ष-ण्येन कार्यमात्रं प्रति कारणत्वम् । विशेषतस्तु यादृशयोः कार्यकारणता

[1] तद्धीबाध्य—ख. ग. [2] तस्याथ भा—क. ग

णायामविरोधेन व्याख्यास्यन्ते । तस्मात्पक्षादिसर्वमिथ्यात्व-साधनेऽपि न व्याहतिः ॥

इत्यद्वैतसिद्धौ असतः साधकत्वोपपत्तिः ॥

---

## अथासतः साधकत्वाभावे बाधकनिरूपणम्

ननु सत्त्वापेक्षया तुच्छावैलक्षण्यत्वादगौरवकरत्वेन साधकत्वे कथं तन्त्रत्वमिति चेन्न; त्रिकालबाधविरहरूपस्य सत्त्वस्य लघुत्वाभावात्, जात्यादिरूपस्य तस्य मिथ्यात्वाविरोधित्वात्, उभयसिद्धे सद्विविक्ते साधकत्वदर्शनेन पारमार्थिकसत्त्वस्य साधकत्वाप्रयोजकत्वाच्च । तथाहि—प्रतिबिम्बे बिम्बसाधकत्वं तावदस्ति । तस्य बिम्बात्मना सत्त्वेऽपि प्रतिबिम्बाकारेणा-

---

मानसिद्धा, तादृशत्वेनैव सेति क्वचिद्व्यावहारिकादपि वैदिककर्मणः प्रातीतिकः स्वाप्नविषयः, तस्माच्च व्यावहारिकमित्याशयेनोपसंहरति—तस्मादिति ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तखण्डानां साधकत्वमसत्यपि ॥

इत्यसतस्साधकत्वोपपत्तिः ॥

---

### अथासतः साधकत्वाभावे बाधकनिरूपणम्

बिम्बसाधकत्वमिति । मुखप्रतिबिम्बम्, मुखसन्निधिपूर्वकम्, मुखप्रतिबिम्बत्वात्, यद्यस्य प्रतिबिम्बं तत्तथा, यथा सम्प्रतिपन्नमित्यादिरीतिः । प्रतिबिम्बस्वरूपस्य मिथ्याभूतस्योत्पत्तिमते स्पष्टमसतस्साधकत्वम् । मुखादिबिम्बमेव दर्पणाद्युपाधिसम्बन्धेन मिथ्याभूतेन विशिष्टं प्रतिबिम्बमिति मते स्वरूपतो मिथ्यात्वस्य तत्र परान्प्रति वक्तुमशक्यत्वेऽप्युक्तविशिष्टरूपेण मिथ्यात्वमित्याशयेनाह — तस्येति ।

सत्त्वात्परमार्थसत्त्वं न साधकत्वे प्रयोजकम् । एवं स्वप्नार्थस्यासतोऽपि भाविशुभाशुभसूचकत्वम् । यद्यपि तत्रत्यदर्शनस्यैव सूचकत्वम्, 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' इत्यादि श्रुतिबलात्; तथापि दर्शनमात्रस्यातिप्रसक्तत्वेन विषयोऽप्यवश्यमपेक्षणीय एव । एवं स्फटिकलौहित्यस्य उपाधिसन्निधान साधकत्वं च । न च लौहित्यं स्फटिके न मिथ्या, किंतु धर्ममात्रप्रतिबिम्ब इति न पृथगुदाहरणमिति वाच्यम्; धर्मिभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतरूपादिप्रतिबिम्बादर्शनात्, प्रतिबिम्बस्याव्याप्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यवृत्तिप्रतीत्ययोगाच्च । लौहित्ये स्फटिकस्थत्वारोपे तस्य प्रतिबिम्बत्वम्, स्फटिके लौहित्यारोपे तु तस्य मिथ्यात्वमिति विवेकः । 'स्फटिकमणेरिवोपधाननिमित्तो लोहितमे' ति लोहितिम्नो मिथ्यात्वं दर्शितं प्रतिबिम्बसत्यतावादिभिः पञ्चपादिकाकृद्भिः । एवं रेखातादात्म्येनारोपितानां वर्णानामर्थसाधकत्वम् । न च रेखास्मारिता वर्णा एवार्थसाधका इति वाच्यम्; आशैशवमयं ककारोऽयं गकार इत्यनुभवादभेदेनैव स्मरणात्, विवेके

श्रुतिबलादिति । 'आरुह्य नौकावृषकुञ्जरेषु भुक्त्वा रुदित्वा ध्रुवमर्थलाभः' इत्यादिस्मृत्युन्नीतश्रुतिबलात्[1] । स्वप्नकालीनभोजनादिज्ञानापेक्षयोक्तभोजनादेरेव लघुत्वात्, कृष्णदन्तादिविशेषणस्य सूचकत्वेन तद्विशिष्टदर्शनस्योक्तश्रुतौ सूचकत्वनिर्देशा[2]सम्भवाच्च, विषय एव सूचको न धीरित्याशयेन यद्यपि तथापीत्युक्तम् । लिङ्गस्या[3]कारणत्वमतेऽप्येवमपेक्षणीयता बोध्या । पञ्चपादिकेति । तथाच तन्मते तथोक्तेर्वाचस्पतिमते लौहित्यस्य प्रतिबिम्बत्वेऽपि न क्षतिरिति भावः । विवेक इति । कस्य

[1] इत्यादिस्मृतिबलात् ख. [2] निर्देशसम्भवाच्चेति क. ख. ग. [3] लिङ्गस्याकरण ग.

सत्यपि दृढतरसंस्कारवशान्नारोपनिवृत्तिः। अतएव ककारं पठति लिखति चेति सार्वलौकिको व्यहारः। वर्णारोपितदीर्घत्वह्रस्वत्वादीनां च नगो नाग इत्यादावर्थविशेषप्रत्यायकत्वम्। नच वर्णेष्वनारोपितध्वनिसाहित्यं तदभिव्यक्तिरूपं वा दैर्घ्यं प्रत्यायकम्, एवं ह्रस्वत्वादिकमपीति वाच्यम्; ध्वनीनामस्फुरणेऽपि दीर्घो वर्ण इत्यादिप्रत्ययात्। नन्वारोपितेन वर्णदैर्घ्यादिना कथं तात्त्विकार्थसिद्धिः; न ह्यारोपितेन धूमेन तात्त्विकवह्निसिद्धिरिति चेन्न; साधकतावच्छेदकरूपवत्त्वमेव साधकतायाः प्रयोजकम्, न त्वारोपितत्वमनारोपितत्वं वा; धूमाभासस्य त्वसाधकत्वं साधकतावच्छेदकरूपव्याप्त्यभावात्, नासत्त्वात्, अनाभासत्वग्रहश्च तत्र बहुलोर्ध्वतादिग्रहणवद्व्याप्तिग्रहणार्थमेवापेक्षितः। तदुक्तं वाचस्पतिमिश्रैः—"यथा सत्यत्वाविशेषेऽपि चक्षुषा रूपमेव ज्ञाप्यते न रसः, तथैवासत्त्वाविशेषेऽपि वर्णदैर्घ्यादिना सत्यं ज्ञाप्यते, न तु धूमाभासादिना" इति। दृष्टं हि मायाकल्पितहस्त्यादे रज्जुसर्पादेश्च भयादिहेतुत्वं सवितृसुषिरस्य च मरणसूचकत्वं शङ्काविषस्य

चिदित्यादिः। ध्वनिसाहित्यं—दीर्घत्वाश्रयध्वनिसाहित्यम्। व्याप्त्यभावात्—व्याप्यत्वेनाग्रहात्। नासत्त्वात्—नारोपितत्वात्। धूमाभासादिनेति। व्याप्यत्वेनागृहीतत्वादिः। मायाहस्त्यादिकं सत्यं शक्तिविशेषेण सृज्यत इति परेणोक्तं, [1](तन्नयुक्तम्;) घटोत्कचादिमायाकल्पितत्वेन हस्त्यादेर्भारतादावुक्तत्वात्। प्रतियोद्धा[2] निराकृतस्यावयवादिदर्शनस्य पश्चादभावेन मायारूपत्वस्य तत्र स्पष्टत्वादित्याशयेनाह—मायाकल्पितेति। शङ्काविषेति। भयविशेषप्रयोजकविषत्वभ्रमवि-

[1] कुण्डलितः पाठः क्वाचित्कः. [2] प्रतिबोध.

च मरणहेतुत्वम् । ननु तत्र शङ्कैव भयमुत्पाद्य धातुव्याकुलतामुत्पादयतीति सैव मरणहेतुः, न तु शङ्कितं विषमपि; एवं सवितृसुषिरमायाकल्पितगजादीनामपि ज्ञानमेव तत्तदर्थक्रियाकारि, न त्वर्थोऽपि, तथा च सर्वत्रोदाहृतस्थलेषु ज्ञानमेव हेतुः, तच्च स्वरूपतस्सत्यमेव, अन्वयव्यतिरेकावपि ज्ञानस्यैवं कारणतां ग्राहयतः, न हि सन्निहितं सर्पमजानानो बिभेति । न चार्थानवच्छिन्नस्य ज्ञानस्य हेतुत्वेऽतिप्रसङ्गादर्थावच्छिन्नमेव ज्ञानं हेतुः, तथाचार्थोऽपि हेतुरेवेति वाच्यम्; अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वेऽप्यवच्छेदकस्यार्थस्य ताटस्थ्येनाहेतुत्वोपपत्तेः, घटावच्छिन्नस्य तदत्यन्ताभावतद्ध्वंसादेर्घटदेशकालभिन्नदेशकालादित्वेऽप्यवच्छेदकस्य घटस्य तदभाववत्, घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदान्तसाध्यत्वेऽपि घटब्रह्मणोस्तदभाववत्, घटप्रागभावस्य घटं प्रति जनकत्वेऽपि घटस्याजनकत्ववत्, विशेषादर्शनस्य भ्रमं प्रति जनकत्वेऽपि विशेषदर्शनस्य तदभाववत्, विहिताकरणस्य प्रत्यवायजनकत्वेऽपि विहितकरणस्य तदभाव वत्, स्वर्गकामनाया यागजनकत्वेऽपि स्वर्गस्य तदजनकत्ववत्, अतीतादिस्मृत्यादेर्दुःखादिजनकत्वेऽप्यतीतादेस्तदजनकत्ववत्, असद्विषयकपरोक्षज्ञानस्य तद्व्यवहारहेतुत्वेऽप्यसतस्तदभाववत्, चिकीर्षितघटबुद्धेर्घटहेतुत्वेऽपि घटस्य तदहेतुत्ववत्, ब्रह्मज्ञानस्य तदज्ञाननिवर्तकत्वेऽप्युदासीनस्वभावस्य ब्रह्मणस्तदभाववत्, ब्रह्माज्ञानस्य जगत्परिणामिकारणत्वेऽपि ब्रह्मणस्तदभाववच्च । न च तथापि मिथ्यार्थे ज्ञानव्यावर्तकताऽस्तीत्यसतोऽपि हेतुत्वमिति वाच्यम्; नहि व्यावृत्तधीहेतुत्वं व्यावर्तकत्वम्, किंतु

---

शेष्येत्यर्थः। अवच्छेदकस्येत्यादि। अवच्छेदकस्योपाधेः। अवाच्छिन्नस्य

व्यावृत्तिधीहेतुधीविषयत्वमेव; सत्यपि दण्डे तदज्ञाने व्यावृत्त्यज्ञानात्। अथावच्छेदकस्य मिथ्यात्वेऽवच्छिन्नस्यापि तन्नियमः, न; तुच्छज्ञाने तुच्छवैलक्षण्ये च तुच्छत्वस्य, प्रातिभासिकाद्वैलक्षण्ये प्रातिभासिकत्वस्य, पंचमप्रकारायामात्मस्वरूपभूतायां वाऽनिर्वचनीयाज्ञानस्य निवृत्तौ चतुर्थप्रकारानिर्वचनीयत्वस्य, पारमार्थिकात्मस्वरूपे तद्भिन्ने वानृतद्वैतस्याभावेऽनृतत्वस्य चादर्शनात् तत्रावच्छेदकानामसदादीनां ताटस्थ्येऽत्रापि तथास्त्विति

---

तदुपहितस्य । तत्रावच्छेदकानामिति ॥

वस्तुतस्तु तुच्छोपहितरूपेण तुच्छज्ञानादेस्तुच्छत्वमेव । अत एव तेन रूपेण तस्य न प्रामाणिकत्वम् । अतएव प्रातिभासिकवैलक्षण्यादेः स्वरूपतो व्यावहारिकत्वेऽपि प्रातिभासिकोपहितरूपेण प्रातिभासिकत्वमप्रामाणिकत्वं च[1] । एवं पञ्चमप्रकारस्यापि स्वरूपेणैव तत्वम् । अविद्याप्रतियोगिकत्वाद्युपहितरूपेण त्वविद्यादशायां चतुर्थप्रकारत्वमेव । द्वैताभावस्यापि स्वरूपेणैव सत्त्वम् । द्वैताभावत्वोपहितरूपेण त्वनृतत्वम् । अतएव मुक्तौ न तदुपहितमिति मोहमूलैवात्र परोक्तिः । अतो मिथ्योपीहतरूपेण ज्ञानस्य मिथ्यात्वमावश्यकमिति ध्येयम् ॥

'यत्तु प्रतिबिम्बस्य नानाविधत्वात् क्वचिद्व्याप्यवृत्तित्वसम्भवेन तदभावनियमोक्तिरयुक्ता; वर्णे दीर्घत्वादिप्रत्ययो ध्वनिद्वारा युक्त एव, ध्वनेरस्फुरणे तदप्रत्ययात्, वर्णग्रहकाले ध्वनेरपि योग्यत्वेन ग्रहनियमाच्च, वस्तुगत्या दीर्घध्वन्यभिव्यक्तं यद्वर्णस्वरूपं तस्यैव दीर्घत्वरूपत्वसम्भवाच्च । आरोपितस्य साधकताङ्गीकारे तु कारणतावच्छेदकदण्डत्वादेस्त्वन्मते दण्डाभासेऽपि सत्त्वेन ततोऽपि घटाद्यापत्तिः' इति,

---

1 प्रातिभासिकत्वं तत्त्वं च.

**चेत्, अत्रोच्यते—यदुक्तं ताटस्थ्यलक्षणमुपलक्षणत्वमेव सर्वत्रावच्छेद(क)स्येति, तन्न, विशेषणत्वे सम्भवत्युपलक्षणत्वायोगात् ।**

---

तन्न ; नानाविधत्वेऽपि हि प्रतिबिम्बं व्याप्यवृत्त्येव दृष्टम्। दीर्घत्वादिधीस्तु वर्णेषु न ध्वनिद्वारा, साक्षात्सम्बन्धेन वर्णे तत्प्रत्ययात् परम्परया तद्धीकारणत्वेन गौरवं च । किञ्च परोक्ष[1]वर्णज्ञानं ध्वनिविषयकत्वानियमात् साक्षाद्वर्णे दीर्घत्वप्रकारकम्, तत्र ध्वनिभासकसामग्रीकल्पने गौरवात् । वस्तुगत्या दीर्घध्वन्यभिव्यक्तस्य[2] दीर्घतारूपत्वे तादृशस्याकारादेर्ह्रस्वत्वमारोपितं वाच्यम्, तत्र च न विनिगमकम्; ह्रस्वध्वन्यभिव्यक्तस्वरूपं ह्रस्वतारूपं दीर्घत्वं त्वारोपितमित्यस्यापि वक्तुं शक्यत्वात् । न च ह्रस्वदीर्घध्वन्यभिव्यक्तमकारादिद्वयमिति वाच्यम्; एकैका एवाकारादिव्यक्तय इति मीमांसकमते तदसम्भवाद्गौरवाच्च । दण्डाभासादेश्च न घटादिहेतुत्वापत्तिः; घटादिहेतुता हि नाभाससाधारणेन दण्डत्वादिना, किंतु तद्व्यावृत्तदण्डत्वादिजात्यन्तरेण । अथवा व्यावहारिकदण्डादिमात्रवृत्तितादात्म्यानामखण्डान्यतमत्वविशेषरूपेण कारणतावच्छेदकताघटकसम्बन्धत्वात्, कपालसंयोगादिगतजातिविशेषस्य दण्डाभासादिस्थलीयकपालसंयोगादौ विरहाद्वा न दोषः । यदि हि जातिर्विवरणाद्युक्तरीत्या सत्सामान्यरूपा, यदि वा मूलाविद्यैव उभयथापि दण्डादिव्यक्तिविशेषमात्रे दण्डत्वादि[3]मत्त्वात्तद्व्यक्तिविशेषगततादात्म्यानामन्यतमत्वेनैव सम्बन्धत्वं वाच्यम् । तथा(च) प्रातीतिकव्यावृत्ततादात्म्यानामेवान्यतमत्वेन कारणतावच्छेदकघटकतासम्बन्धत्वान्न दोषः । वस्तुतो दण्डाभासादौ दण्डत्वादेस्सद्रूपाविद्याभ्यामन्यत्वेनाभ्युपगम्यमानस्य सत्त्वे मानाभावः; प्रातीतिके व्यावहारिकतादात्म्याध्यासस्य तत्त्वप्रदीपिकादावुक्तत्वात् दण्डाद्यर्थप्रवृत्तेरुपपन्नत्वात् ॥

---

[1] परोक्त. [2] व्यक्तत्वस्य. [3] मत्वं यद्व्यक्ति.

विशेषणबाधपूर्वकत्वादुपलक्षणत्वकल्पनायाः, अन्यथा "दण्डी प्रैषानन्वाह" लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादावपि वेदे दण्डलौहित्यादेरुपलक्षणत्वात्तदभावेप्यनुष्ठानप्रसङ्गः, 'सर्वादीनि सर्वनामानि' इत्यत्र सर्वशब्दस्य सर्वनामसंज्ञा न स्यात्, 'जन्माद्यस्य यत' इत्यत्र जन्मनो ब्रह्मलक्षणत्वं न स्यात्; विशेषणार्थत्वेन तद्गुणसंविज्ञानबहुव्रीहिसम्भवेऽपि उपलक्षणार्थत्वेनातद्गुणसंविज्ञानबहुव्रीहिस्वीकारप्रसङ्गात् । एवं 'असिपाणयः प्रवेश्यन्ता' मित्यादिलौकिकप्रयोगेऽपि । प्रतिबिम्बादिज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बादीनामपि जनकत्वे बाधाभावान्नोपलक्षणत्वपक्षो युज्यते । उदाहृतस्थलेषु सर्वत्र बाधक-

---

अनुष्ठानप्रसङ्ग इति । यद्यप्युक्तवाक्ये दण्डादिकमेव प्रैषानुवचनाद्युद्देशेन विधीयते, तदाश्रयस्य मैत्रावरुणादेः 'मैत्रावरुणः प्रेष्यति चानु चाह' इत्यादिना प्राप्तत्वात्, तथाऽपि कादाचित्कसम्बन्धद्वारा साधनतया तद्विधिः स्यात् । न चानुवचनकाले दण्डस्यासम्बन्धेऽवलम्बन रूपदृष्टद्वारानुवचनसाधनत्वं तस्य न स्यादिति वाच्यम्; कादाचित्कावलम्बनाधीनश्रमापनयद्वारा तत्साधनत्वसम्भवात् । यत्तु—"ज्ञानकार्येऽपि विषयहेतुत्वे बाधकमस्ति, अतीतधूमादेः स्वज्ञानकार्यानुमित्यादौ हेतुत्वासम्भवात्; अतस्तत्राप्युपलक्षणत्वम् । दण्डीत्यादौ च 'तदस्यास्त्यस्मिन्' इति सूत्रेण विद्यमानसम्बन्धे मतुपो विधानाच्छ्रौतं विशेषणत्वम् । लोहिते[1]त्यादौ च बहुव्रीहेर्मतुप्समानार्थत्वात्, सर्वादीत्यादौ च तद्गुणसंविज्ञानस्यातादृशबहुव्रीह्यपेक्षया मुख्यत्वान्नोपलक्षणत्वम्" इति, तन्न; यथा हि धूमज्ञानं विना जायमानवह्न्यनुमितौ न तस्य व्यभिचार, [2]स्वाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वात्,

1 लोहिते. 2 व्यवहितोत्तरत्वस्य.



5447

तथा धूमं विना जायमानानुमितौ न तस्य सः। यदि तु स्वज्ञानसम्बन्धेन विषयस्य कारणत्वं लाघवात, न तु ज्ञानस्य, तदा सुतरां न दोषः; अतीतस्यापि स्वजन्यापूर्वसम्बन्धेन यागादेरिव व्याप्त्यादिविषयतानिरूपितस्वविषयताकज्ञानसम्बन्धेन धूमादेरपि हेतुत्वसम्भवात्। न च—यत्र ज्ञाने व्याप्यत्वादिविशिष्टधूमत्वादिरूपेण धूमादिर्न भातः, किं त्वन्यः, तज्ज्ञानव्यक्तेर्धूमादिसम्बन्धत्वासम्भवादनुपपत्तिरिति—वाच्यम्; स्वज्ञानाव्यवहितोत्तरानुमितौ धूमादेः कारणत्वेऽनुपपत्त्यभावात् स्ववृत्तिधूमत्वाद्यवच्छिन्नविषयताकज्ञानत्वेन रूपेण तज्ज्ञानस्यापि धूमादिसम्बन्धत्वसम्भवात्। ([1] एतेन—[2] न लिङ्गस्यानुमितौ कारणत्वं युक्तम्; कार्याव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतरसत्तायामेव सर्वस्य कारणस्य कारणतायास्तान्त्रिकैः स्वीकारात्, अतीतादिधूमादेः कारणत्वासंभवा[3]दित्यपास्तम्; उक्तक्षणे विद्यमानधूमादेरेवोक्तसंबन्धेन मया हेतुत्वस्योक्तत्वात्। न चैवमतीतव्यक्तेस्तद्व्यक्तित्वेन हेतुतास्थले कारणता न स्यादिति—वाच्यम्; इष्टत्वात्, विशिष्टकारणताग्राहकमानस्य बाधकाभावे सत्येव विशेषणीभूतलिङ्गे कारणताग्राहकत्वात्।) मतुबर्थस्तु न विद्यमानः सम्बन्धः; किंतु विद्यमानस्यास्तीत्यस्य, तदित्यनेनैवान्वयात्। यदिच सम्बन्धविशिष्टेऽस्तित्वान्वयात्सम्बन्धेऽपि तदन्वय इत्युच्यते, तथापि तादृशोऽर्थो विशेषणत्वस्यौत्सर्गिकत्वादेव। अन्यथा सम्बन्धोपलक्षित एव तदन्वयसम्भवात्। किञ्चास्मिन्नस्तीत्यर्थे मतुपि का गतिः? न ह्यस्मिन्निति तदित्यत्रान्वेति; येन विशिष्टेऽस्तित्वान्वयात्त्वदिष्टसिद्धिः, किंतु कारकत्वादस्तिक्रियायाम्, तथाचाधाराधेयभावरूपमत्वर्थस्य कादाचित्कत्वेऽपि तत्पदार्थस्यास्तित्वमादाय मतुप्सम्भवत्येव।

[1] कुण्डलितः पाठः–क पुस्तके न दृश्यते. [2] एतेन लिङ्ग–ग. [3] कारणत्वसंभवात्–ग.

**मस्त्येवेति विशेषः। तथाहि प्रथमे घटदेशकालौ गृहीत्वा तद्भिन्न-देशकालत्वं तदत्यन्ताभावादौ ग्राह्यम्; घटस्यापि तत्सम्बन्धे तद्देशकालभिन्नदेशकालत्वमेव व्याहतं स्यात्। द्वितीये त्विष्टापत्तिः; क्वचित् घटज्ञानस्य घटेच्छाजनकत्ववत् घटं प्रत्यपि**

---

अतएव गावोऽस्यासन् भविष्यन्ति वेत्यादौ गवादीनामस्तित्वाभावस्थले गोमानित्यादि न भवतीति महाभाष्यादावुक्तम्॥

वस्तुतस्तु सम्बन्धमात्रे मतुप्। अतएव 'मतुबस्त्यर्थे' इति सूत्रेणासधात्वर्थसम्बन्धमात्रे स विहितः। अतएव च दण्ड्ययमासी दित्यादेः साधुत्वं महाभाष्यादावङ्गीकृतम्। तथा च दण्डी प्रैषानन्वाह, दण्डी गच्छति' इत्यादौ विशिष्टवैशिष्ट्यान्वयस्यौत्सर्गिकत्वादेव दण्ड-सम्बधानुवचनाद्योरेककालीनत्वलाभः। न च 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रेण सूत्रान्तरानुक्तार्थेऽपि प्रत्ययविधानात् 'वसन्ददर्श' इत्यादौ शतृप्रत्यय इव दण्ड्यासीदित्यादौ मतुप्प्रत्ययस्याप्यतीतकालोऽर्थ इति वाच्यम्; तावतापि 'दण्डी भुङ्क्ते, भाविकृत्यमासीत्' इत्यादौ गत्यभावात्, आद्ये हि नोक्तसूत्रप्रवृत्तिः; आख्यातस्य विरुद्धार्थकत्व-स्थल एव तत्स्वीकारात्, द्वितीयेऽतीतकृत्यमासीदित्यन्वयासम्भवात्, प्रकारान्तरेण समाधानापेक्षया चोक्तरीतिरेव युक्ता। विद्यमानसम्बन्धा-र्थक एव बहुव्रीहिरित्युक्तिस्तु शोभते; नष्टधनोऽयमित्यादावतथात्वात्। अतएव 'मत्वर्थे बहुव्रीहिः' इति कात्यायनोक्तिरौत्सर्गिकपरा। तद्गुण-संविज्ञानमुख्यत्वं तु विशेषणत्वमुख्यत्वादेव॥

**क्वचित् घटज्ञानस्येति।** भाविघटज्ञानस्य घटं प्रत्यपि कारण-त्वम्। न च—घटोद्देश्यकेच्छाधीनकृत्यान्यथा[1]सिद्धं ज्ञानमिति—वाच्यम्; कृतेरपि कपाल[2]संयोगेनान्यथासिद्धत्वापत्तेः। अन्वयव्यतिरेकौ

---

[1] कृत्यन्यथा–ख.          [2] काल–क.

जनकत्वात्। ब्रह्मणो वेदान्तसाध्यत्वे तु नित्यत्वविरोधः। तृतीये प्रागभाववत् घटस्य स्वजनकत्वे प्रतियोगिप्रागभावयोः समानकालीनत्वापत्तिः, स्वावधिकपूर्वत्वघटितजनकत्वस्य स्वस्मिन्व्याहतत्वं च। चतुर्थे पञ्चमे च प्रतियोगितदभावयोः सहावृत्त्या भ्रमप्रत्यवाययोरनुत्पत्तिप्रसङ्गः। षष्ठे कामनावत् कामनाविषयस्य यागजनकत्वे तस्य प्राक्सत्तया तत्कामनैव व्याहन्येत; सिद्धे इच्छाविरहात्। सप्तमेऽतीतस्य जनकत्वे कार्याव्यवहितपूर्वकाले स्वस्वव्यापारान्यतरसत्त्वापत्तिः। अष्टमेऽसतो जनकत्वे निःस्वरूपत्वव्याघातः। नवमे चिकीर्षितघटज्ञानवत् स्वस्य जनकत्वे पूर्ववद्व्याघातः। दशमे उदासीनस्य ब्रह्मणो न निवर्तकत्वम्; स्वरूपतः उपहितस्यैव वृत्तिविषयत्वेन तस्याविषयत्वात्, उपहितस्य च निवर्तकत्वमस्त्येव। एकादशे ब्रह्माज्ञानस्य पारिणामिकारणत्वेऽपि न ब्रह्मणो जगत्कारणत्वम्; कार्ये जडत्वोपलम्भात्। एवंविधबाधकबलेन तत्रोपलक्षणत्वस्वीकारात्। न च प्रकृते बाधकमस्ति, अव्यवहितदेशकालादिवृत्तित्वस्य प्रातिभासिकसाधारणत्वात्। इदानीमत्र सर्प इत्यादिप्रतीत्यविशेषात्। न हि क्वचिद्बाधकबलेन मुख्यपरित्यागः कृत इति सर्वत्र तथैव भविष्यति; उत्कर्षाद्यनुविधानाच्च। तथा हि— स्वप्ने जागरे चोत्कृष्टकलधौतदर्शनादुत्कृष्टं सुखम्, उत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टं भयादि दृश्यते; विषयस्याकारणत्वे तदुत्कर्षा-

---

च तुल्यौ ज्ञात्वैव हि घटः क्रियते। उपहितस्येति। ज्ञानकार्यं प्रति विषयहेतुताया उक्तत्वादिति भावः। कारणत्वं—परिणामित्वम्। जडत्वेति—जडत्वमात्रेत्यर्थः। चैतन्यपरिणामत्वे कार्यं[1] चैतन्यं

---

[1] कथं.

नुविधानं कार्ये न स्यात्; न ह्यकारणोत्कर्षः कार्यमनुविधत्ते इति न्यायात्। न च ज्ञानप्रकर्षादेव तत्प्रकर्षः; ज्ञानेऽपि विषयगतप्रकर्षं विहायान्यस्य प्रकर्षस्याभावात्। अथ ज्ञानगता जातिरेव प्रकर्षः। न; चाक्षुषत्वादिना सङ्करप्रसङ्गात्, विषयप्रकर्षेणैवोपपत्तौ चाक्षुषत्वादिव्याप्यनानाजात्यङ्गीकारे गौरवान्मानाभावाच्च। किञ्च ज्ञानस्य भयादिजनकत्वे सर्पाद्यवच्छिन्नत्वमेव कारणतावच्छेदकमास्थेयम्; ज्ञानत्वेन जनकत्वेऽतिप्रसङ्गात्, तथा च मिथ्या(त्वा)वच्छिन्नत्वाकारेण ज्ञानस्य मिथ्यात्वात् भ्रमस्थले ज्ञानमात्रस्य जनकत्वेऽपि मिथ्याभूतस्य जनकत्वमागतमेव। जनकतावच्छेदकरूपेण च मिथ्यात्वे रूपान्तरेण सत्त्वमप्यसत्त्वान्नातिरिच्यते; अनुपयोगात्। तदुक्तं खण्डनकृद्भिः–'अन्यदा सत्त्वं तु पाटच्चरलुण्ठितवेश्मनि यामिक-

---

स्यादिति भावः। ज्ञानेऽपि विषयगतप्रकर्षमिति। न च दोषप्रकर्षादेव ज्ञाने प्रकर्ष इति वाच्यम्; दोषप्रकर्षेऽपि ज्ञानप्रकर्षस्य विषयान्यस्यानु[1]पलब्धेः। तुल्यदोषा[2]धीनत्वमपि भ्रमविषययोः प्रमाविषययोर्वा प्रकर्षाप्रकर्षाभ्यां सुखादिप्रकर्षाप्रकर्षदर्शनात्, विषयप्रकर्षेणानुभविकेनैवोपपत्तौ ज्ञानप्रकर्षे मानाभावस्य वक्ष्यमाणत्वाच्च। सङ्करेति। तस्य दोषत्वानभ्युपगमे तु ज्ञान इव विषयेऽपि प्रातीतिके विनिगमनाविरहेण जातिसिद्ध्या तस्यापि हेतुत्वसिद्धिः। किञ्च ज्ञानगतवैजात्यमननुभवान्न विषयातिरिक्तम्; अन्यथा साकारवादापत्तेः। अनुमितित्वादिकमपि[3] व्याप्त्यादिधीजन्यत्वादिरूपं विषयघटितमेव। व्याप्तिग्रह[4]काले तद्धीरसिद्धैवेति भावः। अन्यदा सत्त्वमिति। कार्योपधानकालान्य[5]कालसत्त्वं

---

1 न्यत्वस्या. 2 दोषाधीनभ्रम–क. ख. ग. 3 न व्याप्त्यादि. 4 व्याप्त्याद्यग्रह–ग. 5 कार्योपधानकाल–क.

जागरणवृत्तान्तमनुसरति' इति । स्वरूपेणापि तु भ्रमज्ञानस्य मिथ्यात्वमस्त्येव, स्वरूपतो बाधाभावे विषयतोऽप्यबाधप्रसङ्गात्। न च गुणजन्यत्वमुपाधिः; तस्याप्यापाद्यत्वेन वह्न्यनुमाने वह्निसामग्र्या इव साधनव्यापकत्वेनानुपाधित्वात्, विषय इव मिथ्यात्वप्रयोजकदोषादिसमवहितसामग्र्या ज्ञानेऽप्यविशेषाच्च । तुच्छज्ञानतद्वैषम्यादौ च तुच्छत्वादर्शनमबाधकम्; अवच्छेद्यावच्छेदकयोः सर्वत्र सारूप्यनियमानभ्युपगमात्, प्रकृते चावच्छेदक इवावच्छेद्येऽपि मिथ्यात्वप्रयोजकरूपतुल्यत्वेन सारूप्यो-

---

यथा कार्योपधाने व्यर्थमुक्तं खण्डने, तथा कारणतानवच्छेदकरूपेण सत्त्वमपि, असतः कारणताया अनपोदितत्वात् । उपाधिरिति । भ्रमो यद्यबाधितं ज्ञानं स्यात्तदा अबाधिताविषयकं स्यादित्यत्रेति शेषः । दोषादीत्यादिपदेनाविद्या गृह्यते । प्रमात्वावच्छिन्नं प्रति मनस्त्वेनेव भ्रमत्वावच्छिन्नं प्रत्यविद्यात्वेन परिणामित्वम् । भ्रमत्वप्रमात्वे च पल्लवाज्ञानकार्यविषयकधीत्वतदन्यधीत्वादिरूपे जातिस्वरूपे वाऽनुगते । साक्षिरूपं ज्ञानमपि [1]विषयोपहितरूपेण मिथ्येति न तत्र व्यभिचार इति भावः । न च लाघवाद्रजतत्वादिनैव दोषकार्यत्वाद्रजतादिभ्रमो न चाकचक्यादिधीरूपदोषजन्य इति वाच्यम्; तादृशधीमात्रस्य भ्रमा[2]जनकत्वेन तद्धीव्यक्तेस्तत्वेन[3] स्वविशिष्टं प्रति कारणत्वस्य वाच्यतया स्वविशेष्याश्रयचैतन्यवृत्तित्व[4]सम्बन्धेन तत्तद्रजतादाविव तद्विषयकाविद्यापरिणामरूपे भ्रमेऽपि स्वविशिष्टत्वस्य सत्त्वेन भ्रमस्यापि दोषकार्यत्वानपायात् । ननु तुच्छज्ञानादेश्शब्दादिजन्यत्वेन स्वरूपतो न तुच्छत्वं यथा, तथा भ्रमस्य मिथ्याविषयोपहितरूपेण मिथ्यात्वं न स्वरूपत इति किं न स्यात्तत्राह—तुच्छेति । सारूप्येति । समानस्वरूपतेत्यर्थः ।

---

1 साक्षितावच्छेदक—क. ग. 2 भ्रम. 3 स्तद्धीव्यक्तित्वेन. 4 श्रयवृत्तित्व.

पपत्तेः । सर्वसाधारणं चैकं कारणत्वमभ्युपगम्यैतदवोचाम । वस्तुतस्तु दण्डतन्त्वादिसाधारणमेकं कारणत्वं नास्त्येव; यत्र तव सत्त्वमवच्छेदकं, (तत्र) [1]मम तुच्छविलक्षणत्वादिकम्; किंतु कार्यतावच्छेदकं घटत्वपटत्वादि कारणतावच्छेदकं च दण्डतन्तुत्वादि । तद्भेदाच्च कारणत्वं भिन्नम् । यथा गोगवयसादृश्यमन्यत् भ्रातृभगिन्यादिसादृश्यमन्यत्; तत्र नैकमवच्छेदकम्, किंतु गवयत्वभगिनीत्वादिकमेव; तद्वदत्रापि दण्डत्वादिकमेव सत्वासत्वोदासीनमवच्छेदकं वाच्यम् । तथाच जनकत्वा[2]नुसारेण न सत्त्वासत्त्वसिद्धिः । तदुक्तं खण्डनकृद्भिः—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।

---

नास्त्येवेति । मानाभावादिति शेषः । तुच्छविलक्षणत्वादिकमिति । कालसम्बन्धित्वं तुच्छविलक्षणत्वम् । आदिना अधिकरणसम्बन्धित्वादिकं गृह्यते । न चैवं—तुच्छमपि कारणं कार्यविशेषे स्यात्, तुच्छव्यावृत्तरूपेण सामान्यकारणत्वे तु सामान्यसामग्रीविरहादेव नापत्तिरिति वाच्यम्; बौद्धैरपि तस्य कारणताग्राहकमानाविषयत्वेनार्थक्रियाकारित्वानुक्तेः कार्यविशेषं प्रति तस्य कारणत्वाकल्पनात् । ननु नियतपूर्वसत्त्वरूपं कारणत्वं कथमसति[3] तत्राह—पूर्वसम्बन्धनियम इति । कार्याव्यवहितप्राक्कालावच्छेदेन कार्यव्यापकत्वे सत्यनन्यथासिद्धत्वरूप इत्यर्थः । व्यापकतायां प्रतियोग्यधिकरणव्यावृत्तविशेषणताविशेषाणामन्यतमसम्बन्धेन कार्यवन्निष्ठत्वं निवेश्यम्, तेनाभावस्य सिद्धान्ते सार्वत्रिकत्वेऽपि न क्षतिः । अथवा पूर्वसम्बन्धस्य नियमो यत्रेति व्युत्पत्त्या नियतान्वयव्यतिरेकशालिनि स्वीक्रियमाणं यद्धेतुत्वं तस्मिन्नतिरिक्तपदार्थरूपतया आवयोस्तुल्य इत्यर्थः ।

---

1 न मम.　2 जनकत्वाजनकत्वा.　3 मसदिति.

हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा" ॥ इति ।
"अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः" ॥ इति च

न चैवम्—

"अन्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः ।
नान्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः" ॥

---

**हेतुतत्त्वं** हेतुत्वं तस्मात् **बहिर्भूतं** तदघटकमित्यर्थः । तुच्छस्य व्यापकत्वासम्भवात् कारणताग्राहकदेशकालान्वयव्यतिरेकधीविषयत्वाभावाच्च सत्त्वं न कारणताशरीरे निवेश्यम् । तथाच सत्त्वस्येवासत्त्वस्य कथा वृथेति भावः[1] । अथवा हेतोस्तत्त्वमसाधारणधर्मः तद्बहिर्भूतं तद्भिन्नं सत्स्वरूपत्वमसत्स्वरूपत्वं चेत्यर्थः । तुच्छस्वरूपस्येवाखण्डसद्रूपस्यापि[2] कारणताग्राहकप्रमाणविषयत्वानङ्गीकारान्न कारणत्वमिति भावः । यदि कारणताश्रयस्य सत्तासम्बन्धोऽपेक्षते, तदा सोऽस्त्येव कल्पितः कल्पितेऽपि । परंतु स नापेक्षत[3] इति वस्तुगतिरित्याशयेन कथा वृथेत्युक्तम् । कारणस्य सत्तानियमे साधकाभावमुक्त्वा बाधकमाह—**अन्तर्भावितेत्यादि** । यद्यन्तर्भावितसत्त्वं सत्ताविशिष्टं सत्ता तदाश्रयश्चोभयं यदि कारणताश्रयः, तदा ततस्तादृशाभ्युपगमादेव असत्सत्तानाश्रयोऽपि कारणमिति सिद्धम् । न हि सत्तायां सत्तान्तरमस्ति, न वा सैव सत्ता । तस्यां सत्तान्तराभ्युपगमे तस्यापि स्वप्रत्यक्षादिकारणत्वनिर्वाहाय सत्तान्तरं वाच्यमित्यनवस्था नानासत्ताभ्युपगमात् । सत्ताकारानुगतबुद्धिलङ्घने घटादिस्वरूपसत्तयैव निर्वाहो[4] जातिमात्राय जलाञ्जलिश्च तव

---

[1] न कारणशरीरे निवेश्यते सत्वमिवेति भावः—क. न कारणशरीरे निवेश्यमिति भावः—ग. [2] स्वरूपस्यापि. [3] नापेक्षित—क. ग. [4] निर्वाहे—ग.

इति तवापि समानमिति—वाच्यम्; ममाधिष्ठाने स्वरूपत एव सत्ताङ्गीकारः, तव तु कारणे स्वरूपातिरिक्तसत्ताङ्गीकार इति विशेषात्। यत्तु अर्थो न ज्ञानस्य जनकतायामवच्छेदकोऽपि; मानाभावात्। न चातिप्रसङ्गः; विषयावच्छेदकमनपेक्ष्यैव सर्पज्ञानस्यासर्पज्ञानाद्व्यावृत्तिसिद्धेः। तथाहि सर्पज्ञानस्यासर्पज्ञानाद्व्यावृत्तिर्व्यावर्तकाधीना। न च विषयस्तत्सम्बन्धो वा व्यावर्तकः; स्वरूपातिरिक्तद्विष्ठसम्बन्धस्याभावात्, असम्बन्धस्य चाव्यावर्तकत्वात्। अथ सम्बन्धान्तरमन्तरेण विशिष्टव्यवहार-

---

स्यात्। यदि च नान्तर्भावितसत्त्वं कारणताश्रयः सत्तोपलक्षिते कारणता, तदाऽपि ततस्तदभ्युपगमादेव सत्ताशून्यातीततादिदशायामपि दण्डादौ कारणता स्यादित्यसत्कारणत्वं सिद्धमेव। अथ कारणताश्रयकोटौ सत्ताया न विशेषणतयोपलक्षणतया वाऽन्तर्भावः, किंतूपाधितया, तदापि असत्सद्रूपान्यत्कारणमिति सिद्धम्। न हि दण्डादिनानास्वरूपाणि सद्रूपाणि; श्रुतियुक्तिबाध्यत्वादननुगतत्वात्; तुल्ययुक्त्या [1]ब्रह्मणोऽपि सद्रूपस्य त्वया वाच्यत्वेन तत्सम्बन्धादेव तदन्यत्र[2] सदाकारप्रत्ययोपपत्तेश्च। न चैवमित्यादिकारणत्वस्थलेऽधिष्ठानत्वमादाय पूर्वोक्तदोषस्स्यादिति पराभिमानः। **स्वरूपत एवेति**। सद्रूपमेवावच्छिन्नानवच्छिन्नरूपेण प्रातीतिकव्यावहारिकाध्यासमात्राधिष्ठानमित्यर्थः। **स्वरूपातिरिक्तेति**। दण्डादि[3]कारणस्वरूपातिरिक्तेत्यर्थः। उक्तयुक्तिभिरबाध्यत्वोपलक्षितरूपस्य सद्रूपस्य कारणत्वासम्भवात्तत्सम्बन्धिन्येव कारणत्वं त्वया वाच्यम्; तथाच सद्रूपान्यदेव कारणं तव सिद्धमिति भावः। **द्विष्ठसम्बन्धेति**। विषयप्रतियोगिकज्ञानानुयोगिकसम्बन्धेत्यर्थः।

[1] ब्रह्मण्यपि. [2] तन्मात्र. [3] दण्डादिस्वरूपकारण.

जननयोग्यं ज्ञानस्वरूपमेव वा ज्ञानमात्रनिष्ठः कश्चिद्धर्मो वा सम्बन्धः, तर्हि विषयमनन्तर्भाव्यैव ज्ञानात्तद्गतधर्माद्वा विशेषसिद्धिरित्यायातम् । किञ्च सर्पज्ञानमसर्पज्ञानाद्धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणम्, तज्जनकविलक्षणजन्यत्वात्, यवाङ्कुरात्कलमाङ्कुरवत्, तज्जन्यविलक्षणजनकत्वाद्वा, यवबीजात्कलमबीजवत् । न च विलक्षणविषयसम्बन्धेनैव हेत्वोरुपपत्तावप्रयोजकत्वम्; तथात्वे हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजे अपि यवाङ्कुरतद्बीजा(ङ्कुरा)भ्यां कलमाङ्कुरतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना कदाचिदुपलक्षणीभूतचैत्रादिसम्बन्धित्वमात्रेण विलक्षणे स्याताम् । साक्षात्कारोऽपि परोक्षज्ञाना-

---

**कश्चिदिति** । विषयिताविशेषरूप इत्यर्थः । **विशेषसिद्धिः**—व्यावृत्तिसिद्धिः । ननु—विषयाघटितरूपेण तत्तज्ज्ञानस्वरूपस्य सर्पत्वा[1]द्यव-च्छिन्नविषयिताविशेषस्य वा व्यावर्तकत्वं न सम्भवति; आद्यस्याननुगतत्वात्; द्वितीयस्य सर्पत्वेन सर्पज्ञानमात्रगतत्वे तत्तत्सर्पज्ञा[2]नाद्व्यावर्तकत्वासम्भवात्, विषयस्य तु तत्तत्सर्परूपस्य तस्माद्व्यावर्तकत्वं सम्भवत्येव । किञ्च प्रत्यक्षे व्यावर्तकज्ञाने ज्ञानस्य विषयिता[3]विशेषस्य वा न स्वरूपतो भानमिति विषयघटितरूपेणैव व्यावर्तकत्वं वाच्यमतआह—**किञ्चेति** । **धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणमिति** । स्वविषयसम्बन्धान्यवैलक्षण्ययुक्तमित्यर्थः । तेन विषयितामादाय न सिद्धसाधनादि (शक्त्यन्येत्यपि वैलक्षण्ये विशेषणं देयम्)[4] **तज्जनकेति**—असर्पज्ञानजनकेत्यर्थः । **विलक्षणेति**—भिन्नेत्यर्थः । असर्पज्ञानव्यावृत्तजन्यत्वाश्रयधीत्वादिति तु पर्यवसितम् । सर्पज्ञानत्वादेर्जन्यता-

---

1 सत्वा. 2 तत्तत्संज्ञाना--क. 3 विषयता. 4 अयं कुण्डलितः पाठः क-पुस्तके न दृश्यते.

दन्यसम्बन्धितामात्रेण विलक्षणः स्यात्। एवं च यथा प्रतियोगिनमनन्तर्भाव्यैव घटस्याभावोऽभावान्तरात्, यथाच विषयमनन्तर्भाव्यैव शिलोद्धरणकृतिर्माषोद्धरणकृतितः, यथा चातीतादिज्ञानमसद्विषयकपरोक्षज्ञानव्यवहारौ च ज्ञानान्तरादितः, अन्यथा तत्कार्यसङ्करः स्यात्; एवं सर्पज्ञानमपि रज्जौ सर्पज्ञानस्य भ्रमत्वेनाधिकजन्यत्वेऽपि सर्पज्ञानत्वेन तद्धेतुजन्यत्वात् स्वत एव वा असर्पज्ञानाद्विलणमिति न कोऽपि दोषः। न चाभावादावपि प्रतियोग्यादेरवच्छेदकत्वम्; ध्वंसादेः कृतेरतीतादिज्ञानस्य च सत्तासमये प्रतियोगिविषययोरसत्वादिति। तन्न; सर्पज्ञानत्वावच्छिन्नस्यासर्पज्ञानाद्व्यावृत्तौ प्रयोजकं न तत्तत्स्वरूपमेव; सर्वज्ञानसाधारण्याभावात्, किन्त्वनुगतो धर्मः कश्चित्। सोऽपि सर्पज्ञानमात्रे न जातिरूपः प्रत्यक्षत्वानुमानत्वादिना सङ्करप्रसङ्गात्, किं तूपाधिरूपः; । स च स्वरूपसम्बन्धेनाध्यासिकसम्बन्धेन वा सम्बन्धिभूतविषयादन्यो न भवति;

---

वच्छेदकत्वे गौरवादतिरिक्तमखण्डं वैलक्षण्यमवच्छेदकं विना जन्यता नोपपद्यत इत्यनुकूलस्तर्क इति भावः। विलक्षणः स्यादिति। चैत्रादिसम्बन्धित्वादेर्गुरुत्वेनावच्छेदकान्तरमखण्डं कलमबीजादिनिष्ठो यवबीजादिव्यावृत्तो जन्यजनकभावः कल्पयतीति चेत्, तर्हि सर्पज्ञानेऽपि तथा बोध्यमिति भावः। सर्वज्ञानेति। सर्वसर्प[1]ज्ञानेऽर्थः। विषयादन्यो नेति॥

अत्रेदं बोध्यम्—कलमबीजादौ तादृशवैलक्षण्यस्य प्रत्यक्षसिद्धत्वाल्लघुरूपान्तराभावाच्च तदेव जनकत्वावच्छेदकम्। सर्पज्ञानादौ तु तन्न प्रत्यक्षसिद्धम्, नाप्यवच्छेदकतया कल्प्यम्; विष-

[1] सपासर्प.

यितासम्बन्धेन सर्पादेरेवावच्छेदकत्वसम्भवात् । न च सर्पत्वावच्छिन्न-विषयितात्वेन सम्बन्धत्वे गौरवम्, विषयितामात्रेण तु सर्पोऽतिप्रसक्तः, सर्पत्वाद्यन्यरूपेण सर्पविषयकज्ञानेपि[1] सत्त्वादिति वाच्यम्; सर्पत्व-विशिष्टं प्रति सर्पत्वावच्छिन्नविषयिताया एव सम्बन्धत्वेन विषयिता-मात्रेण सर्पस्यानतिप्रसक्तत्वात् । न च तथापि सर्पत्वावच्छिन्नत्वमव-च्छेदकतायां कल्प्यम्, कल्प्यजातौ त्वनवच्छिन्नमेवावच्छेदकत्वमिति वाच्यम्; मम सर्पत्वनिष्ठ[2]मवच्छेदकत्वमिव तव जात्यन्तरं कल्प्यमिति लाघवाभावेन तव कल्पनानुदयात्, अवच्छेदकताख्यविषयितासम्बन्धेन सर्पत्वस्यैव कारणताद्यवच्छेदकत्वसम्भवाच्च । विषयितासम्बन्धेन सर्प-स्यापि ज्ञानप्रत्यासन्नत्वात्, सर्पसम्बन्धेन सर्पत्वस्य कारणताद्यवच्छेदक-त्वसम्भवाच्च ॥

अपि च या यद्व्यावृत्तकार्यताशालिधीः, सा तदवृत्तेःस्वविषय-सम्बन्धान्यवैलक्षण्यस्याश्रय इति सामान्यतो व्याप्तिर्वाच्या । अन्यथा ज्ञानमात्रे विषयसम्बन्धान्यधर्मसिद्धिर्न स्यात् । तथाच स्वरूपतो घट-त्वादिविषयकज्ञाने कथं साध्यसिद्धिः? तन्निष्ठजन्यत्वादौ विषयिता-सम्बन्धेन घटत्वादेरेवावच्छेदकत्वसम्भवात् । न च—तत्तद्धीव्यक्ते-र्देशकालान्तरे उत्पत्तिवारणाय तत्तद्धीत्वेन तत्तत्कारणव्यक्तिजन्यत्वं वाच्यम्, तत्तद्धीत्वं च न तत्तद्धीस्वरूपम्, स्वरूपतो ज्ञानस्या-वच्छेदकत्वासम्भवाद्धर्मान्तरं चातिप्रसक्तम्, अतो धीनिष्ठाखण्डधर्म-विशेषरूपमिति साध्यसिद्धिरिति वाच्यम्; स्वरूपतस्तत्तद्धीव्यक्तीनामव-च्छेदकत्वे[3] बाधकाभावात, स्वरूपतस्तासां बुद्ध्यविषयत्वेऽपि ज्ञान-त्वाद्युपलक्षितरूपेणावच्छेदकताधीविषयत्वसम्भवात्, कारणताद्युपहिते स्वस्मिन् केवलस्य स्वस्य [4]भेदसम्भवेन मन्मतेऽपि तादात्म्यसम्भवाच्च ।

---

[1] असर्पज्ञानेपि. [2] सर्पत्वविषयनिष्ठ. [3] दकत्वेन—ग [4] भेदे—क. ग.

**मानाभावात् । अत एव धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणमित्युक्तानुमानं बाधितं द्रष्टव्यम् । व्यभिचारि च, तथाहि—घटसंयोगः, पटसंयोगान्न जात्या भिद्यते, तद्वृत्तिजात्यनधिकरणत्वात् । किंतु घटरूपोपाधिनैवेति धर्म्यन्तरसम्बन्धमपेक्ष्यैव विलक्षणे घटसंयोगत्वावच्छिन्ने साध्याभाववति उक्तहेतुसत्वाद्व्यभिचारः, अप्रयोजकं च । न च—उपलक्षणीभूतचैत्रसम्बन्धेनापि कलमाङ्कुरादेर्व्यावृत्ततापत्तिः; विपक्षबाधायामिष्टापत्तेः । न हि जातेर्व्यावर्तकत्वे उपाधिरव्यावर्तको भवति । एवं शिलोद्धरणमाषोद्धरणकृत्योः परस्परं जात्या व्यावृत्तावपि विषयरूपोपाधिनापि व्यावृत्ति-**

---

अतएव "दण्डत्वादिकमेव साध्यतावच्छेदकमि"त्यादिदीधितिटीकायां दण्डादेः स्वरूपत एव प्रतियोगितावच्छेदकत्वं तार्किकैरुक्तम् । यत्र तु क्वचिद्विषयादेः क्लृप्तस्यावच्छेदकत्वं न सम्भवति, तत्रातिरिक्तवैलक्षण्यसिद्धावपि नास्माकं क्षतिः, तदेतदाह—**मानाभावादिति** ॥

यत्तु सादृश्यविशेषोऽनुगतः सर्पज्ञानमात्रेऽस्तीति स एव व्यावर्तक इति, तत्तुच्छम्; सर्पादिविषयक[1]त्वान्ये सादृश्ये मानाभावात् । यदपि सङ्करप्रसङ्गा[2]दित्युक्तं उपाधित्व इव जातित्वेऽपि साङ्कर्यदोषत्वादिति, तदपि न; जातेरसङ्कीर्णत्वानियमे [3]सर्पज्ञानादिनिष्ठकार्यतादाववच्छिन्नत्वा[4]नियमस्यापि वक्तुं शक्यत्वेन साध्यसिद्धौ तर्काभावात् । व्यावर्तकत्वेन तु न जातिः सिध्यति; उपाधिनापि तत्सम्भवात् ॥

**न जात्या भिद्यत इति** । पटसंयोगावृत्तिजातिशून्यः तादृशजातिग्राहकमानाविषयत्वादित्यर्थः । **घटरूपेति** । घटसमवेतत्वेत्यर्थः । **धर्म्यन्तरसम्बन्धमपेक्ष्येति** । यो यद्वृत्तिजन्यतावान्, स स्वाधिकरणसम्बन्धान्यस्य तद्वृत्तिधर्मस्याश्रय इति व्याप्तिः पूर्वमुक्तेत्याभि-

---

1 त्वान्यसा—क. ग. 2 दित्युक्तम्—क. ग. 3 सर्व—क. ग. 4 वच्छिन्नत्व.

रविरुद्धा। शिलोद्धरणे च जातिविशेषविशिष्टायाः कृतेर्जनकत्वेन तद्रहिताया माषोद्धरणकृतेस्तदनिष्पत्तिरविरुद्धा। व्यावृत्तेरन्यतोऽपि सिद्धिसम्भवे कार्यकारणभावादिनिर्वाहाय जातिविशेषस्यापि कल्पनात्, अतीतासद्विषयकज्ञानव्यवहारादौ चातीता-

प्रायेणेदम्। ज्ञाने [1]चोक्तसाध्यमस्ति, विषयस्य ज्ञानाधिकरणत्वात्। तेन स्वविषयसम्बन्धान्यधर्मत्वेन पूर्वोक्तरूपेण साध्यतायां साध्याप्रसिद्धिरेव न व्यभिचार इति[2] परास्तम्॥

यत्तु—'जातिविशेषावच्छिन्नकर्मप्रयोज्यजातेः पटसंयोगावृत्तेर्घटसंयोगे सत्त्वेन न व्यभिचार इति, तन्न; तत्तत्क्रियाव्यक्तित्वेन तत्तत्क्रियासमानाधिकरणत्वावच्छिन्नं प्रति हि कारणता, न तु विजातीयसंयोगत्वावच्छिन्नं प्रति; तत्तत्क्रियानधिकरणेऽपि विजातीयसंयोगोत्पत्त्या व्यभिचारापत्तेः। तत्तत्क्रियानधिकरणे संयोगोत्पत्तौ तादृशदेशानामेव नियामकत्वम्, तत्तद्देशव्यक्तिसमवेतत्वावच्छिन्नं प्रति तद्व्यक्तित्वेन हेतुत्वात्। तथाच येन रूपेण क्रियाहेतुस्तदवच्छिन्नविशिष्टत्वेन कार्यत्व[3]स्वीकारात्, वैजात्यस्य पटसंयोगावृत्तेर्घटसंयोगे मानाभावादसिद्धत्वेन कथं न व्यभिचारः॥

**कार्यकारणभावादीति**। आदिना जातिविशेषविशिष्टविषयकत्वेन ज्ञानस्यानुभवो ग्राह्यः, अत एवेत्यस्योत्तरमपियोजनीयः। तेनाभावनिदर्शनमसिद्धम्। न हि घटाभावस्य पटाभावात्प्रतियोग्यविशेषितं वैलक्षण्यं केनाप्यङ्गीक्रियते युज्यते वा। न च—घटाभावादौ तन्मात्रगतकारणताद्यवच्छेदकतया तत्सिद्धिरिति—वाच्यम्; प्रतियोगितासम्बन्धेन घटादेरेवावच्छेदकत्वसम्भवात्, प्रतियोग्यविशेषितरूपेणान्यथासिद्ध्यावच्छेदकत्वा[4]सम्भवात्। अन्यथा तत्तदभावव्यक्तेरेवोक्त-

[1] नोक्त—ग. [2] न व्यभिचारः, धीत्वघटितहेतुश्च नोक्तं संयोग इति—क. ग. [3] कार्यत्वेन कार्य—ख. [4] वच्छेदकत्व.

सतोरेव व्यावर्तकत्वम्। न हि व्यावृत्तिधीजनकत्वं तत्; येन सत्त्वाभावे प्राक्सत्त्वशरीरतया न स्यात्, किंतु व्यावृत्तिधीजनकधीविषयत्वमित्युक्तम्। तच्चातीतादौ सुलभमेव। अतएवाभावादिनिदर्शनमपि निरस्तम्; उक्तरूपव्यावर्तकत्वस्यात्यन्तासत्यपि सम्भवेन कदाचित्सति सम्भवस्य कैमुतिकन्यायसिद्धत्वात्। ननु—विषयस्य व्यावर्तकत्वेऽपि सर्वत्र विशेषणत्वासम्भवादुपलक्षणत्वमेव वाच्यम्; उपलक्षणेन चोपलक्ष्यगतस्वसम्बन्धव्यतिरिक्तः कश्चिद्धर्म एवोपस्थाप्यते, काकेनेव गृहसम्बन्धिना तद्गतसंस्थानविशेषः; तथाच स एव व्यावर्तक इति विषयसम्बन्धमनपेक्ष्य स्वगतेनैव धर्मेण ज्ञानस्य व्यावृत्तिरिति चेन्न; विषयस्य विशेषणत्ववदुपलक्षणत्वस्याप्यनभ्युपगमात्। येन हि स्वोपरागाद्विशेष्ये व्यावृत्तिबुद्धिर्जन्यते, तद्विशेषणं व्यावृत्तिबुद्धिकाले विशेष्योपरञ्जकमित्यर्थः; यथा गोत्वादि। येन च स्वोपराग-

रीत्या स्वरूपतोऽवच्छेदकत्वसम्भवेनातिरिक्तधर्मकल्पने मानाभावादिति समुच्चीयते। अत्यन्तासतीति। मिथ्याभूतेत्यर्थः। स्वसत्त्वाकालेऽपि स्वसमानाधिकरणात्यन्ताभाव[1]प्रतियोगिनीति यावत्। तेन तुच्छस्य मानाविषयत्वेनाव्यावर्तकत्वेऽपि न क्षतिः। कदाचित्सतीति। सर्व[2]-कालसम्बन्धिनीत्यर्थः। स्वोपरागादिति। स्वोपरागमादायेत्यर्थः। स्वोपरक्ता व्यावृत्तिबुद्धिर्यद्बुद्ध्या जन्यत इत्यर्थः। काले इति। तथाच स्वकालीनत्वे सति स्वविषयतानिरूपितविशेष्यताशालित्वमेव व्यावृत्तिबुद्धौ स्वोपराग इति भावः। स्वध्वंसादेरितरस्माद्व्यावर्तके प्रतियोग्यादावुपाधावतिव्याप्तिवारणाय सत्यन्तम्। उपलक्षणे तद्वारणाय विशेष्यम्। यथा गोत्वादीति। गोत्वं गोव्याव[3]र्तकमित्यादिप्रतीतौ व्यावृत्तिबुद्धौ

[1] ाभाव—क. ख. [2] सत्त्वेन त्वदभ्युपगते सर्व—क ग. [3] योगाव्याव.

**मुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणम्, यथा काकादि। यत्तु–विशेष्ये नोपरञ्जकम्, न वा धर्मान्तरोपस्थापकम्, अथ च व्यावर्तकं तदुपाधिः**

---

स्वविशेष्यान्वितायामुक्तोपरागसम्बन्धेन गोत्वस्यान्वयसम्भवाद्व्यावृत्तिबुद्धौ तद्विशेषणं व्यवह्रियत इति भावः। **तदुपलक्षणमिति।** तथाच व्यावृत्तिबुद्धावुपलक्षणत्वं तज्जनकधीविषयधर्मोपस्थापकधीविषयत्वमिति भावः। **नोपरञ्जकमिति।** व्यावृत्तिबुद्धिकाल इत्यादिः। व्यावर्तकतायाः प्रमाणसिद्धत्वात्तृतीयमपि व्यावर्तकं वाच्यमित्याशयेनाह—**व्यावर्तकमिति।** व्यावर्तकत्वेन प्रमितमित्यर्थः। **उपाधिरिति।** तथाचोक्तोभयान्यत्वे सति व्यावृत्तिबुद्धेर्जनकधीविषयत्वमेव तस्यामुपाधित्वमिति भावः॥

लक्ष्यस्वरूपमपि यद्यदमुष्य साक्षा-
दर्थान्तराद्भवति भेदकमेतदाहुः।
अस्य स्वलक्षणतयैव तु लक्षणं खं[1]
छिद्रं जलं द्रवमितीदृशमेव लोके॥

"स्वानुरक्तमतिजन्मकारणं यत्पुनर्भवति लक्ष्यवस्तुनि।
तद्विशेषणतयाऽस्य लक्षणं केसरादिकमिवाश्ववस्तुनः"॥

"स्वानुरक्तमतिजन्महेतुतां लक्ष्यवस्तुनि निरस्य लक्षणम्।
अस्व[2]रूपमपि तस्य यद्भवेत् काकवत्तदुपलक्षणं विदुः"॥

इति संक्षेपशारीरकोक्तौ तूपलक्षणमुपाधिश्च द्वयमपि स्वलक्षण[3]विशेषणभिन्नव्यावर्तकत्वेन सङ्गृहीतम्। तावता च न तयोरवान्तरविशेषोऽपलापार्हः। अत एव जगत्कारणत्वादिकमपीतरव्यावृत्त्युपलक्षितब्रह्मबुद्धावुपाधिरेव [4]विशेषणं स्वलक्षणान्यव्यावर्तकत्वेनैकीकृत्य उपलक्षणत्वेन शास्त्रे व्यवहारः। अत एवाकाशपदप्रयोगे शब्दाश्रयत्वमुपलक्षणमिति

---

1 लक्षणं स्व. 2 अन स्व. 3 विशेष. 4 विशेषणस्वलक्षण–क. ख. ग.

यथा पङ्कजशब्दप्रयोगे पद्मत्वम्, यथा वोद्भिदादिशब्दप्रयोगे यागत्वावान्तरजातिविशेषः। अत्र हि पद्मत्वयागत्वावान्तरधर्मौ पङ्कजनिकर्तरि फलोद्भेदनकर्तरि च न धर्मान्तरमुपस्थापयतः, अप्रतीतेः; न वा स्वोपरक्तां बुद्धिं जनयतः; समुदाये शक्त्यन्तरानभ्युपगमात्। अथ च कुमुदज्योतिष्टोमादिभ्यो व्यावर्तकावित्युपाधी एव। इदं च प्राभाकराणां भाट्टानां

शब्दमण्युक्त[1]मप्यविरुद्धमिति भावः। यथा पङ्कजशब्देति। उक्तं हि शब्दमणौ—"यथा सर्वनाम[2]त्वमहंपदेषु बुद्धिस्थत्वसम्बोध्यत्वोच्चारयितृत्वानि प्रयोगोपाधयः; तेन बुद्धिस्थादिकमेव तैर्बोध्यते, न तु बुद्धिस्थत्वादिकं शक्यम्;[3] तेन रूपेण ज्ञानाभावात्, तथा पद्मत्वमपि प्रयोगोपाधिः" इति। उपस्थापयतः उपस्थापकधीविषयौ। जनयतः जनकधीविषयौ। समुदाये। पङ्कजेति उद्भिदिति वर्णसमुदाये। शक्त्यन्तरेति। अवयवशक्त्यन्यशक्तीत्यर्थः। व्यावर्तकाविति। विशेष्यतासम्बन्धेन पङ्कजेत्यवयवशक्ति[4]ज्ञानजन्यशाब्दबोधं प्रति तादात्म्येन [5]पद्मत्वादिना हेतुत्वकल्पनात्, कुमुदादिभ्य उक्तबोधविषयस्य व्यावर्तकावित्यर्थः; तथाच प्रयोगजन्यबोधेऽनुपरक्तत्वे तद्विषयव्यावर्तकधर्मानुपस्थापकत्वे च सति तादृशबोधविषयव्यावर्तकत्वं प्रयोगोपाधित्वम्। तत्तत्पद्मव्यक्तित्वं तु तादृशबोधविषयसामान्यस्य न व्यावर्तकम्, अन्यतमत्वादिकमपि गुरु, पद्मत्वादेः प्रयोगनियामकत्वज्ञाने सत्येव व्यावर्तकत्वेन ज्ञेयं चेति पद्मत्वादिकमेव प्रयोगोपाधित्वेन व्यवह्रियत इति भावः॥

एतेन—पद्मत्वादिना नावयवशक्त्यधीनं ज्ञानं कुमुदादौ

[1] मर्थावरु—ग.　[2] तत्वम—ग.　[3] स्थत्वाद्यशक्यम्.　[4] शक्तिः
[5] पद्मत्वादिहेतुत्व.

प्रतिबध्यते ; शक्त्याकांक्षातात्पर्यादिधीसत्त्वे तत्राऽप्यन्वयबोधात् । नापि प्रयोगः प्रतिबध्यते ; सामग्रीसत्त्वे तस्यावश्यकत्वात् । अहमादिपदे स्वात्ममात्रशक्ते शक्तिग्रहसहकारितयोच्चारयितृत्वादि स्वरूपसदेव धीनियामकम्—इति मण्युक्तदूषणमपास्तम् ; यावदवयवशक्तिज्ञानविशिष्टशाब्दबोधे पद्मत्वादिना हेतुत्वे बाधकाभावात् । कुमुदादौ बोधस्य लक्षणयैवोपपत्तेः । अतएव पद्माद्यन्वयानुपपत्तिज्ञाने सत्येव कुमुदाद्यन्वयधीः ॥

यदपि—"सर्वनाम्नां बुद्धिविषयत्वोपलक्षितप्रकारावच्छिन्ने शक्तिः, घटत्वादिना शक्यत्वे तु तदानन्त्यापत्तिः । न च तेषां मिथः पर्यायताऽऽपाद्या ; उद्देश्यतावच्छेदकबुद्धिविषययावद्धर्मावच्छिन्ने सर्वपदस्य, प्रश्नोपक्रमबुद्धिविषयत्वावच्छिन्ने किंपदस्य, तत्पदोद्देश्यबुद्धि[1]-विषयत्वावच्छिन्ने यत्पदस्य, अवान्तरवाक्योद्देश्यबुद्धिविषयत्वावच्छिन्ने तत्पदस्य, प्रत्यक्षविषयत्वावच्छिन्ने इदमेतत्पदयोः, व्यवहितबुद्धिविषयत्वावच्छिन्ने अदः पदस्य[2] शक्तिस्वीकारात् एवं त्वमहंपदयोरप्यात्ममात्रशक्तत्वे पर्यायतापत्तेः, त्वमहं वेति विकल्पानुपपत्तेश्च ; उच्चारयितृत्वावच्छेदकत्वप्रकारकविषयत्वोपलक्षितधर्मावच्छिन्नेऽहंपदस्य, सम्बोध्यतावच्छेदकत्वप्रकारकबुद्धिविषयत्वावच्छिन्ने त्वंपदस्य शक्तिः । स्वरूपसदित्युक्तमणिवाक्यस्थपदमुपलक्षणविधया शक्यतावच्छेदकानन्तर्गतपरम् । तथा च दृष्टान्ताभावात्पद्मत्वादि न प्रयोगोपाधिः" इति पक्षधरैरुक्तम्, तदपि न युक्तम् ; बुद्धिविषयत्वोपलक्षितरूपेण शक्तिस्वीकारेऽपि हि घटत्वादिरूपेण बोध्यं[3] प्रति बुद्धिविषयत्वेन घटत्वादिप्रकारकशक्तिज्ञानत्वेन कारणता [4]वाच्यैव ; अन्यथा कदाचिद्घटत्वेन, कदाचिदन्येन रूपेण बोध इत्यत्र नियामकाभावात् । तथाच तत्पदजन्यशाब्दबोधे तत्तद्बुद्धिविषयत्वेन हेतुताकल्पनया प्रयोगोपाधित्वेनैव निर्वाहे शक्तिज्ञानकारणता-

---

[1] देश्यसहबु. दि. [2] इदं पदस्य–ख. [3] बोधं–क. ग. [4] वाच्येतान्यथा–क. ग.

च सम्मतमुदाहरणयुगळम् । तार्किकाणां तु आकाशशब्दप्रयोगे

वच्छेदककोटौ तत्तद्बुद्धिविषयत्वानिवेशो न युक्तः, घटत्वादिप्रकारकशक्तिज्ञानीयानन्तहेतुतावच्छेदकेषु गौरवापत्तेः । पर्यायत्वं नानार्थत्वं च सर्वनाम्नस्तत्त्वाद्युक्त[1]मेव । अन्यथा पुनस्सर्वनामत्वमेव व्याहतं स्यात् । सर्ववाचकं हि सर्वनाम; न तु बुद्धिविशेषविषयरूपाकिञ्चिद्वाचकम् । अतएवेतरादिशब्दानां सर्वनामत्वासम्भवात्तद्ग्रहणाय, सकलादिशब्दानां तत्सम्भवात्तद्व्यावर्तनाय गणपाठः । स इदं वा त्वमहं वेत्यादिविकल्पास्तु तत्तत्पदबोध्याविषयकत्वेनोपपादनीयाः ॥

**तार्किकाणामिति** । यद्याकाशशब्दादाकाशनिष्ठानवच्छिन्नविषयताकशाब्द[2]बोधः, 'अस्तु वा पदादपि निर्विकल्पकम्' इति मणावुक्तत्वात्तदा **आकाशशब्दप्रयोगे** इत्यस्य आकाशपदजन्यशाब्दबोधे इत्यर्थः । शाब्दबोधे शब्दाश्रयत्वस्यानुपरागात् व्यावर्तकधर्मानुपस्थापकत्वाच्चोपाधित्वमिति भावः । यदि च शब्दाश्रयत्वादिना कदाचित् अष्टद्रव्यान्यद्रव्यत्वादिना च शाब्दबोधः, उक्तं हि मणौ 'शब्दाश्रयत्वादिना नियतोपस्थितिरेव नास्ति' इति; तदाकाशपदजन्यायां शब्दाश्रयत्वान्यरूपेण शाब्दबुद्धावित्यर्थः । अथवाऽऽकाशपदशक्यत्व इति तदर्थः । तादृशशक्यत्वेऽनुपरक्तत्वाद्व्यावर्तकधर्मानुपस्थापकत्वात्तदाश्रयव्यावर्तक - त्वाच्चोपाधित्वमिति भावः । शब्दाश्रयत्वांशेऽपि यदि शक्तिः, 'अस्तु वा तदपि शक्यं यदि तेन रूपेण नियतोपस्थितिः' इति पक्षान्तरस्यापि मणावुक्तत्वात्तदा शब्दाश्रयत्वं विशेषणमेव, नोपाधिः । अथाशक्यस्य शब्दाश्रयत्वादेः कथं शाब्दानुभवः? स्वनिष्ठवृत्त्या शब्दोपस्थापितस्यैव[3] तत्स्वीकारादिति चेत्तदुक्तं मणौ —'यद्धर्मवत्त्वेन नियमत उपस्थिते यत्र शक्तिग्रहः, तत्स्मरणजनकसंस्कारस्य तद्धर्मविषयता-

[1] सर्वनामसु त्वदुक्त–ग. [2] ताकाशाब्द–ग. [3] शब्दोपस्थितस्यैव.

**शब्दाश्रयत्वमुदाहरणम् । अतएवाविद्यादिकं साक्षित्वादावुपाधिरिति सिद्धान्तो वेदान्तिनाम् । अतो यत्र विषयस्य विशेषणत्वं न सम्भवति, तत्कालासत्वात्, तत्रोपाधित्वाभ्युपगमान्नोप-**

---

नियमेन तदुद्बोधकादेव तदंशेऽप्युद्बोध(क)नियमेनाशक्यस्यापि तस्य भानात्' इति; तदंशे शक्तिं विनापि तदुपहिते शक्ति[1]ग्रहशक्यस्मृत्योस्तेन रूपेण शाब्दानुभवे कारणत्वं सम्भवतीति भावः । एषैव रीतिः पदमात्रस्येति तु नव्यतार्किकाः ॥

**साक्षित्वेति** । अनावृतविषयप्रकाशत्वरूपसाक्षित्वादावनुपरक्तं तदाश्रयव्यावर्तकानुपस्थापकमविद्यादिकमुपाधिरेवेति भावः । **तत्रोपाधित्वेति** । यद्यपि यदधिकरणकाले यदविद्यमानं तत्र तन्न विशेषणं, न वोपाधिः, तदधिकरणकाले विद्यमानस्यैव स्वाश्रयान्विते तत्रोपरागानुपरागौ विशेषणत्वोपाधित्वे इति कल्पतर्वादावुक्तत्वात् । तथापि तन्मते प्रतियोग्यादेर्ध्वंसादिव्यावृत्तिबुद्धावुपलक्षणत्वमेव स्वीक्रियते, उपलक्षणलक्षणे व्यावर्तकान्तरोपस्थापकत्वानुपादानात्, अविद्यमानत्वे सति व्यावर्तकत्वस्यैव तल्लक्षणत्वात् । सर्वथाऽपि[2] व्यावर्तकानुपस्थापकमविशेषणमपि व्यावर्तकं सर्वसम्मतम् ॥

वस्तुतो विशेष्यव्यावर्तकधर्मोपस्थापकमेवोपलक्षणमिति पराभ्युपगमेनेदमुक्तम् । न त्वत्रैवाचार्याणां श्रद्धा । स्वविशेष्यान्वितोपरक्तं व्यावर्तकं विशेषणम् । उक्तोपरक्तान्यद्विद्यमानं व्यावर्तकमुपाधिः । उक्तान्यदविद्यमानं व्यावर्तकमुपलक्षणम् । न तु व्यावर्तकान्तरोपस्थापकत्वघटितम् । यत्र धर्मान्तरस्यैव व्यावृत्तिव्याप्यत्वेन धीर्न तूपलक्षणस्यैव, तत्रैव तस्य तदुपस्थापकत्वमावश्यकम्; यथा काकादेश्चैत्रगृहेतर[3]व्यावृत्तिव्याप्यत्वे[4]न न धीः; वृक्षादिषु व्यभिचारज्ञानात्, कदापि

---

[1] तदुपहितशक्ति–क. ग. [2] सर्वस्यापि. [3] गृहे इतर. [4] त्वेन धीः.

काकादेर्यत्र न सम्बन्धस्तादृशचैत्रगृहव्यक्तौ तदसत्त्वादपि 'काकवन्तश्चैत्रगृहाः' इत्यादौ न तस्य व्यावर्तकता। यत्र तूपलक्षणस्य व्यावृत्तिव्याप्यत्वेन धीः, व्यावर्त्यमात्रनिष्ठता च, यथा स्वध्वंसज्ञानादौ प्रतियोगिविषयादेः, तत्र न तदावश्यकम्; मानाभावात्। न ह्यनुमितिकालाविद्यमानो धूमादिः पर्वतादौ न वह्न्याद्यनुमापक इत्यद्वैतरत्नेऽक्षरतात्पर्याभ्यामुक्तत्वात्॥

यत्तु—'दण्ड्ययमासीदित्यादौ व्यावृत्तिबुद्धिकालासतोऽपि दण्डादेर्विशेषणत्वव्यवहारो न स्यात्, दण्डिनं भोजयेत्यादौ दण्डादेर्विशेषणत्वव्यवहारश्च स्यात्, इति तन्नात्र मूले दूषणम्; आद्ये हि व्यावृत्तिबुद्धौ दण्डादेरविशेषणत्वमिष्टमेव। अतीतसत्तासम्ब[1]न्धांश एव तस्य विशेषणत्वव्यवहारात्तदुपरागस्य च तत्र सत्त्वात्। द्वितीयेऽपि व्यावृत्तिबुद्धौ तस्य विशेषणत्वमिष्टम्, भोजनीयत्वांश एवाविशेषणत्वात्। अत एव प्रत्याय्यव्यावृत्त्यधि[2]करणतावच्छेदकत्वं स्वहेतुकानुमितिविषयीभूता या स्वाश्रयेतरव्यावृत्तिः तदधिकरणताकालसमानियतकालवृत्तित्वं तादृशकालव्यापककालवृत्तित्वादिपर्यवसितम्। स्वकालनियतस्य व्यावृत्तिबोधस्य जनकत्वं वा विशेषणत्वमिति लक्षणोक्तदूषणमुक्तमद्वैतरत्ने। तेषु सामान्यतो विशेषणत्वस्य लक्ष्यत्वाद्व्यावृत्तिबुद्ध्यंश आद्ये, भोजनीयत्वांशे द्वितीये, दण्डादेर्विशेषणत्वापत्तेः। अत एव संक्षेपशारीरकीयोक्तवाक्ये विशेषणतयाऽस्य लक्षणमित्यनेन व्यावृत्तिबुद्ध्युपरक्तत्वघटितलक्षणे लक्षणत्वघटकव्यावृत्तिबुद्ध्यंशे विशेषणत्वमिति व्यवहारविशेष्यस्यैव लक्ष्यत्वं ज्ञापितम्। तस्मात्स्वविशेष्यान्विते यत्र तत्कालीनमुपरक्तं व्यावर्तकं यत्तत्र तद्विशेषणम्, तादृशे यत्रातादृशं व्यावर्तकोप-

[1] सत्तासु सम्ब.　[2] अव्याप्यवृत्त्यधि.

लक्षणत्वनिबन्धनदोषावकाशः, सन्देहे तु विशेषणत्वमेवाभ्यर्हितत्वादुपेयते। तस्माद्विषय एव सर्वत्र ज्ञाने व्यावर्तकः। एकविषयकस्मृत्यनुभवयोः परोक्षापरोक्षयोश्च विषयमनपेक्ष्य जात्या परस्परव्यावृत्तिदर्शनात् सर्वत्र विषयनिरपेक्षा जातिरेव व्यावर्तिकेति न युक्तम्; भिन्नविषयके समानजातीये तदसम्भवात्। न च–तत्रापि जातिरस्ति क्षीरादिमाधुर्यवदिति वाच्यम्; चाक्षुषत्वादिना सङ्करस्योक्तत्वात्। न च तव मते तत्तद्वृत्तेस्तत्तदाकारत्वेन चैतन्यस्य तत्प्रतिबिम्बितत्वेन (तदभिव्यक्तत्वेन)

---

स्थापकं, तत्र तदुपलक्षणम्, तादृशे [1]यत्र तादृशं व्यावर्तकोपस्थापनं विनापि व्यावर्तकम्, तत्र तदुपाधिरिति प्रकृतग्रन्थाभिप्रेतमपि युक्तमेव॥

परमार्थतस्त्वविद्यमानस्य धर्मान्तरोपस्थितिं विनापि व्यावर्तकस्योपलक्षणत्वं कल्पतर्वाद्युक्तं यथाश्रुतं परिभाषामात्रे पर्यवसन्नं स्यात्। विशेषणत्वादिनिर्वचनं हि मुख्यामुख्यत्वविवेचनाय विशेषणत्वसम्भवे नोपाधित्वं, तत्सम्भवे च नोपलक्षणत्वं स्वीक्रियत इति फलकाय। तथा च यदि धर्मान्तरोपस्थापकमेवोपलक्षणम्, तदा तस्य स्वतो व्यावर्तकत्वाभावेनोपाध्यपेक्षया जघन्यत्वमुपपद्यते। स्वतो व्यावर्तकत्वे तु [2]नाविद्यमानतामात्रेण जघन्यतोपपद्यते। अतएव विशिष्टवृत्तिज्ञानस्य विशेष्यान्वय्यंशे[3] विशेषणयोग्यताज्ञानसहकारेणैव शाब्दधीजनकत्वाद्विशेषणस्योपाधित्वेनान्वयबोधो लक्षणयैवेत्याद्युक्तमित्युपाधेरपि विशेषणापेक्षया जघन्यतोपपद्यत इति प्रकृतग्रन्थार्थ एव साधीयान्। तत्रैव च कल्पतर्वादिग्रन्थस्यापि तात्पर्यं बोध्यम्॥

**सङ्करस्येति** पूर्वोक्तदोषगणस्योपलक्षणम्। **तत्तदाकारत्वेनेत्यादि**तृतीयानामभेदोऽर्थस्तस्य वैलक्षण्यमित्यत्रान्वयः। स्वत एव

---

[1] यत्रा–ख. ग. [2] तु विद्य. [3] विशेष्यत्वांशे.

वा मम तु तत्तज्ज्ञानस्य तत्तदीयस्वभावत्वेन तत्तद्व्यवहारजनन-शक्तत्वेन वा स्वत एव वैलक्षण्यमिति वाच्यम्; विषयस्यैवाकार-समर्पकत्वेन स्वभावव्यवहारयोः परिचायकत्वेन च तन्नैरपेक्ष्येण व्यावर्तकताया वक्तुमशक्यत्वात्। (अस्माभिश्च तुच्छे जनकत्व-स्यानुक्तत्वात्) विशेषणत्वोपाधित्वयोः सम्भवे च नोपलक्षणत्व-मित्युक्तम्। न च 'कथमसतः सज्जायेत' इति श्रुत्या 'नास-तोऽदृष्टत्वात्' इति सूत्रेण शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादि-त्यादिभाष्येण च विरोधः; तेषां तुच्छे जनकत्वनिषेधपरत्वात्, अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात्। तस्मात् सद्विविक्तत्वं साधनमिति सिद्धम्॥

इत्यद्वैतसिद्धौ असतस्साधकत्वाभावे बाधकम्.

विषयाघटितं तत्तदाकारत्वं तत्तद्विषयितारूपोऽतिरिक्तधर्मो यद्यपि; तथापि तस्य प्रत्यक्षज्ञाने व्यावर्तके विषयघटितरूपेणैव भानमिति विषयस्य व्यावर्तकत्वमावश्यकम्। विषयिताविशेषसम्बन्धेन विषय स्यापि व्यवहारादिकारणतादाववच्छेदकत्वं[1] सम्भवतीति न विषयिता-विशेष एव तदवच्छेदको न वा तत्त्वेनातिरिक्तशक्तेस्सिद्धिरित्याशये-नाह—विषयस्यैवेति। आकारसमर्पकत्वेन विषयिताविशेषरूपा-कारापेक्षणीयत्वेन, तच्चोक्तरीत्या बोध्यम्। व्यवहारेति। व्यवहारजनके-त्यर्थः। परिचायकत्वेन इतरस्माद्व्यावर्तकत्वेन। ज्ञानस्वभावानाम-नुगतत्वाभावात् तेषामेव न तेषु व्यावर्तकत्वम्, न वा व्यवहारादिजनक-ताविशिष्टव्यावर्तकत्वम्। अतो विषयस्य व्यावर्तकत्वं जनकत्वादाव-वच्छेदकत्वं चावश्यकमिति भावः॥

[1] कारणतावच्छेदकत्वं

## अथ दृग्दृश्यसम्बन्धभङ्गः

ननु—मिथ्यात्वानुमानमप्रयोजकं, सत्यत्वेऽपि दृश्यत्वोपपत्तेरिति—चेन्न; दृग्दृश्यसम्बन्धानुपपत्तेः। नहि ज्ञानं ज्ञेयासम्बद्धमेव प्रकाशकम्; अतिप्रसङ्गात्। नापि सम्बद्धम्; आत्मस्वरूपस्य तद्गुणस्य वा ज्ञानस्य ज्ञेयेन संयोगसमवाययोर-

---

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
असतोऽसाधकत्वोक्तौ बाधकं ध्वान्तभञ्जनम्॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां असतः साधकत्वाभावे बाधकनिरूपणम्.

### अथ दृग्दृश्यसम्बन्धभङ्गः.

संयोगसमवाययोरभावादिति। गुणादौ नात्मनस्संयोगस्सम्भवतीत्यविवादम्। द्रव्येऽपि तदतीतादशायां तदुत्पत्तिकाले च तदसम्भवः। न चोत्पत्तिकाले तदवयवसंयोगजन्यस्तत्संयोगः, अतीतादौ च तदीयसूक्ष्मावस्थासंयोगद्वारकः सम्बन्धः, एवं गुणादावपि द्रव्यद्वारेति—वाच्यम्; त्रुट्यादे[1]र्जन्यत्वेऽप्यवयवाभावस्योक्तत्वेन तत्र तद्गुणादौ च तदसम्भवात्; गुणगुणिनोर्युगपदुत्पत्तेः परैरस्वीकाराच्च। संयोगस्य सावयव[2] एव दृष्टत्वेन व्यापकविरुद्धोपलब्धेश्च। अस्मन्मते त्रुटेः संयोगानङ्गीकारात्, चतुरणुकत्वेन परोक्तद्रव्यस्य सावयवत्वे मानाभावात्। भावे वा त्रुटेः संयोगं विना[3] क्रिययैव तत्सम्भवात्, त्रुट्यादौ[4] गुणादौ चैकजातीयत्वेनानुभूयमानस्य ज्ञानसम्बन्धस्य तावता प्यनुपपत्तेश्च आत्मगुणत्वे[5] तु ज्ञानस्य न सम्भवत्येव; तत्र मनस एवोपादानत्वादन्यथा ज्ञानादौ मनसो निमित्तत्वमात्मन उपादानत्वमित्यत्र गौरवात्, कार्यत्वे-

---

1 द्रव्यादे. 2 समवाय. 3 संयोगादिना. 5 द्रव्यादौ. 5 आत्मगुणत्वे.

भावात्, अन्यस्य चानाध्यासिकस्य सम्बन्धस्याभावात्। नच विषयविषयिभावः सः; तस्य विषयित्वविषयत्वरूपस्यैकैकमात्रनिष्ठत्वेन द्विष्ठसम्बन्धात्मकत्वासम्भवात्, दुर्निरूपत्वाच्च। तथा हि (१) विषयत्वं किं ज्ञानजन्यफलाधारत्वम्, (२) किं वा ज्ञानजन्यहानादिबुद्धिगोचरत्वम्, (३) उत ज्ञानकर्मत्वं, (४) ज्ञानाकारार्पकत्वं वा, (५) दृश्यमानत्वे सति तत्त्वं वा, (६) ज्ञानजन्यव्यवहारयोग्यत्वं वा, (७) यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पाद्यते तत्त्वं वा, (८) यस्यां संविदि योऽर्थोऽवभासते स

---

नात्मोपादानकत्वादात्मसमवेतत्वेऽपि[1] मनःपरिणामरूपज्ञानादिर्नात्मगुणः, द्रव्यत्वात्। परेण तु आत्मगुणत्वेन स्वीकृतस्य ज्ञानस्य (न) संयोगस्संभवति; गुणत्वादेव। तत एव नानात्म[2]समवायः। आत्मनस्तु यद्यपि समवायः कार्यमात्रे सम्भवति; तथापि नातीतादौ न वा[3] तस्य सम्बन्धत्वसम्भवः। सम्बन्धान्तरस्य स्वीकारेऽनवस्थानात्। अस्वीकारे नासम्बद्धस्य सम्बन्धत्वमतिप्रसङ्गादिति भावः। **अन्यस्येति।** विषयविषयिभावादिसम्बन्धस्य वक्ष्यमाणरीत्या दुर्निरूपत्वेन शुक्तिरूप्याद्योःसम्बन्धस्येव[4] (मिथ्यात्वाद्वक्ष्यमाणरीत्या सम्बन्धि) मिथ्यात्वप्रयोजकत्वमित्यतादृश[5]रूपस्यानाध्यासिकस्य सम्बन्धस्याभाव इति भावः। **द्विष्ठसम्बन्धेति।** यो ययोस्सम्बन्धः स तयोर्वर्तते। अतएव तेन[6] सम्बन्धेन तयोर्मिथो विशिष्टधीनियमः। यथा संयोगसमवायौ। न हि ताभ्यां सम्बन्धाभ्यां यत्र यस्य विशिष्टप्रमा, तस्य तत्र न विशिष्टप्रमेति सम्भवति। यदि च चैत्राद्यवृत्त्यपि स्वत्वादि सम्बन्धः, तदा घटाद्यवृत्तिः पटादिरपि घटादिसम्बन्धः स्यात्, तदवृत्तित्वाविशेषात्।

[1] समवेतेनेत्यपि. [2] नात्म. [3] नातीतादौ न वा नानादौ न—ख. क. ग.
[4] अयं कुण्डलितः पाठः—ख. पुस्तके न दृश्यते. [5] मिति तादृश. [6] एकेन.

**तस्या विषयः, तथाच संविदि भासमानत्वमिति वा, (९) सम्बन्धान्तरमन्तरा ज्ञानावच्छेदकत्वं वा। आद्ये फलं न ताव ज्ज्ञातता, अनङ्गीकारात्; अतीतादावभावाच्च। नापि हानादिः;**

सत्त्वे[1] चैत्रादिनिष्ठस्वामित्वादिनिरूपितत्वं विशेष इति चेन्न; पटादेरपि घटादिसामानाधिकरण्यादिसत्त्वात्। चैत्रीयं धनमित्यादिधीरेव विशेष इति चेन्न; युक्तिविरोधे तस्या मिथ्याविषयकत्वात्। अन्यथा शुक्तिरूप्ययोरपि सम्बन्धं रोचयेत्। धीसत्त्वा[2]त्तत्र व्यवहारकाल एव बाधोऽस्ति प्रकृते तु तादृशविचारकाल इति चेत्; तावता प्रकृते सम्बन्धो व्यावहारिकोऽस्तु न तात्त्विकः। तस्मादेकैकमात्रनिष्ठो न सम्बन्ध इति विषयत्वं विषयित्वं वा न विषयविषयिणोः सम्बन्धः। तदुभयनिष्ठं तादात्म्यं तु विप्रकर्षादिना मिथ्यात्वेन स्थापयिष्यते। **अनङ्गीकारादिति**। ज्ञात इति व्यवहारस्य ज्ञानसम्बन्धेनैवोपपत्तेः। अज्ञानस्य भ्रमो[3]पादानत्वादानुभविकत्वाच्चावश्यकत्वेन तन्निवृत्तेरेव[4] फलत्वेन ज्ञातता नाङ्गीक्रियते। न चाज्ञाननिवृत्तिरेव फलं निवेश्यमिति—वाच्यम्; प्रातीतिकेष्वनुवाद्येषु चाव्याप्तेः। **अतीतादाविति**। अतीतादेरुपादानस्येदानीमभावात्तत्र ज्ञातता नोत्पद्यते। नापि तस्या[5]मात्मैवोपादानम्, विषये तु तादात्म्यान्यस्सम्बन्धः; विषयस्योपादानत्वेऽप्यात्मनि सम्बन्धान्तरस्यावश्यकत्वात्। अन्यथा पुरुषान्तरज्ञाननिमित्तकज्ञाततानुभवापत्तेरिति—वाच्यम्; तादात्म्यसम्बन्धस्य सामानाधिकरण्यप्रतीतिनियामकत्वात्, घटज्ञानेनात्मा ज्ञात इति व्यवहारापत्तेः। कुत्रचिद्विषये केनचिज्ज्ञानेन ज्ञाततेत्यत्र विषय-

[1] स्वत्वे—ग. [2] रोचयेथाः। असत्त्वात्. [3] अज्ञानभ्रमो—क. [4] निवृत्तेरेव—क. [5] तस्या—आ. ग.

गगनादौ तदभावात्, कलधौतमलादेरपि तज्ज्ञानविषयत्वप्रसङ्गाच्च। नाप्यभिज्ञाभिलपने; तयोर्ज्ञेयावृत्तित्वात्। नच विषयविषयिभावेन ते तत्र स्त इति—वाच्यम्; तस्यैव विचार्यमाणत्वात्। अत एव न द्वितीयोऽपि। न तृतीयः; ईश्वरज्ञानस्यातीतादिज्ञानस्य च कर्मकारकाजन्यत्वेन निर्विषयत्वप्रसङ्गात्। न चतुर्थः; ज्ञानतदाकारयोरभेदेन सर्वेषां ज्ञानहेतूनां विषयत्वापातात्, अनुमित्यादिविषये तदभावा(पाता)च्च। न पञ्चमः; दृश्यमानत्वस्य विषयत्वघटितत्वेनात्माश्रयात्। न षष्ठः; योग्यतायां योग्यतान्तराभावात्। न च योग्यता योग्यतां विनैव योग्या, यथा दृश्यत्वं दृश्यत्वान्तरं विनैव दृश्यमिति—वाच्यम्; अवच्छेदकरूपापरिचये योग्यताया एव गृहीतुमशक्यत्वात्। न च ज्ञानविषयत्वं तदवच्छेदकम्; आत्माश्रयात्। न सप्तमः; नित्येश्वरज्ञानस्य निर्विषयत्वप्रसङ्गात्। नाष्टमः; संविदीति न

---

विषयिभावस्यैव नियामकत्वादात्माश्रयापत्तेश्च। **गगनादाविति**। सदा सम्बन्धापेक्षाभ्यां तत्र हानोपेक्षयोरसम्भवादुपादानस्य च पूर्वसिद्धत्वान्न तेषां फलत्वमित्यर्थः। **कलधौतेति**। कलधौतमात्रज्ञानेन तन्मलज्ञानद्वारा [1]तद्धानजननात्तस्य तद्विषयत्वापत्तिरिति भावः। **न द्वितीय इति**। हानाद्यभावबुद्धेस्सत्वात् ग्रहणादौ[2] ,हानादिबुद्धेरसम्भवादुपादानबुद्धेः पूर्वसिद्धत्वाद्धानादिधीर्न फलमित्यर्थः। **तदाकारेति**। तत्स्वरूपात्मकाकारपदार्थेत्यर्थः। **हेतूनामिति**। अर्थकत्वस्य हेतुत्वरूपस्यैव वाच्यत्वादिति शेषः। **यथा दृश्यत्वमिति**। यथा दृक्सम्बन्धः स्वरूपसम्बन्धेन स्वस्मिन्वर्तते तथा योग्यताऽपीत्यर्थः। **योग्यताया इति**। जन्यतापि गृहीतुमशक्या। तत्तद्विषयकत्वरूपं त्ववच्छेदकमात्माश्रय-

[1] तज्ज्ञान–क. ग.  [2] गगनादौ.

**तावदधिकरणसप्तमी; ज्ञानस्य ज्ञेयानधिकरणत्वात् । नापि विषयसप्तमी; तस्यैव निरूप्यमाणत्वात्, संविदो विषयत्वं संवेद्यस्य च विषयित्वमिति वैपरीत्यापाताच्च । नापि सतिसप्तमी; भासमानत्वस्य विषयताघटितत्वेनात्माश्रयात् । नापि नवमः; मत्समवेतं रूपज्ञानमित्यत्र रूपज्ञानसमवायस्य सम्बन्धान्तरं विनैव रूपज्ञानावच्छेदकस्य 'इदं रूप' मिति ज्ञानेऽपि विषयत्वापातात् । ननु—ज्ञानविषय इत्यभियुक्तप्रयोग एव ज्ञानविषययोः सम्बन्धः; यथा अभियुक्तस्य मन्त्र इति प्रयोगविषयत्वमेव मन्त्रलक्षणम्, न चान्योन्याश्रयः; पूर्वपूर्वप्रयोगमपेक्ष्योत्तरोत्तरप्रयोगादिति—चेन्न । एतावता हि ज्ञेयत्वमात्रं सामान्यतः स्यात्**

---

प्रस्तमित्यपि बोध्यम् । **संविद् इति** । घटे ज्ञानमित्यादौ विषयसप्तमीस्थले प्रकृत्यर्थस्य विषयता लभ्यत इति प्रकृतेऽपि तथा स्यादिति भावः । **विषयताघटितत्वेन** । विषयताश्रयत्वरूपत्वेन । **मत्समवेतं** मत्समवायवत् । **अन्योन्याश्रय इति** । प्रयोगे ज्ञाते तेन सम्बन्धेन विषये ज्ञानस्य विशिष्टप्रमया अयं ज्ञानविषय इत्यभियुक्तप्रयोगः, तस्मिन्सति च सेत्यन्योन्याश्रयः । अभियुक्तत्वस्य मन्त्रे एव मन्त्रशब्दप्रयोक्तृत्वस्य मन्त्रत्वघटितत्वादन्यादृशस्य दुर्वचत्वान्मन्त्रपदस्य शक्यतावच्छेदकधर्मवत्त्वमेव मन्त्रत्वम् । स च धर्म आनुपूर्वीविशेषरूपो नानाविधः[1] । विषयपदस्य तु शक्यतावच्छेदकवत्त्वं विषयत्वं यद्यपि शक्यते वक्तुम्; शक्तेरखण्डातिरिक्तपदार्थत्वेन शक्याघटितत्वादनुगमसम्भवात्; तथापि तादृशविषयत्वमत्रैवास्य ज्ञानस्येति व्यवहारानिर्वाहकत्वम् । अतएव समवायैक्यमत्रैवास्य रूपस्याधिकरणत्वमिति व्यवहारानिर्वाहाद्दुष्टमित्याशयेनाह । **एतावता हीति** । ननु —तत्तद्विषयनिष्ठपूर्वपूर्वप्रयोग एवोत्तरो-

[1] रूपेण नानादिः.

**न त्वेतज्ज्ञानविषयत्वम् । न चास्मिन् सादौ पूर्वप्रयोगमपेक्ष्योत्तरोत्तरप्रयोगा वक्तुं शक्यते, तस्यानादिमात्रविश्रान्तत्वात् ।**

तज्ज्ञानस्य विषयत्वं तत्राह । **न चास्मिन् सादाविति । तस्य** पूर्वप्रयोगस्य । प्रथम सादिपदार्थे ज्ञानविषयोऽयमिति प्रयोगो न स्यात्, पूर्वप्रयोगाभावात् । न च—ज्ञानस्येव प्रयोगस्यापि पूर्वोत्पन्नस्येदानीमुत्पन्नविषये सम्बन्धसत्त्वात्तद्ज्ञानादेरिदानीं प्रयोग इति—वाच्यम्; तद्विषयव्यक्तिमात्रप्रयोगस्य पूर्वं सत्त्वे मानाभावात् । न च—भाविप्रयोगमादाय सोऽस्त्विति वाच्यम्; यत्र सोऽपि न प्रामाणिकस्तत्र तदसम्भवात्, भूतभाव्यर्थे निश्चयासम्भवेन वाक्यार्थधीप्रमात्वनिश्चयाधीनोक्तप्रयोगासम्भवात् । अत एव तत्प्रयोगसम्बन्धेन तज्ज्ञानविषययोर्विशिष्टज्ञानं तत्प्रयोगहेतुरित्यपास्तम्; तज्ज्ञानोत्पत्तिकाले तज्ज्ञानविषयोऽयमिति व्यवहारानापत्तेश्च । विषयतासम्बन्धेन चाक्षुषाद्युत्पत्तौ सन्निकर्षादिहेतुत्वानुपपत्तेश्च । न हि भूतभाविसम्बन्धेनेदानीं कार्योत्पत्तिस्सम्भवति । यत्र विषये कस्यापि प्रयोगो न जातस्तत्राव्याप्तेश्च । प्रमेयं सर्वमित्यादिप्रयोगस्य तत्र सम्बन्धत्वे विषयान्तरेऽपि तत्तद्धीवि[1]षयत्वापत्तेः । एतेन—सादावपि पूर्वप्रयोगमपेक्ष्य प्रयोगो लिप्यादिसम्प्रदायवद्वैदिकप्रयोगवच्चेति प्रलापोऽपास्तः; लिप्यादौ वैदिकप्रयोगे चोपदेशरूपस्य पूर्वप्रयोगस्य सम्भवेऽपि प्रकृते तदभावात । किं च तत्तत्प्रयोगस्य कुत्रचिद्विषये सम्बन्धता कुत्रचिन्नत्यत्र विनिगमकाभावः । तत्र सर्वविषयसम्बन्धाभावस्याविशिष्टत्वात् । अथ प्रयोगान्तरं तत्र सम्बन्ध इति चेत्, न; तत्रापि विनिगमकाभावात् । अथ स्वयमेव स्वस्य सम्बन्धस्तत्तद्विषयस्वरूपं चेति[2] चेत्, न; आत्माश्रयात्स्वस्य

[1] तत्तद्वि—ग.　[2] वेति—क. ग.

किञ्च प्रयोगोऽपि स्वविषये सम्बन्ध इत्यात्माश्रयोऽपि। ननु–यज्ज्ञानं यदभिलपनरूपव्यवहारकारणं स तस्य विषयः; करणपाटवाद्यभावेन व्यवहारानुदयेऽपि सहकारिविरहप्रयुक्तकार्याभाववत्त्वरूपं कारणत्वमस्त्येव। न च निर्विकल्पकविषये अव्याप्तिः; तस्या[1]ङ्गीकारात्। न च–यत्तद्भ्यामननुगमो दोषः; कस्य को विषय इत्यननुगतस्यैव प्रश्नविषयत्वेन तस्यादोषत्वात्। न च–घटज्ञानानन्तरं प्रमादाद्यत्र पट इति व्यवहारस्तत्र घटज्ञानस्य पटाभिलपनरूपव्यवहारजनकत्वेन पटविषयत्वापत्तिः; समानविषयाभिलापं प्रत्येव ज्ञानस्य जनकतया भिन्नविषयतया तत्राजनकत्वादिति चेन्न; अभिलपनरूपव्यवहारजननयोग्यत्वं न प्रातिस्विकरूपेण निर्णेयम्; अवच्छेदकत्वस्य फलनिर्णेयत्वात्, प्रतिस्वं च फलादर्शनात्, अजनितफले प्रातिस्विकयोग्यतायां मानाभावात्, किंतु तत्र तत्रानुगततत्तद्वृत्तिविषयत्वेन। तथा चात्माश्रयः। अत एव ज्ञानकर्मत्वं विषयत्वम्, कर्मत्वं च न कारकविशेषः; येनातीतादौ तदभावो भवेत्, किं तु क्रियाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वम्। अन्यथा घटं करोतीत्यादावसिद्धं घटादि [2]जनकं सिद्धं च न कृतिकर्मेति द्वितीया-

---

स्वप्रतियोग्यनुयोगिकत्वासम्भवादित्याशयेनाह —**किञ्चेति**। यत्तु शब्दरूपस्य प्रयोगस्यासम्बन्धत्वात् प्रयुज्यत इति प्रयोग इति व्युत्पत्तेरर्थस्यैव सम्बन्धत्वात् सम्बन्धत्वेनाप्रवेशाच्च न दोष इति, तत्तुच्छम्; अर्थस्य सम्बन्धत्वेऽप्यात्माश्रयस्योक्तत्वात्। सम्बन्धत्वेनाप्रवेशस्तु नात्रोपयुक्तः। **तत्र तत्रेति**। घटादिव्यवहार इत्यर्थः। **तत्तद्वृत्तिविषयत्वेनेति**। घटादिनिष्ठं यद्वृत्तिविषयत्वं तद्घटितेन घटादिविषयकज्ञानत्वेनेत्यर्थः।

---

[1] नङ्गीकारात्. [2] न जनकं.

**विभक्तिरनार्थिका स्यादिति निरस्तम् । व्यवहारयोग्यत्वं न व्यवहाररूपफलोपहितत्वम्; कुत्रचित्प्रतिरुद्धे व्यवहारेऽव्याप्तेः । नापि तत्स्वरूपयोग्यत्वम्; विषयत्वादन्यस्य तस्यासम्भवादिति पूर्वोक्तदोषात् । न चावच्छेदकाद्भिन्नं सहकारिविरहप्रयुक्तकार्याभाववत्त्वं तदिति वाच्यम्; अनुगतावच्छेदकधर्मं विना तस्यापि गृहीतुमशक्यत्वात् । घटं करोतीत्यत्र सिद्धस्यैव कपालादेः कृतिकर्मता; व्यापारकार्यतया[1] सिद्धस्यैव कृतिकर्मताङ्गीकारात् । अत एव निष्पादनवाचिधातुसमभिव्याहृतकर्मपदे शक्यावयवे**

**विषयत्वादिति ।** कारणतावच्छेदकरूपं स्वरूपयोग्यत्वं विषयताघटितमित्यर्थः । **तस्यापीति ।** कारणतावच्छेदकोपहितस्य कार्याभाववत्त्वं सहकार्यभावप्रयुक्तं न त्वन्यस्य । न हि शिलायामङ्कुराभावो जलाद्यभावप्रयुक्तः, तत्त्वाप्रत्ययात्[2] । कारणतावच्छेदकवत्त्वेन निर्णीते वस्तुन्येव सहकार्यभावप्रयुक्तं कार्याभाववत्त्वं निर्णेयम् । तच्चावच्छेदकं विषयत्वघटितमित्यात्माश्रयस्तदवस्थ इति भावः । क्षणिकविशेषस्य तद्व्यक्तित्वेन कारणस्य सहकार्यभावप्रयुक्तं न कार्याभाववत्त्वम्[3]. सहकारिकूटसम्पन्नत्वादत उक्तं **अनुगतेति** । कार्यानुपधायकवृत्तीत्यर्थः । तेन कार्योपधायकमात्रवृत्तिरूपेण कारणस्य सहकार्यभावप्रयुक्तकार्याभावाभावेऽपि न क्षतिः । **शक्यावयवे** स्वशक्यार्थसम्बन्धिविशेषे । तेन रूपं करोति सुखं करोतीत्यादौ रूपादिसमवायिनि, ध्वंसं करोतीत्यादौ ध्वंसादिप्रतियोगिनि लक्षणा लभ्यते[4] ॥

यत्तु—“ज्ञाने व्यवहारजनकतावच्छेदकं न घटादिविषयकत्वम्, येनात्माश्रयः; किंतु संशयान्यज्ञानत्वम् । न चातिप्रसङ्गः; विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात् । शक्यावयवे

[1] व्यापारवत्तया. [2] अप्रत्ययात्. [3] भावत्वम्–क. [4] लक्ष्यते–क. ग.

**निरूढलक्षणामाहुरसत्कार्यवादिनः। सत्कार्यवादिनां तु पूर्वसतोऽप्यभिव्यञ्जनीयतया न कारकत्वकृतिकर्मत्वयोरनुपपत्तिः। एतेन—'यस्यां संविदीत्यादिपूर्वोक्तेऽपि न दोषः, संविदीति सति सप्तमी, भासमानत्वं च व्यवहारयोग्यत्वम्, तच्च सति कारणान्तरे**

लक्षणेत्यपि न युक्तम्; पटमित्यादावव्ययवव्यापार्यत्वान्यस्य पटादिकर्मत्वस्यानुभवात्। अतएव सिद्धवृत्त्यसिद्धविषय[1]कत्वस्य कुतो नियम इति मणिकारादयः। अन्यथा यागेन स्वर्गं कुर्यादित्यत्र स्वर्गसाधनयागादिलक्षणायामनन्वयः स्यात्, क्रियाधीन[2]व्यवहारयोग्यत्वरूपातिशयेन[3] प्रयोगोपपत्तौ लक्षणायां मानाभावात्. इति तन्न; संशयत्वस्य तत्तद्विरुद्धविषयकत्वरूपत्वेनात्माश्रयानपायात्। अथ संशयत्वमखण्डम्, तर्हि निश्चयत्वमेवाखण्डम्, ज्ञानत्वं वावच्छेदकं कुतो नोक्तमिति व्यक्तं ते मौढ्यम्। किञ्चैवं ज्ञानव्यवहाराणां तत्तद्व्यक्तित्वेन कार्यकारणभावात् विशेषतोऽङ्गीकृत्यापि नातिप्रसङ्गवारणं वक्तुं शक्यम्; तत्तद्व्यक्तीनां तत्तद्विषयीयत्वनियाम[4]काभावात्। न हि तत्तद्व्यवहाराणां तत्तद्विपयैर्विषयत्वान्यस्सम्बन्धोऽस्ति। तथा च तत्तद्विषयकतत्तद्व्यवहारव्यक्तित्वेन तत्तद्धीकार्यत्वमिति तद्घटितलक्षणे कथं नात्माश्रयः॥

अपिच ज्ञान[5]मभिलापे हेतुः, अर्थबोधादिरूपेष्टसाधनताज्ञानाद्यधीनप्रवृत्त्या तत्सम्भवात्। पटमित्यादौ पटादेरकारक(व)त्वेऽपि कर्मत्वं ब्रुवाणो देवानां प्रियःशोभनतराम्। कर्मत्वस्येव कर्तृत्वादेरपि कारकविशेषान्यत्वं किमिति न रोचयेः। क्रियाजन्यफलशालित्वादिरूपं कर्मत्वादि क्रियानिर्वर्तकत्वरूपकारकत्वव्याप्यमिति वृद्धोक्त्या कारकत्वाभावे कर्मत्वाद्यसम्भवः। अथ गौणं कर्मत्वादि क्रियाजन्यव्यवहारयोग्यत्वादि न

[1] सिद्धविषयक-क. [2] क्रियार्थेन. [3] योग्यत्वानुशयेन. [4] नियामकालाभात्—क. ग. [5] न ज्ञान—ग

**व्यवहारावश्यम्भाव इत्येतदपि निरस्तम् । ननु—यः सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च स तस्य विषयः; यद्यप्यात्मा स्वविषयकज्ञानसमवायवान्; तथापि न तस्य ज्ञानावच्छेदे समवायापेक्षा, ज्ञानासमवायिनोऽपि घटादेस्तदवच्छेदकत्वदर्शनात्, यद्यपि च रूपज्ञानं मत्समवेतं ध्वस्तमिष्टमित्यादौ रूपज्ञानाविषया अप्यात्मसमवायेच्छाध्वंसादयस्सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकाः; तथापि समवेतेष्यमाणप्रतियोग्यात्मकरूपज्ञानावच्छिन्नस्वभावा एव; सम्बन्धे-**

कारकत्वव्याप्यमिति चेन्न; पटं करोतीत्यादौ प्रधानीभूतप्रत्यये गौण कर्मत्वे लक्षणाया अन्याय्यत्वेन प्रकृतावेव शक्यावयवे लक्षणाया युक्तत्वात् । अत एवेत्यादिकं तु मौढ्यमूलकम् । न हि वयमसिद्धक्रियां पटाद्यनुकूलां सिद्धतन्त्वादिवृत्तिं कृतिविषयं नाङ्गीकुर्मः । पटमुद्दिश्य तन्तुश्चाल्यत इत्यादौ तथा प्रतीतिस्वीकाराच्च. परं त्वसिद्धस्य कर्मत्वम् । यागेन स्वर्गमित्यादौ तु स्वर्गादिपदलक्षिते स्वर्गादिसाधने यागादेरभेदस्तृतीयया बोध्यत इति [1]नान्वयः ॥

**यः सम्बन्धेत्यादि** । स्वान्यसम्बन्धाघटितस्य[2] ज्ञानसम्बन्धित्वस्याश्रय इत्यवच्छेदकान्तार्थः । स्वविषयकज्ञानसमवायित्वादात्मन्यव्याप्तिमाशङ्क्य प्रत्याह—**यद्यप्यात्मेति** । **ज्ञानावच्छेदे** ज्ञातत्वे । **समवायापेक्षा** समवायघटितत्वम् । यद्ज्ञानानवच्छिन्नेत्यस्य कृत्यमाह—**यद्यपि चेति** । **समवेतेत्यादि** । आत्मसमवायस्य स्वभावः समवेतात्मकरूपज्ञानावच्छिन्नः, इच्छाया इष्यमाणात्मकेन ध्वंसस्य प्रतियोग्या-

[1] नानन्वयः—ग. [2] स्वाश्रयसम्बन्धाघटकारिकूटसंपन्नत्वादन उक्तमनुगतेति । कार्यानुपधायकवृत्तीत्यर्थः । तेन कार्योपधायकमात्रवृत्तिरूपेण घटितस्य इत्यधिकः पाठः.

च्छादीनां सम्बन्धीष्यामाणाद्यवच्छिन्नस्वभावत्त्वादिति नातिव्याप्तिः। ज्ञानविषयस्तु न ज्ञानावच्छिन्नस्वभावः; ज्ञानस्य घटाद्यवच्छिन्नस्वभावत्ववत् घटादेर्ज्ञानावच्छिन्नस्वभावत्वादर्शनात्। यद्यपि स्वग्राहकज्ञानाविषयीभूतं ज्ञानविषयिकानुमित्यनुव्यवसायादिकं ज्ञानं ज्ञानावच्छिन्नस्वभावम्; तथापि स्वयं यत् ज्ञानं प्रति विषयस्तदवच्छिन्नस्वभावं नेति नाव्याप्तिरिति चेन्न; मत्समवेतं रूपज्ञानमित्याकारकज्ञानस्यात्मसमवायविषयकत्वाभावप्रसङ्गात्; आत्मसमवायस्य सम्बन्धत्वेन सम्बन्धिभूतस्वज्ञानावच्छिन्नत्वात्, घटस्य ज्ञानमिति प्रतीत्या घटावच्छिन्नस्वभावत्वं यथा ज्ञानस्य, तथा ज्ञातो घट इति

त्मकेन रूपज्ञानेनावच्छिन्नः स्वभाव इत्यर्थः। **घटाद्यवच्छिन्नेति।** ज्ञानं स्वग्राहकेण साक्षिणा विषयावच्छिन्नरूपेणैव गृह्यत इति तदेव तत्स्वभावः। विषयस्तु न ज्ञानावच्छिन्नरूपेणैव गृह्यत इति स न तथेति भावः। यद्ज्ञानानवच्छिन्नेत्यत्र यत्पदकृत्यमाह--**यद्यपि स्वग्राहकेति।** सर्वं ज्ञानं वाच्यत्वेन जानामीत्यनुव्यवसायः स्वं प्रति[1] विषयः स्वेनावच्छिन्नस्वभावश्चेत्यव्याप्तिः, अथ येन रूपेण विषयता, तेन रूपेण तज्ज्ञानानवच्छिन्नस्वभावता वच्या; प्रकृते च येन सर्वज्ञान(त्वेन) विषयता, तेन स्वरूपेण न ज्ञानावच्छिन्नता;[2] किंतु ज्ञानत्वमात्रेणेति चेत्, तथापि ज्ञानं वाच्यत्वेन जानामीत्यनुव्यवसाये स्वविषयकेऽव्याप्तिरित्यसङ्गतेयं परोक्तिरिति ध्येयम्। **सम्बन्धिभूतस्वज्ञानेति।** न च यज्ज्ञानं प्रति समवायो विषयः, तेनानवच्छिन्नत्वमक्षतं तत्रेति वाच्यम्; समवायस्यैकत्वेन रूपज्ञानसमवायस्य रूपज्ञानज्ञानीयत्वात्, रूपज्ञानं मत्समवेत[3]धीविषय इति ज्ञानावच्छिन्नत्वस्य समवाये सत्त्वाच्च।

[1] स्वाश्रित. [2] ज्ञानानवच्छिन्नता. [3] तन्समवेत.

**प्रतीत्या घटस्यापि ज्ञानावच्छिन्नस्वभावत्वेनासम्भवाच्च । अथ—यज्ज्ञानं यदीयस्वभावं स तस्य विषयः; मत्समवेतं रूपज्ञान-मित्यत्र तु समवाय एव रूपज्ञानावच्छिन्नस्वभावो न तु रूप-ज्ञानं तदवच्छिन्नस्वभावम्; इदं च ज्ञानस्यैव विषयत्वमुक्तम्; न त्विच्छादिसाधारणमिति नाव्याप्तिरिति चेन्न; यदीयस्वभाव-**

---

**असम्भवादिति ।** न च यज्ज्ञानप्रत्यक्षत्वं यद्विषयसम्बन्धव्याप्यं स तद्विषय इति वाच्यम्; यज्ज्ञानप्रत्यक्षेत्यत्र यज्ज्ञानस्य विषयतानिवेशे आत्माश्रयात्, सम्बन्धसामान्यनिवेशे आत्मादेर्धर्मिमात्रविषयत्वापत्तेः ॥

यत्तु—'आत्मसमवायस्य[1] स्वविषयकज्ञानं सम्बन्धित्वेनावच्छेदकम्, न तु ज्ञानत्वेनेति तथा निवेशान्न दोषः, विषयस्तु न केनापि रूपेण ज्ञानावच्छिन्नः; ज्ञानं विनापि घटोऽयमित्यादिना निरूप्यत्वात्' इति, तत्तुच्छम्; ज्ञानत्वेनावच्छेदकतानिवेशे तज्ज्ञानानवच्छिन्नत्वदळकृत्यस्यैवासम्भवात् । न हि ध्वंसेच्छादौ ज्ञानत्वेन ज्ञानमवच्छेदकम्; किंतु प्रतियोगित्वविषयत्वादिना । अथ—येन रूपेण सम्बन्धिताधीः, तेनावच्छेदकत्वं निवेश्यम्, तथा च ज्ञानं नष्टमित्यादौ ज्ञानत्वेन नाशादौ सम्बन्धित्वप्रत्ययात्त[2]द्वारणम्; तर्हि प्रकृतेऽपि ज्ञानत्वेन [3]सम्बन्धताप्रतीतिर्दोषः, विषयस्त्वित्यादिकं तूक्तव्याप्तिनिरासेन निरस्तम्, ज्ञानं गुण इत्यादौ विषयं विनापि ज्ञाननिरूपणाच्च ॥

**न त्विच्छादीति ।** ज्ञानत्वघटितत्वादित्यादिः । ननु—यदीयत्वं यत्सम्बन्धस्तत्त्वेन निवेश्यते, न तु विषयितात्वेन; येनात्माश्रयः, न-च घटज्ञानस्यापि कालिकादिसम्बन्धेन पटीयतया पटविषयकत्वापत्तिरिति वाच्यम्; यज्ज्ञानं यत्सम्बन्धिरूपेणैव प्रत्यक्षाविषयः, स तस्य विषय इत्यस्य वाच्यत्वात् । न चोपनयादिना पटादिसम्बन्धितया प्रत्यक्षविषयो

[1] यत्समवायस्य—क [2] द्वारेण—ग. [3] सम्बन्धिन.—ग.

**मिति ताद्धितस्य यद्विषयकत्वार्थकत्वे आत्माश्रयात्, अर्थान्तरस्य निरूपयितुमशक्यत्वात्, रूपज्ञानाभावाभावस्य रूपज्ञानरूपत्वेन रूपज्ञानस्याप्यभावीयतया तद्विषयत्वापत्तेः। ननु—ज्ञानजनककरणसन्निकर्षाश्रयत्वं तद्विषयत्वम्, न च रूपज्ञानकरणमनस्सन्निकर्षाश्रयस्यात्मनस्तद्विषयत्वापत्तिः; करणपदेनासाधारणज्ञानकरणस्यैव विवक्षितत्वात्, न चासाधारणज्ञानकरणचक्षुस्सन्निकर्षाश्रयस्य मनसोऽपि रूपज्ञानविषयत्वापत्तिः; सन्निकर्षपदेनाप्यसाधारणज्ञानजनकसन्निकर्षस्यैवोक्तत्वादिति चेन्न;**

घटादिज्ञानं[1] पटादि[2]विषयस्स्यादिति वाच्यम्; सम्बन्धान्तराघटितत्वेन[3] सम्बन्धिविशेषणात्। प्रत्यक्षविषयत्वं तु तद्विषय(क)ज्ञानविषयत्वा[4]दन्यदिति नात्माश्रय इत्यत आह—**रूपज्ञानाभावेति**। घटज्ञानं पटज्ञानत्वेन दोषाद्गृह्यमाणं पट[5]विषयकं स्यात्। प्रत्यक्षविषयताया अपि प्रत्यक्षान्तरविषयताघटितत्वेनानवस्था चेत्यपि बोध्यम्॥

यत्तु—"प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयतेत्युदयनवाक्यं बौद्धाधिकारस्थम्, तदीयता तत्संम्बन्धिता स्वभावः स्वरूपम्, तथाच ज्ञानरूपं[6] तस्यार्थेन सम्बन्धः, सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय, सर्वत्र स्वरूपसम्बन्धे तथैव कल्पनात्, सामान्यतो[7] विषयता ज्ञानमेव, घटादिविषयता तु घटादिसम्बन्धित्वे अनुगता ज्ञानविशेषाः,[8] सम्बन्धव्यवहारनिमित्तं च ज्ञाननिष्ठमर्थसम्बन्धित्वम्, न त्वर्थनिष्ठं ज्ञानसम्बन्धित्वम्,[9] अतीतानागतविषये तद्व्यवहारानुरोधात्" इति शिरोमणिना व्याख्यातम्; तत्तेनैव दूषितम्! तथाहि—यदि ज्ञानमेव विषयता, तदा घटपटाविति समूहालम्बनस्य घटत्वाद्यभाव-

[1] विषयघटादिज्ञाने-ग. [2] पटादिः-ग. [3] तत्वे-क. [4] तद्विषयत्वा-क. [5] घट. [6] स्वरूपं-ग. [7] कल्पना, तत्सामान्यतो-ख. [8] न्धित्वेनानुगतो ज्ञानविशेषः. [9] न त्वर्थनिबन्धनं ज्ञानमेव विषयितासम्बन्धित्वम्.

**चक्षुर्मनस्संयोगस्यापि चाक्षुषज्ञानासाधारणकारणत्वेन मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः, परोक्षविषयेऽव्याप्तेश्च । न च—तत्र लिङ्गज्ञानं करणम्, तत्र च लिङ्गिनस्तद्व्याप्तत्वं**

वति पटादौ घटत्वादिविषयकत्वाद्भ्रमत्वापत्तिः । यैव हि घटविषयता तज्ज्ञानस्वरूपा घटत्वविषयता[1]निरूपिता वाच्या, सैव पटविषयता । अपि च यदि ज्ञानं स्वरूपेण[2] घटादौ व्यवहारहेतुः, तदा स्वस्मिन् काले [3]भावादौ च तथा स्यात्; तैरपि सह तस्य स्वरूपेण सम्बन्धत्वात् । किञ्च विषयता तत्त्वं[4] वा यदि नातिरिच्यते, तदा तद्विषयकेच्छादिसामान्ये तद्विषयकज्ञानत्वादिना कथं हेतुत्वम्? अननुगतत्वात्, सम्बन्धत्वेनानुगमे तद्विषयकात्तदीयसम्बन्धान्तरशालिज्ञानादपि तदापत्तिः । तस्मादतिरिक्तैव विषयता । तद्विशेषास्तु प्रकारत्वादयः । एवं विषयतात्वादिकमपि । एतेन प्रतियोगित्वाधिकरणत्वादयो व्याख्याताः । अथैवं सम्बन्धानन्त्येऽनवस्था स्यादिति चेत्, स्यादेव; यदि क्वचिदपि स्वरूपसम्बन्धेन न प्रतीकारः, अन्यथानुपपत्तेर्दुर्वारत्वादित्यादि तेनोक्तम् । तत्रानवस्थाया अप्रामाणिकत्वम् । सम्बन्धिविप्रकर्षादेरतिरिक्तविषयतायाः सत्यसम्बन्धत्वे बाधकस्याऽऽचार्यैर्वक्ष्यमाणत्वादिति बोध्यम् ॥

**चक्षुर्मन इति ।** प्रत्यक्षमात्रे इन्द्रियमनोयोगस्येव चाक्षुषमात्रे चक्षुर्मनोयोगहेतुत्वादित्यादिः । तत्पुरुषीयचाक्षुषवृत्तिवैजात्यविशेषावच्छिन्नं प्रति हि विजातीयत्वेन चक्षुर्मनस्संयोगस्य हेतुत्वेऽपि चाक्षुषत्वेन कार्यत्वमवश्यं वाच्यम्. जन्यमात्रवृत्तिजात्या कार्यत्वस्यावश्यकत्वात् । तत्र [5]चक्षुष्ट्वेन संयोगत्वेन वा कारणत्वमित्यस्याविनिगम्यत्वात् चक्षुर्मनोयोगोऽपि चाक्षुषमात्रे कारणमिति भावः । **लिङ्गज्ञानं** लिङ्गादिज्ञानम् । **तद्व्याप्तत्वं**[6] स्वविषयलिङ्गव्यापकत्वम् ।

[1] विषयिता. [2] स्वरूपेणासम्बन्धं—ग. [3] अभावादौ—ग. [4] विषयतात्वं—ग. [5] तत्र चक्षुर्मनस्संयोगत्वेन. [6] व्याप्त्वं.

**सम्बन्धोऽस्तीति—वाच्यम्; लिङ्गस्यापि स्वज्ञानसम्बन्धित्वेनानुमितिविषयत्वापत्तेः। न चानुमितौ तद्व्याप्ततारूपसम्बन्ध एव विषयतानियामकः; व्यापकतावच्छेदकव्यापकसम्बन्धादीनाम-**

---

आपत्तेरिति ॥

ननु—व्याप्तिघटकसम्बन्धत्वरूपेणानुमितिस्थलीयसन्निकर्षो निवेश्यः, व्यापकतावच्छेदकधर्मसम्बन्धयोस्तद्घटकत्वान्न दोष इति—चेन्न; व्याप्तिघटकत्वं हि व्याप्तिविषयिताव्यापकविषयिताकत्वमित्यात्माश्रयादिः व्याप्ति[1]घटकवस्तुमात्रेऽतिव्याप्तिश्च ॥

अथ—तज्ज्ञानकरणस्य यादृशयादृशसम्बन्धाश्रये वस्तुगत्या विषयत्वव्यवहारः, तादृशसम्बन्धानामन्यतमवत्त्वं[2] तज्ज्ञानविषयत्वलक्षणम्। धूमाभासादिभ्रमजन्यानुमित्यादिविषयवन्ह्यादावपि धूमाभासादिव्यापकत्वादिसम्बन्धासत्त्वेऽपि तादृशसम्बन्धधीविषयत्वादिरस्ति। शुक्त्यादिविशेष्यकभ्रमविषये रूप्यादावपि करणसम्बन्धिदोषप्रयुक्तत्वादिरस्तीति[3] नाव्याप्तिरिति—चेन्न; तज्ज्ञानकारण[4]तावदन्यतमसम्बन्धवत्त्वस्य तज्ज्ञानविषयतारूपत्वे घटविषयकज्ञानत्वादेरननु[5]गमात्तेन रूपेण हेतुताद्यसम्भवात्। कारणसंयोगादेस्तज्ज्ञानोत्पत्त्यादिक्षणे विनाशेन तस्य तद्विषयतात्वासम्भवात्, सम्बन्धान्तरस्य चानतिप्रसक्तस्य तज्ज्ञानकालमात्रवृत्तेः सर्वत्राभावात्। तज्ज्ञानकारणसम्बन्धिदोषप्रयुक्तत्वादिरपि परमते न रूप्यादौ, किं तु तद्भ्रम इति तत्राव्याप्तितादवस्थ्याच्च। परमते तस्यासत्त्वेन तत्र करणसम्बन्धाभावाच्च ॥

यत्तु—'शुक्तिरूप्यादिभ्रमसम्बन्धोपि[6] न भ्रमविषय इति न

---

[1] घटितपरम्परासम्बन्धमादायवस्तु—ग. [2] तमत्वं. [3] क्तत्वादिना निरस्तेति. [4] करण—क. ग. [5] रनु. [6] सम्बन्धमपि—क. ख. ग.

**विषयत्वापत्तेः। न च ज्ञानकरणसन्निकर्षसमानाधिकरणो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो विषयत्वम्, इदं च नित्यपरोक्षसाधा-**

---

तत्राव्याप्तिः' इति, तत्तुच्छम्; ज्ञानविषययो[1]र्य इच्छादिप्रयोजकः सम्बन्धः स एव हि विषयतेत्युच्यते। स चेन्न भ्रमस्थले स्वीक्रियते, तर्हि कथं तत्रेच्छादिः। सम्बन्धान्तरस्य तत्रेच्छादिप्रयोजकस्य स्वीकारे गौरवम्। शुक्तौ रूप्यादिविषयकज्ञानवानहमिति व्यवहारानुपपत्तिश्च। अन्यथा भ्रम एव सविषयको न प्रमेति[2] किं न स्यात्। अतएव अभिमानन्तर[3]लक्षणेऽपि शुक्तिरूप्यादावव्याप्तिरिति ध्येयम्। यदपि 'लिङ्गाभासादिज्ञानजन्यानुमित्यादिविषये करणीभूतज्ञानविषयलिङ्गाभासादेरसत्त्वेन तदीयव्यापकत्वादिसम्बन्धाभावेऽपि तदीयव्यापकताविषयकधीविषयत्वं सम्बन्धः। यद्यपि तादृशधीविषयत्वं न लिङ्गाभासादिरूपसाध्यस्य सम्भवति, तस्यासत्त्वेन तादृशधीकरणसम्बन्धाभावात्; तथापि शुक्त्यादेरेव[4] रूप्यादिभ्रमविषयत्ववत्, सतः[5] पक्षादेरेव भ्रमानुमित्यादिविषयत्वम्' इति, तदपि तुच्छम्; वह्निविषयकानुमितिमानहमित्यादिसार्वजनीनप्रतीतिबाधात् पक्षादिकमनुमिनोमीत्यादिप्रतीत्यापत्तेश्च, तादृशानुमितेर्वह्न्यविषयकत्वे वह्निविषयकानुमितिसामग्र्यादिविलक्षणसामग्र्यादिमत्त्वापत्तेः, विषयता[6]घटितस्य करणसम्बन्धत्वेऽनवस्थाद्यापत्तेश्चेति दिक्॥

**न च ज्ञानेत्यादि।** आत्मादिकमपि घटादिधीविषयः स्यात्। ज्ञानं मदीयं घटं जानामीत्यादौ घटज्ञानावच्छेदकत्वादत आद्यं दलम्। मनआदिवारणाय द्वितीयम्। ज्ञानावच्छेदकत्वस्य परम्परासम्बन्धेन

[1] ज्ञानविषयो. [2] प्रमितिः. [3] अभिमानानन्तर क. ख. ग. [4] रिव—ग. [5] विषयत्वं वस्तुतः. [6] विषयिता- क.ग.

**रणमिति—वाच्यम्; वस्तुत्वादिकमेव विषयत्वमित्यापत्तेः, ज्ञानावच्छेदकत्वस्य रूपज्ञानाविषये समवायेऽपि सत्वेनातिव्याप्तेश्च। न च ज्ञानज्ञेययोस्स्वरूपसम्बन्ध एव विषयत्वमिति वाच्यम्; असिद्धेः। तथाहि स्वरूपसम्बन्ध इत्यस्य स्वरूपं सम्बन्ध इत्यर्थत्वे संयोगादावतिव्याप्तिः, न च तदुभयान्यत्वं विशेषणम्; हिमवद्विन्ध्ययोरपि स्वरूपसम्बन्धापत्तेः; सम्बन्धा-**

व्याप्यधर्मो मनआदावपि, अतः साक्षात्सम्बन्धेन व्याप्यतालाभाय साक्षात्पदम्। **वस्तुत्वादीति**। सामान्यतो ज्ञानकारण[1]त्वादिनिवेशे वस्तुमात्र एवोक्तलक्षणसत्त्वे[2] वस्तुत्वादेरेव लाघवाल्लक्षणत्वमुचितम्। अथ—तज्ज्ञानकरणत्वादिघटितज्ञानविषयत्वं वाच्यम्, तथापि सन्निकर्षो न स्वविषयव्यापकत्वादिरूपः, व्यापकतावच्छेदकाद्यव्याप्तेः। सन्निकर्षपदेन सम्बन्धमात्रं निवेशे[3] च तत्परिहारेऽपि वस्तुमात्रे यत्किञ्चित्सम्बन्धस्य ज्ञानसम्बन्धित्वरूपज्ञानावच्छेदकत्वस्य च सत्त्वादतिव्याप्तिर्दुर्वारेति वस्तुत्वादिकमेव लक्षणं कुतो न कृतमिति भावः। **संयोगादाविति**। संयोगसमवाययोरित्यर्थः। ज्ञानज्ञेययोः स्वरूपं सामान्यतो विषयतेत्युक्तावुक्तातिव्याप्तिः। **तदुभयान्यत्वं** संयोगसमवायान्यत्वम्। **हिमवदिति** तत्तज्ज्ञानज्ञेययोः स्वरूपं तत्तज्ज्ञानज्ञेययोर्विषयतेत्युक्तावप्ययं दोषः। स्वस्यैव स्वस्मिन्[4] सम्बन्धत्वस्वीकारे हिमवद्विन्ध्ययोरपि मिथो विशिष्टधीः प्रमा स्यात्, स्वरूपसम्बन्धसम्भवात्। अथ—तत्र बाधात्स्वरूपं न सम्बन्धः, तर्हि ज्ञानं ज्ञेयाभाववदिति बाधः प्रकृतेऽपि। अथ सम्बन्धान्तरेण ज्ञेयस्याभावो बाधधीविषयः, तर्हि तत्रापि तथा किमिति न रोचयेः, तथा च भ्रममात्रोच्छेदः। संयो-

[1] करण—क ग. [2] सत्वेन—ग. [3] मात्रनिवेशे—ग. [4] स्यैव क्वचित्स्वं प्रति स्वस्मिन्—ग.

न्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वं स्वरूपसम्बन्ध इति चेन्न; आत्मानं जानामीत्यत्राव्याप्तेः; तत्र सम्बन्धान्तरस्य समवायस्यैव सत्वात्, अतीन्द्रियाभावादावव्याप्तेश्च; न हि तस्य विशिष्टप्रतीतिजननयोग्यत्वे मानमस्ति। अन्यथा तेन विशिष्टप्रत्ययजननापत्तेः। किञ्च विशिष्टप्रतीतिजननयोग्यत्वं धर्मो वा सम्बन्धः, तादृशस्वरूपद्वयमेव वा। आद्ये स्वरूपस्य सम्बन्धत्वव्याघातः, प्रतीतिघटितस्याप्य[1]चाक्षुषादिज्ञानागोचरत्वप्रसङ्गश्च। न द्वितीयः, अननुगमात्। किञ्चैवमभावभ्रमानुपपत्तिः; तत्रापि विशिष्टप्रतीतिसम्भवे स्वरूपसम्बन्धस्य सत्वात्। न च प्रमात्वघटितं तल्लक्षणम्; वास्तवसम्बन्धसत्त्वं प्रमात्वस्याप्यापाद्यत्वात्। अन्यथा तत्र तस्याप्रमात्वे सम्बन्धाभावः, तस्मिंश्च तस्य प्रमात्वमित्यन्योन्याश्रयात्। ननु—सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नस्वरूपस्य सम्बन्धत्वं संयोगत्वावच्छिन्नस्य दण्डीत्यादौ सम्बन्धत्ववत्, विशिष्टबुद्धिश्चावच्छेदकाविषयिण्येवावच्छेद्यविषया, अतो न स्वरूपसम्ब-

गादेरपि गुणादौ स्वरूपसम्बन्धसम्भवेन गुणः संयोगेन क्रियावानित्यादेरपि प्रमात्वसम्भवात्, स्वस्य स्वं प्रति न सम्बन्धत्वम्, स्वप्रतियोगिकत्वस्यानुयोगिकत्वाभावात्। अत एव स्वं न स्वीयमित्यनुभवः, तद्व्यक्तिस्तद्व्यक्तिमतीति[2] चाननुभव इत्याद्युक्तम्। सम्बन्धान्तरस्येति। सम्बन्धान्तराविषयकधीनिवेशे त्वनवस्थादीति[3] भावः। स्वरूपस्येति। सम्बन्धिस्वरूपस्येत्यर्थः। अभावभ्रमेति। यस्य स्वरूपं सम्बन्धस्तद्भ्रमेत्यर्थः। अवच्छेदकाविषयिणीति। सम्बन्धतावच्छेदकं यत्संयोगत्वादि उक्तयोग्यतावच्छेदकं वा तदविषयिणीत्यर्थः। अवच्छेद्यविषयेति।

[1] तस्यास्य–ग. [2] तद्व्यक्तिरिति प्रतीतिरिति. [3] स्था स्यादिति-ग.

न्धगोचरविशिष्टबुद्धेश्चाक्षुषत्वाविरोधः ; न च—तद्वभावप्रमा-भ्रमयोस्स्वरूपद्वयमात्राविषयत्वाविशेषात् प्रमाभ्रमव्यवस्थानुपपत्तिरिति वाच्यम् ; घटाभाववति घटाभावज्ञानत्वेन तद्भिन्नज्ञानत्वेन च व्यवस्थोपपत्तेः । ननु—अतिरिक्ताविषयत्वे तस्यैवानुपपत्तिः ; न हि भवद्रीत्या तस्योभयात्मकत्वेन तदुभयसत्त्वेन व्यधिकरणप्रकारत्वरूपभ्रमत्वस्यैवाभावे भ्रमतदन्यत्वाभ्यां व्यवस्था सम्भवतीति चेन्न ; घटाभावाभावस्य घटत्वेन तद्वति घटाभावज्ञानस्य व्यधिकरणप्रकारकत्वसम्भवात् । किञ्च भ्रमस्य वस्तुगत्या यत् घटवत्स विषयः, न तु प्रमाया इत्यतिरिक्तविषयत्वमस्त्येव ; न चातीन्द्रियाभावे अव्याप्तिः ; अत्यन्ताभावे प्रतियोगिदेशान्यदेशत्वम्, प्रागभावादौ प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वम्, अनोन्याभावे प्रतियोगितावच्छेदकदेशान्यदेशत्वम्, विशिष्टप्रत्ययजननयोग्यतावच्छेदकम् । तदवच्छिन्नत्वं च विशिष्टप्रतीत्यजनकेऽप्यतीन्द्रियाभावे सुलभम्, न ह्यरण्यस्थो दण्डो न घटजननयोग्यतावच्छेदकावच्छिन्न इति—चेत्, मैवम्; नित्यस्यातीन्द्रियस्याकाशात्यन्ताभावादेर्विशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नत्वे अवश्यं विशिष्टप्रत्ययजनकत्वप्रसङ्गात् । नित्यस्य स्वरूपयोग्यस्य सहकारिसमवधाननियमात् ।

---

संयोगादिस्वरूपमात्रनिष्ठसांसर्गिकविषयताकेत्यर्थः । तस्य घटाभाववतः । **उभयात्मकत्वेन** स्वरूपसम्बन्धेन घटाभावविशिष्टरूपतयोभयात्मकसम्बन्धघटितत्वेन । **घटत्वेनेति** । तथाच तद्भिन्नेत्यस्य घटवद्विशेष्यकरूपतद्विलक्षणेत्यर्थ इति भावः । तेन[1] तस्यैवानुपपत्तिरिति यदुक्तं, तत्तस्यैवोपपत्त्या समाहितं भवति । **समवधाननियमादिति** ।

[1] एतेन.

**किञ्च विशिष्टस्य प्रत्यय इत्यत्र स्वरूपसम्बन्धस्य षष्ठ्यर्थत्वे आत्माश्रयः, सम्बन्धमात्रस्य तदर्थत्वे आत्मत्वादिविशिष्टात्मसम्बन्धिसमूहालम्बनविषये घटपटादावतिव्याप्तिः; तयोरपि विशिष्टसम्बन्ध्यविशिष्टविषयज्ञानजनकत्वात् । ज्ञान-**

---

एतादृश[1]नित्यस्य स्वरूपयोग्यत्वे सहकारिसमवधानमावश्यकम्, अन्यथा तत्साधारणरूपेण तदङ्गीकारे मानाभावः । अतीन्द्रियघटितधर्मावच्छिन्नाभावभेद[2]योग्यानुपलब्ध्यादेर्विशिष्य हेतुत्वावश्यकत्वेन तेनैव निर्वाहात्, अभावत्वादिनापि स्वरूपयोग्यत्वसम्भवेनोक्तगुरुरूपैर्नानास्वरूपयोग्यत्वोक्तेरुन्मत्तप्रलापत्वात् । न ह्युक्त[3]विशेषणेन कश्चनाभावो व्यावर्त्यते । संयोगाद्यभावस्य सङ्गृहाय एकावच्छेदेन प्रतियोगिसमानदेशत्वाभावस्य वाच्यतया तस्याप्यव्यावर्त्यत्वात् । किञ्च प्रतियोगिदेशान्यदेशवृत्तित्वादिविशिष्टतत्तदभावस्वरूपसम्बन्धस्य विशिष्टधीस्वरूपयोग्य(त्व)स्वीकारेऽपि प्रतियोग्यधिकरणदेशादौ जायमाना धीः प्रमा कुतो न स्यादिति यदापादितम्, तत्र मूढेन किं समाहितम्? तत्स्वरूपस्य तत्रापि सम्बन्धत्वसम्भवात् । न च—घटादिमति घटाद्यभावज्ञानं भ्रमः, तदन्यत्र तत्प्रमेत्युक्तं (युक्तम्); तद्वति तद्वदन्यत्वस्वरूपसम्बन्धस्यानिवारितत्वात् । एतेनोक्तरूपैर्विशिष्टधीस्वरूपयोग्यत्वाभावेऽप्युक्तरूपावच्छिन्नमभावादिस्वरूपमेव सम्बन्धः, प्रतियोग्यधिकरणसम्बन्धिरूपवारणायावच्छिन्नान्तमिति परास्तम् । अपि चोक्तरूपैः स्वरूपयोग्यता विषयतासम्बन्धेन विशिष्टबुद्धिं प्रति वाच्या । तथाच विषयता[4]घटितविशिष्टधीस्वरूपयोग्यतावच्छेदकरूपावच्छिन्नज्ञानज्ञेयादिस्वरूपस्य विषयतादिरूपत्वेऽनवस्थादि दुर्वारमिति भावः । **तयोः** घटपटाद्योः । **विशिष्टसम्बन्धी** आत्मसमवेतः । **अविशिष्टविषयेति** । स्वविषयकसमूहालम्बनेत्यर्थः । अवि-

[1] एतादृशमि–**क. ख.** [2] बोधे -**ग.** [3] न ह्युक्त. [4] विषयिता.

**स्याभावो ज्ञातोऽभाव इति प्रतीत्योर्वैलक्षण्यं न स्यात्; ज्ञानाभावयोरुभयोरेवोभयत्र स्वरूपसम्बन्धत्वे विषयकृतविशेषाभावात्। अत एव—विशिष्टप्रतीतिजननयोग्यत्वं ज्ञानज्ञेयादिस्थले अतिरिक्तमेव सम्बन्ध इति—निरस्तम्; अतीन्द्रिये नित्याभावेऽव्याप्तेः। न हि तत्र विशिष्टप्रतीतिजननयोग्यता; फलोपधाना-**

शिष्टेत्यनेन घटपटाद्योर्वैशिष्ट्यसामान्यशून्ययोः स्वरूपसम्बन्धस्वीकारानौ[1]चित्यं ज्ञापितम्। यदुभयं मिथो विशिष्टस्य स्वस्य [2]तदुभयं स्वस्य स्वरूपसम्बन्ध इत्युक्तावपि, आत्ममनो[3]रूपोभयस्मिन्नतिव्याप्तिः,[4] तस्यापि संयोगसम्बन्धेन मिथो विशिष्टस्य स्वसम्बन्धिघटादिप्रत्ययजनकत्वात्। सम्बन्धान्तरं विना मिथो विशिष्टत्वोक्तावपि आत्मतज्ज्ञनयोः स्वरूपसम्बन्धाव्याप्तिः। विषयतासम्बन्धेन तादृशप्रत्ययं प्रति तादात्म्येन जनकत्वादिकमप्यनवस्थादिषु [5]दृष्टम्, स्वरूपसम्बन्धविशेषरूपविषयताघटितत्वादित्यादि बोध्यम्। **विषयकृतेति**। न च ज्ञानस्याभाव इत्यत्र या ज्ञानव्यक्तिर्विषयः, ज्ञातोऽभाव इत्यत्र न सेति विषयभेद इति वाच्यम्; विषयतावच्छेदकरूपस्य विशिष्टविषयस्य भेदो हि प्रकृतेऽवश्यं[6] वाच्यः, अन्यथा [7]स्वाभावविषयकज्ञानविषयकयोरुक्ताकारज्ञानयोर्विषयव्यक्तिभेदस्य वक्तुमशक्यत्वात्। न च ज्ञानस्याभाव इत्यत्र ज्ञानविरोधित्वविशिष्टभाव[8]स्वरूपं सम्बन्धः; ज्ञातोऽभाव इत्यत्र तु केवलं तत्स्वरूपमिति वाच्यम्; तथा कल्पने मानाभावात्, अन्यथा घटीयत्वादिविशिष्टतदविशिष्टतत्स्वरू[9]पाभ्यां भेदः किमिति न कल्प्यत इति भावः। **अतिरिक्तेति**। ज्ञानज्ञेयादिस्वरूपान्यो धर्मविशेष इत्यर्थः। **फलोपधानेति**।

[1] स्वीकरादिनौ-**ख.** [2] स्वस्य प्रतीतिजननं तदु-**ग.** [3] आत्मनो-**क. ग.** [4] इति व्याप्तिः-**क. ख.** [5] दुष्टम्-**क.** [6] प्रकृतेरवश्य-**क. ग.** [7] कारणभेदानुपपत्या स्वा-**ग.** [8] मभाव-**ग.** [9] घटीयत्वादिविशिष्ट तत्स्वरूपा-**ख.**

पत्तेः; प्रतीतिघटितस्य चाक्षुषादिप्रतीतावविषयत्वप्रसङ्गाच्च । तस्मात्सत्यत्वे सम्बन्धानुपपत्तेराध्यासिक एव दृग्दृश्ययोः सम्बन्ध इति ॥

इत्यद्वैतसिद्धौ प्रपञ्चसत्यत्वे दृग्दृश्यसम्बन्धभङ्गः ॥

## अथानुकूलतर्कनिरूपणम्

स्यादेतत्—सर्वस्यापि दृश्यस्य ब्रह्मात्मकदृगध्यस्तत्वेऽपि कस्यचित् कदाचित् किञ्चित् प्रति प्रकाशाय त्वयापि तत्तत्सन्निकृष्टेन्द्रियजन्यतत्तदाकारवृत्तिद्वारक एवानावृतदृक्सम्बन्धः स्वीकृतः, तथाच सत्यत्वेऽपि तद्द्वारक एव सम्बन्धोऽस्तु, किमा-

---

यत्तु—'ईश्वरेच्छायाः प्रभावेन स्वरूपयोग्यस्यापि नोपधायकत्वम्, अनुपधायकस्यापि स्वरूपयोग्यत्वे ईशस्येशत्वमेव मानम्' इति, तदहो पाण्डित्यं दर्शितम् । शिलादावप्यङ्कुरादिस्वरूपयोग्यत्वे तन्मानं किमिति नावोचः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय दृग्दृश्ययोगभञ्जनम् ॥

इति दृग्दृश्यसंबन्धभङ्गः ॥

## अथानुकूलतर्कनिरूपणम्

वृत्तिद्वारक इति । वृत्तिसापेक्ष इत्यर्थः । तद्द्वारक एवेति । स्वावच्छेदकतादृशवृत्तिविषयत्वमेवेत्यर्थः । ननु न वृत्तिद्वारकः सम्बन्धो नियामकः, किंतु तत्तत्पुरुषीयज्ञाने तत्तज्ज्ञेयानामाध्यासिकः सम्बन्ध

**ध्यासिकसम्बन्धदुर्व्यसनेन, न हि भवतां विज्ञानवादिनामिव तत्तज्ज्ञाने तत्तदर्थाध्यासस्वीकारः, शुद्धदृशः स्वतो भेदाभावात्, उपाधिविशिष्टाया भेदेऽपि घटादिवत्तस्या अपि मिथ्यात्वेनाधिष्ठानत्वायोगादिति—चेन्न; प्रकाशस्य साक्षात् स्वसंसृष्टप्रकाशकत्वनियमेन चैतन्यस्य परम्परासम्बन्धेन विषयप्रकाशकत्वायोगात्। न हि प्रदीपः परम्परासम्बद्धं प्रकाशयति;**

इत्याशङ्क्य जन्येषु तत्तत्पुरुषविज्ञानेषु तत्तद्विषयरूपाकाराध्यासवादिनां योगाचाराणामिदं सम्भवति, न त्वौपनिषदानां भवताम्। सर्वपुरुषसाधारणचैतन्यरूपज्ञानस्यैकत्वात्। वृत्त्यनपेक्षायां सर्वपुरुषं प्रति सर्वस्य सर्वदा भानापत्तेरित्याह—**न हीत्यादि। अधिष्ठानत्वायोगादिति।** अधिष्ठानत्वेऽपि वृत्तिद्वारकः सम्बन्ध आवश्यकः। अन्यथा वृत्तेः पूर्वमपि विषयभानं स्यादित्यपि बोध्यम्। दृष्टिसृष्टिमते अन्तःकरणोपहिते यस्मिंश्चैतन्ये यो विषयोऽध्यस्तः, स तेन भास्यत इति न वृत्त्यपेक्षा। किञ्चोपहितस्याधिष्ठानत्वेऽपि न क्षतिः, यदभिन्नमुपहितं तस्य शुद्धचैतन्यस्य सत्यत्वात्। अज्ञानविषयरूपाधिष्ठानकोटावनिवेशेऽप्युपाधेरधिष्ठानोपाधित्वसम्भवाच्च। अन्यथा शुक्त्याद्यवच्छिन्नं चैतन्यं रूपाद्यधिष्ठानं न स्यादिति[1] नायं दोष इत्यपि बोध्यम्। **प्रकाशस्य**—आलोकचैतन्यान्यतरस्य। **साक्षात् स्वसंसृष्टप्रकाशकत्वेति।** स्वकीयसाक्षात्सम्बन्धाश्रये कार्यविशेषप्रयोजकत्वेत्यर्थः। **परम्परेति।** वृत्तिविशेषद्वारकेत्यर्थः। **प्रकाशयति** स्वप्रयोज्यकार्यविशेषभाजं करोति। तथाच चैतन्यं साक्षात्सम्बन्धे[2] कार्यविशेषप्रयोजकम्, प्रकाशत्वात्, दीपवत्, इत्यनुमानाल्लाघवतर्कसचिवात् चैतन्यस्य विषये साक्षादेव सम्बन्धः। यथा हि दीपः संयोगरूपसाक्षात्सम्बन्धेन घटादौ विद्यमानो

[1] रूपाद्यधिष्ठानं स्यादिति—क. [2] सम्बन्धेन—ग.

**अतो विषयाधिष्ठानचैतन्यमनावृतमेव प्रकाशकम्, आवरणभङ्गश्च वृत्त्या; अतो वृत्तेः पूर्वमाध्यासिकसम्बन्धे विद्यमानेऽपि दृश्याऽ-**

दीपेन घटः प्रकाशत इत्यादिव्यवहारे विषयतया प्रयोजकोऽन्धकार-निवृत्त्यादिकार्यं जनयति च, न तु स्वक्रियाजन्यसंयोगादिरूपपरम्परा-सम्बन्धेन, गौरवात्; तथा चैतन्यं तादात्म्यरूपसाक्षात्सम्बन्धेन घटो भातीत्यादिव्यवहारे विषयतया प्रयोजकम्, प्रवृत्त्यादिकार्यं जनयति च, न तु वृत्तिविशेषद्वारकसम्बन्धेन, गौरवादिति भावः। ननु-- चैत-न्यस्य तादात्म्यं वृत्तेः पूर्वमप्यस्तीति तदाप्युक्तकार्यापत्तिः। अथ आवरणनाशविशिष्टं तादात्म्यं प्रयोजकं वाच्यम्, तर्हि वृत्तिरेवावरण-नाशस्तद्धेतुर्वेति सैव प्रयोजिकोच्यतां किं तादात्म्येनेत्यत आह— **अतो विषयेति। प्रकाशम्** उक्तकार्यप्रयोजकम्। **आवरणभङ्ग इति।** क्वचिद्विषय इत्यादिः। तथाच भातीति व्यवहारप्रवृत्त्यादि-कार्येषु वृत्तिमात्रं न प्रयोजकम्, अनुमित्यादेस्तत्त्वासम्भवात्। नापी-न्द्रियजन्या वृत्तिरभानापादकावरणनाशादिरूपा तथा; तस्या अनै-न्द्रियकाविद्यामनस्सुखादावभावात्। न ह्यविद्यादौ संस्काराद्यर्थं स्वी-क्रियमाणापि वृत्तिरिन्द्रियजन्या; चक्षुराद्ययोग्ये साक्षिमात्रभास्यत्व-सम्भवेन मनसोऽप्यप्रवृत्तेः, किंत्वविद्यापरिणामरूपा॥

न च चाक्षुषादिवृत्ताविव तस्यामपि साक्षात्कारत्वमङ्गीकृत्य साक्षात्कारवृत्तिः प्रयोजिकोच्यताम्, अविद्यादौ वृत्त्यनङ्गीकारपक्षे साक्षिण्यपि साक्षात्कारत्वमङ्गीकृत्य तदाश्रय एव तथोच्यतामिति— वाच्यम्; साक्षात्कारत्वजातावेव मानाभावात्। आद्यपक्षे कार्यमात्र-वृत्तितादृशजात्यवच्छिन्नेऽनुगतकारणासम्भवात्। नानाकारणकल्पने गौर-वात्। द्वितीये पक्षे तु साक्षिणो विषये तादात्म्यं सम्बन्धः, चाक्षुषादि-वृत्तेस्तु सम्बन्धान्तरमिति, नैकेन सम्बन्धेन प्रयोजकत्वसम्भवः। न हि

भातीत्यनुगतव्यवहारो भानस्यैकत्र तादात्म्येनान्यत्रान्यसम्बन्धेनेति युक्तम्। न वाऽविद्यादौ तस्य तादात्म्यमन्यत्रान्यसम्बन्धः प्रवृत्त्यादिप्रयोजक इत्यपि युक्तम् ॥

अतो लाघवाद्विषयनिष्ठं[1] स्फुरणमेवोक्तकार्ये प्रयोजकम् । विषयतासम्बन्धेन तत्पुरुषीयप्रवृत्त्यादिकं प्रति तादात्म्येन तत्पुरुषीयस्फुरणस्य हेतुत्वसम्भवात् । उक्तस्फुरणं च वृत्तेरावरणनाशार्थत्वपक्षे तत्पुरुषीयाज्ञानस्य विषयतावच्छेदकत्वाभाववद्विषयतादात्म्यवच्चैतन्यम् । यदि चैकमेवाज्ञानमिति वृत्त्या न तन्नाशः किंतु तस्य स्वकार्याक्षमत्वम्, तदा तत्पुरुषीयवृत्त्यविषयनिष्ठं यदज्ञानविषयतावच्छेदकत्वं तदभाववद्विषयतादात्म्यवच्चैतन्यं तत् । यदि च वृत्तेर्जीवोपरागार्थत्वं जीवाभेदाभिव्यक्त्यर्थत्वं वा, तदा तन्मनोऽवच्छिन्नचिदभिन्नं सत्तन्मनोऽवच्छिन्नजीवोपरक्तविषयतादात्म्यवच्चैतन्यं तन्मनोऽवच्छिन्नजीवस्य स्फुरणम् । उपरक्तत्वं च सुखादिविषये प्रतिबिम्बवत्त्वम्, घटादिविषये [2] प्रतिबिम्बवद्वृत्तिविषयत्वम्, अन्यतरत्वेनाखण्डेन तयोर्निवेशान्नाननुगमगौरवे । परोक्षवृत्तिमात्रेण रूपादेः स्फुरणवारणायाभिन्नमित्यन्तम् । रूपादिमात्रविषयकापरोक्षवृत्त्या रसादिचैतन्यस्यापि तन्मनोऽवच्छिन्नचिदभेदसम्पादनात्तदानीं रसादेरपि स्फुरणं स्यात्, अतोऽन्त्यदळम् । सर्वत्राभावस्य स्वरूपतो निवेशान्न गौरवम् । उक्तस्फुरणं च भात्यादेरर्थः, तत्प्रयोजकं चैतन्यं साक्षात्कारार्थः, तत्पुरुषीयस्यासत्त्वापादकाज्ञानस्य विषयतानवच्छेदकत्वप्रयोजकं चैतन्यं जानात्यर्थः । तच्च वृत्त्याद्यवच्छिन्नं चैतन्यमुक्तप्रयोज्यरूपं फलमादाय विषयस्य तत्कर्मता बोध्या । विस्तरेण चेदमेतत्प्रकरणसमाप्तिस्थले वक्ष्यतेऽस्माभिः ॥

यदि चैकमेवाज्ञानमतस्तस्य न वृत्त्या नाशः, सुखादावस्य[3]

[1] निष्ठस्फुरणमेव—ग. [2] स्वप्रतिबिम्ब. [3] सुखादावप्य—ग.

**प्रतीतिरुपपन्ना । अत एव–वृत्तिप्रतिबिम्बितचैतन्यस्य घटप्रकाशकत्वे आध्यासिकसम्बन्धस्यातन्त्रतापातः, घटाभिव्यक्तचैत-**

विद्यावृत्तिश्च, तदा तत्पुरुषीयवृत्त्यवच्छेदकविषयतादात्म्यवच्चैतन्यं तत्पुरुषीयस्फुरणम्, तत्पुरुषीयवृत्तिविषयतादात्म्यवच्चैतन्यप्रयोजकं चैतन्यं तत्पुरुषीयज्ञानम्, चक्षुरादिसन्निकर्षजन्यवृत्तेर्विद्यमानसुखादिविषयिकाया अविद्यावृत्तेश्च स्वविषयावच्छिन्नत्वं स्वकारणाधीनम्; विनिगमकाभावेन विषयतासम्बन्धेनेवावच्छेदकतासम्बन्धेनापि वृत्तेः सन्निकर्षकार्यत्वात्, सुखादिविषयकवृत्तित्वेनेव सुखाद्यवच्छिन्नत्वेनाप्यविद्यावृत्तेः कार्यत्वाच्च । अज्ञानविषयतावच्छेदकत्वाभावोऽज्ञानविषयतातदवच्छेदकत्वान्यतराभावो निवेश्यः, तेन वृत्त्यभावकाले ब्रह्माणि जानामीति न व्यवहारः । शुद्धचिदवच्छिन्नवृत्तित्वेनापि शाब्दवृत्तेः कार्यत्वस्य विनिगमनाविरहेण स्वीकाराच्चरममते ब्रह्म भातीत्यादिव्यवहारः[1] । संशयरूपाविद्यावृत्तिविषये भातीतिव्यवहाराभावेन निश्चयवृत्तिनिवेशावश्यकत्वात् । भ्रमत्वेन गृह्यमाणवृत्तेश्चानिश्चयत्वान्निदिध्यासनात्पूर्वं ब्रह्म भ भातीत्यस्य नापत्तिः । एवं च भातीत्यादिव्यवहारसामान्येऽनुगतविषयकत्वोपपत्तिः, भान[2]ज्ञानस्वरूपस्यैकत्वात् । वृत्तिभान[3]त्वादिस्वीकारे तु सा न, न ह्येकविषयकत्वे सम्भवति एकजातीयकत्वमुचितम् । "यत्साक्षादपरोक्षाद्ब्रह्म" —"विज्ञानमानन्दं ब्रह्म" "अयमात्मा ब्रह्म सर्वानुभूः इत्यादिश्रुतिश्चोपपद्यते । शाखा चलतीत्यादाविव शाखाऽस्ति भातीत्यादावपि चैतन्यरूपयोस्सत्ताभानयोस्तादात्म्यमाख्यातार्थः । वृत्तिविषयत्वस्य तत्कल्पने[4] तु गौरवमिति भावः । **अत एवेति ।** अनावृताधिष्ठानचितः प्रकाशकत्वादेवेत्यर्थः । **अतन्त्रतापात इति ।** प्रति-

[1] अयंकोष्ठान्तर्गतः पाठः. क. पुस्तके नास्ति. [2] भान ग. [3] वृत्तिभान– ग. [4] तत्कल्पने–ग.

**न्यस्य घटप्रकाशकत्वे आवश्यकेन वृत्तिप्रतिबिम्बितचैतन्येनैव घटप्रकाशकत्वोपपत्तौ तदधिष्ठानचिदभिव्यक्तिकल्पनायोग इति निरस्तम्; परोक्षविलक्षणस्फुटतरव्यवहारार्थं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनाया युक्तत्वात्। नच—शुद्धचैतन्यस्य चरमसाक्षात्कारात्पूर्वं नाभिव्यक्तिः; अभिव्यक्तस्य च घटाद्यवच्छिन्नचैतन्यस्य न तदधिष्ठानत्वम्, आत्माश्रयादिति—वाच्यम्; चरमसाक्षात्कारात्पूर्वमपि शुद्धचैतन्यस्याविद्यावशादधिष्ठानभूतस्य मूलाज्ञाननिवृत्तिलक्षणाभिव्यक्त्यभावेऽपि तदवस्थाविशेषादिनिवृत्तिलक्षणाभिव्यक्त्या विषयप्रकाशकत्वोपपत्तेः। न च—घटप्रकाशिकाया दृशो मिथ्यात्वे नाधिष्ठानत्वम्, सत्यत्वे दोषा-**

बिम्बितस्यानधिष्ठानत्वादिति शेषः। **घटाभिव्यक्तेति**। घटावच्छेदेनाभिव्यक्तेत्यर्थः। **आवश्यकेनेति**। वृत्तेः स्वच्छतया तत्र चित्प्रतिबिम्ब आवश्यकः। तस्य च स्वावच्छेदकवृत्तिविषयत्वसम्बन्धेन[1] प्रकाशकत्वमिति[2] भावः। नन्वभिव्यक्तिं विनापि परोक्षज्ञानस्य प्रकाशकत्वात्तत्र न तस्या उपयोगस्तत्राह— **परोक्षेति**। स्फुटतरा भातीत्यादिरूपः। **युक्तत्वादिति**। अन्यथा चित्प्रतिबिम्बस्योक्तसम्बन्धेन परोक्षस्थलेऽपि सत्वादुक्तव्यवहारापत्तेरिति शेषः। **तदधिष्ठानत्वं** तदुपादानत्वम्। तथा च स्वोपहितचैतन्यस्य घटादावधिष्ठानत्वे स्वस्य स्वस्मिन् प्रयोजकत्वादात्माश्रय इति भावः। **शुद्धेति**। घटाद्यनुपहितेत्यर्थः। **अविद्यावशादधिष्ठानेति**। ब्रह्मण उपादानत्वपक्षेऽविद्यासहिततयोपादानेत्यर्थः। सहितत्वं चाविद्याया अप्युपादानत्वादविद्योपहितस्य ब्रह्मण एवोपादानत्वादविद्योपहितजीवचैतन्यस्योपादानत्वाद्वेति पक्षत्रयस्यापि सङ्ग्रहः। **विशेषादीत्यादिना**—मनोऽनवच्छेद[3]प्रयुक्तस्य चिन्निष्ठभेदस्य ग्रहणम्। तथाच मूलाज्ञानसत्वेऽपि घटादिविषये तद-

[1] सम्बन्धे-**क.** [2] प्रकाशत्वमिति-**क. ख.** [3] मनोवच्छेद-**ग.**

**जन्यत्वेन प्रमात्वात् सत्यं स्वविषयं प्रति नाधिष्ठानत्वमित्युभयत स्पाशा रज्जुरिति—वाच्यम्; यतो दोषाजन्यत्वं न प्रमात्वप्रयोजकम्, चैतन्यस्य सर्वत्र दोषाजन्यत्वात्; किंतु दोषाजन्यवृत्त्यवच्छिन्नत्वम्; प्रकृते च तदभावान्न विषयस्य सत्यत्वम्। अतो मिथ्याभूतविषयं प्रत्यधिष्ठानत्वं सत्याया दृशो युक्तम्। ननु तात्त्विकसम्बन्धासम्भवे आध्यासिकसम्बन्धकल्पनम्; स एव तु कुतः? कृप्तसंयोगबाधे गुणगुणिनोः समवायवत्तदुभयबाधे तृतीयस्य सम्भवात्, नच तत्र मानाभावः; समवायवदनुमाध्यक्षयोः**

---

वच्छेदकत्वाभावादुक्तरीत्या चित्प्रकाशिकेति भावः। **प्रमात्वादिति।** प्रमाविषयत्वेनेति शेषः। **प्रकृते चेति।** घटादिप्रकाशकदृशि चेत्यर्थः। **तदभावादिति।** अविद्याया घटादिप्रयोजकत्वात्तदाकारवृत्तावपि दोषविधया निमित्तकारणत्वम्। अत एव ब्रह्मणा दोषाप्रयुक्तत्वेन तदाकारवृत्तिर्नाविद्यादोषनिमित्तिका। दोषाप्रयुक्तविषयकत्वमबाधितविषयकत्वपर्यवसन्नं वा प्रकृते वृत्तर्दोषाजन्यत्वमिति भावः॥

यत्त्वधिष्ठानस्य प्रकाशकत्वेऽपि वृत्तिप्रतिबिम्बचैतन्यस्य तदभिव्यञ्जकत्वं वाच्यम्. तथाच तदेव प्रकाशकमस्तु, तेनैव च स्फुटतरत्वव्यवहारोऽस्त्विति. तन्न; वृत्तेरावरणं प्रति नाशकत्वान्नाशत्वाद्वा। यथाच तस्याः प्रकाशकत्वासम्भवस्तथा विवृतत्वात्। यदपि मूलाज्ञानं चैतन्यमावृणोति न वा, अन्त्ये न तत्सिद्धिः; आवरणार्थमेव तत्स्वीकारात्। आद्ये अवस्थाज्ञानस्य वृत्त्या निवृत्तावपि मूलाज्ञानसत्त्वे कथं घटादेः प्रकाश इति, तदपि समाहितम्। मूलाज्ञानस्य घटादाववच्छेदकत्वाभावात्। शुद्धचित्यनवच्छिन्नविषयताया:सत्त्वेऽप्युक्तरीत्या घटादिप्रकाशसम्भवात्। यदपि दोषाजन्यत्वं घटादिवृत्तेरपि, अविद्याया दोषत्वे विवादात्, सम्भावितदोषान्तराणां च तदजनकत्वा-

**सत्त्वात् । तथाहि परस्परासंयुक्तासमवेतविशेषणविशेष्यकाविशिष्टधीः, विशेषणविशेष्यसम्बन्ध(विशिष्ट)विषया, विशिष्टधीत्वात्, दण्डीति विशिष्टधीवत्; उक्ता जन्यप्रमा, विशेषणविशेष्यसम्बन्धनिमित्तिका, अबाधितजन्यविशिष्टधीत्वात्, सम्मतवत्; विमता धीः, अबाधितविशेषणविशेष्यसम्बन्धविषया, अबाधि-**

---

दिति, तदपि तुच्छम्; यत्र हि मिथ्यात्वं सम्भावितं तदाकारवृत्तेरपि जनको दोषः सम्भावित एवेति मिथ्यात्वेन विप्रतिपन्ने घटादौ वृत्तिर्दोषजन्येति[1] कथं त्वया निरणायि । तदनिर्णये च तादृशप्रमाविषयत्वेन कथं सत्यत्वमनुमीयते । दोषाजन्यत्वं च तद्योग्यतारूपं दोषाप्रयुक्तविषयकत्वादीत्युक्तम् ॥

**विशिष्टधीरिति** । ज्ञातो घट इत्याद्याकारिका धीरित्यर्थः । **विशेषणविशेष्यसम्बन्धविशिष्टविषयेति** । ज्ञानघटाद्योर्विषयताभ्यां निरूपिता या किञ्चिन्निष्ठविषयता तद्वतीत्यर्थः । तेन ज्ञानघटादिसम्बन्धस्यानुमानात्पूर्वमसिद्धत्वेऽपि न क्षतिः । न वा ज्ञानज्ञानत्वादिसम्बन्धविषयकत्वमादाय सिद्धसाधनम् । संयोगसमवायविषयकत्वमादायार्थान्तरवारणाय विशेष्यकान्तम् । परस्परमसंयुक्तमसमवेतं[2] च यद्विशेषणविशेष्यं तद्विषयकेत्यर्थः । संयोगसमवायनिष्ठा या ज्ञाननिष्ठविषयतानिरूपितसांसर्गिकविषयता तच्छून्येति पर्यवसितम् । तादृशसांसर्गिकविषयता च संयोगादिना ज्ञानभ्रमे प्रसिद्धा । एवं च परस्परासंयुक्तत्वादिनिर्णयस्य संयोगादिविषयकत्वसिद्ध्यनिवारकत्वेऽपि न क्षतिः । न चैवं—ज्ञानघटादिस्वरूपस्य पक्षीभूतबुद्ध्यविषयस्य कस्यचिद्वा संसर्गतामादायार्थान्तरमिति वाच्यम्; स्वस्य स्वप्रतियोगिकत्वासम्भवेन[3] तत्तद्बुद्ध्यविषयस्य च तत्त्वेनैव तन्निष्ठसांसर्गिकविषयत्वस्य

[1] दोषाजन्येति–क. ख. ग. [2] मसंयुक्तसमवेतं–ग. [3] द्यसम्भेवन–ग.

**तविशिष्टधीत्वात्, दण्डीति विशिष्टधीवत्; गोमांश्चैत्र इत्यादेरपि पक्षकुक्षिनिवेश[1] एवेति न तत्र व्यभिचाराशङ्का। तथाच संयोगसमवायातिरिक्तसम्बन्धसिद्धिरिति—चेन्न; प्रथमे द्वितीये चार्थान्तरम्; आध्यासिकसम्बन्धस्यैव विषयत्वेन निमित्तत्वेन चोपपत्तेः। द्वितीये परोक्षधीषु व्यभिचारश्च। तृतीये ब्रह्मज्ञानपर्यन्ताबाधितत्वेन सिद्धसाधनमेव। सर्वथा अबाधितधीविषयत्वे**

बाधात्। **विशिष्टधीत्वात्** सप्रकारकत्वात्, निर्विकल्पानङ्गीकारे धीत्वात्। **दण्डीति**। दण्डज्ञानयोर्विशिष्टधीपक्षतायां संयोगेन दण्डविशिष्टज्ञानमिति भ्रमो दृष्टान्तः। यत्वतत्वयोरनुगतत्वे तु यदुभयविशेष्यविशेषणकं यत् तत्तदुभयविषयताभ्यां निरूपितकिञ्चिन्निष्ठसांसर्गिकविषयताकमिति सामान्यतो व्याप्तौ, दण्डी पुरुष इति प्रमापि दृष्टान्तः सम्भवति। **विशेषणविशेष्यसम्बन्धनिमित्तिका** स्वीयविशेष्यविशेषणताश्रयनिरूपितसम्बन्धेन विषयविधया जन्या। तेन संयोगज्ञानयोर्विशिष्टबुद्धौ संयोगादिजन्यत्वान्न सिद्धसाधनम्, न वा कालोपाधिविषया[2] जन्यत्वमादायार्थान्तरम्। अत्र स्वत्वाननुगमात्साध्याप्रसिद्धिः। न च संयोगसमवायस्वरूपसम्बन्धानिमित्तकत्वेन[3] पक्षविशेषणेऽपि सामान्यतः स्वविशेष्यविशेषणसम्बन्धनिमित्तकत्वेन पक्ष एव सन्देहरूपा प्रसिद्धिरिति वाच्यम्; तत्सन्देहहेतो तत्सामानाधिकरण्यसन्देहस्याप्यौचित्यावर्जितत्वेन व्याप्तयनिश्चयात्तावतापि दृष्टान्ते साध्यवैकल्याच्चेति दूषणं स्फुटत्वादुपेक्ष्य दूषणान्तरमाह—**प्रथमे द्वितीये चेति। व्यभिचारश्चेति**। न च लौकिकापरोक्षत्वस्य हेतौ निवेश्यत्वान्न व्यभिचार इति वाच्यम्; सम्बन्धांशे तन्निवेशे ज्ञाता घट इति चाक्षुषादिप्रमायां स्वरूपासिद्धिबाधयोरापत्तेः। किञ्चिदंशे तन्नि-

1 निक्षेप. 2 विधया—ग. 3 त्वे—क.

**साध्ये साध्यवैकल्यम् । न च—तात्विकसम्बन्धबाधे आध्यासिकसम्बन्धसिद्धिः, तथाच संयोगसमवायातिरिक्ततात्विकसम्बन्धबाधपर्यन्तं नाध्यासिकसम्बन्धसम्भावना, तथाच कथमर्थान्तरासिद्धसाधनसाध्यवैकल्यानीति—वाच्यम्; तात्विकसम्बन्ध-**

---

वेशे च सम्बन्धांशे परोक्षे व्यभिचारस्तदवस्थः, पक्षतावच्छेदके लौकिकमानसापरोक्षत्वनिवेशे च चाक्षुषादिप्रमायां साध्यासिद्धिः, [1]अस्मन्मते आश्रयासिद्धिश्चेति बोध्यम् । **कथं तात्विक इति ।** ननु—स्वसम्बन्धिसमसत्ताकसम्बन्धविषयत्वं[2] साध्यम्, अतो बाधितसम्बन्धमादाय नार्थान्तरादीति चेन्न; यत्किञ्चित्स्वसम्बन्धिसमसत्ताकत्व[3]निवेशे अर्थान्तरादितादवस्थ्यात् । ज्ञेयस्य व्यावहारिकप्रातीतिकान्यतरत्वात् । अथ यावत्स्वसम्बन्धि[4]समसत्ताकत्वं निवेश्यम्, ज्ञानस्य सम्बन्धिनः सत्यत्वेन सत्यः सम्बन्धः सिध्यतीति—चेन्न; ज्ञानज्ञेयोभयसमसत्ताकाप्रसिद्धेः, उपहितचैतन्यस्य ज्ञानत्वेनासत्यत्वादर्थान्तराद्यनुद्धाराच्च । स्वपदार्थस्याननुगतत्वेन दृष्टान्तीयसम्बन्धरूपत्वे बाधात्, पक्षीयसम्बन्धरूपत्वे साध्यवैकल्यात् ॥

यत्तु अविप्रकर्षस्य सम्बन्धव्यापकत्वे निश्चिते तन्निवृत्त्या पक्षे साध्याभावसिद्धिः, तस्यां च सत्यां व्यभिचारशङ्काविरहसिद्ध्या तस्य तद्व्यापकत्वनिश्चय इत्यन्योन्याश्रयादविप्रकृष्टानामपि सपत्नीनां सम्बन्धाभावाद्विप्रकृष्टानामपि गोगोमदादीनां सम्बन्धसत्वाच्च, तर्काभावात्तस्य तद्व्यापकत्वं न निश्चेतुं शक्यत इति—तन्न; सम्बन्धो यदि विप्रकृष्टयोः स्यात्, तदा हिमवद्विन्ध्ययोरपि स्यात् । तथाच भ्रममात्रोच्छेद इत्याद्यनुकूलतर्केण पूर्वोक्तेनाविप्रकर्षस्य सम्बन्धव्यापकतानिश्चयेन व्यभिचारसंश्रयस्या[5]प्रयोजकत्वेनान्योन्याश्रयानवकाशात् ।

[1] अस्मिन्मते ख. [2] विषयत्वं—ग. [3] सम्बन्धिसत्ताक—क.ख. [4] ससम्बन्धि—ख. [5] संशयस्य—क.ग.

अन्यथा जलादौ गन्धादिसंशये तद्व्यापकतया पृथिवीत्वादेरनिश्चयेन तदभावेन तत्र गन्धाद्यभावसिद्धिर्न स्यात् । सपत्नीनां सम्बन्धस्य संयोगस्य सत्वे विप्रकर्षाभावोऽस्त्येव[1] । गोगोमदादीनां च सम्बन्धो नास्त्येव । अत एव ध्वंसादेः प्रतियोग्यादिना न सम्बन्ध इत्यादि वक्ष्यते । न चाविप्रकर्षसत्वेऽपि सम्बन्धाभावात् सम्बन्धवि[2]प्रकर्षयोर्वक्ष्यमाणं समव्यापकत्वं व्याहतमिति—वाच्यम्; अविप्रकर्षे सति सम्बन्धस्यावश्यकत्वात् । न हि समानदेशत्वादिकमविप्रकर्षः ; एकद्वीपवर्तिनां भिन्नकालीनानां मिथः सम्बन्धापत्तेः ॥

नन्वेवं—सम्बन्धसामान्यं नाऽविप्रकर्षः; परम्परासम्बन्धस्य निश्चयात्, साक्षात्सम्बन्धस्य सन्दिग्धत्वात्तदभावेनानिश्चितेन सम्बन्धाभावसिद्ध्यसम्भवात्; अत एव साक्षात्सम्बन्धोऽपि न सः । तथाच तदभावेनासम्बन्धसिद्ध्युक्तिरयुक्तेति--चेन्न; तदीयायां कालिकसम्बन्धेनाधिकरणतायामवच्छेदकत्वं हि तदविप्रकर्षस्तदीयसाक्षात्सम्बन्धव्यापकः, तदभावश्च ज्ञानज्ञेयादिस्थले निश्चितः । तथाहि—यदवच्छेदेन कालिकसम्बन्धेन, यद्वत्ताऽनुभूयते तत्रैव तस्य दैशिकसाक्षात्सम्बन्धोऽप्यनुभूयते । अत एव भूतलकपालाद्यवच्छेदेन घटादिकालिकाधिकरणत्वानुभवात्तत्रैव संयोगादिस्तादृशः सम्बन्धोऽङ्गीक्रियते, न तु मरुविन्ध्ययोः । अन्यथा ज्ञानातीतादिविषययोरिव तयोरपि तादृशसम्बन्धं किं न रोचयेः । यथा च तयोरेकावच्छेदेनापरस्य न कालिकाधिकरणत्वम्, तथा अतीतादिविषयावच्छेदेन ज्ञानस्य प्रतियोग्यवच्छेदेन ध्वंसस्य स्वाम्याद्यवच्छेदेन गवादेरपीत्यतीतादौ तादृशावच्छेदकत्वाभावनिश्चयेन तादृशसम्बन्धाभावसिद्धिः । किञ्च यथा अतीतादिकं न ज्ञानादिमत्वे कालिकेऽवच्छेदकम्, ज्ञानाद्यधिकरणकालासम्बन्धात्, तथा अतीतादिनिष्ठस्य ज्ञानादिसम्बन्धस्य ज्ञानादिमत्काले नावच्छेदकः,

1 प्यस्त्येव–ग. 2 सम्बन्धाविप्र–क.ग.

**स्य व्यापकानुपलब्ध्या बाधात् । तथा हि--तात्त्विकसम्बन्धस्य व्यापको देशकालविप्रकर्षाभावः । स चातीतादिविषयकज्ञाना- दीनां नास्त्येवेति कथं तात्त्विकस्तेषां सम्बन्धः । न च--- समवायवत् सम्बन्ध्यभावविप्रकर्षाद्यविरुद्धत्वेनैव तत्सिद्धि-**

---

अतीताद्यसम्बन्धात् । न ह्यवच्छेद्याधिकरणासम्बद्धमप्यवच्छेदकम्, न वा घटत्वादिसम्बन्ध इव स कालान[1]वच्छिन्नः ; इदानीमेव तज्ज्ञान- मिति प्रतीतेः । ज्ञानत्वाज्ञानत्व[2]योर्विरुद्धयोः कालभेदावच्छेदेनैवोप- पाद्यत्वाच्च । तथाच ज्ञानादिमत्कालावच्छिन्नसम्बन्धसामान्याभावेन ज्ञानादिसम्बन्धाभावः सिध्यति । यो हि यत्सम्बन्धवान् स तद्वत्कालाव- च्छिन्नसम्बन्धवान्, यथा भूतलादिकं घटादिसंयुक्तं घटादिकालाव- च्छिन्नघटादिसम्बन्धकम् । भिन्नकालीनयोर्ज्ञानज्ञेयादिभिन्नयोरपि सम्ब- न्धापत्तिर्विपक्ष बाधिका । न च—विषयताद्यन्यसम्बन्धमन्तर्भाव्यैवो- क्तनियमः, अन्यथा व्यभिचारापत्तिरिति---वाच्यम्; विषयतादिसम्ब- न्धस्य विप्रतिपन्नत्वेन व्यभिचारसंशयस्य सम्भवेप्युक्तव्यापकताग्राहक- तर्केण तदुच्छेदात् । न चातीतादेः सूक्ष्मरूपेण सत्वात्तत्र ज्ञानादि- सम्बन्धसम्भव इति—वाच्यम्; सूक्ष्मावस्थाया अतीतादिव्यक्तयत्यन्ताभेदे ज्ञानादिसमकालीनत्वासम्भवात्तद्भेदस्यापि वाच्यत्वेन अतीतादेर्ज्ञानभि- न्नकालीनत्वं तदवस्थमेव, ज्ञानज्ञेययोरपि सम्बन्धासम्भवात् । न च— विषयीभूतसूक्ष्मरूपतादात्म्यादतीतस्यापि विषयत्वकार्यमिति—वाच्यम् । विद्यमानघटादिज्ञानान्न[3] ध्वंसप्रागवस्थासु विषयत्वकार्यापत्तेः । सूक्ष्म- स्थूलावस्थयोरपि भिन्नकालीनत्वेन मिथ्यातादात्म्यस्यैव वाच्यत्वेन ज्ञाना तीतादिज्ञेययोरेव साक्षात्तस्य वरत्वादिति दिक् ॥

**समवायवदिति** । यथा समवायस्यैकत्वपक्षे श्यामत्वाद्यभाव-

---

[1] सकलान–ख.ग. [2] ज्ञातत्वाज्ञातत्वयोः–क.ख.ग. [3] जानात्तद्ध्वंस–ग.

**रिति— वाच्यम्; समवायस्यापि देशकालविप्रकृष्टयोः सम्बन्धव्यवहाराप्रयोजकत्वात्। नहि सम्बन्ध्यभावेऽपि सन् समवायोऽद्य नष्टं घटं श्वस्तनेन रूपेण विशिनष्टि। न चाध्यासिकत्वे सम्बन्धस्य साध्ये धर्मिग्राहकमानबाधः। विशिष्टबुद्धित्वेन प्रथमं तात्त्विकातात्त्विकसाधारणसम्बन्धत्वस्यैव सिद्धेः। किं च सम्ब-**

---

कालेऽपि श्यामत्वादितो[1] विप्रकृष्टेऽपि घटादौ तदीयः समवायः तथा ज्ञाने तदीया विषयतेत्यर्थः। अपिसन्नित्यनेन नानासमवायपक्ष एव श्रेयानिति सूचितम्। अन्यथा नष्टस्यापि वर्तमानकाले सम्बन्धसत्त्वेन विशिष्टप्रमा स्यात्, वाय्वादौ च रूपादिप्रमा स्यात्, तत्र तत्प्रतियोगिकसम्बन्धानुयोगित्वस्यैव तन्नियामकत्वात्। अथ यत्र समवायीयया रूपनिष्ठप्रतियोगितया निरूपिताऽनुयोगिता तत्र रूपप्रमा, सा चानुयोगिता न वाय्वादाविति, न तत्र तत्प्रमा; अत एव रूपे रूपसमवाये सत्यपि न सेति चेन्न; उक्तप्रतियोगितानुयोगितयोः प्रतियोग्यनुयोगिरूपत्वे वायौ तदापत्तरवारणात्कालिकसम्बन्धीयरूपात्मकप्रतियोगिताया एव समवायीयत्वात्, तन्निरूपितानुयोगितायां वायुस्वरूपत्वादतिरिक्तत्वे समवायस्यैव नानात्वौचित्यात्, रूपस्य तु स्वस्मिन्न प्रमापत्तिः, स्वभेदसामानाधिकरण्यसम्बन्धस्यैव प्रमानियामकत्वादिति भेदानुमान[2]विवेचने प्रपञ्चितमस्माभिः पूर्वम्। **विशिनष्टीति।** विशिष्टव्यवहारभाजं करोतीत्यर्थः[3]। तथाच समवायस्यैकत्वपक्षेऽपि यदा यस्य यत्र सम्बन्धस्तादृशस्तदा तयोरविप्रकर्ष इति नियमो न व्याहत इति भावः। ननु— सम्बन्धमात्रसिद्ध्युत्तरं स्वव्यापकाभावेन सत्यसम्बन्धस्याभावसाधने अतीतादाविव ज्ञानस्यासत्यसम्बन्धः स्यात्, न तु विद्यमाने, तत्र तस्याविप्रकर्षरूपव्यापकसत्त्वात्तत्राह— **किञ्चेति।**

---

[1] श्यामत्वादितो—ग [2] तायां—ग. [3] भेदाभेदानुमान—क.ग.

न्धग्राहक एव तात्विकसम्बन्धव्यापकानुपलब्धिरूपबाधसहकृतः आध्यासिकसम्बन्धे पर्यवस्यति। अतो न धर्मिग्राहकबाधशङ्कापि। न चैवं—युतसिद्धयोरेव संयोगरूपसम्बन्धदर्शनादयुतसिद्धिरपि [1]संयोगस्य बाधिका स्यादिति—वाच्यम्; (अ)युतसिद्धयोरपि क्वचित्सम्बन्धादर्शनेन युतसिद्धत्वस्य सम्बन्धाप्रयोजकत्वात्, यस्मिन् सत्यवश्यं सम्बन्धः स एव सम्बन्धस्य प्रयोजक इति समव्याप्तत्वाभावेन युतसिद्ध्यनुपलब्धेरबाधकत्वात्, यत्र सम्बन्धस्तत्रावश्यं युतसिद्धिरिति विषमव्याप्तिकल्पनेऽपि मानाभावात्, अनुकूलतर्कादर्शनात्, देशकालविप्रकर्षाभाववतां तु सर्वेषां सम्बन्धदर्शनेन विप्रकर्षे तददर्शनेन च समव्याप्ततया प्रयोजकस्य देशकालविप्रकर्षाभावस्यानुपलब्धेः सम्बन्धबाधकत्वस्यावश्यमङ्गीकरणीयत्वात्। नहि प्रयोजकाभावे प्रयोज्यसम्भवः। नन्वेवं—ध्वंसादेरतीतादिना, मिथ्यात्वलक्षणान्तर्गतस्यात्यन्ताभावस्य प्रतियोगिना, शक्तेः शक्येन, अज्ञानस्याज्ञेयेन, इच्छाया इष्यमाणेन, व्यवहारस्य व्यवहर्तव्येन, वाक्यस्यार्थेन, वृत्तिरूप-

विशिष्टबुद्धित्वाद्युक्तहेतुरिति शेषः। व्यापकानुपलब्धिरूपबाधेति। व्यापकस्याविप्रकर्षानुपलब्धिप्रमाणगम्याभावज्ञानाद्यो बाधः सत्यसम्बन्धाभावनिश्चयः स इत्यर्थः। ज्ञातो घट इत्यादिविशिष्टबुद्धिनिष्ठोक्तपक्षतावच्छेदकावच्छेदेन सम्बन्धव्याप्यवत्तानिश्चयादुक्ताभाव[2]-निश्चयसहकृतादुक्तपक्षतावच्छेदकावच्छेदेन सत्तान्यसम्बन्धसिद्धिः। अतो विद्यमानेऽपि ज्ञानस्यासत्यसम्बन्धसिद्धिः। न च—यद्धर्मावच्छेदेन साध्यसिद्धिस्तद्धर्मावच्छेदेनाक्ताभावनिश्चयापक्षति—वाच्यम्। नीलपर्वतो वह्न्यभाववानिति निश्चयान्नीलान्यपर्वतो वह्निमानित्य-

[1] समवायस्य [2] युक्ताभाव–ख.

ज्ञानस्य ज्ञेयेन, सम्बन्धो नेति त्वद्वाक्योक्तसम्बन्धाभावस्य ज्ञानेनासम्बन्धात् स्वन्यायस्वक्रियास्ववचनविरोधाः स्युः । न हि ज्ञाने ज्ञेयमिव प्रतियोग्यादिकमभावादावध्यस्तमिति—चेन्न; यद्यप्युक्तन्यायसाम्येन ध्वंसादीनां स्वप्रतियोग्यादिभिस्तात्त्विकः सम्बन्धो नास्त्येव, अध्यासोऽपि न ज्ञानज्ञेयन्यायेन, उभयोरपि मिथ्यात्वात्; तथापि प्रतीयमानं प्रतियोग्यनुयोगिभावादिकं सर्वथा न निराकुर्मः, किंतु तात्त्विकाध्यासाभ्यां भिन्नमेव ज्ञेयकुक्षिनिक्षिप्तत्वात् मिथ्याभूतमङ्गीकुर्मः । स च संयोगादिवदतिरिक्तो वा स्वरूपं वा पराङ्गीकृतपदार्थान्तर्गतो वा तदतिरिक्तो वेत्यस्यां काकदन्तपरीक्षायां न नो निर्बन्धः। न च—मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयः; दृक्दृश्यसम्बन्धानुपपत्त्या ज्ञेयमात्रस्याध्यासिकत्वे सिद्धे तन्मध्यपतितस्य प्रतियोग्यभावादिसम्बन्धस्यापि मिथ्यात्वम्, न तु प्रतियोग्यभावादिसम्बन्धमिथ्यात्वसिद्ध्यनन्तरं दृश्यमिथ्यात्व-

---

नुमितिवदुपपत्तेः, दृश्यत्वस्यापि दृश्यत्वादनवस्थेति वक्ष्यमाणतर्केण दृश्यमात्रस्य मिथ्यात्वसिद्धेश्चेति भावः । **अध्यासोऽपीति** । अधिष्ठानारोप्ययोस्तादात्म्यमपीत्यर्थः । **अतिरिक्तो वेति** । सम्बन्धिभ्यां भिन्नो वेत्यर्थः । **पदार्थान्तर्गत इति** । स्व[1]कारणसम्बन्धाश्रयत्वादिति[1] शेषः । विप्रकर्षस्य बाधकस्य सत्त्वेन सर्वेषु पक्षेषु सम्बन्धो न सत्य इति स्थिते नोक्तपक्षेष्वाग्रहः । एकस्याभिवानेकस्यामप्यनुपपत्तौ मिथ्यात्वस्य समाधायकत्वादित्याशयेनाह—इत्यस्यामिति **न तु प्रतियोगीति** । न च प्रतियोग्यनुयोगिभावादिसम्बन्धे मिथ्यात्वसंशये तत्रैव व्यभिचारसंशयेन सत्यसम्बन्धव्यापकत्वमविप्रकर्षे निश्चतुं

[1] स्वस्वकारण—क. ग. त्वादिरूपत्वादिति—क. ग.

**सिद्धिरिति व्यवहारोपयुक्तसम्बन्धसामान्यस्याप्रतिक्षेपान्न स्ववचनादिविरोधः । तदुक्तं खण्डनकृद्भिः—**

**बाधेऽदृढेऽन्यसाम्यात् किं**
**दृढे तदपि बाध्यताम् ।**
**क्व ममत्वं मुमुक्षूणा-**
**मनिर्वचनवादिनाम् ॥ इति ।**

**न चादृढत्वं बाधस्य; व्यापकानुपलब्धिरूपतर्कस्योक्तत्वात्, स्वक्रियादिविरोधरूपप्रतिकूलतर्कस्य परिहृतत्वाच्च । अत एव न**

शक्यत[1] इति—वाच्यम्; उक्तानुकूलतर्केण व्यापकतानिश्चयात् । अन्यथा पक्षावृत्त्युपाधौ साध्यव्यापकता न निश्चीयेतेति भावः । **बाधे इति** । विप्रकर्षहेतुकतात्त्विकसम्बन्धाभावानुमितेः सामग्र्यामित्यर्थः । **अदृढे इति** । अविप्रकर्षे तात्त्विकसम्बन्धव्यापकतानिश्चायकतर्कानवतारेणासम्पन्नायामित्यर्थः । **अन्यसाम्यात्किमिति** । ज्ञानज्ञेये, तात्त्विसम्बन्धयुक्ते, विशिष्टधीविषयत्वात्, प्रतियोग्यभावादिवदिति, सत्प्रतिपक्षपर्यवसन्नादन्यसाम्यघटितप्रतिप्रयोगात्परेषां किं फलं, न किमपीत्यर्थः । सम्पन्नायां ह्यनुमानसामग्र्यां प्रत्यनुमानसामग्री सत्प्रतिपक्षरूपा सफला । **दृढे** –उक्ततर्कावतारेण तस्यां सम्पन्नायां । **तदपि** साम्यप्रतियोग्यपि । **बाध्यतां**—प्रतियोग्यभावादावपि सत्यसम्बन्धाभावस्तथैव[2] सामग्र्या अनुमीयताम् । तर्कयुक्तायां तस्यां निस्तर्कोक्तसामग्र्या न्यूनबलवत्वेन सत्प्रतिपक्षत्वासम्भवादिति भावः । बाधे दृढइत्यत्र न्यायेऽदृढ[3] इति पाठकल्पनमहेतुकं,[4] खण्डनग्रन्थे तत्पाठाभावात् ।

[1] न शक्यत ग. [2] तथैव–क. [3] न्याये–दृ. ढ ख. ग. [4] नं तु हेयं ग.

**जातित्वादिसाम्यम्; तेन हि नियमसापेक्षानित्यत्वसाधककृतकत्वादौ नियमानपेक्ष्येण दर्शनमात्रेण रूपवत्त्वादिकमापाद्यते। न त्वस्माभिस्तथानियमनिरपेक्षेण साहचर्यमात्रेण किंचिदापाद्यते। न चैवं—ज्ञानज्ञेययोरपि प्रतियोग्यभावादिसमकक्ष्य एव सम्ब-**

**नियमेति** नियमग्राहकतर्केत्यर्थः। **दर्शनेति**। सहचारदर्शनेत्यर्थः। **रूपवत्वादिकं**—रूपादिसाधकत्वम्। **समकक्ष्य इति**। अधिष्ठानारोप्ययोर्यः सम्बन्धस्तदन्य इत्यर्थः। विशेष्यविशेषणजातीययोर्विप्रकर्षाभावो विशिष्टधीप्रमात्वव्यापकः स्वाभावेन तस्यां प्रमात्वाभावं साधयति. स च विनिगमकाभावाद्यद्यपि विशेषणविशेष्यसम्बन्धानां मिथ्यात्वमादाय पर्यवस्यति, तथापि ज्ञानज्ञेययोर्विशिष्टबुद्धौ ज्ञानस्य स्वरूपेणानुवृत्तत्वसत्यत्वादिग्राहकमानबले[1]नाधिष्ठानत्वात्संसृष्टतयैव मिथ्यात्वम्, सन् घटः घटः सन्, ज्ञातो घटः घटस्य ज्ञानम्, घटः स्फुरति घटस्य स्फुरणमिति द्व्याकारानुभवैः परस्परावच्छेदेन ज्ञानज्ञेयविषयीकरणात् परस्परावच्छेदेनाध्यासश्च। घटो नश्यति गोमांश्चैत्र इत्यादौ तूक्तहेत्वभावात् घटतन्नाशाद्योः स्वरूपेणापि मिथ्यात्वम्, परस्परावच्छेदेनाध्यासाभावश्च। न हि घटादिकं नाशाद्यनुवृत्तत्वादिमदित्यत्र मानमस्ति। न वा परस्परावच्छेदेन घटतन्नाशादिकं गोतत्स्वाम्यादिकं वानुभूयते। अपि तु प्रतियोग्युपलक्षिते चैतन्ये नाशादिकम्, गवाद्यवच्छेदेन चैत्रादिस्वत्वम्। अथावच्छेदकीभूतस्य चिच्चैत्यसम्बन्धस्य विशेष्यत्वस्याभावात् कथं घटादेर्विशेष्यत्वेन व्यवहार इति—चेत्, चैतन्यविशेष्यत्वस्य तादृशस्य तत्राभावेऽपि वृत्तिविशेष्यत्वभावात्, उपलक्षणीभूतचिच्चैत्यसम्बन्धस्यापि विशेष्यतारूपत्वाद्वा, घटाद्यवच्छेदेन ध्वंसादेरनध्यासेऽपि प्रतियोगितादिरूपसम्बन्धाध्यासाद्वा। अत एव घटोत्यन्ता-

[1] मानबलेना–ग.

न्धोऽस्त्विति वाच्यम्; परस्पराध्यासात्मकसम्बन्धासम्भवेनैव सम्बन्धान्तरकल्पनात्, तत्सम्भवे तस्यैव सम्बन्धत्वात्। न चाज्ञानविषयस्य ब्रह्मणो विषयिण्यज्ञानेऽनध्यासेन विषयस्य विषयिण्यध्यासनियमो न सिद्ध इति वाच्यम्; एवं नियमानभ्युपगमात्, किंतु ज्ञानाज्ञानयोरध्यास एव विषयेण सम्बन्धः। स च ज्ञाने ज्ञेयस्य अज्ञेये चाज्ञानस्याध्यासादुपपद्यते। अत एवाध्यासिकसम्बन्धव्यतिरेकप्रदर्शने अज्ञानस्याज्ञेयेनेत्यनुदाहरणम्। ननु श्रवणादीनां चरमसाक्षात्कारान्तानां स्वविषयेण ब्रह्मणा सम्बन्धानुपपत्तिः, न हि श्रवणादौ साक्षात्कारे वा ब्रह्माऽध्यस्तमिति—चेन्न; साक्षात्कारो हि वृत्तिर्वा, तदभिव्यक्तचैतन्यं वा।

---

भावीयः, चैत्रो गोमान्, इत्यादावपि घटचैत्रादेर्विशेष्यत्वम्, तदवच्छेदेन प्रतियोगितास्वामित्वाद्यध्यासादित्याभिप्रेत्याह—**परस्पराध्यासात्मकेति**। विशेष्यविशेषणयोः परम्परावच्छिन्नमिथ्यातादात्म्यात्मकेत्यर्थः॥

**ज्ञानाज्ञानयोरिति**। इच्छादेर्विषयेऽध्यासो न सम्बन्ध इति विषये विषयिणोऽध्यासः सम्बन्ध इति नोक्तम्। **अध्यास इति**। अधिष्ठानारोप्यगतः सम्बन्ध इत्यर्थः, स च तादात्म्यं घटो ज्ञातो घटः स्फुरतीत्यादिसामानाधिकरण्यानुभवात् ज्ञानाज्ञानयोर्विषयं प्रत्यधिष्ठानारोप्यान्यतरत्वमिति पर्यवसितार्थः। अज्ञानतद्विषयशुद्धचितोर्न परस्परावच्छेदेनाध्यासोऽननुभवात्। कार्याध्यासस्थल एव तथा स्वीकारात्। अन्यथा अवच्छेदकीभूतचित्सम्बन्धरूपविशेष्यताशालित्वेनाज्ञानाध्यासस्य सविकल्पकतापत्त्या सुषुप्तानुभवत्वहान्यापत्तेः, अतो ज्ञानाज्ञानयोः परस्पराध्यासो[1] नोक्तमिति ध्येयम्। स्वप्रकाशचैतन्ये आवरकाज्ञानस्यानुपपन्नत्वात् ज्ञेयान्तर इवाज्ञानेऽपि दृश्यत्वे तत्रापि दृश्यत्वमित्येवमनवस्था। [2]अतश्चाज्ञाने दृश्यत्वानुपपत्तेरज्ञानचित्सम्बन्धोऽ-

[1] विषयेणेति-ग. [2] ततश्चा-ग.

आद्ये तस्याः ब्रह्मण्यध्यस्तत्वेनाज्ञानाज्ञेययोरिव सम्बन्धोपपत्तेः। अत एव श्रवणादिनापि मानसक्रियारूपेण न सम्बन्धानुपपत्तिः। द्वितीये तु अभेदेन सम्बन्धानुपयोगात्तत्सम्बन्धानुपपत्तिर्न दोषाय। अत एव—चरमसाक्षात्कारस्य ब्रह्मण्यध्यस्तत्वात् यदि तद्विषयत्वम्, तदा घटसाक्षात्कारस्यापि ब्रह्मण्यध्यस्तत्वात् तद्विषयत्वापत्तिरिति—निरस्तम्; घटसाक्षात्कारस्य घटाभिव्यक्तचैतन्यरूपत्वे ब्रह्मण्यनध्यासात्, वृत्तिरूपत्वे तस्याः ब्रह्मण्यध्यासेऽपि नाधिष्ठानभूतब्रह्मणो विषयत्वम्; ब्रह्मविषयताप्रयोजकस्याध्यासविशेषस्य तत्राभावात्, तस्य च फलबलकल्प्यत्वात्। न हि चरमवृत्तौ ब्रह्माकारतावदत्राऽपि साऽनुभूयते। इच्छेष्यमाणयोस्तु ज्ञानद्वारक एव सम्बन्ध इति न पृथक्सम्ब-

---

प्यध्यास इति भावः। तस्या इति। तयोर्पहितचैतन्यस्यापि शुद्धचित्यध्यस्तत्वाद्ब्रह्म जानामीत्यादिव्यवहार इत्यपि बोध्यम्। अभिव्यक्त्युपलक्षिताखण्डचिता ब्रह्मणोऽत्यन्ताभेदाज्जानामीत्यादिव्यवहाराविषयत्वाच्चासम्बन्धो न दोषायेत्याह—द्वितीय इति। अध्यासविशेषस्य—अहं ब्रह्मेत्यादिवाक्यघटितशाब्दधीसामग्रीजन्यवृत्तिनिष्ठस्य ब्रह्मतादात्म्यस्य। तथा च तादृशसामग्र्येव शुद्धब्रह्माकारतायां वृत्तिनिष्ठायां नियामिकेति भावः। फलबलेति—यादृशसामग्रीजन्यवृत्तेरज्ञाननिवृत्त्यादिफलं दृश्यते तस्या एव तत्त्वं कल्प्यत इति भावः। अनुभवबलमप्याह—न हीत्यादि। ब्रह्म साक्षात्करोमीत्यनुभवो घटादिवृत्तौ नेत्यर्थः। अविप्रकर्षस्य सम्बन्धव्यापकत्वे इच्छायाः स्वविषयेण सम्बन्धो न स्यात्ततो विप्रकृष्टेऽपि विषये इच्छाया इव ज्ञानस्यापि सम्बन्ध इति परस्परपूर्वमाशङ्कितं प्रतियोगिध्वंसादिन्यायेन परिहृतमपि प्रकारान्तरेण परिहरति—इच्छेष्यमाणयोरिति। ज्ञानद्वारक इति। स्वोपधायकज्ञान-

**न्धापेक्षा। न च—ज्ञाने सन्निकर्षाधीनस्येव स्मृतावनुभवाधीनस्येवेच्छायां ज्ञानाधीनस्य विषयसम्बन्धस्यानुभवात् सन्निकर्षादिभ्यो भिन्न इव ज्ञानाद्भिन्न एव सम्बन्धो वक्तव्य इति—वाच्यम्; सम्बन्धानुभवस्य ज्ञानद्वारकसम्बन्धेनाप्युपपत्तेरतिरिक्तसम्बन्धकल्पने मानाभावात्, ज्ञानाधीनसम्बन्धान्तरस्याननुभवात्। ज्ञाने त्विन्द्रियसन्निकर्षादिना न सम्बन्धानुभवोपपत्तिः; इन्द्रियसन्निकर्षादीनामतीन्द्रियत्वेन तेषामनुमित्यादिना उपस्थितिं विनैव घटज्ञानमित्यादिसम्बन्धानुभवात्। स्मृतौ तु अनुभवाधीनसम्बन्धस्य शङ्कैव नास्ति; अनुभवस्य तदानीम-**

विषयत्वरूप इत्यर्थः। तथा च नेच्छासम्बन्धो दृष्टान्तो ज्ञानसम्बन्धस्यैव तत्वादिति भावः। **ज्ञानाद्भिन्नो** ज्ञानाघटित। नन्वेवं—ज्ञानस्याप्युपधायकसन्निकर्षादिद्वारकः सम्बन्धोऽस्तु, नाध्यासिकतादात्म्यं तत्राह—**ज्ञाने त्वित्यादि**। ज्ञानेन्द्रिय[1]सन्निकर्षादिघटितस्य विषयसम्बन्धस्यानुभवो न सम्भवतीत्यर्थः। इन्द्रियसन्निकर्षादिघटितस्य सम्बन्धस्य केवलस्य[2] साक्षियोग्यत्वात् ज्ञातत्वाज्ञातत्वाभ्यां[3] साक्षिभास्यता सम्भवति, न तु घटसम्बन्धिज्ञानवानहमित्येवं रूपेण ताभ्यां विनेत्याशयेनाह—**इन्द्रियसन्निकर्षादीनामिति। अनुमित्यादिनेति।** आदिना प्रत्यक्षादिसङ्ग्रहः। प्रत्यक्षेणोपस्थित्यभावे हेतुः[4] **अतीन्द्रियत्वेनेति।** व्याप्तिज्ञानाद्यभावस्याप्युपलक्षणम्। **उपस्थितिमिति।** ज्ञाततामित्यर्थः। अज्ञाततां विनेत्युपलक्ष्यते। **सम्बन्धेति।** घटादिसम्बन्धिज्ञानेत्यर्थः। **अनुभवाधीनसम्बन्धस्य** अनुभवद्वारकसम्बन्धस्य स्वोपधायकानुभवविषयत्वस्येति यावत्। **असत्वादिति।**

[1] ज्ञाने इन्द्रिय-**ग.** [2] केवलसाक्षि-**ग.** [3] त्वाज्ञातत्वाभ्यां-**ग.** [4] भावो हेतुः-**क. ख.**

**सत्त्वात्; उभयोरपि ज्ञानत्वेन तुल्यवदेव सम्बन्धसंभवाच्च। न च—समूहालम्बनजन्यैकविषयेच्छायामुभयविषयत्वापत्तिः; जनकज्ञानस्योभयविषयत्वादिति— वाच्यम्; अतिरिक्तसम्बन्धपक्षेऽपि तुल्यत्वात्। अथैकविषयावच्छेदेनैव ज्ञानस्य जनकत्वात् नोभयविषयत्वं, समं ममाऽपि; जनकज्ञाने जनकतावच्छेदकविषयत्व-**

---

तथा चानुभवस्य स्वोपधायकत्वमेव नास्तीत्यर्थः। स्वोपधायकसंस्कारोपधायकानुभवविषयं तु सन्निकर्षघटितसम्बन्धन्यायेन दुष्टमिति भावः। ननु स्वोपधायकज्ञानघटितरूपेण न सम्बन्धता; उपधायकत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेनाननुगतत्वात्, किं तु स्वसमानाधिकरणीयं यद्घटत्वाद्यवच्छिन्नविषयत्वं तत्वेन; तथा चोपधायकतावच्छेदकस्य तत्तदाकारज्ञानरूपवृत्त्यवच्छिन्नत्वादेरभावेऽपि इच्छोत्पत्त्यादिक्षणे समानाधिकरणं साक्षिचैतन्यं यथेच्छायाः सम्बन्धघटकं तथा स्मृतेरप्यस्तु तत्राह—**उभयोरिति**। **समूहालम्बनेति**। घट इष्टसाधनं पटः प्रमेय इत्यादिज्ञानेत्यर्थः। **एकविषयकेति**। घटादिविषयकेत्यर्थः। **उभयेति**। घटपटाद्युभयेत्यर्थः। **तुल्यत्वादिति**। ज्ञानविषयतामात्रस्येच्छाविषयताप्रयोजकत्वाङ्गीकारे तवापि तुल्यत्वादित्यर्थः। इष्टसाधनत्वप्रकारतानिरूपितविशेष्यतया तज्ज्ञानमिच्छाविषयत्वे मम प्रयोजकमतो न दोष इति शङ्कते—**अथेति**। **जनकतावच्छेदकेति**। इष्टसाधनत्वप्रकारतानिरूपिता तज्ज्ञानविशेष्यतयैव[1] तदिच्छाया जनकतावच्छेदक[2]सम्बन्ध इति तदाश्रयमादायैव तस्यां सविषयकत्वव्यवहारः, इच्छान्तरेऽप्यवच्छिन्नमनोऽवच्छिन्नं[3] वा यादृशं विषयत्वं जनकतावच्छेदकं तादृशमेव

[1] ष्यतैव. [2] दिका—क. ख. ग. [3] प्यवच्छिन्नं वा यादृशं—क. प्यवच्छिन्नमनवाच्छिन्नं वा यादृशं—ग.

तस्य सम्बन्ध इति, स्वप्रयोजकविषयतात्वेन सर्वस्या इच्छायाः ज्ञानीयं विषयत्वं स्वविषयत्व[1]व्यवहारनियामकम् ॥

न च तत्सम्बन्धेनेच्छां प्रति ज्ञानकारणता न सम्भवति[2], आत्माश्रयादिति वाच्यम्; प्रयोजकतायाः कारणतावच्छेदकसाधारण्येन कारणतान्यत्वात्, तद्विषयकज्ञानस्य स्वसामानाधिकरण्यादिविशिष्टेच्छां प्रति समवायेन कारणत्वे दोषाभावाच्च । सर्वविषयेष्विच्छाविरहेण विषयान्तर्भावापेक्षया पुरुषनिवेशे लाघवाभावात् । न चोक्तरूपेणेच्छायाः कार्यत्वे स्वप्रयोजकविषयतात्वेनेच्छायां सविषयकत्वव्यवहारनियामकत्वे च गौरवमिति–वाच्यम्; तदपेक्षयापि तव तत्तद्विषयकत्वादिविशिष्टज्ञानत्वेन ज्ञानस्य स्वकार्यानुमितीच्छादिहेतुतायां महागौरवात्, कारणतावच्छेदके ज्ञानत्वसमानाधिकरणं यावन्निविष्टं तावद्भिर्ज्ञानत्वस्य विशेष्यविशेषणभावे विनिगमकाभावात् । मम तु सविषयकत्वादिकमेव ज्ञानत्वाविशेषितं तत्र हेतुतावच्छेदकमिति तद्भावात्[3] । न च–तवापि विशेषणतावच्छेदकप्रकारकत्वेनेच्छादीनां हेतुत्वासम्भवाद्विषयोपहितेच्छादिप्रत्यक्षे पृथक् हेतुत्वे गौरवमिति–वाच्यम्; विशिष्टवैशिष्ट्यप्रत्यक्षे सन्निकर्षादीनामेव हेतुत्वेनोक्तरूपेण हेतुत्वस्यैवानङ्गीकारात्, विशेषणतावच्छेदकप्रकारताप्रयोज्यत्वेनेच्छादिसाधारण्येन मम हेतुत्वान्तरकल्पनेऽपि तदपेक्षया तवोक्तगौरवस्याधिकत्वात् । एवं ज्ञानत्वजातौ[4] सविषयकत्वमात्रस्य व्यञ्जकत्वादिसम्भवादपि मे लाघवात् । न चेष्टसाधनत्वेऽपि स्वप्रयोजकविषयतासत्वादिच्छाविषयतापत्तिः, इष्टसाधनताव्यावृत्तविषयतानिवेशे यत्रेष्टसाधनत्वविशेषितघटादाविष्टसाधनत्वज्ञानादिच्छा तत्रेष्टसाधनत्वे तद्विषयता न स्यादिति–वाच्यम्; यादृशविषयत्वस्याश्रये

[1] स्वविषयकत्व-ग. [2] कारणता सम्भति–ग. [3] तदभावात्-क. ग.
[4] ज्ञानजातौ–क. ख.

**स्यैव सम्बन्धत्वात् । न च—नित्येश्वरेच्छाया विषयत्वसम्बन्धा-**

---

यदिच्छाविषयत्वव्यवहारः स्वप्रयोजकतादृशविषयत्वस्येच्छासम्बन्धत्वात् । एवं च जनकज्ञानं तद्विषयत्वं वा नेच्छाया विषयत्वम्; समूहालम्बनादिनातिप्रसङ्गात् ॥

अथ यद्विषयकत्वेन ज्ञानस्येच्छोत्पादकत्वं तद्विषयकज्ञानं तद्विषयत्वम्; तर्हीच्छायाः सर्वविषयकत्वं न स्यात्, सर्वविषयकत्वेनेच्छानुत्पादकत्वात्स्याच्च सुखादीच्छाया अपि दुःखाभावादिविषयकत्वम् । अथ—यद्विषयकज्ञानस्य स्वसमानाधिकरणयद्विषयकत्वव्यवहारविषयेच्छासमयाव्यवहितपूर्वसमये तादृशेच्छासमये वा नियमतः सत्त्वं तद्विषयकं ज्ञानमेव[1] तादृशेच्छाविषयत्वम्, सुवचश्च महाप्रलयाव्यवहितपूर्वक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितः पूर्वः समय इति चेत्, तर्हि पाकादीच्छाया इष्टसाधनत्वविषयत्वं[2] स्यात्, न स्याच्च कृतेः पाकादिविषयकत्वम्, तदव्यवहितपूर्वक्षणे पाकादिज्ञानान्तरे मानाभावात्, कृत्यादिविषयत्वस्य तथैव निर्वाच्यत्वात्; स्याच्चेच्छायाः कृत्युत्पादसमये निर्विषयत्वम् । अथ—इच्छानन्तरं तादृशं ज्ञानं[3] कृतिस्तदनन्तरं तादृशं ज्ञानान्तरम् । अथवा युगपदात्मगुणद्वयमुत्पाद्यत इत्युपेत्य कृत्युत्पत्तिसमये नियमतस्तादृशं ज्ञानान्तरं कल्प्यमिति—चेत्; तर्हि स्वतः सविषयकत्वमेवेच्छादावुचितम्, लाघवात्, बाधकाभावात्, संस्कारे गत्यन्तराभावाच्चेति, बौद्धाधिकारशिरोमण्युक्तम्, तन्मूलकमन्य[4]प्रलपितं चानवकाशम् । मन्मते हि वृत्त्यनवच्छिन्नादि[5]चिद्रूपं यज्ज्ञानं तदीयतादात्म्यरूपस्य विषयत्वस्य वृत्त्युपरमेऽपि सत्त्वेन यद्विषयकज्ञानस्येत्यादिरीत्याऽपीच्छासंस्कारादिविषयतारूपत्वं सम्भवत्येव।

[1] तादृशेत्यादिज्ञानमेवेत्यन्तः पाठः क पुस्तके नास्ति. [2] विषयकत्वं-ग.
[3] तादृशज्ञानं-ग. [4] मन्यत्र-ग. [5] वृत्त्यवच्छिन्न-ग.

**नुपपत्तिः; तस्या अस्माभिरनङ्गीकारात्। तार्किकाणामपि तत्साधकमानबलेन विलक्षणसम्बन्धकल्पनेऽपि जन्यज्ञानजन्येच्छयोरुक्तप्रकारेणैव विषयताभ्युपगमात्। न च—पुत्रादिधीजन्यसुखादेः पुत्रादिविषयत्वापत्तिः, इच्छान्यायादिति—वाच्यम्;**

---

लाघवबाधकाभावौ चोक्तगौरवेण परिहृतावेव। **अनङ्गीकारादिति।** 'सोऽकामयत' इत्यादिश्रुतेच्छाङ्गीकारेऽपि वीक्षणवत्तस्या मायापरिणामत्वादिति शेषः। **विलक्षणेति।** जन्येच्छाविषयतातो विलक्षणेत्यर्थः। तस्या इत्यनुषज्यते। **सम्बन्धेति।** विषयसम्बन्धेत्यर्थः। अन्यमात्रे[1] ज्ञानेच्छाकृतिमत्त्वरूपकर्तृताया अनुमानादिबलेन सिद्धौ लाघवाज्ज्ञानादीनां नित्यत्वस्यापि सिद्धिस्वीकारात्। ज्ञानीयविषयत्वस्येच्छादिप्रयोजकत्वासम्भवात्, स्वसमानाधिकरणज्ञानीयं घटत्वावच्छिन्नत्वादिविषयत्वमिच्छाया विषयसम्बन्धोऽङ्गीक्रियते। अत एव क्षितिः, सकर्तृका, कार्यत्वात्, घटवत्, इत्यनुमाने स्वविषयकज्ञानं तत्सामानाधिकरण्यसम्बन्धेन स्वविशिष्टेच्छाकृतिमत्वं चेति त्रयविशिष्टजन्यत्वमेव साध्यम्। न च—घटज्ञानघटेच्छादिमत्यप्युक्तविषयत्वसत्वा[2]त्तादृशस्यापि कुलालादेर्घटादिहेतुत्वापत्तिरिति—वाच्यम्; जन्यजनकभावापन्नज्ञानादिमत्वेन हेतुत्वेऽपि साध्ये तद्रूपेणाविनिवेशेऽपि क्षत्यभावात्, जन्यजनकभावापन्नं यज्जन्यं तदन्यज्ञानादेः साध्ये[3] निवेशादीश्वरसाधारण्याय तद्रूत्वेनैव हेतुत्वाद्वा। **उक्तप्रकारेणैवेति।** प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयतेति विषयतालक्षणे बौद्धाधिकारीये हि स्वत इच्छादीनां विषयतानिरासाय प्रकाशस्येत्युक्तमिति वर्धमानादयः। उक्तं चान्यत्रापि तार्किकैः 'याचितमण्डनन्यायेन विषयत्वमिच्छादे' रिति॥

---

[1] जन्यमात्रे—ग. [2] प्युक्तसत्वा—क.ख. [3] साध्यनिवेशात्—ग.

**वैषम्यात् । ज्ञानस्य समानत्वेऽपि इच्छादावेव सविषयत्वप्रतीति-र्न तु सुखादौ वस्तुस्वाभाव्यात्, त्वयाप्यस्यैवार्थस्य वक्तव्य-त्वात् । अन्यथा स्फटिके जपाकुसुमसन्निधानाल्लौहित्यवल्लोष्टेऽप्यापद्येत । अथ धर्मे तात्पर्यस्यानध्यासात्तात्पर्यसम्बन्धो न स्यात्, न; तात्पर्यं हि तत्प्रतीत्युद्देश्यकत्वम्, प्रतीतेश्च ज्ञेयान्तरेणेव धर्मेणापि सम्बन्धोऽध्यास एव, प्रतीतिद्वारा च धर्म-तात्पर्ययोः सम्बन्ध इत्यनुपपत्त्यभावात् । न च—ज्ञानस्य**

---

वस्तुतस्तु प्रयोजकत्वमनिवेश्य स्वसम्बन्धिघटत्वावच्छिन्नादि-विषयत्वं नित्येच्छादिसाधारणं सम्भवतीच्छादेर्विषयेण सम्बन्धः । यथा हि संयोगत्वादिना रूपेण संयोगादिः स्वसमवेत एव द्रव्यादेः सम्बन्धो न तु कालिकादिना स्वप्रत्यासन्नोऽपि स्वासमवेतः[1], न वा समवायेन प्रत्यासन्नोऽपि विभागादिः, तथा स्वसंम्बन्धिघटा[2]द्यवच्छिन्नादिविषयत्वं तच्छालिज्ञानजन्येच्छादेरेव सम्बन्ध इति नातिप्रसङ्गः, न वा प्रयोजकत्वादिनिवेशप्रयुक्तोक्तदोषः । स्वसम्बन्धित्वं च स्वसमान-कालीनत्वं विषयत्वे स्वप्रत्यासन्नतालाभाय वाच्यमेव । अतएव 'किञ्चि-देव विषयत्वं कस्यचिदिच्छादेः सम्बन्धः किं सर्वेच्छादिसाधारणानु-गतसम्बन्धतावच्छेदकानिरूपणेने' त्युक्तशिरोमणिवाक्योत्तरमाशङ्कितमिति ध्येयम् ॥

आपद्येतेति । अनुभूयेतेत्यर्थः । लौहित्यमित्यादिः । लोष्टे लौहित्याननुभवात्तन्निष्ठः स्वाश्रयसंयोगो न लौहित्यस्य सम्बन्ध इति त्वया वाच्यं चेत्, तर्हि मन्मतेऽपीच्छादेरेवोक्तः सम्बन्धो न सुखादे-रननुभवात् । यन्मते स्फटिके लौहित्यभ्रमस्तन्मतेऽपि लोष्टे तदननु-भवाद्यथा न तत्सामग्री कल्प्यते तथा सुखादौ सविषयकत्वव्यवहारा-

---

[1] समवेतः—ग.　[2] घटत्वा.

**प्रकाशत्वेन प्रदीपसाम्येऽप्यान्तरत्वेन तद्वैलक्षण्यमङ्गीकर्तव्यम्, अत इच्छादिवद्विप्रकृष्टेनापि सम्बन्धः स्यात्, अन्यथा प्रदीपवदेवाध्यासिकसम्बन्धोऽपि न स्यात्, परोक्षवृत्तौ विप्रकृष्टसम्बन्धदर्शनाच्चेति—वाच्यम्; देशकालविप्रकर्षाभावस्य सम्बन्धसामान्यप्रयोजकत्वे सम्भवत्यान्तरप्रतियोगिकसम्बन्धभिन्नसम्बन्ध एवास्य प्रयोजकत्वमिति कल्पनाबीजाभावात्। इच्छायास्तु नेष्यमाणेन साक्षात्सम्बन्धः, किंतु ज्ञानद्वारकः परम्परासम्बन्ध एवेत्युक्तम्। परोक्षस्थले तु यद्यप्यधिष्ठानचैतन्येन साक्षादेव सम्बन्धः; तथापि विषयाकारवृत्त्या साक्षात्सम्बन्धाभावात् वृत्त्यवच्छिन्नचैतन्येन विषयस्य परम्परासम्बन्ध एव। ननु—**

---

भावात्तादृशव्यवहारसामग्री न कल्प्यते। तथाच सुखादौ तादृशज्ञानजन्यतासत्वेऽपि न तस्याः सविषयकत्वपदार्थता कल्प्यते। तादृशजन्यताश्रयः सुखमिति व्यवहारस्त्विष्ट इति भावः। यदि च ज्ञानस्येवेच्छादेरपि स्वत एव विषयत्वमिति परस्याग्रहः, तथापि न नः क्षतिः; ध्वंसादेरिव तस्यापि तादृशसम्बन्धस्य सत्यत्वाभावात्तद्दृष्टान्तेन ज्ञानसम्बन्धसत्यत्वस्य वक्तुमशक्यत्वादिति ध्येयम्। **साक्षादेवेति।** एतेन—यत्र चैतन्ये विषयोऽध्यस्तस्तदेव वृत्त्यवच्छिन्नं सत् ज्ञानमिति ज्ञानस्य विषयेऽध्यास एव सम्बन्ध इति नियमो न व्याहत इति वक्ष्यमाणं सूचितम्। **वृत्त्या साक्षादित्यादि।** प्रत्यक्षवृत्त्या विषयस्यावच्छेदकतारूपसाक्षात्सम्बन्धात् तदवच्छिन्नचैतन्यस्यापि साक्षात्सम्बन्धः। परोक्षवृत्त्या तदभावात्तदवच्छिन्नचैतन्यस्यापि न स इति स्वावच्छेदकवृत्त्याकाररूपपरम्परासम्बन्ध एव वाच्य इति भावः॥

न च वृत्तिविषयतादात्म्यापन्नचैतन्यमेव ज्ञानमस्तु, तथा च तस्याधिष्ठानत्वाद्विषये साक्षात्सम्बन्ध एव लभ्यत इति—वाच्यम्;

**तवापि मते ज्ञेयस्य न स्वज्ञानेऽध्यस्तत्वनियमः; अनध्यस्तस्य तुच्छस्य पञ्चमप्रकारत्वपक्षे अविद्यानिवृत्तेः भावाद्वैतपक्षे अभावस्य दृग्रूपत्वेऽपि स्वज्ञानेऽनध्यासात्, अपरोक्षैकरसे ब्रह्मण्यध्यस्तस्य व्यावहारिकस्यातीतादेर्नित्यातीन्द्रियस्य च परोक्षानुभवरूपे स्वज्ञानेऽनध्यासात्, स्मर्यमाणस्य च स्मृतिरूपे स्वज्ञानेऽनध्यासात्, प्रातिभासिकस्य च प्रातिभासिके स्वज्ञानेऽनध्यासात्, त्वन्मते भ्रमरूपज्ञानस्यापि कल्पितत्वादिति—चेत्, नैवम्; तुच्छस्याज्ञेयत्वेन ज्ञाने अध्यासाभावात्, ज्ञेयस्य हि**

तथा सति पुरुषान्तरीयवृत्तिमादायापि घटे निर्वृत्तिकपुरुषस्य अहं घटं जानामीति व्यवहारापत्तेः। स्वतादात्म्याश्रयविषयकवृत्तिसम्बन्धेन ज्ञानस्योक्तव्यवहारविषयत्वे परम्परासम्बन्धद्वयनिवेशे गौरवात्। चैतन्येनाविशेषिता विशेषिता वा[1] वृत्तिस्तु न ज्ञानमननुगतत्वादित्युक्तम्। ज्ञानविषययोरध्याससम्बन्धानुरोधादुक्तव्यवहारे परम्परासम्बन्धद्वयभानमपि युक्तम्। इच्छादिकारणतादिकं तु घटाद्याकारवृत्तेर्घटाद्यवच्छिन्नस्याज्ञानाभावस्य वेति नोक्तसम्बन्धद्वयप्रवेशे गौरवमिति तु विभावनीयम्। न चैवम्—कालिकसम्बन्धेन वृत्तिनिष्ठचैतन्यमेव ज्ञाधातुवाच्यमस्तु लाघवादिति वाच्यम्, येन हि घटाद्याकारवृत्तिर्न ज्ञायते तेन घटो ज्ञात इति पुरुषानन्तर्भावेनापि न व्यवह्रियते। यदि त्वसत्त्वापादकाज्ञानविषयतानवच्छेदकतादात्म्यापन्नं चैतन्यं ज्ञानं, यस्य प्रमातुर्घटादिवृत्तिर्न जाता तत्प्रमातरि[2] तादृशविशिष्टचैतन्यं नास्ति, उक्तानवच्छेदकत्वरूपविशेषणाभावादित्युच्यते; तदा प्रत्यक्षस्येव परोक्षस्याध्यासरूपः साक्षादेव ज्ञानस्य सम्बन्ध इति ध्येयम्॥

**ज्ञेयस्य हीति।** ज्ञेयत्वं चैतन्यरूपज्ञानतादात्म्ययोग्यत्वं सद-

1 चैतन्येनाविशेषिता वा.—क. ग. 2 प्रमातुरेतादृश—ग.

ज्ञानेऽध्यासः, तुच्छस्य तु न ज्ञेयतेत्यग्रे वक्ष्यते । पञ्चमप्रकाराविद्यानिवृत्तेरपि प्रतियोग्यधिकरणे ध्वंसस्यापि[1] तत्र वृत्तेरवश्यम्भावादध्यास एव सम्बन्धः । वस्तुतस्तु अविद्यानिवृत्तेः पञ्चमप्रकारत्वं च भावाद्वैतं चानभ्युपगमपराहतम् । यथा चाविद्यानिवृत्तेर्ब्रह्मरूपत्वं सर्वाद्वैतं च तथोपरिष्टाद्वक्ष्यते । अपरोक्षैकरसे ब्रह्मण्यध्यस्तस्यातीतादेरनुमित्यादिरूपज्ञाने अनध्यासेऽपि यस्मिंश्चैतन्ये तदध्यस्तं तदेव चैतन्यमनुमित्यादिरूपवृत्त्यवच्छिन्नमिति

साद्विलक्षणत्वम् । **प्रतियोग्यधिकरण इति** । सतीति शेषः । **तत्र**—प्रतियोग्यधिकरणे । कपालनाशजन्यघटादिनाशे व्यभिचारात्सत्यन्तम् । **अध्यास एवेति** । न च विशेषणताख्यसम्बन्धेन ध्वंसश्चैतन्ये वर्तते न तादात्म्येनेति—वाच्यम्; भट्टमते ह्यभावस्य तादात्म्यमेवाधिकरणे सम्बन्ध इति कुसुमाञ्जलिवाक्ये ज्ञापितं मिथ्यात्वानुमान इत्यस्मन्मतेऽपि तथा स्वीकारात्, दृक्तादात्म्यं विना स्फुरत्यविद्यावृत्तिरीति[2] व्यवहारासम्भवाच्च । अविद्याध्वंसस्य तादात्म्यरूपाध्यास एव चैतन्ये सम्बन्ध इति भावः । वस्तुतस्तु अविद्याध्वंसः स्वरूपेण पञ्चमप्रकारोऽनध्यस्तोऽपि ज्ञानाविषयत्वान्न ज्ञेयः, तथा भावाद्वैतमते प्रपञ्चाभावोऽपि स्वरूपेण चैतन्येऽनध्यस्तोऽपि न ज्ञेयः, कार्यत्वाद्देशसम्बन्धाच्च तुच्छविलक्षणः । अविद्यानिवृत्तित्वप्रपञ्चाभावात्वादिमिथ्याघटितरूपेण त्वविद्यादशायामविद्याध्वंसादयो ज्ञेया अध्यस्ताश्च । अथ स्वरूपेण ज्ञेयत्वं विना व्यवहार्यं न स्यादिति—चेन्न; चैतन्यसम्बन्धरूपज्ञेयत्वं विनापि तदाकारवृत्तिमात्रेण तुच्छवद्व्यवहारोपपत्तेः ॥

**तदेवेति** । ब्रह्मणि घटादिविषयाणां वृत्तेश्चाध्यासाद्घटाद्यधिष्ठानस्य वृत्त्यवच्छिन्नत्वं, जीवचैतन्यस्य जगदुपादानत्वपक्षेऽप्येवम् ।

1 ध्वंसस्येव. 2 निवृत्तिरीति—क. ख. ग.

**नाध्यासानुपपत्तिः । अतिप्रसङ्गपरिहारार्थं चैतन्यस्य विषयसम्बन्धे वृत्त्युपरागापेक्षायामपि नाधिष्ठानत्वेन तदपेक्षा । एवमेव नित्यपरोक्षस्थले स्मृतिस्थलेऽपि प्रातिभासिकस्य प्रातिभासिक्यां वृत्तावनध्यासेऽप्यधिष्ठानविषयकवृत्त्यभिव्यक्तचैतन्य एवाध्यास इति न काप्यनुपपत्तिः । न च–रूप्यादिकमिदमंशावच्छिन्नचैतन्येऽध्यस्तम्, भास्यते च अविद्यावृत्तिप्रतिबिम्बितचैतन्येनेति विषयिणि ज्ञाने विषयस्याध्यासः कथमिति–वाच्यम्; एकाव-**

---

तथाच यत्र विषयोऽध्यस्तस्तस्य ज्ञानत्वनियमो न तु ज्ञानत्वोपहितस्य विषयाधिष्ठानत्वनियमः; प्रत्यक्षस्थले(ऽपि) तदभावात् । यद्यपि जीवस्यैवान्तःकरणतद्धर्मोपादानत्वं ब्रह्मणस्तु घटाद्युपादानत्वमिति पक्षे ब्रह्मणो ([1]वृत्तितादात्म्यरूपावच्छिन्नत्वाभावात् । परोक्षभ्रमविषयीभूतरजताद्युपादानशुक्त्याद्यवच्छिन्नचैतन्ये तादृशरजतादिविषयकाविद्या)वृत्तितादात्म्यरूपावच्छिन्नत्वस्याभावात् । तद्भावे साक्षिसम्बन्धेन तादृशरजतादेरपरोक्षत्वापातान्नोक्तोऽपि नियमः, तथापि यत्र विषयोऽध्यस्तस्तस्य वृत्त्यवच्छिन्नचैतन्याभेदनियमो न व्याहतः, ब्रह्मणो वृत्तितादात्म्यवज्जीवाभिन्नत्वात् । ([2]शुक्त्यवच्छिन्नादिरूपचैतन्यस्याप्यविद्यापारिणामवृत्तितादात्म्यवज्जीवाभिन्नत्वात्) । वृत्तिविषयतादात्म्यवच्चैतन्यस्यासत्वापादकाज्ञानानवच्छेदकविषयतादात्म्यवच्चैतन्यस्य वा ज्ञानरूपत्वे त्वधिष्ठानस्य ज्ञानत्वनियमे नानुपपत्तिः । प्रमातरि तत्सम्बन्धस्तु यथासम्भवं वाच्य इति दिक् ॥

**अतिप्रसङ्गेति** । वृत्त्यभावकालेऽपि घटं जानामीति व्यवहाराद्यापत्तीत्यर्थः । **चैतन्यस्य** वृत्तीत्यत्र सम्बन्धः । **विषयसम्बन्ध**

1 2अयं कुण्डलितः पाठः ख पुस्तके न दृश्यते.

**च्छिन्न एवापरावच्छेदेन निरपेक्षोपाधेरिवात्र भेदकत्वाभावात्। अतएवाभियुक्तैः फलैक्यादैक्यं ज्ञानस्योच्यते। नच-रूप्यादेः स्वज्ञानेऽध्यस्तत्वे रूप्यज्ञानस्याज्ञाने भ्रमोत्पत्तिः तज्ज्ञानेन तन्निवृत्तिरिति च स्यात्, अधिष्ठानाज्ञानज्ञानाभ्यामध्यासस्य जन्मनिवृत्त्योर्नियतत्वात्, ज्ञानं रजतमिति प्रतीतिप्रसङ्गाच्चेति-**

---

**इति।** ज्ञानविषयसम्बन्धव्यवहारादावित्यर्थः। **निरपेक्षोपाधेरिवेति।** तावेवोपाधी स्वोपहितभिन्नौ यावन्योन्यनैरपेक्ष्येण स्वोपहितमुपधत्त इति वृद्धोक्तेर्मिलितोपाध्योर्नात्यन्तभेदकत्वम्, मठावच्छिन्नं नभस्तद्वृत्तिघटाद्यवच्छिन्नमित्यभेदस्यापि प्रतीतेः। न चैवमत्यन्ताभेदः स्यादिति—वाच्यम्; औपाधिकभेदस्य दुर्वारत्वात्। अतएव—

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टरूपयोः।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोः॥

इति संक्षेपशारीरकम्। किंच मिळितयो[1]र्घटावच्छिन्नं नभः पटावच्छिन्नमित्यभेदाप्रतीतेः। तथा चाधिष्ठानस्य ज्ञानात्यन्तभेदाभावनियमो न व्याहत इति भावः। **अभियुक्तैः**—पञ्चपादीविवरणकारादिभिः। **फलैक्यादिति।** अभियुक्तरू[2]पफलत्वाश्रयस्य चैतन्यस्यैकत्वादेकतापन्नाभ्यां शुक्त्यादिरजतादिभ्यामवच्छिन्नत्वादित्यर्थः। **ज्ञानस्येति।** शुक्तीदमंशरजताद्याकारवृत्त्यवच्छिन्नचैतन्ययोरित्यर्थः। **उच्यत इति।** उपचर्यत इत्यर्थः। तथाच विषययोरेकचैतन्यावच्छेदकत्वरूपान्मिलना[3]त्तत्प्रत्यक्षतज्ज्ञानयोरपि मिळितं[4] वृत्त्युपाधिकत्वेनात्यन्तभेदाभावादैक्यमत्यन्ताभिन्नत्वमुपचर्यत इति भावः। उक्तं हि पञ्चपाद्यां "एकमेव[5] ज्ञानमेकमेव फल[6]मि" ति तद्व्याख्यातं च विवरणे "विषयावच्छिन्नं फलं

---

[1] किंत्वमिलितयोः—क.ख.ग. [2] अभिव्यक्तफल—क.ग. अभिव्यक्त—ख. [3] मेलनात्—ग. [4] मिलित—ग. [5] एकवेदज्ञान—ग. [6] एकफल—क.ग.

वाच्यम्; रजताकारवृत्त्यवच्छिन्नचैतन्यस्य रजतभ्रमाधिष्ठानत्वानभ्युपगमात्, इदमंशावच्छिन्नचैतन्यमेव तु रजतभ्रमाधिष्ठानम्, तच्च दैवाद्रजताकारवृत्त्यवच्छिन्नचैतन्यमपि, नैतावता भ्रमाधिष्ठानत्वे तदपेक्षा। तस्य च भ्रमविरोधिशुक्तित्वाद्याकारेणाज्ञानं भ्रमकारणम्। तेनाकारेण ज्ञानं भ्रमनिवर्तकम्। अतएव न ज्ञानं रजतमिति भ्रमाकारापत्तिः; वृत्त्यवच्छिन्नस्यैव ज्ञानत्वात्तस्य चाधिष्ठानत्वाभावात्। अधिष्ठानतादात्म्येन चारोप्यप्रतीतिरितीदं रजतमित्येव भ्रमाकारः। ननु—घटादेः स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात्पूर्वं सत्वेन तत्राध्यासो न युक्तः। न च—या घटेन्द्रियसन्निकर्षजा वृत्तिस्तया घटो न प्रकाश्यः। येन च प्रकाश्यो घटाधिष्ठानचैतन्येन न तत्सन्निकर्षजमिति—वाच्यम्; वृत्त्यतिरिक्तज्ञाने मानाभावात्। अज्ञाननिवृत्तेरपि तत एव भावादिति—चेन्न; वृत्त्युदयात्प्रागज्ञातार्थसिद्ध्यर्थं वृत्त्यतिरिक्तज्ञानस्यावश्यमभ्युपेयत्वात्। अन्यथा तस्य साधकाभावेन शशशृङ्गतुल्यतया सन्निकर्षतज्जन्यज्ञानहेतुत्वेन प्राक् सत्त्वकल्पना

---

विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मकतयैकतामापन्नः, तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमप्येकमित्युपचर्यते इति। तथाच सापेक्षोपाध्योरत्यन्तभेदकत्वे, नेदं युज्यत इति भावः। इदमंशेति। इदमंशो विशेषः शुक्तित्वादीत्यर्थः। अधिष्ठानतादात्म्येनेति। आधारतादात्म्येनेत्यर्थः। भ्रमे[1] भासमानोऽधिष्ठानस्य सामान्यांश आधारो विशेषांशोऽधिष्ठानमिति स्थितेर्वक्ष्यमाणत्वात्। कारणाप्रवृत्तेरिति। अज्ञातो घट इत्याकारा न प्रमाणवृत्तिः सम्भवति, प्रमाणवृत्तेरज्ञानविरोधित्वात्तद्ग्रहणासम्भवात्। स्वभिन्नकालीनाज्ञाततया घटादिविषयिण्या

---

[1] भासमानमधि-क. ग.

**निष्प्रामाणिकी स्यात् । तस्माद्यादृशस्य घटादेरिन्द्रियसन्निकर्षाश्रयत्वेन ज्ञानकारणत्वं तादृशस्य साधकं किञ्चिन्मानमवश्यमभ्युपेयम् । अन्यथाऽन्वयव्यतिरेकयोरग्रहेण कार्यकारणभावाग्रहात् सर्वमानमेयादिव्यवस्थोच्छिद्येत । तच्च मानं न वृत्तिरूपम्; तदानीं वृत्तिकारणाप्रवृत्तेरिति तद्विलक्षणं नित्यं स्वप्रकाशमेकमेव लाघवात्, वृत्तिगतोत्पत्तिविनाशजडत्वादिभिस्तदसंस्पर्शात् । तदेव च नानाविधोपाधिसम्बन्धान्नानाविधव्यव-**

---

स्तस्याः सम्भवेऽपि स्वसमानकालीनाज्ञाततया घटादिप्रत्यक्षमिदानीं घटं न जानामीत्याकारकम्, तदुत्तरं तादृशघटादिकारणताज्ञानादिरूपं तत्फलं च नापलपितुं शक्यमानुभविकत्वात् । किञ्चाज्ञान[1] कालीनघटज्ञानं विना तादृशघटेन्द्रियसंयोगानुकूलेन्द्रियव्यापारादौ तत्कालीनप्रवृत्त्यसम्भवः । नच—स्मरणसंशयाद्यप्रमाणवृत्त्या तत्सम्भव इति—वाच्यम्, अज्ञातत्वांशे तदसम्भवेनाज्ञातघटसंयोगानुकूलव्यापारे प्रवृत्त्यसम्भवात् । पूर्वाननुभूते स्मरणासम्भवात्संशयवृत्त्या संशयस्यैवौचित्यावर्जितत्वेनोक्तसंयोगरूपेष्टसाधनत्वे निश्चयासम्भवात् । **नित्यं स्वप्रकाशमेकमिति** । तस्य तादृशज्ञानरूपत्वाभावे जानामीति व्यवहारस्यैकविषयकत्वं न स्यात् । सम्भवत्येकविषयत्वे[2] चैकजातीयविषयकत्वं न युक्तमित्याद्युक्तम् । घटादिवृत्तेश्च जडत्वेन ज्ञानान्तरे तत्प्रकाशके वाच्ये तस्यात्मान्यत्वे मानाभावः । आत्मस्वरूपत्वे चैकव्यक्तिरेव सर्वपुरुषसाधारणी नित्या, तस्याः ज्ञानान्तरविषयत्वे च कदाचिद्देहादि स्फुरति न वेत्यादिसंशयः स्यात्, अतः स्वप्रकाशा । अन्यथा कैवल्यस्य भासमानता न स्यादिति भावः । **नानाविधेति** । ब्रह्मणो ज्ञानादिगुणकत्वं परेणाप्युच्यते । तत्र ज्ञानादेर्भिन्नत्वे ब्रह्मभिन्नत्वे जीवभिन्नत्वे च मानाभावादुपाधिभेदादेव

---

1 अज्ञात–ग. 2 विषयकत्वे–ग.

**हारभाक् भवति नभ इव घटमणिमल्लिकाद्युपाधिभेदेन; तच्चाज्ञानसाधकत्वात् स्वरूपतो नाज्ञाननिवर्तकम् 'वृत्त्युपरक्तं त्वज्ञाननिवर्तकमिति न वृत्तेरनुपयोगः। तथाच**

---

नानाविधजीवेश्वरत्वादिव्यवहारसम्भवाद्वृत्त्यन्यज्ञानं दुर्वारमिति भावः। **वृत्त्युपरक्तमिति।** निवर्तकवृत्त्युपरक्तत्वान्निवर्तकत्वेन व्यवह्रियते, न तु वृत्त्युपरक्तेन निवर्तकता, स्पष्टं चेदमावरणभङ्गश्च वृत्त्येति पूर्वग्रन्थे। **न वृत्तेरनुपयोग इति।** तथा चाज्ञाननिवृत्त्याद्यर्थमेव वृत्त्यङ्गीकारात्सुखादौ वृत्त्यनङ्गीकारेणासत्वापादकाज्ञानाभावविशिष्टचैतन्यमेव तत्र ज्ञानमिति, घटादावपि तदेव ज्ञानम्। न च—सुखादौ वृत्त्यभावे वृत्तिसूक्ष्मपरिणामरूपसंस्कारो न स्यादिति—वाच्यम्; सुखाद्युपहितचैतन्यस्यैव नाशस्य संस्कारत्वसम्भवात्, संस्काररूपमनःपरिणामविशेषस्यावश्यकत्वेऽपि वृत्तिज्ञानानावश्यकत्वाच्च। पल्लवाज्ञानानङ्गीकारपक्षे तूक्ताज्ञानविषयतावच्छेदकत्वस्य वृत्त्यभावविशिष्टस्याभावविशिष्टं चैतन्यमेव ज्ञानम् प्रतियोग्यनधिकरणकालोऽत्यन्ताभाव इव घटादिरेव मूलाज्ञानविषयत्वे[1] कादाचित्कोऽप्यवच्छेदकोऽङ्गीक्रियते, घटं न जानामीति प्रतीतेर्न सुखादिरिति वृत्तिविषयघटादौ विशेषणस्य सुखादौ विशेष्यस्याभावादुक्ताभाव इति न तत्पक्षेऽपि वृत्त्यपेक्षा सुखादिज्ञानार्थमिति भावः। न च—घटो जानातीत्यादिप्रयोगापत्तिरिति—वाच्यम्; जीवेश्वराद्यन्य[2]तरत्वस्य जानातीत्यादिप्रयोगोपाधित्वात्॥

वस्तुतस्तु यदवच्छिन्नविषयकत्वयद्विषयकत्वान्यतरवतोऽसत्वापादकाज्ञानस्यानवच्छेदकं यन्मनोऽविद्यान्यतरत्तदवच्छिन्नचैतन्यं तदीयं ज्ञानम्। ब्रह्मावच्छिन्नविषयकस्य ब्रह्मान्यविषयकस्य चाज्ञानस्याप्रसिद्धत्वात्तयोरेकैकमनिवेश्यान्यतरन्निवेशितम्। मनोमात्रे निवेशिते ईशो

---

[1] विषये—ग. [2] जीवेश्वरान्य.

जानातीति न स्यात्, अविद्यामात्रे च निवेशिते जीवो जानातीति न स्यात्, अतस्तदन्यतरन्निवेशितम्। यदवच्छिन्नविषयकत्वयद्विषयकत्वान्यतरवतोऽज्ञानस्यानिरूपकं यन्मनोऽविद्यान्यतरत्तदवच्छिन्नं चैतन्यं तत्साक्षात्कारः। लक्षणद्वयेऽपि प्रथमयत्पदाभ्यां चरमतत्पदार्थस्य विषयस्य ग्रहणम्। घटादौ वृत्त्यभावकाले तदवच्छिन्नचिद्विषयकमसत्त्वापादकमज्ञानं मनोऽवच्छिन्नचिदाश्रितमिति तदा न तस्य ज्ञानम्। तत्र प्रत्यक्षवृत्त्यभावकाले तदवच्छिन्नविषयकमभानापादकमज्ञानं मनोनिरूपितमिति तदा न तस्य साक्षात्कारः। पल्लवाज्ञानास्वीकारे स्वपरिणामवृत्तिज्ञानाविषयत्वसमानाधिकरणस्य स्वतादात्म्यवदज्ञानावच्छेदकत्वस्याभाववत् यत्तत्सम्बन्धिनावच्छिन्नं चैतन्यं तस्य ज्ञानम्। सम्बन्धिशब्देन यद्ग्राह्यं तदेव स्वपदाभ्यां ग्राह्यम्। तच्च जीवज्ञानस्थले मनः, ईशज्ञानस्थले त्वविद्या। वृत्तिज्ञान[1]विषयत्वस्थले वृत्त्यनवच्छेदकत्वं निवेश्य साक्षात्कारो निर्वाच्यः। इन्द्रियकरणकवृत्तिरेव विषयावच्छिन्नेति परोक्षवृत्तिमादाय न लक्षणसमन्वयः। अज्ञानावच्छेदकत्वं चाज्ञानविषयत्वतदवच्छेदकत्वान्यतरवत्त्वम्। तेन ब्रह्मण्यज्ञानावच्छेदकत्वाभावेऽपि वृत्त्यभावकाले ब्रह्म जानामीत्यादिर्न व्यवहारः। शब्देनैव ब्रह्मणोऽपरोक्षत्वमतेऽपि शाब्दवृत्त्यवच्छेदकत्वस्यापि ब्रह्मणि पूर्वमुक्तत्वात्तदनङ्गीकारेऽप्युक्तान्यतररूपविशेष्याभावसत्त्वाच्च ब्रह्म साक्षात्करोमीत्यादौ नानुपपत्तिः। एकमनोवृत्त्यविषयस्यापि मनोन्तरवृत्तिविषयत्वेन वृत्त्यविषयत्वाभावात्स्वपरिणामेति। पुरुषान्तरीयाज्ञानविषयेऽपि ब्रह्मणि साक्षात्कारसम्पत्त्यै स्वतादात्म्यवदिति। न च—यदवच्छिन्नचितो ज्ञानत्वं साक्षात्कारत्वं चोक्तम्, तस्यैव तदुच्यतामिति—वाच्यम्; यथाहि आकाशं मेयं, घटाकाशं मेयं, पटाकाशं मेयं, इत्यादावनुगताकाशव्यक्तिविषयक-

[1] ज्ञाना–ग.

सर्वाज्ञानसाधके साक्षिचैतन्ये तास्मिन्घटादेरध्यास इति काऽनु-
पपत्तिः? तदुक्तं सुरेश्वराचार्यैः—

सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तुनः।
यदभ्युपगमादेव, तत्सिद्धिर्वार्यते कुतः॥
सर्वतीर्थदृशां तावत्सामान्यं मानलक्षणम्।
अज्ञातार्थावगमनं त्वदुक्ते तन्न युज्यते॥
स्वतस्सिद्धोऽथवाऽसिद्धो देहादिस्ते भवन् भवेत्।
प्रमाणानां प्रमाणत्वं नोभयत्रापि लभ्यते॥
प्रमाणान्यन्तरेणापि देहादिश्चेत्प्रसिध्यति।
वद प्रमाणैः को न्वर्थो न हि सिद्धस्य साधनम्॥
स्वतोऽसिद्धे प्रमेये तु नासतो व्यञ्जिका प्रमा।
नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि॥ इति॥

---

त्वम्, तथा स्फुरणं ज्ञानं, घटस्य स्फुरणं ज्ञानं, पटस्फुरणं ज्ञानमित्या-
दावप्येकस्या एव स्फुरणज्ञानव्यक्तेर्विषयत्वमित्यादेरुक्तत्वादिति दिक्॥

सर्वाज्ञानसाधक इति। यद्यप्यज्ञानाकाराविद्यावृत्तिरभ्युपग-
म्यते, तथापि सा न ज्ञानमपि तूक्तरीत्या चैतन्यमिति भावः। ननु—
प्रमोत्पत्तेः पूर्वमप्रतीतमप्यज्ञातघटादिकं पश्चादनुमानादिना प्रतीयमान-
त्वान्नासत्, अन्यथा कदाचित्केनचिदप्रतीतस्यासत्वे सर्वमसत्स्यात्;
नच—सन्निकर्षतज्जन्यज्ञानादौ हेतुताग्राहकान्वयव्यतिरेकज्ञानमज्ञातता-
कालीनघटान्वयज्ञानं विना न सम्भवतीति वाच्यम्; तादृशज्ञानस्यानु-
मित्यादिरूपस्याभानापादकाज्ञानकाले सम्भवादत आह—**नाभिव्यन-
क्तीति**। शशशृङ्गाभिव्यक्तिमुद्दिश्य न यतत इत्यर्थः। तथाच[1] जगद-
भिव्यक्तिमुद्दिश्य प्रवृत्तौ सवितुर्जगत्तमोज्ञानमिव प्रमेयाभिव्यक्तिमुद्दिश्य

[1] तथा—क.

प्रवृत्तौ प्रमातुः प्रमेयाज्ञानज्ञानमावश्यकम् । अन्यथा तन्निवृत्तीच्छाया असम्भवादिति भावः ॥

यत्तु—परोक्षज्ञानस्थले यत्र विषयोऽध्यस्तः तदेव चैतन्यमनुमित्यादिवृत्त्यवच्छिन्नमतो ज्ञान एवाध्यास इति न युक्तम्; तावता स्वज्ञानेऽध्यासालाभादिति; तत्समाहितमेव । न हि प्रत्यक्षस्थलेऽपि ज्ञानत्वेनोपहितेऽध्यासः; तस्यानधिष्ठानत्वात्, किंतु ज्ञानत्वोपलक्षिते । तथाच स्वज्ञानाभिन्न[1] एवाध्यास इति नियमो न व्याहतः । यदपि घटादेरज्ञाततया साक्षिभास्यत्वे सदा सर्वस्य सर्वं भायात् । किञ्चाज्ञाततकालेऽपि घटादिकं योगिना प्रमीयत इति न तदा तस्य भानासिद्धत्वेनासत्त्वमिति साक्षिज्ञानत्वं व्यर्थमिति, तदपि न; अज्ञाततया सर्वस्याज्ञात[2]भानस्येष्टत्वात् । उक्तं हि विवरणे—'ज्ञाततया अज्ञाततया च सर्वं साक्षिभास्य' मिति । न चैवं—घटो भाति, अज्ञातघटो भातीत्यादिव्यवहारः स्यादिति—वाच्यम्; यथा ह्यज्ञातेऽपि घटादावनुमितत्वादिना भातीति व्यवहारस्तथा अज्ञातत्वेन भातीति व्यवहार इष्ट एव । अथानुमितत्वादिना भातीत्यपलभ्यते अपलप्यतां तर्हि सः । तथापि यथा तार्किकादिमते मानसज्ञानस्य ज्ञानादौ लौकिकविषयत्वस्य तद्विषये घटादौ तदन्यविषयत्वस्य च स्वीकारः, तथा मन्मतेऽप्यज्ञानज्ञानयोरनावृतस्याज्ञातपरोक्षज्ञानविषययोरावृतस्य साक्षितादात्म्यस्य स्वीकारः । तन्मते तादृशविषयताया इव मन्मते तादृशतादात्म्यस्य कार्यकारणभावादिग्रहप्रयोजकत्वस्य सम्भवः । घटो भातीति व्यवहारस्य तु नापत्तिः; शुद्धघटस्य तादृशतादात्म्यानङ्गीकारात, घटं न जानामीत्याकारकानुभवकालोत्तरं तार्किकादिभिरपि घटज्ञानकार्यमङ्गीक्रियत एव अभावः परं तत्र विषय उच्यते । न च—त्वन्मते घटाज्ञान-

स्वज्ञानमात्र. [3] स्याज्ञातस्य—ग.

**न च—**

**'घटोऽयमित्यसौ वृत्तिराभासस्य प्रसादतः ।**

**विज्ञातो घट इत्युक्तिर्ब्रह्मानुभवतो भवेत्' ॥**

**इति वदता वृत्तिप्रतिबिम्बितस्य घटानधिष्ठानचैतन्यस्य घटानुभवत्वोक्तिविरोध इति—वाच्यम्; वृत्तिप्रतिबिम्बितचैतन्यस्य घटाधिष्ठानचैतन्येन सह भेदाभावात्, चैतन्यस्यैकत्वात् । यथा चैकस्यैव चैतन्यस्य सर्वभासकत्वं तथा विस्तरेणोपपादितं 'नाभाव उपलब्धे' रित्यस्मिन्नधिकरणे भाष्यकृद्भिः । ननु—**

---

कालसामान्ये तथानुभवसत्वात् घटज्ञानकार्यं स्यात्, तन्मते तु न तत्सामान्ये स इति न तदापत्तिरिति—वाच्यम्; मन्मतेऽपि सर्वमज्ञानं सर्वदा नावृणोतीति स्वीकारेणाज्ञानसम्बन्धस्य तन्निवर्तकप्रमित्यव्यवहितपूर्वमेव स्वीकारात् । [1]योगिनां [2]कारणत्वादिग्रहादावुपयुज्यत इत्ययोगिनं प्रत्यसत्वं ते न दुर्वारम् । किंच योगिनामज्ञातकारणत्वादिग्रहेऽज्ञाताभिव्यक्त्यर्थं प्रवृत्तौ वा साक्ष्येव शरणमिति दिक् ॥

**आभासस्येति** । वृत्तिप्रतिबिम्बितचैतन्यस्येत्यर्थः । **ब्रह्मानुभवतः** ब्रह्माभिन्नसाक्षिणः । अज्ञातत्वेनेव ज्ञातत्वेनापि सर्वस्य साक्षिभास्यत्वात् ज्ञातत्वेन व्यवहारः साक्षिणेत्यर्थः । उक्तं हि विद्यारण्यैः—

'घटैकाकारधीस्था चिद्घटमेवावभासयेत् ।

घटस्य ज्ञातता ब्रह्मचैतन्येनावभास्यते' ॥ इति ।

**भेदाभावादिति** । अत्यन्तभेदाभावादित्यर्थः । **चैतन्यस्य** शुद्धचिदुपहितचितोः । **एकत्वात्** तादात्म्यात् । तथाच घटादिभासने मनोवृत्तिरपेक्ष्यते न तु तद्भासन इत्याशयेनाभासब्रह्मशब्दाभ्यां पृथङ्निर्देश इति भावः । **नाभाव उपलब्धेरित्यस्मिन्निति** । विज्ञानस्य

---

1 योगिनां तु नायोगिनां—ख.ग. 2 कारणत्वग्र—ग.

स्वभिन्नार्थग्राहकत्वे प्रत्यक्षीकृतं तदर्थग्राहकं वाच्यम् । नहि तच्चक्षुरादिकमिवार्थे कञ्चनातिशयं प्रत्यक्षतारूपमाधत्ते, अपितु तत्प्रत्यक्षतैवार्थप्रत्यक्षता । तदुक्तम् 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यती' ति । उपलम्भो यदि प्रत्यक्षो न स्यात्तदा चक्षुरिवान्यामर्थदृष्टिं जनयेत्, सा च न सम्भवत्यनवस्थानात् । किञ्च ज्ञानस्य प्रत्यक्षत्वनियमाभावे ज्ञानस्य विद्यमानस्याभावभ्रमः संशयो वा कदाचित्स्यात् ॥

अथ— ज्ञानान्तरेण प्रत्यक्षीकृतं ज्ञानमर्थप्रकाश इति वाच्यम् ; तथापि तस्य ज्ञानान्तरस्य ज्ञानान्तरेण प्रत्यक्षता, तस्यापि ज्ञानान्तरेणेत्येवमनवस्था । [1]तस्मात् स्वेनैव विषयीकृतत्वेन प्रत्यक्षीकृतं ज्ञानमर्थग्राहकमिति बौद्धशङ्कायां, मैवम्; यथा हि पक्ता पाक्य[2] पाकेन व्याप्नोति, न तु पाकं पाकान्तरेण, किंतु स्वयमेव पक्ता पाकं प्राप्नोति, न वा पाक एव पक्यः[3] एवं साक्षी प्रमेयं प्रमया व्याप्नोति, न तु प्रमां प्रमान्तरेण, किंतु स्वयमेव साक्षी प्रमां व्याप्नोति, नवा प्रमैव प्रमात्री । मनःपरिणामस्य हि ज्ञानसुखादेः स्वच्छत्वेन साक्षिप्रतिबिम्बवत्तया[4] मनःपरिणामान्तररूपज्ञाननैरपेक्ष्येणैवापरोक्षता । अन्यथा विद्यमानोऽपि स दैवात्स्वा[5]कारमनोवृत्त्यनुत्पादे कदाचिन्न प्रकाशेत सन्दिह्येत वा, तद्वति तदभावभ्रमो वा स्यात् । नियमेन तदाकारवृत्तिकल्पनमप्यनवस्थादुष्टम् । व्यर्थं च, साक्षिणैव तत्प्रत्यक्षतासम्भवात् । तस्मात्स्वतः साक्ष्यभिव्यक्तावक्षमस्य घटादेः स्वाकारवृत्त्यपेक्षप्रत्यक्षताकत्वेऽपि स्वतः साक्षिव्यञ्जकस्य मनोवृत्त्यादेर्न तथेति साक्षिणैव प्रत्यक्षता । साक्षी तु नानुभवान्तरविषयो येनानवस्था स्यात्; अपितु स्वप्रकाशः । तत्त्वं चाज्ञेयत्वे सति ज्ञानत्वोपलक्षितस्वरूपत्वं, तच्च नित्यापरोक्षत्वोपलक्षित-

[1] तत्स्वेनैव–ख. [2] पक्तव्यं–क. पच्यं–ग. [3] पक्ता–ग. [4] साक्षिप्रतिबिम्बतया–क. [5] सदैव स्वा–ग.

**दृश्यत्वान्यथानुपपत्त्या मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता, किं वा सत्यत्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रम्। नाद्यः; तत्सामग्र्यभावात्। तथा हि आक्षेप्यस्योपपादकत्वम्, प्रमाणाविरुद्धत्वम्, आक्षेपकस्यानुपपद्यमानत्वम्, प्रमितत्वम्, चेत्यर्थापत्तिसामग्री। प्रकृते [1]चाक्षेप्यसम्बन्धिनो मिथ्यात्वं नाक्षेपकस्य**

स्वरूपत्वात्, तदपि नित्यमसन्दिग्धत्वात्, व्यतिरेकेण घटादिर्दृष्टान्तः। साक्षी ह्यन्यं सन्दिहानोऽपि न सन्दिह्यते, विपर्यस्यन्नपि न विपर्यस्यते, परोक्षतया जानानोऽपि स्फुरतीति सर्वानुभविकम्। न चैतदन्याधीनवेदनत्वे साक्षिणो घटत इति 'नाभाव उपलब्धे'रित्यधिकरणीयभाष्यादितात्पर्यसिद्धं समाधानम्॥

**आक्षेप्यस्येति।** अर्थापत्तिकल्प्यस्येत्यर्थः। **उपपादकत्वं** यद्विनाऽऽक्षेपकमनुपपन्नं तत्त्वम्। **आक्षेपकस्येति।** यत्रानुपपन्नत्वधीः करणं तस्येत्यर्थः। **अर्थापत्तीति।** अनुपपत्तिधीकरणकार्थापत्तीत्यर्थः। अथवा यः संशयः[2] कारणं सोऽप्याक्षेपकः। तथाच संशयकारणिकाऽप्यर्थापत्तिः प्रकृते ग्राह्या। यथा हि जीविनो देवदत्तस्य गृहासत्त्वं बहिः सत्त्वं विनानुपपन्नमिति धीरुपपादकस्य बहिस्सत्त्वस्य देवदत्तेऽर्थापत्तौ करणम्, तथा जीविनो देवदत्तस्य गृहासत्त्वज्ञानं पूर्वनिश्चितजीवनगृहसत्त्वनियमयोः संशयाहितजीवनसंशयद्वारा करणम्, उक्तनियमसंशयो वा जीवनसंशयद्वारा करणम्, करणस्य सव्यापारत्वानियमात्। जीवनसंशय एव वा करणम्, देवदत्तो बहिरस्तीत्यर्थापत्त्यन्वयव्यतिरेकानुविधानस्याविशेषात् तद्विनानुपपन्नत्वं तु तदभावव्यापकाभावप्रतियोगित्वमित्याद्याकरे विवेचितम्। प्रकृते तु दृग्दृश्ययोरन्यतरमिथ्यात्वं विना सम्बन्धोऽनुपपन्न इति धीः पूर्वनिश्चितयोर्दृग्दृश्ये सम्बद्ध एव, तयोः

[1] चाक्षेप्यं संब. [2] यत्संशयः–क. ग.

**सम्बन्धस्योपपादकम्, प्रत्युत प्रतिकूलमेव। न चाध्यस्तत्वरूपसम्बन्धस्य न तत्प्रतिकूलम्; तस्याद्याप्यसिद्धेरनाक्षेपकत्वात्। प्रत्यक्षादिविरुद्धं चेदमाक्षेप्यम्। नाप्येकस्य दृश्यत्वस्योपपत्तये प्रमितानेकस्य त्यागो युक्तः। आक्षेपकं च न दृगध्यस्तत्वम्; तस्यैव फलत आक्षेप्यत्वात्। नापि दृग्विषयत्वरूपो दृक्सम्बन्धः; तवासिद्धेः। न दृगधीनसिद्धिकत्वम्; दृग्विषयत्वातिरिक्तस्य तस्यासिद्धेः। नान्त्यः; सत्वेऽप्युक्तरीत्या सम्बन्धान्तरेणैव दृश्यत्वस्योपपन्नतया अनुपपत्तेरेवाभावादिति—चेन्न; अनुकूलतर्कस्यैव प्रक्रान्तत्वेनार्थापत्तिर्वेत्यादिविकल्पानवकाशात्;**

---

सम्बन्धः सत्य एवेति नियमयोः संशयाहितं दृग्दृश्ये सम्बद्धे न वेति संशयं द्वारीकृत्य विप्रकर्षहेतुकस्तयोः सत्यसम्बन्धाभावनिश्चयः तादृशसंशयो वा करणमुक्तान्यतरान्मिथ्येत्यर्थापत्ताविति द्रष्टव्यम् ॥

**प्रतिकूलमिति।** सम्बन्धिमिथ्यात्वे सम्बन्धस्य मिथ्यात्वनियमात्, मिथ्यात्वस्य च तुच्छत्वरूपत्वात्सम्बन्धस्वरूपस्य कालादिसम्बन्धिनः [1]प्रतिकूलसम्बन्धित्वमिति पराभिमानः। परमते च शुक्तिरूप्ये मिथ्यात्वसम्बन्धस्य शुक्तिरूप्याभावस्य च सत्यस्याङ्गीकारात्तत्र मिथ्यानुयोगिकत्वस्य मिथ्याप्रतियोगिकत्वस्य च मिथ्यात्वासाधकत्ववद्दृहात्मसम्बन्धे मिथ्यात्वेन परेणाप्यङ्गीकृते सत्यप्रतियोगिकत्वस्य सत्यत्वासाधकत्ववच्च मिथ्यासम्बन्धिप्रतियोगिकत्वस्य सम्बन्धे मिथ्यात्वसाधकत्वं नेति तु बोध्यम्। मन्मतेऽपि तन्न तथा, ब्रह्मस्वरूपाभावे व्यभिचारादिति ध्येयम्। **उक्तरीत्या**—इच्छादाविव ज्ञानेऽपि विषयस्य सत्यः सम्बन्ध इति रीत्या। **सम्बन्धान्तरेण**—[2]अध्यासान्यसम्बन्धेन। आक्षेप्यं

---

[1] प्रतिकूलं—ख. [2] सामान्यसम्बन्धेन—क.

**उभयथाप्यदोषाच्च । तथाहि—सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिः । मिथ्यात्वं च तदुपपादकम्, न तत्सम्बन्धप्रतिकूलम्; मिथ्यात्वेऽपि शुक्तिरूप्यस्येदमंशेऽध्यस्तत्वरूपसम्बन्धदर्शनेन सम्बन्धसामान्ये प्रतिकूलत्वाभावात् । आक्षेपकोऽपि दृग्विषयत्वरूपो दृक्सम्बन्ध एव, अध्यासरूपस्य दृग्विषयत्वस्य ममापि संप्रतिपत्तेः, तात्विकस्यैव तस्य निषेधात् । न चाध्यस्तत्वस्याद्याप्यसिद्धिः; दृक्सम्बन्धसामान्यस्याक्षेपकस्य प्रसक्तविशेषनिषेधेऽप्यध्यस्तत्वरूपविशेषपर्यवसानेनासिद्ध्यभावात् । न हि अध्यस्तसम्बन्धत्वेनाक्षेपकता, किं तु सम्बन्धत्वेन । स चाध्य-**

---

विना आक्षेपकस्यानुपपत्तिमाह–**सत्यत्व इति** । दृग्दृश्यसत्यत्वे इत्यर्थः । न च—यथा सम्बन्धिसत्यत्वेऽपि मुखादौ दर्पणादिसम्बन्धमात्रं मिथ्या तथा दृग्दृश्ययोः सत्यत्वेऽपि तत्सम्बन्धमिथ्यात्वमस्त्विति—वाच्यम्; विप्रकर्षादिना तत्सम्बन्धसंसर्गकप्रतीतेर्भ्रमत्वसिद्धौ सम्बन्धस्येव दृश्यस्यापि मिथ्यात्वं सिध्यतीति विनिगमकाभावादित्यादेरुक्तत्वादनध्यस्तसम्बन्धस्य त्वयानङ्गीकाराद्ध्यस्तरूपविशेषपर्यवसन्नः सम्बन्ध आक्षेपकः । तत्पर्यवसन्नता च नाक्षेपात्पूर्वं सम्भवति; आक्षेपकस्यैव[1] सर्वदृश्यमिथ्यात्वसाधकत्वादित्याशङ्क्य निषेधति—**न चाध्यस्तत्वस्येति । सामान्यस्येति ।** आक्षेपकत्वावच्छेदकेन विप्रकृष्टयोः सम्बन्धत्वेनाक्षेपकं निश्चितत्वाद्धर्मिणि नासिद्धम्, आक्षेपात्पूर्वमुक्तविशेषानिश्चयेऽपि तत्सम्भावनासत्त्वान्न तदभावनिश्चयो येन सत्यत्वविशेषाभाव[2]स्यापि निश्चयेन यावद्विशेषाभावनिश्चयात्सम्बन्धसामान्याभावनिश्चयं ब्रूया इति समाधानाभिप्रायः । **प्रसक्तेति** सत्यत्वरूपेत्यर्थः । **सम्बन्धत्वेन** विप्रकृष्टयोः सम्बन्धत्वेन । यत्तु—मिथ्याभूतस्य सम्बन्धस्यानुप-

1 आक्षेपस्यैव–**क. ख. ग.** 2 विशेषाभाव–**ग.**

स्तत्त्वसम्बन्धसंभावनयाप्यबाधित एवेति। न च—घटस्य ज्ञानमिति धीसिद्धसम्बन्धसामान्यस्याध्यस्तत्वं न विशेषः, न हि रूप्यस्य शुक्तिरिति प्रतीतिरस्तीति—वाच्यम्; रूप्यस्य शुक्तिरिति प्रतीत्यभावेऽपि रूप्यस्य शुक्तिरधिष्ठानमिति प्रतीत्या अध्यस्तत्वस्य सम्बन्धविशेषत्वसिद्धेः, चैत्रस्य मैत्र इति प्रतीत्यभावेऽपि चैत्रस्य पिता मैत्र इति प्रतीतिवत्। आक्षेप्यमत्र प्रमाणा-

पत्त्या दृश्यमिथ्यात्वसिद्धिः, तस्यां च सत्यां मिथ्याप्रतियोगिकत्वेन सम्बन्धस्य मिथ्यात्वसिद्धिरित्यन्योन्याश्रय इति, तन्न; विप्रकृष्टसम्बन्धस्यानुपपत्त्यैव दृश्यतत्सम्बन्धयोर्मिथ्यात्वसिद्धेरुक्तत्वात्। **प्रतीत्यभावेऽपीति।** अपिनाऽध्यासकाले शुक्तित्वस्यावृतत्वान्न तथा [1]प्रतीतिर्ज्ञानत्वोपहितं तु न दृश्याधिष्ठानमित्यध्यासकालेऽपि ज्ञानं घटस्येति धीर्बाधकाले तु रूप्यस्य शुक्तिरिति धीर्भवत्येव। अतएव इदं रूप्यस्य स्वरूपमिदमो रूप्यं स्वरूपमित्यध्यासकाले रूप्यस्य स्वरूपं शुक्तिरिति बाधकाले प्रतीयत इति सूचितम्। किञ्चेदं रूप्यस्याधिष्ठानं [2]शुक्तिरूप्यस्याधिष्ठानमिति सार्वजनीनानुभवेन रूप्यादेर्भ्रमविशेष्यत्वरूपाधिष्ठानत्वस्य शुक्त्यादौ सिद्धत्वान्मन्मते विशेष्यावच्छिन्नस्य चैतन्यस्य भ्रमविषयाध्याससम्बन्धस्वीकारादधिष्ठानारोप्ययोरध्यासः सर्वत्र सम्बन्ध इत्याशयेनाह—**रूप्यस्येत्यादि।** एतेन—घटस्य सम्बन्धो घटस्य संयोग इति सामान्यविशेषरूपाभ्यां पदान्तरं विनैव यथा व्यवहारो न तथा प्रकृते। न वा चैत्रस्य पिता मैत्र इत्यादौ चैत्रमैत्रयोः सम्बन्धः षष्ठ्यर्थोऽपि तु जनकत्वरूपपितृपदार्थैकदेशे चैत्रस्य निरूपितत्वम्। तथा च रूप्याधिष्ठान[3]मित्यत्रापि भ्रमेऽधिष्ठानत्वघटके रूप्यसम्बन्धो भाति न

[1] प्रतीतिर्ज्ञानत्वो-ग. [2] एवमेव सर्वत्र दृश्यते शुक्तिरूप्यस्येति तु भवितुमुचितं. [3] रूप्यस्याधिष्ठान-क. ग.

विरुद्धमेव; अध्यक्षादिविरोधस्य प्रागेव परिहृतत्वात्। आक्षेपके च प्रमितत्वमनपेक्षितमेव; अप्रमितेनापि प्रतिबिम्बेन बिम्बाक्षेपदर्शनात्। तर्कपरतायामपि नाप्रयोजकता; सत्यत्वे संबन्धानुपपत्तेर्भवदुक्तन्यायखण्डनेन प्रथमत एवोपपादितत्वात्। दृश्यत्वाभावस्यापादकमत्र सत्वमनिर्वाच्यत्वाभावो वा त्रिकालाबाध्यत्वं वा। उभयथापि न दोषः। न चानिर्वाच्यत्वाभावस्य तुच्छे परोक्षधीवेद्यतया दृश्येऽपि सत्वेन व्यभिचारः; कारणसामर्थ्येन तत्र तदाकारवृत्तिसमुल्लासेऽपि दृक्सम्बन्धरूपस्य दृश्यत्वस्य तुच्छाविरोधिनस्तत्राभावात्। तुच्छाकारताया वृत्ति-

---

त्वधिष्ठान इत्यादि—प्रत्युक्तम्; पदार्थैकदेशान्वयास्वीकर्तृमते पितरीवाधिष्ठानेऽपि सम्बन्धस्य भानात्, यथाश्रुतस्यापि चैत्रस्येत्यादेरदो[1]षत्वाच्च, पदान्तरसत्वेऽप्यधिष्ठानारोप्ययोः सम्बन्धभानाविघाताच्च। **अप्रमितेनापीति**। येन रूपेणाक्षेपकता तेन रूपेणाप्रमितेनापीत्यर्थः। तेन बिम्बप्रतिबिम्बयोर्मन्मते ऐक्याद्विम्ब[2]त्वरूपेण प्रमितत्वेऽपि न क्षतिः। यत्तु—प्रतिबिम्बं नाक्षेपकम्, किंतु तद्धीः, सा च प्रमितेति रोदनम्, तद्भ्रममात्रस्य मिथ्यात्वादिना प्रयुक्त[3]मेव, अर्थापत्तिजनकज्ञानाविषयस्यैव शास्त्रे आक्षेपकत्वव्यवहाराच्च। **तुच्छ[4]विरोधिन इति**। सत्वेन धीयोग्यत्वरूपस्य दृक्तादात्म्यतत्वान्यतरस्याभावरूपं तुच्छत्वं दृक्तादात्म्यविरोधीति भावः। **वृत्तिगतत्वेपीति**। अपिना तुच्छाकारतापि न वृत्तिगता मानाभावात्। नहि तया तुच्छे कश्चन व्यवहारो जन्यते, तुच्छस्याव्यवहार्यत्वात्। अहृदयवाचामहृदयमुत्तरमिति न्यायेन तुच्छशब्दप्रयोगस्यास्माभिस्तुच्छवादिनं प्रति क्रियमाणत्वात्, व्यवहारविशेषं प्रति तादृशवृत्तेः सामग्रीविशेषजन्यवृत्तित्वेन हेतुत्वसम्भवात्। अतएव,

---

[1] चैत्रस्योत्यादेरदो—क. ख. [2] विम्बवत्व—ख. [3] प्रयुक्त—क. ग. [4] तुच्छत्व.

गतत्वेऽपि वृत्तिसम्बन्धस्य तुच्छगतत्वाभावोपपत्तेः। नापि—यथा सतो ब्रह्मणः स्वव्यवहृत्या सम्बन्धः, तथा घटादेरपि सत एव स्वज्ञानेन सम्बन्धोऽस्त्विति वाच्यम्; दृष्टान्ते ब्रह्मण्यध्यासस्यैव व्यवहृतिसम्बन्धत्वात्। तथा च उभयसम्बन्धिसत्वे विषयाविषयिभावानुपपत्तिर्नाप्रयोजकत्वादिना परिभूयते। एतेन आध्यासिकः सम्बन्धो नाम अध्यस्तसम्बन्धो[1] वा, अध्यस्तत्वमेव वा, आद्ये सम्बन्धस्य मिथ्यात्वेऽपि सम्बन्धिनो दृश्यस्य दृश इव मिथ्यात्वानुपपत्तिः। द्वितीये ज्ञानस्याप्यध्यस्तत्वेन तत्र अध्यासानुपपत्तिः स्वस्वज्ञानपरम्परायामध्यासस्वीकारेऽनवस्था चेति—निरस्तम्; ज्ञानं हि वृत्त्यवच्छिन्नं चैतन्यम्, तत्रावच्छेदिकाया वृत्तेर्जडाया अध्यस्तत्वेऽप्यवच्छेद्यस्य चैतन्यस्य प्रकाशरूपस्य अनध्यस्तत्वेन तत्र दृश्यस्याध्यासात् दृश्यमिथ्या-

---

सदसतोर्न सम्बन्ध इति वृद्धाः। विस्तरेण च वृत्तेस्तुच्छविषयकत्वं बौद्धाधिकारादौ प्रत्युक्तमुदयनाचार्याद्यैरिति सूचितम्। अथापि तादृशवृत्तेः कालसम्बन्धात्कालविशेषावच्छेदेन तुच्छाकारता वक्तुं शक्या, तुच्छस्य तु कालासम्बन्धात्तदवच्छेदेन तत्र वृत्तिसम्बन्धो न तथा। न ह्यधिकरणासम्बन्धमप्यवच्छेदकम्। अतएव ध्वंसादीनां प्रतियोग्यादिषु न सम्बन्धः, किं तु ध्वंसादौ प्रतियोग्यादिसम्बन्ध इति परेऽप्याचक्षते। नच—तुच्छनिष्ठा वृत्तिविषयता न तत्तत्कालावच्छिन्नेति—वाच्यम्; तस्याः सार्वदिकत्वापातादित्याशयेनाह—वृत्तिसम्बन्धस्येति। एतेन—तुच्छाकारताया वृत्तावङ्गीकारे तुच्छे वृत्तिसम्बन्धोऽप्यवर्जनीय इत्यपास्तम्। नच—वृत्तिनिष्ठाकारतानिरू[2]पकत्वं कालविशेषावच्छिन्नं विना तादृशाकारतापि वृत्तौ न सम्भवतीति—वाच्यम्; न हि निरूपकत्वं

---

[1] अध्यस्तः सम्बन्धो. [2] निष्ठाकारनिरू—क. ख.

त्वेऽप्यनवस्थाविरहस्योपपत्तेः । अत एव शाब्दवृत्तिविषयो ब्रह्म न वृत्तौ कल्पितमविद्याविषयो ब्रह्माविद्यायां न कल्पितं यथा, तथा दृश्यं न दृशि कल्पितम्; तथा च दृग्दृश्यादेस्तात्त्विक एव सम्बन्धः, सामान्यसम्बन्धेनैवातिप्रसङ्गे निरस्ते विशेषजिज्ञासा विशेषोक्तिश्च विशेषजिज्ञासादिवदनार्थिकैवेति निरस्तम्; वृत्त्यविद्ययोर्ब्रह्मणोऽनध्यासेऽपि तयोरेव ब्रह्मण्यध्यासात्सम्बन्धोपपत्तेः । अतस्तत्र तात्त्विसम्बन्धाभावात् कथं तद्दृष्टान्तेन दृग्दृश्ययोरपि तात्त्विकसम्बन्ध इत्युच्यते? तथा च प्रसिद्धविशेषे बाधिते सामान्यस्यैव बाधशङ्कया अतिप्रसङ्गे प्राप्ते विशेषजिज्ञासाया विशेषोक्तेश्च साफल्यान्न ते निरर्थिके । एतेन सम्बन्धस्य

नाम वस्त्वन्तरं तादृशमङ्गीक्रियते; अननुभवेन सम्बन्धमात्रस्य सम्बन्धानङ्गीकारात्, अपित्वाकारमात्रं वृत्तौ तुच्छीयताप्रयोजकमनिर्वाच्यम् । अन्यथा ध्वंसादौ प्रतियोग्यादिसम्बन्धे त्वयापि स्वीकृतेऽनुपपत्त्यापातादिति भावः ॥

सामान्यसम्बन्धेनेति । सम्बन्धसामान्येनेत्यर्थः । इति सत्येनेत्यादिः । प्रसिद्धविशेषे—सत्यसम्बन्धे । सामान्यस्य—सम्बन्धसामान्यस्य । बाधशङ्कयेत्यादि । यदि सत्यसम्बन्ध एव विशेषस्तदा विप्रकृष्टयोः सम्बन्धिनोस्तदसम्भवात्सम्बन्धसामान्यं न स्यात् । न चान्ययोः सम्बन्धो विप्रकृष्टयोर्विशिष्टबुद्धौ भाति; अन्यथाख्यात्यनङ्गीकारात्, दृग्दृश्यादिविशिष्टबुद्धेः प्रमात्वेनान्यथाख्यात्यसम्भवाच्च । सम्बन्धविषयक[1] एव विप्रकृष्टयोर्विशिष्टबोध इति स्वीकारे च सन्निकृष्टयोरपि स तथा स्यादित्यतिप्रसङ्गः । अथवा विशेषस्य बाधेऽपि[2] यदि सम्बन्धसामान्यं स्यात्तदा घटादिसामान्यान्तरमपि तथा स्यादित्यति-

[1] सम्बन्धाविषयक—क. ग. [2] विशेषस्याबाधेऽपि—ख. ग.

**प्रामाणिकत्वे यथाकथंचन लक्षणं भविष्यति । तथाहि–संयोगसमवायान्तर्भावे तल्लक्षणमेव लक्षणं भविष्यति, तदनन्तर्भावे तु तदुभयभिन्नसम्बन्धत्वमेव लक्षणमस्त्विति–निरस्तम्; उक्तयुक्त्या प्रामाणिकसम्बन्धस्य संयोगसमवायान्तर्भावस्य च दूषितत्वात् । तदुभयबहिर्भूतसम्बन्धत्वं तु वयमपि न निराकुर्मः, किंतु तस्य प्रामाणिकत्वम् । किञ्च दृग्दृश्ययोर्न तात्त्विकसम्बन्धः; सम्बन्धिभिन्नत्वेऽनवस्थानात् । न च–दृश्यत्वान्तरहीनस्य दृश्यत्वादेरिव सम्बन्धस्यापि स्वनिर्वाहकत्वं क्वचित् भविष्यतीति–वाच्यम्; दृश्यत्वमपि दृक्सम्बन्ध एव । तस्य च स्वनिर्वाहकत्वं न मायिकत्वं विनेति नास्माकं प्रतिकूलमभ्यधायि देवानांप्रियेण; अभिन्नत्वे सम्बन्धत्वायोगात् । न चैवमाध्यासिकसम्बन्धत्वेऽप्येतद्दोषप्रसङ्गः; तस्य मायिकत्वेन मायायाश्चाघटि-**

---

प्रसङ्गः । तस्माद्विशेषान्तरं मिथ्यासम्बन्धरूपं वाच्यम् । तच्च कथमुपपद्यत इति जिज्ञासा तदुपपादनं च न व्यर्थम् । सम्बन्धसामान्यस्थापनद्वारा उक्तातिप्रसङ्गनिरासस्य फलत्वादित्यर्थः । **सम्बन्धिभिन्नत्वे इति ।** दृग्दृश्ययोः सम्बन्धमात्रस्य स्वसम्बन्धिभिन्नत्वे इत्यर्थः । **अनवस्थानादिति ।** घटतद्दृशोः स्वभिन्नसम्बन्धे दृक्सम्बन्धान्तरं तत्रापि तदन्तरमित्येवमनवस्थानादित्यर्थः **स्वनिर्वाहकत्वं** स्वप्रति[1]सम्बन्धत्वम् । दृश्यत्वेऽनुपपत्तिपरिहाराय तदेव दृष्टान्तीकुर्वन् पशुरस्तीत्याह **देवानामिति ।** नन्वन्यत्र दृक्सम्बन्धः संबन्धिभ्यां भिन्नोऽपि स्वस्मिन् सम्बन्धितायां न तथात्वमपेक्षत इति स्वाभाव्यान्न मायिकत्वमित्याशङ्क्याह—**अभिन्नत्वे इति । सम्बन्धायोगात्** सम्बन्धत्वायोगात् । स्वं न[2] स्वस्य न वा स्वस्मिन्[3] प्रतीतेः स्वप्रतियोगिकत्वस्वानु-

---

[1] स्वं प्रति–ख. ग. [2] स्वेन स्वस्य–ग. [3] स्वस्मिन्निति क. ग.

तद्घटनापटीयस्त्वेन सर्वानुपपत्तेर्भूषणत्वात्। न चातिप्रसङ्ग-निराकरणार्थं दृग्दृश्ययोः सम्बन्धनिर्वचनं प्रकृतम्, न तु विषयत्वनिर्वचनम्, अतो विषयत्वखण्डनमनुक्तोपालम्भनमिति—वाच्यम्; विषयत्वखण्डनेन निरुच्यमानप्रकृतसम्बन्धस्यैव खण्डनात्। न च—विषयित्वानिरुक्तावपि विषयिणः सत्यत्ववत् विषयत्वानिरुक्तावपि विषयः सत्यः स्यादिति—वाच्यम्; विषयित्वानिरुक्तावपि विषयाध्यासेनैव तदुपपत्त्या विषयिणः सत्यत्वं युक्तम्; विषयत्वानिरुक्तौ तु विषयस्य सत्यत्वं न युक्तम्; विषयिणोऽनध्यस्तत्वेन विषयाध्यासमन्तरेणान्यस्योपपादकस्याभावात्। यत्र तु विषयिण एवाध्यासः, तत्र विषयः सत्य एव, यथा ज्ञान[1]विषयो ब्रह्म। न चोभयाध्यासः; शून्य-

---

यौगिकत्वयोः स्वस्मिन्नभावान्न स्व[2]सम्बन्धत्वम्। अन्यथा घटादावपि स्वस्यैव दृक्सम्बन्धत्वापत्तेरथापि घटादावनुभूयमानत्वाद्युक्तिबाधितत्वाच्च, सदसद्विलक्षणो मायिकः सम्बन्धो दृशः स्वीक्रियते, न तु तत्र तदन्तरमननुभवादिति भावः। **भूषणत्वादिति**। उक्तं हि खण्डने

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः॥ इति॥

यत्तु—ईश्वरशक्तेः सत्याया महिम्ना दृग्दृश्यतत्सम्बन्धादीनामनुपपन्नत्वेऽपि सत्यत्वं, मायायां शक्तिं विहाय तस्यामेव भक्तरुचितत्वादिति, तत्तुच्छम्; अनुपपन्नस्यापीश्वरशक्त्यादेः सत्यतापादकत्वे हि शुक्तिरूप्यादेरपि तत्कथं न कुर्यात्। **न चेति**। भिन्नत्वेऽनवस्थानादिनेति शेषः। **तदुपपत्त्येति**। अधिष्ठानान्यमिथ्यात्वस्यैवोपपादकमिति भावः। **अन्तरेणेति**। विनिगमकाभावाद्विषयतत्सम्बन्धयोर्मिथ्यात्वमुप-

---

[1] अज्ञान.   [2] स्वं प्रति—क. ग.

वादप्रसङ्गात् । अन्यतराध्यासे च विनिगमकमनुवृत्तत्वव्यावृत्तत्वप्रकाशत्वजडत्वादिकमेव । तस्माद्विषयिणो नित्यदृशोऽनध्यासाद्विषयस्यैवात्राध्यासः । न च—"प्रमाणजातं[1] स्वविषयावरणे" त्यादियुक्त्या दृग्विषयत्वरूपदृश्यत्वस्य हेतूकरणेन च त्वयापि विषयत्वं निर्वाच्यमेवेति—वाच्यम्; तत्वतोऽनिर्वाच्यत्वेऽप्यध्यस्तत्वेन घटादिसमकक्षनिर्वाच्यत्वस्य सम्भवात् । ननु—कथं प्रमाणज्ञानविषयोऽध्यस्त इति—चेन्न; प्रपञ्चविषयकज्ञाने तत्वावेदकत्वलक्षणप्रामाण्याभावादिति गृहाण । अत एव—

'यादृशं विषयत्वं ते वृत्तिं प्रति चिदात्मनः ।

---

पादकं न तु तत्सम्बन्धमात्रस्येत्यर्थः । **अन्यतराध्यासे** । विषयविषयिणोरन्यतराध्यासे आवश्यके । **अनुवृत्तत्वे इत्यादि** । यद्यपि यद्भ्रमान्तरानुवृत्तं तदवश्यं तदेतद्भ्रमाधिष्ठानमेतद्भ्रमेऽनारोपितमिति वा न व्याप्तिः; शुक्तिरूप्याद्यवच्छिन्ने चैतन्ये भ्रमान्तरोदयेन शुक्तिरूप्यादेः स्वभ्रमानधिष्ठानत्वादिना व्यभिचारात् । नापि सर्वभ्रमानुवृत्तत्वमनारोपितत्वे व्यतिरेकी हेतुः; तावतापि शुक्त्याद्यवच्छिन्नचैतन्यस्याधिष्ठानत्वासिद्ध्यादितादवस्थ्यात् । तथापि यद्यद्भ्रमबाधानुवृत्तं तत्तद्भ्रमाधिष्ठानमित्यादिव्याप्तिर्बोध्या । ज्ञानस्वरूपं च सर्वभ्रमबाधे विषयतयानुवृत्तं शुक्तिरूप्यादिभ्रमं प्रत्यपि शुक्त्यवच्छिन्नसद्रूपेण तत्तथा । शुद्धब्रह्मरूपेणापि तद्बाधनस्वरूपयोग्ये अखण्डाकारज्ञाने तत्तथा । यत्स्वप्रकाशं तन्न मिथ्या; तद्बाधस्य तेन भास्यत्वासम्भवात्तत्र भासकान्तरकल्पने च गौरवात् । आदिना विनाशित्वाविनाशित्वसङ्ग्रहः । यद्विनाशि तन्न सर्वभ्रमाधिष्ठानं; तद्विनाशे तस्याधिष्ठानत्वासम्भवादित्यादि बोध्यम् । **तत्वेति**—त्रिकालाबाध्येत्यर्थः । **सत्ता**—त्रिकालाबाध्यता ।

[1] प्रमाणज्ञानं.

तादृशं विषयत्वं मे दृश्यस्यापि दृशं प्रति' ॥ इति निरस्तम्; चिदात्मनोऽनध्यासेपि वृत्तेस्तत्राध्यस्तत्वेन तद्दृष्टान्तेन प्रकृतेऽप्यनध्यासस्य वक्तुमशक्यत्वात्। स्यादेतत्—मिथ्यात्वनिर्वचनात्तत्साधनं दृश्यत्वादिकं निर्वक्तव्यमेव, न हि घटाद्यसङ्कीर्णाकारज्ञानं विना तद्विलक्षणव्यवहारः। [1]अथ निरुक्तासङ्कीर्णाकारज्ञानमात्रेण तदुपपत्तिः, तर्हि तुल्यं ममापि। इयांस्तु विशेषः; यत्तव स आकारः सद्विलक्षणः, मम तु त्वन्मतसिद्धप्रातिभासिकवैलक्षण्यसाधकमानासिद्धसत्ताकः। न हि लक्षणोक्त्यनुक्तिभ्यां सदसद्वैलक्षण्यरूपानिर्वचनीयत्वहानिलाभौ; ब्रह्मण्यपि श्रौतस्यपि जगत्कारणत्वादिलक्षणस्य खण्डनरीत्या असम्भवात्, त्वयैव—

कीदृक्तत्प्रत्यगिति चेत्तादृगीदृगिति द्वयम्।
यत्र न प्रसरत्येतत्प्रत्यगित्यवधारय ॥ इति

ब्रह्मणोऽपि दुर्निरूपत्वोक्तेश्च, प्रपञ्चेऽपि त्वदुक्तानिर्वाच्यत्वसमकक्षलक्षणसम्भवाच्च, 'यत्कठिनं सा पृथिवी' त्यादिश्रुत्या पृथिव्यादीनामपि लक्षणत्वोक्तेश्च। तस्मादनिर्वाच्यत्वं न सत्त्वविरोधि। सत्त्वेऽप्यनुद्भूतत्वादेवानिर्वाच्यत्वोपपत्तेः। न च निर्वाच्यत्वमपि सत्त्वप्रयोजकम्; न हि शुक्तिरूप्यस्यापीतरभेदसाधकं रूप्यत्वं प्रातीतिकजातिरूपतया सुवचमपि सत्यम्। किञ्च

---

तादृक्—परोक्षम्। ईदृक् अपरोक्षम्। यत्र न प्रसरति। यस्य प्रतीचो न समसत्ताकलक्षणम्, यथाश्रुते मूलाज्ञानविषयत्वादेर्लक्षणत्वसम्भवादसङ्गतेः। दुर्निरूपत्वोक्तेः—अनिर्वाच्यस्यैव लक्षणस्योक्तेः। अनिर्वा-

[1] अथानिरुक्ता.

ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादि खण्डनोक्तरीत्या दुर्वचमिति ब्रह्म तत्त्वतोऽनानन्दाद्यात्मकं स्यात्। तस्मादिक्षुक्षीरादिमाधुर्यवदनिर्वाच्यमपि विषयत्वं सदेवेति, अत्रोच्यते— दृश्यत्वादेरनिर्वचनीयत्वं किं सत्वेन, उत स्वरूपेण। नाद्यः, सत्वेनानिर्वचनीयत्वेऽपि तत्तदाभासलक्षणानालिङ्गितत्वमात्रेण हेतुत्वोपपत्तेस्तन्निर्वचनानपेक्षणात्। न द्वितीयः, तात्त्विकातात्त्विकसाधारणेन दृक्सम्बन्धित्वादिना रूपेण दृग्विषयत्वस्य [1] निर्वक्तुमशक्यत्वात्। लक्षणोक्त्यनुक्त्योर्न सदसद्वैलक्षण्यरूपानिर्वाच्यत्वहानिलाभकरत्वमिति यदवोचः, तदपि न; पूर्वोक्तव्यापकानुपलब्धिसहिताया लक्षणानिरुक्तेरुक्तरूपानिर्वचनीयत्वप्रयोजकत्वात्। यत्त्वानन्दत्वादिना धर्मेण कीदृगित्यादिना स्वरूपेण च दुर्निरूपत्वाद्ब्रह्मणोऽप्यनिर्वचनीयत्वप्रसङ्ग इति, तन्न; आनन्दत्वादिधर्मवत्तया दुर्निरूपत्वेऽपि दुःखप्रत्यनीकत्वाद्युपलक्षितस्वरूपस्य सत्वेन निर्वक्तुं शक्यत्वात्। न चैवं

---

च्यत्वं सत्यस्य लक्षणादेर्निर्वचनाभावः। खण्डनोक्तरीत्येति ॥

अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्तानि कस्मान्नु[2] यथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥

इति ॥ स्वरूपेण—सत्वान्यरूपेण। तन्निर्वचनानपेक्षणात्—सत्वेन निर्वचनानपेक्षणात्। व्यापकानुपलब्धीति। सत्यत्वव्यापकाविप्रकर्षाद्यनुपलब्धिरूपविप्रकर्षादिग्राहकमानेत्यर्थः। मिथ्यात्वसाधकमानेति यावत्। लक्षणानिरुक्तेः—सत्यलक्षणानुक्तेः कीदृगित्यादिना समसत्ताकलक्षणात्मकेन। सत्वेन निर्वक्तुं शक्यत्वात्। तत्सदित्यस्यानन्दत्वसत्यत्वाद्युपलक्षितस्वरूपप्रमापकशब्दस्य प्रयोक्तुं शक्यत्वात्।

[1] निर्वक्तुं शक्यत्वात्. [2] कस्मान्न—ग.

**प्रपञ्चे सत्वं शक्यनिर्वचनम्; बाधकसद्भावात्। अतएव— कठिनस्पर्शवत्त्वादिना [1] पृथिवीत्वादीनां निर्वचनमस्त्येव, [2] सत्वेऽप्युद्भूतत्वादिना [3] निर्वाच्यत्वोपपत्तिरिति—निरस्तम्; न हि निरुक्तिविरहमात्रेणानिर्वाच्यत्वं ब्रूमः, किंतु सत्वादिना निरुक्ति-विरहेण। स च प्रपञ्चे बाधकादस्त्येव। नच--ज्ञाने विषय-स्याध्यस्तत्वे तदज्ञानजन्यं तज्ज्ञाननिवर्त्यं चाध्यासं प्रति विषयत्वं तदनुविद्धतया प्रतीत्यभावश्च न सम्भवतीति— वाच्यम्; चैतन्यमात्राज्ञानजन्यत्वात्, तज्ज्ञाननिवर्त्यत्वाच्च घटादिप्रपञ्चस्येत्युक्तत्वात्। सदिति प्रतीयमानाधिष्ठानचैत-न्यानुविद्धतया प्रतीयमानत्वमप्यस्त्येव। तस्मात्सत्यत्वे दृग्दृ-श्यसम्बन्धानुपपत्तिर्दृढैव ॥**

*इत्यद्वैतसिद्धौ प्रपञ्चमिथ्यात्वानुकूलतर्कनिरूपणम् ॥*

**प्रतीत्यभावश्चेति** त्रयं विषयस्य वाच्यं, तच्चेति शेषः, तदज्ञानकार्या-ध्यासविषयत्वं तज्ज्ञाननिवर्त्याऽध्यासविषयत्वं **तदनुविद्धतया** प्रती-त्यभावश्चेति त्रयं न सम्भवतीत्यर्थः। ज्ञानस्य स्फुरणकाले विषया-ध्याससत्वादाद्यद्वितीययोरसम्भवः। अधिष्ठानस्यावृतत्वेन तदनुविद्ध-तयाऽऽरोप्याऽप्रतीतिर्वाच्या, सापि न सम्भवति; घटं जानामीति ज्ञानानुविद्धतयैव विषयप्रतीतिरिति तृतीयासम्भव इति भावः। **अस्त्ये-वेति**। तथाच सद्रूप इव ज्ञानरूपेऽनुविद्धतया विषयप्रतीतेरधिष्ठानं न तद्रूपं अपि तु शुद्धचिन्मात्रं, तदनुविद्धतया च प्रतीतिः सम्भवत्येवेति भावः ॥

ननु प्रपञ्चमिथ्यात्वसिद्ध्यनुकूलतर्का मादृशैः प्रत्याख्यातुम-शक्यत्वेऽपि कुशलैरन्यैः प्रत्याख्यास्यन्त इति चेत्, नूनं बलवता

[1] पृथिव्यादीनां. [2] सत्त्वेऽप्यनुद्भूत. [3] अनिर्वाच्य.

ताडितानां मत्कुले जनिष्यमाणा बलवन्तस्तांस्ताडकां[1] स्ताडयिष्यन्तीति वदतां वङ्गजानां भ्रातरो भवन्तः । नहि प्रत्याख्यानासामर्थ्यं भवतामेवेति ब्रूमः; किंतु सर्वेषामतो विषयस्यानिर्वाच्यत्वस्वाभाव्यम् । उक्तं हि खण्डने "न हि प्रमातॄणामसामर्थ्यादनिर्वचनमपि तु विषयस्वाभाव्या"दिति । यत्तु निर्वचनाभावेन विषयस्यानिर्वाच्यत्वकथनं न युक्तम्; नहि स एव तत्, किंतु सदसद्विलक्षणत्वादिरूपं, अन्यथा मुखादिसंस्थानस्यानिर्वचनमात्रादनिर्वाच्यता स्यादिति, तत्तुच्छम् । युक्तं वि[2]रुद्धत्वज्ञापनद्वारा केन रूपेण निर्वचनाभावेन सद्विलक्षणत्वज्ञापनात् मुखादिसंस्थानेऽपि तस्य तथात्वमिष्टमेव । तदेवं रोदने न वो निस्तारः,[3] किंतु चिरसञ्चितपातकैः पात एवाधः । श्रूयते हि—

'असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' ॥

स्मर्यते च—

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते[4] ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ इति ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गोऽयं मिथ्यात्वे तर्कनिर्णयः ॥

इत्यनुकूलतर्कनिरूपणम् ॥

[1] स्त्वां ताडकं—क. ग. [2] युक्तिविरु—क. ग. [3] रोदनेन न वो न निस्तारः—ग. [4] पाद्यते—ग.

# अथ प्रतिकर्मव्यवस्थोपपत्तिः.

ननु—विश्वस्याध्यासिकत्वे प्रातिभासिकस्थल इव विषयेन्द्रियसन्निकर्षाधीनायाः प्रतिकर्मव्यवस्थाया अनुपपत्तिरिति-चेन्न; वृत्तेः पूर्वमेव घटादीनां चैतन्येऽध्यासेन प्रातिभासिक-स्थलापेक्षया वैलक्षण्यात् । तथा हि—अन्तःकरणं चक्षुर्वत्तेजो-वयवि । तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति । यथा नद्याद्युदकं प्रणाड्या निस्सृत्य केदाराद्या-कारं भवति, सैव वृत्तिरित्युच्यते । तत्र जीवचैतन्यम-विद्योपाधिकं सत्सर्वगतमन्तःकरणोपाधिकं सत्परिच्छिन्न-मिति मतद्वयम् । तत्राद्ये विषयप्रकाशकं जीवचैतन्यम् । द्वितीये ब्रह्मचैतन्यम् । आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृतमावृतं

---

## अथ प्रतिकर्मव्यवस्थोपपत्तिः.

प्रतिकर्मव्यवस्थाया इति । कस्यचित्पुरुषस्यैव कश्चिदेव विषयो ज्ञानकर्मेति प्रतिनियतज्ञानकर्मव्यवस्थाया इत्यर्थः । चक्षुर्वदिति । तथाच यथा चक्षुस्तेजस्त्वात्प्रभाव[1]च्छीघ्रं सूर्यमण्डलादिसंयुक्तरूपेण परिणमते, तथा मनोऽपीति भावः । देहान्तस्तिष्ठदेव विषयेण संयुज्यते, न तु देहाद्विभक्तम्; यथा नद्यां तिष्ठत्तदुदकमन्येनापि संयुज्यत इत्याशयेनाह—यथा नदीति । सर्वगतमिति । यथा गोत्वादिजाते-रुदयनाद्युक्तं सर्वगतत्वं स्वरूपसम्बन्धेन, तथा जीवस्यापि सर्वसम्बन्ध्य-विद्याप्रतिबिम्बत्वरूपं (वा) तस्य सर्वगतत्वं अविद्याकार्यगत[2]परिच्छेदा-भावो वेति भावः । अनावृतमावृतं चेति । जीवस्य जगदुपादानत्व-पक्षे घटादिना तादात्म्यान्मनआदेरिव घटादेरपि सर्वदा भातीति

[1] सूर्यादिप्रभाव–ग. [2] कृत–क. ख. ग.

च । तत्राद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था ।

---

व्यवहार्यता स्यात्, अतो मनआद्यवच्छेदेनानावृतमपि घटाद्यवच्छेदेनावृतं जीवचैतन्यमुच्यते । तस्य जगदनुपादानत्वपक्षे तु घटादिना तादात्म्याभावात्सर्वसम्बन्ध्यविद्याप्रतिबिम्बत्वस्य[1] भासकतानियामकत्वे सर्वदा तद्भानापत्तेर्वक्ष्यमाणस्य भासकतानियामकसम्बन्धस्य कादाचित्कत्वादेव कादाचित्कभानसम्भवादनावृतमेव तदिति भावः । उपरागार्थेति । स्वप्रतिबिम्बाधारवृत्तेः संश्लेषो विषयत्वं[2] चेत्युभयरूपोपरागार्थेत्यर्थः । रूपाद्याकारवृत्तिमात्रेण रसादेरपि भानं स्यात्, रसादावपि रूपाद्याकारवृत्तिसंश्लेषसत्त्वादतो विषयत्वेति । परोक्षवृत्तिमात्रेण रूपादेर्भानं स्यादतः संश्लेषेति । अविद्यामनस्तत्परिणामानां सर्वदा भानात्सार्वदिकं स्वप्रतिबिम्बाधारत्वमेवोपरागस्तन्नियामकः । घटादौ स्वच्छत्वाभावेन तदसम्भवात्तद्घटितोक्तोपरा[3]गकाल एव तद्भानाच्च स एव तन्नियामक इति भावः ॥

ननु—मनस्त्वसुखत्वादौ न प्रतिबिम्बाधारत्वं न वा तद्वृत्तिसंश्लेष इति तद्भानं न स्यात्, न हि जातिगुणादेः प्रतिबिम्बोपाधितास्ति । अथ स्वप्रतिबिम्बवत्तादात्म्यतद्वत्तादात्म्यतद्वत्तादात्म्यादेरपि[4] भासकतानियामकोपरागत्वं वाच्यम्; तथापि धर्मादेर्ब्रह्मणश्च भानं स्यात्, स्वप्रतिबिम्बाश्रय[5]मनस्तादात्म्यसत्वादिति—चेन्न; मनस्त्वादावपि वक्ष्यमाणेन[6] स्वच्छत्वस्य प्रतिबिम्बवत्वस्य च कल्पनासम्भवात्, तस्याप्यविद्यापरिणामत्वप्रयुक्तसत्वगुणान्वयान्मनआदेरिव सर्वदा भानाच्च, चित्प्रतिबिम्बयोग्यतारूपस्वच्छताकल्पनौचित्यात्, प्रतिबिम्बवत्तादात्म्या-

---

[1] प्रतिबिम्बवत्वस्य—क. ग. [2] संश्लेषविषयत्वं—ग. [3] तोपरागकाल—ग.
[4] स्वप्रतिबिम्बवत्तादात्म्यादेरपि-ग. [5] बिम्बक्षयम—क. स्वप्रतिबिम्बमन—ग. [6] वक्ष्यमाणमानेन—क. ख. ग.

द्वितीये त्वावरणाभिभवार्था । परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशकतदधिष्ठानचैतन्याभेदाभिव्यक्त्यर्था। अनावृतत्वपक्षे

---

त्युपरागस्य भासकतानियामकत्वेऽपि धर्मादौ ब्रह्मणि चावरणसत्त्वादनावृतोक्तोपरागस्यैव तथात्वेनादोषाच्च । अत एव स्वतो मनउपरक्तस्यापि धर्मब्रह्मादेर्न सर्वदा भानम्; आवरणेन चैतन्यस्य तदाकारत्वाभावादिति, विवरणसिद्धान्तबिन्द्वादावुक्तम् । एवं च घटादावुपरागो ब्रह्मणि त्वावरणाभिभव एव वृत्तेः प्रयोजनमिति ध्येयम् ॥

**द्वितीये त्विति** । तु शब्दाज्जीवोपरागार्थत्वव्यवच्छेदः । जीवस्योपादानत्वे तादात्म्यरूपोपरागस्य सिद्धत्वादिति शेषः । **अभेदाभिव्यक्त्यर्थेति** । मनोऽनवच्छेदप्रयुक्तं जीवाद्भेदं मनःपरिणामः स्वाव[1]च्छेदाद्ब्रह्मणि वृत्तिर्नाशयति। स्वत एव मनोवच्छिन्नस्य सुखाद्यवच्छिन्नब्रह्मचैतन्यस्य तु सुखादिभासनाय न वृत्त्यपेक्षा । ब्रह्मणो धर्मादेश्च मनोऽवच्छिन्नस्याप्यावृतत्वादेव न भानम् । अतएव ब्रह्मणि न जीवाभेदाभिव्यक्त्यर्था वृत्तिः, किं त्वावरणाभिभवार्था । उक्तं च सिद्धान्तबिन्दौ—जीवस्य जगदुपादानत्वे आवरणाभिभवार्था । ब्रह्मणस्तत्वे त्वावरणाभिभवार्था प्रमातृचैतन्योपरागार्था चेति। यद्यप्यभेदार्थेत्येव वक्तुमुचितमधिकस्य व्यर्थत्वापत्ते,[2] तथाप्यभेदसम्पत्तिमात्रेण नाभेदाभिव्यक्तिः; रूपादिमात्राकारवृत्त्या रसाद्यवच्छिन्नचैतन्यस्य प्रमात्रभेदसम्पत्तावपि मया रसो विदित इत्यादिव्यवहाराभावात् । अतोऽभेदव्यवहारसम्पादकवृत्तिविषयत्वरूपमभेदाभिव्यञ्जकं वृत्तिप्रयोजकं[3] ज्ञापयितुमभिव्यक्तीत्युक्तम् । शुद्धं ब्रह्म नोपादानं जगतः; किं त्वविद्योपहितं विशिष्टं वेति पक्षे तु शुद्धब्रह्मणि मनस्तादात्म्याभावेन जीवानुपरागादेवाभानोपपत्तावप्यावरणस्य शुद्धं ब्रह्म न जानामीत्यनुभवसिद्धत्वात्;

---

[1] परिणामस्वा—क. ग. [2] व्यर्थत्वात्—ख. [3] प्रयोजकं—ग.

**ह्यनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः; असङ्गत्वात्, यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्यते, न तु केसरादिमद्व्यक्त्या; यथा वा प्रदीपप्रभा आकाशगन्धरसादिव्यापिन्यपि तान्न प्रकाशयन्ती रूपसंसर्गितया रूपमेव प्रकाशयति तद्वत्;**

---

जगदुपादानाच्छुद्धब्रह्मणो[1] मनस्तादात्म्येन जीवोपरक्तत्वात्तत्रावरणावश्यकत्वाच्च तदभिभवार्थत्वं वृत्तेरक्षतमिति दिक्। **वृत्त्यैवोपरज्यत इति।** भासकतानियामकः सम्बन्धो वृत्त्यैवेत्यर्थः। तेन सम्बन्धान्तरस्य घटादौ सत्वेऽपि न क्षतिः। एवकारेण घटादिभिरुक्तोपरागो व्यवच्छिद्यते, न त्वविद्यादिनेति स्फुटयति—**न तु विषयैरिति।** वृत्तिं विनेति शेषः। वृत्तिविषयैर्वृत्तिद्वारैवोपरज्यते, न तु स्वप्रतिबिम्बत्वादि[2]सम्बन्धेनेति फलितोर्थः। **असङ्गत्वादिति।** असङ्गो ह्ययं पुरुष इत्यादिश्रुत्या सङ्गबोधकमानाभावेन च जीवस्य प्रपञ्चसम्बन्धराहित्यादित्यर्थः। ननु—तर्ह्यविद्याद्यनादिष्वविद्यावृत्तिमनस्तत्परिणामसुखादिषु चापि जीवस्य सङ्गो न स्यात्तत्राह—**यथा गोत्वमित्यादि।** स्वरूपसम्बन्धेन स्वसमवायिसंयोगादिसम्बन्धेन वा सर्वगतमपि गोत्वादि सास्नादिमद्व्यक्तावेवाभिव्यक्तं तथा स्वप्रतिबिम्बाश्रयाविद्यासम्बन्धित्वादिरूपसम्बन्धेन सर्वगतमपि जीवचैतन्यमविद्यादिष्वेव प्रतिबिम्बितत्वादिरूपाभिव्यक्तियुक्तमित्यर्थः। **व्यापिनी**—संयोग[3]समवायादिना संबद्धा। **अप्रकाशयन्ती**—तमोनिवृत्तिद्वारा चाक्षुषविषयानकुर्वती। **प्रकाशयति**—तमोनिवृत्तिद्वारा चाक्षुषविषयं करोति। **तद्वदिति।** यथा गोत्वादिचाक्षुषे सास्नाद्यवच्छिन्न एव चक्षुःसन्निकर्षः कारणम्, रूपचाक्षुषं प्रत्येव प्रभाधीना

---

[1] जगदुपादानब्रह्मणो—ख. जगदुपादानशुद्धब्रह्मणो—ग. [2] प्रतिबिम्बवत्त्वादि-ख. ग. [3] संयोगसंयुक्तसम—क. ख. ग.

तमोनिवृत्तिः कारणमिति प्रत्यक्षादिसिद्धम्, तथा जीवस्यान्यत्रासङ्गस्याप्यविद्यामन आदिषु प्रतिबिम्बितत्वादिरूपः सङ्गः श्रुतिप्रत्यक्षादिरूपमानसिद्धः । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुतिर्हि जीवस्याविद्याप्रतिबिम्बत्वमाह । ईशस्यापि प्रतिबिम्बत्वे आभासेनेति तृतीयाया अभेदोऽर्थः । बिम्बत्वे तु ज्ञाप्यत्वमर्थः । तादात्म्येन जीवस्यैवापेक्षणीयतयेशस्यापि प्रतिबिम्बज्ञाप्यत्वात् । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । स एष इह प्रविष्ट आनखाग्रेभ्य' इत्यादिश्रुतिरपि जीवस्याविद्या[1]प्रतिबिम्बत्वमाह ॥

यद्यपि भूतेन्द्रियादिकमपि क्षेत्रपदार्थः व्यवहाररूपाय जीवस्य प्रतिचक्षणाय यत्र प्रतिबिम्बः सोऽपि वीप्सितरूपपदार्थः, क्षेत्रे[2] आनखाग्ररूपावधिप्रतियोगीन्यपि क्षेत्राणि पूर्वश्रुत्यैकवाक्यत्वानुरोधात्, तथापि भूतादिषु जीवस्य प्रतिबिम्बरूपोपरागसत्त्वे सदा भानापत्तेस्तदन्यक्षेत्रमविद्यादिरूपं प्रकृते गृह्यते । एवं 'आभास एव च' । 'अत एव चोपमा सूर्यकादिवत्' इत्यादिसूत्राण्यपि तथा बोधयन्ति । अज्ञोऽहं नेशः सुखी दुःखी इत्यादिप्रत्यक्षमप्यन्यथानुपपत्तिसहकृतं तद्बोधकम् । जीवस्याविद्यामनआदावनुपादानस्य तादात्म्याभावेन प्रतिबिम्बरूपोपरागं विना तद्भानासम्भवात् । वार्तिकमतेऽविद्यादौ स्मरणानङ्गीकारान्न तत्र वृत्त्यावश्यकता । विवरणमते तु नावेदिषमित्यादिस्मरणार्थमविद्यादिविषयिका वृत्तिरावश्यकी । जीवेशभेदस्यानादित्वे तु तत्र न प्रतिबिम्बोऽन्यथा सुषुप्तावपि तद्भानापत्तेः ; किंतु तद्गोचरा सविकल्पकवृत्तिरहङ्कारजन्या । न हि सुषुप्त्युत्तरमज्ञानमिव स स्मर्यते ; अभावस्य तस्य

[1] स्याविद्यादि–ग. [2] क्षेत्रं–ग.

केवलाग्नेर्यदाह्यस्याप्ययःपिण्डादिसमारूढाग्निदाह्यत्ववच्च, केवलचैतन्याप्रकाश्यस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम् । एवं चानावृतत्वपक्षे तत्तदाकारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तदर्थप्रकाशः । आवृतत्वपक्षे तत्तदाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्यावरणाभिभवेन तत्तदर्थप्रकाशः । अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्यावच्छेदकान्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्यक्तौ तत्तत्प्रकाशः । यद्यपि प्रकाशकमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं चान्तःकरणावच्छिन्नम्, तथापि चैतन्याभेदेनाभिव्यक्तत्वाद्व्यवस्थोपपत्तिः ॥

---

निर्विकल्पकावेद्यत्वाच्च । तस्य सादित्वं तु वक्ष्यते ॥

नन्वेवमविद्यादौ भासकतानियामकत्वेन क्लृप्तस्य प्रतिबिम्बसम्बन्धस्याभावाद्घटादिकं जीवस्य नैव भायात्तत्राह—केवलाग्नीत्यादि । यथा अग्निः सर्वगोऽपि तृणायःपिण्डादिनाऽभिव्यक्तो दहति; न त्वनभिव्यक्तः; तथा वृत्त्यभिव्यक्त एव जीवः प्रकाशयतीत्यन्वयव्यतिरेकाभ्यां स्वप्रतिबिम्बवद्वस्तूपरागोऽपि भासकतानियामक इति भावः । चैतन्याभेदेनेति । अधिष्ठानीभूतस्य ब्रह्मचैतन्यस्य मनोऽनवच्छेदप्रयुक्तो यो जीवाद्भेदस्तदभावेनेत्यर्थः ॥

यत्तु जीवस्य सर्वगतत्वपक्षे स एव विषयप्रकाशक इत्यत्र विषयाधिष्ठानत्वं हेतुरुक्तः, तन्मौढ्यात्; सर्वगतत्वपक्षे आवृतत्वपक्षे[1] उपादानत्वेऽप्यनावृतत्वपक्षे जीवस्यानधिष्ठानत्वात् । यदपि सर्वगतो जीवो वृत्त्यैव तद्विषयेणाप्युपरज्यताम्, गोत्वदृष्टान्तस्तु विषमः; गोत्वं हि सास्नादिमद्व्यक्तया ज्ञायते, ब्रह्म तु वृत्त्या न ज्ञायते, किंतु ज्ञानत्वमापद्यते ।

---

[1] अनावृतत्वपक्षे—ग.

प्रभापि न दृष्टान्तः; तस्यास्तमो[1] निवर्तकत्वरूपस्य प्रकाशकत्वस्याकाशेऽपि तुल्यत्वात्। नहि सा आकाशादिसंसृष्टं तमो न निवर्तयतीति, तदपि मौढ्यात्; उक्तमानबलेन वृत्त्यादौ[2] जीवस्य प्रतिबिम्बितत्वेऽपि विषये तत्सत्वे मानाभावात्। न च—सुखं साक्षात्करोमीति व्यवहार इव घटं साक्षात्करोमीति व्यवहारस्तत्र मानम्, सर्वदा तत्प्रसङ्गवारणाय चक्षुरादिसन्निकर्ष एवास्तु घटादिप्रतिबिम्बितत्वहेतुः, अविद्यागतसत्वगुणान्वयाद्घटादेरपि प्रतिबिम्बोपाधितायोग्यस्वच्छतासम्भवः, जीवेशभेदमनस्त्वादाविव रूपादावपि प्रतिबिम्बसम्भव इति—वाच्यम्; चक्षुरादेरिव विनिगमकाभावात्तत्संयुक्तमनसोऽपि सम्प्रयोगो विजातीयत्वेन घटादिगते चित्प्रतिबिम्बे हेतुर्वाच्यः, तथाच घटादिसंप्रयुक्तमनस एव जीवप्रतिबिम्बत्वेन[3] क्लृप्तस्य घटादिभासकतोपपत्तौ घटादेर्जीवप्रतिबिम्बत्वे मानाभावः, रूपपरिमाणाद्यनन्त[4]गुणादिष्वनन्तप्रतिबिम्बकल्पने गौरवं च। न च—यथा त्वन्मते द्रव्यरूपपरिमाणा[5]दिष्वेका मनोवृत्तिस्तथा तेष्वेकमेव मम प्रतिबिम्बमिति—वाच्यम्; अनेकेषु दर्पणेषु मुखस्येवानेकेषु द्रव्यरूपादिषु कल्पितसंसर्गरूपस्य प्रतिबिम्बस्यानेकत्वावश्यकत्वात्, समवायस्येवाऽऽश्रयभेदेन कल्पितसम्बन्धस्य भेदावश्यकत्वात्, रूपं पश्यामीत्याद्यनुभवसिद्धचाक्षुषादिवृत्त्यावश्यकत्वेन तयैव रूपादिप्रतिबिम्बस्यान्यथासिद्धेश्च। विषयगतप्रतिबिम्बहेतुत्वेन त्वया वाच्यस्य विषयसंयुक्तेन्द्रियस्य मन्मते विषयावच्छेदेन मनःसंयुक्तत्वात्, तस्यैव वृत्तिरूपत्वेन चक्षुरादिमनःपरिणामत्वेन च मया स्वीकाराच्च। तथा च सम्प्रयोगरूपा वृत्तिर्न तु तत्कार्येति भावः। गोत्वादिदृष्टान्तस्तु युक्त एव; यथा गोत्वादिप्रत्यक्षे व्यक्ति-

[1] तस्यां तमो—ग. [2] मनोवृत्त्यादौ—ग. [3] प्रतिबिम्बवत्वेन—ख. [4] परिणामाद्यनन्त—ख. [5] परिणामा—ख.

नन्वियं प्रतिकर्मव्यवस्था नोपपद्यते, तथाहि—स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात्पूर्वं घटादेः सत्वे प्रतीतिमात्रशरीरत्वव्याप्तकाल्पनिकत्वायोगः। न च—काल्पनिकत्वविशेषः प्रातिभासिकत्वादिरेव तद्व्याप्तः; गौरवात्। न च—प्रतीतिमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वादिनैव कल्पितत्वं भविष्यति; प्रतीतिमात्रशरीरत्वाभावेन ज्ञाननिवर्त्यत्वाभावस्याप्यापाद्यत्वात्, प्रतीते-

---

विशेषः प्रयोजकस्तथा जीवस्य प्रतिबिम्बितत्वे वृत्तिरिति साम्यात्, यथा प्रभा तमोनिवृत्तिद्वारा रूपस्यैव भानव्यवहारे प्रयोजिका न त्वाकाशादेस्तथा स्वप्रतिबिम्बद्वारा जीवो मनस्तत्परिणामादावेव तत्प्रयोजको न घटादाविति साम्याच्च। **गौरवादिति**। **कल्पितत्वं** मिथ्यात्वं, प्रातीतिकत्वं चावरणशून्यस्वव्याप्यस्वकालकत्वम्। तयोश्च समशरीरत्वान्नैकस्यान्यापेक्षया गुरुत्वम्, प्रत्युत मिथ्यात्वमेव स्वान्यूनसत्ताकाभावप्रतियोगित्वादिघटितत्वाद्गुरु। प्रातीतिकत्वस्य गुरुत्वेऽपि स्वसमानाधिकरणव्याप्यतावच्छेदकान्तराघटितत्वात्तदकिञ्चित्करमिति गौरवोक्तिः परस्य भ्रान्त्यैवेति ध्येयम्॥

यत्तु कर्तृजन्यत्वव्याप्यं यथा न शरीरजन्यत्वम्; किंतु जन्यत्वम्, तथा कल्पितत्वं स्वप्रतीतिव्याप्यस्वकालकत्वरूपस्य प्रतीतिमात्रशरीरत्वस्य व्याप्यम्, न तूक्तप्रातीतिकत्वम्; सति सम्भवेऽधिकवृत्तितावच्छेदकरूपेणैव व्याप्यत्वस्वीकारादिति, तन्न; दृष्टान्ते नीलधूम इव व्यर्थत्वेनैवाव्याप्यत्वात्। न्यूनवृत्तितावच्छेदकरूपेण व्याप्यत्वास्वीकारे गन्धादेर्द्रव्यत्वादिव्याप्यत्वस्य तत्र तत्रोक्तस्योच्छेदापत्तेः। उक्तप्रातीतिकत्वस्य चिन्मात्रेऽपि सत्वेन कल्पितत्वाधिकवृत्तित्वाच्च॥

नन्विन्द्रियसन्निकर्षं विना प्रत्यक्षवृत्त्यसम्भवात्प्रपञ्चो न मायात्राह—**प्रतीतेरिति**। भानस्येत्यर्थः। तावता प्रपञ्चः रात्योऽस्तु

विश्वसत्यत्वेन वा मिथ्यात्वेऽपि स्वप्नादिवदिन्द्रियसन्निकर्षनिरपेक्षतया वोपपत्तेः, व्यावहारिकत्वस्यापि भ्रान्तिदैर्घ्यमात्रेणोपपत्तेश्चेति—चेत्, मैवम्; प्रतीतिमात्रशरीरत्वस्य कल्पितत्वं न व्याप्यम्; दृग्दृश्यसम्बन्धानुपपत्त्यादिसहकृतोक्तानुमानात्प्रपञ्चे कल्पितत्वे सिद्धे प्रत्यभिज्ञाबलाच्च स्थायित्वे तत्रैव व्यभिचारात्। न च—शुक्तिरूप्यादिप्रत्यभिज्ञासाम्यं प्रकृतप्रत्यभिज्ञाया इति—वाच्यम्; प्रतीत्यविशेषेऽपि वणिग्वीथीस्थशुक्तिरूप्ययोः परीक्षितत्वापरीक्षितत्वाभ्यां स्थायित्वास्थायित्वरूपविशेषसम्भवात्। तथापि वा परोक्षवृत्तेरिवापरोक्षवृत्तेरपि प्रकाशत्वमस्तु, किं तदुपरक्तचैतन्येनेति—चेन्न; परोक्षस्थलेऽपि परोक्षवृत्त्युपरक्तचैतन्यस्यैव प्रकाशकत्वात्। अथ तत्राप्यपरोक्षैकरसचैतन्योपरागे विषयापरोक्ष्यप्रसङ्गः, न; विषयचैतन्याभिव्यक्तावेव विषयस्यापरोक्ष्यम्। न च परोक्षस्थले तदस्ति; विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यन्तं वृत्तेरगमनात् अन्तरेव तत्र धीसमुल्लासात्। अपरोक्षस्थले तु प्रमातृचैतन्याभेदाभिव्यक्ताधिष्ठानचैतन्योपरागो विषयेऽस्ति, तत्र विषयस्य कर्मकारकत्वात्। न च—वृत्तिगतविशेषादापरोक्ष्यम्; तत्र हि विशेषो विषयकृतश्चेदोमिति ब्रूमः। जातिकृतस्तु विशेषो न सम्भवति; सोऽयमिति प्रत्यभिज्ञायां परोक्षत्वापरोक्षत्वयोः सङ्करप्रसङ्गात्, अव्याप्यवृत्तित्वात्, प्रमात्वादिना सङ्करप्रस-

---

इन्द्रियजमनोवृत्तिं विनापि स्वप्नवत्प्रत्यक्षो वास्त्विति भावः। **परीक्षितत्वेति।** मानान्तरसंवादाविसंवादेत्यर्थः। व्यावहारिकस्य व्यवहारकालीनतादृशपरीक्षितत्वेन व्यवहारकाले स्थायित्वसिद्धिः। प्रातीतिकस्य तु न मानान्तरेण संवादः। नात्र रूप्यमित्यादिबाधकेन विसंवादश्चेति

श्राव । किञ्च वृत्तेर्जडत्वादेव न प्रकाशकत्वम् । न च–वृत्तावन्तः[1]करणवृत्त्यापि स्वप्रकाशत्वं ज्ञातत्ववदिति—वाच्यम्; स्वप्रकाशात्मसम्बन्धेनैव तस्याः प्रकाशत्वोपपत्तौ तत्स्वप्रकाशत्वे मानाभावात् । किञ्च घटं जानामीत्यनुभूयमानसकर्मकवृत्त्यन्या संवित् घटप्रकाशरूपा घटः प्रकाशत इत्याकारकानुभवसिद्धैव । न च––करोति, यतते, चलति, गच्छतीत्यादावेकार्थत्वेऽपि सकर्मकाकर्मकत्वभावत्वदर्शनादत्राप्येकार्थत्वेऽपि तथा स्यादिति—वाच्यम्; तत्राप्येकार्थत्वाभावात् । अनुकूलयत्नो हि कृञ्धात्वर्थः, यत्यर्थस्तु यत्नमात्रम्, एवं गम्यर्थ उत्तरसंयोगफलकः स्पन्दः, चलत्यर्थस्तु स्पन्दमात्रम्; तथाचैकार्थकत्वे कुत्रापि न सकर्मकत्वाकर्मकत्वव्यवस्था । न च—त्वन्मते

---

भावः । स्वप्रकाशात्मेति । आत्मस्वप्रकाशत्वं वक्ष्यते । भाष्यादिसिद्धा युक्तिश्च दर्शिता । किञ्च सुखादौ वृत्त्यकल्पनलाघवात्स्वप्रकाशात्मैव तत्रापरोक्षता । तथा च घटादावपि स एव सेत्यादि प्रपञ्चितमस्माभिः पूर्वम् । सकर्मकवृत्तीति । घटकर्मकवृत्तीत्यर्थः । घटप्रकाशेति । घटकर्तृकप्रकाशेत्यर्थः । तथा चैकस्यां क्रियायामेकस्य कर्तृत्वकर्मत्वयोरेकस्याः क्रियायाः सकर्मकत्वाकर्मकत्वयोश्च विरोधादनावृतचिद्रूपा क्रिया घटकर्तृका स[2]त्वापादकाज्ञानशून्या[3] चिद्रूपा ज्ञानक्रिया । तत्राज्ञानांशे घटस्य निरूपकतया विशेषणत्वाद्गौणः कर्मत्वव्यवहार इति मन्मतम् । त्वन्मते तु वृत्तिरेव घटकर्मिका वाच्येति तदन्या क्रिया घटकर्तृकावश्यं वाच्या । सा चानावृतचिद्रूपा, आत्मा सदा प्रकाशत इत्यादौ तथा क्लृप्तत्वादिति भावः । अनुकूलयत्नः कालसम्बन्धप्रयोजकयत्नः । कुत्रापि नेति । नन्विदमयुक्तम्; आख्यातपदभावना-

---

1 करणावृत्त्यपि. 2 घटकर्तृका अस–ख. ग. 3 शून्यचिद्रूपा–क. ख. ग.

पद्योरेकार्थत्वेऽपि सकर्मकाकर्मकत्वादिव्यवस्थादर्शनात्, न हि यजेतेत्यत्रेव यागेन भावनेत्यत्र यागकरणिका भावना प्रतीयते। एवं तृतीयादिविभक्तिकारकशब्दयोः कारकार्थकत्वेऽपि कारकशब्दार्थस्य तृतीयाद्यर्थकारकान्तरान्वयो न तु तृतीयाद्यर्थस्य। न हि कारकं कारकेण गच्छतीत्यादौ द्वितीयाद्यर्थकारके कारकपदार्थस्येव तृतीयाद्यर्थान्वयोऽस्ति। करोतियतत्योरपि न भिन्नार्थकत्वम्; कृताकृतविभागेनेत्यादिकुसुमाञ्जलौ कृञो यत्नाद्यर्थत्वात्तेन चाख्यातविवरणात्, तस्यापि यत्नोऽर्थ इत्यादिमणौ च तथोक्तत्वादिति, चेन्न; भावनादिपदस्य सिद्धावस्थभाव[1]नादिबोधकत्वेनाख्यातादिसमानार्थत्वाभावात् कारकादिपदस्य शक्तिविशिष्टबोधकत्वेन शक्तिमात्रवाचकतृतीयादिसमानार्थत्वाभावात्। उक्तं हि हरिणा—

साध्यभावस्तु[2] यस्तस्याः स आख्यातनिबन्धनः।
सिद्धभावस्तु यस्तस्याः सन्यङादि[3]निबन्धनः॥

उक्तं च वार्तिके 'कृदन्तेन हि[4] कारकविशिष्टं द्रव्यमुच्यते न तु विभक्त्येव निष्कृष्टा शक्तिः। तथा च कारकं कारकेणेति स्यादि' ति। किञ्चाख्यातपदेनैव कारकवाचिपदानां भट्टमते साकांक्षत्वात्स्वार्थप्रकारकविभक्त्यर्थकारकविशेष्यकबोधे विभक्तेर्निराकांक्षत्वाच्च यागेन भावनेत्यादौ नोक्तान्वयबोधः। घटं यतत इत्यादौ तु न निराकांक्षत्वम्, गमनादौ यतिलक्षणाकाल तस्य साकांक्षत्वात्। एवं च यत्नमात्रस्य यत्यर्थत्वे तत्र कर्मानन्वयः, तस्य धात्वर्थतावच्छेदकफलत्वाभावादेव, उक्तफलविशेष्यकस्वार्थप्रकारकबोध एव यत्यादिसमभिव्याहृतद्वितीयायाः साकांक्षत्वात्। अत एवेच्छत्यादेरपि विषयताप्रयोजकेच्छादि-

[1] वस्थाभावना–क.　[2] सध्याभावस्तु–ग.　[3] साधनादि, सयनादि ग.　[4] कृदन्तेन न हि–ग.

वाचित्वात्फलवाचकत्वं वैय्याकरणसम्मतम् ॥

अपि च करोतेर्यत्नमात्रवाचित्वे सकर्मकता न स्यात्, धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम्, तदन्वयिस्वार्थकत्वं सकर्मकत्वमिति तार्किकाः। स्ववाच्यव्यापारव्यधिकरणफलवाचित्वं सकर्मकत्वमिति शाब्दिकाः। क्रियाजन्यफलमात्रस्य कर्मतात्वे तदन्वयिस्वार्थकस्य सकर्मकत्वे च यत्यादेरपि सकर्मकतापत्तेः। अन्यथा गम्यादेरपि क्रियामात्रवाचितां किं न रोचयेः। अत एव पाकारम्भात्पूर्वं पाकाय [1]यत इति स्यान्न तु पाकं करोतीति; कालसम्बन्धोपधायककृतेः कृञर्थत्वात्तदानीं पाकनिष्ठकालसम्बन्धानुपधानात्। कृताकृतेत्यादौ तु यत्नत्वमात्रेणाख्यातकरोतिवाच्यता नाभिप्रेता किं त्वनुकूलयत्नत्वेन। तत्र हि फलानुकूलत्वेन करोतिवाच्यता न तु यत्नत्वेन; यत्नार्थकपदसमानार्थत्वापत्तेः। रथो गच्छतीत्यादौ करोत्यर्थकाख्यातस्य मुख्यत्वे बाधकाभावाच्चेत्याशङ्क्य—

कृताकृतविभागेन कर्तृरूपव्यवस्थया।

यत्न एव कृतिः पूर्वापरस्मिन् सैव भावना ॥

यत्नपूर्वकत्वस्य प्रतिसन्धानात्पदादौ कृतत्वव्यवहारात्तदप्रतिसन्धाने सऽहेतुकत्वप्रतिसन्धानप्यङ्कुरादावकृतत्वव्यवहारादाश्रयाथकतृजन्तकर्तृपदस्य कृत्याश्रय एव प्रयोगाद्यत्न एव कृतिर्नानुकूलमात्रम्। सा च परस्मिन् स्वकार्ये पूर्वा कारणीभूतेति भावना भावयतीति व्युत्पत्तेः। तथा च तदर्थककृञा विवरणादाख्यातमपि तदर्थकमेव। अनुकूलयत्नरूपे समुदिते प्रवृत्तमाख्यातं रथो गच्छतीत्यादावेकदेशेऽनुकूले प्रयुज्यते, साङ्गवेदाध्येतृब्राह्मणप्रवृत्तश्रोत्रियपदमिव ब्राह्मणमात्रे, इत्यादिकं मूलटीकाभ्यां प्रतिपादितम् ॥

[1] यतत–ख. ग.

एवं मणावप्युक्तम्—'तण्डुलक्रयणादिदशायां पचतीति स्यादित्याशङ्क्य यादृशोऽनुकूलताविशेषाश्रयो व्यापारः परेषामर्थः, तादृशो यत्नो ममापीत्याद्यपि चोक्तम् ॥

यत्तु यत्नत्वमेव शक्यतावच्छेदकमनुकूलत्वं तु सम्बन्धतया भातीति पक्षधरादिभिरुक्तम्, तन्न; तथा सति वर्तमानत्वसमानाधिकरणानुकूलत्वस्यैव सम्बन्धत्वापत्त्या वर्तमानत्वादेर्लडाद्यवाच्यतापत्तेः। समवायादीनामेव सम्बन्धत्वेन भानम्, न वर्तमानत्वादेरित्युक्तौ त्वनुकूलत्वादेरपि वाच्यत्वौचित्यात्, करोतेः सकर्मकत्वानुरोधेनानुकूलयत्नार्थतावश्यकत्वे आख्यातस्यापि तदावश्यकत्वाच्च। अन्यथा ग्रामं गच्छतीत्यादावपि संयोगादेः सम्बन्धतापत्तेः। अतएव 'भूवादयो धातव' इति सूत्रे कृञ उत्पादनार्थकत्वमन्यथा यतिवदकर्मकतापत्तेरिति महाभाष्यादावुक्तम्। 'कर्मवत्कर्मणा तुल्यक्रिय' इति सूत्रे चान्यैरुक्तम्—

'कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते।
किंतूत्पादनमेवातः कर्मवत्स्याद्यगाद्यपि' ॥
कर्मकर्तर्यन्यथा तु न भवेत्तद्दृशेरिवेति ॥

अस्यायमर्थः, यतः सकर्मकतानुरोधेनोत्पादनं कृञोऽर्थः, अतः कर्मवदित्यादिसूत्रेण यगादेर्विहितत्वात्क्रियते कटः स्वयमेवेति स्यात्। यत्नमात्रार्थकत्वे तु यत्नस्य कर्मस्थत्वाभावात्तन्न स्याद्दृश्यते घटः स्वयमेवेतिवत्। यद्यपि दृश्यादिधातुः कर्मस्थफलं वक्ति सकर्मकत्वात्, तथापि प्राप्य कर्मणि न कर्मवद्भावः। तदुक्तम्—

'निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तोऽयं व्यवस्थित' इति ॥

प्राप्यत्वं तु क्रियाकृतविशेषेणानुपलभ्यमानत्वम्। न ह्ययं घटः

परिणतेरकर्मकत्वात्परिणतिविशेषभूताया वृत्तेः कथं सकर्मकत्व-मिति—वाच्यम्; एकस्य हि सकर्मकत्वाकर्मकत्वे एकरूपेण विरुद्धे न तु रूपान्तरेणापि; मानाभावात्, यथा स्थितेरकर्मिकाया अप्यगमनत्वेन रूपेण सकर्मकत्वम्; तथा परिणतित्वेन

---

केन चिद्दृष्ट इति ग्रामोऽयं केनचिद्गत इति वा शक्यं कर्मदर्शनेन ज्ञातुम्, शक्यते तु घटं करोतीत्यादौ निर्वर्त्ये, सोमं सुनोतीत्यादौ विकार्ये च तथा ज्ञातुमिति। किञ्च विशिष्टयत्नत्वं[1] न शक्यतावच्छेदकम्; येन गौरवम्। किंतु बीजादिनाऽङ्कुरः कृत इत्यादौ करोतेः, रथो गच्छतीत्यादावाख्यातस्य चानुकूले निरूढलक्षणायाः क्लृप्तत्वात्। घटं करोतीत्यादौ पचतीत्यादौ च यत्नप्रतीतेस्तयोर्यत्नशक्तत्वात्सकर्मकत्वानुरोधेन तत्र करोतेस्तत्समानार्थकत्वेनाख्यातस्य चानुकूलयत्नबोधकत्वस्य संभवादिति दिक्। वृत्तेः वृत्त्यवच्छिन्नचितः। वृत्त्युपहितरूपेण वृत्तिप्रयुक्ताज्ञानाभावोपहितरूपेण वा चितोऽप्युत्पत्तिस्वीकारेण परिणामत्वं बोध्यम्। यथाश्रुतं तु वृत्तेर्मन्मते ज्ञानत्वाभावेन सकर्मकत्वे मानाभावादसङ्गतम्। स्थितेः गतिनिवृत्तेः। अगमनत्वेन गमनसंसर्गाभावत्वेन। यद्यपि ग्रामं न गच्छति ग्रामस्यागमनमित्यादौ गमनस्यैव सकर्मकत्वम्, तथापि गच्छ गच्छसि चेद्दूरमित्यादौ गम्यर्थस्यागमनस्यापि सकर्मकत्वमक्षतम्। अभावविशेषणीभूते गमने विशेषणीभूतोत्तरसंयोगान्वयित्वेन दूरदेशस्य कर्मत्वम्। यद्वा संयोगाभावानुकूलक्रियात्वमगमनत्वमिह विवक्षितं संयोगाभावरूपफलशालित्वेन तस्य कर्मत्वमिति बोध्यम्। यत्तु स्थितेरगमनत्वेनेव प्रकाशस्यापि ज्ञानत्वेन सकर्मकत्वम्। प्रकाशत्वं च न ज्ञानत्वम्; किंतु तेजोज्ञानान्यतरत्वमिति,

[1] विशिष्टं यत्नत्वं—क.

**रूपेणाकर्मिकाया अपि वृत्तेर्ज्ञानत्वेन सकर्मकत्वं भविष्यतीत्यदोषः। ननु—तर्ह्यतीतः प्रकाशत इति धीर्न स्यात्, न; इष्टापत्तेः, तत्रापि वृत्तिप्रतिबिम्बितचैतन्यसत्वेन प्रकाशत इत्यादिप्रयोगसम्भवाच्च । ननु—यथा अज्ञानविरोधिवृत्तावनुभवत्वं नास्ति किन्त्वन्यत्र; तथा द्वेषविरोधिवृत्तेरन्यत्रेच्छात्वमित्यपि स्यादिति—चेन्न; बाधकसत्वासत्वाभ्यां विशेषात्, अत्रेव तत्र सकर्मकाकर्मकविलक्षणक्रियाननुभवाच्च । यथाच वृत्त्यतिरिक्तभानसिद्धिस्तथा स्वयंज्योतिष्ट्वप्रस्तावे विस्तरेण वक्ष्यामः ।**

---

तन्न; अन्धकारे घटत्वाचप्रत्यक्षवतामिदानीं घटो मे प्रकाशते न प्रभेति व्यवहारादुक्तान्यतरस्य प्रकाशत्यर्थप्रकाशरूपत्वे प्रभायां तादात्म्येन तजोऽन्तरसत्वेन तदभावव्यवहारानुपपत्तेः । **इष्टापत्तेरिति** । आवरणशून्यचित्तादात्म्यस्योक्तधीविषयत्वादिति शेषः । यत्र भाट्टमते प्राकट्यं, तार्किकादिमते च लौकिकप्रत्यक्षं, तत्रैव मन्मते तद्धीस्वीकारादिति भावः । अभ्युपेत्याह—**तत्रापीति** । अज्ञातत्वेन साक्षिभास्यतामात्रेण तादृशबुद्ध्यभावादाह—**वृत्तिप्रतिबिम्बितेति** । **वक्ष्याम इति** । 'तमेव भान्तमनुभाति सर्वम्, अत्राऽयं पुरुषः स्वयंज्योतिः, स्वप्रकाशमहानन्दमात्मैवैतदि' त्यादिश्रुत्यादिना आत्मा स्वप्रकाशज्ञानरूप इति वक्ष्यते ॥

ननु—तमेवेत्यादिश्रुतेः सूर्यादिप्रकाश ईशाधीन इत्यर्थः, सर्वशब्दस्य प्रकृतपरत्वात्, सर्वेभ्यो दर्शपूर्णमासौ, इतिवत्। प्रकृतं च सूर्यादि, त्वन्मते नित्यातीन्द्रियस्य चिदभास्यत्वेन सर्वपदसङ्कोचावश्यकत्वात् । प्रकृतपरेदंशब्दसमभिव्याहारादेतद्वाक्यार्थनिर्णायके 'अपि च स्मर्यते' इति सूत्रे त्वद्भाष्येऽपि 'यदादित्यगतम्' इत्यादिस्मृतेरुदाहृतत्वात् । त्वन्मते ब्रह्मणो भानत्वेन भान्तमिति शतृप्रत्ययस्य तस्येति

**नन्वस्तु चैतन्यस्य विषयप्रकाशकत्वम्, तथाप्यन्तःकरणस्य देहान्निर्गतिर्न कल्प्या; परोक्षवैलक्षण्याय विषयस्याभिव्यक्ताऽपरोक्षचिदुपराग एव वक्तव्यः, चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रम्; तस्य च तत्संश्लेषं विनापि परोक्षवृत्तेरिव तत्सन्निकृष्टकरणजन्यत्वेनैवोपपत्तिः, न तु प्रभाया इव वृत्तेस्तदावरणनिवर्तकत्वादौ तत्संश्लेषस्तन्त्रम्; नेत्रान्निर्गच्छद्भ्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्जलादेर्भ्रुवनेत्रमध्यवर्तिनः**

---

षष्ठ्याः प्रपञ्चे ब्रह्मान्यभानाभावेनानुशब्दस्य चानुपपत्तेरिति—चेन्न; अत्र हीदंशब्दस्यापरोक्षार्थवाचकत्वात्, सर्वशब्देनापि तादृशयावदर्थो बोध्यते। अथ वेश्वरं प्रति नित्यातीन्द्रियस्यापि भासमानत्वादिदंशब्दो बुद्धिस्थमात्रपरः। उभयथापि सर्वशब्दो न प्रकृतसूर्यादिपरः; इदंशब्देनैव तल्लाभे तद्वैयर्थ्यापत्तेः। तस्मादिदंशब्दस्य प्रकृतसूर्यादिपरत्वशङ्कानिरासाय सर्वपदमिति भासमानं यावदुभाभ्यां[1] लभ्यते। 'अपि च स्मर्यत' इति सूत्रे तु 'न तद्भासयत' इत्यादिकं 'यदादित्यगतमि'त्यादिकं चोदाहृतम्। तच्च न प्रकृतविरुद्धम्; आद्येन ब्रह्मणोऽन्याभास्यत्वम्, अन्त्येन ब्रह्मण एव भासकत्वं प्रतिपादितमिति, भामत्यां व्यख्यातत्वात्। शतृप्रत्ययादिकमपि न विरुद्धम्; प्रभां भान्तीमनुभाति घटादिकम्, तस्या भासा घटादि भातीतिवदग्निं दहन्तमनुदहत्यय इत्यादिवच्चोपपत्तेः। उक्तं च—ब्रह्मास्ति भातीत्यादौ लकारः साधुत्वार्थ इति ध्येयम्

तस्यास्तदाकारापरोक्षवृत्तेः। **संश्लेषस्तन्त्रमिति**। संश्लेषः संश्लेषमात्रं मात्रपदाद्विषयत्वव्यवच्छिन्नसंश्लेषलाभः। तेन कज्जलादौ

---

[1] उभाभ्यां पदाभ्यां–ग.

परमाण्वादेश्चापरोक्षत्वापातादिति चेत्, न; विषयेष्वभिव्यक्तचिदुपरागे न तदाकारत्वमात्रं तन्त्रम्; परोक्षस्थलेऽपि प्रसङ्गात्, किन्तु तत्संश्लेषः; प्रभाया विषयसन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वदर्शनात्तैजसस्य मनसोऽप्यज्ञानरूपावरणाभिभवाय तत्संश्लेष आवश्यकः, भ्रुवादिदेहमध्यवर्तिपरमाण्वादावतिप्रसङ्गस्तु तदाकारत्वप्रयोजकसामग्रीविरहादेव परिहरणीयः, अन्यथा इन्द्रियसन्निकर्षादेर्विद्यमानत्वात्परमाण्वाद्याकारताया दुर्निवारत्वापत्तेः। तस्मात्प्रभा (वद्) विशेषान्वयव्यतिरेकाभ्यां यत्क्लृप्तं सन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वम्, तस्य तदाकारत्वरूपविशेषापे-

---

वृत्त्यविषयेऽप्यापत्तिर्युज्यते । अपरोक्षत्वापातादिति । भ्रुवाद्याकारवृत्तेः संयोगादिरूपसंश्लेषस्य तत्रापि सत्वादिति शेषः । उक्तवृत्तेः कज्जलादिसंयोगे मानाभावात्संयुक्तसंयोगादेः संश्लेषस्यावरणानिवर्तकत्वादयुक्तमेतत्परोक्तम् । परन्तु घटाद्याकारवृत्तेः रूपादाविव रसादावपि संयुक्तसमवायादिसत्वादापरोक्ष्यापत्तिः । न च--विषयत्वसमानाधिकरणः संश्लेषो निवर्तकः[1] सम्बन्ध इति---वाच्यम्; अपरोक्षवृत्तिविशेषत्वस्यैव निवृत्तितन्त्रत्वौचित्यादिति ध्येयम् । प्रसङ्गादिति । अपरोक्षवृत्तिविषयता नावरणनिवृत्तौ तन्त्रम्; वृत्तावपरोक्षत्वजात्यनङ्गीकारस्योक्तत्वात्, शाब्दापरोक्षवृत्तौ तदसम्भवादपरोक्षविषयकत्वस्य चावरणनिवृत्तेः[2] पूर्वमसत्वात् । ननु---विषयत्वसंश्लेषोभयसम्बन्धेन निवर्तकत्वे विशेषणविशेष्यभावस्याविनिगमत्वाद्गौरवाच्च लाघवादपरोक्षत्वजातिं प्रकल्प्य तया वृत्तिर्विषयत्व[3]मात्रसम्बन्धेन निवर्तिकास्तु. अपरोक्षविषयकशाब्दवृत्तावपि तादृशजातिरननुगतकारणनियम्यास्तु. तत्राह---तस्मादिति । सन्निकृष्टतेजस्त्वेनेति । सन्निकर्षसम्बन्धेन तेजस्त्वे-

[1] निवर्तकतावच्छेदक.—ग. [2] निवृत्तिपूर्व-क—ख. ग. [3] वृत्तिविषयत्व-ग.

**क्षायामपि न त्यागः। न हि पृथिवीत्वगन्धत्वादिना कार्य-कारणभावे आवश्यके अनित्यगुणत्वद्रव्यत्वादिना तत्त्यागः।**

---

नेत्यर्थः । **न त्याग इति** । यद्विशेषयोः कार्यकारणता तत्सामान्ययोरपीति न्यायात्तमोऽज्ञानान्यतरनिवृत्तौ संयोगादिसम्बन्धेन तेजस्त्वेन हेतुत्वम् । न चैवमालोकसंयोगे सतीन्द्रियसन्निकर्षे चासति शाब्दादिवृत्त्या घटादा[1]वप्यज्ञानसामान्यनिवृत्तिः स्यात्, चक्षुःसन्निकर्षे सत्यालोकसंयोगे चासति तमोनिवृत्तिः स्यादिति—वाच्यम्; विषयत्वं संयोगाद्यन्यतमं चेत्युभयसम्बन्धेन वृत्तिज्ञानमज्ञाननाशकं संयोगाद्यन्यतम सम्बन्धेन प्रभा तमोनाशिकेत्यस्यापि स्वीकारात् । अन्यतमत्वं चाखण्डं स्वरूपत एव निवेश्यत इति न गौरवम् । एवं चापरोक्षविषयकशाब्दवृत्तावपरोक्षत्वजातिनियामककल्पनं तादृशजातिकल्पनं चाप्रामाणिकगौरवपराहतम् । नाड्यादिगोचर शाब्दादिवृत्तेर्नाड्यादौ संयोगसत्वे मानाभावः; तस्य फलबलकल्प्यत्वान्नाड्यादिविषयकवृत्तिकालेऽन्यत्र मनःस्थितिकल्पनात् । वस्तुतस्तु ऐन्द्रियकवृत्तेर्यत्र विषयत्वं तत्रावच्छेदकत्वमपि स्वीक्रियते, विनिगमनाविरहेण द्वयोरपि सन्निकर्षादिकार्यतावच्छेदकसम्बन्धत्वादित्यादेरुक्तत्वात् परोक्षवृत्तेश्च स्वविषयावच्छिन्नत्वे मानाभावात् । स्वावच्छेदकावच्छिन्नविषयकाज्ञानत्वसम्बन्धेन वृत्तिज्ञानं हेतुस्तूलाज्ञानवृत्तिप्रतियोगितासम्बन्धेन नाशं प्रत्युच्यते । मूलाज्ञानवृत्तिप्रतियोगितासम्बन्धेन नाशं प्रति तु स्वपरिणामिमनःपरिणामित्वसम्बन्धेन विजातीयवृत्तिर्हेतुरित्युक्तम् । न चापरोक्षवृत्तेर्घटादिविषयकत्वं विनेच्छादिहेतुत्वासम्भवो विषयतादि सम्बन्धेन सन्निकर्षादिकार्यत्वे विनिगमक इति वाच्यम्; असत्वापादकाज्ञानाभावस्यैव तद्व्यक्तित्वेनेच्छादिहेतुत्वात्, अन्यथा सुखादौ वृत्त्य-

वज्ञान—ग.

अतएव तदितरहेतुसाकल्ये सति घटचक्षुःसन्निकर्षस्यैव घटानुभवजनकत्वम्, न तु घटमनःसन्निकर्षस्य, तद्विलम्बेन तद्विलम्बाभावादिति निरस्तम्; आवरणभङ्गे सन्निकृष्टतेजःकरणत्वावधारणेन तस्याप्यावश्यकत्वात्। न च—स्वाशेनप्रत्यक्षे चक्षुरादिवन्नियतगोलकद्वाराभावेनान्तःकरणनिर्गत्ययोगादावरणाभि-

---

विषये इच्छाद्यसम्भवात्। **घटचक्षुरिति**। घटेन्द्रियेत्यर्थः। **घटानुभवेति**। घटप्रत्यक्षेत्यर्थः। **जनकत्वं** प्रयोजकत्वम्। **करणत्वावधारणेन** सामान्यतः सन्निकर्षसम्बन्धेन तेजस्त्वेन, विशेषत उक्तसम्बन्धेन वृत्तिज्ञानत्वेन कारणत्वावधारणेन। यद्यपि चाक्षुषवृत्तिस्थले आलोकादितेजः सम्भवति, तथापि रासनादिवृत्तिस्थले तदभावात्, कार्यान्यथानुपपत्त्या तेजस्त्रसरेण्वादिसन्निकर्षकल्पनायाश्चानुगतनियामकाभावेनासम्भवात्, तावतापि वृत्तिसंश्लेषरूपविशेषप्रयोजकानिर्वाहादिन्द्रियसन्निकर्षरूपानुगतकारणान्नियम्यो वृत्तिज्ञानरूपतेजःसन्निकर्ष एवावरणाभिभवद्वारा साक्ष्युपरागघटनद्वारा वा विषयसाक्षात्कारे प्रयोजक इति भावः। वस्तुतस्तु मनसोऽणुत्वमते विषये संश्लेषो यद्यपि न सम्भवति; मरणपर्यन्तं तस्य देहात्यागात्, तथापि तस्य महत्त्वमते तत्सम्भवाच्चाक्षुषादिवृत्तौ चक्षुरादेर्मनसो वा सन्निकर्षो विजातीयत्वेन हेतुरित्यत्र विनिगमकाभावाद्विषयमनःसन्निकर्षश्चाक्षुषादिस्थले आवश्यकः, विषयेन्द्रियसन्निकर्षस्य च तत्र न हेतुता; मानाभावात्। न चैवं—प्रत्यक्षादिसिद्धमनःसन्निकर्षेणैव चाक्षुषादिनिर्वाहे तदन्यथानुपपत्त्या कारणत्वेन चक्षुरादि न कल्प्येतेति—वाच्यम्, तदन्यथानुपपत्त्या तत्कल्पनाभावेऽपि श्रुत्यादिसिद्धस्य चक्षुरादेर्मनस इव करणत्वस्य विनिगमका-

[1] कारण—ग.

भवानुपपत्तिरिति वाच्यम्; सर्वत्र तत्तदिन्द्रियाधिष्ठानस्यैव द्वारत्वसंभवात् । न चान्तःकरणवृत्तित्वाविशेषादिच्छाद्वेषादिरूपवृत्तयोऽपि देहान्निर्गत्य विषयसंसृष्टा भवन्तीति कथं न स्वीक्रियत इति—वाच्यम्; आवरणाभिभावकतेजस्त्वस्य तत्प्रमापकस्य ज्ञानवत्तत्राभावात् । ननु घटप्रकाशकं चैतन्य-

---

भावेन स्वीकारात् । अतएव विवरणे चाक्षुषादिकरण[1]त्वेन चक्षुरादेरनुमानं दूषयित्वा श्रुत्यादिना तत्सिद्धिरुक्ता । **तत्तदिन्द्रियेति** । स्वाधिष्ठानगोलकमेव तत्तदिन्द्रियाणां स्वकरण[2]मनोवृत्तिनिर्गमे द्वारमिति त्वगिन्द्रियस्य 'ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्' इति श्रुतेस्त्वगेवाधिष्ठानम्, तत्करणकमनोवृत्तौ द्वारमित्यर्थः । 'त्वगिन्द्रियस्य साक्षादाधारो देह' इति विवरणे देहलक्षणोक्तेर्देहव्यापकः पवनविशेषस्त्वगिन्द्रियमिति तार्किकाद्युक्तेश्च देह एव वा तदधिष्ठानं तथेति बोध्यम् । **संभवादिति** । तत्तदिन्द्रियकरण[3]वृत्तौ तत्तदिन्द्रियमनोयोगहेतुत्वस्य सर्वैः स्वीकारात् । तादृशयोगस्य चान्यावच्छेदेनेव विषयसंयुक्तेन्द्रियभागावच्छेदेनापि मनोमहत्त्वमते विनिगमकाभावेनावश्यकत्वात्, त्वाचवृत्तिं प्रति त्वगिन्द्रियस्येव मनसोऽपि सन्निकर्षस्य विनिगमकाभावेन हेतुत्वादिन्द्रियसंयुक्तविषयभागावच्छिन्नसंयोग एव मनसो विषये निर्गम इति स्थितेः त्वगिन्द्रियगोलकद्वारा मनोनिर्गमः सम्भवतीति भावः । **आवरणाभिभावकतेजस्त्वेनेति** । विषयसंयुक्तेन्द्रियसंयुक्तमनस्त्वस्येत्यपि बोध्यम् । **तत्प्रमापकस्य** । विषयसंसृष्टत्वप्रमापकस्य । **ज्ञानवदिति** । चाक्षुषादिवृत्तिज्ञानरूपेण परिणतमनसीवेत्यर्थः । **अत्रेदं बोध्यम्**—विषयतासम्बन्धेन चाक्षुषादौ चक्षुरादेः सन्निकर्षो हेतुर्न तु मनस इति पररीत्यङ्गीकारेऽपि नास्माकं क्षतिः;

[1] कारण-ग. [2] [3] करणक-ग.

**ग्रुपदेशसाहस्र्यनुसारेण घटाकारधीस्था चिद्वा, परागर्थ-प्रमेयेष्वित्यादिवार्तिकोक्तरीत्या धीप्रतिबिम्बितचैतन्याभेदाभि-व्यक्तविषयाधिष्ठानचैतन्यं वा, नाद्यः; आध्यासिकसंबन्धस्या-तन्त्रतापातात् । न द्वितीयः; आवश्यकेन विषयसंश्लिष्टवृत्ति-प्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत्तत्प्रकाशस्याप्युपपत्तौ किं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनेनेति—चेन्न; प्रका-शकं तावदधिष्ठानचैतन्यम् । तच्चाध्यासेन विषयैः सह**

---

इन्द्रियमनोयोगस्य चाक्षुषादिहेतुत्वावश्यकत्वात् । अन्यावच्छेदेनेव विषयसंयुक्तभागावच्छेदेनापीन्द्रिये मनःसंयोगस्य विनिगमकाभावेन मनोमहत्त्वमते आवश्यकत्वाच्चाक्षुषादिवृत्तेर्विषयसंश्लेषो दैववशसंपन्न इति । **उपदेशसाहस्रीति** ।

घटैकाकारधीस्था चित् घटमेवावभासयेत ।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभास्यते ॥

इति रीतीत्यर्थः । **परागर्थेति** ।

'परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥

इति वार्तिकम् । **प्रकाशस्य** भातीत्यादिव्यवहारस्य । सर्वगतजीवस्या-नधिष्ठानत्वपक्षे आवरणाभावस्य स्वतः सिद्धत्वादावरणाभिभवं विनापि भासकत्वं युक्तं न तु तस्याधिष्ठानत्वपक्षे मनोऽवच्छिन्नचिद्रूपतापक्षे वा; प्रकाशस्य दीपादेरावृतस्याप्रकाशकत्वदर्शनादावृतचितः प्रकाश-कत्वासम्भवादित्याशयेनाह—**न प्रकाशकमित्यादि** । **प्रकाशकं** प्रका-शत इति व्यवहारप्रयोजकम् । **अधिष्ठानचैतन्यम्** अधिष्ठानाभिन्न-चैतन्यम् । **तच्च** अधिष्ठानं च । **अध्यासेनेति** । साक्षात्सम्बन्धान्वयन्यध्यस्ततादात्म्येन सम्बद्धमित्यर्थः । तथाचाद्यपक्षे प्रकाशकस्य जीवस्य

**साक्षात्सम्बद्धं, प्रकाशस्य च स्वयं भासमानस्य स्वसम्बद्धसर्वभासकत्वमपि क्लृप्तमेव; एतदनभ्युपगमे कल्पनान्तरगौरवापत्तेः। तच्चानाभिव्यक्तं निर्विकल्पकरूपमाच्छादितदीपवन्न प्रकाशकमिति तदभिव्यक्तिरपेक्षिता। तच्च परोक्षस्थले वृत्त्यवच्छेदेनैवाभिव्यज्यते। अपरोक्षस्थले तु वृत्तिसम्पर्कादावरणाज्ञानाभिभवे विषयोऽ[1]भिव्यज्यते; वृत्तेर्विषयपर्यन्तत्वात्। न च परोक्षस्थलेऽप्येवं प्रसङ्गः; द्वाराभावेनान्तःकरणनिर्गत्यभावात्। ननु—वृत्तेस्तदाकारत्वं न तावत्तद्विषयत्वम्; त्वयैव निरासात्,**

---

विषयेष्वाध्यासिकसम्बन्धाभावेऽपि न क्षतिः; यत्र विषयोऽध्यस्तस्तस्य प्रकाशकाभेद इत्युक्तनियमाप्रच्यवाद्द्वितीय[2]पक्षोऽपि युक्त इत्याह— **प्रकाशस्येति**। भातीतिव्यवहारविरोधिनाशकस्येत्यर्थः। तत्वं च तमोनाशकत्वादालोकस्येवाज्ञानाभिभावकवृत्त्यवच्छिन्नत्वाच्चितोऽपीति भावः। **स्वयं भासमानस्य**ोक्तविरोधिशून्यस्य। एवकारः शेषः। **कल्पनान्तरेति**। प्रयुक्तेति शेषः। भातीति व्यवहारे विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचितः प्रयोजकत्वे घटादौ तत्सम्भवति न तु सुखादावित्यनावृतचितोऽपि तद्वाच्यमिति कल्पनान्तराद्गौरवम्। अथ चावृतप्रकाशस्य [3]भासकत्वेऽपूर्वकल्पनाद्गौरवमिति भावः। नन्वभिव्यक्तचितः प्रकाशकत्वे घटादेरज्ञातत्वेन साक्षिभास्यता न स्यात्तत्राह—**तच्चेति**। प्रकाशकचैतन्यं चेत्यर्थः। **निर्विकल्पकरूपमिति**। तार्किकादिसिद्धनिर्विकल्पकतुल्यमित्यर्थः। तुल्यता च जानामीति व्यवहारा[4]विषयत्वेन। **आच्छादितेति**। यथा सूक्ष्मवस्त्राच्छादितो दीपोऽन्धतमसविरोध्यप्यवतमसाविरोधित्वाद्द्रव्यत्वादिरूपेण व्यवहारस्य प्रयोजको न तु रूपपरिमाणविशेषवत्त्वेन व्यवहारस्य, तथा चैतन्यमावृतमज्ञातत्वेन व्यवहारं

---

[1] विषये. [2] प्रच्यवः। द्वितीय—ग. [3] चावृत्तप्रकाशस्य—ग. [4] व्यन्हार—ग.

**नापि तस्मिंश्चैतन्योपरागयोग्यतापादकत्वं, तदज्ञानाभिभावकत्वं वा; उभयोरपि तदाकारत्वप्रयोज्यत्वेन तत्त्वायोगात्, नापि घटादिवत् पृथुबुध्नोदराद्याकारत्वम्; साकारवादापातात्, संस्थानहीनजातिगुणादिवृत्तेर्निराकारत्वप्रसङ्गाच्च, घटपटाविति समूहालम्बेन विरुद्धनानाकारत्वापत्तेश्चेति चेन्न; अस्तीत्यादितद्विषयकव्यवहारप्रतिबन्धकाज्ञाननिवर्तनयोग्यत्वस्य, तत्सन्निकृष्टकरणजन्यत्वस्य**

---

प्रयोजयति न ज्ञातत्वेनेति भावः । **आपन्नजाड्येति** । प्रमातृचैतन्यानुपरागेत्यर्थः । **आपादकेति** । सम्पादकेत्यर्थः । तस्मिंश्चैतन्यस्य भासकतानियामको यः सम्बन्धस्तद्घटकत्वम् । **अभिभावकत्वम्** अभिभवप्रयोजकतावच्छेदकरूपवत्त्वम् । **प्रयोज्यत्वेन** घटितत्वेन । स्वप्रतिबिम्बवद्वृत्त्याकारत्वस्यै[1]वोक्ताभिभवप्रयोजकतावच्छेदकत्वात्तदाकारत्वस्योक्तरूपत्वे आत्माश्रय इति भावः । **अस्तीत्यादिना** सन्निति व्यवहारो ग्राह्यः । **प्रतिबन्धकेति** । अनुत्पत्तिनियतेत्यर्थः । तेनाज्ञानाभावत्वेन कारणत्वाभावान्नासङ्गतिः । अस्तीत्यादिव्यवहारेऽसत्त्वापादकाज्ञानाभावविशिष्टचैतन्यस्य विषयतया तादृशाज्ञानस्योक्तव्यवहारानुत्पत्तिनियतत्वमिति भावः । असत्त्वापादकाज्ञाननिवृत्तिप्रयोजकतावच्छेदकं यद्वृत्तिनिष्ठं विषयप्रातियोगिकं रूपं तद्वत्त्वमिति पर्यवसितम् । **तत्सन्निकृष्टेति** । परोक्षस्थलेऽपि धूमादिज्ञानेन वह्न्यादिनिरूपितव्याप्यत्वसम्बन्धिज्ञानत्वादिकं वह्न्यादिसन्निकृष्टत्वम् । यद्यपि सम्बन्धित्वं सामान्यतोऽतिप्रसक्तम्; व्याप्यत्वाद्यप्रकारकज्ञानेऽपि कस्यचित्सम्बन्धस्य सत्वात्, तथा व्याप्यत्वप्रकारकधीनिष्ठतत्तदसाधारणसम्बन्धानामन्यतमत्वेनाखण्डेन निवेशान्न दोषः । अतएव रूपाद्याकारचाक्षुषादे

[1] कारसंबन्धत्वात्तदाकारवृत्तिज्ञानस्य—ग.

**वा तदाकारत्वरूपत्वात्। तदुभयं च स्वकारणाधीनस्वभावविशेषात्।**

रसादिसन्निकृष्टकरणजन्यत्वेऽपि न क्षतिः। रूपादि[1]सन्निकृष्टकरणजन्यत्वस्यैव चाक्षुषादौ रूपाद्याकारत्वस्य विशिष्य निर्वाच्यत्वेन रूपादिसन्निकर्षाणामेवान्यतमत्वेन निवेशात्। एवमसत्त्वापादकाज्ञाननिवर्तकतावच्छेदकमपि तत्तद्विषयसन्निकृष्टकरणजन्यत्वानामन्यतममेव। जन्यत्वं च जन्यतावच्छेदकीभूतं तत्तद्विषयसन्निकृष्टकरणविशिष्टवृत्तिज्ञानत्वम्। तेन तस्य फलोपधानरूपत्वेन नाननुगमः[2]। अवच्छेदकस्य तदाकारत्वघटितत्वेन च नात्माश्रयः। यस्य यस्य विषयस्य येन येन ज्ञानेनासाधारणव्यवहारः तत्तज्ज्ञानमात्रनिष्ठानां तत्तद्विषयीयसंबन्धानामन्यतममेव तत्तज्ज्ञानेषु तत्तद्विषयाकारकत्वमिति लक्षणयोः पर्यवसितोऽर्थः। वस्तुतो 'वृत्तिज्ञानविषययोराकारताख्यः कश्चिदनिर्वाच्यः सम्बन्धोऽङ्गीक्रियते' इत्याचार्यैरेव वक्ष्यमाणत्वात्स एवात्राभिप्रेतः। तस्य च तत्तत्कारण[3]सन्निकर्षजन्यतावच्छेदकत्वेनोक्ताज्ञाननिवर्तकतावच्छेदकत्वेन च सिद्धिरिति ज्ञापयितुं द्वैविध्येनोक्तिरिति ध्येयम्॥

ननु—जन्यत्वस्य योग्यत्वस्य च फलोपधानरूपत्वे[4]ऽननुगमात्तत्स्वरूपयोग्यतावच्छेदकरूपत्वं[5] प्रकृते वाच्यम्, तस्य चान्यस्यापरिचयादुक्तजन्यत्वयोग्यत्वे एव तथा वाच्ये इत्यात्माश्रयः, तत्राह—**तदुभयं चेति। स्वकारणाधीनस्वभावविशेषात्।** स्वकारणीभूतो यः तत्तद्विषयकरणसम्बन्धस्तद्घटितस्वभावविशेषनिरूप्यं तत्तद्विषयकरणसम्बन्धविशिष्टज्ञानत्वमेवोक्तनिवृत्तियोग्यतावच्छेदकमुक्तजन्यतावच्छेदकं च। ज्ञाने उक्तसम्बन्धस्य वैशिष्ट्यमव्यवहितोत्तरत्वादिरूपमिति भावः। द्वितीयव्याख्यायां तदुभयात्मक आकाराख्यः सम्बन्धः स्ववृत्तिज्ञानरूपं

1 रूप्यादि—ग. 2 नानुगमः—क. ग. 3 करण—ग. 4 रूपत्वेना—ग.
5 रूपवत्वं—ग.

न चात्माश्रयः; निवृत्तिजननस्वरूपयोग्यतया फलोपधानस्य साध्यत्वेन स्वानपेक्षणात् । ननु—दृशि विषयाध्यासस्वीकर्तुर्जीवचैतन्यं वा विषयदृक्, ब्रह्मचैतन्यं वा । नाद्यः; जीवेऽवच्छिन्नचित्स्वरूपे कल्पितेऽध्यासायोगात् । न च—विषयदृक् जीवचैतन्यमेव, अध्यासस्तु ब्रह्मचैतन्य इति—वाच्यम्; दृश्ययोरेवाध्यासिकसम्बन्धापत्तेः, अध्यस्ताधिष्ठानयोरुभयोरपि दृग्भिन्नत्वात् । अतएव न द्वितीयोऽपि; ब्रह्मणोऽपि कल्पितत्वेन तत्राध्यासायोगाच्च । न च—शुद्धचैतन्यमेकमेव, तदेवाधिष्ठानम्, तत्रावच्छेदकमविद्यादिकं

---

यत्कार्यं तदधीनस्वभावविशेषात्तत्कारणाधीनस्वभाव[1]विशेषाच्चेत्यर्थः । कारणस्य स्वभावोऽयं यदनुगतधर्म[2]स्वजन्यतावच्छेदकं कल्पयति, कार्यस्याप्ययं स्वभावो यदनुगतधर्मं स्वकारणतावच्छेदकं कल्पयतीति तद्बलादुक्ताकारसिद्धिरिति भावः । ननूक्तनिवृत्तिजनकतावच्छेदकात्मकतदाकारकत्वेनोक्तनिवृत्तिजनकत्वे आत्माश्रयः; उक्तजनकतायास्त[3]द्घटितस्यावच्छेदकत्वादुक्तनिवृत्तौ तद्घटितस्य प्रयोजकत्वाच्चेत्याशङ्क्य निरस्यति—**न चेति** । **स्वरूपयोग्यतया** विषयकरणसम्बन्धानामुक्तान्यतमरूपेणाकाराख्यविषयसम्बन्धविशिष्टवृत्तिज्ञानत्वेन वा । **फलोपधानस्य** निवृत्तिजनकत्वस्य । **साध्यत्वेन** अवच्छेद्यत्वेन । **फलोपधानस्य** निवृत्तिरूपफलसम्बन्धस्य साध्यत्वेन प्रयोज्यत्वेनेति वा । **स्वानपेक्षणात्** । उक्तजनकतायां स्वघटितस्यावच्छेदकतयानपेक्षणात् । उक्तनिवृत्तौ स्वघटितस्य प्रयोजकत्वेनानपेक्षणाच्च । **ब्रह्मण** ईश्वरस्य । **अविद्यादिकं** अविद्याप्रतिबिम्बत्वादिकम्[4] ।

[1] स्वस्य कारणस्वभावविशेषाधीनस्य कार्यस्य स्वभाव—ग. [2] धर्मः -ग.
[3] जनकतायां—त. ग. [4] अविद्याप्रतिबिम्बबिम्बित्वादिकम्—ख. ग.

नाधिष्ठानकोटौ प्रविशति, तदेव च जीवशब्देन च व्यपदिश्यते उपाधिविशेषात्, तथाच जीवचैतन्यस्य दृक्त्वेऽपि दृश्याध्यासो नानुपपन्न इति—वाच्यम्; शुद्धचैतन्यस्यासंसारमावृतत्वेन जगदान्ध्य प्रसङ्गादिति—चेन्न; मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवादान्ध्यविरहोपपत्तेः। ननु तर्हीदानीमपि ब्रह्मस्फुरणे चरमवृत्तिवैयर्थ्यम्; अधिकभागेऽपि[1] तस्य स्फुरणात्, न ह्यखण्डार्थवेदान्तजन्यायां वृत्तौ भावोऽभावो वा विशेषणमुपलक्षणं वा प्रकारः प्रकाशत इति—चेन्न; उपाध्यविषयकब्रह्मस्फुरणस्य चरमवृत्तिप्रयुक्तत्वेन तस्याः साफल्यात्, प्रकारास्फुरणं तु तस्या भूषणमेव; इदानीन्तनस्फुरणस्य सप्रकारकत्वेनोपाधिविषयकत्वात्। 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतिबलात् स्वसमानविषयज्ञानादेव चाज्ञाननिवृत्तेरखण्डचिन्मात्रज्ञानस्यैव मोक्षहेतुत्वावधारणात्। न चान्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे सुषुप्तिदशायां तदभावेन

हेतुत्वावधारणादिति। नन्विदमयुक्तं, सप्रकारकज्ञानस्यैव संशयादिविरोधित्वात्, एकधैवेत्यादिश्रुतिर्ज्ञानानन्दादिविरोध्यज्ञानदुःखादिमत्तया ब्रह्मज्ञानं न मोक्षहेतुरित्येतत्परा। अन्यथा प्रकारार्थधाप्रत्ययासङ्गतेः। निवर्तकत्वे तु निवर्त्याज्ञानसमानविषयकत्वमपेक्ष्यते, न तु तदनतिरिक्तविषयकत्वम्; घटपटाविति समूहालम्बनस्य घटाज्ञानानिवर्तकतापत्तेरिति चेत्, भ्रान्तोऽसि; निष्प्रकारकस्यापि व्यावृत्ताकारतया संशयादिविरोधित्वम्। सा च द्वेधा विशेषणादुपलक्षणाद्वेत्यादिकं हि पूर्वमाचार्यैरुक्तम्, उपपादितं च नितरामस्माभिः। एकधेत्यादिश्रुतिस्तु नोक्तार्थपरा; तादृशज्ञानस्य मोक्षहेतुत्वाप्रसक्तेः, किंतु न्यायसिद्धस्याज्ञानतत्कार्याविषयकज्ञानमोक्षहेतुत्वस्यानुवादरूपा सती विधेयाखण्डात्मस्तुतिपरा। अन्यथा

1 भानेऽपि.

कृतहान्याद्यापत्तिरिति—वाच्यम्; तदाप्यस्य कारणात्मनावस्थानात्, स्थूलसूक्ष्मसाधारणस्यान्तःकरणस्योपाधित्वात्। 'तदापीतेः संसारव्यपदेशात्' इत्यस्मिन् सूत्रे चायमर्थः स्पष्टतरः। न च वृत्त्युपरक्तत्वं चैतन्यस्य न तत्प्रतिबिम्बितत्वम्; दर्पणे मुखस्येवानुद्भूतरूपेऽन्तःकरणे शब्दान्यप्रतिबिम्बनोपाधिताया अचाक्षुषचैतन्यस्य प्रतिबिम्बतायाश्चायोगादिति—वाच्यम्; उद्भूतरूपवत्त्वं न प्रतिबिम्बितो[1]पाधिताप्रयोजकम्; अस्वच्छेऽपि लोष्टादौ प्रतिबिम्बापत्तेः; किन्तु स्वच्छत्वम्,

'तमेव विदित्वाऽतिमृत्युमेति, अव्यवहार्यमलक्षणं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इत्यादिश्रुतिविरोधापत्तेः। धाप्रत्ययस्तु विषयरूपप्रकारार्थः। नहि विशेषणरूपप्रकारे धा इति नियमः। निवर्त्याज्ञानाद्यविषयकत्वं तु ज्ञानेऽपक्षत एव, अन्यथाऽह[2]मित्यादीनामपि निवर्तकतापत्तेरित्यादि विवेचितमेव मिथ्यात्वहेतुविवेचने। समूहालम्बनं तु घटाज्ञाननिवर्तकम्, निवर्त्याज्ञानतत्कार्याविषयकत्वस्यैव तदनतिरिक्तविषयकत्वरूपत्वात्। विजातीयत्वेन मूलाज्ञाननिवर्तकत्वाच्चरमवृत्तिरेव तथेत्यादिकमप्यसकृदुक्तम्। **कारणात्मना** कारणीभूताविद्यागतसंस्कारात्मना। एतेनाविद्यात्मनाऽवस्थाने अविद्यैवोपाधिरित्यागतमिति—परास्तम्; यथा हि तार्किकादिमते सूक्ष्मरूपं मनः सुषुप्तौ तिष्ठति, तथा मन्मतेऽपि ज्ञानेच्छादिस्थूलावस्थाप्रच्यवात्। ननु वृत्तेः प्रकाशकजीवचिदुपरागार्थकत्वपक्षे वृत्त्या चितो न तादात्म्यं सम्बन्धो जीवस्यानुपादानत्वात्, नापि प्रतिबिम्बसम्बन्ध इत्याद्याशङ्क्य निरस्यति—**न च वृत्तीत्यादि**। उद्भूतरूपहीनेऽपि गुहाकाशादौ मुखाद्यवच्छिन्नशब्दादिप्रतिबिम्बोपाधित्वात्। **शब्दान्येति**। **स्वच्छत्वं**

[1] प्रतिबिम्बनो.  [2] अन्यथाहमज्ञ इत्या-ग.

**तच्च प्रकाशस्वभावत्वेन मनसस्तत्परिणामभूताया वृत्तेश्चास्त्येव ; त्रिगुणात्मकस्याप्यज्ञानस्य स्वच्छसत्वात्मकताया अपि सत्वेन तत्रापि प्रतिबिम्बितोपाधितायाः[1] सत्वात् । नापि चाक्षुषत्वं प्रतिबिम्बितत्वप्रयोजकम् ; अचाक्षुषस्याप्याकाशादेः प्रतिबिम्बितत्वदर्शनात् । ननु—चाक्षुषवृत्त्युपारूढचितः कथं रूपमात्र-**

---

प्रतिबिम्बोपाधितायोग्यत्वम् । **प्रकाशस्वभावत्वेन** उक्तोपाधिताविरोधिरूपहीनत्वेन । तच्च फलबलकल्प्यम् । न हि प्रतिबिम्बभ्रममात्रेऽनुगतरूपेणोपाधीनां हेतुत्वमस्ति ; किंतु दृष्टतत्तत्प्रतिबिम्बभ्रमे तत्तदुपाधीनां हेतुत्वमिति भावः । उक्तं हि सिद्धान्तबिन्दौ—' विभ्रमहेतूनां विचित्रत्वान्न प्रतिबिम्बानुपपत्तिरिति । **सत्त्वात्मकताया अपीत्यपिना** सत्वात्मकत्वमपि प्रतिबिम्बोपाधितायां न प्रयोजकम् । अतो जीवेशभेदाविद्याचित्सम्बन्धादिष्वनाविद्यकेष्वपि प्रतिबिम्बोपाधितासम्भवेन प्रकाश्यत्वसम्भव इति ध्येयम् । **दर्शनादित्यनेन** यत्र प्रतिबिम्बोपाधिता बिम्बत्वं च दृश्यते, तत्र नापलपितुं शक्यते ; अन्यथा सर्वत्रैवानुभवापलापप्रसङ्गात् । एवं चाकाशस्य बिम्बत्वं चेद्दृष्टं तदा नापलापार्हम् । अथादृष्टम्, तथाप्यविद्यान्तःकरणादौ चित्प्रतिबिम्बं पूर्वोक्तरीत्या 'जीवेशावाभासेन करोति, इत्यादिश्रुतिप्रत्यक्षादिमानदृष्टत्वादविद्यादेरुद्भूतरूपाभावेऽपि चितोऽचाक्षुषत्वेऽपि च नापलापार्हमिति सूचितम् । एतेनोद्भूतरूपान्यस्वच्छत्वे मानाभावः, आकाशस्य तु प्रतिबिम्बं नास्त्येव ; साभ्रप्रभामण्डलादेरत्र प्रतिबिम्बे आकाशीयत्वभ्रमात्, अन्यथा वाय्वादेरपि प्रतिबिम्बापत्तेरित्यादिमूर्खप्रलापोऽपास्तः । वृत्तेश्चिदुपरागार्थत्वपक्षे प्रकारान्तरेण दोषं शङ्कते—**ननु चाक्षुषेति । कथमिति ।** स्वप्रतिबिम्बवद्वृत्तिसंयुक्तसमवायरूपस्योपरागस्य रूप इव

---

[1] प्रतिबिम्बनोपाधितायाः.

**प्रकाशकत्वम्? न च प्रभावन्नियमः; वैषम्यात्, तथाहि— प्रभायां तमोविरोधित्वं रूपं प्रतीव गन्धादीन् प्रत्यपि समम्; न हि सा गन्धदेशस्थं तमो न निवर्तयति, न चाज्ञाननिरोधित्वलक्षणं प्रकाशत्वं रूपं प्रत्येव, न तु रसादीन् प्रतीति— वाच्यम्; अज्ञाननिवर्तकत्वस्य वृत्तिभिन्नेऽनङ्गीकारात्, प्रभाया रूपग्राहकचक्षुःसहकारित्ववत् गन्धादिग्राहिघ्राणादिसहकारित्वाभावेऽपि चितो ग्राहकान्तरासहकारित्वेन तद्वत्सहकारि-**

रसादावपि सत्वादिति भावः। **रूपं प्रत्येवेति**। रूपावच्छिन्नमज्ञानं चाक्षुषवृत्त्यारूढाचिन्निवर्तयति, न तु रसाद्यवच्छिन्नमज्ञानमित्यर्थः। तथाच चिदुपरागसत्वेऽपि रसादावज्ञानसत्त्वान्न प्रकाश इति भावः। **वृत्तिभिन्न इति**। न च—यदीयाज्ञाननिवर्तकवृत्त्युपारूढा चित्तदेव प्रकाशयतीति—वाच्यम्; तथा सति गन्धाकारघ्राणजवृत्तेरिव रूपाद्याकारचाक्षुषादिवृत्तेरप्यज्ञाननिवर्तकत्वं वाच्यम्, चाक्षुषादिकाले गन्धादेरिव घ्राणजादिकाले रूपादेरप्रकाशस्य तुल्यत्वात्। **तथा च वृत्तः** सर्वत्राज्ञाननिवृत्त्यर्थत्वस्वीकारे। द्वितीये त्वावरणाभिभवार्था वृत्तिरिति सिद्धान्तव्याघातः। आद्येऽपि पक्ष आवरणाभिभवार्थत्वेन द्वितीयेत्वित्यवधारणासङ्गतेः। अतएव वृत्त्यवच्छिन्नचितोऽज्ञाननिवर्तकत्वाङ्गीकारेऽपि न निस्तारः। नन्वाद्यपक्षे यथा ब्रह्मणि वृत्तेरज्ञाननिवृत्त्यर्थकता, तथा प्रतिनियतेन्द्रियग्राह्यरूपादावपि, सत्ताद्रव्यत्वगुणत्वादौ तु न तथेति ब्रह्मातिरिक्ते सर्वत्र चिदुपरागार्थत्वाद्द्वितीयपक्षे च जीवस्योपादानत्वे तदभावान्नोक्तासङ्गतिरिति- वाच्यम्; तथापि यदीयाज्ञाननिवर्तकेत्याद्युक्तप्रकारस्वीकारे गौरवात्। ननु—यथा प्रभा चक्षुःसहकारित्वाच्चाक्षुषस्यैव भासिका तथा चिदपि स्यात्तत्राह—**प्रभाया इति**। **सहकारित्वेति**

विलम्बेन विलम्बस्य वक्तुमशक्यत्वात्। तथाच चितः सर्वगतत्वेन सर्वसम्बन्धाद्रूपादिवद्गुरुत्वादेरप्याश्रयद्वारा साक्षाद्वा सम्बन्धित्वात्प्रकाशापत्तिः; वृत्त्युपरक्तचित्सम्बन्धस्यैव प्रकाशकत्वात्, 'असङ्गो ह्ययं पुरुषः' इति श्रुतिस्तु तत्कृतलेपाभावपरा, न तु सम्बन्धनिषेधिका; 'स यत्तत्र यत्किञ्चित्पश्यत्यनन्वागतस्तेन भवति' इति पूर्ववाक्यात्, 'यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्' इत्यादिस्मृतेश्चेति—चेन्न; प्रभाया रूपरसादिदेशगततमोनाशकत्वं तत्सम्बन्धाद्युज्यते, चैतन्यस्य तु स्वभावतोऽसम्बद्धत्वात्तदाकारवृत्त्या तदेकसम्बन्धस्योपादानात्कथमन्यावभासकत्वप्रसङ्गः? स्वभावतो ह्यसङ्गत्वे 'असङ्गो ह्ययं पुरुषः' इति श्रुतिः प्रमाणम्। नचैषा लेपाभावपरा; अकर्तृत्वप्रतिपादनाय सम्बन्धाभावपरत्वात्। यथा चैतत्तथा व्यक्तमाकरे।

ग्राह्यभासकत्वेत्यर्थः। विलम्बेन अभावेन। विलम्बस्य गन्धाद्यभासकत्वस्य। यदि स्वप्रतिबिम्बवद्वृत्तिसंश्लेष एव चितो भासकतानियामकः सम्बन्धः तदाह—आश्रयद्वारेति। यदि तत्संसृष्टवृत्त्युपारूढचितः सर्वगतत्वनियामकसम्बन्धो भासकस्तदाह—साक्षाद्वेति। आश्रयाद्वारा वेत्यर्थः। तेन जीवस्य गुरुत्वादौ तादात्म्याभावेऽपि नासङ्गतिः। आकरे बृहदारण्यकभाष्यादौ। उक्तं हि तत्र—यदि स्वाभाविकं कर्तृत्वं स्यात्तदा आत्मनो मोक्ष एव न स्यात्, अतो 'दृष्ट्वैव पुण्यं च पापं चे'त्यादिना कर्तृत्वाभावप्रतिपादनेन स्वभावतोऽकर्त्रेति ज्ञापितम् 'ध्यायतीव लेलायतीव' इति च पूर्वमकर्तृत्वमुक्तम्, तत्र चासङ्गत्वं हेतुः, कारकसङ्गिनो हि मूर्तस्य कर्तृत्वं नान्यस्येति। अत एव व्यासः—

'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।' इति।

एवं स्मृतिरप्येतच्छ्रुत्यनुरोधेन नेया। अतः सर्वैः सह सम्बन्धाभावान्न सर्वावभासः, किंतु यदाकारा वृत्तिस्तस्यैव। अतएव इदं रजतमिति भ्रमे इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्तेः रजताकाराप्यविद्यावृत्तिरभ्युपेयते। स्वतश्चिद्बिम्बाग्राहके (वृत्तिमन्तरेण) चैतन्यस्य तदाकारत्वायोगात्, स्वतश्चिद्बिम्बग्राहके त्वन्तःकरणवृत्त्यादौ न वृत्त्यपेक्षेति नानवस्था। न चाश्रयसम्बन्धाविशेषेऽपि रूपाकारा वृत्तिर्न गन्धाद्याकारेति कुत इति—वाच्यम्; यथा तव चाक्षुषज्ञाने आश्रयसम्बन्धा-

---

उक्तं च वार्तिके—

आत्मा कर्त्रादिरूपश्चेन्माकांक्षीस्तर्हि मुक्तताम्।

न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः॥ इत्यादि।

नेयेति। जीवस्येव ब्रह्मणो वस्तुतोऽसङ्गत्वेऽप्युपादानत्वाद्ब्रह्म प्रपञ्चाश्रयः, अत एव 'न च मत्स्थानि भूतानि' इत्यपि स्मृतिः सङ्गच्छत इति भावः। अत एव जीवस्य स्वप्रतिबिम्बवद्वृत्तिविषयत्वसम्बन्धेनैव[1] भासकत्वादेव। बिम्बाग्राहक इति। रजतादाविति शेषः। ननु—घटादेः स्वच्छत्वेऽविद्यादेरिव चिद्बिम्बवत्वात्सर्वदा भानं स्यात्, प्रातीतिकरजतादेस्तु तद्दोषाभावद्वृत्तिकल्पनागौरवाच्च स्वच्छत्वमेव युक्तमिति—चेन्न; अस्वच्छरजताद्यर्थिप्रवृत्त्यनुरोधेन प्रातीतिकरजतादेरप्यस्वच्छस्यैव कल्पनात्, रजतत्वाद्यवच्छेदेनास्वच्छ[2]त्वस्य क्लृप्तत्वाच्च। अन्यथा रजतादिदर्शनोद्देशेन चक्षुरादिव्यापारः सार्वजनीनो न स्यात्। यस्य रजतादेः स्वोत्पत्तिद्वितीयक्षणे प्रतीतिस्तन्नाशकाले च नाशस्तत्र व्यवहारेऽपि[3] वृत्तिर्न कल्प्येत; स्वोत्पत्तिक्षणेऽपि लाघवेन तत्प्रतीतेर्वक्तुं

[1] स्वप्रतिबिम्बवद्वृत्तिविषयत्वयोग्यत्वसम्बन्धेनैव-ग. [2] स्वच्छ-क. ग.
[3] व्यावहारिकेऽपि-क. ग.

**विशेषेऽपि न गन्धो विषयः, तथास्माकमपि चक्षुर्द्वारकवृत्तौ न गन्धाद्याकारत्वम्, इन्द्रियविषयसम्बन्धानां स्वभावस्य नियामकस्य समानत्वात्। ननु—आध्यासिकसम्बन्धो**

---

शक्यत्वात्स्वच्छत्वकल्पनया तस्य चित्प्रतिबिम्बवत्त्वसम्भवात्। **स्वभावस्य** गन्धादिभेदसामानाधिकरण्यस्य। द्रव्यसमवेतचाक्षुषं प्रति गन्धादिव्यावृत्तजात्या रूपादेः कारणत्वम्, रूपादिव्यावृत्तजात्या गन्धादेः प्रतिबन्धकत्वं वेति गन्धादिभिन्ननिष्ठ इन्द्रियसन्निकर्ष एव चाक्षुषाद्युपधायक इति भावः॥

यत्तूद्भूतरूपाभावाद्वृत्तौ न प्रतिबिम्ब इति रोदनं तदपास्तमेव। ननु 'असङ्गो ह्यय'मित्यादिश्रुतिरीशस्य पुण्यपापालेपपरा, 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति, स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्,' एवं 'स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा' इत्यादि 'स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वे'त्यादिपर्यायत्रये सुषुप्तिस्वप्नजाग्रत्सु जीवं रमयितुश्चारयितुः पुण्यपापे दर्शयितुश्चेश्वरस्य तत्तत्कर्मलेपो नास्तीत्यस्मिन्नर्थे 'अनन्वागतस्तेन भवती'त्यन्तेनोक्ते कर्मलेपसामान्याभावरूपस्यासङ्गत्वस्य हेतुत्वेन प्रतिपादनात्.

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति।
शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः॥'

इति पूर्वोक्तश्लोके ईशस्य प्रकृतत्वाच्चेति चेन्न; तत्त्वज्ञत्वेनेशस्य पुण्यपापलेपाप्रसक्त्या तन्निषेधवैयर्थ्याज्जीवनिष्ठस्याकर्तृत्वाद्यज्ञातस्यैव तच्छ्रुत्यर्थत्वौचित्यात्। अन्यथा तत्वान्तेषु[1] पश्यति इत्यत्र पर्यायत्रयेऽप्यश्रुतस्य णिजर्थस्य कल्पनापत्तेः। अयमित्यपरोक्षवाक्यस्येश्वरे विरुद्ध-

---

[1] क्वान्तेषु—ख. ग.

त्वात् । स्वप्नेनेत्याद्युक्तवाक्ये तु स्वप्नेन सह शारीरं प्रहत्य[1] विलाप्य सुप्तान् विशेषज्ञानशून्यान् जीवानभि लक्षीकृत्य हिरण्मयः स्वप्रकाशः साक्षी चाकशीति कासते[2] पुनः कर्मोद्बोधे शुक्रमिन्द्रियगणमादाय स्थानमेतीत्यर्थाज्जीव एव प्रकृतः । अत एव तदेते श्लोका भवन्ति स्वप्नेन शारीरमित्यादिश्रुतिर्भाष्ये इत्थं व्याख्याता । ध्यायतीव लेलायतीवेत्याद्युक्तार्थे एते श्लोकाः, स्वप्नेन स्वप्नभावेन शारीरं शरीरमाभि प्रहत्य निश्चेष्टीकृत्य स्वयमसुप्तोऽलुप्तदृगादिशक्तित्वात्सुप्तान् वासनाकारोद्भूतान् सर्वान् भावानभिचाकशीति, शुक्रं ज्योतिष्मदिन्द्रियगणमादाय पुनः कर्मणे एति जागरितस्थानं हिरण्मयश्चित्स्वरूप एक एव जाग्रत्स्वप्नपरलोकादीन् हन्ति गच्छतीत्येकहंसः प्राणेन कुलायं देहमवरं बीभत्सं रक्षन् स्वयं कुलायाद्बहिश्चरित्वा तदनभिमानात् ईयते गच्छति यत्र कामं यत्र विषये कामना तं वासनारूपेणोद्भूतं स्वप्नान्ते स्वप्नस्थाने उच्चावचमुत्कृष्टनिकृष्टं देवतिर्यगादिभावं ईयमानो गच्छन् देवो द्योतनवान् बहूनि रूपाणि वासनोद्भूतानि कुरुते, उत अपि स्त्रीभिः सह मोदमान इव जक्षत् हसन् वयस्यैरिव उतेव भयानि व्याघ्रादीनि पश्यन्, आराममाक्रीडामस्यात्मनो वासनोद्भूतां पश्यन्ति सर्वे, तं तु न पश्यति कोऽपीत्यादि । तदेतादृशश्रुतिसन्दर्भस्येश्वरपरतां ब्रुवाणो देवानांप्रियः शोभते । तस्माज्जीव एव प्रकृतः उक्तवाक्येषु । अन्यथा असुप्त इति सुप्तेरीशे[3] निषेधो व्यर्थोऽप्रसक्तत्वात्, जीव एव तत्प्रसक्तेः। आदायेत्यनेनाभिमान एव वाच्यः, सम्बन्धमात्रस्य शुक्रे पूर्वमपि सत्वात्, तथा च तस्येशे सङ्गत्यभावात् स्थाने तत्तद्गोलके पूर्वमपीशस्य सत्वेन स्थानमेतीत्यस्याप्यसङ्गतेश्च । जीवस्य तु मनउपाधिकस्य स्थाने पूर्वमसत्वात्तत्र तत्सङ्गतत्वात् । सर्वाणि भूतानि मत्स्थानीति तूपपादितमिति ध्येयम् ॥

[1] भास्कारं प्रहत्य—ग. [2] काशते—ग. [3] सुप्तिकर्त्रीशे—ग.

वृत्तेः पूर्वमप्यस्त्येव, अन्यस्तूपरागो न दृश्यत्वे तन्त्रमिति किं तदर्थया वृत्त्येति—चेन्न; जीवचैतन्यस्याधिष्ठानचैतन्यस्य[1] वाऽभेदाभिव्यक्त्यर्थत्वाद्वृत्तेः। अन्यथा मयेदं विदितमिति सम्बन्धावभासो न स्यात्। ननु—जीवचैतन्यस्यासङ्गत्वे ब्रह्म-चैतन्यं सुतरामसङ्गम्; तथाच मायोपाधिकविषयोपरागत्वात् स्वतः सार्वज्ञ्यं न स्यात्, न च—ब्रह्म सर्वोपादानत्वादुपाधिं विनैव स्वस्वरूपवत्स्वाभिन्नं जगदवभासयतीति—वाच्यम्; उपादानत्वं न तावद्विशिष्टनिष्ठं परिणामित्वम्; आध्यासिक-संबन्धस्यातन्त्रतापत्तेः, अनाद्यविद्यादिकं प्रति तदभावाच्च। नापि शुद्धनिष्ठमधिष्ठानत्वम्; शुद्धस्य सर्वज्ञत्वसर्वशक्तित्वादेर-भावादिति—चेन्न; ब्रह्मणोऽसङ्गत्वेऽपि सर्वेषां तत्राध्यासेन मायोपाधिं विनैव तस्य सर्वप्रकाश(क)तया सार्वज्ञ्योपपत्तेः; न च—शुद्धनिष्ठमधिष्ठानत्वं नोपादानत्वम्, सार्वज्ञ्याभावादि-

---

**अन्यः** स्वप्रतिबिम्बवद्वृत्तेर्विषयत्वसंश्लेषोभयरूपः। **दृश्यत्वे** अध्यस्ततादात्म्यरूपे दृक्सम्बन्धे। यद्यपि जीवाभिन्नब्रह्मचित आध्या-सिकतादात्म्यरूपं दृश्यत्वं वृत्तिपूर्वमस्ति तथापि तदर्थं न वृत्तिः; किंतु मयेदं विदितमिति व्यवहारोपयुक्तोपरागायेत्याशयेनाह—**न जीवेति**। **मायोपाधिकेति**। मायावृत्तिरूपोपाधिघटितेत्यर्थः। **अधिष्ठानत्वम्** कल्पितप्रतियोगिकमकल्पितनिष्ठं तादात्म्यम्। **असङ्गत्वेऽपीति**। यादृशः सङ्गः स्वप्रतिबिम्बरूपो जीवस्याविद्यादौ तादृशस्य ब्रह्मघटा-द्योरभावेऽपीत्यर्थः। **अध्यासेन** अध्यस्ततादात्म्येन। **नोपादानत्वम्** न सर्वावभासकताप्रयोजकोपादानत्वशब्दार्थः। शुद्धस्येति शेषः।

---

[1] चाऽभे.

त्युक्तमिति—वाच्यम्; अविद्याकल्पितानां सर्वज्ञत्वादीनां शुद्धे सत्वात्। अन्यथा तेषां तटस्थलक्षणत्वमपि न स्यात्। ननु—आवरणाभिभवार्थत्वपक्षो न युक्तः; विवर्ताधिष्ठानस्य चिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशनात्, अन्यस्याज्ञानकल्पितस्यावरणस्याभावादिति—चेन्न; अज्ञानादिसाक्षित्वेन स्वप्रकाशेऽप्यशनायाद्यतीतत्वादिना प्रकाशाभावादावरणस्यावश्यत्वात्। नन्वज्ञानस्य नयनपटलवत्पुंगतत्वे चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशादप्रकाशो युक्तः। विषयगतत्वे तु चैत्रार्जितया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यादिति—चेन्न; चैत्रावरणशक्तेरेवाज्ञानगतायाश्चैत्रार्जितवृत्त्या नाशितत्वेन स पश्यति, न मैत्रः; तत्प्रतियोगिकावरणशक्तेरनाशात्, आवरणशक्तीनां द्रष्टृविषयभेदाभ्यां भिन्नत्वात्, तमस्तु न तथेत्येकानीतप्रदीपेनाप्यन्यान्प्रति प्रकाशो युज्यते। एतेन—एकाज्ञानपक्षे शुक्तिज्ञानेन तदज्ञाननिवृत्तौ सद्य एव मोक्षापातः, अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोग इति—निरस्तम्; आवरणशक्तिनाशेऽपि मूलाज्ञाननाशाभावेन सद्यो मोक्षाभावस्य रूप्यादौ सविलासशक्तिमदविद्यानिवृत्तिरूपबाधस्य चोपपत्तेः। ननु—एकाज्ञानपक्षे रूप्यादेः शुक्तिज्ञानेन स्वकारणे प्रविलय-

---

कल्पितानामिति। परमार्थतः शुद्धमप्यविद्ययेव तत्परिणामसर्वरूपेण सार्वज्ञ्यादिनापि कल्पितेन सम्बध्यत इति भावः। तेषामिति। शुद्धं प्रतीति शेषः। उक्तं हि विवरणादौ तेषां शुद्धं प्रति तदिति भावः। अन्यस्याज्ञानकल्पितस्येति। अन्यस्मिन्नज्ञानकल्पिते इत्यर्थः। कल्पितत्वाच्छुद्धान्यदनावृतमित्यर्थः। अज्ञानादिसाक्षीत्यादि। अज्ञानाद्युपाध्यवच्छेदेन प्रकाशेऽप्यशनायाद्यतीतत्वोपलक्षितपूर्णानन्द-

मात्रं क्रियते मुद्गरप्रहारेणेव घटस्य, न त्वज्ञानं निवर्त्यत इति ते मतं न युक्तम्; यतो ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलाज्ज्ञानस्याज्ञानानिवृत्तिद्वारेवान्यविरोधित्वेनाज्ञानमनिवर्त्य रूप्यादिनिवर्तकत्वायोगात्, शुक्तिज्ञानेनाज्ञानानिवृत्तावभिव्यक्तचैतन्यसम्बन्धाभावेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापत्तेश्चेति—चेन्न; यतो ज्ञानमज्ञाननिवर्तकमिति व्याप्तेरुच्छेदविषयत्वात्, स्वकारणे सूक्ष्मरूपेणावस्थाने तदनङ्गीकारात्; शुक्तिज्ञानस्याचानवच्छिन्नचैतन्यावरणरूपमूलाज्ञानानिवर्तकत्वेऽप्यवच्छिन्नचैतन्यावरणरूपतूलाज्ञाननिवर्तकत्वेनाभिव्यक्तचैतन्यसम्बन्धाद्बाधदशायां रूप्यनिवृत्तिशुक्तिप्रकाशयोरप्युपपत्तेः। न चोपादेयभूतया वृत्त्योपादानभूताविद्याभिभवो न घटते; उपादेयेनोपादानाभिभवादर्शनादिति—वाच्यम्; वृश्चिकादिना गोमयादेरुपादानस्याप्यभिभवदर्शनात्। आरम्भवादानभ्युपगमाच्च न गोमयावयवानामुपादानत्वशङ्का। ननु चक्षुरादिजन्यशुक्त्यादिवृत्तेः सप्रकारिकाया निष्प्रकारकशुद्धचैतन्याविषयतया तदावरणरूपमूलाज्ञानाभिभवाभावेऽप्यवच्छिन्नविषयया तयाऽवच्छिन्नचैतन्यावरणरूपतूलाज्ञानाभिभवो युज्यत इति ते मतमयुक्तम्; अवच्छिन्ने अविद्याकल्पितेऽप्रसक्तप्रकाशे मूलाविद्याया

---

रूपेणाप्रकाशादावरणमावश्यकमिति भावः। उच्छेदविषयत्वादिति। ज्ञानमज्ञानान्यस्य नोच्छेदकमित्येवं रूपत्वात्। उच्छेदश्चावस्थितिसामान्यविरहः पूर्वोक्तरीत्या बोध्यः। ननु—तूलाज्ञानानङ्गीकारपक्षे वृत्त्या मूलाज्ञानं कार्याक्षमीक्रियत इति शुक्तिरूप्यादेर्न बाधः, किंतु लयमात्रमिति वाच्यम्, तच्च न सम्भवति; उपादेयेनोपादानलयादर्शनादित्याशङ्क्य निरस्यति—न चोपादेयेत्यादि। अनभ्युपगमादिति।

इव तदावरणशक्तेरयोगात्, त्वयानभ्युपगतत्वाच्च, जडविशिष्टात्मानं प्रति तदभ्युपगमे च विशेषणानावारकविशिष्टावारकशक्त्यभिभवस्य विशेष्यावारकशक्त्यभिभवं विनाऽयोगेन शुक्त्याकारवृत्त्यैव शुद्धात्मप्रकाशापातादिति—चेन्न; अनवबोधात्। न ह्यविद्याकल्पितेऽवच्छिन्ने अस्माभिरविद्या वा तच्छक्तिर्वाभ्युपेयते, किंतु चैतन्यमात्र एव; तस्मिंस्तु सर्वं जडमध्यस्तमस्तीत्येकाश्रयाश्रितत्वसम्बन्धाज्जडावच्छिन्नचैतन्यमावृतमिति व्यपदेशः। घटाद्याकारवृत्त्या तु तदधिष्ठानचैतन्याभिव्यक्तौ तदवच्छेदेनैव तन्निष्ठावरणाभिभवो जायत इति न शुद्धात्मप्रकाशापत्तिः। तदुक्तं संक्षेपशारीरके—

'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः'॥

---

प्रभादिद्रव्यस्य तत्तदवयवोत्पत्तिक्रमेणोत्पत्तिस्वीकारेऽनुभवविरोधान्मानाभावाच्च। उक्तं हि भाष्यादौ—'द्रव्यारम्भोऽपि न सर्वत्रारम्भकसंयोगादेवेति शेषः। आवरणशक्तेः तूलाज्ञानस्य। चैतन्याभिव्यक्ताविति। प्रयोज्यायामिति शेषः। तथाच यद्यपि शुद्धनिष्ठमावरणमात्रम्; घटादेरुपाधित्वेनाश्रयकोटावप्रवेशात्, तथापि घटाद्याकारवृत्त्या क्रियमाणोऽभिभवो घटाद्यवच्छिन्न एव। अभिभवस्याभिभावकावच्छेदकावच्छिन्नत्वं हि मण्यादेरुत्तेजकाधीनाभिभवे दृष्टम्। अतोऽनवच्छिन्नस्या[1]वरणाभिभवस्यापत्तिः पर्यवसिता, शुद्धप्रकाशापत्तिर्नेत्यर्थः। आवरणाभिभवो हि यद्यज्ञानस्य नाशस्तदा स वृत्तिस्वरूपो वृत्तिप्रयुक्तोऽतिरिक्तो वा; उभयथापि प्रत्यक्षघटादिवृत्तेर्घटाद्यावरणस्य च घटाद्यवच्छिन्नत्वात्सोऽपि तथा। यदि तु वृत्त्यभावविशिष्टो योऽज्ञानसम्बन्धस्तदभावोऽभिभवो न नाश-

1 अवच्छिन्नस्य.

'बहु निगद्य किमत्र वदाम्यहं शृणुत सङ्ग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक्' ॥
इति च—

तस्मादविद्यायां सत्यामपि शक्त्यभिभवाद्वा, तूलाज्ञाननाशाद्वा, अवस्थाविशेषप्रच्यवाद्वा, एकदेशनाशाद्वा, भीरुभटवदपसरणाद्वा, कटवत्संवेष्टनाद्वा, आवरणभङ्गानिर्मोक्षबाधानामुपपत्तिः । नन्ववस्थाविशेषाणामज्ञानाभिन्नत्वे एकाज्ञानपक्षक्षतिः, अज्ञानभिन्नत्वे च साक्षाज्ज्ञानेन निवृत्तिर्भ्रमाद्युपादानत्वं च न स्यात्, तेषामिव रूप्यस्यैवोपादाननाशं विना नाशप्रसङ्गश्च, शुक्त्यज्ञानं नष्टमित्यनुभवविरोधश्चेति—चेन्न ; यतोऽवस्था ताव-

रूपः अज्ञानैक्यात् तदापि घटादिवृत्त्या सम्पद्यमानः स तत्स्वरूप इति घटाद्यवच्छिन्न एवेति भावः । शक्त्यभिभवाद्वेत्यादि । शक्तिरावरणशक्तिः तूलाज्ञानमावरणविक्षेपशक्तियुक्तं ब्रह्मान्यज्ञाननाश्यं मूलाज्ञानतादात्म्यानापन्नमज्ञानम्[1] । मूलाज्ञानतादात्म्यापन्नं तु तादृशाज्ञानमवस्थाविशेषः । एकदेशनाशस्तु वृत्तौ सत्यामज्ञानस्य स्वकार्याक्षमत्वम् । तत्र वृत्तिकालाभावविशिष्टमज्ञानं भानविरोधीति स्वीकारादुपान्त्यपक्षः । वृत्त्युत्पत्तिक्षणोत्तरवृत्तिकालाभावविशिष्टमज्ञानं भानविरोधीति स्वीकारादन्त्यपक्षः । अत एव हस्तसंयोगोत्पत्त्युत्तरं यथा कटस्य वेष्टनम्, तथा वृत्त्युत्पत्त्युत्तरमज्ञानाभिभवः । यथा च प्रतिभटागमनक्षण एव भीरुभटापसरणम्, तथा वृत्त्युत्पत्तिक्षण एवाज्ञानाभिभव इत्यभिप्रायेण दृष्टान्तौ सङ्गच्छेते । एवं च नानाज्ञानपक्षे यथा वृत्त्या वृत्तिरेव वाऽज्ञाननाश इति पक्षौ, तथैकाज्ञानपक्षेऽपि वृत्तिकाले वृत्त्युत्पत्त्युत्तरकाले वाऽज्ञानाभिभव इति पक्षाविति ध्येयम् । वक्ष्यमाणरीत्या चरमपक्षाभ्यां

[1] युक्तब्रह्मान्यज्ञाननाश्यमूलाज्ञानतादात्म्यानापन्नमज्ञानम्—क.

दवस्थावतोऽभिन्नैव, अज्ञानैक्यं तु सर्वावस्थानुस्यूतैकाकारमादाय। एवं चाज्ञानावस्थाया अज्ञानत्वेन न ज्ञानसाक्षान्निवर्त्यत्वाद्यनुपपत्तिः। यत्त्ववस्थाविशेषाणामिव रूप्यस्यैवोपादाननिवृत्तिं विना निवृत्त्यापादनं, तदयुक्तम्; अज्ञान एव ज्ञानस्य साक्षाद्विरोधावधारणेनाज्ञानावस्थायास्तदभिन्नाया ज्ञानसाक्षान्निवर्त्यत्वार्हत्वात्, न तु रूप्यादीनाम्; अनीदृक्त्वात्। अनेकाज्ञानपक्षे तु शङ्कापि नोदेति। ननु—अस्मिन् पक्षे एकया वृत्त्या सर्वतदज्ञानस्य निवृत्तिः, उत एकतदज्ञानस्य; आद्ये पुनः

---

भिन्नो वैकदेशनाशपक्षः। **एकाकारं** अवस्थावदज्ञानरूपैकाकारम्। यथा घटादिरूपावस्थास्वनुगतमप्यज्ञानं घटादिनाशे न नश्यति, तथा अज्ञानरूपनानावस्थास्वनुगतमज्ञानं तासां नाशेऽपि न नश्यति। इयांस्तु विशेषः—यदा घटाद्यवस्था सादिरज्ञानोच्छेदं विना नोच्छिद्यते च, अज्ञानावस्था[1] त्वनादिरवस्थावदज्ञानोच्छेदं विनाप्युच्छिद्यते चेति। न चावस्थावदभेदस्यावस्थास्वङ्गीकारो व्यर्थः, अवस्थानामप्यज्ञानत्वादेव ज्ञाननाश्यत्वादिसम्भवादिति—वाच्यम्; अवस्थास्वज्ञानत्वरूपाखण्डधर्मानङ्गीकारादवस्थावदज्ञानतादात्म्यं विना ज्ञाननाश्यत्वाद्यसम्भवादज्ञानाभिन्नावरकस्यैव ज्ञाननाश्यत्वादिस्वीकारात्। नच—कुड्यादिरूपावरकस्यापि तथात्वाज्ज्ञाननाश्यत्वाद्यापत्तिरिति—वाच्यम्; वृत्तिसाक्षाद्विरोधितायोग्यत्वरूपस्य सविषयकत्वस्यावरकत्वस्य निवेशात्। नचैवमपि तादृशावरकस्यैव ज्ञान[2]विरोधित्वमिति नियमसम्भवेनाज्ञानाभेदोऽवस्थासु व्यर्थ इति वाच्यम्; तादृशावरकस्याज्ञानाभिन्नत्वनियम इत्यत्र तात्पर्यात् नीहारेण प्रावृता जल्प्या[3]। 'अजामेकाम्' इत्यादिश्रुतावज्ञातोऽयमिति घटाद्यनुगतव्यवहारे चैकाज्ञानस्य प्रतीतेश्चेति

[1] नोच्छिद्यतेऽज्ञानाद्यवस्था—ग.　[2] स्वैकज्ञान—क.　[3] प्रावृता जल्प्या—क. ग.

शुक्तेः कदाप्यप्रकाशो न स्यात्, अन्त्ये वृत्तिकालेऽपि प्रकाशो न स्यात्, एकस्यावरणस्य निवृत्तावप्यावरणान्तरानिवृत्तेरिति— चेन्न; एकया वृत्त्या एकाज्ञाननाशेऽपि तयैवावारणान्तराणां प्रतिरुद्धत्वात्, यावत्सा तिष्ठति तावत्प्रकाशः, तस्यामपगतायां पुनरप्रकाशश्चोपपद्यते; अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वात्। यथा तवैकं ज्ञानमेकमेव प्रागभावं नाशयति, तन्नाशरूपेणोदयात्प्रागभावान्तरनिबन्धनमज्ञातत्वादिव्यवहारं च प्रतिबध्नाति, तथा ममाप्येकं ज्ञानमेकमेवाज्ञानं निवर्तयति, अज्ञानान्तरनिब-

---

भावः। **नाशरूपेणेति**। ज्ञानमेव तत्प्रागभावनाशः। इत्थं च नाशयतीति भाक्तमिति भावः। **निवर्तयतीति**। पूर्ववन्निवृत्तेर्ज्ञानातिरिक्तत्वे यथाश्रुतम्। वस्तुतो ज्ञानानतिरेकेऽपि नाशत्वज्ञानत्वाभ्यां भेदेन प्रयोज्यप्रयोजकभावस्य श्रुत्यादिसिद्धस्य पूर्वमुक्तत्वाद्यथाश्रुतं रम्यमिति ध्येयम्। **प्रागभावान्तरनिबन्धनमित्यादि**। अज्ञातो मे घट इति प्रत्यक्षं परमते तत्पुरुषीयज्ञानाविषयकवृत्तित्वविशिष्टं[1] तत्पुरुषीयज्ञानस्य संसर्गाभावं गाहते। तत्र यथा तत्पुरुषीयकिञ्चिज्ज्ञानविषये घटे तादृशाभावस्य विषयविधया तादृशप्रत्यक्षकारणस्याभावात्तादृशज्ञानरूपात्तादृशप्रत्यक्षाभाव, तथा मन्मते वृत्तिज्ञानमेकाज्ञाननिवर्तकमन्याज्ञाननिबन्धनस्य घटो न भातीत्यादिव्यवहारस्यानुत्पत्तौ प्रयोजकम्। तत्वं च तादृशव्यवहारं प्रति घटाकारवृत्तेः प्रतिबन्धकत्वात्, वृत्तिविषयत्वाभावकालोपहित एव घटे आवृतत्वस्वीकारात्, वृत्त्यविषयत्वविशिष्टं यदज्ञानं तदभाववच्चितो भानत्वस्वीकारेण तस्या वृत्तिकाले घटादौ सत्वाद्वा, सर्वथापि तादृशव्यवहाररूपकार्यानुत्पत्तिव्याप्यार्थकं प्रतिबन्धकपदं वृत्तावस्मदीयैः प्रयुज्यमानं न विरुद्धमिति प्रघट्टकार्थः।

---

[1] विशिष्टतत्पुरुषीय—क. ग.

न्धनं च प्रयोजनं प्रतिबध्नातीति किमु वक्तव्यम् । अत्र च प्रतिबन्धपदेन कार्यानुत्पत्तिप्रयोजकत्वं कारणाभावप्रतिबन्धकसाधारणमभिहितम् । एवमवस्थाविशेषपक्षेऽपि प्रकाशाप्रकाशावुपपादनीयौ । एवममूर्तस्याज्ञानस्य यद्यपि दण्डादिना गवादीनामिवापसरणं करादिना कटादीनामिव संवेष्टनं च न सम्भवति; तथापि कार्याक्षमत्वसाम्येनापसरणसंवेष्टनपक्षौ योजनीयौ । यथा ह्युत्तेजकाभावसहकृतस्य मणेः प्रतिबन्धकतायामुत्तेजकसत्त्वे प्रतिबन्धकार्याक्षमत्वम्; तथा वृत्त्यभावसहकृतस्याज्ञानस्य प्रतिबन्धकतायां वृत्तौ सत्यां तत्कार्यानुदय इति द्रष्टव्यम् । ननु—चैतन्यस्य निरवयवत्वात्तस्यैकदेशेन प्रकाशो न युज्यते; अथाकाश इव तत्तदर्थावच्छिन्नत्वमेकदेशशब्दार्थः, तर्हि नागन्तुकपदार्थावच्छिन्नचैतन्यमनाद्यज्ञानस्य विषयः; निर्विषयस्यावरणस्यायोगात्, प्रागनवच्छिन्नावरणमेवेदानीमवच्छिन्नावरणं जात-

---

प्रतिबन्धकपदेन प्रतिबन्धकबोधकपदेन । एवमिति । एकया वृत्त्या एकस्या अवस्थाया नाशोऽन्यासां कार्ये च प्रतिबन्ध इत्यादिरीत्येत्यर्थः । एकदेशनाशपक्षीयं पक्षद्वयमुपपादयति — एवममूर्तेति । प्रतिबन्धकार्येति । कार्यानुत्पादरूपकार्येत्यर्थः प्रतिबन्धकतायां घटो भातीत्यादिव्यवहाररूपकार्योत्पत्तिप्रयोजकाभावप्रतियोगितायाम् । सा च भातीत्यादिव्यवहारं वृत्त्यभावविशिष्टाज्ञानस्य प्रतिबन्धकत्वाद्वा वक्ष्यमाणरीत्या वा बोध्या ॥

ननूक्तव्यवहारेऽज्ञानस्य प्रतिबन्धकत्वे वृत्त्यभावविशिष्टाज्ञानाभावविशिष्टचितो भानरूपत्वे च गौरवाद्वृत्तिविशेषस्यैव भानत्वं युक्तमिति—चेन्न; सुखादौ वृत्त्यनङ्गीकारलाघवादेरुक्तत्वात् । अत एव प्रवृत्त्यादावुक्ताज्ञानाभावस्य हेतुत्वेऽपि न गौरवम्, तद्व्यक्तित्वेन तत्र तस्य

**मित्यपि न; अवच्छिन्नचैतन्यज्ञानेनैवानवच्छिन्नावरणनाशापत्तेः; एतेन व्यक्तितः पूर्वं जातिरिव विषयात्पूर्वमज्ञानमस्तीति निरस्तमिति – चेन्न; अनाद्यज्ञानविषयेऽनादिचैतन्ये तत्तदागन्तुकपदार्थावच्छेदाभ्युपगमात्, 'आश्रयत्वविषयत्वभागिनी**

---

हेतुतासम्भवाच्च । तस्माद्वृत्त्यनवच्छेदकत्वसमानाधिकरणो योऽज्ञानसम्बन्धस्तस्य भानाश्रयत्वव्यवहारे [1]प्रतिबन्धकत्वात् घटादौ वृत्त्यवच्छेदकत्वकाले तथा व्यवहारः । उक्तसम्बन्धाभावाश्रयतादात्म्यापन्नचिदेव वा भानम्, तेनोक्तकालेऽज्ञानसम्बन्धसत्वेऽपि तथा व्यवहारः। वृत्त्यविषयत्वसमानाधिकरणस्यासत्वापादकाज्ञानसम्बन्धस्यास्तित्वाश्रय – व्यवहारा[2]नुपपत्तौ[3] प्रयोजकत्वं बोध्यम् । अज्ञानस्य सम्बन्धस्तु सर्वत्र विषयतावच्छेदकत्वं, तच्च घटादावेव न सुखादाविति वृत्त्यभावेऽपि सुखादौ भानादिव्यवहारः । **नाशापत्तेरिति** । यदिदानीमवच्छिन्नं तदेव प्रागनवच्छिन्नत्वाच्छुद्धविषयकमावरणमिति तन्नाशापत्तिरिति भावः । **अवच्छेदाभ्युपगमादिति** यद्यपि चिन्मात्रमेवाज्ञानविषयस्तथापि तत्वावच्छेदकत्वं कादाचित्कप्रकाशेषु स्वीक्रियते, यथा घटाद्यत्यन्ताभावस्य देशविशेषसम्बन्धेऽनादौ परमते कालविशेषस्यावच्छेदकत्वं तद्वदेव च तत्र न नियामकापेक्षा । अस्तु वा स्वावच्छिन्नविषयताकत्वसम्बन्धेन कादाचित्कप्रकाशकार्ये प्रत्यविद्यायाः कारणत्वम्। अनादीश्वरादिनिष्ठा च तादृशावच्छेदकता न हेतुनियम्या । अथवा अवच्छेदाभ्युपगमादित्यस्याज्ञानविषयता घटाद्यवच्छिन्नेत्यत्र न तात्पर्यम्; परं त्वज्ञानविषये शुद्धचिति तत्पदार्थसम्बन्ध इत्यत्र । नचैवम्—सुखादौ सर्वदा भातीति न स्यात्. वृत्त्यनवच्छेदकवृत्तेरज्ञानतादात्म्यादेरेव प्रतिबन्धकत्वादि स्वीकार्यमिति तस्य सदा सत्वादिति--वाच्यम्; सुखादावेकस्या

---

[1] प्रतिन्धत्वात्–ग. [2] श्रयत्वव्यवहारा–ख. ग. [3] नुपत्तौ–ग.

निर्विभागचितिरेव केवला' इत्युक्तत्वात् । यदवच्छिन्न-गोचरा च वृत्तिस्तदवच्छेदेनैवावरणापसरणान्नानवच्छिन्न-चैतन्यावरणभङ्गप्रसङ्गः । अतएव वृत्तिविषयादवच्छिन्नचैतन्या-

अविद्यावृत्तेरनादेः स्वीकारसम्भवात् । यदवच्छिन्नगोचरेति । यद-वच्छिन्ना यत्संश्लिष्टा यद्गोचरा यदाकारा चेत्यर्थः । प्रत्यक्षवृत्त्यभिप्राये-णेदम् । तदवच्छेदेनैवावरणापसरणादिति । तस्यैवोक्ताज्ञानसम्ब-न्धाभाववत्त्वा[1]दित्यर्थः । आवरणमभानापादकं ग्राह्यम्, तेन परोक्ष-वृत्तेः प्रमात्रगोचरायास्तदवच्छेदेनावरणनिवर्तकत्वेऽपि न क्षतिः । भङ्ग-प्रसङ्ग इति । अज्ञाननाशं प्रति ब्रह्माकारवृत्तेरेव हेतुत्वाद्धटादिवृत्त्या न तदापत्तिरिति भवः । तदेवमेकदेशपक्षान्तर्भावेन चरमपक्षयोर्व्या-ख्यानम् ॥

अथवा चरमपक्षयोः पूर्वमुपपादनम्, ननु[2] चैतन्यस्य निरवयव-त्वादित्यादिना एकदेशनाशपक्षस्ताभ्यां भिन्न एव स्वीकृत्योपपाद्यते । तत्र यदवच्छिन्नेत्यादेरयमर्थः — यत्कालावच्छिन्नघटादिविषयगोचरा वृत्तिस्तत्कालावच्छेदेन घटादिविषयेषु नाज्ञानविषयतावच्छेदकत्वरूप-मावरणम्; किं त्वन्यकालावच्छेदेनेति । तथाचात्र पक्षे घटादावुक्ता-वच्छेदकत्वं वृत्त्यभावकाले, तत्पक्षयोस्तु घटादिकालमात्र इति भेदः । एवं चास्मिन्पक्षेऽज्ञानविषयतानवच्छेदकत्वविशिष्टघटादिचिदेव घटादिभा-नम्, असत्वापादकाज्ञानविषयतानवच्छेदकघटादिचिद्धटाद्यास्तित्वमिति लाघवमपि बोध्यत् ॥

यत्तु शुक्त्यादिज्ञानस्याज्ञानशक्त्यभिभावकत्वं न युक्तम् । शक्तेरज्ञानान्यत्वे आवरणत्वायोगात्, अज्ञानरूपत्वे चाज्ञननाशं विना तन्नाशायोगात्, तस्या भ्रमोपादानत्वेऽज्ञानत्वापत्तेः तस्यैवाज्ञानलक्षण-त्वात्, भ्रमानुपादानत्वे भ्रमोपादानमूलाज्ञाननिवृत्तिं विना रूप्यादि-

[1] भावत्वा—ग. [2] नतु—क.

अपनिवृत्त्ययोगात्, शक्त्यैवावरणविक्षेपकार्यसिद्धेरज्ञानवैय्यर्थ्यात्, शुक्त्यादाविव ब्रह्मण्यपि शक्तेरावश्यकत्वेन विपरीतगौरवापत्त्या नानाज्ञानवादस्यैव युक्तत्वाच्चेति, तन्न; अवस्थास्विव शक्तिष्वप्य ज्ञानाभेदस्वीकारेणावरणत्वादिसम्भवात्, भेदस्यापि सत्वेनाज्ञाननिवृत्तिं विना निवृत्तिसम्भवाच्च। भ्रमोपादानत्वेऽपि तासां नाज्ञानत्वम्; तदाश्रयशक्तिविशिष्टत्वस्यैवाज्ञानलक्षणत्वात्। अथवा शुक्त्यादिज्ञाननिवृत्त्या[1] शक्तिर्न रूप्यादिभ्रमोपादानम्; किंतु तत्वावच्छेदिका। उपादानस्य त्वज्ञानस्य ब्रह्मज्ञानेनैव नाशः प्रयोजकशक्तिनाशादुपहिताज्ञानरूपोपादाननाशसम्पत्त्या रूप्यादेरुच्छेदः। न च—शक्त्यैव निर्वाहे व्यर्थमज्ञानमिति—वाच्यम्; कार्यानुकूलशक्तिमत एव कार्योपधायकत्वस्य वह्न्यादौ दृष्टत्वात्। न च—शक्त्यवस्थापक्षयोरविशेष इति—वाच्यम्, अवस्थास्वावरणविक्षेपशक्तिस्वीकारात्, शक्तीनामज्ञानवृत्तित्वं न त्ववस्थानाम्; अङ्कुराद्यवस्थानां वृक्षादिवृत्तित्वादर्शनादिति भेदाच्च। यदप्येकाज्ञानस्वीकारपक्षो न युक्तः; एकदेशनाशादिपक्षे रूप्यादिनिवृत्तिर्न स्यादुपादानानिवृत्तेरिति, तदपि न; आद्ये ह्युपादाननिवृत्त्यपेक्षा न तु निवृत्तिमात्रे; तां विनापि घटादेर्विभुविशेषगुणस्य च निवृत्तेः॥

यत्तु—अवस्थास्वीकारपक्षे सर्वावस्थानुस्यूतैकाकारेणाज्ञानैक्यसमर्थनं न युक्तम्; नानाज्ञानवादापत्तेः, नानाघटानुस्यूतैकघटत्वाकारेऽपि नानाघटवदिति, तत्तुच्छम्; अवस्थास्वज्ञानतादात्म्याङ्गीकारेऽप्यज्ञानत्वरूपाखण्डधर्मानङ्गीकारात्। न हि बीजावस्थायामङ्कुरादौ बीजत्वादिनियमः, दृष्टान्ते तु घटत्वाश्रयाभिन्न[2]त्वेन घटनानात्वस्य युक्तत्वात्। न चाज्ञाननिवृत्तिं विना तदुपादेयावस्था न निवर्तेतेति—वाच्यम्; अवस्थानामनादित्वेनाज्ञानानुपादेयत्वात्तासामुपादेयत्वस्वी-

[1] निवर्त्या—ग. [2] घटत्वाश्रयाणां भिन्न—ख ग.

त्प्रागज्ञानमस्तीत्यभिप्रायेण विषयात्प्रागज्ञानमस्तीति साधूक्तम्। तस्मादधिष्ठानचैतन्यं स्वाध्यस्तं भासयतीति सिद्धम्। तदयमत्र

कारेऽपि दण्डादिना घटादीनामिव ज्ञानेन निवृत्तिसम्भवात्। तासामज्ञानाभेदादज्ञानं नष्टमित्यादिव्यवहार इति न तासां कल्पना व्यर्था। यदपि नोपहिते चैतन्येऽज्ञानम्; तस्य जडत्वात्, किंतु शुद्धे, तस्य च घटाद्यवच्छेदोऽपीत्यवच्छिन्नमावृतमुच्यते इत्ययुक्तम्; तथा सति तमोघटाभ्यां युक्ते भूतले प्रकाशसम्बद्धे भूतलस्येव, अज्ञानघटाभ्यां युक्ते शुद्धचैतन्ये प्रकाशसम्बन्धे तस्यापि प्रकाशः स्यादिति, तत्तुच्छम्; घटावच्छेदेन हि भूतले आलोकसम्बद्धे तदवच्छेदेनैव तत्प्रकाशो न त्वन्यावच्छेदेनेति, त्वद्दृष्टान्तेनैव त्वन्मुखपिधानात्। ननु—नानाज्ञानपक्षो न युक्तः; एकाज्ञाननाशकशुक्त्यादिज्ञानेनान्येषामज्ञानानामिव शुक्त्याद्यज्ञानमात्रस्य प्रतिरुद्धत्वसम्भवेन ब्रह्मान्यज्ञानमात्रस्याज्ञाननाशकत्व[1]प्रसङ्गादिति—चेन्न; शुक्त्यज्ञानं शुक्तिज्ञानेन नष्टमित्याद्यनुभूतिपालनाय शुक्त्यादिज्ञानस्याप्यज्ञाननाशकत्वस्वीकारात्॥

यत्तु—यदवच्छिन्नगोचरा वृत्तिस्तदवच्छेदेनावरणापसारणान्नानवच्छिन्नचिदावरणभङ्ग इत्ययुक्तम्; शाखावच्छेदेन संयोगाधारस्य वृक्षत्ववद्घटाद्यवच्छेदेन भग्नावरणस्यापि शुद्धचित्वान्मोक्षापत्तेरिति—तत्तुच्छम्; एकदेशनाशपक्षे हीदमुक्तम्, एकदेशनाशश्च घटादिनिष्ठस्याज्ञानविषयतावच्छेदकत्वस्य वृत्तिकाले वृत्त्यभावविशिष्टत्वेनाव्याप्यवृत्तितया वा विरहः, न च तावता ब्रह्माज्ञाननिवृत्तिरापद्यत इति व्याख्यातम्। तस्मादबोधमूलकः परप्रलापः॥

**तस्मादिति**। उक्तदोषाणामुद्धारादित्यर्थः। घटादौ जीवस्यानुपादानत्वे सर्वगतस्यापि तस्यासङ्गस्योपरागार्था वृत्तिरिति पक्षेऽपि

1 ज्ञानानाशकत्व—ख. घ.

**निष्कर्षः—यद्यपि विषयप्रकाशकं विषयाधिष्ठानभूतं प्रमेयचैतन्यम्, अन्तःकरणावच्छिन्नचैतन्यं तु प्रमातृ, अन्तःकरणवृत्त्यवच्छिन्न-चैतन्यं तु प्रमाणम्; तथापि यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षुरादिद्वारा निस्सृतया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्या-**

---

घटादेरधिष्ठानीभूतं ब्रह्मचैतन्यमेव प्रकाशकम्, प्रकाशस्य साक्षात्स्व-सम्बद्धभासकत्वस्यालोकादौ दृष्टत्वात्। वृत्तिद्वारा तादृशचैतन्ये जीव-स्योपरागं विना ममेदं भातीत्यादिव्यवहाराभावाज्जीवस्य प्रकाशकत्वं पूर्वमुक्तम्, तत्पर्यालोचनाच्चोक्तपक्षेऽपि वृत्त्यादिघटितसम्बन्धेन जीवो-परक्तमधिष्ठानचैतन्यं प्रकाशकमिति पर्यवसितम्। स्वप्रतिबिम्बवत्सु-खादितादात्म्येन जीवोपरक्तमधिष्ठानचैतन्यं सुखादौ भासकम्। एवं चोक्तपक्षे वृत्तेरावरणाभिभवार्थत्वपक्षे चापि प्रमेयचैतन्यस्य प्रमातृचैत-न्योपरागनिष्पादनान्मयेदं साक्षात्क्रियत इत्यादिव्यवहारनिर्वाहिका वृत्ति-रिति, पूर्वोक्तपक्षत्रयेपि प्रमातृप्रमेयचितोरुपरागार्थत्वं वृत्तेरित्यादि पूर्वा-नुक्तं प्रकटयति—**यद्यपीत्यादि**। **प्रमेयचैतन्यमिति**। चैतन्य[1]-स्यैवाज्ञातत्वान्मुख्यं प्रमाविषयत्वमज्ञातत्वावच्छेदकत्वाद्घटादेरिति भावः **प्रमात्रिति**। मनोविशिष्टचैतन्यस्य चक्षुरादिप्रेरणद्वारकवृत्त्यवच्छिन्न-विषयचैतन्यरूपप्रमानिष्पादकत्वेन प्रमातृत्वमिति भावः। **प्रमाणमिति**। वृत्तेर्विषयसंश्लेषं प्रत्युपधायकत्वेन तज्जनकक्रियादिजनकत्वेन वा वृत्ति-संश्लिष्टविषयाचिद्रूपां प्रमां प्रति वृत्त्यवच्छिन्नचैतन्यं करणमिति भावः। केवलवृत्तेर्जडत्वेन चिदुपरक्ता विषयसंश्लिष्टा वृत्तिः प्रमा। तत्र च चिदुपरक्तैव वृतिरुपधायिकोक्तजनकत्ववती वेति सैव प्रमाणम्। केवलस्य मनसो जडत्वेन केवलचितश्च निर्व्यापारत्वेन प्रमां प्रति स्वातन्त्र्याभावाच्चि-दुपरक्तं मनः प्रमात्रिति त्रयाणां चिद्घटितत्वमावश्यकमिति भावः। **तथापि**

---

[1] प्रमेयचैतन्य—ग.

**भेदेनाभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा। अत एवैकवृत्त्युपारूढत्वलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति। ततस्तदवच्छेदेनाज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यमपरोक्षं फलमित्युच्यते। तत्स्वयं भासमानं सत्स्वाध्यस्तं**

---

त्रयाणामौपाधिकभेदसत्त्वेऽपि। **जानाति** साक्षात्करोति। **नान्यमिति** सुखादिभिन्नमिति शेषः। तेन सुखादिसाक्षात्करणे वृत्त्यनपेक्षणेऽपि न क्षतिः। **नान्य इति**। जीव इति शेषः। तेनेशस्य मनोवृत्त्यनपेक्षसाक्षात्कर्तृत्त्वेऽपि न क्षतिः। कथं भिन्नोपाधिकत्वेऽप्यभेदाभिव्यक्तिस्तत्राह——**अत एवेति**। वृत्तिनिस्सरणादेवेत्यर्थः। **भावापन्नमिति**। तथाचोपाधीनां मिलनादमिलन[1]प्रयुक्तो भेदो नश्यतीत्यभेदाभिव्यक्तिरिति भावः। फलव्याप्यतारूपं साक्षात्कारकर्मत्वं घटादेरुपपादयति—**तत इति**। एकलोलीभावादित्यर्थः। **तदवच्छेदेन** घटादिविषयावच्छेदेन। **निवृत्त्या भासमानं** निवृत्त्यभिन्नस्य भासमानत्वस्याश्रयः। वृत्तेरज्ञाननिवृत्त्यर्थत्वपक्षान्यपक्षयोरपि जीवचिद्विषयचितोरनुपरागनिवृत्तिरूपो वृत्त्यादिद्वारकोपरागः प्रमातृप्रमेयचितोरभेदश्चाज्ञाननिवृत्तिशब्दार्थो बोध्यः। तादृशानुपरागभेदयोर्भातीतिव्यवहारविरोधित्वात्। **अपरोक्षं** अपरोक्षशब्दबोध्यम्। **फलमिति**।निवृत्तेश्चैतन्यरूपत्वेऽप्युक्तनिवृत्तित्वेन वृत्तिप्रयुक्तत्वात्फलत्वम्[2]। एकदेशनाशादिपक्षे ऽप्युक्तविशिष्टाज्ञानसंबन्धस्याज्ञानविषयतावच्छेदकत्वस्य वा विरहोऽज्ञाननिवृत्तिर्बोध्या। तस्य च वृत्तिप्रयुक्तत्वात्फलत्वम्। वृत्तेरज्ञाननाशत्वपक्षेऽपि तेन रूपेण वृत्तिप्रयुक्तत्वात्फलत्वम्[2]। अधिकरणमेव ध्वंसो ज्ञानमेव स्वप्रागभावनिवृत्तिरित्यादिमतेषु ज्ञाने नाज्ञानं नष्टमित्यादिप्रतीतेस्तथावश्यं वाच्यमित्याद्युक्तम्। वृत्तेर्जीवचिदुपरागार्थत्वपक्षे जीवचिदभेदाभिव्यक्त्यर्थत्वपक्षे च वृत्त्यादिद्वारकोप-

---

[1] मिलनामिलन—ग. [2] फलवत्त्वपू—ग.

घटाद्यपि भासयतीति तत्फलव्याप्यमित्युपेयते । यन्निष्ठा च यदाकारा वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं सा नाशयतीति नियमात्प्रमातृप्रमेयोभयव्यापिन्यपरोक्षवृत्तिः स्वावच्छेदेनावरणमपसारयति; प्रकाशस्य स्वावच्छेदेनावरणापसारकत्वदर्शनात् । अतः प्रमात्रवच्छिन्नस्यासत्त्वावरणस्य प्रमेयावच्छिन्नस्याभानावरणस्य चापसरणात् घटोऽयं मे स्फुरतीत्याद्यपरोक्षव्यवहारः । परोक्षस्थले तु इन्द्रियसन्निकर्षलक्षणद्वाराभावादन्तःकरणनिस्सरणाभावेन विषयपर्यन्तं वृत्तेरगमनाद्विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृचैतन्यस्यैकवृत्त्युपारूढत्वाभावेनापरोक्षतयाऽभिव्यक्त्यभावेपि प्रमातृप्रमाणचैतन्ययोरेकलोलीभा-

---

रागः प्रमात्रभेदश्च विषयचिति फलम् । तादृशफलसम्बन्धाच्च विषयचैतन्यं फलम्, तादृशचिदेव भात्यादेरर्थस्तत्प्रयोजकाचिदेव साक्षात्करोत्यादेरर्थः । एवंच घटं साक्षात्करोमीत्यादौ फलीभूतस्य धात्वर्थतावच्छेदकोक्तचैतन्यस्याश्रयत्वाद्घटादेः कर्मत्वमिति भावः । व्याप्यं आश्रयः ननु—परोक्षवृत्तिस्थलेऽप्यज्ञानं नष्टमित्यनुभवात्परोक्षभ्रमोच्छेददर्शनाच्चाज्ञाननाशो वाच्यः, तथाच वन्हिर्मे न भातीति व्यवहारो न स्यादपरोक्षभ्रमोच्छेदश्च स्यादित्यत आह—यन्निष्ठेति । उक्तसंश्लेषसंबन्धेनेत्यादिः । तन्निष्ठं तदवच्छिन्नाश्रयताकम् । तदाकारं तदवच्छिन्नविषयताकम् । स्वावच्छेदेन स्वावच्छेदकावच्छेदेन । स्फुरतीत्यादीत्यादिना घटं साक्षात्करोमीत्यादिसंग्रहः । घटो मे स्फुरतीत्यादावुक्ताज्ञाननिवृत्तिसंबन्धिचिद्रूपस्य स्फुरणस्याश्रयत्वं घटादौ विशेषणम् । प्रमातुस्तु तादृशनिवृत्तिप्रतियोगिन्यज्ञानादौ निरूपितत्वादिसंबन्धेन विशेषणत्वम् । सुखं मे स्फुरतीत्यादावपि सुखादावज्ञानाविषयतानवच्छेदकत्वरूपोक्तनिवृत्तिसत्वान्नानुपपत्तिः । घटं साक्षात्करोमीत्यादौ तूक्तभानरूपफलप्रयोजक-

वापत्त्या प्रमात्रवच्छिन्नमसत्त्वावरणमात्रं निवर्तते; तावन्मात्रस्य वृत्त्यवच्छिन्नत्वात्। इदमेव सुषुप्तिव्यावृत्तिशब्देन विवरणाचार्यैर्व्याख्यातम्। विषयावच्छिन्नाभानावरणतत्कार्यसद्भावेपि प्रमात्रवच्छिन्नासत्त्वावरणानिवृत्त्याऽनुमानादौ व्यवहारोपपत्तिः। अत एव जानाम्यहं पर्वते वन्हिरस्तीति, स तु कीदृश इति मे न भातीत्यादिव्यवहारः। त्रयाणामेकलोलीभावेऽपरोक्षत्वम्। द्वयोरेकलोलीभावे तु परोक्षत्वमिति न सङ्करः। वृत्तेश्च विषयेण

चितो वृत्त्यवच्छिन्नत्वेन प्रमाणचिद्रूपत्वादाश्रयत्वेन प्रमातरि विशेषणत्वम्, उक्तफलप्रयोजक[1]वृत्त्यवच्छिन्नत्वेनोक्तफलप्रयोजकत्वं च। उक्तफले चाधेयतया घटादेर्विशेषणत्वम्, सुखं साक्षात्करोमीत्यादौ त्वज्ञानविषयतानवच्छेदकत्वसमानाधिकरणचिद्रूपं फलं प्रति मनउपहितं चैतन्यं प्रयोजकमेव; उक्तसामानाधिकरण्यघटकं सुखादिकं प्रत्यधिष्ठानत्वात्सुखादिपरिणामिकारणमनोवच्छिन्नत्वाद्वा, तादृशचैतन्यस्य च सुखाद्युपहितरूपेण प्रमात्राश्रितत्वमविरुद्धम्[2]। अविद्यां साक्षात्करोमीत्यादावपि नानुपपत्तिः; अविद्यादिनिष्ठऽज्ञानविषयतानवच्छेदकत्वेऽनुपहितचिद्रूपेण चैतन्यस्याधिष्ठानत्वादिना प्रयोजकत्वात्तादृशचितः प्रमातरि तादात्म्येन विशेषणत्वसम्भवाच्च। अथवा आश्रयस्याश्रितं प्रति क्षेमसाधारणजनकतया स्वातन्त्र्यरूपकर्तृत्वमेवाख्यातेनोल्लिख्यते स्फुरतीत्यादाविति भावः॥

**जानाम्यहमित्यादि**। अज्ञानाभावाश्रयचिज्ज्ञानं वन्हिं जानामीत्यादौ वन्ह्यादिर्नि[3]रूपितत्वसंबन्धेनाज्ञानाविशेषणम्। सुखं जानामीत्यादौ सुखादिनिरूपितमज्ञानं पुरुषान्तरं प्रसिद्धम्। प्रमातरि चावच्छेदकतासंबन्धेन ज्ञानं ज्ञानावच्छेदकत्वं वा विशेषणम्। असत्वापादका-

[1] त्वादौ तूक्तफलप्रयोजक—क. [2] द्धमिति-क. ग. [3] वह्न्यादिनि—क. ग.

ज्ञानाभावं प्रति प्रमातुरवच्छेदकत्वात्तद्विशिष्टचितं प्रत्यप्यवच्छेदकत्वम् । अत एव घटो जानातीति न स्यात् । घटादावसत्वापादकाज्ञानाभावावच्छेदकत्वे मानाभावात् । असत्वापादकाज्ञानाभावप्रयोजकचिद्धा ज्ञानम् । तत्त्वं च प्रयोजकीभूतवृत्त्यवच्छिन्नत्वेन । प्रमाणाचित एव प्रयोजकतावच्छेदकप्रमातृनिष्ठतादात्म्येन तस्य विशेषणत्वनियमान्न घटो जानातीत्यादिव्यवहारः । सुखं जानामीत्यादौ च सुखादिनिरूपितासत्वापादकाज्ञानाभावस्य तत्तन्मनउपहितचित्येव कल्पितत्वात्सैवाधिष्ठानत्वेन प्रयोजिका । जानातिश्चाकर्मक एव; अतएव परोक्षज्ञानस्य विवरणादावकर्मकत्वमुक्तम् । तस्य सकर्मकत्वे[1] त्वसत्वापादका((ज्ञानविरोधि) ज्ञाननिरूपकत्वस्य[2] यदधिकरणत्वं तत्प्रयोजकाचिदेव जानातीत्यर्थः । उक्ताधिकरणत्वरूपफलवत्वेन[3] घटादेर्ज्ञानकर्मता । सुखादिनिष्ठे तादृशाधिकरणत्वेऽपि सुखाद्युपहितरूपेण चित्प्रयोजिका, सुखादेरसत्वदशायां तादृशचिदभावे उक्ताधिकरणत्वाभावात्तद्भावे तद्भावाच्च। उक्तनिरूपकत्वाभावप्रयोजकचितो जानात्यर्थत्वे घटाकारवृत्तिदशायां प्रमातारं जानामीति स्यात्; तादृशवृत्तिप्रयुक्तस्योक्तनिरूपकत्वाभावस्य प्रमातरि सत्त्वात् । उक्ताधिकरणत्वोक्तौ तु प्रमातृनिष्ठस्य तस्य स्वतः सिद्धत्वेन घटादौ विघ्नाभावाधिकरणत्वस्य मङ्गलाप्रयुक्तत्ववत् वृत्त्यवच्छिन्नादिचिद्[4]-प्रयोज्यत्वान्नोक्तापत्तिः । एवं च वृत्त्यवच्छिन्नरूपेण सुखाद्युपहितादिरूपेण च तादृशतादृशप्रयोजकत्वाद्वृत्त्यवच्छिन्नचितो जानात्यर्थतोक्तिरिति[5] तत्र तत्राचार्याणां नासङ्गता ॥

यत्तु—आवरणभङ्गजनकज्ञानं ज्ञानानुकूलव्यापारो वा जानातेरिच्छाद्वेषाद्यनुकूलव्यापार इच्छतिद्वेष्ट्यादेरर्थ इति जानात्यादेः सकर्म-

---

[1] कर्मत्वे–ग. [2] ज्ञानादिरूपकत्वस्य–ख. [3] फलत्वेन–क. [4] वृत्त्यवच्छिन्नचिद्–ग. [5] क्तिः–ग.

समं साक्षादेवापरोक्षस्थले संबन्धः। परोक्षस्थले त्वनुमितेरनुमेयेन तद्व्याप्यज्ञानजन्यत्वम्, शाब्द्याः संसर्गेण सह तदाश्रयवाचकपदजन्यत्वम्, स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्य-

---

कतोपपादनं वैय्याकरणानां, तन्न; आवरणभङ्गरूपस्य फलस्य परोक्षज्ञानविषयनिष्ठत्वाभावात्, प्रमातृमात्रनिष्ठवृत्त्या प्रमातृनिष्ठस्यैवावरणभङ्गस्य सम्पादनात्, परम्परया फलसम्बन्धमादाय सकर्मकत्वोक्तावकर्मकस्यापि तदापत्तेः, 'फलव्यापारयोर्धातुरि'त्यादिना तस्यापि त्वया स्ववाच्यव्यापारसमानाधिकरणफलवाचकत्वोक्तेः, सुखादिस्थले आवरणस्यैवाप्रसिद्धत्वाच्च। अत एव ज्ञानमपि न फलम्; चैतन्यस्य तद्वृत्तिज्ञानस्य परोक्षस्य विषयनिष्ठत्वाभावाद्विषयतासम्बन्धस्य वृत्त्यनियामकत्वात्सुखादिस्थले तदसम्भवाच्च। यदपि विषयताजनकज्ञानादिकं जानात्यादेरर्थ इति, तदपि न; विषयताया ज्ञानाद्यतिरिक्तत्वेऽपि ज्ञानादिजन्यत्वे मानाभावात्, [1]स्वोत्पत्ति[2]क्षणे स्वविषयकत्वाभावात्। तस्माज्जानातेरुक्तरीत्यैव सकर्मकत्वम्। इच्छत्यादेस्तु फलप्रयोजकेच्छादिरेवार्थः। फलं चेच्छायाः सुखादौ प्रमातृसम्बन्धादिः, गवादौ स्वत्वादिः, द्विषेश्च शत्र्वादौ तत्तदनिष्ठम्, सुखाद्यनुत्पत्तावपीच्छादेस्तत्सम्बन्धस्वरूपयोग्यत्वानपायात्। सुखमिच्छतीत्यादिप्रयोगो ग्रामप्राप्त्यनुपधानेऽपि ग्रामं गच्छतीत्यादिप्रयोगवदिति दिक्। साक्षात्कारोतिजानात्योर्मुख्यसकर्मकत्वानङ्गीकर्तृतार्किकादिरीत्या तयोरर्थविवेचनं तु विस्तरेण कृतमस्माभिः पूर्वम्॥

साक्षादेवेति। गन्धादिभिन्ननिष्ठः स्वसंयुक्तसमवायो रूपादौ, तद्वत्समवायादी रूपत्वादौ। स च यद्यपि परम्परारूपः, तथापि द्रव्ये

---

[1] ज्ञानादिपूर्वं विषयत्वासत्वेऽपि ज्ञानाद्यभावादेवोपपत्तेः। ज्ञानादीनां ग.
[2] स्वोत्पत्तिद्वितीयक्षणे . . . . . . ना संभवात्—ग.

त्वम् । एवमन्यत्रापि परंपरासंबन्ध एवेति परोक्षापरोक्षविभागः । विस्तरेण व्युत्पादितास्माभिरियं प्रक्रिया सिद्धान्तबिन्दौ । तस्माद्विषयस्य मिथ्यात्वेपि प्रतिकर्मव्यवस्थोपपन्नेति दिक् ॥

इत्यद्वैतसिद्धौ प्रतिकर्मव्यवस्थोपपत्तिः ॥

---

संयोगः साक्षात्सम्बन्ध इति क्वचित्साक्षात्सम्बन्धसत्वात्साक्षादेवेत्युक्तम् । निष्ठान्तस्थले आकाराख्यवक्ष्यमाणविषयताविशेषितेति वा वाच्यम् । अवच्छेदकत्वसम्बन्धो वा साक्षात्सम्बन्धो ग्राह्यः । स च चाक्षुषादिप्रतियोगिको यथा गन्धादिव्यावृत्तस्तथा प्रतिपादितमस्माभिरन्यत्र । अयमित्यादिस्थलेऽपि[1] गोसादृश्यादिविशिष्टविशेष्यकस्वप्रकारकज्ञानजन्यत्वं गवयपदवाच्यत्वादे रूपमित्यादाविति शेषः । अनुमित्यादौ वन्ह्यादेर्विधेयतारूपस्य सम्बन्धस्य निर्वचनमिदम् । वन्हित्वादौ तु तद्घटितः सम्बन्धो बोध्यः । यावद्भिः सह यस्य ज्ञानस्य यावन्तोऽसाधारणाः सम्बन्धास्तावदन्यतमत्वं तेषां तत्र सम्बन्धतावच्छेदकमनुगतमाकाराख्यः संबन्धो वा अनुगतो बोध्यः । सिद्धान्तबिन्दाविति । "शरीरं व्याप्य तस्य मध्यस्थः सत्त्वप्राधान्येन पञ्चीकृतपञ्चभूतपरिणामोऽतिस्वच्छो नेत्रादिद्वारा निर्गत्य घटादिसंसृष्टस्तदाकारो भवति । स च सौरालोकचक्षुरादिवत्सङ्कोचविकासशाली । तस्य च देहावच्छिन्नो भागोऽहङ्काराख्यः कर्ता, देहघटादिमध्यवर्ती दण्डायमानो भागो वृत्तिज्ञानाख्यः क्रिया, विषयस्थभागस्तु विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यत्वमुच्यते । तत्र च मनसो भागत्रयेऽतिस्वच्छे चिदभिव्यक्ता भवति । तत्र कर्तृभागावच्छिन्ना सा प्रमात्री, क्रियाभागावच्छिन्ना प्रमाणम्, विषयगतभागावच्छिन्ना प्रमितिः, प्रमेयं तु विषयगतं ब्रह्मचैतन्यम्, तदेव ज्ञातं[2] सत्फलम्" इत्यादि प्रक्रिया सिद्धान्तबिन्दूक्ता ॥

---

1 उपमित्यादिस्थलेऽपि—ग. 2 ज्ञानं—ग.

# अथ प्रतिकूलतर्कनिराकरणम्.

ननु–मिथ्यात्वानुमानं प्रतिकूलतर्कपराहतम् । तथाहि विश्वं यदि कल्पितं स्यात्, साधिष्ठानं स्यात्, न चैवम्; सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निस्सामान्ये च ब्रह्मण्यसम्भवादिति—चेन्न; स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्याधिष्ठानत्वप्रयोजकत्वेन ज्ञात[1]विशेषवत्त्वस्याप्रयोजकत्वात् । पुरुषो न वेति संशयधर्मिणः स्थाणोरप्यन्यत्र ज्ञातस्थाणुत्वरूपविशेषवत्त्वात्तत्राज्ञातविशेषवत्त्वमपि न प्रयोजकम्; विशेषवत्त्वेनाज्ञातत्वस्यैव लघुत्वेन प्रयोजकत्वात् ।

---

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय प्रतिकर्मव्यवस्थितिः ॥

इति प्रतिकर्मव्यवस्था ॥

---

## अथ प्रतिकूलतर्कनिराकरणम्.

स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्येति । ज्ञातत्वे सत्यज्ञातत्वस्येत्यर्थः । ज्ञातस्याप्यज्ञातत्वं न विरुध्यते; ज्ञातसामान्यरूपस्याप्यज्ञातविशेषरूपकत्वसम्भवादित्यभिप्रेत्य स्वरूपेण विशेषेणेत्युपात्तम् । यद्यपि सद्रूपपरिपूर्णानन्दादिरूपयोर्न न्यूनाधिकवृत्तित्वलक्षणः सामान्यविशेषभावः, तथापि भ्रमकाले भासमानं सामान्यं बाधकाले भासमानं विशेषरूपमिति बोध्यम् । तत्राज्ञातेति । यद्यपि स्थाणुत्वमन्यत्र ज्ञातमपि स्थाणावज्ञातमित्यज्ञातविशेषवत्त्वमक्षतम्, तथापि भ्रमधर्मिणि ज्ञातविशेषस्यान्यत्राज्ञातत्वसम्भवात्तदानीं च भ्रमानुत्पत्तेस्तत्राज्ञाते-

---

[1] त्वेनाज्ञात.

**तथाच निस्सामान्ये निर्विशेषे च ब्रह्मणि स्वप्रकाशत्वेन ज्ञानात् परिपूर्णत्वानन्दत्वादिना चाज्ञानादधिष्ठानत्वमुपपन्नम्। वस्तुतस्तु कल्पितसामान्यविशेषवत्त्वं ब्रह्मण्यपि सुलभमेव; अकल्पितसामान्यविशेषवत्त्वं चाप्रसिद्धम्। नच तत्कल्पनेऽन्योन्याश्रयः;**

---

त्यवश्यं वाच्यम्, तथाच गौरवमिति भावः। **स्वप्रकाशत्वेन ज्ञानात्** स्वप्रकाशचिद्रूपज्ञानात् **परिपूर्णानन्दत्वादिना चाज्ञानात्** परिपूर्णानन्दस्वरूपविषयकाज्ञानाच्च। **उपपन्नमिति**। यद्यप्युक्तरूपद्वयं वस्तुत एकं तथापि तयोराविद्यकालादिभेदस्य स्वीकारेण पूर्णानन्दादिरूपमेवावृतम् न तु चिद्रूपम्। अत एव पूर्णानन्दो नास्ति न भातीत्यादिव्यवहारो न तु चिद्रूपं नास्ति न भातीतिभ ावः। एवमज्ञातत्वस्यैवाधिष्ठानत्वे प्रयोजकत्वं, रूप्यादिभ्रमे शुक्त्याद्यवच्छेदेनेव जगद्भ्रमे किञ्चिदवच्छेदं विनैव चिदज्ञाता सत्यधिष्ठानमित्युपपाद्य[1]। यद्यज्ञानविषयविशेषवत्त्वं प्रयोजकम्, तथापि न क्षतिरित्याशयेनाह—**वस्तुतस्त्वित्यादि**। अथाज्ञान[2]विषयविशेषवत्त्वस्य नाधिष्ठानत्वे प्रयोजकत्वम्; रूप्यादिभ्रमस्थले तदभावात्, पूर्णानन्दादिरूपस्य तादृशविशेषवत्त्वस्य नेदं रूप्यमित्यादिबाधकालेपि सत्त्वात्, किं त्वज्ञानविषयतावच्छेदकविशेषावच्छिन्नत्वस्य प्रयोजकत्वम्; तच्च शुक्त्याद्यवच्छिन्नत्वरूपं रूप्यादिभ्रमेष्वेवास्ति, न तु गगनाद्यध्यासस्थले इति—चेन्न; यस्य भ्रमस्योपादानाज्ञानविषयता किञ्चिदवच्छिन्ना तत्रोक्तावच्छिन्नत्वस्य प्रयोजकत्वेऽपि, यत्र साऽनवच्छिन्ना-तत्र तस्य तत्वासंभवेनाज्ञानविषयविशेषवत्त्वस्यैव प्रयो[3]जकत्वात्। एवं च भ्रमान्तरे क्लृप्तत्वाभावेन गगनाध्यासेऽपि न तत्कल्पनं युक्तम्; किं त्वज्ञान[4]स्वरूपकत्वमेवाधिष्ठानत्वे पूर्वोक्तं प्रयोजकं युक्तमित्यावेदयितुमाह—**सुलभमिति**। **कल्पितसामान्येति**। संसृष्टतया कल्पितत्व-

---

[1] त्युपपाद्या—ग. [2] अथाज्ञात—ग. [3] वाप्रयोजक—क. [4]अज्ञात—ग.

कल्पितसामान्यविशेषाणां प्रवाहानादित्वात्, सत्यत्वानन्दत्वादीनामेव कल्पितव्यक्तिभेदेन सामान्यत्वात्, परिपूर्णानन्दत्वादीनां च विशेषत्वात्। अतएव सामान्याकारज्ञानं विना संस्कारानुद्बोधात्कथमध्यास इति न वाच्यं, सदात्मना स्वरूपज्ञानस्यैव सामान्यज्ञानत्वात्। न ह्यध्यसनीयं सदात्मना न भाति। एतावानेव विशेषः—यदधिष्ठानं स्वत एव सदात्मना भाति, अध्यसनीयं तु तत्संबन्धात्। नन्वधिष्ठानतिरोधानं विना भ्रमासंभवः, प्रकाशरूपतिरोधाने तु तदध्यस्ताविद्यादेः प्रकाशानुपपत्तिरिति—

---

मत्र बोध्यम्। प्रवाहेति। सर्वदा संसृष्टतया प्रतीत्यभावेन सादिप्रातीतिकत्वादित्यादिः। तेषामानन्दत्वादिरूपेण सदा प्रतीतिस्वीकारेण पूर्णानन्दत्वादिरूपेणावृतत्वात्सदा प्रतीत्यभावोपपत्तेरसंसृष्टरूपेण मिथोभिन्नरूपेण चानादित्वे तु नान्योन्याश्रयत्वशङ्का। कथमिति। इदं रजतमित्याकारसंस्कारो यथा सादृश्यादिविशिष्टधर्मिज्ञानेनोद्बुद्धस्तादृशभ्रमे हेतुस्तथा सदाकाशमित्यादिसंस्कारोऽपि तदुद्बुद्धस्तादृशभ्रमे हेतुरिति तं विना कथं स इति भावः। ननु—सद्रूपं नाधिष्ठानम्, अध्यसनीयानुविद्धत्वेनाप्रतीयमानत्वात्तत्राह—न हीति। विशेषाज्ञानमध्यासकारणमिति सिद्धान्तवाक्ये विशेषाज्ञानपदं न विशेषाविषयका[1]ज्ञानपरम्; शुक्तिरूप्यादिभ्रमस्थले शुक्तित्वादिविषयकाज्ञानप्रसिद्धेः[2], किंतु भ्रमविषयव्यावृत्ताकारकज्ञानस्याभावपरम्। तादृशस्य शुक्तित्वादिप्रकारकज्ञानस्य शुक्तिरूप्यादिभ्रमं प्रति मूलीभूताज्ञानोच्छेदकत्वेन तदभावस्य तत्र प्रयोजकत्वेन क्लृप्तत्वात्। ब्रह्मनिर्विकल्पकप्रमाया यद्यपि न विशेषणविषया व्यावृत्ताकारकत्वम्, तथाप्युपलक्षणविषया द्वैताभावाद्याकारकत्वस्य प्रागुपपादितत्वान्नानुपपत्तिरित्याशये-

---

[1] विशेषाविषयका—ख. ग.　　[2] ज्ञानाप्रसिद्धेः—ग.

चेत्, न; एकस्यैवानन्दाद्यात्मना तिरोहितस्य सदात्मना प्रकाशसंभवात्। तदुक्तं वार्तिककारपादैः—

यत्प्रसादादविद्यादि सिद्ध्यतीव दिवानिशम्।
तदप्यपन्हुतेऽविद्या नाज्ञानस्यास्ति दुष्करम्॥ इति।

न च—बाधकालेऽपि सद्वि[1]शेषज्ञानमस्तीति—वाच्यम्; परिपूर्णानन्दत्वादेः[2] सत एव विशेषत्वेन तदा तदज्ञानाभावात्। धर्मत्वमात्रस्यैव कल्पितत्वात्। यद्वा भ्रमविरोधिज्ञानाभाव एव तन्त्रं, न तु विशेषाज्ञानम्; विश्वोपादानगोचराज्ञानस्य श्रवणादिजन्यमात्ममात्रविषयकं वृत्तिरूपं ज्ञानं विरोधि, न तु चिद्रूपं स्वतः सिद्धं ज्ञानम्; भ्रमविरोधिनश्च वृत्तिरूपस्य ज्ञानस्येदानीमभावोऽस्त्येव। नन्वात्मानात्मनोर्द्रष्टृदृश्यत्वात्मानात्मत्वादिना भेदज्ञानात्कथमध्यस्ताधिष्ठानभाव इति—चेन्न। इदमनिदं न भवतीति पुरोवर्त्यपुरोवर्तिनोर्भेदग्रहेऽपीदं रजतमित्यध्यासवत् सन् घट इत्याद्यध्यासो भविष्यति। न हि रूपान्त

नाह—यद्वा भ्रमेति। भविष्यतीति। सन् घटो नेति भेदग्रहाभावादिति शेषः॥

यत्तु सत्वपूर्णानन्दत्वादीनां मिथो धर्मिणश्च कल्पितभेदसत्वात्सामान्यविशेषत्वमित्यस्मदाचार्योक्तिं श्रुत्वापि निर्विशेषब्रह्मवादे ब्रह्मणः सामान्यविशेषासंभव इत्यादि कूजितम्, तत्स्वकुलपराभवप्रयुक्तमूर्च्छामाहात्म्यम्। यदपि यद्वेत्यादि न युक्तम्; मुख्याज्ञानविरोधित्वे वृत्तेर्मुख्यज्ञानत्वापत्तिः, चिद्रूपमुख्यज्ञाना[3]विरोधित्वेनाज्ञानस्य मुख्याज्ञानत्वाभावापत्तिश्चेत्यादि, तदपि तथा; वृत्तिं विनापि सुखादौ ज्ञानव्यवहारादिना वृत्तौ मुख्यज्ञानान्यत्वस्यान्वयव्यतिरेकाभ्यामज्ञानाविरोधित्वस्य च

[1] असद्वि. [2] स्वत. [3] मुख्यज्ञान—क.

रेण भेदग्रहो रूपान्तरेणाध्यासविरोधि; सन् घट इत्यादिप्रत्यये च सद्रूपस्यात्मनो घटाद्यनुविद्धतया भानान्न तस्य घटाद्यध्यासाधिष्ठानतानुपपत्तिः। सद्रूपेण च सर्वज्ञानविषयतोपपत्तेर्न रूपादिहीनस्याप्यात्मनः कालस्येव चाक्षुषत्वाद्यनुपपत्तिः। ननु—विश्वं यदि कल्पितं स्यात्तदा सप्रधानं स्यात्। न चैवम्; तस्मान्न कल्पितमिति चेन्न; अत्रापि प्रधानस्य सजातीयस्य सत्वात्, पूर्वप्रपञ्चसजातीयस्यैवोत्तरप्रपञ्चस्याध्यसनात्।

---

मानसिद्धत्वात्। चिन्मात्राविरोधित्वेऽपि वृत्त्युपारूढचिद्रूपमुख्यज्ञानविरोधित्वेनाज्ञानस्य मुख्यत्वसंभवात्। न ह्यनभिव्यक्ताग्न्यदाहत्वेऽपि तृणाद्युपारूढाग्निदाहस्य न मुख्यमग्निदाहत्वम्। तस्मादमुख्यत्वं स्वीयं नाज्ञाने त्वमारूरुपः[1]। सर्वज्ञानविषयतेति। उपपादितमेतत्पूर्वं मिथ्यात्वहेतुविवेचने। यत्तु—सद्विषयकघटादिचाक्षुषादेव मोक्षः स्यादिति, तन्न; श्रवणादिप्रयुक्तवृत्तिरेव मूलाज्ञाननिवर्तिका, तस्या एवाज्ञानतत्कार्यविषयकत्वेनाज्ञानसमानविषयकत्वादित्यादेरुक्तत्वाद्घटादिवृत्त्यावरणे निवर्तिते सद्रूपं स्वप्रकाशतया भाति न तु वृत्त्यविषय[2] इत्यादेरप्युक्तत्वाच्च। यदपि घटः स्फुरतीत्यत्र स्फुरणानुविद्धतया घटो न प्रतीयते; किंतु घटकर्तृकं स्फुरणमिति, तदपि न; अशाब्दबोधे स्फुरणस्य घटांशेनाभात्[3]। शाब्दबोधेऽपि तादात्म्यमाख्यातार्थ इति घटस्य स्फुरणतादात्म्यं प्रतीत्या स्फुरणाधिष्ठानकत्वाविरोधात्। अत्रापीति। प्रधानपदेन यदि देशान्तरे कालान्तरे वा विद्यमानमध्यस्तजातीयमुच्यते, तदा जगदध्यासस्य तद्वत्वव्याप्यत्वमिष्टमिति भावः। यदि तादृशं सत्यं तत्पदेनोच्यते, तदा तादृशव्याप्यत्वे मानाभाव इत्याशयेनाह—

[1] मापः—ग. [2] वृत्तिविषय—ग. [3] भानात्—ग.

अध्यासो हि स्वकारणतया संस्कारमपेक्षते न तु संस्कारविषयस्य सत्यताम्; अनुपयोगात् । नच—प्रमाजन्य एव संस्कारो भ्रमहेतुः । अतो विषयसत्यत्वमावश्यकमिति—वाच्यम्; मानाभावात्, विपरीते लाघवाच्च । अत एवाध्यस्तसजातीयं पूर्वमध्यस्तापेक्षयाऽधिकसत्ताकमपेक्षणीयमित्यपि—निरस्तम्; सत्यतावदधिकसत्ताया अप्यनुपयोगात् । पूर्वं तु ज्ञानमात्रमपेक्षते, तच्चास्त्येव । नन्वेवमधिष्ठानस्यापि ज्ञानमात्रमेव हेतुः, न तु तदिति न सदधिष्ठानापेक्षा स्यादिति शून्यवादापत्तिरिति—चेन्न; अधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वेऽप्यज्ञानद्वारा भ्रमहेतुत्वेन सत्वनियमात् । भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानमित्युच्यते, तच्च सत्यमेव; असत्यस्य सर्वस्याप्यज्ञानकल्पितत्वेनाज्ञानाविषयत्वात्, तदसत्यत्वे तदज्ञानस्य

---

अध्यासो हीति । विपरीत इति । भ्रमजन्यसाधारणेन संस्कारत्वेन हेतुत्वे इत्यर्थः । हेतुः प्रयोजकः । न तु तदिति । न तु प्रमाघटकतयाऽधिष्ठानसत्वं[1] प्रयोजकमित्यर्थः । शून्यवादापत्तिरिति । तथा च यथाऽधिष्ठानप्रमाहेतुत्वेनाधिष्ठानं सत्यमपेक्षते,[2] तथा प्रमाजन्य संस्कारस्य हेतुत्वेन प्रधानं सत्यमिति शेषः । नाधिष्ठानप्रमात्वेन हेतुत्वम्; येन दृष्टान्तेन[3] प्रधानप्रमाजन्यः संस्कारो हेतुरुच्येत, किंत्वज्ञानविषयक[4]त्वेनाधिष्ठानसत्यत्वापेक्षणान्न शून्यवादापत्तिरित्याशयेनाह—नाधिष्ठानेति । ज्ञानद्वारा कारणीभूतप्रमाघटकतया । भ्रमाहेतुत्वे भ्रमाप्रयोजकत्वे । अज्ञानद्वरा कारणीभूताज्ञानविषयतया । भ्रमहेतुत्वेन भ्रमोपादानत्वेन । अज्ञानकल्पितत्वेन अज्ञानप्रयुक्तत्वेन । तदवच्छेदकीभूतास्वप्रकाशत्वेनेति यावत् । तथा च जडस्य

---

[1] धिष्ठानं—क. ग. [2] मपेक्ष्यते—ख. ग. [3] तद्दृष्टान्तेन—ग. [4] विषय—ग.

भ्रमाबाधकत्वप्रसङ्गात्, जगति भ्रमबाधव्यवस्था च न स्यात्। बाधेन हि किंचिद्विरुद्धं तत्वमुपदर्शयता आरोपितमतत्वं बाधनीयम्। उभयाध्यासे तु किं केन बाध्यते। अत एव

---

प्रकाशाप्रसक्त्या नाज्ञानविषयत्वम्। स्वप्रकाशस्य तु चैतन्यस्य मोक्षकालेऽप्यन्वयान्नासत्यतेति भावः। भ्रमाबाधकत्वेति। व्यावहारिकभ्रमाबाधकत्वेत्यर्थः। तेन प्रातीतिकभ्रमे मिथ्याभूतशुक्त्यादिज्ञानस्य बाधकत्वेऽपि न क्षतिः। ननु—मिथ्याविषयकज्ञानमपि बाधकमस्तु तत्राह—जगतीति। विरुद्धं व्यावृत्तरूपम्। तत्त्वं बाध्यापेक्षयाऽधिकसत्ताकम्। उपदर्शयता विषयीकुर्वता। एवकारः शेषः। उक्तं हि भामत्याम्—'तत्वपक्षपातो हि धियां स्वभावः। यदाहुर्बाह्या अपि—

निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधो यत्नवत्वेऽपि[1] बुद्धेस्तत्पक्षपाततः॥ इति॥

बाध्यापेक्षयाधिकसत्ताकविषयकधीरेव बाधिका स्वभावात्, न तु न्यूनसत्ताकविषयकधीरिति तत्र पर्यवसितार्थः। यत्तु—स्वाप्नस्यगजाद्यभावज्ञानस्य स्वाप्नगजादिधीबाधकत्व[2]माचार्यैः पूर्वमुक्तम्। तत्र बाधो मिथ्यात्वनिश्चयः। तथा च मिथ्यात्वस्य स्वान्यूनसत्ताकस्य स्वसमानाधिकरणाभावस्य प्रतियोगित्वरूपतयाऽधिकसत्ताकाभावज्ञानं विनापि तदुपपद्यत एवेति ध्येयम्॥

यत्त्वबाधितविषयकज्ञानस्य बाधकत्वेऽन्योन्याश्रयात् त्रिचतुरकक्षास्वबाधितविषया स्वप्नधीवत्पश्चाद्बाध्य[3]स्याप्यधिष्ठानस्य धीर्बाधिका संभवति, अथाधिष्ठानस्य बाधानुपलम्भात्सत्यता वाच्या; तर्हि प्रधानस्यापि तत एव साऽस्त्विति—तन्न; यदि ह्यबाधितविषयकत्वेन ज्ञाय-

---

[1] बाधापूजवत्वेऽपि—ग. [2] बाधक—क. [3] धीवत्पश्चाबाध्य-ग.

भगवता भाष्यकारेण 'सत्यानृते मिथुनीकृत्ये' त्युक्तम्। नन्वेतत्प्रपञ्चसाध्यार्थक्रियाकारिणः प्रपञ्चान्तरस्याभावेन स्वोचितार्थक्रियाकारिणोस्य न मिथ्यात्वमिति—चेन्न; स्वाप्नमायादौ व्यभिचारात् स्वोचितक्रियाकारित्वस्य पारमार्थिकसत्त्वाप्रयोजकत्वात्। नापि—श्रुत्यादिसिद्धोत्पत्त्यादिमत्त्वं सत्त्वे तन्त्रम्; स्वप्नप्रपञ्चे व्यभिचारात्, तस्यापि 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत' इत्यादि श्रुत्योत्पत्त्यादि प्रतिपादनात्। न च—कल्पाद्यभ्रमायोगः; कल्पान्तरीयसंस्कारस्य तत्र हेतुत्वात्। न च—जन्मान्तरीयसंस्कारस्य कार्यजनकत्वेऽतिप्रसङ्गः; अदृष्टादिवशेन क्वचिदुद्बोधेऽप्यन्यत्रानुद्बोधोपपत्तेः, कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात्। अन्यथा जातस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात्। ननु—चैत्रेण मैत्रे संस्काराध्यासेऽपि मैत्रस्य भ्रमादर्शनात् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारम्। न च—स्वेनाध्यस्ता-

---

मानप्रमा बाधिकोच्यते, तदा प्रमायां तथा ज्ञातायां भ्रमो बाधितः सन् बाधितविषयकत्वेन ज्ञेयः। ततो भ्रमस्याबाधकत्वज्ञानात् तेन बाधितविषयकत्वं प्रमायां ज्ञेयमित्यन्योन्याश्रयः स्यात्। अबाधितविषयकधीत्वेन बाधकत्वे तु नासौ। वस्तुतस्तेन ज्ञायमानत्वरूपेण बाधकत्वेऽपि सर्वसाक्षित्वादिनाधिष्ठानस्याबाध्यत्वनिश्चयस्य प्रागुक्तत्वान्न भ्रमस्याबाधकत्वनिश्चयस्तत्रापेक्ष्यत इति नान्योन्याश्रयः। अत एवाधिष्ठानवत्प्रधानस्यापि बाधानुपलम्भ इत्ययुक्तम्; साक्षित्वादिनाधिष्ठानस्य बाधासम्भवेऽपि प्रधानस्य संसृष्टत्वदृश्यत्वादिना बाधसम्भवात्। कल्पाद्यभ्रमेति। तत्कल्पीयज्ञानजन्यसंस्कारस्य पूर्वमभावादित्यादिः। स्तन्यपानादाविति। इष्टसाधनत्वस्मृत्यसम्भवेनेति

त्संस्काराद्भ्रमः ; भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावादिति—चेन्न ; शुक्तिरूप्यस्य कुण्डलाजनकत्ववच्चैत्राध्यस्तसंस्कारस्य मैत्रभ्रमाजनकत्वेऽपि वणिग्वीथीस्थरूप्यस्य कुण्डलजनकत्ववत्स्वेनाध्यस्तस्य संस्कारस्य वियदाद्यध्यासजनकत्वोपपत्तेस्तत्प्रतीत्यभावेऽपि तदध्यासस्य पूर्वं सत्वात्, कृत्स्नस्यापि व्यावहारिकपदार्थस्याज्ञातसत्वाभ्युपगमात् । ननु—प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य त्वन्मते व्यावहारिकरूप्यविषयत्ववद्व्यावहारिकप्रपञ्चेऽपि 'नेह नाने' ति त्रैकालिकनि-

---

शेषः । कार्यानुमेयसंस्काराध्यासनियमाभावादिति । यतः संस्कारः कार्यरूपलिङ्गैकगम्योऽतः प्रतीत्यभावात्पूर्वं तत्सत्वे मानाभावादित्यर्थः । आगन्तुकदोषजन्यत्वाच्छुक्तिरूप्यादिकमिव चैत्राध्यस्तमैत्रसंस्कारो न कार्यविशेषजनकः ; अध्यस्तत्वेऽपि वणिग्वीथीरूप्यमिवोक्तजन्यत्वाभावात् स्वस्मिन्मैत्रेण कल्पितः संस्कारः कार्यविशेषजनक इत्याशयेनाह—न शुक्तीति । पूर्वं सत्वादिति । न च—वियदादेरध्यासत्त्वाभावेनैवोपपत्तेर्न संस्कारो वियदादिकार्यकल्प्य इति—वाच्यम् ; दृश्यत्वादिना वियदादिमिथ्यात्वनिश्चयोत्तरं तदन्यथानुपपत्त्या तत्कल्पनात् । वियदादिसत्यत्वमतेऽपि जन्यत्वेन विनाशित्वेन च श्रुत्यादिसिद्धस्य पूर्व[1]कल्पीयस्य सूक्ष्मावस्थारूपो नाश एवोत्तरकल्पीयस्य प्रागभाव इत्यवश्यं वाच्यम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्' भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयत, इत्यादि श्रुतिस्मृतिभ्यो निरन्वयनाशासत्कार्यवादायोगात्, तथा च स एव नाशः संस्कारशब्देनास्माभिरुच्यमानः स्थूलावस्थवियदादिरूपेण जायत इति संस्कारहेतुत्वस्य दुर्वारत्वाच्च ।

---

[1] तस्य पूर्व-ग

षेधस्य पारमार्थिकप्रपञ्चान्तरविषयताऽवश्यं वाच्येति—चेन्न; भ्रमबाधवैय्यधिकरण्यापातेनास्य पक्षस्यानङ्गीकारपराहतत्वात्। अङ्गीकारेपि व्यावहारिकनिषेधे पारमार्थिकनिषेधत्वं न सम्भवति; अप्रतीतस्य निषेधायोगात्। प्रतीत्या सहाध्यासातिरिक्तसम्बन्धाभावेन पारमार्थिके प्रतीतत्वाभावात्। ननु—प्रधानाधिष्ठानयोः सादृश्याभावात्कथमध्यासः? अथ निर्गुणयोरपि गुणयोः सादृश्यवदत्रापि किञ्चित्सादृश्यं भविष्यतीति, तन्न; निर्धर्मके ब्रह्मणि तस्याप्यध्यासाधीनत्वेनान्योन्याश्रयात्। यद्यपि सादृश्यं सोपाधिकाध्यासे न कारणम्, व्यभिचारात्। तथापि निरुपाधिकाध्यासेऽन्वयव्यतिरेकाभ्यां तस्यावश्यमपेक्षणीयत्वात्, सोपाधिकेऽपि 'रक्तः स्फटिक' इत्यादौ द्रव्यत्वादिना सादृश्यस्य सत्वाच्चेति—चेन्न; अविद्याध्यासस्यानादित्वेन कारणानपेक्षस्य सादृश्यानपेक्षत्वात्, अन्तःकरणाध्यासेऽप्य[1]विद्यासम्बन्धित्वस्यैव सादृश्यस्य विद्यमानत्वात्। वस्तुतस्तु—न भ्रमे सादृश्यस्यापेक्षानियमः, निरुपाधिकेऽपि 'पीतः शङ्ख'

---

प्रपञ्चान्तरविषयकेति। उक्तनिषेधप्रतियोगित्वेन प्रपञ्चान्तर[2]विषयकेत्यर्थः। निरुपाधिकेऽपीति। न च—पीतः शङ्ख इत्यादौ नेत्ररश्मिसंस्पृष्टपित्तद्रव्यस्य शङ्खादौ संसर्गात्तदीयं पतित्वमनुभूयमानमारोप्यत इति सोपाधिकाध्यास एवायमिति—वाच्यम्; एतत्कल्पनायां मानाभावात्। परम्परासम्बन्धेन गोलकावच्छिन्ननेत्रस्थपित्तादिदोषाणामेव शङ्खादौ स्मर्यमाणपीतत्वादिभ्रमहेतुत्वस्यैव प्रयुक्तत्वात्। अन्यथा पुरुषान्तरेणापि तादृशपित्तस्य शङ्खादिस्थस्य ग्रहणापत्तेः। यदीयनेत्रस्थं तत्तेनैव गृह्यत इति नियमकल्पने गौरवात्। आदिपदग्राह्ये रूप्य[3]-

---

[1] से त्ववि. [2] प्रपञ्चान्तरे—ख. ग. [3] ग्राह्यरूप्य—ग.

**इत्यादौ व्यभिचारात्। 'रक्तः स्फटिक' इत्यादावपि द्रव्यत्वादिना सादृश्यमस्तीत्यपि न; प्रधानमात्रवृत्तितया प्रागवगतमध्याससमये चाधिष्ठानवृत्तितया गृहीतं यत्तदेव हि सादृश्यं विपर्ययप्रयोजकमिति त्वयापि वाच्यम्, न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतम्; तस्य संशायकत्वात्। द्रव्यत्वादि च लोहितालोहितवृत्तितया प्राग्गृहीतमिति न विपर्ययप्रयोजकम्। किञ्च सादृश्यं न स्वतो भ्रमकारणम्; मानाभावात्, किन्तु संस्कारोद्बोधेन सामग्रीसम्पादकतया, संस्कारोद्बोधश्च**

---

भृङ्गारगतशुक्लजलादौ नीलत्वादिभ्रमे सोपाधिकत्वस्य शङ्कितुमशक्यत्वात्। तत्र जपाकुसुमादिवत्स्वधर्मसङ्क्रामकरूपस्योपाधेरसम्भवात्। शुक्त्यादौ रूप्यादिसादृश्याज्ञानकाले नीलभागावच्छिन्नसन्निकर्षादिरूपाया विशेषदर्शनसामग्र्याः सत्त्वेन तयैव प्रतिबन्धाद्रूप्याद्यध्यासानुत्पत्तिसम्भवेन क्वापि भ्रमे सादृश्यज्ञानहेतुत्वे मानाभावाच्च। **प्रागवगतमिति**। प्रधानसम्बन्धितया यत्कदाचिदवगतं तस्यैव सादृश्यस्य शुक्लत्वादेः प्रधानसंस्कारोद्बोधकत्वमिति तथावगतत्वमावश्यकं बोध्यम्। **अध्याससमये** अध्यासोत्पत्त्यव्यवहितपूर्वसमये। **प्रागेव** अध्यासोत्पत्त्यव्यवहितपूर्वसमय एव। **संशायकत्वादिति**। प्रधानस्य लौहित्यादिमत्तयाऽधिष्ठानस्य स्फटिकादेर्लौहित्याद्यभाववत्तया गृह्यमाणत्वादुभयवृत्तित्वरूपसाधारणधर्मत्वरूपत्वात्साधारणधर्मधीविषया तज्ज्ञानस्य[1] संशयजनकत्वादित्यर्थः। तथा च—संशयसामग्र्यां सत्यां न निश्चयरूपो भ्रम इति भावः। **सादृश्यं** सादृश्यज्ञानम्। **संस्कारोद्बोधेनेति**। उद्बोधश्च शक्त्युत्पादनादिरूप इति भावः। अथवा **न स्वतो भ्रमकारणमिति**। स्वतः सादृश्यधीत्वेन भ्रममात्रे कारणं नेत्यर्थः। **संस्कारोद्बोधेन** संस्कारचरमसहकारित्वेन। **सामग्रीति** काचित्कभ्रमसामग्रीत्यर्थः। **एवं च**

---

1 धीविषयात्तज्ज्ञानस्य—ग.

**न सादृश्यैकनियतः; अदृष्टादिनापि तत्सम्भवात् । तदुक्तम्—'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति । चिन्तादिकं च प्रणिधानसूत्रे व्याख्यातम् । तथाचान्यतः संस्कारोद्बोधे सति सादृश्यमनुपयोगि । तदुक्तं विवरणे—**

---

नव्यमते संस्कारचरमसहकारिण एवोद्बोधकरूपत्वेऽपि न क्षतिः । **प्रणिधानसूत्रे** गौतमोक्तपञ्चाध्यायगित तृतीयाध्यायीयद्वितीयाह्निकस्थे " प्रणिधान निबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्य " इति सूत्रे । **प्रणिधानं** चिन्ताधारा यस्मिन्विषये तद्गतविशेषाणां[1] स्मारिका, **निबन्धः** एकवाक्योक्ताः प्रमाणप्रमेयादयो मिथः स्मारकाः । **अभ्यासः** ज्ञानावृत्तिकृतः संस्कारः शीघ्रस्मारकः, **लिङ्गं** व्याप्यम्, **लक्षणं** व्यावर्तकम्, **सादृश्यं** सदृशौ मिथः स्मारकौ, एवं **परिग्रहः** स्वस्वामिनौ, **आश्रयाश्रितौ** पोषकपोष्यौ, **संबन्धाः** शिष्याचार्यादिभावापन्नाः, **आनन्तर्यं** पूर्वापरकालानुष्ठेयाः स्नानतर्पणादयः, **वियोगो** वियुक्ताः, **एककार्ये** एककार्याः, **अतिशयो** न्यूनाधिकतामापन्नाः,[2] **विरोधि** विरुद्धाः, **प्राप्तिः** प्राप्यप्रापकाः, **व्यवधानं** आच्छाद्याच्छादकाः असिकोषादयः[3] **सुखदुःखे** अनुभूयमाने मूलस्य स्मारके, **इच्छा,** स्नेहो यत्र जातस्तस्य, एवं **द्वेषः भयं** यतस्तस्य मुहुः स्मारकम्, एवं अर्थित्वं अप्राप्तेच्छा[4] यत्र तस्य, **क्रिया** रथाधिशिल्पं, कर्तुः रागो लब्धविषये बुभुक्षा तस्य, धर्मो गतजन्मादेः, अधर्मो दुःखहेतुः धीविषयस्य, **निमित्तं** कार्यकारणादिभावापन्ना मिथः स्मारकाः, सर्वेषां स्मारकाणामुपलक्षण-

---

[1] यस्मिन् विशेषाणां–क. [2] न्यूनाधिकतापन्नाः–क. ख. ग. [3] कोशादयः–ग. [4] अप्राप्तप्राप्तीच्छा–ख. ग.

'निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इतिवत्सादृश्यान्तरं वा शङ्खपीतिमादाविव कारणान्तरं वा कल्पयती'ति । ननु-दोषं विना भ्रमस्वीकारे तदप्रामाण्यस्य स्वतस्त्वापत्तिः, दोषजन्यत्वस्वीकारे तु दोषस्याप्यध्यसनीयत्वेनानवस्थापत्तिरिति—चेन्न; अनाद्यविद्याध्यासस्य दोषानपेक्षत्वात् । साद्यध्यासस्य चाविद्यादिदोषजन्यत्वान्नाप्रामाण्यस्य स्वतस्त्वम्; नाप्यनवस्था । अन्यथा तार्किकाणामप्यनादिप्रमा गुणं विनापीति प्रामाण्यपरतस्त्वं भज्येत । जन्यप्रमामात्रस्य गुणजन्यत्वं तु जन्याध्यासमात्रस्य दोषजन्यत्वेन समम् । ननु—लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रं प्रति संसर्गधिय इव धूममात्रं प्रति वन्हेरिव चाध्यासमात्रं प्रति दोषादीनां जनकत्वादविद्याध्यासोऽपि कथं क्लृप्तकारणेन विना भवतु? अन्यथा संसर्गधीरपि प्रवृत्तिविशेषे वन्हिरपि धूमविशेषे हेतुरिति स्यात्; तथाचाख्यातिवादश्चानुमानमात्रोच्छेदश्चापद्येयाताम् । किंचाविद्यारूपविषयस्यानादित्वेऽपि तत्प्रतीतेर्दोषाजन्यत्वे प्रामाण्यापातः; अप्रामाण्यप्रयोजकस्य दोषजन्यत्वस्याभावात्, अथ भेदवदविद्याख्यदोषस्य स्वपरनिर्वाहकत्वम्; एवमपि भेदो भिन्न इतिवत् "अज्ञानमज्ञात"मिति व्यवहारो भवतु; प्रतीतिमात्रशरीरस्य स्वविषयधीहेतुत्वं कुतः? स्वस्य स्वस्मात्पूर्ववृत्तित्वासंभवादिति—चेन्न; अध्यासत्वस्य लघुत्वेऽपि प्रथमोपस्थितत्वेऽपि न दोष-

मिदम् । गुणावयवसामान्येति । गुणविशेषरूपस्यावयवविशेषरूपस्य च सामान्येत्यर्थः । कारणान्तरम् । सादृश्यनिरपेक्षदोषादिरूपम् । यत्तु प्रातीतिकदृष्टान्तेन व्यावहारिकस्योत्पत्त्यादिमत्त्वेऽपि मिथ्या-

जन्यतायां तन्त्रत्वम्; दोषस्यापि दृश्यत्वेनाध्यसनीयतयाऽनवस्थापत्तेः। यथा नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतादावच्छेदकत्वम्, नवा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वम्, बाधकबलात्, तद्वज्जन्याध्यासं प्रत्येव दोषादीनां कारणत्वम्; गुणाजन्यत्वेऽप्यबाधितविषयतयानित्यज्ञानप्रामाण्यवत् दोषाजन्यत्वेऽपि बाधितविषयतयानाद्यध्यासस्याप्यप्रामाण्योपपत्तिः। बाधितविषयत्वेऽपि न दोषजन्यत्वमवच्छेदकम्; दोषजन्यत्वेऽप्यवच्छेदकान्तरान्वेषणेऽनवस्थापातात्। बाधितविषयत्वस्य दोषाजन्यवृत्तित्वेऽपि दोषजन्यत्वस्य तद्व्याप्यत्वोपपत्तेः। अत एव शबरस्वामिना 'यस्य दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनो नान्य' इति वदता दुष्टकरणजन्यत्वमन्तरेणाप्यर्थान्यथात्वमप्रामाण्यप्रयोजकमुक्तम्। अविद्याध्यासरूपस्य साक्षिचैतन्यस्याविद्याजन्यत्वानभ्युपगमान्न प्रतीतिमात्रशरीरत्वव्याघातः; अहमज्ञ इत्याद्यभिलापकारणीभूतवृत्तिरूपाध्यासं प्रति त्वविद्यायाः कारणत्वमस्त्येव, घटादीनामिव स्वप्रत्यक्षं प्रति।

---

त्वोक्तिर्न युक्ता; प्रातीतिकस्य तुच्छत्वेन स्वरूपेण निषेधसंभवेऽपि व्यावहारिकस्य तदसंभवादिति रोदनम्, तत्स्वरूपेण निषेधेऽपि व्यावहारिकस्य सत्त्वेन प्रतीत्यर्हत्वादिना तुच्छवैलक्षण्यात्परिहृतम्। यत्तु संशायकस्यापि द्रव्यत्वादेः संस्कारोद्बोधकत्वेन विपर्ययजनकत्वमिति, तन्न; संशयसामग्र्यां सत्यां निश्चयासंभवात्। संशयनिश्चयत्वाभ्यां कार्यत्वास्वीकारेऽपि कोटिद्वयस्यैव भासकसत्त्वे भानावश्यकत्वात्। घटादीनामिवेति। तथाच विषयविषयाऽविद्याजन्यत्वादेवा[1]विद्यादोषजन्यत्वमप्रामाण्यप्रयोजकं स्थितमेव। नहि भ्रमत्वेन दोषजन्यत्वमप्रमात्व-

[1] र्वा—ग.

वह्निविशिष्टधियोस्तु बाधकाभावात्सामान्येनैव धूमप्रवृत्ती प्रति हेतुतेति न पूर्वोक्तदोषापातः। नन्वविद्याध्यासस्यानादित्वेन दोषाद्यनपेक्षावदधिष्ठानानपेक्षापि स्यादिति चेन्न; जनकत्वेनाधिष्ठानानपेक्षायामप्याश्रयत्वेन तदपेक्षानियमात्, परममहत्वादेराश्रयपेक्षावत् अध्यासस्य साधिष्ठानत्वनियमेनात्रापि परतन्त्रत्वस्य समत्वात्, भास्यस्याविद्याध्यासस्य भासकतयाप्यधिष्ठानापेक्षणाच्च। अविद्यावच्छिन्नचैतन्यस्याविद्यादिसकलद्वैतद्रष्टृत्वात्तस्यैव चान्तःकरणावच्छेदेन प्रमातृत्वात्, भ्रमप्रमयोः सामानाधिकरण्योपपत्तेर्भ्रमस्य समानाधिकरणप्रमानिवर्त्यत्वमुपपद्यते। ननु—देहेन्द्रियादिकं विना कथमन्तःकरणाध्यासः? कात्रानुपपत्तिः? अधिष्ठानापरोक्षत्वं ह्यपरोक्षभ्रमे कारणम्,

प्रयोजकम्; तत्तदनुगतदोषकार्यत्वस्य भ्रमत्वाविशेषेऽपि[1] तत्तद्व्यक्तित्वेनैवावच्छेदात्। अपितु भ्रमत्वव्याप्यरूपेण दोषजन्यत्वं तत्प्रयोजकम्। तथाच विषयजन्यवृत्तिज्ञानमात्रनिष्ठधर्मस्यापि तथात्वात्तत्प्रयोजकत्वमक्षतम्। न चाविद्याविषयकवृत्तेः प्रत्यक्षत्वे इन्द्रियसन्निकर्षजन्यत्वापत्तिरिति—वाच्यम्; संयुक्ततादात्म्यादिसन्निकर्षस्याविद्यायां सत्वेनेष्टत्वात्, चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुरादिसन्निकर्षहेतुतावश्यकत्वेन सामान्यतः प्रत्यक्षे तद्धेतुत्वे ‐मानाभावाच्च। नव्यमते मानसप्रत्यक्षे सन्निकर्षस्याहेतुत्वाच्च साधिष्ठानकत्वनियमेनाविद्याविषयतादात्म्यनियमेनाविद्याध्यासो यद्युक्ततादात्म्ययुक्तो न स्यात्तदाऽविद्यासमानविषयकधीनिवर्त्यो न स्यात्, ब्रह्मवत्तुच्छवद्वेति तर्केण तथा नियम इति भावः। भ्रमप्रमयोः भ्रमतन्निवर्तकप्रमयोः। ननु—नित्यज्ञानस्याबाधितविषयकत्वेन प्रमात्वमिव बाधितविषयकत्वेन भ्रमत्वमित्ययुक्तम्; न ह्यावयोः प्रमात्वं गुणप्रयोज्यं किंतु स्वतः, तथाच गुणाप्रयुक्तत्वेन प्रमात्वमिव दोषाप्रयुक्त-

[1] विशेषित—ग.

तद्यत्राधिष्ठानं स्वतो नापरोक्षम्, यथा शुक्त्याद्यवच्छिन्न-चैतन्यम्; तत्र तदपरोक्षार्थं देहेन्द्रियाद्यपेक्षा, प्रकृते चाविद्या-वच्छिन्नं चैतन्यमधिष्ठानम्, तत्र चैतन्यस्य स्वप्रकाशत्वेना-विद्यायाश्च तदध्यस्तत्वेन तेनैव साक्षिणापरोक्षत्वात्कुत्र देहेन्द्रि-याद्यपेक्षा? अथैवं प्रलये देहेन्द्रियाद्यभावेऽप्यज्ञानसद्भावेनान्तः-करणाध्यासप्रसङ्गः, न; तदा देहेन्द्रियादिसर्जनविलम्बहेतु-

---

त्वेन भ्रमत्वं ते स्वतः स्यात्, अतएव शाबरवाक्ये दुष्टकरणजन्यत्वं मिथ्यात्वेन ज्ञेयत्वं च समुच्चितमप्रमात्वप्रयोजकमित्यर्थ इति—चेन्न; भावानवबोधात्। यथाहि तार्किकमते जन्यताघटितं प्रमात्वं गुण-जन्यतावच्छेदकं नित्यसाधारणस्यातत्त्वात्, तथा मन्मते भ्रमत्व-मपि तादृशदोषजन्यतावच्छेदकं तत एव। नच--तावता तस्य स्वत-स्त्वम्। शाबरवाक्यं तु नोभयस्याप्रमात्वप्रयोजकत्वपरम्; चरमस्यैव तत्सम्भवादाद्यवैय्यर्थापत्तेरनादिसाधारणत्वाच्च। दुष्टकरणजन्यत्वं तु भ्रमत्वस्य जन्यत्वघटितस्य दोष[1]प्रयुक्तत्वज्ञापनद्वारा बौद्धसम्मतस्य भ्रमत्व-स्वतस्त्वस्य निरासाय। यत्त्वविद्याकारवृत्तेरविद्यारूपविषयजन्यत्वे प्रमात्वा-पत्तिरिति, तन्न! अनुभूयमानरक्तत्वादेः स्फटिकादावारोपे व्यभिचारेण विषयजन्यत्वस्य प्रमात्वाव्याप्यत्वात्। कुत्र देहेति। न च—अधिष्ठा-नान्य एव भ्रान्तो वाच्यः, स च देहेन्द्रियादिमानेव, अविद्यावच्छिन्न-चैतन्यं तु नाधिष्ठानान्यदिति देहेन्द्रियादि विना कथमन्तःकरणाध्यास इति—वाच्यम्; कौन्तेयस्य स्वस्मिन् राधेयत्वभ्रमेऽन्तःकरणावच्छिन्न-चित्येव स्वप्नाध्यासपक्षे चाधिष्ठानस्यैव भ्रान्तत्वस्वीकारादविद्यावच्छिन्न-चैतन्यमधिष्ठानमित्यत्राधिष्ठानपदस्याधारपरत्वाच्छङ्काऽनुत्थानाच्च। मूली-भूताविद्याविषयो मुख्याधिष्ठानम्, तच्च पूर्णानन्दरूपमेव। यत्तु तमः-

[1] घटितदोष—क. ग.

नैव तद्विलम्बसम्भवात्, अन्यथा तदा देहेन्द्रियादिकमपि कुतो नोत्पद्येत? नच—दोषादीनामध्यस्तत्वेन तदभावस्य

प्रकाशवदविद्याचितोर्नाश्रयाश्रयित्वमिति—तन्न; चितो वृत्त्युपहिताया एव प्रकाशस्थानीयत्वात्। कुतो नेति। नच—भूतादिविलम्बेन देहादिविलम्बो युज्यते, अविद्यामात्रमूलकस्तु मनोध्यासः कथं विलम्बत इति—वाच्यम्; देहादेरिव मनसोऽपि भौतिकत्वात्॥

ननु—भूतोत्पत्तिविलम्बोऽपि कुतः; ईक्षणाभावादिति चेत्सोऽपि कुत इति चेत्, कस्तवाभिप्रायः? वस्तुगत्या यत्साक्षिण[1] ईक्षणं जायते तत्पूर्वक्षणेष्वपि तत्कारणाविद्यादिसत्वात्तदापत्तिरिति चेत्कोऽयं क्षणः? न हीक्षणस्याश्रयस्तत्पूर्ववृत्तिमान्[2] मन्मते कश्चन क्षणः प्रसिद्धः, किंतु ईक्षणोत्पत्तिकालोत्तरं क्षणादिव्यवहारः। तर्हि स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपोत्पत्तिः कथमीक्षणस्येति चेत्, यदधिकरणकालसामान्ये यत्कालवृत्तिध्वंसाप्रतियोगित्वम्, तस्य तत्कालसंबन्ध उत्पत्तिर्महाप्रलयस्येवेति ग्रहाण। सामग्रीमत्क्षणं विना कथमीक्षणरूपकार्योत्पत्तिरिति चेद्भ्रान्तोसि; सामग्रीमत्क्षणोत्तरक्षणत्वं हि कार्यस्य व्याप्यम्, न तु व्यापकम्, व्याप्यमपि न कार्यमात्रस्य, किंत्वीक्षणान्यस्य। ननु—क्षणो नातिरिक्तः पदार्थः, न वा स्वजन्यविभागप्रागभावावच्छिन्नक्रियामात्रम्; किंतु स्ववृत्तिध्वंसप्रतियोग्यनाधारो वा स्ववृत्तिस्वपूर्ववृत्तियावत्पदार्थविशिष्टो वा। तथाचेक्षणपूर्वावस्थाया जगत्कामनासूक्ष्मा[3]वस्थावृत्तीक्षणरूपध्वंसप्रतियोगिन्या अनाधार[4]त्वस्या (स्य) जगत्कामनासूक्ष्मावस्थायां सत्वात्। तद्वती सा क्षणः। [5]एवमुक्तसूक्ष्मावस्थादियावदर्थविशिष्टरूपणेक्षणं[6] स्वाश्रय इति चेदेवमपीक्षणपूर्वे

---

[1] यत्क्षणे—ग. ख. [2] वर्ती वा—ख. ग. [3] आकाशसूक्ष्मा—ग. [4] त्वस्याकाशसूक्ष्मा—ग. [5] एवमविद्या . . . पात्कयावदर्थ—ग. [6] विशिष्टत्वरूपेक्षणं—ग.

**तात्विकत्वादतात्त्विकेन तात्त्विककार्यप्रतिबन्धस्यायुक्तत्वात् बौद्धेन दुष्टतया कल्पितस्य वेदजन्यज्ञानस्येव कल्पितदोषजन्यस्य द्वैतविज्ञानस्य प्रामाण्यापात इति वाच्यम्; बौद्धकल्पितस्य प्रातिभासिक-**

---

तत्सामग्रयव्यवहितोत्तरक्षणाऽप्रसिद्धिः। यदि च श्रुतिस्मृतिपुराणाद्युक्तस्य प्रलयकालपरिमाणस्यानुरोधात्तार्किकादिमते परमाणुक्रिया इव मन्मतेऽपि सूक्ष्माविद्यावृत्तयः सुषुप्ताविव प्रलये स्वीक्रियन्ते; अन्यथा प्रलयकाल एतावानिति परिमाणोक्तेरसंभवात्, अतएवाविद्यावृत्तिरपि प्रामाणिकी; अन्यथाऽविद्यादेः साक्षिभास्यत्वसम्भवेन तत्राविद्यायाः कारणत्वे मानाभावात्, सुखमहमस्वाप्समित्यादिस्मृतिमूलसौषुप्ताविद्यावृत्तौ वार्तिककृताऽनङ्गीकारात्, प्रलये तदावश्यकत्वेन तादृशकारणत्वस्य क्लृप्तत्वे तु तत एव सृष्टिकाले तत्सम्भवादविद्याकाराविद्यावृत्तेरेवाहङ्कारसुखादिरूपविषयसहकृत[1]विद्याहङ्कारादिविषयकत्वस्यासम्भवः, अविवादश्च वादिनां प्रलयकालीनेषु मूलकारणगतास्थिरकार्येषु; साङ्ख्याभ्यां क्षणिकानां सत्त्वादिपरिणामानां तार्किकाभ्यां च परमाणुक्रियाणां स्वीकारात्, मीमांसकस्तु न प्रलयमनुमन्तेति[2] नात्र पुरस्क्रियते इति विभाव्यते, तदा न कोऽपि शङ्कावकाशः। प्रलयीयपूर्वहेतुकाविद्यावृत्तीनामेव चरमाया वृत्तेरीक्षणहेतुत्वसम्भवादिति ध्येयम् ॥

**तात्त्विकत्वादिति**। द्वैतविज्ञानप्रामाण्यापात इत्यग्रेणान्वयः। **प्रामाण्यं** तात्त्विकप्रामाण्यम्। ननु—दोषाणां तात्त्विकप्रामाण्याश्रयप्रतिबन्धकानामपि सत्वात्कथं तदापत्तिस्तत्राह—**अतात्त्विकेनेति**। **तात्त्विककार्येति**। तात्त्विकविषयकज्ञानत्वरूप[3]तात्त्विकप्रामाण्याश्रये-त्यर्थः। तेन तस्यायुक्तत्वे दृष्टान्तमाह—**बौद्धेनेति**। **दुष्टतया**

---

[1] विद्याया अहङ्कारादि—ग. [2] प्रलयमनुमन्यते—ग. प्रलयमन्तेति—क.
[3] ज्ञानरूप—ग.

**दोषस्य व्यावहारिकवेदापेक्षया न्यूनसत्ताकत्वेन तदप्रामाण्याप्रयोजकत्वेऽप्यविद्याख्यदोषद्वैतप्रपञ्चयोः समसत्ताकत्वेन कार्यकारणभावनियमेन च कारणीभूताविद्याख्यदोषाभावे कार्यभूतद्वैतप्रपञ्चतद्विज्ञानयोरभावनियमेन नाविद्यामिथ्यात्वेन द्वैतज्ञानसत्यतापातः; कारणमिथ्यात्वे कार्यमिथ्यात्वस्यावश्यकत्वात्-**

---

दोषजन्यतया। **समसत्ताकत्वेनेति**। ननु—स्वसमसत्ताकेऽपि ब्रह्मज्ञानेऽविद्यादोषो नाप्रामाण्यप्रयोजकः; मिथ्यात्वात्, अतो द्वैतज्ञानेऽपि तथा। न च ब्रह्मज्ञानेऽविद्याया उपादानत्वेऽपि भ्रमत्वेन नाविद्यादोषनिमित्तकत्वमिति स न तत्र तथेति वाच्यम्; न हि द्वैतभ्रमत्वेनाप्यविद्यादोषनिमित्तकता, किं तु कार्यत्वेनाविद्योपादानकत्वमेवेत्यत आह—**कार्यकारणभावनियमेनेति**। तथा च यत्र विषयेऽविद्या कारणं तस्यैव ज्ञानाप्रामाण्ये प्रयोजिकेति न ब्रह्मज्ञाने सा तथेति भावः। **सत्यतापातः** तात्त्विकप्रामाण्यादिरूपस्य भ्रमवैलक्षण्यस्यापातः। ननु—विद्यमानस्याप्यविद्यादोषस्य मिथ्यात्वेन तात्त्विकस्य तदभावस्य सत्त्वात्कुतो न तात्त्विकप्रामाण्यापातः? तात्त्विकस्य दोषाभावस्य ब्रह्मज्ञाने तात्त्विकप्रामाण्यप्रयोजकत्वेन क्लृप्तत्वात्तत्राह—**कारणीभूतेति**। **दोषाभावे** प्रतियोगिव्यधिकरणदोषाभावे। तथा च नोक्ताभावो ब्रह्मज्ञाने उक्तप्रयोजकत्वेन क्लृप्तः; आवयोः प्रामाण्यस्य स्वतस्त्वात्, ब्रह्मणस्तात्त्विकत्वात्तद्धीप्रामाण्यस्योक्तप्रयोजकं विनापि तात्त्विकत्वसंभवात्, उक्ताभावमात्रस्य तात्त्विकप्रामाण्यप्रयोजकत्वे काचादिदोषस्यापि मिथ्यात्वेन तात्त्विकाभावस्य तत्कालेऽपि सत्त्वेन तात्त्विकप्रामाण्यप्रयोजकत्वापत्तेश्च। **अत एव** भ्रमत्वे दोषस्य प्रयोजकत्वात्तदभावे तात्त्विकदोषाभावः[1] प्रयोजक इत्यपास्तम्। अथ प्रतियोगिव्यधिकरणो दोषा-

[1] तात्त्विको दोषाभावः—ग.

ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वस्य बाध्याबाध्यसाधारणस्य मिथ्यात्वसिद्ध्यनपेक्षत्वाच्च सत्वविभागासिद्धिः । ननु—दोषादीनां रूप्यादिभ्रमहेतूनां पारमार्थिकसत्वमौत्सर्गिकप्रामाण्येन सिद्धमिति परमार्थसतामेव तेषां हेतुत्वमिति—चेन्न; व्यावहारिकप्रामाण्यस्य साक्षिणा ग्रहणेऽपि त्रिकालाबाध्यत्वरूपतात्विकप्रामाण्यं न केनापि गृह्यत इति प्रत्यक्षबाधोद्धारे प्रागेवाभिहितत्वात् । न च—रूप्याद्यध्यासे दोषादीनामधिष्ठान

---

भावो भ्रमत्वाभावे प्रयोजक उच्येत; तदपि न; तावता काचादिदोषाभावस्य तादृशस्य तत्प्रयोजकत्वसम्भवेऽप्यविद्यादोषाभावस्य तादृशस्य तदसम्भवात्तत्काले द्वैततद्विज्ञानयोरेवाभावात् । द्वैताज्ञाने भ्रमत्वाभावप्रयोजकत्वस्य दूरनिरस्तत्वादिति । भ्रमवैलक्षण्यं द्वैतज्ञाने नापादयितुं शक्यत इति भावः । ननु–वियदादिज्ञानस्य प्रमात्वेनेव भ्रमत्वेनापि न कार्यता; *मानाभावान्मयाऽविद्याया* दोषत्वानभ्युपगमाच्च । तथा च तस्य भ्रमवैलक्षण्यमिव भ्रमत्वमपि निर्मूलकम्, तत्राह—**कारणमिथ्यात्व इति** । कारणस्याविद्यारूपप्रयोजकस्य, ·मिथ्यात्वे ज्ञाननिवर्त्यत्वे, कार्यस्याविद्याप्रयुक्तद्वैतमात्रस्य, मिथ्यात्वावश्यकत्वादविद्यानिवृत्तिद्वारा ज्ञाननिवर्त्त्यत्वावश्यकत्वात्। तथा च भ्रमत्वेन कार्यत्वाभावेऽपि द्वैतस्याविद्याप्रयुक्तत्वेनज्ञाननिवर्त्यतायोग्यत्वरूपमिथ्यात्वाद्वैतज्ञानस्य मिथ्याविषयकत्वरूपं भ्रमत्वमर्थवशसम्पन्नमिति भावः । नन्वेवम्—बौद्धदुष्टवेदजज्ञानस्य द्वैतज्ञानस्य च कल्पितदोषप्रयुक्तत्वाविशेषेऽप्यविद्यादोषस्य द्वैतज्ञानसमसत्ताकत्वात्तद्भ्रमत्वादिप्रयोजकत्वमिति पर्यवसितम्, तच्च न युक्तम्, भ्रमत्वनिश्चयात्पूर्वं समसत्ताकत्वस्य ब्रह्मज्ञानबाध्यत्वादिरूपस्य तयोरनिश्चयादित्यत आह—**ब्रह्मज्ञानेतरेति** । तथाच पूर्वं ब्रह्मज्ञानेतराबाध्यत्वरूपसत्ताया ब्रह्मणीव प्रपञ्चेऽपि निश्चयसम्भवात्, द्वैतं यदि मिथ्या

समसत्ताकत्वं दृष्टमितीहापि तथेति—वाच्यम्; साधर्म्यसमजात्युत्तरत्वात्। वस्तुतस्तु सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषादीनामधिष्ठानसमसत्ताकत्वाभावात्। न च—बाधकज्ञानं सत्यमेव वक्तव्यम्, अन्यथा बाधपरम्परया अनवस्थापत्तेरिति वाच्यम्; वेदान्तवाक्यजन्यचरमचित्तवृत्तेः कतकरजोन्यायेन स्वपरबाधकतयाऽनवस्थाया अभावात्। दृश्यत्वमात्रेण युगपत्कृत्स्नबाधसंभवात्। नहि गुहायां न शब्द इति शब्दः स्वं

---

न स्यात्तदा स्वसमानसत्ताकाविद्याप्रयुक्तं न स्यादिति तर्केण मिथ्यात्वनिश्चयः। तदिदमुक्तं कारणमिथ्यात्व इति। वेदजज्ञाने तु न तथा; बौद्धकल्पित[1]दोषस्य प्रातीतिकतया स्वसमानसत्ताकतत्प्रयुक्तं न स्यादित्यापत्तेरिष्टत्वादिति भावः। **साधर्म्यसमेति**। तर्कं विना दोषत्वादिसाधर्म्यमात्रेणापादनबोधकवाक्यत्वात्। **कुत्रापीति**। ननु—शुद्धचिति रूप्याद्यध्यासे तस्य ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वापत्तिरिति—चेन्न; शुद्धचितौ रूप्याद्युपादानाविद्याविषयत्वेऽपि तदवच्छेदकत्वस्य शुक्त्यादौ स्वीकारेण तदाकारवृत्त्या तादृशावच्छेदकत्वनाशेन रूप्यादिबाधात्[2]॥

ननु—ब्रह्मज्ञानेन ब्रह्माज्ञानकार्यस्यैव बाध्यत्वेन ब्रह्माज्ञानसम्बन्धस्य जीवेशभेदादेश्चानादिवर्णस्य[3] बाधासम्भवेन तस्यैवाधिष्ठानसमसत्ताकत्वेन कुत्रापीत्यादिकमयुक्तम्, ब्रह्मज्ञाने स्वबाधकत्वमप्युक्तम्,[4] तस्य दोषाजन्यत्वेनाबाध्यत्वात्, दोषस्य च सत्यत्वनियमेनाविद्याया अदोषत्वेन ब्रह्मज्ञाने तदजन्यत्वात्, एकस्य बाध्यबाधकत्वयोर्विरोधाच्च। गुहायां न शब्द इत्यत्र तु शब्दमात्रनिषेध आनुभविकत्वान्नविरुद्धः,

---

[1] काल्पित–क. [2] बाधस्योक्तत्वात्–ग. [3] वर्गस्य–ग. [4] प्ययुक्तम्–ख. ग.

न निषेधति ; अन्यथा स्वस्य स्वेनानिषेधे तत्राप्यनवस्थापत्तिः, शब्दमात्रनिषेधानुभवविरोधश्च । यद्यपि बाधकज्ञानं वृत्त्युपरक्तचैतन्यरूपं स्वतः सत्यमेव ; तथापि तदवच्छेदिकाया वृत्तेर्दृश्यत्वेन मिथ्यात्वाद्बाधोपपत्तिः । ननु बन्धस्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वे तदभावार्थं यत्नो न स्यात् ; अत्यन्ताभावस्यासाध्यत्वात् । अतएव न तत्प्रतीत्यभावार्थमपि यत्नः, तस्या अपि मिथ्यात्वात् , अन्यथा मोक्षेऽपि बन्धप्रतीत्या तद्दशायामपि प्रातिभासिकबन्धापातात् । अथ पारमार्थिकत्वाकारेण मिथ्यात्वम् ,

---

शब्दत्वस्य निषेध्यतावच्छेदकत्वेन प्रतीयमानस्य शब्दमात्रे सत्त्वाच्चेति—चेन्न ; शुक्त्याद्यज्ञानतत्कार्ययोरिव शुक्त्याद्यज्ञानाचित्सम्बन्धस्यापि शुक्त्यादिज्ञानबाध्यत्वेनाज्ञानप्रयुक्तत्वस्यैवाज्ञाननाश्य[1]तावच्छेदकत्वस्याज्ञानतत्प्रयुक्तयोर्युगपन्नाशे तु शुक्त्याद्यज्ञानतत्प्रयुक्तान्यतरत्वेन शुक्त्यादिधीनाश्यत्ववत् दृश्यत्वेन ब्रह्मज्ञाननाश्यत्वस्यावश्यकत्वात् । दोषस्य च सत्यत्वं न नः सम्मतम् ; मानाभावादित्युक्तम् । एकस्यापि भिन्नरूपाभ्यां बाध्यबाधकत्वे प्रामाणिके को विरोधः ? यथाहि शब्दत्वं शब्दमात्रवृत्ति ; तथाऽज्ञानप्रयुक्तत्वादिकं ब्रह्मज्ञानवृत्तीत्यलं मूढोक्तिचिन्तया । तदभावार्थं तदत्यन्ताभावार्थम् । असाध्यत्वादिति । निवृत्तिस्तु ज्ञानसम्बन्धस्य सम्भवति ; शशविषाणवन्मिथ्यात्वेनासत्त्वात् । मिथ्यात्वादिति । तथाच तस्या निवृत्त्यसम्भवेनात्यन्ताभावार्थमेव यत्नो वाच्यः । तत्र चाध्यस्तत्व[2]दोष उक्त इति भावः । ननु—क्षेमसाधारणं साध्यत्वमत्यन्ताभावेऽप्यस्ति तत्राह—अन्यथेति । अनिवर्त्यस्यापि मिथ्याभूतस्य सम्बन्धत्व[3] इत्यर्थः । पारमार्थिकत्वाकारेण मिथ्यात्वं पारमार्थिकत्वा-

---

[1] नाशनाश्य—ख. ग. [2] चासाध्यत्व—ख. ग. [3] बन्धत्व. ग.

स्वरूपेण तु निवृत्तिरेव, न ; तस्याः स्वरूपाबाधेनाप्युपपत्तेरिति—चेन्न ; सत्यस्य ब्रह्मणो निवृत्त्यदर्शनेन स्वरूपतो मिथ्यात्वाभावे निवृत्त्ययोगान्मिथ्यात्वं निवृत्त्यनुकूलमेव । नच—तदर्थं प्रवृत्त्यनुपपत्तिः ; अधिष्ठानसाक्षात्कारानन्तरं तथैव, ततः पूर्वं तु कण्ठगतविस्मृतचामीकरप्राप्तय इव भ्रमबाधकज्ञानोत्पत्तये प्रवृत्त्युपपत्तेः । अत्यन्ताभावाधिकरणे च प्रतियोगिवत्तन्निवृत्तिरप्युपपादितैव । नच—त्रैकालिकनिषेधप्रतियोगिनि तुच्छे निवृत्तिर्न दृष्टेति कथं तादृशि प्रपञ्चे सा स्यादिति—वाच्यम् ; यथाकथंचित्सजातीयेऽदर्शनस्याप्रयोजकत्वात् । अन्यथा अनुत्पन्ने निवृत्तिर्न दृष्टेति प्रागभावोपि न निवर्तेत । तस्मात्स्वभावविशेष एव तुच्छानित्याविलक्षणो निवृत्तिप्रयोजक इति वाच्यम् । सा च निवृत्तिरधिकरणस्वरूपेति पक्षे घटनाशार्थं मुद्गरपातादाविव मननादौ प्रवृत्तिरूहनीया । अतिरिक्तेति पक्षे,

---

वच्छिन्नं स्व[1]समानाधिकरणात्यन्ताभावप्रतियोगित्वम् । निवृत्तिरेव नतु मिथ्यात्वम् । यद्यपि बन्धात्यन्ताभावे प्रतियोगिमत्कालाऽनवच्छिन्नत्वविशिष्टे क्षेमसाधारणं साध्यत्वं सम्भवति ; तथापि तादृशात्यन्ताभावस्यैव प्रकृते नाशरूपत्वात् । "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" "तरति शोकमात्मवित्" इत्यादौ तरत्यादेर्नाशयत्याद्यर्थे निरूढत्वात्, ज्ञानेन तु तदज्ञानं येषां नाशितमित्यादिस्मृतेश्च, बन्धनाशार्थत्वं ज्ञानस्याह—सत्यस्येति । तथैवेति । तदा बन्धस्य मिथ्यात्वेन निश्चितत्वेनाद्वेष्यत्वात्तन्निवृत्ताविच्छाविरहादिति शेषः । चामीकरप्राप्तये चामीकरासत्वभ्रमबाधकज्ञानोत्पत्तये । ऊहनीयेति । यद्यपि तत्तदधिकरणं सिद्धत्वेन ज्ञातम्, तथापि निवृत्तित्वेन रूपेण न तथा ; निवृत्तित्वस्य

---

[1] च्छिन्नत्व—ग.

त्वनिर्वचनीया, पञ्चमप्रकारा चरमवृत्तिरूपा वा सा; सर्वथा जन्यैवेति न काप्यनुपपत्तिः। ननु—बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात्; नहि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तम्, न वा दूरागमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तमिति—चेन्न;

---

मुद्गरपाताद्युत्तरकालावच्छेदेनैव तत्तदधिकरणे संबन्धस्वीकारात्। अनिर्वचनीयेति। अनिर्वाच्यत्वेऽप्यज्ञानकालीनाज्ञानप्रयुक्तत्वेनैव ज्ञाननाश्यत्वस्वीकारान्न ज्ञाननिवर्त्या सा। एवं पञ्चमप्रकारापि बोध्या। वृत्तिरूपेति। एवं च घटादिनाशोऽपि मुद्गरपातादिरूपस्तस्य घटादिरूपद्वेष्यविरोधित्वेनेष्टत्वम्। विरोधित्वं च यत्र यत्क्षणे मुद्गरपातादिस्तत्र तत्क्षणेऽवश्यं घटाद्यभाव इत्यादिरूपं सुखविरोधित्वेन द्वेष्यत्ववत् द्वेष्यविरोधित्वेनेष्टत्वं सर्वानुभविकम्। अतएव सुखादीष्टविरोधितया पिशाचादिकं द्विषन्ति। तद्विरोधितया च [1] न सिद्धनामेच्छन्ति। स्पष्टश्चायमर्थो बौद्धाधिकारतट्टीकादौ। संभवति च निवृत्तेर्मुद्गरपातादिरूपत्वेऽपि निवृत्तित्वेन रूपेण स्वस्यापि स्वसाध्यता। स्वोत्पत्तिद्वितीयक्षणावच्छेदनोक्तनिवृत्तित्वसंबन्धस्य स्वस्मिन् स्वीकारेण क्षेमसाधारणजन्यत्वसंभवादित्यादि मुहुरुक्तम्॥

ननु—निवृत्तेरुत्पत्त्यभावपक्षे घटादिर्मुद्गरपाताद्युत्तरं क्व गत इति पर्यनुयोग इति चेत्तर्हि निवृत्तेरुत्पत्तिपक्षेऽपि पर्यनुयोगः स किं न स्यात्। अथ तार्किकादिमते तस्या अत्यन्तप्रतियोगिभिन्नत्वात्तादृशपर्यनुयोगो न तु सांख्यादिमते; तस्याः प्रतियोग्यभेदस्यापि स्वीकारान्नाशरूपेण प्रतियोगी परिणत इत्युत्तरसंभवादिति—चेन्न; तत्रापि प्रतियोग्यवस्था क्व

---

[1] न नृसिद्ध—ग.

गतेति पर्यनुयोगस्य संभवान्न नाशावस्था पूर्वं स्थिता कारणव्यापारवैयर्थ्यादिति कुत आगता सेति पर्यनुयोगाच्च। अथ स्थितैव सा, कारणव्यापारस्तु तदभिव्यक्तय इति चेत्तर्ह्यभिव्यक्तिर्न स्थितेति तत्रैव तदापत्तिः। अत एव प्रतियोग्यवस्था तिष्ठत्येवाग्रे, परन्तु नाभिव्यज्यत इत्यपास्तम्। अथ पूर्वमसत्यप्यभिव्यक्तिस्तत्तत्काले संबद्ध्यते सामग्रीव्याप्तेः; तर्हि पूर्व सदपि प्रतियोगि मुद्गरपाताद्युत्तरकाले न संबध्यते मुद्गरपातादिघटितसामग्रीमत्क्षणत्वस्य घटादिक्षणाव्यवहितपूर्वान्यत्वव्याप्यत्वादिति कुत आगत इत्यस्येव क्व गत इत्यस्यापि नावकाश इति सुचिरं विभावनीयम्। एवं चाज्ञानतत्कार्ययोर्नाशस्तयोश्चरमक्षण एव प्रथमक्षण उत्पत्तिरिव नाशव्यवहारानुरोधात्तत्रैव नाशत्वरूपोऽखण्डधर्मः स्वीक्रियते। स च क्षणश्चरमवृत्तिरेव, न तु चरमवृत्तेरुत्पत्तिद्वितीयक्षणः; अज्ञानादिनाशाद्युगपदेव द्वैतमात्रोच्छेदे बाधकाभावादिति मुख्यपक्षोऽयं चरममुक्त इति ध्येयम्। "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित" इत्यादिवार्तिकं तु ज्ञानज्ञेयान्यस्या मोहनिवृत्तेरप्रामाणिकत्वाभिप्रायकम्। मुक्तेः पूर्वं[1] जायमानस्य मोहनाशव्यवहारस्योक्तरीत्योपपत्तेरात्मनो नाशत्वे मानाभावात्। मुक्तिकाले च तन्नाशे अतीतत्वमेव व्यवह्रियते। अतएव मुद्गरपातानन्तरं घटो नष्ट इति व्यवहारः॥

यत्तु तत्र नाशोत्पत्तावतीतत्वं व्यवह्रियते; उत्पत्तेः प्रत्ययार्थत्वात्, अतएव पूर्वनष्टमद्य नश्यतीति न प्रयोगः; उत्पत्ताववच्छेदकत्वेनाद्यादेरन्वयादिति मणिदीधित्यादावुक्तम्, तन्न; उक्तरीत्या घटादिनाशस्य क्षणिकत्वेनोपपत्तावुत्पत्तेः प्रत्ययार्थत्वे मानाभावात्, आद्यवृत्ति[2]ध्वंसप्रतियोगि चिरनष्टमित्यस्याप्यननुभवपराहतत्वात्। अन्यथोत्पत्तेरपि स्थैर्यमङ्गीकृत्य चिरोत्पन्नमद्योत्पद्यत इत्यस्योक्तरीत्यावारणापत्तेः।

---

[1] प्रायकमुक्तम्। पूर्वं—क. ख. [2] अद्यवृत्ति-क.

अथ चिरनष्टेऽतीतत्वादि कथम्, वर्तमाननाशप्रतियोगित्वाभावादिति—चेद्वर्तमाननाशप्रतियोगी यो नाशस्तत्प्रतियोगित्वस्याप्यतीततारूपत्वात्। यथाहि घटसत्ताकाले घटप्रागभावेऽतीतत्वधीस्तथा घटनाशकालेऽपि सा। तच्चातीतत्वं वर्तमाननाशप्रतियोगिनो घटरूपनाशस्य प्रतियोगित्वमेव। घटस्येव तन्नाशस्य घटप्रागभावनाशत्वे तु घटनाशकाले घटप्रागभावो नश्यतीति प्रत्ययापत्तिः। न च—भवन्मतेऽपि तद्घटस्योत्पत्तिदिनाद्वितीयदिने तद्घटप्रागभावो नश्यतीति धीः स्यात्, तद्घटरूपस्य नाशस्य वर्तमानत्वादिति—वाच्यम्; मन्मते प्रागभावाधिकरणचरमक्षणस्यैव प्रागभावनाशत्वात्। अथैवमपि घटनाशकाले घटेऽतीतत्वं न प्रतीयेत; विद्यमाननाशप्रतियोगिनो घटरूपनाशस्य यत्प्रतियोगित्वं तस्य घटेऽस्वीकारात्, घटीयचरमक्षणे स्वीकाराच्चेति—चेन्न; विद्यमाननाशप्रतियोगिनाशप्रतियोगिनाशप्रतियोगित्वस्याप्यतीतारूपत्वात्, तवापि मते विद्यमानत्वस्य तत्तत्कालरूपस्य वाच्यतया एकरूपत्वाभावात्, घटे नाशोत्पत्त्यवधिकस्यानतिप्रसक्तकालस्यैव विद्यमानत्वरूपतया निवेशेन विद्यमाननाशप्रतियोगित्वस्यैव मन्मतेऽपि सर्वत्रातीततारूपत्वसंभवाच्च॥

वस्तुतस्तु शरदि पुष्प्यन्ति सप्तच्छदा इत्यादौ सप्तमीविभक्तेरुत्पत्त्यर्थकत्वस्य क्लृप्ततया तत एवोत्पत्तिलाभेन विवक्षितार्थनिर्वाहेण नाख्यातस्योत्पत्तिरर्थ इति ध्येयम्। (कालवृत्तिनाशप्रतियोगिकत्वादिकमेव तदुच्यताम्, स च कालः स्थूल एवेति दिक्[1])। यत्त्वधिकरणब्रह्मरूपाया निवृत्तेर्न क्षेमसाधारणं साध्यत्वम्; तस्या उत्तरावध्यभावेन यद्व्यतिरेक इत्यस्यासंभवात्, अतएवात्यन्ताभावस्य साध्यत्वं पूर्वं दूषितमिति, तत्तुच्छम्; यत्सत्त्वेऽग्रिमक्षणेऽवश्यं यत्सत्त्वं [2]तद्व्यतिरेके

[1] अयं कुण्डलितः पाठः–ख. पुस्तके नास्ति. [2] यद्व्यति-आ.

आत्माध्यस्तगौरत्वादेः शुक्त्याद्यध्यस्तरूप्यादेश्च तत्तत्साक्षात्कार-निवर्त्यत्वदर्शनेन प्रपञ्चस्यापि ब्रह्मण्यध्यस्ततया तत्साक्षात्कार-निवर्त्यत्वस्यावश्यकत्वात् । नहि शुक्त्याद्यध्यस्तं रूप्यादि

---

चाग्रिमक्षणेऽवश्यं यद्व्यतिरेक इत्येतन्मात्रं हि न; तत्पटादेरपि दण्डादि-साध्यतापत्तेः, दण्डादिसत्वासत्वयोः क्वचिद्देशेऽग्रिमक्षणावच्छेदेन पटा-देरवश्यं सत्वाऽसत्वसंभवात्, किंतु यद्वद्देशावच्छेदेन यद्वत्क्षणस्योत्तर-क्षणे तदवच्छेदेनावश्यं यत्सत्वं यद्व्यतिरेकस्याश्रयदेशावच्छेदेन तद्वत्क्षण-स्योत्तरक्षणे तदवच्छेदेन यद्व्यतिरेकस्तस्य तत्साध्यत्वम् । अतस्तत्वज्ञान व्यतिरेकस्याश्रयदेशावच्छेदेन तद्वत्क्षणस्योत्तरक्षणे तादृशदेशावच्छेदेन द्वैतनिवृत्तित्वविशिष्टस्य ब्रह्मणः साध्यतावच्छेदकतादात्म्यसंबन्धेन नानुपपत्तिः। नहि तत्वज्ञानशून्यपुरुषावच्छेदेन कदापि द्वैतनिवृत्तिधीर-स्तीति ध्येयम् ॥

तत्तत्साक्षात्कारानिवर्त्यत्वदर्शनेनेति । गौरत्वादावात्मनो निदिध्यासनजन्यसाक्षात्कारनिवर्त्यत्वस्य रूप्यादौ शुक्त्यादेर्निदिध्यास-नजन्यसाक्षात्कारानिवर्त्यत्वस्य च दर्शनेनेत्यर्थः । विपरीतभावनासत्वे शुक्त्यादावपि निदिध्यासनापेक्षेति बोध्यम् । तथाच यद्यन्निदिध्यासन-जन्यसाक्षात्कारनिवर्त्यं तत्तत्र न कल्पितमिति व्याप्तिर्नेति भावः । यत्तु यद्यत्र कल्पितं तत्तन्निदिध्यासनाजन्यसाक्षात्कारनिवर्त्यं नेति व्याप्तिरिति न दोष इति—तत्तुच्छम्; उक्तस्थले एव[1] व्यभिचारा-नुद्धारात् । नन्वधिष्ठानसाक्षात्कारं विनाप्युक्तसाक्षात्काराद्दुरितस्येव-प्रपञ्चस्यापि ब्रह्मसाक्षात्कारान्निवृत्तिरस्तु, किं ब्रह्मणि प्रपञ्चस्य कल्पि-

1 एवं—क. ख.

शुक्त्यादिज्ञानं विना निवर्तते। देवतादर्शनादिना तु प्रायश्चित्तसमकक्ष्येण दुरितस्य कारणात्मनावस्थानमात्रं क्रियते, न तु शुक्तिज्ञानेन रूप्यस्येव निवृत्तिः; अधिष्ठानाज्ञानरूपोपादानकस्यारोपितस्य तन्निवृत्तिं विना निवृत्त्ययोगात्। अज्ञाननिवृत्तिश्चाधिष्ठानज्ञानादेवेत्युक्तं प्राक्। श्रवणादिनियमादृष्टं च न मुक्तिं प्रति कारणम्, किंतु ब्रह्मापरोक्ष्यं प्रति। नन्ववघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणादिसाध्यापरोक्ष्यान्यमुक्तेरेव तत्साध्यत्वम्; अन्यथा श्रवणादिनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमाविध्ययोगात्।

---

तत्वेन; तत्राह देवतादर्शनादिनेति। निवृत्तिरिति। बाधरूपेत्यादिः। निवृत्त्ययोगात् बाधायोगात्। श्रवणादिनियमादृष्टमिति। श्रवणाद्याश्रितनियमेन जन्यादृष्टमित्यर्थः। अवघातादिमात्रस्य विधेयत्वे आक्षेपादेव तस्य वैतुष्यादिसाधनत्वस्य प्राप्तत्वादवघाताद्याश्रितनियमस्यादृष्टार्थतया विधेयत्वात्। अतएव दृष्टफलकावघातादेः कृष्णलादौ बाधात्तदाश्रितनियमानुष्ठानलोपः। अथवा नियमतात्पर्यकविधिविषयश्रवणादिजन्यादृष्टमित्यर्थः। यद्यपि हि वैतुष्यादिफलसाधनत्वमवघातादेराक्षेपादेव लब्धुं शक्यम्, तथाप्याक्षेपप्रवृत्तेः पूर्वं शीघ्रप्रवृत्तया प्रत्यक्षश्रुत्योक्तफलार्थतयाऽवघातादि विधीयते। तेनाक्षेपप्रवृत्तिप्रतिबन्धाद्दलनादिनिवृत्तिफलकावघातादिनियमधीरूपफलसिद्धिः। तादृशनियमधीरूपफलकस्याप्यवघातादेर्यदि वैतुष्यादिद्वारकप्रदेयनिष्पत्त्यधीनयागनिष्पत्तिमात्रद्वारा यागीयापूर्वसिद्धिः फलम्; तदा तादृशावघातादिविधिर्व्यर्थः; दलनादिनाप्युक्तयागनिष्पत्तिरूपद्वारसम्भवात्। अतोऽदृष्टद्वारापि यागीयापूर्वसिद्धिः फलमिति कल्प्यते; तथापि यागीयापूर्वप्रयोजकवैतुष्यादिदृष्टफलविशिष्टोद्देशेन प्रथमतोऽवघातादिविधि-

**नच—परोक्षज्ञानं श्रवणात्, अपरोक्षं तु नियमादृष्टादिति—युक्तम्; श्रवणादिविधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षस्यैव दृशिनोद्देश्यत्वात्, त्वन्मते परोक्षज्ञाने**

---

प्रवृत्तेस्तादृशदृष्टफलमेवावघातादिप्रयोजकम्; न तूक्तापूर्वजनकापूर्वविशिष्टोद्देशेन पश्चात्कल्प्यमानस्यावघातादिविधेर्विषयभूतमदृष्टफलमित्युक्तम्। दृष्ट[1]फलबाधात्कृष्णलादाववघातादिबाधः। यत्तु नियमादृष्टेति नियमजन्यादृष्टेत्यर्थ इति व्याख्याय नियमप्रयोजनापेक्षया कल्प्यत्वान्नियमजन्यमुच्यत इत्युक्तिः, तच्छोभते; नियमप्रयोजनापेक्षया कल्पेत्यर्थ[2] इत्येव व्याख्यातुमुचितत्वात्। **अपूर्वस्येवेति।** आग्नेयाद्युत्पत्त्यपूर्वस्येवेत्यर्थः। यत्तु परमापूर्वे यथावघातादिजन्यनियमादृष्टसाध्यत्वं न तु वैतुष्यादौ, तथा मुक्तौ श्रवणादिनियमादृष्टसाध्यता न तु साक्षात्कार इति व्याख्यानम्, तन्न अवघातादेराग्नेयादिजन्यपरमापूर्वार्थत्वादाज्यादिषु सङ्कर इत्याशङ्क्य आग्नेयाग्नीषोमीयैन्द्राग्नीयोत्पत्त्यपूर्वार्थत्वादाज्यादेराग्नेयादिद्रव्यत्वाभावान्न तेषु तस्य सङ्कर इति तृतीयप्रथमीये "तेषामर्थेन सम्बन्ध" इत्यधिकरणे सिद्धान्तितत्वात्। अवघातादिनियमापूर्वस्याप्याग्नेयाद्युत्पत्त्यपूर्वार्थत्वादिति ध्येयम्। **विध्ययोगादिति।** मुक्तौ तु तादृशोपायान्तरं प्रसक्तमिति पराभिमानः। वस्तुतो मुक्तिः श्रवणाद्यधीनसाक्षात्कारेणैव साध्यत इति तस्यामपि श्रवणादिनिरपेक्षोपायान्तरमप्रसक्तम्। दुःखोच्छेदप्रयोजकत्वादिसामान्यरूपेण मुक्तौ तर्कशास्त्रादिश्रवणसाध्यात्मज्ञानमिव वक्ष्यमाणरीत्या सामान्यरूपेण साक्षात्कारेऽपि तत्प्रसक्तमिति न सम्भवदुक्तिकमिदं परवाक्यमिति बोध्यम्। **दृशिनेति।** साक्षात्कारस्यैव निदिध्यासनफलत्वात्तदुद्देशेनैव निदिध्यासनविधानात् श्रवणमनने अपि

[1] ष्युक्तदृष्ट—क. ख. [2] कल्प्येत्यर्थ इति भवितुमुचितम्.

तदुद्देशेनैव विधेये ; अन्यथा परोक्षज्ञानस्य श्रवणमनने प्रत्युद्देश्यतया समर्पणाय दृशेसवृत्तिः स्यात् । सकृत्प्रतिसंहितदृशिनार्थद्वयबोधनासम्भवादिति भावः ॥

वस्तुतस्तु "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति पृथगुपात्तानां श्रवणादीनां विधेयानां भेदाद्वाक्यभेदावश्यकत्वादुक्तावृत्तिर्न दोषाय । विविदिषन्ति यज्ञेनेत्यादौ तु एकेनैवाख्यातेनोपात्ता नाना भावना विधेया इति वाक्याभेदः । अथ सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्, "मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सहितं श्रवणं नामाङ्गी विधीयत" इति विवरणाद्युक्तेश्च, त्रितयविशिष्टा एकैव भावना विधेया ; मनननिदिध्यासनसहितेन श्रवणेन पश्येदिति विधिविपरिणामसंभवादित्युच्येत तथापि पत्न्यवेक्षितमाज्यमित्यादावीक्षतेश्चाक्षुषवाचकत्वनिर्णयात् दृशिर् प्रेक्षण इति स्मृत्या दृशेर्वीक्षणवाचकत्वात्साक्षात्कारे दृशिर्लाक्षणिक एव वाच्य इति निश्चयात्मकज्ञानेऽपि लाक्षणिकत्वसम्भवात्तदुद्देशेन तादृशश्रवणविधौ को दोषः । प्रमेयगतासम्भावनाया विपरीतभावनायाश्च निवृत्तिद्वारा तादृशफले मनननिदिध्यासनयोरुपकारकत्वसम्भवात् । अतएव त्रयाणां प्राधान्येन विधावपि न क्षतिः ; निश्चयत्वेनैव त्रितयफलत्वसम्भवात् । नहि निदिध्यासनस्य साक्षात्कारो दृष्टं फलम् ; नित्यपरोक्षविषये तदसम्भवात् , क्वचिदेव कामिन्यादिसाक्षात्कारे निदिध्यासनसहितोत्कटरागादिदोषविधया परं कारणम् , किंतु विपरीतसंस्कारनिवृत्तिद्वारा निश्चयः । अतएव "मनननिदिध्यासनाभावे[1] जातोऽपि ब्रह्मसाक्षात्कारोऽसम्भावनाविपरीतभावनादोषाभ्यां परोक्षकल्प इति" विवरणादावुक्तम् । उक्तदोषाहिताप्रामाण्यसंशयविषयत्वेनानिश्चयरूपत्वान्नाविद्यानिवर्तक इति तदर्थः ॥

---

[1] निदिध्यासनभावे—ख.

**कामनाया अयोगेन तस्योद्देश्यत्वायोगाच्चेति चेन्न; तत्र क्रत्वर्थस्य नियमापूर्वस्य परमापूर्वसाधकत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमा-**

---

**कामनाया इति ।** ब्रह्मज्ञानं भवत्विति कामनापूर्वकाले ज्ञानविशेषणतया ब्रह्मणोऽपि ज्ञातव्यत्वेन परोक्षज्ञानस्य सिद्धत्वेन न तादृशकामना सम्भवतीति भावः । **सोपाधिब्रह्मज्ञानस्यापातब्रह्मज्ञानस्य** च सिद्धत्वेन ब्रह्मान्या[1]विषयकनिश्चयो भवत्विति कामनाया एव वाच्यत्वादापातज्ञानेनैव तदुत्पत्तिसंभवाच्च नेयमनुपपत्तिरिति तु विभावनीयम् । **क्रत्वर्थनियमापूर्वस्येति ।** क्रतुं तत्कारकं वोद्दिश्य विहितं यत्तज्जन्यनियमादृष्टस्येत्यर्थः । **परमापूर्वेति ।** उत्तराङ्गजन्यनियमादृष्टाभिप्रायेणेदम् । अवघातादिजन्यनियमादृष्टस्योक्तरीत्याग्नेयाद्युत्पत्त्यपूर्वसाधनत्वात् । अथवोत्पत्त्यपूर्वस्यापि वैतुष्यादिद्वारावघातादिप्रयोज्यत्वात्परमापूर्वसाधनत्वमेव तज्जन्यनियमादृष्टस्य परेण वाच्यम् । अन्यथावघातादिफलान्यदेव तदीयनियमादृष्टफलमिति स्वकल्पितनियमभङ्गापत्तेः । तथास्वीकारेऽपि पुरुषार्थनियमादृष्टस्य दृष्टफलसाधनत्वमवश्यं परेण वाच्यमित्यभिप्रायकमिदम् । **पुरुषार्थहिरण्यधारणादीति ।** तृतीयचतुर्थे स्थितम् । 'सुवर्णं हिरण्यं भार्यम्, सुवर्ण एव भवति, दुर्वर्णोऽस्य भ्रातृव्यो भवती' इत्यनारभ्य श्रुते वाक्ये शोभनवर्णहिरण्यधारणं क्रत्वर्थमुत पुरुषार्थमिति संशये, फलकल्पने गौरवात्तत्क्रत्वर्थम्, दुर्वर्ण इत्यादिकं तु न फलपरम्; कामशब्दाभावात् । नच—रात्रिसत्रवत्तदभावेऽप्यार्थवादिकं फलमस्त्विति—वाच्यम्; क्रत्वङ्गत्वेन गतिसम्भवात् । तथाच वैदिककर्मत्वसामान्यादग्निहोत्रादिकर्मसु निवेशः । तत्र सूत्रम् **'अद्रव्यत्वात्तु शेषः स्यादि'ति।** द्रव्यदेवतासम्बन्धाश्रवणान्न स्वतन्त्रं कर्म किंतु क्रतुशेष इत्यर्थः । **सिद्धान्तसूत्रं तु 'अप्रकरणे तु तद्धर्मस्ततो विशेषादि' ति ।**

[1] ब्रह्मान्य—क. ग.

हिरण्यधारणादितद्धर्मः पुरुषार्थम् ; यतोऽप्रकरणे आम्नातत्वेन प्रकरणाधीताद्विशिष्यते । नहि क्रत्वनुवादेन धारणं विहितम् ; येन आहवनीये जुहोतीति होमानुवादेन विहिताहवनीयवत्क्रत्वङ्गं भवेत्, नाप्यव्यभिचरितक्रतुसम्बन्धाश्रयणं प्रकृते सम्भवति ; हिरण्यधारणस्य लोकेऽपि सत्वेन क्रत्वव्यभिचाराभावात् ; तस्माद्भ्रातृव्यदुर्वर्णतादिरूपपुरुषापेक्षितफलाय हिरण्यधारणं विधीयते, विनियोगभङ्गोऽप्यगत्या सक्तून् जुहोतीतिवदिति । तथाच हिरण्यधारणादिफलस्य भ्रातृव्यदुर्वर्ण[1]तादेर्लोकसिद्धत्वादुक्तविधेः साधनान्तरव्यवच्छेदफलकनियमतात्पर्यकत्वेन नियमादृष्टस्याप्युक्तरीत्या स्वीकारात्, तस्य च यथादृष्टान्तरस्य साध्यस्यासम्भवाद्भ्रातृव्यदुर्वर्णतादिरूपं हिरण्यधारणफलं प्रति साधनत्वम्, तथा श्रवणादिनियमादृष्टस्यापि तत्फलसाक्षात्कारं प्रतीति भावः ॥

ननु भ्रातृव्यदुर्वर्णतादिकं न नियमादृष्टफलम् ; तस्य हिरण्यधारणादिकं प्रति दृष्टफलत्वात्, किंतु दुरितोत्पत्तिप्रबन्धः,[2] असति हि नियमादृष्टे दुर्वर्णतादिफलोत्पादनं दुरितोत्पादकमिति कल्प्यते- उक्तं हि भाष्यादौ चतुर्थे—द्रव्यार्जनोद्देशेन प्रतिग्रहादिनियमविधिस्थले प्रतिग्रहाद्यन्योपायेन द्रव्यार्जनं प्रत्यवायजनकमिति तुल्यं तत्पुरुषार्थनियममात्रे । तथाच कथं तद्दृष्टान्तेन साक्षात्कारस्य नियमादृष्टफलत्वोक्तिरिति—चेन्न ; दुरितानुत्पादकत्वविशिष्टतया द्रव्यार्जनदुर्वर्णतोत्पादनादेर्नियमादृष्टसाध्यत्वात् । अनुत्पादकत्वं चोत्पत्त्यनुकूलशक्तिनाशवत्त्वम् । प्रतिबन्धकेन हि कार्यानुकूलशक्तिर्नाश्यत इति मीमांसकाः । यदि तु प्रतिबन्धककालीने कारणेऽव्याप्यवृत्तित्वाच्छक्तिर्नास्तीति मतम् ; तथापि शक्त्यत्यन्ताभावे क्षेमसाधारणसाध्यत्वसम्भवात्तद्विशिष्टतया तस्य तदव्याहतम् । अत एवोक्तं नियमादृष्टमप्य-

---

[1] भ्रतृव्यस्य दुर्वर्ण—क. ग. [2] प्रतिबन्धः—ग.

दृष्टस्य तदभाववच्छ्रवणादिनियमापूर्वस्य श्रवणादिसाध्यसाक्षात्कारान्यफलाभावेऽपि तेनैव फलवत्त्वोपपत्तेः, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति न्यायात्, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति स्मृतेश्च। अत्र सर्वाखिलपदाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता; मोक्षस्याविद्यानिवृत्तिरूपस्य ज्ञानातिरिक्तासाध्यत्वानियमाच्च। ज्ञाने त्वसंभावनादिनिवृत्त्या प्रतिबन्धकदुरितनिवृत्त्या च दृष्टादृष्टांशोपयोगः। सामान्यपुरस्कारेण च प्रसक्तस्य साधनान्तरस्य निवृत्तिः सर्वत्र निय-

---

र्जेनाक्रमि" ति। यत्तु—हिरण्यधारणादिविधिरपूर्वविधिरेव; सत्यपि हिरण्यधारणादौ भ्रातृव्यस्य दुर्वर्णतानुत्पत्तेः, दूरस्थभ्रातृव्ये तदनुत्पत्तेश्चेति—तत्तुच्छम्; तद्धारणादेरनिष्टसाधनत्वधीद्वेषादिद्वारैव भ्रातृव्ये दुर्वर्णतोत्पादकत्वेन तादृशसहकारिसत्त्वे दुःखविशेषरूपदुर्वर्णतानुत्पत्तेरभावात्, सुवर्णतारूपफलांशेऽपूर्वविधित्वस्य शंकितुमशक्यत्वाच्च॥

**सर्वापेक्षेति**। मुक्तौ तत्वसाक्षात्कारान्यस्य नापेक्षा; तत्वसाक्षात्कारे सर्वधर्मजन्यादृष्टापेक्षा, "विविदिषन्ति यज्ञेनेत्यादिश्रुतेः, कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तत" इत्यादिस्मृतेश्च। **यथाश्वो रथचालनादौ** विनियुज्यते योग्यत्वान्न तु लाङ्गलाकर्षणादावयोग्यत्वात्, तथा तत्वसाक्षात्कारे कर्माणि न तु मोक्षे इति सूत्रार्थः। **ज्ञाने समाप्तिः**। ज्ञानसाध्याजनकत्वे सति ज्ञानजनकत्वम्। **दृष्टादृष्टेति**। दृष्टस्य श्रवणादेरसंभावनादिनिवृत्तावदृष्टस्य श्रवणादिनियमादृष्टस्य ज्ञानप्रतिबन्धकदुरितनिवृत्तावुपयोग इत्यर्थः। **सामान्यपुरस्कारेणेति**। नियमविध्यभावे हि सामान्यधर्मावच्छिन्नं प्रत्येव लौकिकसाधनं प्राप्तम्; लौकिकप्रमाणस्य यागीयव्रीहिवैतुष्यमात्रगतविशेषावच्छिन्नं प्रति साधनत्वाग्राहकत्वात्। तथा च तादृशलौकिकसाधनान्तरनिवृत्तिरेव विधि-

**"जन्माद्यस्य यत" इति सूत्रे, "यतो वा इमानी"त्यादिश्रुतौ च जन्माद्युक्तिः, 'ईक्षतेर्नाशब्दमि'ति सूत्रे'तदैक्षते" त्यादिश्रुतौ**

सामान्यतः प्रसक्तेः । यत्तु—सामान्यधर्मपुरस्कारेणेत्याद्ययुक्तम्; अपूर्वीयव्रीहिनिष्ठे वैतुष्ये येन रूपेणावघातस्य प्राप्तिस्तेन रूपेण दलनादेरपि प्राप्तेरुभयोरपि वैतुष्यत्वावच्छिन्ने हेतुत्वात्, न हि प्राप्तिर्निष्पत्तिरपि तु स्वरूपयोग्यता? सा च दलनादेरप्यस्ति, एतावानेव विशेषो यदवघातसाध्यवैतुष्येऽपूर्वीयत्वे न दलनादिसाध्ये इति, श्रवणादेस्तु ब्रह्मात्माऽभेदसाक्षात्कारत्वावच्छिन्न एव हेतुता, तत्र च नोपायान्तरप्राप्ति, तथाच श्रवणादितन्नियमादृष्टयोरुक्तसाक्षात्कारहेतुत्वे नियमविध्यनुपपत्तेर्मोक्षं प्रत्येव नियमादृष्टहेतुतेति—तन्न; दलनादेरपूर्वीयव्रीहिवैतुष्ये कारणत्वं न विशेषतः; न हि दलनसाध्यक्रियाव्यक्तेस्तद्व्यक्तित्वेनोक्तवैतुष्ये हेतुत्वमपि तु तद्व्यक्तिविशिष्टे वैतुष्ये, नवा दलनादेर्विशेषान्तररूपेण तादृशवैतुष्ये हेतुत्वमस्ति; मानाभावात्, अतएव वैतुष्यत्वावच्छिन्ने हेतुत्वादिति मौढ्यमेव; तत्सत्वे वा तदप्यवघातजन्यक्रियाविशेषहेतुत्वापेक्षया सामान्यत एव, अवघातक्रियायास्तु तत्तद्व्यक्तित्वेन तत्तद्व्यक्ति[1] विशिष्टविभागरूपे वैतुष्ये हेतुत्वाद्विशेषत एव तत्स्वरूपयोग्यताप्राप्तिरिति तु मौढ्यमात्रम्; नहि विधिः स्वरूपयोग्यतां निवर्तयत्यपि तु दलनाद्यनुष्ठानभ्रान्तिम् । तस्मात्तद्भ्रान्तिरेव प्राप्तिः । तथाच वैतुष्य इव साक्षात्कारेऽप्युपायान्तरस्य सामान्यतः प्राप्तत्वात्तन्निवृत्तेर्विधिफलत्वे नानुपपत्तिरिति गम्भीरार्थो न मन्दधीगम्य इति ध्येयम् ॥

जन्माद्यस्य सूत्रे जन्माद्यस्य यत इति सूत्रे । जन्माद्युक्तिः जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणोक्तिः । ईक्षतेरिति । यतो वा इमानि

[1] क्रियायास्तु तत्तद्व्यक्ति—क.

च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः, 'लोकवत्तु लीलाकैवल्य'मिति सूत्रे 'आप्तकामस्य का स्पृहे'त्यादिश्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, 'वैषम्यनैर्घृण्ये न सापेक्षत्वा' दिति सूत्रे 'पुण्येन पुण्यं लोकं नयती'त्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, 'तेजोऽतस्तथा ह्याहे'तिसूत्रे 'वायोरग्नि' रित्यादिश्रुतौ च तेजआदेर्वाय्वादिजन्यत्वोक्तिः, 'विपर्ययेण तु क्रमोऽत उपपद्यते चेति' सूत्रे 'पृथिव्यप्सु प्रलीयत' इत्यादि स्मृतौ च पृथिव्यादीनामबादौ प्रलयोक्तिरित्याद्ययुक्तं स्यात्; न हि कल्पिते तत्तद्विरोधशङ्का तन्निराकरणं च युक्तमिति—चेन्न;

भूतानि जायन्ते' इत्यादिवाक्यम ; न प्रधानबोधकम्; यतोऽशब्दम्, प्रधानबोधकशब्दशून्यम् । उक्तेऽर्थे हेतुमाह --ईक्षतेरिति । तदैक्षतेतीक्षधातुसमभिव्याहारविशेषादिति सूत्रशब्दार्थः । लोकवदिति । तुशब्दात्प्रयोजनाभावे स्रष्टृत्वानुपपत्तिरूपपूर्वपक्षव्यवच्छेदः । यथा लोके प्रयोजनमप्रतिसन्धायापि राजादीनां लीलारूपा प्राणिमात्रस्य निश्वासादिरूपा वा चेष्टा दृश्यते, तथा जगत्सृष्टिरीशस्येत्यर्थः । वैषम्येति । कस्यचिदुत्तमं, कस्यचिन्मध्यमं, कस्यचिदधममैश्वर्यं विदधातीति वैषम्यम्, दुःखं संहारं च जनयतीति नैर्घृण्यं च स्यादीशस्येति चेन्न? पुण्यापुण्ये सहकारिणी अपेक्ष्य तथा करणादित्यर्थः । तेजोऽत इति । अतो वायोरेव तेजो जायते, हि यस्माद्वायोरग्निरिति श्रुतिस्तथा आह । विपर्ययेणेति । अतः पूर्वोक्तात्सृष्टिक्रमाद्विपर्ययेण विपरीततयैव लयस्य क्रमः । दृश्यते हि लोके घटादेर्मृदादौ लयः, तस्मात्कार्यस्य कारणे लय इत्यर्थः । तत्तद्विरोधशङ्केति । तत्तद्विरोधघटितपूर्वपक्षेत्यर्थः । ब्रह्मणो लक्षणासंभवो विरुद्ध इति जन्मादिसूत्रे पूर्वपक्षो न युक्तः; लक्षणस्य कल्पितत्वेन तदसम्भवस्याविरुद्धत्वात् । (एवमीक्षतिसूत्रे

**प्रपञ्चस्य कल्पितस्यापि व्यावहारिकसत्त्वाभ्युपगमेन तद्दशायां विरोधशङ्कातत्परिहारयोरुचितत्वात्, इन्द्रजालादावध्यस्तेऽप्यैन्द्रजालिकादेरीक्षापूर्वकं स्रष्टृत्वादेर्दर्शनाच्च । यथा च कल्पितस्यापि जन्माद्युपपत्तिस्तथाऽनिर्वचनीयवादे वक्ष्यते । स्वप्नेऽपि सृष्ट्यादेः श्रुत्या प्रतिपादनाच्च । अध्यस्तस्यापि सर्पस्य भयकम्पादिजनकत्ववत् वाय्वादीनां तेजआदिजनकत्वमप्युपपन्नम् । 'तदभिध्यानादेव तु तल्लिङ्गात्स' इति सूत्रे च तत्तद्भावापन्नस्य ब्रह्मण एव कारणत्वाभिधानात् । अबादौ पृथिव्यादिलयोक्तिरपि तत्तद्भावापन्नचैतन्ये व्याख्येयेति नाधिष्ठानातिरिक्ते लयोक्तिः ।**

पूर्वपक्षो न युक्तः ; लक्षणस्य कल्पितत्वेन तदसम्भवस्याविरुद्धत्वात्[1]) **एवमीक्षतिसूत्रे** परिणामित्वादिना प्रधानमेव कारणत्वादिमन्न ब्रह्मेति लोकवदित्यादिसूत्रे प्रयोजनमननुसन्धाय न स्रष्टृतेति कारणत्वादिस्रष्टृत्वविरोधपूर्वपक्षः **वैषम्येत्यादिसूत्रेष्वपि** तत्तद्विरोधेन पूर्वपक्षो न सम्भवति ; **कल्पिते** विरोधासम्भवादिति भावः । **व्यावहारिकसत्त्वेति** । व्यवहारकालाबाध्यत्वेत्यर्थः । **ननु**—तथापि कल्पिते ईक्षापूर्वकसृष्ट्यादि न युक्तम् ; स्वप्नसृष्ट्यर्थमीक्षणादर्शनात्, सदन्यस्य च प्रपञ्चस्य जन्मादि वाय्वादेस्तेजआदिहेतुत्वं च न युक्तम् ; शशविषाणादौ तददर्शनात्, कल्पितस्य कल्पितान्तरलयाधारत्वं च न युक्तम् ; अधिष्ठान एव कल्पितस्य लयदर्शनादित्यत आह— **इन्द्रेत्यादि** । परमसमाधानमाह—**तदभिध्यानादिति** । स ईश एव तत्तत्कार्यमभिध्यायन्नाकाशादिभावापन्नः सन् सृजति, अचेतनस्य कारणत्वासंभवात्केवलाकाशादेः कारणत्वाभावात्, "य आकाशे तिष्ठन्नाकाशमन्तरो यमयति, सोऽकामयत बहु स्यामि' ति प्रस्तुत्य 'सच्च

[1] अयं कुण्डलितः पाठः क्वचिन्न दृश्यते.

**वैषम्यनैर्घृण्यप्रयोजनादिशङ्कापरिहारादिकं तूपासनावस्थायाम् ।**

---

त्यच्चाभवत्, तदात्मानं स्वयमकुरुत' त्यादि श्रुतिलिङ्गात् । अत एव 'तत्तेज ऐक्षत, ता आप ऐक्षन्ते' ति ईशावेशादचेतनस्येक्षितृत्वम् । व्यवहारदशामाश्रित्य वैषम्यादिशङ्कातत्परिहाराविति समाधानं सूत्रारूढतया भाष्यादावुक्तमित्याशयेनाह—**वैषम्यनैर्घृण्यप्रयोजनादीत्यादि । उपासनावस्थायामिति ।** कर्मावस्थायामित्यपि बोध्यम् । उक्तं हि शारीरकसंक्षेपे—

आरम्भसंहतिविकारविवर्तवादा
नाश्रित्य वादिजनता खलु वावदीति ।
आरम्भसंहतिमते परिहृत्य वादौ
द्वावत्र सङ्गृहपदं नमते[1] मुनीन्द्रः ॥
तत्रापि पूर्वमुपगम्य विकारवादं
भोक्त्रादिसूत्रमवतार्य विरोधनुत्यै ।
प्रावर्तत व्यवहृतेः परिरक्षणाय
कर्मादिगोचरविधावुपयोगहेतोः ॥
विवर्तवादस्य हि पूर्वभूमि-
र्वेदान्तवादे परिणामवादः ।
व्यवस्थितेऽस्मिन् परिणामवादे,
स्वयं समायाति विवर्तवादः ॥
अभेदिनः सावयवस्य सत्य-
विचित्ररूपान्तरदर्शकत्वम् ।
वदन्ति धीराः परिणाममस्या
वसुंधराया इव सस्यसृष्टिम् ॥

---

[1] नपते-ग तपते क.

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदित्यापाततः परिणामवादाभ्युपगमेन, 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति तु विवर्तवादे**

---

अभेदिनो निर्विकृतेर्विवर्तो
मृषास्वरूपान्तरदर्शकत्वम् ॥

इत्यादि। **यदोपासनायां नियुज्यते पुरुषस्तदा न मिथ्यात्वनिश्चयस्तस्य।** विधिषु श्राद्धस्यैवाधिकारित्वादिति भावः। **भोक्त्रापत्तेरिति।** भोग्यजातस्य भोक्तृभावापत्तिः; भोक्त्रभिन्नब्रह्माभिन्नत्वात्, एवं भोक्तुरपि भोग्यभावापत्तिर्भोग्याभिन्नब्रह्माभिन्नत्वात्, अतो भोक्तृभोग्यविभागो न स्यादिति—चेन्न; यतो लोके समुद्राभिन्नत्वेऽपि तरङ्गफेनादीनां यथा मिथो नाभेदः, तथा कारणीभूतब्रह्माभेदेऽपि भोक्तृभोग्ययोर्न स इति सूत्रार्थः। **अभ्युपगमेनेति।** उक्तं हि तदनन्यत्वमित्यादिसूत्रे भाष्ये-अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहार उक्तो न त्वयं विभागः **परमार्थतोऽस्तीति।** भामत्यामप्युक्तम्—इमां शंकामापाततो लोकसिद्धदृष्टान्तेन निराकरोति सूत्रकारः' "स्याल्लोकवदिति"। परिहाररहस्यमाह—**तदनन्यत्वमित्यादीति।** विस्तरेण चायमर्थः—

भोक्त्रादिसूत्रे परिणामवाद-
माश्रित्य तद्वादिभिरुक्तदोषम्।
समादधानो मुनिराह तस्मा-
त्सिद्धान्तसिद्धिं पुनरुत्तरत्र ॥

प्रत्यासन्ना परिणतिरियं विप्रकृष्टस्तु पूर्वः
संघातादिः सकल उदितो वेदसिद्धान्तापिद्धः।
एतावत्वादियमभिमता सूत्रकारस्य भाति
भ्रान्तिस्पष्टस्फुटनिजमनःकौशलानां नराणाम् ॥

**परमसिद्धान्तदशायां न शङ्का न चोत्तरम्; मायाविन इवेश्वरस्य स्वप्रतिबिम्बभूतजीवभ्रमयितृत्वेन सर्वविरोधनिरासोपपत्तेः। नन्वी-**

इत्यादि शारीरकसंक्षेपादौ विवेचितः। तदनन्यत्वमित्यादि। तस्य ब्रह्मणोऽनन्यत्वं नास्त्यन्यत्वस्वभिन्नं यत्र तत्वं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्यादि श्रुतिभ्यः। **आदिना** दृग्दृश्यसंबन्धानुपपत्त्यादिप्रपञ्चसत्यताखण्डनयुक्तिभ्यः। **स्वप्रतिबिम्बे-त्यादि**। यतो जीवः स्वप्रतिबिम्बमतस्तद्भ्रमयितृत्वमीशस्येत्यर्थः। **विरोधनिरासेति**। कल्पितसृष्टौ न वैषम्यादि; जीवानामीशाधीन-सुखाद्युत्कर्षापकर्षभ्रमेण तदसंभवात्। नहि मायाविनः स्वमायानिर्मिते-नोत्कृष्टापकृष्ट मनुष्यादियुक्तनगरेण वैषम्यादिकं रागद्वेषादिरूपं संभवतीति। विवर्तवादालम्बने वैषम्यादिकमीशे विरुद्धमिति विरोधशङ्का न सम्भवतीति भावः। **मायाविन इवेति**। यथा मायाविनः उत्कर्षापकर्ष-विशिष्टेन्द्रजालादेर्निर्मातृत्वे संहर्तृत्वे वा न वैषम्यनैर्घृण्ये तथेशस्याप्युत्कृ-ष्टापकृष्टभ्रमघटितसृष्टिसंहारयोर्न ते इत्यर्थः। भ्रान्तानां जीवानां भ्रमयितुरीशस्य च मिथ्यात्वं ज्ञापयितुमाह—**स्वप्रतिबिम्बेति**। तथा चाविद्याप्रयुक्तबिम्बप्रतिबिम्बभावयोरेशिजवियोर्मिथ्यात्वात्सुतरां न विरो-धशङ्का। न हि स्वप्ने कस्य चित्कुत्र चित्पुरुषे वैषम्यादि यद्दृश्यते तत्र विरोधः प्रबोधकाले शङ्क्यते इति भावः। **विरोधनिरासेति**। वैष म्यादिप्रयुक्तविरोधशङ्काविरहेत्यर्थः। **उक्तविरहे भ्रमयितृत्वेनेति** तृती-यार्थस्य ज्ञाप्यत्वस्यान्वयः। यत्तु परिणामवादाभ्युपगमेन शङ्कापरिहारौ न युक्तौ; वस्तुगत्या त्वत्सिद्धान्ते तद्वादानभ्युपगमादिति, तन्न; परिणामवादस्यानादिभ्रान्तिसिद्धत्वेन शिष्यबुद्ध्यारूढत्वेन प्रथमं तद्वाद-माश्रित्यैव समाधानौचित्यादन्यथा शिष्यव्याकुलतापत्तेः। तद्वादाभ्युप-गमेनापि समाधानसम्भवे तदनुक्तौ न्यूनतापत्तेश्च। अत्र भ्रामयितृत्वेति

**श्वरस्यापि सपरिकरस्य जीवेनाध्यस्तत्वात्कथं भ्रमयितृत्वम्, न; अविद्योपहितचित एवानादेरीश्वरत्वेनान्तःकरणोपहितजीवकल्पितत्वायोगात्, जीवकल्पितत्वपक्षेऽपि तादृग्धर्मविशिष्टतयैव कल्प-**

---

परग्रन्थे प्रयुक्तं तदसाध्विति ज्ञापयितुमाचार्यैर्भ्रमयितृत्वेत्युक्तम्। न च—"मितां ह्रस्व" इति सूत्रे "वा चित्तविराग" इत्यतो वेत्यनुवृत्तेस्तदपि साध्विति—वाच्यम्; लोके तथा प्रयोगाभावात्। संक्रामयतीत्यादिकं क्रम एव स्वार्थिकतद्धितान्तत्वेन क्रामस्तस्मान्नाम्नो णिजन्तादुपपद्यते। भ्रामयन् सर्वभूतानीत्यादावपि तथैव छान्दसाद्वोपपत्तिः। उन्नामयतीत्यादावपि नामणिजन्तत्वेनोपपत्तिः। अत एव "केचिदत्र वेत्यनुवर्तयन्ति, सा च व्यवस्थितविभाषा, तेनान्यत्र [1]सङ्क्रामयेत्यादि सिद्धमिति" काशिकावाक्ये केचिदित्यस्वारस्यं सूचितम्। सङ्क्रामयेत्यादावेव व्यवस्थितविभाषाया दीर्घत्वमिति चोक्तम्। जीवेनेति। मनोऽवच्छिन्नेनेत्यर्थः। मनोध्यासपूर्वमीश्वरो न जीवकल्पितः; तत्कल्पितत्वस्य तदीयाधिष्ठानधीसाध्यत्वात्, तादृशधियश्च देहेन्द्रियादिसाध्यत्वात्, मनोध्यासोत्तरमपि न स तत्कल्पितः; मनोभ्रमस्यापीश्वराधीनत्वादित्यभिमानः। वस्तुतस्तु—भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षाविरहस्योक्तत्वात्, नित्यपरोक्षस्येशस्य संस्कारादेरिव जीवीयाधिष्ठानज्ञानेनोत्पत्तिसम्भवात्, स्वेतरसर्वभ्रमे ईशस्य हेतुत्वसम्भवात्, मनोध्यास पूर्वमीशस्य कल्पनं सम्भवत्येव, तथापि जन्यभ्रममात्रस्येशाधीनत्वं सकारणम्। कारणं तु "ध्येयं नारायणात्सर्वमत[2]स्सर्वं प्रवर्तते। मयाध्यक्षेण प्रकृतिः सूयते सचराचरमि"त्यादिश्रुतिस्मृतिसिद्धं व्यवस्थापयितुमाह—**नाविद्योपहितचित इति।** **जीवकल्पितत्वपक्ष इति।** ईश्वरादिसर्वं कार्यं जीवकल्पितं प्रातिभासिकमिति दृष्टिसृष्टिपक्ष इत्यर्थः। तत्तद्धर्मेति।

[1] संक्रामयतीत्या—ग. [2] मत्तः—ख.

नेन तस्य भ्रमयितृत्वाद्युपपत्तेः 'परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मालिनमि' ति न्यायात्। ननु—जीवानां वाय्वादिभ्योऽन्यथाद्युत्पत्तिरिति भ्रमोऽस्ति, यः स्वाप्नभ्रम इव श्रुतेरालम्बनं स्यात्, न च भ्रान्तिं विना कल्पितमास्ति; न चैतद्वाक्यजभ्रान्तिकल्पितमेव एतद्वाक्यालम्बनम्; वेदस्य भ्रमजनकत्वप्रसङ्गात्, अनुवादे तु न दोषः, न चेश्वर एव तत्तत्कल्पकः तस्य भ्रान्तत्वप्रसङ्गात्, तदभ्युपगमेऽपि न निस्तारः; भ्रान्तेर्देहेन्द्रियादिकार्यत्वात्तेषां च पृथिव्यादिकार्यत्वात्पृथिव्याद्युत्पत्तेः प्राक् भ्रान्त्ययोगादिति—चेन्न; भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षायाः प्रागेव निरासात्, ईश्वराध्यस्तवाय्वादिहेतुकान्यथाद्युत्पत्त्यालम्बनत्वेन वेदस्य भ्रमाजनकत्वात्, अध्यस्तस्य चाध्यस्तत्वेन स्फुरणान्न मायाविन इव ईश्वरस्य भ्रान्तत्वप्रसङ्गः।

सर्वकार्यहेतुत्वेश्वरत्वादीत्यर्थः। न्यायादिति। यथा प्रातीतिकत्वाविशेषेऽपि सर्पो मरणहेतुभयविशेषोत्पत्तिद्वारा न तु नभोमालिन्यं तथा स्वभिन्नत्वादिना परोक्षतया कल्पित ईश एव स्वोत्तरसर्वसंसारभ्रमे हेतुर्नियन्तृत्वादिमान्नान्य इत्यर्थः। भ्रमाजनकत्वादिति। वस्तुतः स्वाप्नसृष्टिबोधकश्रुतेरिवाकाशाद्वायुरित्यादिश्रुतेरप्युत्तरोत्तरस्याः पूर्वपूर्वकल्पसिद्धजविभ्रमानुवादत्वसम्भवात्। तादृशभ्रमपरम्परायाश्चानाद्यविद्यादिसिद्धत्वान्नानुपपत्तिः। किञ्चानुवादे तु न दोष इति कथमुक्तम्? अनुवादाभावेऽपि श्रुतेरद्वैततात्पर्यकत्वेन भ्रमजनकत्वस्यादोषत्वसम्भवात्, मानान्तरकृतबाधासम्भवेन श्रुत्या तादृशभ्रमजननसम्भवात्, तादृशभ्रमस्य तत्वतो भ्रमत्वेऽपि व्यावहारिकप्रमात्वाच्चेति ध्येयम्॥

भ्रान्तत्वप्रसङ्ग इति। निश्चयस्याप्रामाण्यधीशून्यस्यैव बाधि

न चाध्यस्तत्वे उत्पत्त्याद्यनुपपत्तिः; अनध्यस्तस्य क्वाप्युत्पत्त्याद्यदर्शनेनाध्यस्तत्वस्यैव तदुपपादकत्वात्, सत्कार्यवादासत्कार्यवादनिषेधेनानिर्वचनीयकार्यवादमात्रे कार्यकारणभावपर्यवसानात्। तदेवं कृत्स्नस्य प्रपञ्चस्याद्वये ब्रह्मणि कल्पनोपपत्तेर्न प्रतिकूलतर्कपराहतिः॥

इत्यद्वैतसिद्धौ ब्रह्मणि प्रपञ्चकल्पनोपपादनेन
प्रतिकूलतर्कनिराकरणम्॥

तद्विषयकज्ञानस्य भ्रमपदार्थत्वादीश्वरीयप्रपञ्चज्ञाने च निश्चयत्वस्य बाधितविषयकत्वेनेश्वरेण ज्ञातत्वस्य च सत्वान्न भ्रमपदार्थत्वमिति भावः। सत्कार्यवादासत्कार्यवादनिषेधेनेति। उत्पत्तेः पूर्वं कार्यस्य सत्वे कारणव्यापारवैयर्थ्यमभिव्यक्त्यर्थत्वे सैवासतीति कार्यमेवासदास्ताम्, असत्वे चोत्पत्तिपूर्वकालस्य कार्यासम्बन्धित्वेनावच्छेदकत्वासम्भवात्कालानवच्छिन्नासत्वस्य सत्वविरुद्धस्यापत्तिः। अत उत्पत्त्यादिकं प्रतीयमानं विचारासहत्वादनिर्वाच्यमित्यनिर्वाच्यवाद एव पर्यवसानम्। उक्तं हि–

का तदस्तु गतिस्तत्तत्प्रतीतिव्यवहारयोः।
उपपादयितुं तैस्तैर्मतैराशंक[1]नीययोः।
अनिर्वक्तव्यतावादपादसेवागतिस्तयोरिति।
तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
मिथ्यानुमितौ ध्वान्तभङ्गो दुस्तर्कभञ्जनः।

इति प्रतिकूलतर्कनिराकरणम्.

[1] रशक–क. ख.

# अथ मिथ्यात्वश्रुत्युपपत्तिः

एतदनुमानमेकमेवाद्वितीयमित्यादिश्रुतिरप्यनुगृह्णाति । ननु—श्रुत्या स्वस्वरूपस्वप्रामाण्यस्वयोग्यतादेर्मिथ्यात्वाबोधनेन प्रत्यक्षादिसिद्धतत्सत्त्वोपजीवनेन च ब्रह्मेतरसकलमिथ्यात्वासिद्धिः, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये' ति न्यायेन प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धिश्च, योग्यतादिमिथ्यात्वबोधने च श्रुत्यर्थस्यातात्त्विकत्वापत्तिः; शाब्दबोधस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वानियमात्, न च—सदर्थस्वाप्नदेवतावाक्ये व्यभिचारः; आप्तत्वापौरुषेत्वायोगेन तस्य शब्दत्वेन प्रामाण्यायोगात्, किं तूपश्रुतिवत्तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणमिति—चेन्न; निर्दोषशब्दत्वेन तस्य शब्दविधयैव प्रामाण्यसंभवात्, आप्तत्वापौरुषेयत्वयोर्दोषाभाव एवोपक्षयात् व्याप्त्याद्युपस्थितिकल्पने गौरवात्, वक्तुः कल्पि-

---

## अथ मिथ्यात्वश्रुत्युपपत्तिः

योग्यतादीति । बाधाभावरूपयोग्यतायास्तत्त्वविशिष्टरूपेण मिथ्यात्वबोधकशक्तिरूपा शब्दनिष्ठा वा सेति भावः । आदिनाऽऽकाङ्क्षादेर्ग्रहणम् । आप्तेति । वाक्यार्थप्रमावदुक्तेत्यर्थः । प्रामाण्यायोगादिति । तथाच प्रमाणशब्दबोध्यत्वेन स्वबोधकशब्दादिसमसत्ताकत्वं साध्यमिति भावः । उपश्रुतिवदिति । एतत्कर्तव्यं न वेति सन्दिहानेन श्रूयमाणस्यान्यकार्यत्वपरस्यावश्यमेतत्कार्यमित्यस्यान्यं प्रत्यन्येनोक्तस्य वाक्यस्योपश्रुतित्वम् । तस्य सन्दिग्धप्रकृतकार्यकर्तव्यतायां शब्दतया यथा न प्रामाण्यम्; अतत्परत्वादाप्तत्वाद्यभावाच्च किंत्वनुमापकतयाग्रमेन तथा बोधनात्, तथोक्तवाक्यस्य सदर्थ इत्यर्थः ।

तत्वेऽपि तद्गतदोषस्यार्थसंवादेन कल्पयितुमशक्यत्वाच्च। तथाच शब्दसमसत्ताकत्वस्य व्यभिचारात् योग्यतादिसमसत्ताकत्व-नियमसिद्धेरप्रयोजकत्वाच्च परोक्षत्वानित्यत्वाद्युपाधिसंभवाच्च श्रुत्या योग्यतादिसकलमिथ्यात्वबोधनेऽपि तदर्थस्य न मिथ्या-

---

**शब्दसमसत्ताकत्वस्य** स्वबोधकशब्दसमसत्ताकत्वस्य। **व्यभिचारात्** प्रमाणशब्दबोध्यत्वं प्रत्यव्यापकत्वात्। **नियमसिद्धेः** व्याप्तिज्ञानस्य। **अप्रयोजकत्वात्** निश्चायकतर्का[1]भावेन सन्देहरूपत्वेनानुमित्यनुपधायकत्वात्। **परोक्षत्वेति**। यथाश्रुतं घटादौ साध्याव्यापकमतः साक्षिस्वरूपान्यत्वरूपं परोक्षत्वं बोध्यम्। न च पक्षेतरत्वतुल्यतेति—वाच्यम्; उक्तोपाधिर्यदि साध्यव्यापकं न स्यात्तदा साक्षिणः स्वबोधकयोग्यतादिसमसत्ताकत्वं स्यात्, तथाच तस्य बाध्यत्वं निःसाक्षिकं स्यादिति तर्केण व्यापकतानिश्चयाद्बाधोन्नीतपक्षेतरत्वतुल्यत्वात्। आत्म-गुरुत्वान्यतरत्वाद्यवच्छिन्नसाध्यव्यापकं यथाश्रुतं वा परोक्षत्वम्। **अनित्यत्वेति**। नाशित्वेत्यर्थः। "अतोन्यदार्तमि"त्यादि श्रुत्या "यावद्विकारं तु विभागो लोकवदि"ति न्यायेन च गगनादेरपि नाशित्वान्न साध्याव्यापकत्वम्। यत्तु—शब्दप्रामाण्यासाधारणप्रयोजकवत्वं प्रकृते प्रमाण-शब्दत्वम्, तच्च न विषयाबाधमात्रम्; तस्य प्रामाण्यमात्रे प्रयोजकत्वात्, शुकादिवाक्यसाधारण्याच्च, किंतु वाक्यार्थप्रमात्वबोधविषयादिमदुक्तत्व-मिति न स्वाप्तवाक्यार्थे व्यभिचार इति—**तत्तुच्छम्**; प्रमासामान्य इव प्रमाविशेषेऽपि विषयाबाधस्यैव लाघवेन हेतुत्वौचित्यात्। शुकादि-वाक्ये प्रमापकत्वस्येष्टत्वात्। सन्निपातेत्यादेः सन्निपातः संबन्धः स लक्षणं निमित्तं यस्य तादृशो विधिस्तद्विघातस्य स्वानिमित्तभूतसन्निपात-विघातस्य निमित्तं नेत्यर्थः। तथाच यथा शतानीत्यादौ शि सन्निपातं

[1] तर्क--ख.

त्वम्; मिथ्यात्वप्रयोजकरूपाभावात्। महाभाष्योक्तन्यायोदाहरणमपि न युक्तम्; विषयवैषम्यात्। तथाहि—शतानि सहस्राणीत्यत्र सर्वनामस्थानसंज्ञकशिसन्निपातेन विहितो नुम् "ष्णान्ता षडि" ति षट्संज्ञाद्वारा "षड्भ्यो लुगि" ति शिस्वरूपसर्वनामस्थानस्य पञ्चेत्यादाविव लुङ्निमित्तं न भवति; तत्सान्निपातेनैव विहितत्वात्, तत्सद्भावनियमेनैव विहितत्वादित्यर्थः। अलुप्त-

---

निमित्तीकृत्य प्रवर्तमानो नुम्विधिर्नान्तत्वद्वारकषट्संज्ञया शिलोपेन तद्विघातस्य न निमित्तम्, तथा मिथ्यात्वधर्मिग्राहकप्रत्यक्षादिप्रामाण्यसन्निपातं निमित्तीकृत्य प्रवर्तमाना विश्वमिथ्यात्वविधायकश्रुतिर्नोक्तसन्निपातविघातस्य निमित्तमित्याशयेन सन्निपातेत्याद्युक्तम्। तदयुक्तम्; दृष्टान्ते शिसद्भावरूपसम्बन्धस्य निमित्तस्य विघातासम्भवेऽपि दार्ष्टान्तिके तात्त्विकप्रामाण्यसम्बन्धस्यातादृशस्य विघातसम्भवात्। व्यावहारिकप्रामाण्यसम्बन्धस्य तादृशत्वेऽपि तदविघातादित्याभिप्रेत्याह—महाभाष्येत्यादि। सर्वनामस्थानसंज्ञकेति। "शि सर्वनामस्थानमि"त्यनेन विहितोक्तसंज्ञकेत्यर्थः। विहित इति। सर्वनामस्थाने इत्यनुवृत्तौ "नपुंसकस्य झलच" इत्यनेन विहित इत्यर्थः। विहितत्वादिति। न चोपदेशकाले यत् ष्णान्तं तस्यैव षट्संज्ञा[1] विधीयते, अन्यथा येन विधिस्तदन्तस्य ग्रहणमित्यनेनैवान्तलाभादन्तग्रहणं[2] व्यर्थं स्यात्, तथाच शतानीत्यादौ सा न प्रसक्तेति—वाच्यम्; अन्तग्रहणे[3] संख्याया इत्यस्यानुवृत्तौ मानाभावाद्द्विप्रुषयमान इत्यादावपि षट्संज्ञास्यादन्ते गृहीते तु स्त्रीलिङ्गनिर्देशाऽन्यथानुपपत्त्या सङ्ख्यानुवृत्तिः। तथाच तत्रैवार्थापत्तिरूपक्षयात्स्वभावनान्तत्वाक्षेपाभावात्सन्निपातेत्यादि न्यायेनैव स्वभावनान्त-

---

[1] संज्ञा—ग. [2] येन विधिस्तदन्तस्येत्यन्तग्रहणासद्भावन्तग्रहणमिति स्यात्. [3] तादृग्ग्रहणे—ग.

स्यैव सर्वनामस्थानस्य नुम्निमित्तत्वात्, न "लुमताङ्गस्ये" ति लुमता लुप्तेऽङ्गकार्यनिषेधात्। तथाचालुप्तप्रत्ययत्वेन यत्र निमित्तता तत्र सन्निपातलक्षणन्यायावतारः, यत्र तु "प्रत्ययलोपे प्रत्ययलक्षणमि" ति न्यायेन लुप्तेऽपि प्रत्यये कार्यं भवति, तत्रालुप्तत्वविशेषणनैरपेक्ष्येण प्रत्ययत्वमात्रेणैव निमित्तत्त्वान्न सन्निपातलक्षणन्यायावतारः; प्रत्ययसद्भावस्य तत्रानुपजीव्यत्वात्। एवं स्थिते यद्यमिथ्याभूतत्वेन प्रत्यक्षादेर्निमित्तता स्यात्तदा प्रत्ययस्यालुप्तत्वेन निमित्ततायामिव भवेदेतन्न्यायावतारः। प्रत्यक्षादेस्तु स्वरूपेणैव निमित्तता स्वग्राह्यस्याप्यर्थक्रियाकारित्वदर्शनेन प्रागेवोपपादिता। अतो यद्बाध्यते तात्त्विकत्वं तन्नोपजीव्यम्; यच्चोपजीव्यमर्थक्रियासामर्थ्यलक्षणव्यावहारिकप्रामाण्यं तच्च न

त्यागसम्भवेन स्वभावनान्तत्वाक्षेपवैय्यर्थ्याच्च। लुमतेति। [1]लुशब्दयुक्तेन [2]लुक्श्लुलुपित्येषामन्यतमेनेत्यर्थः। अङ्गस्य "यस्मात्प्रत्ययाविधिस्तदङ्गमि"त्यनेन[3] विहिताङ्गसंज्ञाकस्य प्रकृतेरिति यावत्। लुप्ते विहितलोपयोग्ये। तेन लोपात्पूर्वमपि नाङ्गकार्यमिति ध्येयम्। लुप्तेऽपीति। अग्निचिदित्यादौ लुप्तेऽपि क्विबादौ लुगादि[4]कार्यमित्यर्थः। यद्यपि 'स्थानिवदादेश' इत्यादिनैव लुप्तप्रत्ययस्य निमित्तता, 'प्रत्ययलोप इत्यादिकं तु प्रत्ययमात्रनिमित्तकमेव कार्यं प्रत्ययलोप इति नियमार्थम्। तेन बोभवीतीत्यादौ लुप्तप्रत्ययमात्रनिमित्तकयङो[5] ङित्वेऽपि नात्मनेपदमित्यादि वैय्याकरणैरुक्तम्, तथापि नियमबोधकवाक्येन नियम्यप्रापकं[6] स्थानीत्याद्येवाभिप्रेतमिति न दोषः। अर्थक्रियासामर्थ्येति। प्रवृत्त्यादिकार्ये सामर्थ्येत्यर्थः। व्यावहारिकेति। व्यवहारकालाबाध्यविषयकत्व-

[1] लुवर्णयुक्तेन—ग. [2] लुक् श्लुलुबित्ये. इति भवितुमुचितम्. [3] यस्मात्प्रत्ययविधिस्तदादीत्यनेन. इति स्यात्। [4] तुगादि—क. ख. [5] लुप्तयङो—ख. [6] नियम्याप्रापकम्—क. ख.

बाध्यत इति किं केन सङ्गतम्? तदुक्तं टीकाकृद्भिः—"उत्पा-

रूपेत्यर्थः । न बाध्यत इति । विचारकाले प्रपञ्चस्यं बाधेऽपि व्यवहार-कालाबाध्यत्वं न विहन्यत इत्यर्थः ॥

वस्तुतस्तु तात्त्विकत्वेन प्रत्यक्षादेर्निमित्तत्वेऽपि न प्रकृते उक्त-न्यायावतारः; सामान्यविषयकोक्तन्यायस्य विशेषविषयकेनाद्वैतश्रुति-तात्पर्यान्यथानुपपत्त्यादिना 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्या-दिन्यायेन, 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि' त्यादिस्मृत्या च बाधसम्भवात् । अतएव महाभाष्ये नदि ब्राह्मणीत्यादौ तन्न्यायान-वतारात् तन्न्यायानादरमाशङ्क्य तन्न्याय आवश्यको दोषेषु तु प्रति-विधातव्यमित्युक्तम् । तत्र च 'एङ्ह्रस्वात्सम्बुद्धेः' इति सूत्रे गुणा-दित्यकृत्वा एङ्ह्रस्वादिति करणं ज्ञापयति, यदेतदन्यविषय एवोक्त-न्यायावतारः, यदि हि नदि ब्राह्मणीत्यादौ सन्निपातन्यायेन सम्बुद्धि-लोपबाधः, तदा गुणात्सम्बुद्धेरित्येव सूत्रं क्रियेत, एकार, ओकार, अकाररूपाद्गुणात्सम्बुद्धिलोपसम्भवात् । [1] न हि ब्राह्मणीत्यादाविकारा-दिरूपाद्ध्रस्वात्सम्बुद्धिलोपस्योक्तन्यायबाध्यत्वस्वीकारात् । एवं 'हलि-सवर्णोम्' 'कष्टाय क्रमणे' इत्यादि सूत्राण्यपि तन्न्यायाप्रवृत्तिज्ञापका-नीत्यर्थ इति कैय्यटः । तथा चोक्तसूत्रान्यथानुपपत्तिरिव विशेषविषय-कन्यायान्तरमप्युक्तन्यायं बाधत एव । किंचोपजीवकं नोपजीव्यविघा-तमित्येवोक्तन्यायः, तस्य च बाधः स्फुट एव । लोके उपजीवकेन वन्ह्यादिना तृणादेर्विघातात् । अतएव अचि ह्रस्वश्च वा इत्यकृत्वा 'ङिति ह्रस्वश्च, वामि,'ति सूत्रद्वयकरणं सन्निपातेत्यादिपरिभाषाया ज्ञापकमिति कौस्तुभे उक्तम् । तन्न्यायस्य व्यभिचारित्वेऽपि पदनिष्प-त्त्यर्थं क्वचिदादर इति तत्र भावः । अन्यथा ज्ञापकानुसरणवैयर्थ्यात् ।

[1] नदि ब्राह्मणीति स्यात्.

दकाप्रतिद्वन्द्वित्वादि" ति । अतएव ज्योतिष्टोमादिविधेरुपजीव्याग्निविद्यावद्विषयत्वेनेव द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयत्वेन सङ्कोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषय-

---

तस्मात्कल्प्यमानेऽर्थे उपजीव्यविरोधो दोषः, कल्पनाया उपजीव्याविरोधेनैव प्रवृत्तेः । यथानुभवकारण[1]त्वमुपजीव्य संस्कारस्य कारणत्वेन कल्पनं नानुभवकारण[2]त्वं विहन्ति । यत्र तूपजीव्यविघातकत्वं मानान्तरेण क्लृप्तम्, यथा वन्ह्यादेस्तृणादिविघातकत्वं प्रत्यक्षेण, अद्वैतश्रुतेः प्रत्यक्षादिविघातकत्वमुक्तमानेन क्लृप्तम्, तत्र तन्न दोषः । तथा च 'न तौ पशाविति' शास्त्रस्य पशावाज्यभागप्रापकत्वेनोपजीव्यातिदेशं प्रति विघातकत्वेऽपि यथा सर्वथा न तत्र विघातकत्वम्, तथा प्रत्यक्षादेः सत्यत्वविघातिकाप्यद्वैतश्रुतिर्व्यावहारिकसत्यतां न विहन्तीति ध्येयम् ॥

विद्यावदिति । यथा ज्योतिष्टोमादिविधेः सामान्यतः स्वर्गकामाधिकारिकत्वेन श्रुतस्यापि वेदार्थविज्ञप्साग्निकविषयकत्वम्; अन्यथा तदर्थानुष्ठानासम्भवात्, आहवनीये जुहोतीत्यादिनाग्निविधानाद्विधेयार्थस्यानुष्ठाने [3]तेन ज्ञानहेतुत्वाच्च, तथाद्वैतश्रुतेर्योग्यताद्यन्यविषयकत्वम् । योग्यतादिमिथ्यात्वे स्वस्यैवाप्रामाण्यापत्तेः । शब्दार्थस्य योग्यतादिसमसत्ताकत्वनियमादित्यर्थः । षष्ठस्य प्रथमे स्थितम्—अग्निहोत्रादिवैदिककर्मसु चतुर्णामपि वर्णानामधिकारः शूद्रभिन्नानां वेति संशये, चातुर्वर्ण्यमविशेषात्' इति सूत्रे[4] विधिषु विशेषाश्रवणात् चतुर्णामिति पूर्वः पक्षः । अग्निहोत्रादीनामग्निविद्यापेक्षिणा[5]माधानोपनयनसिद्धयोरग्निविद्ययोर्लाभसम्भवे 'निषादस्थपतिं याजयेत्, इत्यादाविव शूद्रे तदाक्षेपे

---

[1] वादिकारण–ग. [2] नुभवस्य कारण–ग. [3] तज्ज्ञान–ग. [4] सूत्रम्–क.ख. [5] विद्यापेक्षाणा–क.

**त्वस्य वोपपत्तौ न तात्त्विकसर्वमिथ्यात्वपरत्वकल्पनं युक्तमित्यपास्तम्; दृष्टान्ते अग्निविद्यादेरिव दार्ष्टान्तिके योग्यतादेस्तात्त्विकस्यानुपजीव्यत्वात्। न हि योग्यता तात्त्विकयोग्यतात्वेन निमित्तम्, किंतु योग्यतात्वेनैव। सकलद्वैताभावस्याधिकरणस्वरूपत्वेन तदधिकरणस्य च ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत्सत्यं स आत्मा' इत्यादिश्रुत्या सत्यत्वप्रतिपादनान्न सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वोपपत्तिः। तस्माद्योग्यतादेर्मिथ्या-**

---

मानाभावादाधानोपनयनयोश्च' वसन्ते ब्राह्मणोऽग्नीनादधीत 'ग्रीष्मे राजन्यः, शरदि वैश्यः, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्' इति विहितयोरशूद्राणामेव सिद्धेस्तेषामेवाधिकारस्तेष्विति सिद्धान्तः। **तात्त्विकसर्वमिथ्यात्वेति**। तात्त्विको यः स्वसमानाधिकरणाभावस्तत्प्रतियोगित्वेत्यर्थः। अत एवेत्यस्यार्थं विवृणोति— **दृष्टान्त इति**। ननु—विधीनां स्वार्थसमसत्ताकाग्निविद्यापेक्षावद्द्वैतनिषेधश्रुतेरपि तादृशयोग्यतापेक्षास्तु; निषेधश्रुत्या च न तात्त्विकाभावो बोध्यते; 'परास्य शक्तिर्विविधे'ति श्रुत्या विचित्रप्रपञ्चकारणविचित्रशक्तिरूपस्य द्वैतस्य ब्रह्मरूपताबोधनेन तात्त्विकत्वात, द्वैतसामान्याभावस्य तात्त्विकत्वासम्भवादिति—चेत्; भ्रान्तोऽसि; विधीनामुक्तापेक्षा हि युक्ता, तदर्थस्यैवाग्नेरपि व्यावहारिकस्यैव विहितत्वात्तज्ज्ञानरूपविद्याया अपि तथात्वात्। वस्तुतस्तस्यामपि न नियमः; 'शाण्डिल्याय स्वप्नं निवेदयेत्, 'नेक्षेत वारिस्थमादित्यमित्यादौ स्वप्नवारिस्थादित्यादिज्ञानस्य वेदजन्यस्यापि भ्रमसमानविषयकत्वेन प्रातीतिकत्वात्, निषेधश्रुतेस्तु तात्त्विकार्थकत्वेऽपि तात्त्विकयोग्यतादिकत्वे मानाभाव इत्युक्तम्। ब्रह्मणोऽत्यन्ताभिन्ना तच्छक्तिश्चेत्तदा तत्तात्त्विकत्वं न द्वैतमिथ्यात्वे बाधकम्। अथ सा तद्भिन्ना, अन्यथा नानाविधत्व-

त्वेऽपि वेदान्तबोध्यं सत्यमेवेति स्थितम् । यथा चाविद्यातत्कार्यस्य स्वरूपतो निषेधेऽपि तुच्छवैलक्षण्यम्, पारमार्थिकत्वाकारेण निषेधे वा पारमार्थिकत्वधर्मशून्यस्यापि ब्रह्मणः स्वरूपेण सत्वम्, तथोपपादितमधस्तात् । ननु—तत्वमस्यादिवाक्येन प्रत्यक्षाद्यविरोधाय तत्वंपदलाक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तदविरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यम्; अन्यथा प्रत्यक्षाद्यनुग्रहाय व्यावहारिकमपि सत्वं न कल्प्येत । "नेह नाने" त्यादिनिषेधेनात्यन्तासत्वबोधनादिति—चेन्न; विशिष्टयोरैक्ये विशेषणयोरप्यैक्यापातेन सर्वत्र विशिष्टाभेदप-

---

व्याघातात्तदा मिथ्यैव दृग्दृश्यसम्बन्धानुपपत्त्यादित्युक्तेरुक्तत्वात्[1] । तस्मात्परास्येत्यादिश्रुतिः सृष्टिवाक्यवद्वैतश्रुतित्वाद्व्यावहारिकशक्तिबोधिका न तु ब्रह्मणि तदत्यन्ताभेदपरा । न च शब्दस्वरूपादेः शब्दार्थस्य च समसत्ताकत्वानियमत्यागे सति बाधकाभावादद्वैतश्रुत्यर्थतात्विकतासिद्धिः, तस्यां चोक्तनियमत्याग इत्यन्योन्याश्रय इति—वाच्यम्; अद्वैतश्रुत्यर्थतात्विकत्वसन्देहोपि तर्काभावेन व्यभिचारसन्देहादुक्तनियमानिश्चयात् ॥

ननु प्रपञ्चः स्वरूपेण निषिद्धस्तुच्छः स्यात्, पारमार्थिकत्वेन निषिद्धश्चेद्ब्रह्मापि तथास्तु, [2]अथ ब्रह्म तेन रूपेण मिथ्यैव स्वरूपेणैव सन्निर्धर्मकत्वात्तर्हि प्रपञ्चोऽपि[3] ब्रह्मवत्स्वरूपेण सन्नस्तु तत्राह—**यथा-चेति** । वैलक्षण्यं सत्वप्रतीत्यर्हत्वादिति शेषः । **ब्रह्मण इति** । एवकारः शेषः । एकेन ब्रह्मणा सता सर्वत्र सदाकारधीसम्भवात्; तदन्यस्य सद्रूपतायां मानाभाव इत्याद्युक्तमित्यर्थः । **विशिष्टाभेदपरेति** ।

[1] नुपपत्तेरित्युक्तत्वादिति स्यात्. [2] अथ तेन रूपेण ब्रह्मापि-ग. [3] पि तथास्तु तत्राह—यथाचेति-ग.

**रवाक्यस्य लक्षितविशेष्यैक्यपरत्वनियमेन तत्त्वमसीत्यत्रापि तथाभ्युपगमात्। तदुक्तम्—**

**"अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ॥**
**घटते न यदैकता तदा न तरां तद्विपरीतरूपयोः" ॥ इति।**

**मिथ्यात्वबोधकश्रुतौ तु नास्ति प्रत्यक्षादिविरोधः;**

विशिष्टद्वयोपस्थापकपदद्वयघटितेत्यर्थः। **लक्षितेत्यादि**। द्रव्यत्वघटत्वाद्युपहितयोरभेदपरत्वेऽपि लक्षणास्त्येव; विशिष्टान्वयस्यौत्सर्गिकत्वात्। परंतु विशिष्टान्वयाभावावश्यकत्वे उपहितलक्षणायां न मानम्। यत्र तु 'तेन घटेन जलमाहर' इत्यादावुपहितान्वये तात्पर्यम्, तत्र 'एकहायन्या पिङ्गाक्ष्या क्रीणाति' इत्यादाविव करणत्वे उपहितान्वयानुरोधादुपहितलक्षणास्तु। द्रव्यं घट इत्यादौ तु न तस्यां मानमिति तद्वदेव तत्त्वमसीत्यादावपि तात्पर्यानुरोधाद्विशेष्यस्वरूपयोरत्यन्ताभेदरूपव्यक्तिमात्रस्वरूपैक्यबोध इति भावः। **अविरुद्धेति**। द्रव्यत्वघटत्वादिरूपेत्यर्थः। **प्रभवत्वे** घटितत्वे। **एकता** अत्यन्ताभेदः॥

ननु—न वयमुपजीव्यविरोधं प्रकृते वदामः, किंतु प्रत्यक्षाद्यविरोधेनापि मिथ्यात्वश्रुत्युपपत्तौ तद्विरोधित्वं तस्या न युक्तमितीति—चेन्न; प्रत्यक्षस्येव मानान्तराणामप्यनुरोधे, मिथ्यात्वश्रुतेर्विषयालाभादतात्विकप्रामाण्यस्य प्रत्यक्षादाववश्यं वाच्यत्वात्। यत्तु-**प्रत्यक्षाद्यननुरोधे** तत्त्वमसीत्यादावपि विशेषणयोरैक्यपरत्वं स्यात्; तदनुरोधे तु मिथ्यात्वश्रुतावपि प्रत्यक्षाद्यसिद्धवस्तुमिथ्यात्वपरत्वं युक्तमिति, तन्न; नहि तत्त्वमसीत्यादिश्रुतेः प्रत्यक्षाद्यनुरोधेन विशेषणयोरैक्यपरत्वाभाव इति वदामः, किंतु सोऽयमित्यादिवाक्यस्य; तस्यास्तु तदनुरोधेऽपि व्यक्तिस्वरूपमात्रतात्पर्यग्राहकानुरोधेन सोऽयमित्यादाविवाखण्डार्थत्वा-

**तात्त्विकत्वांशस्यानुपजीव्यत्वात्, व्यावहारिकसत्त्वस्य चोपजीव्यत्वान्नात्यन्तासत्त्वकल्पनमित्यस्याप्युक्तप्रायत्वात् । ननु— श्रुतेस्तात्पर्यं चैतन्यमात्रे वा, द्वितीयाभावविशिष्टे वा, तदुपलक्षिते वा । नाद्यः; विश्वमिथ्यात्वासिद्धेरिष्टापत्तेः, तस्य स्वप्रकाशतया नित्यसिद्धत्वेन श्रुतिवैयर्थ्याच्च । न द्वितीयः; अखण्डार्थत्वहानात् । अतएव न तृतीयः; काकवदितिवद्द्वितीयाभाववदित्यनेनापि सप्रकारकज्ञानजननेनाखण्डार्थत्वायोगात्, चिन्मात्रस्य नित्यसिद्धत्वेन तदन्यस्य च मुमुक्ष्वज्ञेयत्वेन काकेन संस्थानविशेषस्येव द्वितीयाभावेनोपलक्ष्यस्यान्यस्याभावात्तस्योपलक्षणत्वायोगाच्चेति—चेन्न; काकस्य संस्थानविशेष इव द्वितीयाभावस्य स्वरूपमेवोपलक्ष्यमित्युपलक्ष्याभावनिबन्धनोप-**

---

ङ्गीकारात्[1] । मिथ्यात्वश्रुतौ तु 'नेह नानास्ति किंचन' 'नेति नेति' इत्यादौ सर्वनाम्ना सर्वमानोपस्थितानां हि निषेधतात्पर्यस्य स्फुटत्वादलीकनिषेधस्य प्राप्तत्वादप्रयोजनकत्वाच्च न प्रत्यक्षाद्यसिद्धालीकमिथ्यात्वपरत्वमिति विशेषात् ॥

ननु—श्रुतेः प्रत्यक्षाद्यननुरोधे विश्वस्य ख्यात्यन्यथानुपपत्त्य[2]-गम्यमसद्वैलक्षण्यमपि बाध्येतेत्यत्यन्तासत्त्वं स्यात्तत्राह—**व्यावहारिकसत्त्वस्येति । उक्तप्रायत्वादिति ।** यच्चोपजीव्यमित्यादिनेत्यादिः । व्यावहारिकत्वोपजीव्य[3]तोक्तया अत्यन्तासत्त्वं नेत्यर्थादुक्तमित्यर्थः ॥

**काकवदिति ।** यथा काकवन्तो देवदत्तगृहा इत्युक्ते उत्तृणत्वरूपोपलक्ष्यतावच्छेदकप्रकारेण बोधः, तथा द्वितीयाभाववदित्यनेनापि किंचिदुपलक्ष्यतावच्छेदकरूपेण स इति भावः । **संस्थानविशेषस्य**

---

1 कारः-ग. 2 ख्यात्यन्यथानुपपत्ति-क. ग. 3 व्यावहारिसत्त्वोपजीव्य-क. ग.

लक्षणत्वानुपपत्तेरभावात्। उपलक्षणत्वे ह्युपलक्ष्यसत्वमात्रं तन्त्रम्, न तु तस्य स्वरूपातिरिक्तत्वमपि; गौरवात्, उपलक्ष्यतावच्छेदकरूपाभावेऽपि स्वतोव्यावृत्तजातिवदुपलक्ष्यत्वसम्भवात्। अतएव न सप्रकारकत्वापत्तिः; काकवदित्यत्राप्युपलक्षणस्याप्रकारत्वात्, किंतु स्वरूपातिरिक्तधर्मस्य तत्रोपलक्षणत्वेन सप्रकारकत्वम्, इह तु तन्नेति वैषम्यम्। नचोपलक्षणवैयर्थ्यम्; अनर्थनिवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपज्ञानस्योद्देश्यत्वात्, तस्य प्रागसिद्धत्वात्। न च मिथ्यात्वासिद्ध्येष्टापत्तिः; अवान्तर-

---

उत्तृणत्वादेः। स्वतो व्यावृत्तेति। घट इत्यादिज्ञाने इतराविशेषिताखण्डरूपेण भातघटत्वादीत्यर्थः। उपलक्ष्यत्वसम्भवात् सद्वितीयात्मकत्वधीविरोधिविषयतासम्भवात्। तथाच व्यावृत्ताकारता हि द्वैधेत्यादिना द्वितीयाभाववत्त्वाद्युपस्थितिद्वारकस्य निष्प्रकारकज्ञानस्यापि सद्वितीयात्मकत्वादिधीविरोधित्वेन व्यवस्थापितत्वात्, प्रकृते अखण्डार्थकत्वमव्याहतमिति भावः। इह त्विति। स्वरूपनिर्विकल्पकस्यैव सद्वितीयात्मकत्वधीविरोधितया तज्जननद्वारा द्वितीयाभावज्ञानस्य सद्वितीयव्यावर्तकत्वस्य पर्यवसन्नत्वेनाद्वितीयत्वे उपलक्षणत्वस्य सम्भवादिति शेषः। अनर्थेति। सद्वितीयत्वज्ञानेत्यर्थः। द्वितीयाभावद्वारकेति। द्वितीयाभाववत्त्वेन ब्रह्मोपस्थितिद्वारकलक्षणाज्ञानाधीनेत्यर्थः। अवान्तरेति। उक्तं हि शारीरकसंक्षेपे—

सामानाधिकरण्यमत्र भवति प्राथम्यभागान्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवाः[1]।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके
वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः॥

1 भवात्-ग.

सामानाधिकरण्यमत्र पदयोर्ज्ञेयं तदीयार्थयोः
संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः ।
सम्बन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥ इति ॥

अत्र पदार्थानां विशिष्टानामभेदबोधोत्तरं विरोधस्फूर्त्या लक्षणाज्ञानेनाखण्डार्थबोधस्योक्तत्वादद्वितीयाभेदेन ब्रह्मणो बोधेऽवान्तरवाक्यतात्पर्यम्[1] । अथवाऽद्वितीयत्वेनाद्वितीयपदाद्ब्रह्मोपस्थितिर्लक्षणाज्ञानाऽपूर्वमवश्यमपेक्षिता । तथाचावान्तरवाक्यार्थानुभवरूपायां तस्यामेवावान्तरतात्पर्यस्वीकारेण ब्रह्माणि[2] द्वितीयाभावानुभवसम्भवेन मिथ्यात्वसिद्धिः । एतेन प्रथम[3]पदयोरेकार्थकत्वं समानविभक्तिकसाकांक्षत्वादिमत्पदयोर्भिन्नार्थत्वासम्भवादित्यधिकारिणानुसन्धीयते, पश्चात्तदर्थयोरत्यन्ताभेदः, अन्यथोक्तैकार्थ्यासम्भवादित्यनुसन्धीयते, पश्चाद्विरोधादिकमित्युक्तश्लोकयोरभिप्रेतार्थ इत्याचार्यैरपि व्याख्यानात् । तत्र पदार्थत्वेन शक्यलक्ष्यसाधारण्येन[4] पदार्थयोरभेद इति प्रतिसन्धानस्योक्तत्वादुक्तप्रतिसन्धानस्य तर्करूपत्वाच्च पदार्थतावच्छेदकरूपेण पदार्थयोरभेदप्रमायां कथमवान्तरतात्पर्योक्तिरित्यपास्तम्; सत्यज्ञानादिरूढपदार्थानां संसर्गप्रमायाः पूर्वमनङ्गीकारेऽप्यद्वितीयादियौगिकपदार्थप्रमाया आवश्यकत्वात्, अवान्तरवाक्यार्थबोधं विना महावाक्यार्थबोधासम्भवात् । अन्यथा ब्रह्मणि सद्वितीयत्वादिसंशयानिवृत्तावद्वितीयादिपदार्थधीपूर्वकवाक्यार्थबोधे संशयत्वस्यौचित्यावर्जितत्वेन निश्चयत्वासम्भवात्, तर्करूपाद्वितीयत्वज्ञानस्यानिश्चयत्वात्तत्तत्पदमुख्यार्थतावच्छेदकरूपेण निश्चयं विना तद्विशिष्टसम्बन्धरूपलक्षणा[5]ज्ञानासम्भवादुक्तप्रतिसन्धानस्यार्थापत्त्यादिरूपत्वसम्भ-

---

[1] न्तरतात्पर्यम्—क. ख. [2] णात्रह्मणि—क. [3] सिद्धिरेव । तेन प्रथमं—ग. [4] साधारणेन—क. ख. [5] लक्षण—ख.

तात्पर्यस्य तत्रापि सत्त्वात्, तद्द्वारैव स्वरूपचैतन्ये महातात्पर्यात्। अतएव श्रुतिबोध्यस्य विशेषणस्योपलक्षणस्य वा द्वितीयाभावस्य सत्वेऽद्वैतहानिः, असत्वे चादण्डे दण्डीति वाक्यवत् काकहीने काकवंदिति वाक्यवच्चाद्वैतवाक्यस्यातत्वावेदकत्वापत्तिरिति— निरस्तम्; आद्ये द्वितीयाभावसत्वेन द्वितीयाभावासिद्ध्यापादनस्यानुचितत्वात्, अभावस्याधिकरणातिरेकानभ्युपगमाच्च। द्वितीये तु सृष्ट्यादिवाक्यवदुपलक्ष्यस्वरूपसत्यत्वमादाय तत्वावेदकत्वात् मुख्यतात्पर्यविषयस्यासत्यतायामेवातत्त्वावेदकत्वाभ्युपगमात्। अतएव महातात्पर्याभिप्रायेण चैतन्यमात्रे तात्पर्यमित्याद्यपक्षेऽपि न दोषः; अवान्तरतात्पर्येण मिथ्यात्वसिद्धेरपि स्वीकारेणेष्टापत्तेरप्यसम्भवात्। ननु—द्वितीयाभावे महातात्पर्याभावः किं

---

वेन शाब्दत्वानङ्गीकारेऽपि क्षतिविरहाच्च, धूमोऽस्तीत्यादिवाक्यस्य वन्ह्यनुमिताविवाद्वितीयत्वादि[1]वाक्यस्योक्तार्थापत्त्यादौ तात्पर्यसम्भवाच्च, तदिदमुक्तम्—तद्द्वारैवेति। अद्वितीयत्वेन ब्रह्मधीरूपमिथ्यात्वासिद्धितात्पर्यद्वारैवेत्यर्थः। सत्वे तात्विकत्वे। द्वितीयाभावासिद्धीति। द्वितीयाभावरूपाद्वैतब्रह्महानीत्यर्थः। मुख्यत इत्यादि। अमुख्यतात्पर्यविषयेष्वतत्वावेदकत्वेऽपि मुख्यतात्पर्यविषये तत्वावेदकत्वमित्यर्थः॥

यत्तु अवान्तरतात्पर्यं तत्रैवाङ्गीक्रियते यत्र तद्विषयघटितो महावाक्यार्थः; द्वितीयाभावादिस्तु नाखण्डमहावाक्यार्थघटक इति, तत्र न तदिति—तन्न; भूतार्थवादानां स्तुतिद्वारभूतदेवताविग्रहादौ धूमोऽस्तीत्यादेर्वन्ह्यनुमित्यादिद्वारभूतधूमास्तित्वादाविव महातात्पर्यविषयाघटकेऽप्यवान्तरतात्पर्यसम्भवात्। न च—द्वितीयाभावद्वारकमेव स्वरूपज्ञानमनर्थनिवर्तकमिति न युक्तम्; न हि द्वारविशेषाजन्यः

[1] तीयादि--क. [2] टितम--ग.

**प्रमाणान्तरप्राप्तया, यथा वायुक्षेपिष्ठत्वादौ, उत तद्विरोधित्वेन; यथा आत्मवपोत्खननादौ, उतोद्देश्यविशेषणत्वादिना; यथा ग्रहैक**

---

शुक्तिसाक्षात्कारो न रूप्यभ्रमानिवर्तक इति--वाच्यम्; श्रवणाद्यजन्यस्यापातज्ञानस्याद्वितीयत्वादिपरामर्शशून्यस्य वा द्वितीयत्वाद्युपलक्षितस्वरूपज्ञानस्याप्रमात्वेनाशङ्क्यमानत्वादनिश्चयेन[1] सद्वितीयत्वादिभ्रमानिवर्तकत्वात्, परैरप्यद्वितीयत्वादिनिश्चयस्योक्तभ्रमनिवृत्तिप्रयोजकत्वाङ्गीकारात्। अखण्डवाक्यार्थानुकूलत्वेन महातात्पर्यस्य परं तत्रायुक्तत्वात्। अतएव दूरस्थसन्निकर्षादिजन्यः शुक्त्यादिसाक्षात्कारो न भ्रमनिवर्तकः; सद्वितीयत्वादिभ्रमानिवृत्तौ च विरुद्धधर्मयोगेन जीवब्रह्मणोरैक्यानिर्णय इति तन्निवृत्त्यावश्यकत्वादिति ध्येयम्॥

**तद्विरोधेन** प्रमाणान्तरविरोधेन। **क्षेपिष्टत्वेति**। क्षिप्रकारित्वेत्यर्थः। **वपात्खननादौ** शरीरान्तरस्थद्रव्यविशेषरूपवपानिष्कासनादौ। उक्तं ह्यर्थवादाधिकरणे---वायुर्वै क्षेपिष्टेत्यादेः, स प्रजापतिरात्मनो वपामुदखिददित्यादेश्च, न स्वार्थता[2]त्पर्यमिति। **ग्रहैकत्वादाविति**। ज्योतिष्टोमे श्रुते "दशापवित्रेण ग्रहं सम्मार्ष्टि" इत्यादौ ग्रहैकत्वादि विवक्षितं न वेति संशये, श्रुतस्याविवक्षाबीजाभावाद्विवक्षितमिति प्राप्ते ग्रहस्य कर्मत्वादपूर्वसाधनत्वेन तमुद्दिश्य सम्मार्गरूपसंस्कारविधानात् प्रतिप्रधानं संस्कारावगमात्सर्वे ग्रहाः सम्मार्जनीयाः। यदि हि यागे पशुरिव सम्मार्गे ग्रहो गुणः स्यात्तदा प्रयोजनाभावात्प्रतिगुणं न प्रधानमावर्तनीयमिति सङ्ख्यापेक्षायां पश्वेकत्ववद्ग्रहैकत्वं विवक्षेत। प्रयोजनानुरोधेन तु प्रतिग्रहं गुणीभूतसम्मार्गावृत्तिसिद्धौ न परिच्छेदकत्वेन सङ्ख्यापेक्षेति नानाकांक्षितमुद्देश्यविशेषणसंख्यादि विवाक्षितम्। किंचैकेत्वादेरुद्देश्ये विधेये वा निवेशः। नाद्यः; ग्रहमेकत्वं चोद्दिश्य

---

[1] दनिश्चयत्वेन--क. ख. [2] स्वार्थे ता--ग.

**त्वादौ, नाद्यः; त्वयैव द्वितीयभावस्य प्रमाणान्तरप्राप्तयनभ्युपगमात्। द्वितीयेऽपि विरोधिमानं न तावत्प्रत्यक्षादि द्वैतग्राहि; त्वन्मते तस्यैव श्रुतिबाध्यत्वात्; नाद्वैतवाक्यान्तरम्; तस्यात्ममात्रपरत्वे द्वितीयाभावाविरोधित्वात्, न हि विशेष्यविषयं 'अग्निहोत्रं जुहोति' इति वाक्यं विशि विषयेण 'दध्ना जुहोति' इति वाक्येन विरुध्यते, द्वैताभावपरत्वे त्वेकविषयत्वेन सुतरामविरोधात्। नापि तृतीयः 'ग्रहं सम्मार्ष्टि' इत्यत्र सम्मार्जनस्येवाखण्डार्थपरे वाक्ये विधेयान्तरस्याभावेन विशे-**

सम्मार्गविधौ प्रत्युद्देश्यं वाक्यसमाप्त्या वाक्यभेदापत्तेः, प्रत्येकं ग्रहाणामेकत्वात्सम्मार्गवारणालाभाच्च। अतएवैकत्वविशिष्टग्रहोद्देशेनापि न सम्मार्गविधिः; युगपत्सङ्ख्याकारके विभक्त्या बोध्येते न तु सङ्ख्यां बोधयित्वा तद्विशिष्टस्य कर्मत्वादिकारकम्। नान्त्य; एकत्वसम्मार्गयोर्विधाने वाक्यभेदात्सर्वग्रहेषु सम्मार्गस्य वारयितुमशक्यत्वात्सम्मार्गस्य विधेयत्वेन एकत्वोद्देश्यग्रहे विशे[1]णत्वायोगात्। समानश्रुत्युपात्तयोः सङ्ख्याकारकयोर्मिथ एवान्वयान्नामार्थे सङ्ख्यान्वयासम्भवात्। तस्मात्साधुत्वार्थमेकवचनमिति तृतीयप्रथमे स्थितम्। तथाच तद्वदुद्देश्यविशेषणत्वाद्द्वितीयाभावो न विवक्षित इत्यर्थः। यत्तु—ग्रहैकत्वदृष्टान्तेनाद्वितीयत्वस्य वाक्यार्थाप्रवेशे[2]ऽपि ग्रहैकत्वस्येव तस्याबाधितप्रतीतिर्दुर्वारेति—तत्तुच्छम्; तात्पर्यविषयवाक्यार्थप्रविष्टेऽर्थे शब्दस्याप्रमाणत्वेन प्रतीयमानस्याप्यद्वितीयत्वस्य द्वितीयत्वेन तत्प्रतीतेर्बाधसम्भवात्। अखण्डार्थबोधे सामग्र्यभावे[3]नाद्वितीयत्वभानासम्भवाच्च। त्वयेति। अद्वैतश्रुतेरननुवादित्ववादिनेत्यादिः। **विशिष्टविषयेणेति**। होममुद्दिश्य

[1] ग्रहाविशे—ग. [2] वाक्यार्थप्रवेशे—ख. [3] सामग्र्यसत्वेना—ग.

ष्यस्य शास्त्रगम्यस्य चिन्मात्रस्याप्राप्तत्वेनोद्देश्यत्वायोगाच्च द्वितीयाभावस्योद्देश्यविशेषणत्वानुपपत्तेः, अविवक्षाहेतोरनुवाद्यत्वस्याप्यभावाच्चेति—चेन्न; स्वयमेव स्वबोधितमपि द्वितीयाभावं द्वितीयत्वादेव निषेधतीति स्वविरोधादेव श्रुतेस्तत्रातात्पर्यात्। मानविरोधित्वमात्रस्य तात्पर्याभावे प्रयोजकत्वात्स्वविरोधेऽपि न क्षतिः। नन्वेकेनैव प्रमाणेनैकस्य प्राप्तिनिषेधावनुपपन्नौ, न; रूपभेदेनाविरोधात्। द्वितीयाभावस्वरूपं हि शास्त्रेण प्राप्यते।

---

दधिविधायकेनेत्यर्थः। न क्षतिः। न मान[1]विरोधक्षतिः। तथाच वपोत्खननादिवाक्यवदद्वैतवाक्यम्, न त्वमुख्यार्थमहा[2]तात्पर्यकमिति भावः। अनुपपन्नाविति। ग्रहणाग्रहणवाक्याभ्यामेकस्य विधिनिषेधसत्वेऽपि[3] नैकेन तत्सत्वम्, निषेधवाक्येन निषेधस्य विधिर्निषेध्यस्य निषेधश्चेत्यङ्गीकारेऽपि नैकस्य तेन विधिनिषेधौ। एकस्यैकेन विधाने निषेधे च वाच्ये क्रमेण तयोरङ्गीकारे विरम्यव्यापारापत्तिः, युगपदङ्गीकारे विधेयस्य निषेधार्थमनुवादायोगोऽनुवादस्य प्राप्तिपूर्वकत्वात्। सकृदुच्चरितस्योभयतात्पर्यासम्भवात्। आवृत्तिकल्पने वाक्यभेदापत्तिश्च। किंचैकस्य विधिनिषेधयोः स्वतन्त्रतात्पर्याभावे तयोर्वैय्यर्थ्यम्। न हि निषेधार्थमेव कचित्किंचिद्विधीयत इति दृष्टमिति भावः। रूपभेदेनेति। भूतार्थवादादीनां देवताविग्रहादि विधाय तद्द्वारा स्तुत्यादितात्पर्याङ्गीकारात् स्वतन्त्रतात्पर्यभेद एव विरम्यव्यापाराद्दोषत्वम्। स्वतन्त्रतात्पर्याभावेऽपि प्रकृते विधिनिषेधावेकस्य न व्यर्थौ; एकरूपेण विधिनिषेधस्थल एव हि तथा, तत्र हि विधेयस्यैव निषेधो निषेधार्थमेव विधानम्; प्रकृते तु द्वितीयमात्रस्य निषेधो द्वितीयाभावमात्रस्य विधेयतेति। तद्विधानं विनाखण्डार्थविषयकानिषेधवाक्यार्थासिद्धेरुक्तत्वान्न तयोर्वैय्यर्थ्यमिति भावः॥

---

[1] न क्षति मान—ख. [2] त्वमुख्यार्थ महा—क. ग. [3] निषेधासत्वेऽपि—ग.

तस्य च प्राप्यतावच्छेदकरूपं द्वितीयाभावत्वम्; तच्च न निषेध्यतावच्छेदकम्, किंतु द्वितीयत्वमेव निषेध्यमात्रानुगतम्। तत्र तदनभ्युपगमे तु न तस्य निषेध्यत्वम्, न वा तेनात्मनः सद्वितीयत्वापत्तिरिति न कोऽपि दोषः। यत्र तु प्राप्यतावच्छेदकमेव निषेध्यतावच्छेदकम्, तत्र प्राप्तिनिषेधशास्त्रयोरतुल्यविषयत्वेऽपि विशेषशास्त्रविषयपरित्यागेन सामान्यशास्त्रप्रवृत्तिः, तुल्यविषयत्वे त्वगत्या विकल्प इति न निषेधस्यासङ्कोचेन प्रवृत्तिः; यथा 'न हिंस्यात्सर्वा भूतानि' इति निषेधशास्त्रस्य 'अग्नीषोमीयं पशुमालभेत' इत्यादिप्राप्तिशास्त्रविषयेतरविषयत्वम्' 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती' इत्यादिप्राप्तिनिषेधशास्त्रयोस्तु विकल्पेनैकविषयत्वम्; एकस्यैव

---

निषेध्यमात्रेति। द्वितीयाभावादिसर्वनिषेध्येत्यर्थः। ननु—द्वितीयाभावस्य ब्रह्मरूपतापक्षे द्वितीयत्वं न तदनुगतमिति कथं तेन तन्निषेधस्तत्राह—तत्र तदनभ्युपगम इति। द्वितीयाभावे द्वितीयत्वानङ्गीकार इत्यर्थः। ननु—यथा न हिंस्यादित्यस्य विहितेतरहिंसानिषेधकत्वम्, यथा वा ग्रहणाग्रहणवाक्ययोः स्वार्थे स्वतन्त्रतात्पर्यग्रहणम्,[1] तथाद्वैतवाक्यं स्वविहितादद्वितीयत्वादन्यस्यैव द्वितीयस्य निषेधकम्, द्वितीयाभावविधाने द्वितीयनिषेधे च स्वतन्त्रतात्पर्यकं किं न स्यात्तत्राह यत्र त्विति। अतुल्यविषयत्वे सामान्यविशेषभावाद्यापन्नविषत्वे। तुल्यविषयत्वे सामान्यविशेषभावाद्यनापन्नविषयत्वे॥

अगत्या विकल्प इति। अतिरात्रे ग्रहणाग्रहणवाक्ययोर्दशमाष्टमे चिन्तितम्। विधिप्रतिषेधयोर्विरोधान्नातिरात्रेत्यादि पर्युदास इति प्राप्ते, अतिरात्रभिन्ने षोडशिनं गृह्णातीत्यस्य षोडाशिभिन्नमतिरात्रे गृह्णातीत्यस्य वा

---

[1] स्वतन्त्रतात्पर्यं—ग.

**हिंसात्वस्य षोडशिग्रहत्वस्य च प्राप्तिनिषेधयोरवच्छेदकत्वात्, तत्र निषेधशास्त्रस्यासङ्कुचद्वृत्तित्वे प्राप्तिशास्त्रस्य सर्वात्मना**

---

पर्युदासस्य स्वीकारे पर्युदस्तत्वादननुष्ठेयत्वस्य विहितत्वादनुष्ठेयत्वस्य च सिद्ध्या विकल्पापरिहारान्न पर्युदासोऽर्थः, लक्षणायां मानाभावात्, किंतु प्रतिषेधः। तत्र यद्यपि 'नानृतं वदेत्' इत्यादावनृतवदनादेरिव षोडशिग्रहणादेः क्रतुवैगुण्यजनकत्वं न निषेधवाक्येनाक्षिप्यते; 'समिधो यजती' त्यादिनेव 'षोडशिनं गृह्णाती' त्यादिना विधिना तस्य क्रतुसाद्गुण्यजनकत्वाक्षेपेण विरोधात्, तथापि षोडशिग्रहणाद्यभावेऽपीतराङ्गैः क्रतुसाद्गुण्यमित्येवाक्षिप्यते। ग्रहणस्य च फलभूमप्रयोजकत्वकल्पनान्न तत्र प्रवृत्त्यनुपपत्तिः। यद्यपि च—

"प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्।
तदुज्जीवनहानाभ्यां विकल्पेष्वष्टदोषता" ॥

व्रीह्यादिप्रयोगे यवादिशास्त्रे प्रतीतप्रामाण्यत्यागः, निर्दोषत्वे प्रामाण्यबीजे सत्यप्यप्रामाण्यकल्पनम्, यवादिप्रयोगे च तच्छास्त्रे त्यक्तस्वीकृतयोः[1] प्रामाण्याप्रामाण्ययोः स्वीकारत्यागाविति, यवादिशास्त्रे दोषचतुष्टयम्। एवं यवादिप्रयोगे व्रीह्यादिशास्त्रे प्रतीतप्रामाण्यत्यागोऽप्रामाण्यकल्पनं च व्रीहिप्रयोगे[2] तच्छास्त्रे तयोः प्रामाण्याप्रामाण्ययोः स्वीकारत्यागावित्यष्टदोषतेत्यर्थः, तथाप्यगत्या सा स्वीक्रियते। तदुक्तं वार्तिके—

"एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः।
त एव च प्रसज्येरन् द्वितीयेऽपि प्रकल्पिते ॥"
"एवमेषोऽष्टदोषोऽपि यद्व्रीहियवशास्त्रयोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥" इति ॥

---

1 त्यक्तेत्युक्तस्वीकृतयोः—ख. ग.  2 पूर्वव्रीहिप्रयोगे—ग.

**वैय्यर्थ्यापत्तिः; प्रकृते च द्वितीयत्वेन रूपेण निषेधस्यैव शास्त्रार्थत्वात् न कस्यापि वैयर्थ्यशङ्का। अतएव द्वितीयाभावनिषेधे पुनर्द्वितीयोन्मज्जनापत्तिरिति–निरस्तम्। उपपादितमेतन्मिथ्यात्वमिथ्यात्वसाधने। यथा प्रतियोग्यभावयोर्निषेध्यतावच्छेदकैक्ये नैकनिषेधेऽपरसत्त्वापत्तिरिति। न च स्वेनैव निषिद्धस्य द्वितीया-**

---

**शास्त्रार्थत्वात्** शास्त्रीयस्वतन्त्रतात्पर्यविषयत्वेन निर्णीतत्वात्। यत्र विहिते निषेधे च वाक्यस्य स्वतन्त्रतात्पर्यं निर्णीतम्, तत्रान्यथानुपपत्त्या विहितेतरस्य निषेधे तात्पर्यं कल्प्यते। प्रकृते तु विहिते तन्न तथा; किंतु निषेधे इत्यसङ्कोचेनैव तत्र तत्। न च—द्वितीयाभावस्यापि निषेधे निषेधस्वरूपासिद्धिरिति—वाच्यम्। द्वितीयसामान्यवैशिष्ट्यधीविरोधिबुद्धावेव हि महातात्पर्यमद्वैतवाक्यस्य कल्प्यते। 'द्वितीयाद्वै भयं भवति, स मृत्युमाप्नोति, य इह नानेव पश्यति, इति निन्दार्थवादात्। उक्तविरोधित्वं च चिन्मात्रबुद्धेरपि, उपलक्षणविधया द्वितीयाभावरूप[1]व्यावृत्ताकारत्वात्। तथा च निषेधत्वविशिष्टे महातात्पर्याभावात्तस्य तात्विकत्वेनासिद्धिर्न दोषः। एवमेकरूपेण विधिनिषेधस्थले विधिवैय्यर्थ्यानुरोधेन निषेधसङ्कोचेन विहिते स्वतन्त्रतात्पर्यकल्पनेऽपि प्रकृते निषेधशेषतया द्वितीयाभावविधायकस्याप्यद्वैतवाक्यस्य निषेधमहा[2]तात्पर्यकत्वेनावैय्यर्थ्यान्न विधेये स्वतन्त्रतात्पर्यम्, प्रयोजनाभावात्। उक्तविरोधिधीरूपशेषविघातापत्तेर्वाक्यभेदापत्तेश्चेति भावः। **अतएव** द्वितीयत्वेन द्वितीयसामान्यनिषेधादेव। **निरस्तमिति।** द्वितीयाभावस्य तत्वेन निषेध एव द्वितीयोन्मज्जनं स च प्रकृते नास्तीति तदनापत्तिरिति भावः। **निषिद्धस्य**—निषिध्यमानस्य।

---

[1] स्वरूप–ग. [2] निषेधे महा–ग.

भावस्य द्वितीयस्येव विशेषणत्वेनोपलक्षणत्वेन वा पुनरुपादानं न युक्तमिति—वाच्यम् । अभावबुद्धौ निषिद्धस्यापि प्रतियोगिनः 'सा शुक्ति' रित्यत्र प्रतिषिद्धस्यापि पूर्वप्रतीतरजतस्योपलक्षणतयोपादानदर्शनात्, असङ्कीर्णज्ञानप्रयोजकत्वस्य

---

उपादानम्—निषेधकप्रमाणं न विषयीकरणम् । प्रतियोगिन इत्युपलक्षणतयोपादानदर्शनादित्यत्रान्वेति । उपलक्षणतया—अभावविशेष्यानन्विततया । ज्ञानान्तरोपात्तं स्वाविषय[1]काधिष्ठानबुद्ध्युपकारकं सुसदृशं दृष्टान्तमाह—सेत्यादि । प्रसिद्धस्यापि पूर्वप्रतीतरजतस्य सा शुक्तिरित्यत्रोपलक्षणतयेत्यन्वयः । यतः पूर्वप्रतीतमतः प्रसिद्धं तत्पदबोध्यत्वरूपयोग्यतारूपं प्राप्तस्य रजतस्य स्वोपलक्षितशुक्तिस्वरूपमिदंत्वेन लक्षणयोपस्थाप्य सा शुक्तिरिति वाक्यजन्यबुद्ध्युपकारकत्वं दृष्टमित्यर्थः । ननु—प्रतियोग्युपादानं विनाभावविशेषस्य रजतोपादानं विना धर्मिविशेषस्य चालाभात्तद्युक्तम्; निषेधबुद्धिं तु विघटयत्प्रतियोग्युपादानमेवायुक्तं निषेधकप्रमाणस्येत्यत आह—असङ्कीर्णेति । व्यावृत्ताकारकेत्यर्थः । प्रकृतेऽपि द्वितीयाभावत्वेनोपादानं निषेध[2]बुद्धेर्विघटकमित्युक्तम् । अतस्तदुपकारकत्वेन तदुपादानमपि न दोषः । यत्तु—अभावबुद्धावभावांशे घटादिः प्रतियोगी नोपलक्षणम्, किंतु घटादिप्रतियोगिकत्वं प्रकार इति—तत्तुच्छम्; घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटादेरभावांशे प्रकारत्वस्यानुभाविकत्वात् । घटो नास्तीत्यादिशब्दजन्यबुद्धावन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्व—सम्बन्धे भाना[3]वश्यकत्वात्. लाघवेन तादृशबुद्धेरेव प्रतिबन्धकत्वात्, त्वदुक्तविषयकत्वे तस्या घटवत्तादिबुद्ध्यविरोधित्वापत्तेश्च ॥

[1] स्वविषय–क. [2] न निषेध–क.ग. [3] संबन्धभाना–ख. मात्रावश्य–क.

**प्रकृतेऽपि तुल्यत्वात्। तस्मात् 'एकमेवाद्वितीय' मित्यादि-श्रुतिर्विश्वमिथ्यात्वे प्रमाणमिति सिद्धम् ॥**

**इत्यद्वैतसिद्धौ मिथ्यात्वश्रुत्युपपत्तिः ॥**

ननु—द्वितीयाभावे स्वतन्त्रतात्पर्यमेव; उपक्रमोपसंहारयोरुक्तत्वेन सुषुप्तौ फलवत्त्वदर्शनेन चानन्यशेषत्वेनावान्तरतात्पर्यासम्भवात्, अन्यथा द्वितीयाभावस्य व्यावहारिकत्वे तद्बोधकश्रुत्या व्यावहारिकद्वैतग्राहिप्रत्यक्षादिबाधासम्भवाच्चेत्यत आह—**तस्मादिति**। द्वितीयत्वेन द्वितीयाभावस्य स्वतन्त्रतात्पर्यायोग्यत्वादित्यर्थः। 'स मृत्युमाप्नोति य इह नानेव पश्यति, 'द्वितीयाद्वै भय' मित्यादिश्रुतिभिर्द्वितीयत्वसामान्यनिन्दया तद्धीविरोध्यखण्डबुद्धावेवोपक्रमादिनिष्ठः न द्वितीयाभावबुद्धौ। 'तमादेशमप्राक्ष्यो येनाश्रुतं[1] कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्' इत्याद्युपक्रमायाः, "तत्सत्यं स आत्मा तत्त्वमसि, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्, इत्युपसंहारायाः श्रुतेर्जगदुपादानाखण्डब्रह्मण्येव प्रवृत्तत्वात्। यद्यपि कष्टं कर्म, त्यनुभवाद्दुःखोपधायकजाग्रत्स्वप्नव्यापारसामान्याभावस्य दुःखाभावरूपव्यञ्जकयोगेन लोके सुखमस्वाप्समिति स्मृतिमूलानुभवेन 'सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति, इत्यादिश्रुत्या "सुखमस्यात्मनो रूपं सर्वेहोपवतिस्तनु" रित्यादिस्मृत्या च साक्षिसुखयोगोल्लेखः, तथापि न द्वितीयाभावो निरतिशयसुखयुक्तः; आविद्यकत्वेन दुःखबीजाविद्यायुक्तत्वात् "प्रेयोऽन्यस्मात्सर्वस्मादेष एव परम आनन्द" इत्यादिश्रुत्या शुद्धात्मन एवोक्तसुखत्वाच्चेति शुद्धात्मैव स्वातन्त्र्येण

[1] येनाश्रुतं श्रुतम्—ग,

# अथ अद्वैतश्रुतेर्बाधोद्धारः

**नन्वापातप्रतिपन्न एव न तावच्छ्रुत्यर्थः ; कश्छन्दसां योगमावेद धीर' इत्यादिश्रुत्या 'बिभेत्यल्पश्रुताद्वेद' इति स्मृत्या च वेदार्थस्यातिगहनतोक्तेः, मीमांसावैयर्थ्यप्रसङ्गाच्च, किंतु मानान्तरेण पूर्वोत्तरेण चाविरुद्ध एवार्थः ; अविरोधग्रहणार्थं च मीमांसासाफल्यम्, अतएव 'आज्यैः स्तुवते' 'आकाशादेव**

---

शास्त्रार्थः, तन्यते व्यज्यतेऽनयेति तनूरात्मरूपसुखव्यञ्जिकेति यावत् । व्यावहारिकोऽप्यभावोऽद्वैत[1]स्यामिथ्यात्वं घटयत्येव, स्वान्यूनसत्ताकाभावस्य तथात्वेनोक्तत्वात् । बाधस्तु तस्याखण्डाधिष्ठानप्रमयैवेति नानुपपत्तिरिति भावः । इत्यादीत्यादिपदान्नेह नानास्तीत्यादिश्रुतयोपि परमतात्पर्येणाखण्डार्थमवान्तरतात्पर्येण द्वैतमिथ्यात्वं बोधयन्तीत्यर्थः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय मिथ्यात्वश्रुतिसङ्गतिः ॥

इति मिथ्यात्वश्रुत्युपपत्तिः.

---

## अथ अद्वैतश्रुतेर्बाधोद्धारः

**कश्छन्दसामित्यादि** । छन्दसां वेदवाक्यानाम्, योगं तात्पर्यम्, धीरोऽपि को वेदेत्यर्थः । छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना विनियोगं को वेदेति माधवीयभाष्यव्याख्यानस्यापि वेदतात्पर्यदुर्ज्ञेयत्वे तात्पर्यम् । **अल्पश्रुतात्** , अल्पविद्याकात्पुरुषात् । **आज्यैरित्यादि** । आज्यैरित्यादौ घृतादित्यागेन सामपरत्वं पूर्वमीमांसायां चित्राधिकरणे स्थापितम् । **आकाशादित्यादौ** गगनादि-

---

[1] द्वैतस्या–क. ग.

समुत्पद्यन्त' इत्यादावापातप्रतीतघृतगगनादिपरित्यागेनाज्याकाशादिपदानां सामपरमात्माद्यर्थत्वं स्थापितं .पूर्वोत्तरमीमांस-

---

त्यागेन परमात्मपरत्वमुत्तरमीमांसायामाकाशाधिकरणे स्थापितमित्यर्थः । 'चित्रया यजेत पशुकामः' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'त्रिवृद्बहिष्पवमान' मित्यादौ चित्राज्यपृष्ठबहिष्पवमानशब्दानां गुणवाचित्वं कर्मनामत्वं वेति संशये, द्रव्य एव रूढानां कर्मनामत्वासम्भवाद्गुणवाचकत्वमेव; तत्र[1] चित्रापदेन चित्रत्वस्त्रीत्वयोरुक्तेः साहित्येनावगतयोस्तयोः सामर्थ्यात्प्राणिद्रव्यकयागमुद्दिश्य विधानावगमात्प्रकृतानां[2] दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमित्युक्तयागानामुद्देश्यत्वेनाप्यग्नीषोमीयाद्युद्देशेन तयोर्विधिः, 'धेनुर्दक्षिणे'तिवदुभयविशिष्टकरणत्वविधानान्न वाक्यभेदः; पशुकाम इति तु यागसाधनपशुकामनानुवादः। एवमाज्यपृष्ठे अपि द्रव्ये संख्याविशिष्टे पवनक्रियाविशिष्टं त्रिवृच्छब्दितत्रिभण्डीद्रव्यं च प्रकृतस्तोत्रमुद्दिश्य विधेयम्; तेषां च द्रव्याणां स्तोत्रं प्रत्युपकारकत्वं तद्देशस्थापनेनादृष्टार्थेकेन सामर्थ्यात्, अतः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथंभावैर्घटन्ति प्रकृताः[3] क्रियाः ॥

इति वार्तिकोक्त्या न विरोध इति बोध्यम् । 'आज्यैः स्तुवते पृष्ठैः स्तुवते' इत्याद्युत्पत्तिवाक्येषु तु स्तोत्रमात्रं विधीयते; आज्यादिपदं तु गुणवाक्यप्राप्ताज्याद्यनुवाद इति प्राप्ते प्राप्तयागानुवादेन चित्रत्वस्त्रीत्वरूपानेकविधाने वाक्यभेदात्पशुगतस्य करणत्वस्यापि प्राप्तत्वेन तस्य तदुभयविशिष्टतया विध्यसम्भवात्, 'अजोऽग्नीषोमीय' इत्यनेन

[1] गुणवाचित्वम्, कर्मैव तत्र--ग. [2] प्राकृतानां--ग, [3] प्राकृताः--ग.

**योश्चित्राकाशाद्यधिकरणेषु; अन्यथा तत्तत्पूर्वपक्षाभ्युपगमापत्तेः,**

---

विहितप्राकरणिकपुंस्त्वावरुद्धे स्त्रीत्वविध्ययोगान्न गुणविधिः; किंतु प्राकरणिकानामेव दध्यादियागानां चित्रापदं नामधेयं विचित्रद्रव्यकत्वरूपचित्रत्व[1]रूढम्। इष्टयेति विशेष्याध्याहारात्स्त्रीलिङ्गता। एवमाज्यादिवाक्येष्वपि संख्याद्रव्यादिपदानामसमस्तत्वेन तदर्थानां मिथोऽनन्वयात्, प्राप्तस्तोत्रानुवादेन द्रव्यसंख्याद्यनेकविधाने वाक्यभेदात्, एकविभक्त्यर्थकारके नामार्थद्वयानन्वयेन तद्द्वयविशिष्टकारकविध्ययोगात्, स्तोत्रे आज्यादिद्रव्यस्य करणत्वासम्भवेनोत्पत्तिवाक्ये द्रव्यविशिष्टस्तोत्रविधिमङ्गीकृत्योक्तवाक्ये द्रव्यानुवादेन सङ्ख्याविधेरपि वक्तुमशक्यत्वात्, स्तोत्रदेशस्थापनस्य चाश्रुतत्वात्तद्द्वारकादृष्टार्थत्व[2]कल्पने गौरवात्, स्तुतिगतऋक्सङ्ख्यारूपस्तोमवाचितद्धितान्तस्य पञ्चदशानीत्यादेरनुपपत्तेरुत्पत्तिवाक्यगुणवाक्ययोराज्यादिपदं स्तोत्रनामधेयम्। अतएव 'यदाजिमायंस्तदाज्यस्याज्यत्वं स इन्द्रोऽवेत अग्निर्वा इदमग्र उद्घोष्यतीति अस्मिन् यज्ञे काष्ठां गच्छत' इत्यर्थवादे यानि स्तोत्राणि काष्ठां कृत्वा यस्माद्देवा आर्जि गतास्तानि तस्मादाज्यानीत्यन्वाख्यानमुक्तम्। पञ्चदशानीत्यादिकं सङ्ख्यामात्रविधिरिति प्रथमचतुर्थे स्थितम्॥

**आकाशाधिकरणेति।** 'आकाश इति होवाच' इति श्रुते
प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः।
तदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः॥

'अस्य लोकस्य का गति' रिति प्रश्नोत्तररूपे आकाश इत्यत्र गतित्वेन प्रतिपाद्यतया प्राधान्यात्, 'सर्वाणि ह वा एतानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती' त्यादीनां तु तद्विशेषणतया गुणत्वात्, गुणे त्वन्याय्यकल्पनेति न्यायेन प्रधानानुसारेण गुणो

---

[1] रूपचित्रत्वरूपचित्रत्व—क, [2] र्थकत्व—ग,

नेयः; प्रथमावगतत्वेनानुपजातविरोध्याकाशपदस्य भूताकाशो मुख्योऽर्थ इति तदानुगुण्येनोपजातविरोधि चरमप्रतीतं पदान्तरं नेयम्, तस्माद्भूताकाशमेवोद्गीथे सम्पाद्योपास्यं न ब्रह्मेति प्राप्ते ॥

सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययोः ।
पौर्वापर्यपरामर्शात्प्रधानत्वेऽपि गौणता ॥

सर्वलोककारणस्य पृष्टत्वात्तदेवाकाशशब्दार्थो न भूताकाशः; तस्य स्वस्मिन्नकारणत्वात् । न चाकाशपदानुसारेण प्रश्नस्थं लोकपदमाकाशकार्यपरमिति—वाच्यम्; अनुपजातविरोधिलोकपदस्य उपजातविरोधिनाकाशपदेनासङ्कोचात् । अपि च सर्वाणि ह वेत्यत्र सर्वपदं सङ्कोच्यम्, एवकारोऽप्यसमञ्जसः, न खल्वाकाशमेव कारणं मूलकारणपरिग्रहे तु ब्रह्मैव मूलकारणमिति स समञ्जसः । एवम् 'आकाश एवैतेभ्यः सर्वेभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथ' इत्यादिकं ब्रह्मण्येव समञ्जसमिति तदेवाकाशशब्दार्थः । यद्यपि शालावत्यादीनां संवादे छान्दोग्ये 'का साम्नो गतिरि'त्यादिप्रकृत्य 'अपां का गतिरित्यसौ लोक इति, न स्वर्गं लोकमतिनयेदि'ति शिलकप्रश्नशालावत्यप्रत्युत्तरोत्तरं अमुष्य लोकस्य का गतिरिति - अयं लोक इति अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनये'दिति प्रवाहणप्रश्नशालावत्यप्रत्युत्तरे तदुत्तरं 'अन्तवद्वै किल ते शालावत्य सामेति प्रवाहणेनोक्ते 'अस्य लोकस्य का गति'रिति शालावत्येन पृष्टे 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैतेभ्यः सर्वेभ्यो ज्यायानाकाशः परायणम्' स एष परोवरीयानुद्गीथः स एषोऽनन्तः, परोवरीयो हास्य भवति, परोवरीयसो ह लोकान् जयति, य एतमेवं विद्वान् परोवरीयांसमुद्गीथमुपास्त' इति श्रुतम्, तत्रातिनयेदित्य-

**तथाचोक्तं वार्तिककारैः शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमित्यत्र—**

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।**

---

स्यातिक्रमेदित्यर्थः । प्रतिष्ठामित्यस्य पृथिवीमित्यर्थः । तथा च स्वर्गलोकस्यान्या गतिर्न मृग्येति तात्पर्यार्थः । एवं चास्य लोकस्येत्यनेन पृथिवीमात्रस्य प्रकृतस्योक्तत्वात्तत्कारणत्वं भूताकाशस्य परम्परया सम्भवत्येव, तथापि प्रवाहणोक्ता[1]वेवास्येति पदं पृथिवीपरम्; न प्रतिष्ठामित्यस्य तदुत्तर एव श्रवणात्, शालावत्योक्तौ त्वस्येति पदं सर्वकार्यपरम्;[2] सर्वनामश्रुते सङ्कोचे मानाभावात्, प्रकरणापेक्षया प्राबल्यात्, अन्तवत्त्वदोषापनिनीषया प्रवृत्तयोः प्रश्नोत्तरयोरस्येति पदेन पृथिवीमात्रकारणोक्त्यसम्भवाच्चेति ध्येयम् ॥

**इत्यत्रेति** । शाबरभाष्यवाक्य इति शेषः । 'चोदनालक्षणोऽर्थो धर्म,' इति द्वितीयसूत्रोक्तचोदनाशब्दितविधिवाक्यरूपस्य शास्त्रस्यासन्निकृष्टार्थज्ञानजनकविधिवाक्यत्वं शास्त्रत्वमिति भाष्याभिप्रायः । तदुक्तं काशिकाकृता 'प्रत्यक्षवदत्रापि शब्दतज्ज्ञानादिप्रामाण्यं ज्ञातव्यम्; न त्वर्थज्ञानं शास्त्रमित्यभिनिवेष्टव्यम् । वस्तुतस्तु वृत्तिरूपसाङ्ख्यस्य वृत्त्यवच्छिन्नचैतन्यरूपमौपनिषदस्य संमतं[3] ज्ञानप्रमाणमत्र भाष्याभिप्रेतम्, यद्यपि 'ज्ञानसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टार्थे बुद्धिरनुमानम्' इत्यनुमानलक्षणभाष्यव्याख्यानावसरे वार्तिके असन्निकृष्टवाचेत्यादिकमुक्तम्; न तु शास्त्रलक्षणस्योक्तस्य व्याख्यानावसरे; तथाप्येकशक्तः[4] शब्दार्थोऽन्यत्राप्युक्त एवे[5]त्याशयेन शास्त्रलक्षणे

[1] दाल्भ्योक्ता–ग. [2] पदे सर्वकार्यपरे-ग. [3] रूपज्ञानमेव सांख्यमौपनिषदसमंतं–ग. [4] प्येकत्रोक्तः–ग. [5] इवे–क, ग.

**ताद्रूप्येण परिच्छेदस्तद्विपर्ययतोऽपि च ॥**
**विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।**
**बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥**
**अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।**
**अन्यस्तु परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥ इति ॥**

---

उक्तमित्युक्तम् । **ताद्रूप्येणेत्यादि** । येन रूपेण चोदनाबोध्यत्वं तेन रूपेण प्रमितत्वं तद्विपरीतरूपेण प्रमितत्वं च जिहासितमभावविशेषणतया लक्षणे घटकमित्यर्थः । तथाच मानान्तरेणाप्रमितमबाधितं च यत्तद्विषयकविधिवाक्यत्वं विधिवाक्यजन्यं तज्ज्ञानं वा शास्त्रमिति फलितार्थः । धर्माधर्मचोदनानामेव लक्ष्यत्वाद्विधीति । शब्दप्रमाणमात्रस्य लक्ष्यत्वे तु तन्न देयम् । एतदुत्तरवार्तिकेऽप्युक्तम्—

'ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।
विपरीतपरिच्छिन्ने नावकाशः परस्य तु' ॥ इति ॥

अथ घटः सन्नित्यादि विशिष्य सत्यताग्राहकं यत्प्रत्यक्षादि तदविषये मिथ्यात्वमद्वैतश्रुतिर्गृह्णातीत्याशयेन स्मृतिपादीयवार्तिकमाह— **विषयेत्यादि** । ननु—द्वैतवाक्यस्य विरुद्धस्योपस्थितेः पूर्वमेवाद्वैतवाक्यं सर्वमिथ्यात्वं बोधयत्वित्याशङ्क्य तथा सति नञ्पदं विहाय निषेध्यस्य कर्तव्यतां निषेधवाक्यं बोधयेदित्युत्तरं हृदि निधाय कर्त्रधिकरणवार्तिकोक्तं वृद्धवाक्यमाह—**अन्य एवेत्यादि** । एकदेशमात्रपर्यालोचनान्न वाक्यार्थनिर्णयः अतिप्रसङ्गादिति भावः । **अङ्गेति** यत्सापेक्षतया वाक्यार्थनिर्णयस्तदित्यर्थः । उक्तं चोक्तवार्तिकात्प्राग्वार्तिके—यदि शास्त्रैकदेशालोचनेन विरुद्धार्थोपगमेन शास्त्रविरोध उद्भाव्यते, तदा 'सुरा न पातव्या' इत्यस्याप्येकदेशेन पानं विहितं कुर्यात्, 'यावज्जीवमग्निहोत्रं जुहोती'ति वाक्यमात्रपर्यालोचनेन दीक्षि-

अन्यत्राप्युक्तम्—

विरुद्धवत्प्रतीयन्त आगमा यत्र ये मिथः ।
तत्र दृष्टानुसारेण तेषामर्था विवक्षिताः ॥ इति ॥

तथाच प्रत्यक्षादिविरोधात्पूर्वोत्तराविरोधाच्च नाद्वैतपरत्वमेकमेवेत्यादिवाक्यानामिति—चेन्न ; द्वैतप्रत्यक्षस्य चन्द्रप्रादेशिकत्वप्रत्यक्षवत्सम्भावितप्रामाण्यतया अद्वैतश्रुतिविरोधित्वाभावात्। यथाच श्रुत्या प्रत्यक्षं बाध्यते, तथा प्रपञ्चितमधस्तात् । किञ्च प्रत्यक्षं नियतविषयम् । श्रुतिः सर्वविषया ! तथाच यत्र प्रत्यक्षेण भेदो न गृहीतः, तत्रैवाभेदश्रुतेरवकाशः । ननु— ययोरैक्यं श्रुत्या बोध्यते तयोर्भेदः प्रसक्तो न वा । नान्त्यः अप्रसक्तप्रतिषेधापातात् । नाद्यः ; प्रसञ्जकप्रमाणविरोधेनैक्यस्य

ताऽप्यजुह्वत्प्रत्यवेयादि 'ति । दृष्टानुसारेण—प्रमाणत्वेन निश्चितमानान्तरानुसारेण । यत्र प्रत्यक्षेणेति । तथाच प्रत्यक्षादिविषयः सर्वोऽपि श्रुतिबाधितः, श्रुतिविषयस्तु सर्वोऽपि न प्रत्यक्षादिबाधित, इति श्रुतिः प्रबला । सामान्यविषयसावकाशविषयत्वादिना श्रुतेर्दुर्बलता तु पूर्वमेव निरस्ता; सामान्यविशेषन्यायस्य निश्चितप्रामाण्योभयविषयकत्वात्, श्रुतेर्विषयान्तर इव प्रत्यक्षादेरपि स्वविषय एव व्यावहारिकभेदविषकत्वेन सावकाशत्वादित्यादिना । किंच घटपटौ भिन्नाविति ज्ञानेन बाधकत्वाभिमतात्स्वस्माद्बाध्यत्वाभिमतस्य श्रौतैक्य ज्ञानस्य भिन्नत्वेनाग्रहणात्तत्र लब्धपदा 'सर्वं खल्विदं ब्रह्मे 'त्याद्यैक्यश्रुतिस्तयोरैक्यं गृह्णाति । एवं चोक्तप्रत्यक्षं स्वाभिन्नस्योक्तैक्यज्ञानस्य न बाधकमिति निर्बाधोक्तश्रुतिः सर्वाद्वैते पर्यवस्यतीत्यादि वक्ष्यमाणं बोध्यम् । आद्यपक्षे प्रसञ्जकं प्रत्यक्षादिमानं श्रुत्या बाध्यत

बोधयितुमशक्यत्वादिति—चेन्न ; अन्त्यपक्षाभ्युपगमे दोषाभावात् । अप्रसक्तप्रतिषेध इति च किमप्रसिद्धप्रतियोगिकत्वम्, किं वा निष्प्रयोजनत्वमिति विवेचनीयम् । नाद्यः ; अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेनान्यत्र निषेधसम्भवात् । न च तत्रैव प्रसिद्धिस्तन्त्रम् ; निषेधप्रमामात्रोच्छेदप्रसङ्गात् । न द्वितीयः ; अनर्थनिवृत्तेरेव प्रयोजनत्वात्, 'नान्तरिक्षेऽग्निश्चेतव्य' इत्यादौ स्तुतिमात्रप्रयोजनेनाप्यप्रयोजनेनाप्यप्रसक्तनिषेधदर्शनाच्च । अथ श्रुत्या

---

इति समाधानसम्भवेऽपि तस्य पूर्वमुक्तत्वादाह---**अन्त्यपक्षेति** । **अन्यत्रेत्यादि** । ययोरैक्यं बोधनीयं तयोरेकतरप्रतियोगिकभेदत्वेन वस्त्वन्तरे प्रसिद्धस्य तयोरन्यतरत्र प्रतिषेध[1]सम्भवादित्यर्थः । **तत्रैव**—निषेधाधिकरण एव । **प्रसिद्धिः** प्रमा । **निषेधप्रमामात्रेति** । न हि यत्रातिरात्रादिव्यक्तौ षोडशिग्रहणादेर्निषेधस्तत्र तत्प्रमास्ति ; विरोधात् । यथा चातिरात्रे भ्रमरूपा प्रसक्तिस्तथा प्रकृतेऽपि संशयरूपा सम्भवतीति तद्बाधेऽपि न प्रमाणबाध इति भावः । अथवा निषेधमात्रं प्रतियोगिप्रसक्त्यभावस्थलीयनिषेधो 'नान्तरिक्षेऽग्निश्चेतव्य' इत्यादिरूपः ॥

ननु---नान्तरिक्ष इत्याद्यर्थवादस्य 'हिरण्यं निधाय चेतव्य' मिति विहितहिरण्यस्तुतिपरत्वम् ; न निषेधपरत्वम्. तथा च प्रमारूपप्रसक्तेर्निषेधाधिकरणे विरहेऽपि प्रसक्तिमात्रं निषेधस्थलेऽपेक्षितमेव । न च तत्संशयरूपम् ; निश्चयस्यैव कल्पनौचित्यात्, तत्र नातिरात्र इत्यादौ प्रसक्तिबाधेऽपि प्रसञ्जकस्य ग्रहणविध्यादेर्नात्यन्तबाधः, अद्वैतवाक्ये तु प्रसञ्जस्य प्रत्यक्षादेः सर्वात्मना बाध इत्युक्तम्, तत्राह—**नान्तरिक्ष इति** । यद्यपि स्तुतौ लक्षणया तात्पर्यम्, तथापि तदुप-

---

[1] तयोरन्यतरत्वप्रतिषेध–ग.

यथोरभेदो बोध्यते तयोरुपस्थितिरस्ति, न वा, नान्त्यः ; अनुपस्थितयोरभेदबोधनायोगात् । आद्ये सा किं श्रुतिजन्या, प्रत्यक्षादिजन्या वा, नाद्यः ; श्रुतेर्मानान्तरागोचराभेदमात्रपरत्वेन घटाद्युपस्थितेस्तज्जन्यत्वाभावेन सर्वाद्वैतासिद्धेः, श्रुतिस्थाकिश्चनेत्यादिपदानामनुवादकत्वाभ्युपगमात् । द्वितीये तु तयोर्भेदोऽपि प्रत्यक्षादिसिद्ध इति क्वाद्वैतश्रुत्यवकाशः ? मैवम् ; यत् प्रत्यक्षादिना गृह्यते, तद्भेदोऽपि तेन गृह्यत एवेति नियमाभावात् । तथा हि—न तावत्पदार्थस्वरूपज्ञानमेव भेदज्ञानम् ; अभेदभ्रमोच्छेदप्रसङ्गात् । स्वरूपभेदवादिनामपि स्वरूपज्ञानाद्घटत्वादिप्रकारकाद्भेदत्वप्रकारकं भेदज्ञानं विलक्षणमेव ; अन्यथा भेदाग्रहनिबन्धनव्यवहारानुदयप्रसङ्गात् । अतएव स्वरूपज्ञानोत्तरकालमवश्यं भेदज्ञानमित्यपि न ; अनवस्थाप्रसङ्गाच्च । तथाहि—'घटपटौ भिन्नौ जानामी'ति घटपटभेदधीः स्वप्रकाशा वा, अनुव्यवसायसिद्धा वा, साक्षिसिद्धा वा, न स्वप्रतियोगिकभेदविषया ; भेदाधियः प्रतियोगिधीजन्यत्वनियमेन प्रतियोगिधीव्यक्तिभिन्नव्यक्तित्वावश्यकत्वा-

---

पादको वाक्यार्थबोधो वाच्य एव । अतएवार्थवादाधिकरणे 'अन्त्ययोर्यथोक्त'मिति सूत्रे तथोक्तम् । 'गुणवादस्तु' इति सूत्रेण च गौण्या वृत्त्या बाधितार्थकार्थवादानां वाक्यार्थधीः स्तुत्युपपादिकोक्तेति, तत्रैव प्रकृतेऽप्यप्रसक्तप्रतिषेधः । यथाच स्तुतिधीः प्रयोजनम्, तथा प्रकृतेऽपि सर्वाभिन्नब्रह्मबोधस्य भेदभ्रमसंशयसामान्यनिवृत्तिरिति भावः ।

**न स्वप्रतियोगिकभेदविषयेति** । स्वविषयेषु घटपटतद्भेदेषु[1] ज्ञानान्तरेषु च स्वभेदमनवगाहमानेत्यर्थः । **भिन्नव्यक्तित्वेति** । उत्तरवृत्ति-

**त्स्वस्या एव स्वजन्यत्वानुपपत्तेः। ज्ञानान्तरेण च तद्भेदग्रहे क्वचिद्भेदधीधाराविश्रान्तिरवश्यं वाच्या; अन्यथा सुषुप्ति-विषयान्तरसञ्चारादिकं न स्यात्। अतस्तत्रापि चरमभेदधीरेवो-दाहरणम्। तथाच बाधकत्वाभिमता या घटपटभेदधीः स्वभेदा-विषया भासते, तया सह बाध्यत्वाभिमताया ऐक्यधिय ऐक्यं बोधयित्वा निर्बाधा सती श्रुतिः सर्वाभेदे पर्यवस्यति। न ह्यभेदेऽपि**

त्वेत्यर्थः। तेनानुव्यवसायसिद्धत्वादिपक्षयोर्व्यक्तिभेदस्य पराभ्युपगत-त्वेऽपि न क्षतिः। **स्वस्याः**—स्वकीयायाः प्रतियोगिधीपूर्वकालीनायाः प्रतियोगिधीसमानकालीनायाश्च **स्वजन्यत्वानुपपत्तेः** प्रतियोगिधीजन्य-त्वानुपपत्तेः। **उदाहरणमिति**। चरमधीर्यत्र यद्भेदं गाहते ताभ्यां तद्भेदेन च सह तस्या अभेदमद्वैतश्रुतिर्बोधयतीति, सा धीस्तादृशाभेदं गाहितुं नेष्टे। एवं च पूर्वपूर्वधियामपि स्वविषयेण सह भेदासिद्ध्या श्रुतिः सर्वाभेदे पर्यवस्यति। प्रकारान्तरेणापि श्रुतेः सर्वाभेदे पर्यवसानमाह—**तथा चेति**। चरमधिया स्वभेदस्य कुत्राप्यग्रहणे चेत्यर्थः। **न ह्यभेद इत्यादि**। ययोर्भेदश्चरमधीविषयस्ताभ्यां तद्भेदेन च तस्या अभेदे[1]-बाध्यत्वाभिमतज्ञानेन सह तस्या अभेदे[1] च बाध्यबाधकत्वं न हीत्यर्थः। बाधकस्य स्वविषयेण सह भेदोपमर्दे भेदविशेषविषयकत्व-रूपबाधक[2]तावच्छेदकस्योपमर्दबाध्य[3]बाधकधियोर्भेदोपमर्द बाध्यधीविष-यस्य बाधकधीविषयभेदोपमर्दात् बाधकधिया न स्वविषयबाधनसम्भवः। उक्तं हि पूर्वबाधकस्य[4] स्वबाध्यविषयकत्वमिति भावः। एतेनाभेदे बाध्यबाधकत्वास्वीकारे ब्रह्मज्ञानं स्वस्वरूपबाधकं न स्यादित्यपास्तम्। स्वविषयबा[5]धकत्वादेरेव प्रकृतग्रन्थार्थत्वात्। न च—द्वैताभाव-

[1] तस्याभे—क. ग. [2] साधक–ग. [3] मर्दः बाध्य–ग. [4] पूर्व बाधक–ग.
[5] याबा—क. ग.

**बाध्यबाधकभावः; स्वस्यापि स्वबाधकतापत्तेः । तदुक्तं खण्डनकाद्भिः—**

**'सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।**
**निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति**

विषयकत्वांशे यथा 'एकमेवाद्वितीयमि' ति श्रुतिः स्वमपि बाधते, तथैक्यविषयकत्वांशेऽपि स्वं बाधतामिति—वाच्यम्; स्वप्रतिपाद्याशेषीभूतविषयाबाधकत्वस्य बाधके स्वीकारात्, द्वितीयाभावस्य स्वप्रतिपाद्याखण्डार्थशेपत्वात्, अद्वैतवाक्यस्य द्वितीयाभावविषयकत्वेऽपि[1] तज्जन्याखण्डाद्वैतज्ञानस्य तदभावात्, बाधकज्ञानस्य स्वविषयाबाधकत्वनियमाक्षतेश्च । अथाद्वैतज्ञानेन द्वैतमपि न बाध्यताम्; द्वैतस्य स्वविषयैक्येन बोधितत्वात्स्वविषयेनाद्वैतेन स्वस्याभेदबोधनेनाद्वैतमपि विषयकत्व[2]रूपस्य बाधकतावच्छेदकस्योपमर्दाच्चेति—चेन्न; स्वोत्पत्तिक्षणे ऐक्यबोधनेऽपि भेदानुपमर्दात् । पश्चादेव तदुपमर्दे सिद्धे च न बाध्यं न वा बाधकमस्तीति बाध्यबाधकभावो मयापि नोच्यते । तव त्वद्वैतज्ञानोत्तरं भेदज्ञानस्य तद्बाधकस्य न स्वीकारः सम्भवति । पूर्वं जातमपि भेदज्ञानं न चरमधीभेदविषयकमिति चरमधीलब्धपदाऽद्वैतश्रुतिर्भेदज्ञानमात्रमाभासीकरोतीति ध्येयम् ॥

**स्वबाधकतापत्तेः**—स्वविषयबाधकतापत्तेः । **सुदूरधावनश्रान्ता**—चरमधीभिन्नज्ञानेषु सुदूरदेशेषु भेदावगाहनरूपं धावनं कृतवत्यपि सुषुप्तिलोपाद्यापत्तिरूपश्रान्त्या चरमधीरूपदेशे भेदावगाहनरूपधावनं कर्तुमशक्ता, बाधबुद्धः—भेदज्ञानस्य परम्परा श्रेणी, निवृत्तौ तस्या अद्वयश्रुतिबाधकत्वायोग्यत्वप्राप्तौ, पार्ष्णिग्राहैः बाधबुद्धिपरम्पराविरोधिविषयकत्वरूपबाधकतावच्छेदकयुक्तैः, अद्वयाऽऽम्नायैः

[1] विषयत्वेऽपि—ख. [2] नाद्वैतविषयकत्व—ग.

न च—सिद्धान्ते घटतद्धीभेदग्राहिणा स्वप्रकाशेन साक्षिणा स्वस्मान्नितरभेदस्यापि ग्रहणान्नानवस्था, अन्यथा स्वस्य घटादिभ्योऽभेदसंशयः स्यादिति—वाच्यम्; साक्षिणः स्वप्रकाशत्वेऽपि स्वनिष्ठेतरप्रातियोगिकभेदग्रहे इतरप्रतियोग्युपस्थितिसापेक्षत्वात्। अन्यथा स्वस्यान्तःकरणाद्यभेदभ्रमो न स्यात्। स्वप्रकाशेन भेदाग्रहेऽपि मानान्तरेण भेदग्रहान्न घटाद्यभेदसंशय इति न किञ्चिदेतत्। स्यादेतत्—'घटपटौ भिन्ना'विति प्रत्यक्षं

---

विजीयते बाध्यते। **इतरप्रतियोगिकभेदेति**। स्वविषयाज्ज्ञानान्तराच्च भेदेत्यर्थः। **इतरप्रातियोगी**—इतरात्मकप्रतियोगी। सप्रतियोगिकत्वेन भेदस्फुरणस्यैवाभेदधीविरोधित्वात्तदेव प्रकृते वाच्यम्, तच्च न सम्भवति, ज्ञानान्तररूपप्रतियोग्युपस्थित्यभावकालीनस्य साक्षिनिष्ठभेदस्यावृतत्वस्वीकारेण तादृशोपस्थितिसापेक्षत्वात्। अभावमात्रस्यानुपलब्धत्वे तु न भेदे केवलसाक्षिवेद्यत्वशङ्कापीत्यनुपलब्धस्वाकारक[1]वृत्त्यवच्छिन्नसाक्षिवेद्य एव स इति भावः। **अन्यथा**—साक्षिण इतरनैरपेक्ष्येण स्वनिष्ठभेदग्राहकत्वे। **अन्तःकरणाद्यभेदभ्रमः**—अन्तःकरणादेर्भेदाविषयकोऽहमिति भ्रमो न स्यात्। इतरसापेक्षतया भेदग्राहकत्वे तु विपरीतसंस्काररूपदोषाभावस्यान्तःकरणभेदस्फुरणापेक्षणीयत्वात्तदभावान्न तादृशस्फुरणम्। न च—मम मन इति भेदस्फुरणं सर्वदास्त्येवेति—वाच्यम्; तस्य तादात्म्यरूपसम्बन्धविषयकत्वेऽपि भेदाविषयकत्वात्, शरीरत्वादिनेव मनस्त्वेन तादात्म्याध्यासाभावात्, मम शरीरमितिवन्मम मन इत्यस्य सम्भवेऽपि मम मनुष्य इतिवन्ममाहमित्यस्याभावात्तदापादनसम्भवाच्च। एतेनेदानींतनस्य देहात्मनोरिव मनआत्मनोर्भेदज्ञानस्य सत्त्वेऽपि विपरीतभावनारूपदोषात्तयोरभेदभ्रमः सम्भवतीति तदभावापादनं न युक्तमिति परास्तम्॥

---

[1] स्वाकार–ग.

स्वस्याद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमप्याक्षिपतीति सर्वत्र भेदस्याप्रत्यक्षत्वेऽपि नाद्वैतश्रुतेरवकाशः—अत्रोच्यते; आक्षेपो ह्यनुमानमर्थापत्तिर्वा। तत्र विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति नानुमानं संभवति; स्वतोऽपि भेदसाधने बाधात्, दृष्टान्तस्य च साध्यविकलत्वात्। यतःकुतश्चिद्भेदसाधने त्वनुमानाविषये लब्धावकाशा श्रुतिरभेदं बोधयिष्यति। न च स्वव्यतिरिक्तात्सर्वतो भिन्नेति साध्यम्; अद्वैतवादिनं प्रत्यप्रसिद्धविशेषणत्वात्। एतेन—सर्वं सर्वस्माद्भिन्नमिति वाक्य-

---

यत्तु—पदार्थस्वरूपस्य भेदत्वेन ज्ञानं प्रति दोषस्य प्रतिबन्धकत्वादभेदभ्रमसम्भवादभेदभ्रमोच्छेदप्रसङ्गादिति पूर्वोक्तमयुक्तम्। न च—तादृशभ्रमस्थले श्रुत्याप्यभेदो बोधनीय इति—वाच्यम्; दोषप्रयुक्तभेदाग्रह[1]निबन्धनाभेदग्रहस्य भ्रमत्वनियमेन श्रौताभेदज्ञानस्य भ्रमत्वापत्तेः, चरमज्ञाने श्रुत्यवकाशोक्तिरपि न युक्ता; तस्य प्रत्यक्षेण श्रुत्या वा विषयीकृतत्वे तत्र[2] श्रुतिवृत्त्युक्त्ययोगादिति—तन्न; श्रौतस्याभेदज्ञानस्य दोषाजन्यत्वेन श्रौतत्वेन चाभ्रमत्वात्, दोषप्रयुक्ते भेदग्रहमूलकत्वस्य भ्रमत्वव्याप्यत्वे मानाभावात्, भेदग्रहस्य दोषप्रयुक्तता· नियमेन दोषग्राह्यभेदयोर्वस्तुनोरभेदग्रहस्य प्रमात्वनियमाच्च। चरमज्ञाने श्रुत्यवकाशोक्तिर्युक्तैव; चरमत्वं हि प्रकृते भेदेनागृह्यमाणत्वम्। न त्वगृह्यमाणत्वम्; तथाचागृहीतभेदेऽपि साक्षिसिद्धे तत्र श्रुतिः प्रवर्तत इत्यत्र न दोषः॥

**ज्ञानादिनेत्यादिना** स्वविषयोपग्रहः। तं ऐक्यज्ञानात्स्वविषयाच्च स्वस्य भेदम्। **सर्वतो भिन्नेति**। बुद्धित्वात् बुद्ध्यन्तरवदिति शेषः। **अनुमानाविषये** अनुमेयभेदाप्रतियोगिनि। **वाक्यमपीत्यपिकारेणा-**

---

[1] भेदग्रह—ख. [2] चरमत्वहानेरविषयीकृतत्वे तत्र—ग.

मपि—निरस्तम्; तदुक्तम्—

'हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षयताऽऽस्थिते।
किंचित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः॥ इति।

---

नुमानसमुच्चयः। हेत्वादीत्यादि। सर्वस्मिन्पक्षीकृते हेतोरभावः; हेतोरपि पक्षत्वेन तस्मिंस्तस्यासिद्धत्वात्। अद्वैतमते साध्यहेत्वोरविशेषेण साध्याविशेषश्च, तयोः पक्षस्य चैक्याद्बाधस्वरूपासिद्धिव्याप्यत्वासिद्ध्यादिश्च; दृष्टान्तस्यापि पक्षत्वाद्दृष्टान्तासिद्धिश्च, सर्वस्य भेदप्रतियोगित्वानुयोगित्वे विशिष्य तत्तद्रूपेण साध्ये निवेश्ये; अन्यथा केनचिद्रूपेण ते आदाय सिद्धसाधनार्थान्तरयोरापत्तेः। तथाच तत्तद्रूपेण ज्ञाने आवश्यके सार्वज्ञ्यापत्तिः। एवं च हेत्वाद्यभावे सार्वज्ञ्ये चाद्वैतवादिना आस्थिते आपादित[1] सति सर्वं पक्षयता पक्षयितुं पूर्वं प्रवर्तमानेन त्वया पश्चात्किंचित् कानिचित्त्यक्तव्यानि पक्षाद्बहिष्कार्याणि। तथाच त्वया सैव त्यक्ता[2] तत्तत्स्वरूपैवाद्वयश्रुतेः सर्वाद्वैतबोधनरूपगमनाय चरमोपायरूपा द्वाः दत्तैव। तुशब्दादनुमानाप्रयोगव्यवच्छेदः। तथाच शब्दमात्रे त्वयानुमानप्रयोगे कृतेऽपि श्रुतेरवकाशः सिद्ध्यत्येवेति लब्धपदा सा सर्वाद्वैतं बोधयतीति भावः॥

ननूक्तप्रत्यक्षं यद्यद्वैतज्ञानात्स्वविषयाच्च भिन्नं न स्यात्तदा भेदविषयकं न स्यात्; ययोर्भेदो विषयस्तयोरैक्यविषयकत्वात् भेदप्रतियोग्यनुयोगिनोः स्वविषयीभूतयोः स्वभिन्नत्वाभावे तयोर्भेदानुपपत्तेः। न हि स्वात्यन्ताभिन्नमुभयं मिथो भिन्नमिति सम्भवति, विरोधादिति युक्तेरुक्तप्रत्यक्षस्य स्वविषयादद्वैतज्ञानाच्च भेदं विना भेदविषयकत्वमनुपपन्नमित्यनुपपत्तिधीकरणिकाऽर्थापत्तिरास्तां भेदग्राहिका

---

[1] आपादे—ख. [2] त्यक्त—ग.

नाप्यर्थापत्तिः सर्वभेदविषया; स्वाविषयत्वात् । ययोर्हि भेदं विना यत्रानुपपत्तिर्गृहीता, तयोस्तत्र भेदग्रहेऽप्यनुपपत्तावनुपपत्त्यन्तराग्रहणात् । सर्वत्र तद्ग्रहणे तु धाराविश्रान्तौ चरमधीरुदाहरणम् । तदुक्तम्—

आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ॥ इति ॥

ननु—यावदुपपादकं तत्सर्वमर्थापत्तेर्विषयः । न तु

---

तत्राह—नाप्यर्थेति । स्वविषयत्वं विवृणोति । ययोरित्यादि । ययोरद्वैतज्ञानाद्युक्तप्रत्यक्षयोर्भेदं विना यत्रोक्तप्रत्यक्षस्य घटपटभेदविषयकत्वेऽनुपपत्तिर्गृहीता, तत्रोक्तप्रत्यक्षतादृशविषयकत्वे निमित्ते तदुपपत्तय इति यावत् । तयोः अद्वैतज्ञानाद्युक्तप्रत्यक्षयोः । भेदग्रहेऽपि अनुपपत्तावर्थापत्तिप्रमायामनुपपत्त्यन्तरस्याद्वैतज्ञानादितो भेदं विना किंचिदनुपपन्नमित्यस्याग्रहणात् । तथाचोक्तार्थापत्तावद्वैतज्ञानादिभेदाग्रहान्नार्थापत्तिः सर्वभेदविषयेति भावः । सर्वत्रोक्तार्थापत्त्यादौ । धारेति । सुषुप्तादिलोपापत्त्येत्यादिः । चरमधीः चरमार्थापत्तिः । अद्वैतज्ञानादिभेदं विना यस्याः किंचिदनुपपन्नमिति गृहीतं[1] सार्थापत्तिरिति यावत् । आद्येत्यादि । आद्यधीर्घटपटभेदधीः तद्वेद्यभेदीया तस्या धियस्तादृशभेदविषयकत्वमद्वैतज्ञानादेस्तस्यां भेदं विनानुपपन्नमित्याकारानुपपन्नता अनुपपत्तिधीरद्वयश्रुतिं न बाधते । स्वज्ञानापेक्षणात् स्वस्मिन् तादृशानुपपत्तिज्ञाने अद्वैतज्ञानादिभेदज्ञानमपेक्ष्यैव तस्यास्तद्बाधकत्वसम्भवात्, स्वस्मिन्नुक्तभेदज्ञानाभावे तत्रैव श्रुतेरवकाशेन सर्वाद्वैतपर्यवसानात् । अथ तस्यामपि तादृशभेदं विना स्वविषयभेदविशेषविषयकत्वमनुपपन्नमिति ज्ञानात्तादृशभेदग्रहः; तथाप्यन्ते धाराविश्रान्तौ तां न

---

[1] न गृहीतं-ग.

यत्किंचिदुपपादकम्; तथाचार्थापत्तेरितरस्माद्भेदाभावे तत्रैवाभेदश्रुतेर्लब्धावकाशत्वाद्घटपटभेदासिद्ध्यापत्तेरर्थापत्तिविषयत्वं वाच्यम्; अन्यथा दृग्दृश्यसम्बन्धानुपपत्तिर्ज्ञाननिवर्त्यत्वानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात्; सर्वं खल्विदं ब्रह्म' इति श्रुतिः 'नेह नाना, इति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्च स्वाभेदविषया न स्यात्; तथा च तत्रापि श्रुत्यन्तरमर्थापत्त्यन्तरं वा वाच्यमिति तवाप्यनवस्थापत्तिरिति। मैवं वोचः; वस्तुत उपपादकत्वं नार्थापत्तिविषयत्वे तन्त्रम्, किंतूपपादकत्वेन ज्ञातत्वम्; अन्यथार्थापत्तिभ्रमानुपपत्तेः। तथा च येन

---

बाधत इत्यर्थः। उपपादकमिति। यद्विनानुपपन्नत्वमन्यत्र ज्ञायते तदित्यर्थः। इतरस्मात् अद्वैतज्ञानादितः। नेह नानेतीति। निषेधपदार्थे निषेधबोधकवाक्ये चेति। भेदमात्रेति। भेदसामान्येत्यर्थः। 'नात्र काचन भिदास्ती'त्यादित्यादिश्रुत्येकवाक्यतया नानाशब्दस्य भेदार्थकत्वम्' भिदाशब्दस्यापि भिन्नार्थकतया भिन्नार्थकत्वं वा, नञ्शब्दस्य नाञ्प्रत्यया[1]न्तस्य तत्पदनिष्पत्त्या तथार्थसम्भवात्। यद्यप्ययं प्रत्ययः स्वार्थिकतया महाभाष्यादावुक्तः, तथापि नञ्पदस्यैवाघटवदित्यादाविव भिन्ननिरूढत्वसम्भवात्। तथाच भिन्ननिषेधेऽपि भेदस्य विशेषणस्य निषेध इत्याभिप्रायेणेदम्। नानापदस्यानेकार्थकत्वे तु पूर्वोक्तरीत्या भेदस्याप्यनेकत्वेन निषेध इति बोध्यम्। स्वाभेदेति। अभेदस्याखण्डब्रह्मरूपत्वेन वक्ष्यमाणत्वाद्भेदाभावातिरेकेण भेदनिषेधानुपपत्तिगम्यत्वमिति भावः॥

अर्थापत्तिभ्रमेति। अर्थापत्तिरूपभ्रमेत्यर्थः। येन येनोपपाद-

---

1 नञ्प्रत्यया—ग.

रूपेणोपपादकत्वं गृहीतम्, तद्रूपावच्छिन्नमुपपादकमर्थापत्तेर्विषयः। तत्र यद्यर्थापत्तिगतभेदसाधारणमुपपादकतावच्छेदकमेकं भवेत्, तदा सोऽपि भायादेव। नचैवमस्ति; तदनिरूपणात्। तथाहि—घटपटभिन्नत्वमुपपाद्यम्, तदुपपादकं च न सर्वभिन्नत्वम्; स्वतोऽपि भेदापत्त्या तदसम्भवात्। नापि स्वातिरिक्तसर्वभिन्नत्वम्; अद्वैतवादिनं प्रति स्वातिरेकविशेषणासिद्धेः, स्वत्वाननुगमाच्च। तथाच तेन तेन रूपेण तत्तद्भिन्नत्वमेव उपपादकमुपेयम्। अत उपपादकतावच्छेदकनानात्वान्न सर्वमुपपादकमर्थापत्तेर्विषय इति पृथक्पृथगनुपपत्तिज्ञानापेक्षायां सर्वत्रानुपपत्तिज्ञानेऽनवस्थानात् क्वचिद्धाराविश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यतीति किमनुपपन्नम्। दृष्टान्ते

---

**कत्वं गृहीतमिति**। यद्रूपावच्छिन्नं विनानुपपन्नत्वं गृहीतमित्यर्थः। **सोऽपि** अर्थापत्तिगतो भेदोऽपि। **उपपाद्यमिति**। विषयितासंबन्धेनेत्यादिः, तेन पक्षीभूतज्ञाननिष्ठतालाभः। **सर्वभिन्नत्वम्** सर्वस्मात्सर्वस्य भेदः। **स्वातिरिक्तसर्वाभिन्नत्वम्**, सर्वत्र स्वातिरिक्तात्सर्वस्माद्भेदः। **अद्वैतवादिनमिति**। अद्वैते विप्रतिपन्नमित्यर्थः। तथाचाद्वैते विप्रतिपत्तिकाले स्वातिरिक्तसर्वत्वस्य निर्णयो नेति भावः। **स्वत्वेति**। तथाच भेदग्राहकं यद्यज्ज्ञानं तत्र तत्र तत्तदन्यसर्वभिन्नत्वमर्थापत्तेर्विषयो वाच्यः, तथाचोक्तज्ञानं प्रत्यक्षार्थापत्त्यादिरूपमनन्तमित्यनुगतरूपं विना पक्षतया साध्यघटकतया वा न तन्निर्देशसम्भवः। न च—भेदग्राहकत्वेनानुगतरूपेण निर्देश इति—वाच्यम्; भेदग्राहकभिन्नभेदस्य साध्यत्वे भेदग्राहकाणां मिथो भेदस्यार्थापत्त्यविषयतया तत्रैवाद्वयश्रुतेरवकाशसम्भवादिति भावः। **नानात्वात्**। तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदत्वरूपत्वात्। **विश्रान्ताविति**। तत्तदनन्तधर्मावच्छिन्नप्रतियोगिताक-

च सर्वत्र स्वसाधारणमुपपादकतावच्छेदकमेकमेवेति तदवच्छिन्नतया स्वस्यापि भानमिति वैषम्यम्। तथाहि—दृश्यत्वावच्छिन्नमिथ्यात्वं विना दृक्सम्बन्धानुपपत्तिग्रहात्तदवच्छिन्नमिथ्यात्वमर्थापत्तेर्विषय इति स्वमिथ्यात्वमपि स्वविषयः। एवमेव ज्ञाननिवर्त्यत्वानुपपत्तेरपि स्वविषयत्वम्; तत्रापि दृश्यत्वादेरेकस्यैवावच्छेदकत्वात्। एवं च ब्रह्मणि सर्वाभेदबोधिकायाः श्रुतेर्भेदमात्रनिषेधान्यथानुपपत्तेश्च स्वाभेदाविषयत्वमाविरुद्धम्। न हि सर्वभेदे स्वभेदापत्तिरिव सर्वाभेदे स्वाभेदो दोषाय। तस्माद्द्वैतश्रुतिर्बाध्यबाधकयोरैक्यबोधनेन निराबाधा सर्वाद्वैतं प्रतिपादयति। ननु—शब्दबुद्धिकर्मणां विरम्यव्यापाराभावात्कथमादावल्पविषया बुद्धिः पश्चाद्बहुविषयापि भवतीत्युच्यत इति—चेन्न; श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतबुद्धेः प्रामाण्यं व्यवस्थापयन्तीनामस्मद्बुद्धीनामेव क्रमेण जायमानत्वात्।

---

भेदानां दुर्ज्ञेयत्वात्कचित्कस्यचिद्भेदज्ञानासम्भवे इत्यपि बोध्यम्। तथाहीति। प्रपञ्चस्येति शेषः। सर्वभेदे उक्तार्थापत्तिविषये सति। स्वाभेदः स्वाभेदापत्तिः। कथमित्यादि। चरमज्ञाने आदौ लब्धपदा पश्चात्सर्वाद्वैताविषयेति कथमित्यर्थः। द्रागेव युगपदेव। प्रामाण्यमित्यादि। यत्र प्रत्यक्षादिना भेदो न गृहीतः, तत्र श्रुतेरबाधितविषयकत्वम्। प्रत्यक्षादिविषये तु सर्वत्र श्रुतेः प्रवृत्तिरिति प्रत्यक्षादिकं नाबाधितकिञ्चिद्विषयकम्। अतः प्रत्यक्षादितः श्रुतिः प्रबला। एवं बाध्यत्वाभिमतश्रौतज्ञानस्य द्वैतमात्रोच्छेदकत्वेन बाधकत्वाभिमतप्रत्यक्षादिस्वरूपोच्छेदकत्वादपि सा प्रबला। बाध्यकालेऽनुच्छिन्नस्वरूपं हि बाधकं स्यात। अतएव सर्वकथंतामूलोच्छेदकत्वेनापि सा तथा। तदुक्तं खण्डने—

**अयोग्यताज्ञानं च न शाब्दबोधे प्रतिबन्धकम्, न वा योग्यताज्ञानं हेतुः; येन प्रथमं सर्वाद्वैतबुद्धिर्न स्यात्। तदुक्तम्—**

**अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।**
**अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्॥ इति।**

---

प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते।
तत्रानौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत्॥ इति।

अत्राद्वैतश्रुतावित्यादिरीत्या श्रुतेर्बाध्यत्वशंकानिरासेन प्रामाण्यव्यवस्थापकानामस्मदीयज्ञानानां श्रुतिप्राबल्यविषयकानामेव क्रमेणोत्पत्तिः। **श्रुत्या तु** सकृदेव सर्वाद्वैतं बोध्यते। न तु प्रत्यक्षाद्य—गृहीतिभेदके चरमज्ञाने वा आदावद्वैतं बोधयित्वा पश्चादन्यत्र बोध्यत इति भावः। **न स्यादिति**। प्रत्यक्षादिरूपेणायोग्यताज्ञानेन प्रतिबन्धादिति शेषः। **अत्यन्तासति**। विपरीततया निश्चिते कलहादिस्थल इति शेषः। **अबाधादिति**। कलहादिस्थलेऽनासत्वादिना वाक्यार्थज्ञानस्य भ्रमत्वेऽपि श्रौतज्ञानस्योक्तरीत्या भ्रमत्वज्ञानरूपबाधासंभवादित्यर्थः। **स्वतः प्रामाण्यनिश्चलाम्**, स्वतःसिद्धप्रमात्वान्निरशंकाप्रामाण्यं विपरीतज्ञानरूपस्यायोग्यताज्ञानस्य प्रतिबध्यत्वं न परोक्षापरोक्षसाधारणरूपेण; प्रत्यक्षस्थले इच्छाविषयस्याप्रतिबध्य[1]त्वेन तद्व्यावृत्तरूपेणैव प्रतिबध्यत्वात्। **अतएवोक्तं** मणिकृता 'प्रत्यक्षादावुत्पन्ने ज्ञानेऽप्रामाण्यमासज्यते बाधेन अनुमितौ तूत्पत्तिरेव प्रतिबध्यत' इति। एवंच परोक्षस्यानुमितित्वेनैव प्रतिबध्यत्वम्; विपरीतधीसत्वे उद्बोधकसत्वे मानाभावेन तदभावादेव स्मृत्यभावोपपत्तेरनुगतोद्बोधके मानाभावात्। भावे वा परोक्षत्वजातौ मानाभावेनाक्लृप्तत्वात्। बाधस्थले शाब्दबोधस्य निश्चितत्वात्। अन्यथा कलहादिस्थले शाब्दान्य-

[1] बाध्य—ख.

वेदान्तकल्पलतिकायामस्यार्थस्य प्रपञ्चो द्रष्टव्यः । एतेन—चरमज्ञानमिथ्यात्वेऽपि न तद्विषयस्य मिथ्यात्वम्; ज्ञानमिथ्यात्वस्य विषयमिथ्यात्वासाधकत्वात् । अद्वैतज्ञाने व्यभिचारादिति—निरस्तम्; श्रुत्यैव द्वैतमात्रनिषेध्यत्वबोधनात् । अद्वैतज्ञानविषये च मिथ्यात्वबोधकाभावादेव सत्यत्वम्, न तु ज्ञानमिथ्यात्वादिति न किंचिदेतत् । ननु—द्वैतज्ञानाद्वैतज्ञानयोरभेदे कथं बाध्यबाधकभावः? न च व्यावहारिकभेदमात्रेण सः; द्वैतज्ञानस्यापि बाधकत्वापत्तेरिति—चेन्न; व्यावहारिकभेदमात्रस्य बाधकत्वाप्रयोजकत्वात् । यद्धि परीक्षितप्रमाणभाव-

---

विशिष्टधीसामग्रीकल्पने गौरवाच्छाब्दव्यावृत्तरूपेणैव प्रतिबध्यत्वम् । योग्यताज्ञानहेतुत्वे च न मानम्; इतरकारणसत्त्वे तद्विलम्बेन शाब्दधीविलम्बस्यादृष्टत्वादिति भावः । एतेन द्रागेव श्रुत्या सर्वाद्वैतबोधनेन । श्रुत्यैवेत्येवकारार्थो विवक्षितः, स च ज्ञानमिथ्यात्वस्य विषयमिथ्यात्वसाधकत्वव्यवच्छेदः । श्रुतेर्बोध[1]कत्वं तु नात्र विवक्षितम्; तेनैतेनेत्यनेन न पौनरुक्त्यम् । ज्ञानमिथ्यात्वादिति । विषयमिथ्यात्वमिति शेषः । व्यावहारिकभेदमात्रस्येत्यादि । यद्यप्यद्वैतज्ञानोत्पत्तिद्वितीयक्षणे द्वैतमात्रोच्छेदः; जीवन्मुक्तानामपि भेदप्रतिभासो भ्रमत्वेन निश्चीयमानत्वान्न बाध्यबाधकभावादितद्धीप्रयोजकः; न हि विरोधिविषयकत्वांशे बाध्यत्वाभिमतद्भिन्नत्वांशे वा भ्रमत्वेन निश्चीयमानज्ञाने बाधकत्वं भ्रमत्वज्ञानोत्पादकत्वं तद्धीर्वा कस्यचित्संभवति, तथापि द्वैतवादिनां विचारदशायां पापासंभावनादिदोषेण द्वैत[2]ज्ञानस्यैव भ्रमत्वशंकास्पदत्वात्, तेषां द्वैतज्ञानस्यातथात्वादतथाभूतभेदज्ञानसंभवात्, तान्प्रत्य

---

[1] बोध—ग.　　[2] णाद्वैत—ग.

त्वेन बलवत्, तद्बाधकम्, यत्तु सन्दिग्धप्रमाणभावत्वेन दुर्बलं तद्बाध्यमिति व्यवस्थायां द्वैतज्ञानस्य दुर्बलत्वेनाबाधकत्वस्याद्वैतज्ञानस्य च बलवत्त्वेन बाधकत्वस्य शब्दप्रत्यक्षबलाबलविचारे दर्शितत्वात् । यत्तु 'आपो वा इदं सर्वं भूत' मित्यादिश्रुतिः, 'विमतम्, जलाभिन्नम्' प्रतीतत्वाज्जलवदि' त्यनुमानं वा स्वबाधकस्य जलाभेदं गृहीत्वा निर्बाधं सत्त्वदुक्तन्यायेन सर्वस्य जलाभेदं बोधयेदिति तन्न; जलाभेदबोधनेऽपि

---

द्वैतज्ञानं बाधकत्वेनोपन्यस्य, बाधकत्वाभिमतप्रत्यक्षादिस्वरूपोच्छेदकत्वादिरूपश्रुतिप्राबल्योपन्यासेन श्रौताद्वैतज्ञाने भ्रमत्वशंकाया अनवकाशं चोपन्यस्य, तेषामद्वैतज्ञाने बाधकत्वज्ञानमद्वैतज्ञानवता कारयितुं शक्यते । न च–तदा द्वैतवादिभिरद्वैतज्ञानिनं प्रति व्यवहारव्याघातोऽद्वैतज्ञानेनापादनीयः, यदि त्वमद्वैतज्ञानवान् तदा व्याहतद्वैतव्यवहारः स्या इतीति वाच्यम्; बाधकाद्वैतज्ञाने सत्यपि द्वैतसंस्काराधीनप्रतिभासस्य प्रारब्धकर्मकृतप्रतिबन्धेनानुच्छेदाद्द्वैतवादिकृतापादनस्याद्वैतज्ञानिनं प्रति निष्फलत्वात् । न हि तस्य द्वैतधीर्भ्रमत्वेनानिश्चीयमाना संभवति, न वापाद्यापादकादिभेदे[1]श्रद्धास्ति येन तत्तत्पराभूतये प्रभवेत् । तदुक्तं खण्डने —

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि ।

असिद्धभेदाद्व्याघातः पतेदापादकात्कुतः ॥ इति ॥

अत एवाद्वैतज्ञानिनं प्रति पक्षादौ बाधकत्वोपन्यासो व्यर्थ इति भावः । **सन्दिग्धप्रमाणभावत्वेन** अनिश्चितप्रामाण्यकत्वेन प्रामाण्यानिश्चायकशून्यत्वेन । **दर्शितत्वादिति** । अत्राप्युक्तरीत्याद्वैतदर्शिनं प्रति प्रत्यक्षादेर्बाधकत्वेनोपन्यासासम्भवादि[2]प्रयोजकेन सर्वाद्वैतबोधकत्वेन

[1] भेदे श्र. प्र. [2] ससम्भवादि–ग.

बाध्यबाधकयोरैक्याबोधनात् बाधकस्य बाधकत्वोपपत्तेः। ऐक्यज्ञानभेदज्ञानयोर्बाध्यबाधकभावस्य जलाभेदज्ञानेनानपायात् । बाधकाभेदो हि बाधकत्वाभावे प्रयोजकः; बाधकस्य स्वबाधकत्वादर्शनात् । अतो न बाध्यबाधकैक्यज्ञानस्य जलाभेदज्ञानसाम्यम् । एतेन—सर्वं सर्वस्माद्भिन्नमिति मद्वाक्यमद्वैतवाक्यतज्ज्ञानतद्विषयाणां तेभ्यो भेदमादौ गृहीत्वा निर्बाधं सत्सर्वभेदे पर्यवस्यतीति—निरस्तम्; बाध्यबाधकयोरभेदे बाधकत्वाभाववत् भेदेऽपि बाधकत्वं न स्यादित्यत्र हेत्वभावात् पूर्वोक्तदोषा-

---

प्राबल्यमद्वैतश्रुतेरित्युक्तत्वादिति शेषः । तथा च पूर्वं बलाबल[1]विचारे संभावितदोषत्वेन प्रत्यक्षस्याबलत्वं, तदभावेन श्रुतेर्बलत्वं[2] दर्शितम्, अत्राप्युक्तं बलाबलम्, बलाबलेनैव बाध्यबाधकत्वव्यवस्थेत्यपि तत्रैवोक्तम् । अतो न सा भेदमात्रेणेति भावः । **बाध्यबाधकयोरिति** । आपः सर्वमिति ज्ञानपृथिव्यादयोनापइति ज्ञानयोरित्यर्थः । **ऐक्यज्ञानभेदज्ञानयोः** । उक्तज्ञानयोः । **बाधकाभेदः** बाधके बाध्याभेदः । **बाध्यबाधकैक्येति** । सर्वाद्वैतेत्यर्थः । **तज्ज्ञान[3]तद्विषयाणां** अद्वैतज्ञानाद्वैतानाम् । **तेभ्यः** अद्वैतवाक्यमद्वैतज्ञानमद्वैतं चेत्येतेभ्यः । **निर्बाधं सदिति** । बाधकत्वाभिमतद्वैतज्ञानं तद्भिन्नत्वेन निश्चितमतस्तेन भेदज्ञानं न बाध्यतया निश्चेतुं शक्यत इत्यर्थः। **हेत्वभावादिति**। अद्वैतज्ञानं तत्वेन साक्षिगृह्यमाणं तद्भिन्नत्वेन गृहीतुमशक्यम् । शक्यत्वे वा तदभिन्नत्वेनाप्यद्वैतश्रुत्यैव तस्य गृह्यमाणत्वात्तदकिंचित्करम् । शाब्दबोधे च विपरीतधीर्न विरोधिनीति भावः । **पूर्वोक्तेति** । अद्वैतज्ञानिनं प्रति तादृशवाक्यस्य सश्रद्धभेदज्ञानाजनकत्वात्तदुपन्यासो व्यर्थः, भेदज्ञानस्य स्वस्मादपि भेदसिद्ध्या बाधकत्वाभावापत्त्या स्वातिरिक्ते[4]

---

[1] पूर्वबलावल–ग. [2] बलं–ख. ग. [3] तज्ज्ञान–ख. अज्ञान–ग. [4] स्वातिरिक्त–ग.

**चेति दिक् । सर्वासत्त्वं सर्वमिथ्यात्वान्नातिरिच्यते ; अतः**

सर्वभेदविषयकत्त्वं वाच्यम् ; तथाच स्वान्यस्मिन्सर्वस्मिन्सर्वभेदरूपे वाक्यार्थे वाच्येऽद्वैतज्ञानिनं प्रति पदार्थाप्रसिद्धश्चेत्यादीत्यर्थः । अत्रापो वेत्यादिनारायणीयोपनिषद्वाक्यस्य स्तुतिपरत्वेनाभेदपरत्वाभावाद्भेदप्रत्यक्षापेक्षया दुर्बलत्वम् । सर्वं न सर्वमित्यादिवाक्यस्याप्यनाप्तवाक्यत्वेन घटो न घट इत्यादिवदपार्थकत्वेन च दुर्बलत्वमित्यपि बोध्यम् । ननु 'इदं वा अग्रे नैव किंचनासीत्' इति श्रुतिः, विमतम्, असत्, प्रतीतत्वादि'त्यनुमानं वा स्वबाधकत्वाभिमतस्य सत्यज्ञानादिवाक्यस्यासत्वमादौ गृहीत्वा, सर्वासत्वं बोधयेदित्यत आह—**सर्वासत्वमिति** । अपरोक्षतया ज्ञायमानानां पृथिव्यादीनामलीकत्वासंभवेन सर्वस्य मिथ्यात्वरूपासत्वमेव वाच्यम् ; तथाच मिथ्याभूतस्याप्यर्थक्रियाकारित्वेन पूर्वोक्तत्वात्, मिथ्यात्वेन ज्ञायमानस्यापि सत्यादिवाक्यस्य प्रमाजनकत्वज्ञानसंभवात्, अतथात्वज्ञानाधीनाप्रमात्वज्ञानस्य सत्यादिवाक्यजन्यज्ञाने[1] वक्तुमशक्यत्वात्, अन्यथासत्व[2]वाक्यादावप्यसत्वज्ञानेन तज्जन्यज्ञानेऽप्यप्रमात्वधीसंभवात्, अद्वैतज्ञानिनं प्रति स्वान्यदसदित्युपन्यासस्य विशेषणाप्रसिद्ध्या कर्तुमशक्यत्वात्, द्वैतमात्रोच्छेदकत्वादिना 'सत्यं ज्ञानमद्वितीयमि'त्यादिवाक्यस्य सर्वासत्वादिवाक्याद्यपेक्षयोक्तरीत्या प्राबल्याच्छून्यवादापत्तेश्च नोक्तापत्तिरित्यर्थः ॥

ननु साक्षिणोन्तःकरणाद्यभेदभ्रमो न स्यादिति पूर्वोक्तापत्तिर्नेयुक्ता ; इष्टत्वात्, अत एव मम मन इति भेदप्रत्यक्षमिति—चेन्न ; सुखादौ मनो निमित्तमात्मोपादानमित्यत्र गौरवान्मन एवोपादानमिति तद्धर्मसुखादेरात्मधर्मत्वस्यानुभूयमानस्य मनआत्मतादात्म्याध्यासं विनानुपपत्तेः साक्षितादात्म्यं विना मम मन इति प्रत्यक्षस्याप्यसंभवात् ।

---

[1] ज्ञानेन—ख. [2] सर्वासत्व—ख. ग.

दृग्दृश्ययोः सम्बन्धस्याध्यस्ततादात्म्यरूपत्वेनोक्तत्वात् । अन्यथा क्लृप्त-जातीयसम्बन्धकल्पने गौरवम्; कार्यमात्रे निमित्तत्वस्येवोपादानत्वस्या-प्यात्मन्यविनिगम्यत्वेन स्वीकारात्, प्रकृतिश्चेत्यादिन्यायात् । मम मन इत्यत्र तु गतिरुक्तसाक्षि[1]वृत्तित्वेनाध्यस्ते मनःपरिणामसंकल्पादौ धीः साक्षिभेदविषया चेति न दोषः । यत्तु—साक्षिणा स्वस्मिन् स्वेतरभेद-ग्रहः, तत्र च स्वेतरत्वेन यत्किंचिदितरज्ञानमपेक्ष्यते[2] इतरत्वं च भावरूपं सत्त्वप्रतिद्वंद्वि, न तु भेदरूपम्; येनानवस्था स्यादिति—तन्न; भावरूपेतरत्वे मानाभावात्, तेन रूपेण भेदग्रहेऽपि तदन्य-रूपेण भेदाग्रहादभेदस्य श्रुत्या ग्रहे बाधकाभावाच्च ॥

ननु—अर्थापत्तिसाधारणमेकं घटपटभेदोपपादकं नास्तीत्युक्त-मयुक्तम्; घटपटभेदसिद्धिविरोधी यो भेदाभावस्तद्विरहस्य तत्वसंभवात्, यथा हि घटपटभेदज्ञानस्याद्वैतज्ञानेन भेदाभावे घटपटभेदासिद्धिस्तथार्था-पत्तेरद्वैतज्ञानादभेदेप्युक्तरीत्या नेत्यर्थापत्तिभेदोऽपि तदुपपादक इति—चेत्, भ्रान्तोसि; न ह्युक्तभेदसिद्धिविरोधितावच्छेदकमेकमस्ति; येनानु-गतरूपेण निवेशः । नच—भेदज्ञाननिष्ठं यद्बाधकत्वं तदनुमापकत्व-रूपं तदेकं भेदज्ञानमैक्यज्ञानं प्रत्यबाधकम्, तदैक्यात्, यद्यदैक्यवत्त-त्तदबाधकम्, यथा संप्रतिपन्नमिति व्याप्तेर्भेदज्ञानरूपपक्षधर्मतायाश्च ज्ञानविषयत्वरूपस्योक्तानुमापकत्वस्यैक्य सत्वादिति—वाच्यम्; भेद-ज्ञाने स्वैक्यस्यापि तादृशैक्यतया तद्भेदस्यापि तदभावत्वेन रूपेण भेदज्ञाने सिद्ध्यापत्तेः भेदमात्रस्य तादृशत्वेन विशेषणस्याव्यावर्तकत्वा-पत्तेः, तादृशैक्यस्य सिद्ध्यसिद्धिभ्यां व्याघाताच्च । तस्मादिदं भेदज्ञान-मद्वैतज्ञानाबाधकत्वव्याप्याद्वैतज्ञानैक्यवदित्यादिज्ञानविषयत्वरूपं तत्त-ज्ज्ञाननिष्ठाबाधकत्वानुमापकत्वं तत्तज्ज्ञानभेदेनाननुगतमेव विरोधिशेषि-

[1] गतिरुक्ता साक्षि-ग. [2] मपेक्षते-ग.

'सर्वमसदि'ति प्रत्यवस्थानमनवकाशम्। ननु श्रुत्या सर्वस्य मिथ्यात्वं वा बोध्यते, ब्रह्माभिन्नत्वं वा। आद्ये 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यं न स्यात्; सत्यानृतयोरैक्यायोगात्। द्वितीये 'इदं रजतम्' 'गौरोऽह' मित्यादिभ्रमाणां प्रमात्वं स्यात्; आत्मनि देहादिभेदस्यानृतता द्व्यावृत्तेश्च बोधकानां वेदान्तानां 'नेदं रजत'मित्यादि बाधकस्य चाप्रामाण्यं स्यात्, घटज्ञानेनैव तदभिन्नब्रह्मतद्भेदादेः

---

ताव[1]च्छेदकमिति क्वानुगमः? एवंच 'घटो न पट' इत्यादिज्ञानस्य भेदविषयकत्वं प्रति तादृशज्ञानस्याद्वैतज्ञानाद्भेदत्वेन[2] तादृशभेदग्राहकार्थापत्तेरद्वैतज्ञानाद्भेदत्वेन एवमन्येषामपि तस्माद्भेदत्वेनोपपादकत्वमेव युक्तम्; अननुगमस्याविशिष्टत्वात्। तदिदमुक्तं उपपादकतावच्छेदकनानात्वादित्यादि। यदपि सर्वाद्वैतज्ञाने श्रौते बाधविषया प्रतिबन्धकत्वासंभवेऽपि भेदज्ञानं तत्र भ्रमत्वं कल्पयत्विति तन्मौढ्यम्; भ्रमत्वकल्पकत्वरूपबाधकत्वस्यैवोक्तदौर्बल्येन निरस्तत्वात्॥

श्रुत्या "एकमेवाद्वितीयमि'त्यादिश्रुत्या। मिथ्यात्वमिति। अद्वितीयादिपदस्य द्वितीयाभाववत्वेन ब्रह्मणोऽवान्तरतात्पर्येण बोधकत्वमित्युक्तत्वादित्यादिः। ब्रह्माभिन्नत्वमिति। सर्वस्येत्यनुषज्यते। अद्वितीयादिपदस्य द्वितीयत्वादिरूपविशेषेण निषेधपरत्वादित्यादिः। ब्रह्माभिन्नत्वं ब्रह्मणि प्रसक्तस्य भेदसामान्यस्य निषेधः। भेदसामान्ये च सत्तास्फूर्तिरूपेण ब्रह्मणोऽनुगमात्तत्र तत्प्रसक्तिः। ब्रह्माद्वितीयत्वस्य तद्भेदव्यापकतया तन्निषेधात्तन्निषेधो बोध्यः। एकादिपदस्य तु भेदशून्यरूपकेवलवाचकस्य सङ्कोचाभावात्साक्षादेव सर्वभेदशून्यबोधकत्व-

[1] विरोधिताव-ग. [2] दकत्वेन-ग.

सर्वस्यापि वस्तुतो ज्ञातत्वेन सार्वज्ञ्यम्, वेदान्तानां वैयर्थ्यम्, सद्यो मोक्षश्च स्यात्, सुखदुःखबन्धमोक्षभेदाभेददूषणभूषणजयपराजयभ्रान्तिप्रमादेरपि वस्तुतो भेदाभावेन सर्वसङ्करापत्त्या स्वक्रियास्वक्षयायस्ववचनाविरोधाश्च स्युरिति चेन्न; आद्ये मृद्घटः' इदं रजत' मित्यादाविव उपादानोपादेयभावेनापि सामानाधिकरण्योपपत्तेः। द्वितीये वस्तुतो भेदाभावेऽप्याविद्यकभेदमादाय सर्वव्यवस्थोपपत्तेः। न च—भेदस्याप्यनाविद्यकब्रह्माभिन्नत्वेनाविद्यकत्वायोग इति—वाच्यम्; आविद्यकत्वस्याप्याविद्यकस्यैवाङ्गीकारात्, अथाविद्यकत्वस्यापि ब्रह्माभिन्नत्वात्कथमाविद्यकत्वमिति चेत् तस्मिन्नपि तस्य कल्पितत्वादिति गृहाण। ननु—मुक्तावाविद्यकस्यापि भेदस्याभावेनानन्दस्य दुःखाभिन्नत्वेनापुरुषार्थत्वापातः' तत्तदसाधारणस्वभावस्य तत्र तत्राभावेऽपि तत्तद्भेदे पारिभाषिकोऽयमभेदो भेदे पर्यवस्येत्।

---

मिति ध्येयम्। ऐक्यायोगादिति। तथाच श्रुतीनां पूर्वापरविरोध इति भावः। प्रमात्वमिति। सर्वस्य ब्रह्मणा सर्वाभिन्नेनाभेदात्सर्वाभिन्नत्वादित्यादिः। द्वितीयपक्षेऽपि 'नेह नाना,' 'अनिन्द्रियमविषयम्' इत्यादिश्रुतिभिर्मिथ्यात्वेन बोधिते प्रपञ्चे 'सर्वं खल्विदं ब्रह्मे'ति वाक्येन ब्रह्माभेदबोधानुपपत्तिर्बोध्या। उपादानोपादेययोः सामानाधिकरण्ये पराभ्युपगतं दृष्टान्तमाह—मृद्घट इति। सत्यमिथ्यासामानाधिकरण्ये पराभ्युपगतं तमाह—इदमित्यादि। भेदाभावेऽपीति। व्यवहारकाले तदनिश्चयादिति शेषः। तत्तदसाधारणेति। अपुरुषार्थत्वादिरूपदुःखादिमात्रधर्मेत्यर्थः। तत्र तत्र मोक्षानन्दादौ। तत्तद्भेदे तत्र तत्र[1]

---

[1] तत्र—ग.

असाधारणरूपेण भेदमभ्युपेत्य सद्रूपेण भेदनिषेधेऽपीष्टापत्तिर-प्रसक्तनिषेधश्चेति–चेन्न; एकस्यामेव ब्रह्मव्यक्तौ तत्तदसाधारण-स्वभावानां कल्पितत्वेनासत्वात्सर्वकल्पनानिषेधकाले कल्पित-धर्मावच्छिन्नभेदाभेदादिप्रसक्तेरयोगात्। अत एव नाप्रसक्तप्रति-षेध इष्टापत्तिर्वा; 'सद्द्रव्यं', 'सन् गुण' इत्यादिप्रतीत्या प्रस-क्तानां तत्तद्धर्माणां ब्रह्मणि प्रतिषेधात्। अतः सर्वधर्मशून्याया एकस्या एव सद्व्यक्तेश्चिदानन्दरूपायाः प्रतिपादनान्न पारिभाषि-कोऽयमभेद इति सिद्धम्। तदेवं 'सर्वं ब्रह्माभिन्न' मिति मते

---

दुःखाद्यभेदे। सद्रूपेण भेदनिषेधे सद्भेदस्य निषेधे ब्रह्मणीत्यादिः। तत्तदसाधारणस्वभावानां दुःखत्वापुरुषार्थत्वादीनां द्वैतानां असत्वात् निषेधयोग्यत्वात्। भेदाभेदादीति। भेदो दृष्टान्तत्वेनोक्तः। उक्तश्रुते-र्भेदसामान्यानिषेधकत्वपक्षे द्वितीयमात्रस्य भेदव्याप्यत्वेनार्थान्निषेधः। 'नेह नाना,' 'अस्थूल'मित्यादिश्रुत्यन्तरेण वा स इति भावः। अतएव द्वैत-सामान्यस्यैकस्यां ब्रह्मव्यक्तौ कल्पितत्वादेव। तत्तद्धर्माणामिति। द्रव्य-गुणादीनां भेदसामान्यस्य चेत्यर्थः। यत्र यत्र भेदप्रसक्तिस्तस्य सद्रूप-तादात्म्यावगमाद्ब्रह्मणि सद्रूपे भेदभेद्यसामान्ययोः प्रसक्तिरिति भावः। सर्वधर्मशून्याया इति। भेदभेद्यसामान्याभाववत्स्वरूपव्यावृत्ताकारेणोप-लक्षिताया इत्यर्थः। न पारिभाषिक इति। यादृशभेदज्ञानं यद्विषयक-प्रमोच्छेद्यम्, तादृशभेदस्य विरोधी अभेदः स एव। भेदमात्रज्ञानं चाखण्डोक्तव्यक्तिप्रमोच्छेद्यम्, तादृशव्यक्तेः सर्वाधिष्ठानत्वादुक्तव्या-वृत्ताकारोपलक्षितत्वाच्च तदुत्तरं सत् द्रव्यं गुणो नेत्यादिबुद्धेरुच्छेदौ-चित्यात्, सदन्यभिन्नं नेत्यादिशब्दजन्यबुद्धेः परेणापि तदुच्छेदकत्व-स्वीकारादिति, सैव व्यक्तिर्भेदसामान्यविरोध्यभेद इति भावः। सर्वं ब्रह्माभिन्नमिति मते। द्रव्यगुणादिकं द्रव्यत्वादिनावच्छिन्ना या

**मिथ्याभूतस्य ब्रह्मभेदेऽपि सन्मात्रमेव ब्रह्माभिन्नमिति मते वा न प्रत्यक्षादिविरोधः । नापि पूर्वोत्तरविरोधः ॥**

इत्यद्वैतश्रुतेर्बाधोद्धारः.

ब्रह्मभेदाभावानुयोगिता तद्वच्छ्रुत्यापि तादृशाभेदो बोध्यत इति मते । मतान्तरमाह—**मिथ्येति** । 'एकमेवे'त्यादिश्रुत्या मिथ्यात्वेन बोधिते-त्यर्थः । प्रपञ्चस्येत्यादिः । **सन्मात्रमेव ब्रह्माभिन्नं** सत्त्वेन सदेव ब्रह्मभेदाभावानुयोगि न द्रव्यत्वादिना द्रव्यादि ; द्रव्यत्वाद्यवच्छिन्नानु-योगिताकभेदस्य सत्त्वावच्छेदेनापि प्रसक्तेरुक्तत्वात्सत्त्वावच्छेदेनापि भेद-निषेधः श्रुत्या बोध्यते । भेदस्य मिथ्यात्वेन तदभावस्य द्रव्यादौ सत्त्वेऽपि तदनुयोगिता न द्रव्यत्वादिना ; किंतु सत्त्वेन, सैव 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिविषयः ; द्रव्यत्वादिसर्वधर्मविशिष्टस्य कल्पित-भावरूपसत्तादात्म्यादभिन्नसत्तादात्म्यरूपं सामानाधिकरण्यमेव ब्रह्मणो द्रव्यादौ भातीति स्वीकारात् । अथवा प्रपञ्चे ब्रह्मणः कल्पितं यद्भास्यतानियामकं भावरूपं तादात्म्यं तदेवोक्तश्रुतिविषय इति भावः । **न प्रत्यक्षेत्यादि** । आद्यमते उक्तरीत्या'नेदं रजतमि'त्यादिप्रत्यक्षस्य द्वितीयमते'सर्वं खल्विदमित्यादिश्रुतिविरोधात्पूर्वोत्तरश्रुतीनां विरोधो नेत्यर्थः । अथवा—तथाच प्रत्यक्षादिविरोधात्पूर्वोत्तराविरोधाच्चेत्यादिना श्रुतेरद्वैतपरत्वाभावशङ्का कृता पूर्वम्, तत्र प्रत्यक्षाद्यविरोधमुपसंहृत्य पूर्वापरविरोधं श्रुतौ वक्ष्यमाणं निरसितुं प्रतिजानीते—**नापीति** ॥

यत्तु—प्रमेयत्वादिरूपेण भेदं [1]श्रुतिर्वक्तीति—तन्न ; उक्तं हि खण्डने—'एकपदमुक्त्वा यदेवकारमाद्त्ते श्रुतिस्तेन सात्यन्तिकाभेद-

[1] णाभेदं—क. ग.

## अथ एकमेवेत्यादिश्रुत्यर्थविचारः

ननु—यद्यपि 'सलिल एको द्रष्टा अद्वैत' इत्यत्र सलिलशब्दस्य तत्सादृश्यात्स्वच्छत्वमात्रपरत्वात् तस्य च सर्वमलासंसर्गित्वस्वरूपस्याद्वैतेऽप्युपपत्तेः 'सदेव सोम्येदमग्र आसी-

---

परा'स चाखण्डाचिदेव, किंचिद्विशिष्टस्य विवक्षितत्वे गौणाभेद एव तथा स्याद्विशिष्टकेवलयोर्भेदसत्वेन तस्य भेदसामान्याविरोधित्वात्। यत्तु—सर्वं वस्तु स्वस्मादभिन्नमित्यद्वैतवाक्यार्थः, एवं 'नेह नाने'त्याद्यर्थोऽपि स एव; घटादिव्यक्तौ क्षणिकवादेन नानात्वप्रसक्तेरित्यादि—तन्न; ब्रह्माद्वैतस्यैव प्रकरणत्वात्[1]उक्ताभेदस्य भेदसामान्याविरोधित्वात्, भेदभेद्यसामान्यनिषेधेन मुख्याभेदबोधने बाधकाभावाच्च ॥

इत्यद्वैतश्रुतेर्बाधोद्धारः.

### अथ एकमेवेत्यादिश्रुत्यर्थविचारः

सलिलशब्दस्य सलिलवाचकशब्दस्य। तेन तत्सादृश्येत्यत्र तत्पदस्य प्रक्रान्तसलिलबोधकत्वम्। स्वच्छत्वेति। त्वंपदार्थशोधकप्रकरणे जलरूपमुख्यार्थस्यान्वयासंभवाद्द्रष्टृपदेन ब्रह्मोक्त्वा तत्र सप्तम्यन्तत्वं सलिलपदस्य कल्पयित्वा जलाधेयत्वान्वयकल्पनस्यायुक्तत्वमिति भावः। एतेन—सलिलवत्स्वच्छीभूत इति बृहदारण्यकभाष्यव्याख्या न युक्ता; लाक्षणिकत्वेऽपि सलिलपदस्य क्लीबत्वात्, 'आप एवेदमग्र आसंस्ता आपः सत्यमसृजन्ते' त्यादिबृहदारण्यकात् 'आपो वा इदमग्र आसन्सलिलमेवे' त्यादिश्रुत्यन्तराच्च प्रकृते सलिलपदस्य सप्तम्यन्तत्वौचित्याच्चेति—परास्तम्; सृष्टिवाक्ये जलान्वयसंभवेऽपि प्रकृते तदसम्भवात्।

---

[1] प्राकरणिकत्वात्—ग.

दि' त्यत्र चाग्रपदस्य 'तदैक्षत नामरूपे व्याकरोदि' त्यादेश्च कालेक्षणनामरूपात्मकप्रपञ्चप्रापकस्याविद्यकद्वैतविषयकत्वेन वास्तवाद्वैतविरोधित्वाभावः; तथापि 'सदेव सोम्येदमग्र आसीदि' त्यनेन इदंशब्दोदितस्य विश्वस्य सद्भेदेन सत्वमुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः, न हि 'सदासी' दित्यस्यासदासीदित्यर्थ इति—चेन्न; सद्व्यतिरेकेण नासीदित्यर्थस्यैव

---

क्लीबत्वत्यागस्तु छान्दसत्वात्। सलिलपदस्य सादृश्यरूपसंबन्धार्थकार्शआद्यच्प्रत्ययान्तस्य पुंस्त्वसंभवाच्च। 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्य' इत्यनुशासनादाचारार्थकक्विबन्तसलिलशब्दात्पचाद्यच्प्रत्ययेन पुंस्त्वसम्भवेन सलिलमिवाचरतीत्यर्थकस्य सलिल इत्यस्य सम्भवाच्च न्निरोधित्वाभाव इति। नचाद्वैतस्याप्रसत्वादिद्वैतसंबन्धासंभवरूपविरोधासंभवेऽपि एकमेव सदद्वितीयमित्यादिपदैरखण्डस्वरूपस्य बोधो विरोधिविषयताशालिद्वितीयबोधात्मको न संभवतीति —वाच्यम्; द्वितीयसंबन्धज्ञानं प्रति महावाक्यजन्यज्ञानस्यैव मूलोच्छेदकत्वेन विरोधित्वात्। मूलोच्छेदकज्ञान एवारोपितभावना[1]नङ्गीकारात्। ग्राह्याभावाकारज्ञानविषया तूक्ताखण्डज्ञानं न तद्विरोधि; द्वितीयस्य तत्वेनाभानात्। एकरूपेण तत्तदभावाकारकस्यैव 'घटो न घट' इत्यादेर्विरुद्धत्वाद्बाधितस्यापि शाब्दत्वपक्षे तस्याप्यस्वीकाराच्च। सद्भेदेनेत्यादि। सद्भेदविशिष्टप्रपञ्च आसीदित्यर्थं प्रतिपाद्येत्यर्थः। तन्निषेधे प्रपञ्चनिषेधे। व्याघातः सत्त्वस्य प्रपञ्चे प्रतीतस्य व्याघातः। ननु—सदभिन्नस्य सत्वमिवाद्वितीयत्वं न विरुद्धम्; सदात्मनोभयोः संभवात्तत्राह— न हि सदासीदित्यादि। असदासीदित्यर्थ इति। सद्रूपमात्रस्य न

---

[1] भाना—क. ग.

**निषेधार्थत्वात् । विवृतं चैतद्भाष्यकारादिभिरारम्भणाधिकरणे । न च—सद्व्यतिरेकेणासत्वोक्तौ सदात्मना सत्यत्वमागच्छतीति—वाच्यम्; आगच्छतु नाम, को हि ब्रह्माभिन्नस्यासत्वसाधनाय**

---

सत्वमुच्यते, किंतु सदभिन्नप्रपञ्चस्य । तथाच तन्निषेधेनासत्वरूपमिथ्यात्वलाभात्सत्वस्य चासीदित्यनेन लाभाद्विरोध इत्यर्थः ॥

घटादिकं स्वोत्पत्तिपूर्वं मृदेवासीदित्यादौ यथा घटाद्यभेदोपलक्षितमृदेवासीदित्यर्थस्तथा प्रकृतेऽपीदमभेदोपलक्षितं सदेवाग्र आसीदिति सदेवेत्यादेरर्थ इत्याशयेनाह—**सद्व्यतिरेकेणेति** । सदन्यत्वरूपणेत्यर्थः । सदन्यदिति [1]शेषः । **निषेधार्थत्वात्** सदेवेत्येवकारार्थत्वादद्वितीयादिपदार्थत्वाच्च । एवंच प्रपञ्चे सत्वसंबन्धो बुध्यत एव । नेति न विरोधशङ्का; विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदकत्वं च युक्तमिति सदन्यसामान्येऽग्रकालसत्वाभावो बुध्यत इति भावः । **एतत्** सदेवेत्यादि वाक्यम् । आरम्भणाधिकरण इति । 'सत्वाच्चावरस्ये' त्यादिसूत्रेष्विति शेषः । तत्र हि प्रागुत्पत्तेः कारणात्मनैव सत्वं कार्यस्य; 'सदेव सोम्येदमग्र आसीदि' त्यादाविदंशब्दगृहीतस्य कार्यस्य कारणे [2]सामानाधिकरण्यादित्यादिकमुक्तम् । **असत्वोक्तौ** अग्रकालासत्वोक्तौ अद्वितीयादिपदैः सदन्यसामान्यस्य निषेधोक्तौ च । **सदात्मना** सदभिन्नत्वेन । **ब्रह्माभिन्नस्येति** । ब्रह्माभिन्नत्वेनेति शेषः । उक्तश्रुत्येत्यादिः । तथाचोक्तश्रुत्या सदन्यत्वेन श्रुत्यन्तरेणानुमानादिना च सदभिन्नत्वेनापि मिथ्यात्वसिद्धिः । सर्वस्य दृश्यस्य केनाचिद्रूपेणोक्तश्रुत्या मिथ्यात्वसिद्धये[3]वास्मदिष्टसिद्धिरिति भावः । नन्वग्रकालासत्वस्याग्रकालीननिषेधप्रतियोगित्वस्य वा सदन्यसामान्ये बोधेऽपि न मिथ्यात्वसिद्धिः; व्याकृत-

---

[1] सदन्य इति–ग. [2] कारणेन–ग. [3] सिद्धौ–ग.

प्रपञ्चस्य स्वकाले स्वसमानाधिकरणनिषेधप्रतियोगित्वासिद्धेरिति — चेन्न; उक्तसत्व[1]प्रतियोगित्वयोर्न प्रकृते धीः, किंतु इदमभिन्नमग्रे यदासीत्तत्सदेव एकमेवाद्वितीयमित्येवमुद्देश्यविधेयभावस्य विवक्षितत्वात्। अग्रे सदनुवादेनाखण्डसदद्वितीयविधानेनाग्रेसत्वेनानूद्यमानस्याखण्डसदद्वितीयस्यैव। तथाचावान्तरतात्पर्येणाद्वितीयादिपदैः[2] सदन्यसामान्यमिथ्यात्वबोधो न व्याहतः; सदन्यनिषेधेऽद्वितीयपदेन बोध्यमानेऽग्रकालानन्वयात्, यदग्रे इदमभिन्नमासीदित्येव कालान्वयात्। इत्थं च सद्व्यतिरेकेण नासीदित्यस्यैव निषेधार्थत्वादित्यत्र मूलवाक्येऽपि यदासत्तित्सदन्यन्नेत्यस्य सदेवासीदित्येतदर्थत्वात् तत्सदन्यशून्यमित्यस्याद्वितीयादिपदार्थत्वादित्यर्थः। एवंचाग्र आसीदिदमिति पदानि न व्यर्थानि। अग्रेऽसदेव कार्यस्य स्वरूपमिति शून्यवादस्य निरासाय तेषामनुवादत्वात्सदेकमेवाद्वितीयमित्युक्ते तच्छ्रवणमात्रेण मूढानां व्युत्पाद्यानां सन् घट इत्यादि प्रत्यक्ष[3]विरोधभ्रमेण व्यामोहात्तन्निरासार्थमवान्तरतात्पर्यविषये द्वितीयाभावेऽनन्वितार्थकस्याग्रह इत्यादेरुक्तत्वात्। न चैवमपि द्वितीयाभावस्य व्याप्यवृत्तित्वालाभान्न मिथ्यात्वसिद्धिरिति —वाच्यम्; सद्रूपे प्रतीतस्य तस्य परिच्छेदकाकाङ्क्षायां संकोचकाभावादेव सर्वकालस्यैव परिच्छेदकतया कल्पनात्। एवकारस्यावृत्या द्वितीयाभावायोगव्यवच्छेदबोधकत्वेन यदा यदा सद्रूपं तदा द्वितीयाभाव इति व्यापकत्वलाभाद्वा विशेष्यतावच्छेदकविशिष्टस्यैकव्यक्तिमात्रत्वे यत्र यत्र विशेष्यतावच्छेदकं तत्र तत्रायोगव्यवच्छेद इति दैशिकव्यापकत्वधियो वैय्यर्थ्यात्। अव्याकृतनामरूपावस्थैवाग्रशब्देन कालरूपाभिधीयत इति कालान्तरस्य तदानीमभावेऽपि न क्षतिः। यदि च इदमिति सामानाधिकरण्यं बाधायाम्, अग्र आसीदिति च न विवक्षित-

---

[1] उक्तसत्व—क. ग. [2] णाद्वितीयादेः—क. [3] प्रत्यक्षादि—क. ग.

प्रवृत्तो यो विभीयात्। अद्वैतवाक्यस्य च षड्विधतात्पर्यलिङ्गवत्तया बलवत्त्वेनाविद्यकद्वैतप्रतिपादकत्वं सृष्ट्यादिवाक्यानामिति श्रवणस्वरूपनिरूपणे वेदान्तकल्पलतिकायामभिहितमस्माभिः। इहाप्यभिधास्यते षड्विधतात्पर्यलिङ्गानि प्रदर्शयद्भिः। अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञयोपक्रमात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्युपसंहाराच्चाद्वैतस्यैव महाप्राकरणिकतया तदनुसारेण तद्वाक्यस्थपदानां व्याख्येयत्वाव-

मिति न कालसंसर्गधीः, तथाचाखण्डसदेव सदेवेत्यादेरर्थ इत्यैतरेयकभाष्यरीतिराश्रीयते तदा नाम्नादिपदप्रयुक्ताशङ्केति ध्येयम्॥

ननु—अतात्विका[1]द्वैतमद्वैतवाक्यस्य तात्विकद्वैतं द्वैतवाक्यस्यार्थोऽस्तु; स्वतः प्रामाण्याविशेषात्, द्वैतवाक्यमध्यस्थाद्वैतवाक्यस्योपांशुयाजवाक्यमध्यस्थविष्ण्वादिवाक्यवत्स्तुत्यादिपरतया नेतुं शक्यत्वाच्चेत्यत आह—अद्वैतवाक्यस्येत्यादि। आविद्यकेति। फलवत्सन्निधावफलं तदङ्गमिति न्यायेन द्वैतवाक्यानामद्वैतवाक्यशेषत्वात्तदनुसारेण कारणव्यतिरेकेण कार्यं नास्तीत्यादिज्ञापनद्वाराऽद्वैतब्रह्मण्येव सृष्ट्यादिवाक्यानां तात्पर्यम्। तदुक्तं शारीरकसंक्षेपे—

अस्यैव तत्वविनिवेदनशक्तिभाजः
संसारमूलविनिवृत्तिफलप्रसूतौ।
सामर्थ्यमस्ति पटुभिः परिबृंहितत्वाद्वे-
दान्तभूमिगतपञ्चविधार्थवादैः॥
सृष्टिस्थितिप्रलयसंयमनप्रवेशव्यापारजात-
कथनच्छलतः प्रवृत्तैः।
सानुग्रहादवगतिः खलु तत्वमादे-
र्वाक्यात्परस्य घटते न ततोऽपरस्मात्॥ इति॥

[1] तात्विका--क. ग.

धारणात् । नानार्थपदानामर्थान्तरोपस्थापकत्वसंभवेऽपि प्रकृतवाक्यार्थानन्वयितया तत्परित्यागेन प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितिपरत्वमेवास्थेयम् । तत्र न द्वितीयमद्वितीयमिति तत्पुरुषाभ्युपगमे न द्वितीयम्, किंतु प्रथमं तृतीयं चेत्यर्थः स्यात्, स च न संभवति; तयोरपि किंचिदपेक्ष्य द्वितीयत्वात्, अतो न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवादरणीयः । न च एकेनैवाद्वितीयपदेन भेदत्रयनिषेधसंभवे एकावधारणपदयोर्वैयर्थ्यमिति—वाच्यम्; विजातीयं किंचिदपेक्ष्य द्वितीयत्वावच्छिन्ननिषेधस्याद्वितीयशब्दार्थत्वात् । अयं चात्र संकोचो बलीवर्दपदसान्निधानाद्गोपद इव सजातीयस्वगतभेदनिषेधकैकावधारणपदसन्निधिप्रयुक्त एव । तदुक्तम्—

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एकावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति ।

---

अपरस्मात् अस्थूलमित्यादितः । पदानां अद्वितीयादिपदानाम् । **प्रकृतेति**। एकमेवाद्वितीयमित्येतदित्यर्थः । **वाक्यार्थेति**। अखण्डब्रह्मरूपेत्यर्थः । प्रथमादिरूपस्याद्वितीयपदार्थस्य न केवलमखण्डवाक्यार्थविरोधित्वम्, किं त्वसंभवादपि निरास इत्याह—**तत्रेत्यादि**। **द्वितीयत्वादिति**। तयोः प्रथमत्वादिना नाद्वितीयपदबोध्यता किंतु द्वितीयभिन्नत्वेन सा च न संभवति; द्वितीयत्वादिति भावः। **भेदत्रयेति**। भेदभेद्यमात्रस्य द्वितीयत्वाददद्वितीयपदेन दृश्यमात्रनिषेधसंभव इति भावः। **अपेक्ष्येति**। विजातीयद्वितीयत्वावच्छिन्नप्रतियोगिताकनिषेधोऽर्थ इति भावः। **संकोचः** द्वितीयपदस्य विजातीयद्वितीयपरत्वम् । **एकावधारणद्वैतप्रतिषेधैरिति**।

**स्वगतभेदो नानात्वरूपजीवेश्वरभेदः। सजातीयभेदोऽत्र द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः। विजातीयभेदो गुणादिभेदः। अथवा जडभेदो विजातीयभेदः। चैतन्यभेदः**

---

एकपदेन एवकारेण द्वैतार्थकद्वितीयपदयुक्तेन प्रतिषेदार्थकनञा चेत्यर्थः। अत्र द्वितीयपदस्य विजातीयद्वितीयलक्षणया तच्छून्यबोधादर्थात्तादृशद्वितीयस्य भेदो निषिध्यते। 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषदि'त्यत्र धातूनामनेकार्थत्वात्, मिषदिति आसीदित्यर्थ[1] मित्यैतरेयभाष्ये व्याख्यानात्तदेकवाक्यतया प्रकृते द्वितीयपदस्यान्यार्थकत्वात्। लक्षणावश्यकत्वे दित्वसङ्ख्यापूरकत्वादित्यागेनात्मान्यविजातीयत्वेन लक्षणाया एव युक्तत्वात्तादृशत्वेन निषेधे बाधकाभावादविनिगम्यत्वाच्च। विशेष्यस्य भेदस्येव विशेषणस्य भेदस्यापि शाब्द एव वा निषेधः। एकपदस्य केवलार्थकत्वेन कैवल्यस्य च स्वान्यशून्यत्वरूपतया प्रकृते संकोचेन जीवेश्वरादिरूपस्वान्यशून्यबोधकत्वाद्भेदनिषेधबोधकत्वम्। एवकारस्याप्यन्यतादात्म्यव्यवच्छेदबोधकत्वेऽपि प्रकृते पृथिव्यादिरूपसजातीयस्वान्यतादात्म्यशून्यत्वबोधकत्वेन विशेषणीभूतानां सजातीयतद्गतभेदानामुक्तरीत्या निषेधबोधकत्वम्। एवंच भेदत्रयस्य पदत्रयेण निषेधोक्तिर्ब्रह्मभिन्नसामान्यमिथ्यात्वे प्रकृतश्रुतेः[2] पर्यवसानोक्तिश्च न व्याहता। यदि च भेदत्रयमात्रस्य प्रकृते शाब्दो निषेधो भेद्यानां त्वार्थ इत्युच्यते, तदा द्वितीयाभावे श्रुतेरवान्तरतात्पर्यसङ्गतावपि भेदमात्रपरतया सङ्कोचे मानाभावः। विजातीयादिभेद्यानामपि द्वितीयादिशब्दैर्बोधनसंभवादिति ध्येयम्॥

ननु—पृथिव्यादि न सजातीयम्; शुद्धब्रह्मणो द्रव्यत्वाद्यनङ्गीकारपक्षे तदसंभवादित्यत्राह—**अथवेति**। **चैतन्यभेद इति**।

---

1 मिषदिति पदमासीदित्यर्थक. इति स्यात्. 2 प्रकृते श्रुतेः–ग.

**सजातीयभेदः। ज्ञानानन्दादिधर्मभेदः स्वगतभेदः । यदि च 'अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वो न गर्दभ' इति महाभाष्यानुसारात्समानजातीय-द्वितीयपरत्वं द्वितीयशब्दस्य, तदा अद्वितीयशब्दस्य सजातीय-भेदनिषेधपरत्वम्; विजातीयस्वगतभेदनिषेधपरत्वं तु एकाव-**

---

स्वभिन्नत्वे सति चिदात्मकत्वं साजात्यं जीवादौ वर्तत इति **तन्निष्ठभेदः** सजातीयभेदः, स च स्वस्मिन्नपि प्रसक्तः, स्वस्य सर्वानुगतत्वादिति भावः । **स्वगतभेद इति** । ज्ञानानन्दादौ स्वरूपे ब्रह्मधर्मत्वस्य कल्पितत्वात्तद्गतभेदः स्वगत इति भावः । व्यावर्तकपदान्तरयुक्तस्य यद्धर्मविशिष्टवाचकपदस्य सन्निहितं द्वितीयपदं तद्धर्मविशिष्टं द्वितीय-मभिधत्ते । तथाचास्य गोर्द्वितीय इत्यादौ व्यावर्तकेनास्येति पदेन युक्तस्य गोपदस्य सन्निहितेन द्वितीयपदेन गोरूपद्वितीयबोधनेऽपि प्रकृते व्यावर्तकपदान्तराभावान्न सजातीयद्वितीयबोधकत्वम् । अतएव 'द्वितीयगामी न हि शब्द [1]एष नः' इत्यादौ द्वितीयसामान्यपरत्वम् । सजातीयव्यक्त्यन्तराभावादपि तस्य न सजातीयपरत्वम् । यद्धर्मविशिष्ट-विषयकबोधे तात्पर्यं तद्धर्मेणैव हि साजात्यं वाच्यम्; न चात्र किंचि-द्धर्मविशिष्टतात्पर्यकं सत्पदमित्याशयेन यदि चेत्यनेनास्वारस्यं सूचितम् । जीवेशादेरिव प्रपञ्चस्यापि कल्पितं चिदात्मकत्वमादाय सजातीयत्व-संभवः । चित्स्वरूपत्वं तु न; जीवादेरप्युपहितादिरूपेण मिथ्यात्वात्, ज्ञानानन्दादेरपि सजातीयत्वम्; कल्पितभेदचिदात्मकत्वयोः सत्वात्, तथाच सजातीयनिष्ठभेदोपहितरूपेण ज्ञानानन्दादेर्जडानां च निषेध-संभवाद्रूपान्तरेण स व्यर्थः । किंच सजातीयस्वान्यत्वादिना पदत्रयस्य लक्षणैव वाच्या; द्वितीयगामीत्यादौ स्वान्यत्वेन लघुरूपेणाप्याजानिक-

---

[1] एव–ग.

धारणपदयोर्यथेष्टं व्याख्येयम् । अथवा द्वितीयपदेनैव भेदत्रय-निषेधः, एकावधारणपदे तु सङ्कोचशङ्कापरिहाराय । यत्तु केन-चित्प्रलपितम्—द्वितीयशब्दः सहायवाची ; 'असिद्वितीयोऽनु-ससार पाण्डवमिति प्रयोगात्, असिद्वितीयः असिसहायः' इति महाभाष्योक्तेश्च ; तथाचाद्वितीयमसहायमित्यर्थोऽस्तु । एवमेकशब्दस्यापि नानार्थत्वेनाविरुद्धार्थमादायोपपत्तौ न मिथ्यात्वपर्यवसायिताऽऽस्थेया । तथा च—'एके मुख्यान्य-केवला' इत्यमरः, एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथम-समानवाचीति 'एको गोत्र' इति सूत्रे कैयटः । 'ष्णान्ता

---

प्रयोगात्तादृशगुरुरूपेण शक्त्यसंभवात् । तथाच पदत्रयलक्षणापेक्षया मुख्यवृत्त्या स्वान्यत्वेन द्वितीयपदाद्बोधः, पदान्तरं तु तदसङ्कोचतात्प-र्यकमिति युक्तम् । न च पदान्तरादेव तेन रूपेण बोधोस्तु, द्वितीयपदं तु तदसङ्कोचतात्पर्यकमिति किं न स्यदिति—वाच्यम् ; तथा सत्यक्षर-त्रयात्मकाद्वितीयपदनञ्पदयोः स्वार्थपरत्वाभावकल्पनापातात् । एकादि-पदानां मुख्यत्वं तु न विनिगमकं 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वमि'ति न्यायेन बहुषु मुख्यवृत्त्यबाधस्योचितत्वात् । अद्वयानन्दविज्ञानघन एवास्मीत्यादिश्रुत्यन्तरेष्वद्वयपदस्यापि मुख्यत्वा-च्चेत्याशयेनाह—अथवा द्वितीयेति । अन्यप्रधानेत्यादि । 'प्रजा-मेका रक्षत्यूर्जमेका' इत्यादावन्यार्थः, 'एकपुरुषो धनुष्मा'नित्यादौ प्रधानार्थः, 'एकहल्मध्येऽनादेशादे'रित्यादावसहायार्थः, 'एको द्व-वित्यादौ सङ्ख्यार्थः, 'एकेऽल्पप्राणा'इत्यादौ प्रथमार्थः, अल्प-प्राणा लघुप्रयत्नोच्चारणीया वर्णाः । 'तेनैकदिं'गित्यादौ समानार्थः, 'एतावेकधना'वित्यादौ साधारणार्थोऽपी'ति पदमञ्जरी । ष्णान्ते-त्यादि । अष्टानामित्यत्र 'अष्टन आ विभक्तौ'वित्यात्वे कृते नान्त-

षडि' ति सूत्रे महाभाष्यकारोऽपि एकशब्दोऽयं बह्वर्थः, अस्ति संख्यार्थः, अस्त्यसहायवाची, अस्त्यन्यार्थ इत्यादि व्याख्यातवान् । तथाच जीवादिभ्योऽन्यत्वं प्राधान्यं वा एकशब्दात्वाभावात् षट्संज्ञा न स्यात्ततश्च 'षट्चतुर्भ्यश्चे' ति नुडपि न स्यादित्याशङ्क्य षट्संज्ञायामुपदेशवचनं शताद्यष्टनार्थमिति समाधाय, अथवा षकारनकार[1]सङ्ख्या, षट्संज्ञकेत्यर्थ इति समाधानान्तरमुक्त्वा, तर्हि एकास्ता इत्यादौ, 'षड्भ्यो लुगि' ति लुक्स्यादित्याशङ्क्य, एकशब्दोऽयं नानार्थ इत्याद्युक्त्वा योऽन्यार्थे वर्तते तस्यैवायं प्रयोग इति समाहितम् । प्राधान्यं वेति । यद्यपि प्राथम्यादि[2]कमपि तदर्थः परेणाशङ्कितम्, तथापि सर्वकार्यमूलकारणत्वेनोक्तेनैव तल्लाभात् अविद्यादृष्टादिसहायापेक्षत्वेनासहायत्वासंभवात् अद्वितीयत्वविरोधेन सख्याद्यसंभवादेकवचनेनैव प्राप्तिसंभवाच्च सर्वलीलाविग्रहाणां नानाविधतत्तत्कार्यकारित्वेन कार्यतः साम्यासंभवात् । सर्वशरीरावच्छिन्नेशव्यक्तेरेकत्वेनैव गुणतः सम्याभावात् तद्भिन्नत्वे सति तद्गुणजातीयगुणवत्वस्यैव गुणतः साम्यत्वात् असहायत्वं कैवल्यम्, तच्चैकहल्मध्य इत्यादौ सङ्कोचकप्रमाणवशाद्धलन्तरायुक्तत्वादिरूपम् । प्रकृते सङ्कोचकाभावात्स्वान्यसामान्यशून्यत्वमेवेति तदर्थकमेकपदमस्मदिष्टम् । प्राथम्यं तु प्राधान्यमेव । 'तेनैकदिगि' ति सूत्रेषु सुदाम्ना पर्वतेन सहैका समाना दिगस्या इति सौदामनीत्युक्त्या समानार्थकत्वकल्पनं तु न युक्तम्; एकजातीयत्वेन समाने गौणप्रयोगसंभवात् । एकधनावित्यत्राप्येकजातीययथेष्टविनियोगार्हत्वेन गौणप्रयोगः । तथाच सुदाम्नः सदृशदिक्सौदामनी सुदामाख्यपर्वतयुक्तदिक्सदृशदिग्युक्तेति यावत् । चैत्रमैत्रौ सदृशधनौ चैत्रो मैत्रीययथेष्टविनियोगार्हधने यथेष्टं विनियोक्तेति यावत् । अत एवामरः प्रथमाद्यर्थे नोक्तवानित्यतश्चान्यत्वं

[1] नकारआकारान्ता—ख. ग. [2] प्राधान्यादि—ग.

**र्थोऽस्तु । एवमन्यान्यपि श्रुतिपदानि व्याख्येयानीति, तत्पूर्वोक्तयुक्तिभिरपास्तम् । विस्तरेण च वक्ष्यते तात्पर्यनिरूपणे । तदेवं सद्रूपे ब्रह्मणि पदत्रयेण भेदत्रयनिषेधात्तद्भिन्नमिथ्यात्वे**

---

प्राधान्यं चेति द्वयमेवाचार्यैरुक्तम् । तदुभयमपि यद्यप्यद्वितीयपदविरुद्धत्वेन सङ्ख्यातुल्यं, तथाप्येकवचनात्सा प्राप्ता । तत्तु स्रष्टृत्वादिना प्राप्तमपि न शब्दादित्यतः सा नोक्तेति ध्येयम् । **एवमन्यानीति ।** 'नेह नाने' त्यादीनि ब्रह्मणः प्रपञ्चे पृथग्भावनिषेधकानि । अथवा 'महान्तं विभुमि' त्यादिनोक्तानां धर्मादीनां नानात्वेन निषेधः । ब्रह्मणि विभुत्वादिरूपं धर्मादिकं नानासन्नास्तीत्यर्थः[1] । **पूर्वोक्तेति ।** अद्वैतब्रह्मणः प्राकरणिकतया तदनुसारेण नानाभूतस्य किंचनेति पदोपस्थापितदृश्यमात्रस्य निषेधौचित्यात्, अन्यथा विभुत्वादिधर्मादीनां निषेधे किंचनेत्यस्य संकोचापत्तेः । नानापदोक्तस्य पार्थक्यस्य निषेधे ब्रह्मण्येव पार्थक्यनिषेधाद्ब्रह्म नाना न किंत्वेकमित्यर्थः स्यान्नतु प्रपञ्चो न ब्रह्मणः पृथगित्यर्थः । ब्रह्मण्युक्तनिषेधस्तु 'यदेवेह तदमुत्र' त्यादिपूर्ववाक्ये कठवल्यां सिद्ध एव ॥

अथ—यदेवेत्याद्युक्तप्रपञ्चमात्रं 'नेह नानेत्यत्रत्येहपदेनोच्यत इति तत्र य इह नानेवेत्यत्रत्येहशब्दोक्तब्रह्मणः पार्थक्यं निषिध्यत इति—चेन्न; पूर्वोक्तेहशब्दसमानार्थकत्वे इहशब्दो हि न प्रपञ्चमात्रं वदेदित्यमुत्रेत्यप्युच्येत, य इहेत्यत्रत्येन च इहशब्देन पार्थक्यप्रतियोगितया न ब्रह्मोपस्थितिसंभव इति, प्रतियोगिविशेषानुपादानात्पार्थक्यसामान्यस्य प्रपञ्चे निषेधेऽस्मदिष्टसिद्धिः, किंच नेति पदवैयर्थ्यं च । अथ—गुणगुण्याद्यवयवावयवीत्यादिप्रयुक्तं यद्ब्रह्मणः प्रपञ्चे पार्थक्यं तन्नानाविधं किमपि नास्तीत्यर्थेन तत्सार्थक्यमिति—चेन्न; 'नानाविष्णुं मोक्षदो

---

1 ना नास्तीत्यर्थः—ग.

नान्यदेव' इत्यादिप्रयोगेषु पार्थक्यार्थकस्य नानाशब्दस्य विनाशब्दवन्निपातत्वेन स्वार्थिकनञ्प्रत्ययान्तनञ्स्वरूपत्वेन 'विनञ्भ्या'मित्यादिसूत्रे महाभाष्याद्युक्तत्वेन च तत्र किंचनेति नामार्थस्याभेदान्वयस्याव्युत्पन्नत्वात्। न हि विष्णुं किंचन विना देव इति घटं किंचन विना पट इति च प्रयुञ्जते। यत्तु—विभुत्वादेः प्रकृतत्वात् 'एवं धर्मान् पृथक्पश्यन्' इत्यादिवाक्यशेषाच्च किंचनेति विभुत्वादिधर्मशरीरादि[1]-परमिति—तन्न;

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति॥
एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति॥
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति॥
एवं मुनेर्विजानत आत्मा भवती'ति वाक्ये—

ब्रह्मधर्मदृश्यमात्रस्य दृष्ट्वा तन्मात्राप्तिरित्यनेन दृश्यमात्रं निन्दित्वा जलक्षिप्तजलदृष्टान्तेन ब्रह्मैक्यज्ञानेनात्मनो ब्रह्मत्वोक्तेस्तत्रत्यधर्मपदस्य दृश्यमात्रार्थकत्वात्, पूर्वं 'पराचः कामाननुयन्ति,' ध्रुवमध्रुवेषु,' 'स्वप्नान्तं जागरितान्तं च,' 'भूतेभिर्व्यजायते'ति दृश्यमात्रस्य प्रकृतत्वात् 'ईशानो भूतभव्यस्ये'ति परत्राप्युक्तत्वात्, 'तदु नात्येति कश्चने'ति पूर्वोक्तकिंशब्दोपात्तस्य तस्य किंचनेत्यनेन ग्रहणौचित्यात्। तस्माद्यदेवेह तदमुत्रेत्यादि ब्रह्मण्येव सर्वप्रपञ्चप्रसक्तिमुक्त्वा ब्रह्मणि वक्ष्यमाणे प्रपञ्चनिषेधे सत्यप्यन्यत्र प्रपञ्चसत्त्वशङ्कां निरस्य एतद्वै तदिति पूर्वं ईशानो भूतभव्यस्येति पश्चाच्च सन्निहितं ब्रह्म इहेत्यनूद्य, किंचनेत्यनेनोक्तस्य दृश्यमात्रस्य निषेधः। नानेति नञ्शब्दप्रकृतिकं भेदरूपपार्थक्यार्थकम्; भेदे च प्रतियोगित्वं निषेधाधिकरणत्वेनोपस्थितस्यैव न तु निषेध्यस्यासंभवादिति ब्रह्मभिन्नं किमपि ब्रह्मणि नास्तीति कठवल्लीवाक्यार्थः। एवं बृहदारण्यकादिस्थले इह[2] नानेत्यत्रापि बोध्यम्।

---

[1] शरीरत्वादि-ग.  [2] स्थनेह-ग.

यदेवेहेत्यादौ इह जीवोपाधावमुत्र ईश्वरोपाधौ यदेवामुत्र ईश्वरोपाधावपि तदेव नानेव स्वल्पभेदमपि 'इवोपमायां स्वल्पत्वे' इत्यमरात्, इदमुक्तं जीवब्रह्मैक्यम्, मनसा आगमाचार्योक्तिसंस्कृतेन। एकत्वोपयोगिपदार्थ शुद्धिमाह—नेह नानेति। इह उक्तोपाधिसंबन्धे चैतन्ये इति भाष्यानुसारिव्याख्यानमविरुद्धम्। ननु—नानाशब्दस्य भिन्नार्थकत्वेऽपि 'न जीर्णमलवद्वासाः स्नातकः स्या'दित्यादाविव विशेषणस्य नानात्वस्य निषेधोऽस्तु 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इत्युक्तेरिति—चेन्न; अप्राप्तत्वे विधेरिव बाधकाभावे निषेधस्यापि विशेष्ये संभावाद्विनिगमकाभावाच्च क्षीणशक्तित्वाभावात्। अन्यथा विशिष्टविधिनिषेधयोरुच्छेदापत्तेः बाधकाभावश्चोक्त एव। दृष्टान्तेतु वासोनिषेधे नग्नतानिषेध एव बाधकः। किंच भेदरूपस्य विशेषणस्य निषेधोऽपि त्वदनिष्टः। न हि त्वया ब्रह्मप्रपञ्चयोरत्यन्ताभेदः स्वीक्रियते। त्वदङ्गीकृतो विशेषोऽपि भेदस्यैव नामान्तरम्॥

यत्तु नेह नानास्तीत्यस्य ब्रह्मणि विनाभूतं किमपि नास्तीत्यर्थः; 'विनञ्भ्यां नानाञौ न सह' इति सूत्रेण न सहेत्यर्थकाभ्यां नानाञोर्विधानात्, तथाचाविनाभूतं[1] सर्वं तत्रास्तीति लभ्यते। न हि वह्निं विना धूमो नास्तीत्युक्ते धूममिथ्यात्वं लभ्यत इति तन्न; 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरोक्तेर्वर्जनं विनाशब्दार्थः। तच्च नञर्थस्यात्यन्ताभावस्य भेदस्य वाधिकरणसंबन्धः वह्निं विना धूम इत्यादौ वह्न्यत्यन्ताभाववत्संबन्धः। नीलं विना तेजोरूपवत्, विना वायुः स्वरूपं विना किमपि नास्तीत्यादौ, नीलादिभिन्नतदात्म्यं प्रतीयते, नानाशब्दस्य तु भिन्नसंबन्ध एवार्थः। तत्रापि भेदांशमात्रं शक्यम्, अधिकरणसंबन्धस्त्वधिकरणनिष्ठसंबन्धरूपो विशे-

[1] विनाभूतं—ग.

षणतात्वादिरूपेण वाक्यार्थः । 'अन्यथा नञ्पदस्य तत्र शक्त्यभावेन नानाञ्प्रत्यययोः स्वार्थिकत्वेन भाष्यादावुक्तत्वेन च नानापदार्थविषया तल्लाभासंभवात् । नानाविष्णुं मोक्षदो नेत्यदावपि मोक्षदो विष्णुभिन्नो नेत्यर्थः । उक्तसूत्रस्याप्यत्रैव तात्पर्यं, उक्तामरोक्तिमात्रेण नानाशब्दस्य विनाशब्दसमानार्थकत्वे पृथक्छब्दस्यापि तदापत्तेः । मन्मते त्वभावव-त्संबन्धस्य वर्जनशब्देनोक्तत्वात् । पृथक्पदस्य तद्बोधकत्वेप्युक्तरीत्या भिन्नत्वरूपेण पृथक्तागुण[1]रूपेण वाऽभाववच्छक्यम् । विनाशब्दार्थे प्रयोगाभावस्तु नानाशब्देऽपि तुल्यः; तस्य तथा प्रयोगसत्वेऽपि विनाशब्दस्येव भिन्नतादात्म्यार्थकत्वस्यापि संभवात् भिन्नात्मकं किमपि नास्तीत्यर्थे बाधकाभावात् । ननु—ब्रह्मणि निषिद्धमपि दृश्यमन्यत्र सत्वसंभवान्न मिथ्या; 'यस्मिन्द्यौः पृथिवी' त्यादिना ब्रह्मणि प्राप्तस्य तत्र निषिद्धत्वेन मिथ्यात्वोक्त्या तु तस्यैव शास्त्रस्य विरोध इति—तन्न[2] कारणत्वान्यथानुपपत्तिप्राप्तब्रह्मसंबन्धस्योक्तशास्त्रेणानुवादाद्धर्मादि-शास्त्रस्येव तच्छास्त्रस्यापि निषेधशास्त्रेण बाध्यत्वाच्च । ननु—सर्वदृश्यानां ब्रह्मणः शरीरत्वेन विशेषणत्वाद्विशिष्टं ब्रह्माद्वितीयमित्यद्वैतश्रुत्यर्थः । अविमान[3]मद्वैतमुपासनार्थं वैराग्यार्थं वोक्तमिति वेति—चेन्न[4]; एकमेवा-द्वितीयमित्यादेः शुद्धब्रह्मप्रकरणस्थत्वात् विशिष्टाद्वैतस्याशब्दार्थत्वात् 'तमेव विदित्वेत्यादिश्रुत्या शुद्धस्यैव ज्ञेयत्वेनोक्तत्वात् इहेत्यादेरपि शुद्धब्रह्मबोधकत्वात् उपासनादेरश्रूयमाणत्वाच्च । अथाद्वितीयशब्देन दृश्यमात्रनिषेध इत्ययुक्तम्[5]; 'आत्मा वा इदमेक एवाग्र आसीन्नान्य-त्किंचन मिष' दित्यादौ दृश्यस्य मिषत्वेन निषेधादत्रापि तथा वाच्य-त्वात् 'छागो वा मन्त्रवर्णा, दितिन्यायात्पश्वादिसामान्यशब्दस्य विशेष-परत्वत् । किंच द्वितियशब्दः समद्वितीये व्युत्पन्न इति न तस्य तद्-

[1] पृथक्तु—ग. [2] चेन्न—ग. [3] अविद्यमान—क. ग. [4] क्तामिति—चेन्न—ग. [5] इत्युक्तम्—ग.

र्थत्वे सङ्कोचः । 'एक एवाद्वितीयोसावश्वमेधे क्रतुष्वपीत्या[1] दिस्मृतौ लोके च तथा प्रयोगेपि[2] 'एक एवाद्वितीयो भगवांस्तत्सदृशः परो नास्तीति श्रुतेः

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ।
भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ।

इति स्मृत्युक्तव्याख्यानमपि तत्र मानमिति—चेन्न । आत्मा वेत्यादौ धातूनामनेकार्थत्वात् ।मषदित्यस्यासीदित्यर्थ इति भाष्ये व्याख्यानात् अद्वितीय इति पदोपसंहारस्य मिषदित्यस्योन्मिषदित्यर्थकतया व्याकृतं किंचनान्यदग्रे नासीदित्यर्थस्य च सम्भवेनाविरोधाच्च । अत एवासदेवेदमग्र आसी' दिति श्रुत्यन्तरे 'असद्व्यपदेशा' दित्यादिसूत्रे व्याकृतमेवासीदित्यर्थ उक्तः । द्वितीयशब्दस्य तु सङ्कोचेनैव सजातीयान्यबोधकत्वोपपत्तौ तत्र पृथग्व्युत्पत्तिकल्पने मानाभावः । सजातीये सङ्कोचोऽपि यत्र किंचित्प्रकारेण बोधे स्वतन्त्रतात्पर्यं साधारणधर्मोपादानं वा तत्रैव, यथा 'अयं राजा अद्वितीयः' 'अश्वमेधेऽद्वितीयः' इत्यादौ, प्रकृते तु न तथेति तत्र मानाभावः । सर्वोत्तमत्वादेरद्वितीय इति स्मार्तव्याख्यानं त्वविरुद्धम्; अथवा जडभेद इत्याद्युक्तपक्षे सर्वजडाधिष्ठानत्वस्यैव सर्वोत्तमत्वरूपत्वात् भेदाभेदनिवृत्तिशब्देन ब्रह्मभेदाभेदयुक्तजीवेश्वरादिनिषेधस्योक्तत्वात् विशिष्टकेवलयोर्भिन्नसत्ताकभेदाभेदयोः स्वीकारात् । उक्तस्मार्तव्याख्यानादप्येकपदादेरन्याद्यर्थकत्वमपास्तम् । यत्तु—नानाशब्दस्यानेकवाचकत्वाद्भावप्रधानत्वादनेकत्वमर्थः, तथा च ब्रह्मण्यनेकत्वं नेति नानेत्यस्यार्थ इति, तल्लक्षणापत्त्या एकवचनप्राप्तत्वसम्भवादिना च निरस्तं ज्ञेयम् । अनेकाश्रये ब्रह्मण्यनेकनिषेधे चानेकमिथ्यात्वं सिद्धमेवेत्यास्तां विस्तरः ॥

[1] वश्वमेधक्रतुष्वपीत्या—ग. [2] प्रयोगेऽपि—ग.

**पर्यवसितं 'एकमेवाद्वितीय' मिति वाक्यम्। एवमन्या अपि श्रुतयः स्मृतयश्च ग्रन्थविस्तरभयान्नोदाहृताः। स्वयमेव सूरिभिराकरे द्रष्टव्याः॥**

**इत्यद्वैतसिद्धौ सर्वाद्वैतश्रुतेरद्वैततात्पर्यकत्वनिर्णयः**

एवमन्या अपीति। 'यत्र त्वस्य सर्वमात्मैवाभू' दिति श्रुतिरपि सर्वमिथ्यात्वे मानम्; अस्य प्रमातुः यत्र तत्वदर्शनकाले सर्वाभेदोपलक्षित आत्मैवाभूत् आत्मान्यन्नाभूदित्यर्थात्प्रमातृस्वरूप आत्मान्यसंबन्धिन्यात्मान्याभावसंबन्धलाभात्। अथवा सर्वमात्मेति बाधायां सामानाधिकरण्यम्; तथाच सर्वाभावोपलक्षित आत्मा यत्राभूदित्यर्थः। सर्वपदस्यात्मान्यसर्वपरत्वेनासङ्कोचलाभार्थमेवकारः। तथाचोक्तोपलक्षिताखण्डात्मार्थकस्यावान्तरतात्पर्येणात्मनि तदन्यसर्वाभावबोधनान्मिथ्यात्वपर्यवसायित्वम्। 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इत्यादावपीयं रीतिः। नन्वेतद्वाक्यात्पूर्वं 'यथा सैन्धवखिल्य' इत्यादिना सैन्धवखण्डस्य समुद्र इव विज्ञानघनस्य जीवस्य ब्रह्मणि स्थितिर्मोक्षो न त्वैक्यमिति सिद्धान्त उक्तः। न ह्यत्र समुद्रो जलराशिः किंतु जलखातो वरुणो वा; पूर्ववाक्ये सर्वासामपां समुद्र एकायनमित्युक्तेः, नचायमेवा[1]पामयनम्, नचेश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैन्धवखिल्यस्य जीवस्थानीयस्याभेद[2], न चा[2]पामित्यनेनोक्तानां मुक्तस्थानीयानामपां च[3]समुद्रजलस्थानीया बहवो मुक्ता एकस्वभावाः, वरुणवदपां खातवद्वा भगवाननन्तोऽपार इत्येवं सिद्धान्तमुक्त्वा 'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा' इत्यत्राविनाशीत्यनेनात्मनाशो मोक्ष

[1] न चाप एवा-क. ग. [2] न चा-ग. [3] मपाम्, उक्तं च-क. ग.

इति बौद्धमतं अनुच्छित्तिधर्मेत्यनेनाशेष[1]गुणोच्छेदो मोक्ष इति वैशेषिकमतं च निरस्य, 'यत्र हि द्वैत' मित्यादिना द्वैते सति रूपादेरीशस्य चेष्टस्य ज्ञानसंभव इत्युक्त्वा, यत्रत्वस्ये' त्यादिनाऽद्वैतमते तदसंभव उक्तः । प्रकृतश्रुतेरद्वैतमतपरत्वे नास्त्युच्छित्तिर्येषां तेऽनुच्छित्तयस्तादृशा धर्मा यस्यासावनुच्छित्तिधर्मेत्यर्थे विरोधादनुच्छित्तिधर्मो यस्येत्यर्थे अविनाशत्यिनेन पौनरुक्त्यम्, अनुच्छित्तिपदेन वेष्ट[2]सिद्धेर्धर्मपदवैयर्थ्यं च। एवं ' सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदे ' त्यत्रात्मनः सर्वाधारत्वोक्तिः, यथा दुन्दुभेरित्यादि यथार्द्रैद्धाग्नेरित्यादिदृष्टान्ताश्चासङ्गताः । न हि दुन्दुभ्यादौ तच्छब्दादिरध्यस्तः, किंतु तन्निमित्तक इति—चेन्न । यथा सैन्धवेति वाक्ये ब्रह्मैक्यं मोक्ष इत्यस्यैव सिद्धान्तस्योक्तत्वात्, यथा सर्वासामपामित्यादौ प्राकृतलयदृष्टान्तपरवाक्ये समुद्रपदस्य जलसामान्यपरत्वेन सैन्धववाक्येऽपि तथात्वात्, सैन्धवखिल्य उदके प्रास्त इत्येव श्रुतिपाठात्समुद्रपदस्यैव प्रकृते विरहाच्च । न च—पूर्वं मुक्तानां[3] ब्रह्मणि स्थितौ सर्वासामपामित्यादिना दृष्टान्तस्योक्तत्वादिदानीं मुक्तस्य[4] ब्रह्मणि स्थितौ दृष्टान्तपरे सैन्धववाक्येऽप्युदकपदं समुद्रपदेन पूर्वोक्तार्थकमिति—वाच्यम्; सर्वासामित्यादौ प्राकृतलये सैन्धववाक्ये ज्ञानप्रयुक्तलये दृष्टान्तोक्त्या तयोरेकार्थकत्वानावश्यकत्वात् ॥

"यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति"

इति श्रुतौ नदीदृष्टान्तोक्तेः सैन्धवदृष्टान्तप्रकृतवाक्यसमानार्थकत्वासंभवात्तत्रत्यसमुद्रपदसमानार्थकमुदकपदमित्यस्य वक्तुमशक्यत्वात् । 'ब्रह्म वेद ब्रह्मैव भवती ' त्यादिश्रुतिभिर्ब्रह्मैक्यस्य मोक्षत्वोक्तेः । ' यत्र

---

[1] नेनाशेषविशेष-क. ग. [2] पदेनैवे-क. ग. [3] पूर्वमुक्तानां-क. ग.
[4] इदानीमुक्तस्य-क. ग.

ही 'त्यादिना 'न प्रेत्य संज्ञास्ती 'त्यत्रोक्ते विशेषविज्ञानाभावे हेतुकथनेनाद्वैतवादस्य स्फुटत्वात्। त्वदुक्तार्थे च द्वैतमिवेतीवशब्दवैयर्थ्यम्। मन्मते तु व्यवहारकालेऽप्याभासरूपत्वेनाल्पं द्वैतमित्यर्थस्य 'यत्र वस्ये'ति वाक्यार्थोपयोगः। रूपादिज्ञानाभावेपि नित्यानिर्दुःखनिरतिशयानन्दस्याद्वैतमोक्षस्यानावृतस्य परमपुरुषार्थत्वेन श्रुत्या हेयत्वोक्त्य-संभवश्च त्वन्मते स्फुटः। मन्मते अविनाशीत्यस्य न पौनरुक्त्यम्; अविक्रियार्थकत्वेन भाष्योक्तत्वात्, उच्छित्तिरत्यन्तोच्छेदो धर्मः प्रतियोगितया यस्यास्ति तदन्यस्यानुच्छित्ति[1]धर्मशब्देन बोधनात्, यथासन्निवेशे धर्मपदावैयर्थ्यात्। अथवा न विद्यते उच्छित्तिर्विशेषगुणगणोच्छेदरूपो धर्मो यत्रेति विग्रहः। तथाच 'न प्रेत्य संज्ञास्ती 'त्यस्यात्मनाशेऽशेषविशेषगुणोच्छेदे वा मोक्षे तात्पर्यमिति मुह्यान्तीं मैत्रेयीं प्रत्यविनाशीत्यनेनाद्यस्यानुच्छित्तिधर्मेत्यनेनान्यस्य मोक्षत्वं निरस्तम्। तत्र धर्मग्रहणमुच्छेदधर्मकत्वमात्मनो न संभवति; निर्द्धर्मकत्वात्तस्येति ज्ञापनाय, तथाच 'तान्येवानुविनश्यती' त्यनेनोक्तायां तत्वज्ञानप्रयुक्तसर्वद्वैतनिवृत्तौ 'न प्रेत्य संज्ञे' त्यनेन रूपादिविशेषज्ञानाभावे चोक्ते सामान्यविज्ञानमात्ररूपस्य मोक्षत्वं लब्धम्। तस्य च पुरुषार्थत्वं न संभवति; लोके रूपादिज्ञानजन्यसुखस्यैव पुरुषार्थत्वदर्शनादित्याशङ्कायां यत्र हीत्यादिना द्वैते सति लौकिकं क्षुद्रसुखमेव रूपादिज्ञान जन्यम्, तच्च सर्वं सभयम्; 'द्वितीयाद्वै भयम्' 'उदरमन्तरं कुरुते,' 'अथ तस्य भयम्' इत्यादिश्रुतेरित्युक्तम्। आत्ममात्रस्य तु मोक्षस्य परमानन्दत्वात्परमपुरुषार्थत्वमिति यत्र त्वस्येत्यादिनोक्तम्। तस्य चानावृतस्वप्रकाशत्वान्नित्यत्वाच्च न[2] ज्ञानस्वरूपयोरुत्पत्तौ साधनापेक्षेति तत्केनेत्यादिनोक्तम्। द्वितीयाभावादेव तदा तस्य सुखस्य निर्भयत्वं सूचितम्।

[1] तदन्यानुच्छित्ति–क. ग.    [2] स्वप्रकाशत्वान्न–ग.

अतएव -'आत्मैवाभूद्विजानत' इति समानार्थकश्रुत्युत्तरं 'तत्र को मोहः कश्शोक' इत्याद्युक्तम्। एवंचात्ममात्रस्य मोक्षत्वसंभवेन मोक्षद्वैताङ्गीकारः[1] श्रुत्यैवाक्षिप्त इति तदङ्गीकारिणो भ्रान्ता एव। 'सर्वं तं परादादि' त्यादिकं तु नात्मनः सर्वाधारत्वपरम्; किंतु भेददृष्टिनिन्दापरम्;

'नान्यः प्रतिबलो लोके तवार्जुन भविष्यति।

अन्यत्र भीष्मात्' इत्यादौ 'अहिंसन्नन्यत्र तीर्थेभ्यः' इत्यादिश्रुतौ चान्यत्रेत्यस्याव्ययप्रथमान्तत्वादिदर्शनात्। तीर्थेभ्यो याज्ञियेभ्योऽन्यत्र अन्यम्। दुन्दुभेरित्यादिकं तु यथा दुन्दुभेस्तदीयशब्दसामान्यस्याग्रहणकाले तदीयशब्दविशेषाग्रहणम्; तस्मिंस्तेषामध्यस्तत्वा त्तथा ब्रह्मणः सद्रूपस्याग्रहणकाले न द्वैतग्रहणमिति तत्र तदध्यस्तम्। यथाऽऽर्द्रेन्धनविशिष्टाग्न्युपादानको धूमस्तादृशाग्निं विना न तिष्ठति॰ तथा सद्रूपब्रह्म विना न द्वैतं तिष्ठतीति तत्तदुपादानकमित्यर्थकम्। तथा च 'सर्वं तमि' त्यादिवाक्यं 'इदं सर्वं यदयमात्मा' इत्यस्य प्रतिज्ञातार्थस्योपपादकम्। आर्द्रेन्धनस्योपादानत्वात्तद्विशिष्टस्योपादानत्वोक्तिर्विशिष्टस्यैव वन्हेरुपादानत्वाद्वा। यत्तु—अनुच्छित्तिधर्मा यस्येत्यर्थो न युक्तः; 'धर्मादनिच्केवलादि' त्यनेन केवलोपपदयुक्ताद्धर्मशब्दादनिच्प्रत्ययविधानादिति—तन्न; अनुच्छित्तिशब्दस्य पदान्तरायुक्तत्वेन केवलत्वानपायात्त्रिपदबहुव्रीहिव्यावृत्तय एव केवलग्रहणात्, अन्यथा निवृत्तिधर्मेत्यादेरसाधुत्वापातात्। 'यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति, ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा

[1] मोक्ष द्वैताङ्गीकारः—ग.

भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गळस्य हरितस्य लोहितस्य पूर्णाः, अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपम्, तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्, तद्वाऽस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरमि'त्यादि, 'यद्वै तन्न पश्यति, पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्ये'दित्यादिश्रुतेरपि द्वैतं मिथ्या। 'तद्वा अस्यैत'दित्यादि 'अभयं वै जनक प्राप्तोऽसी'ति पूर्वब्राह्मणे यदुक्तमागमप्राधान्येनेह च तर्केण प्रपञ्चितं दार्ढ्याय[1] तद्वै प्रसिद्धमस्य विद्योत्कर्षदशायामहमेव सर्व इति सर्वबाधेनाखण्डात्मतत्वरूपपरब्रह्मरूपेण जाग्रद्वासनया स्वप्ने भासमानतयोक्तस्य रूपमेतत्। 'न कंचन कामं कामयते न कंचन स्वप्नं पश्यती'त्यनेनोच्यमानमतिच्छन्दा निष्काममपहतपाप्मा पापहीनमभयं द्वैतसामान्येन जाग्रद्भयं पश्यति तदत्राविद्यया मन्यत इत्यत्र भयहेतुत्वेनोक्तेन शून्यमित्यर्थः। तथाच यतः स्वभावत एतदभय[2]मतः सुषुप्तौ देहान्तःकरणादिभयवियोगसंभवात्तददर्शनमविद्यायास्तदा दर्शनेऽपि देहादिदृष्टान्तेनैव दृश्यत्वाद्वियोगसंभवज्ञानेन दृश्यमात्रादर्शनरूपमुक्तिदशापि निश्चेतुं शक्यत इति भावः। नचास्यैतदित्यत्रैतच्छब्देन सौषुप्तजीवस्यैवाभयत्वेनोक्तत्वाज्जीवस्वरूपमात्रस्याभयत्वालाभ इति—वाच्यम्; एतदभयमित्यस्याखण्डार्थत्वेन सौषुप्तत्वोपलक्षितस्याभयत्वोपलक्षिताभेदोक्तया अवान्तरतात्पर्येण द्वैत-

[1] प्रपंचितार्थाय-ग.  [2] एतदुभय-ग.

मिथ्यात्वलाभात् । 'स वा एष महानज आत्मा अजरोऽमृतोऽभय' इत्यादौ सौषुप्तमात्रानिर्देशाच्च । आत्मकाममित्यादि—आत्मस्वरूपमेव कामः काम्यसामान्यं यस्य तदात्मकामं आत्माकाम्य[1]बाधायां सामानाधिकरण्यमत एव अकामं कामनाशून्यमत एव शोकान्तरं शोकच्छिद्रमदुःखमित्यर्थः ॥

न बाह्यं किंचन वेद नान्तरमिति यदुक्तं तन्न दृष्टिलोपात्, किंतु दृश्यलयादित्यलुप्तदृष्टिरूप आत्मेत्याह—**यद्वै तन्न पश्यतीत्यादि।** तत्तदा सुषुप्तौ यन्न पश्यतीत्याद्युक्तं तत्पश्यन्नेव न पश्यतीत्यादिरूपम् । प्राज्ञेनात्मना संपरिष्वक्त इत्यनेनोक्तो लयो दृश्यमात्रस्येत्याशयेनाह—**न तु तद्द्वितीयमित्यादि।** ततो द्रष्टुरन्याद्विलक्षणं जडं[2] द्वितीयं विभक्तं स्थूलं यन्नास्ति[3] यद्येन चक्षुरादिना यद्रूपादिकं च पश्येत्, किंत्वविभक्तं संस्काररूपं सर्वमस्तीति शेषः । अतएव 'सुषुप्तिकाले सकले. विलीने', 'स्वमपीतो भवती'त्यादिश्रुत्यन्तराणि । तथाच संस्काररूपेण द्वैतावस्थानस्य लयस्य ब्रह्मण्युक्तत्वात्संस्कारस्य चोपादान एव स्वीकारादुपादानत्वस्य च ब्रह्मण्यपरिणामिनि परिणाम्यविद्योपरागेण वाच्यत्वाज्जडयोरुपादानोपादेयत्वनिर्वाहकतादात्म्यस्य कल्पितत्वाद्विनिगमकाभावेन द्वैतसामान्यस्य कल्पितत्वसिद्धिरिति भावः । **यत्र वा अन्यदिव स्यादित्यादि।** अन्यदिवाभासत्वरूपान्यत्वयुक्तमन्यत्, अतएव स्वप्ने घ्नन्तीवेत्याद्युक्त्वा अविद्यया मन्यत इत्यग्रे आविद्यकत्वेनाभासत्वमुपपादितम् । लोकेऽपि सद्वितीयचन्द्रः[4] प्रसिद्धोऽस्ति यस्य सादृश्यं बुध्येत । तस्मादुक्तः श्रुतिसन्दर्भो द्वैतमिथ्यात्वपरः ॥

ननु—शुक्लस्येत्यादिना नाडीस्थभगवन्मूर्तीनां शुक्लत्वादिवैल-

---

[1] आत्मान्यकाम्य–क. ग. [2] न जडं–ग [3] तन्नास्ति–क. ग. [4] लोकेऽपि सद्वितीयचन्द्र इवेति प्रयोगः, नहि सद्वितीयचन्द्रः प्रसिद्धोऽस्ति–क. ग.

क्षण्यमुक्तमिति तासां भेदः प्राप्तः, तद्वा अस्यैतदित्यत्रापि भगवतो रूपित्वेन रूपाद्भेदः प्राप्तः, अतस्तादृशमूर्तिभ्यस्तद्गतशुक्लादिगुणेभ्यो रूपाच्च ब्रह्मणो भेदं प्राप्तं निरस्यति—**यद्वै तदित्यादि** । हृदयस्य भवतीत्यत्र हृदयशब्दितं पूर्वप्रकृतब्रह्म स्वमूर्त्यादिस्वरूपं यद्वैतं न पश्यति तद्द्वितीयं सन्नास्ति द्वितीयत्वेन यन्न पश्यसि तद्द्वितीयत्वे[1] नास्तीत्यर्थः । आकांक्षया न तु तदिति व्यवहितेनापि संबन्धः । वै यस्मात्पश्यन् सर्वज्ञ एव सन् तन्नपश्यति, न हि तस्य द्रष्टुर्दृष्टेर्विपरिलोपोऽविनाशित्वात्, यत्तु जीवजडात्मकं विभक्तं पश्येत् पश्यति तत्तस्मादन्यदित्यर्थः । अद्वैतमते यद्विभक्तं तन्नास्तीत्यस्यैव पूर्णत्वेन शेषवैयर्थ्यम् । दृष्टिमात्यादिना द्रष्टुर्मात्रादि[2]संबन्धोक्तेः पूर्ववाक्ये श्येननीडयोः स्त्रीपुरुषयोश्च भिन्नसत्त्वयोर्दृष्टान्तत्वस्य प्राज्ञेनात्मना संपरिष्वक्त इति जीवेशभेदोक्तेश्चासङ्गतिरिति—चेन्न; द्वितीयत्वेन[3] यन्नपश्यतीत्यस्यासिद्धत्वेन तदनुवादेन निषेधासंभवात् । न तु द्वितीयमस्तीत्यस्यैव पूर्णत्वेन यद्वै तन्न पश्यतीत्यस्य वैय्यर्थ्यात् । अस्मादुक्त[4]रीत्या सन्निहितान्वयसंभवे व्यवहितान्वयस्यायुक्तत्वात् । हृदयशब्देन 'एतत्सर्वं मनः कामा येऽस्य हृदि श्रिता' इत्यादिपर्यालोचनेन तास्थ्यलक्षणया[5]हृदयस्थमनउक्तेर्ब्रह्मोक्त्यसंभवात् । (हृदयस्य संबन्धी जीवः शोकान् तीर्ण इति त्वदभिमतार्थासंभवात् ।) न च—हृदयमारुणय इत्यस्योपासनापरत्वेऽपि ब्रह्मैव ते इति वाक्यशेषेण ते उदरहृदये ब्रह्मैवेति व्याख्यातेन हृदयशब्दस्य ब्रह्मणि रूढिरिति—वाच्यम्; तस्य प्रत्ययदार्ढ्यपरत्वेन रूढ्यपरत्वात् । 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमि'ति योगार्थस्तु रूढिमूलकलक्षणातो

---

[1] त्वेन नास्ती–क. ग. [2] द्रष्टृमात्रादि–क. ग. [3] द्वितीयत्वे–ग.
[4] तस्मादुक्त–ग. [5] तस्थलक्षणया–ग.

दुर्बलः पश्यन् वै तन्न पश्यतीति हेतोरसिद्धेश्च । न हीशः स्वभिन्नत्वेन स्वमूर्त्यादि न पश्यतीति मानान्तरेण निश्चितम्, प्रत्युतायं हि कृष्णो यो हि[1] पृष्टः शरीरद्वयकारणमित्यादिश्रुत्या मूर्त्यादिभिन्नत्वेनेशोक्त्या विपरीतमेव निश्चितम् । अद्वैतमते च नोक्तवैयर्थ्यम्, न हि न तु तद्द्वितीयमित्यत्र द्वितीयसामान्यनिषेधः; तथा सति तस्य द्वैतसत्त्वेऽपि संभवेन न किंचन वेदेत्यस्योपपादनासंभवात्, किन्तु स्थूलद्वैतस्य निषेधः सूक्ष्मस्य स्थितिश्च प्रतिपाद्यते । दृष्टिद्रष्ट्राद्योगः संबन्धो[2] व्यावहारिक एवोक्त इति नाद्वैतविरोधः । श्येननीडाद्योः स्वसमसत्ताकभेदवत्त्वेऽपि जीवब्रह्मणोर्न तद्वत्त्वलाभः, सर्वांशसाम्यस्याविवक्षणात्प्राज्ञेनात्मनेति स्वरूपार्थकात्मपदेन तयोरभेदोक्तेश्च । यद्यपि सुषुप्तौ चाक्षुषादिवृत्त्यवच्छिन्नचिद्रूपं दृष्ट्यादिकं नास्ति, तथापि तादृशावच्छिन्नत्वयोग्यतामादाय याचकादिपदस्येव दृष्ट्यादिपदस्य प्रयोग इत्यदोषः । त्वन्मते तु दृष्ट्यादेरीशे कथमप्यसंभव इति । न हि द्रष्टुरित्यादि पश्यन्नित्यादि चानुपपन्नम् । शुक्लस्येत्यादिकं तु न शुक्लादिभगवद्रूपैः पूर्णा नाड्य इत्यर्थकम्; शुक्लाद्यन्नरसपूर्णा इत्यर्थस्य मानान्तरसिद्धस्य संभवेन तादृशार्थकत्वे मानाभावात्, तस्माच्छोकोत्तीर्णत्वेन प्रकृतो जीव एव न पश्यतीत्यादौ कर्तेति नास्मदुक्तार्थे विरोध इति । **यथा श्येनो वेत्यादि श्रुत्यर्थः ॥**

'वाचारम्भणं विकारो नामधेय'मित्यादिश्रुतेरपि दृश्यं मिथ्या ॥

ननु वाचारम्भणशब्दो न मिथ्यात्वे रूढः, नापि यौगिकः; वाचा निष्पाद्यकाव्यादेर्मिथ्यात्वासंप्रतिपत्तेः, वागालम्बनमात्रमिति भाष्यव्याख्यानमयुक्तम्; वाचया[3] आरम्भणं यत्रेति व्युत्पत्त्या वागालम्बनत्वलाभेऽपि मात्रार्थालाभात्, नामधेयमित्यस्य नाममात्रार्थकत्वोक्त्या-

[1] योवो हि—क. ग. [2] दृष्टिद्रष्ट्राद्यो. संबन्धो—क ग. [3] वाचा—ग, वाचाया. क.

तेन पौनरुक्त्यं च, 'मृत्तिकेत्येव सत्य'मित्यत्रेतिशब्दो व्यर्थः, अर्थविपर्यासे हीतिशब्दः प्रयुज्यते, उक्तं हि महाभाष्ये 'न वेति विभाषा' इत्यत्र—इतिकरणः क्रियते सोऽर्थनिर्देशार्थस्तद्यथा गौरित्याहेत्युक्ते गोशब्दः स्वार्थं त्यक्त्वा स्वस्यैव बोधकः, तथा न वेत्युक्ते प्रकरणसिद्धं स्वपरत्वं त्यक्त्वा न वेतिशब्दः स्वार्थपरः। तथाचार्थप्रकरणे इतिशब्दः शब्दपरः, शब्दप्रकरणे च व्याकरणादावर्थपरः, प्रकृते चार्थप्रकरणादेवार्थपरत्वसंभवेन नार्थपर इति व्यर्थः। किञ्च विवर्तवादे मृत्पिण्डमृन्मयादिदृष्टान्तानुपपत्तिः। न चाविद्याविशिष्टरूपेण ब्रह्मणोऽपि परिणामित्वात्तदुपपत्तिरिति वाच्यम्; शुद्धब्रह्मण एव ज्ञेयत्वेन तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, अनाद्यविद्यादीन्प्रति ब्रह्मणोऽनुपादानत्वात्तज्ज्ञानेन सर्वज्ञानप्रतिज्ञाविरोधश्च, यथा सौम्य मृदा मृण्मयं ज्ञातमित्यस्यैव पूर्णत्वेन एकपिण्डसर्वपदानां वैयर्थ्यम्, नखनिकृन्तनस्यान्त्यावयवित्वेनानुपादानत्वान्मृत्त्वेन निश्चितेऽपि घटादौ संशयान्मृद इव घटादेरपि व्यावहारिकसत्त्वेन द्वयोरपि मिथ्यात्वान्मृत्तिकैव सत्यमित्याद्यनुपपत्तेः, शुक्त्यादिज्ञानेऽपि रूप्याद्यज्ञानादधिष्ठानीभूतब्रह्मज्ञानात्सर्वज्ञानासंभवाच्चासङ्गतिः। यत्तु—शुक्तौ ज्ञातायां रूप्यं ज्ञातं भवति, सा हि तस्य तत्त्वम्, एवं ब्रह्मज्ञानात्सर्वं ज्ञातम्, तद्धि तस्य तत्त्वमिति भामत्युक्तम्, तन्न; तथासति ब्रह्मज्ञाद्ब्रह्म[1] ज्ञातमित्यर्थे लब्धेऽपि मृद्घटादिदृष्टान्तेन कारणज्ञानात्कार्यज्ञानस्य प्रकृतस्यालाभात्। अधिष्ठानस्यारोप्यतत्त्वरूपत्वाभावाच्च। तत्त्वं हि असाधारणं स्वरूपं धर्मो वा। नचाधिष्ठानमारोप्यस्यासाधारणं स्वरूपं धर्मो वा, आरोप्यान्तरसाधारणत्वात्। अधिष्ठानमात्रस्य तद्रूपत्वे ब्रह्मशुक्त्योरानन्दशुक्तित्वादितत्वं न स्यात्। तस्माद्वाचा वागिन्द्रियमात्रेणारम्भणं यस्य तन्नामधेयं

---

[1] ब्रह्मज्ञानाद्ब्रह्म—क. ग.

विकारः संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात्, व्याकरणसापेक्षेण वागिन्द्रियेण निष्पाद्यं मृत्तिकेत्येव सत्यं नित्यं प्रवाहरूपेणानादीत्यर्थः। न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमित्यत्र सत्यपदस्य नित्ये प्रयोगात्सदृशशब्दस्य[1] प्रकृतस्य सत्यपदत्वेन सदातनार्थकत्वाच्च। एकस्य ब्रह्मणो ज्ञानेन तत्सदृशस्य सर्वस्य ज्ञाने मृत्पिण्डमृन्मया दृष्टान्ताः, प्रधानस्य तस्य ज्ञानेन तद्गुणीभूतस्य सर्वस्य ज्ञाने संस्कृतापभ्रंश-दृष्टान्तः। अपभ्रंशज्ञानाद्धि यत्फलं तच्चाधिकं च सार्वत्रिकव्यवहारा-दिकं संस्कृतज्ञानाद्भवतीति संस्कृतं प्रधानम्। तादृशगुणप्रधानदृष्टान्तता-लाभार्थं च वाचारम्भणमित्यादावपि 'यथा सौम्यैकेने' त्यादिकं 'तनूर्वर्षिष्ठे' त्यादिवदनुषञ्जनीयमिति—चेन्न; वाचारम्भणशब्दस्य हि वागालम्बनमात्रमित्यादिभाष्यव्याख्यानेऽयं भावः—'येनाश्रुतं श्रुत'मि-त्यादिसामानाधिकरण्यं बाधायाम्, अश्रुतमन्यत्सर्वं यदभिन्नं श्रुतस्वरूप-व्यतिरेकेण नास्तीत्यर्थः, तथाचैकं सर्वस्याधिष्ठानमित्यर्थः प्रतिज्ञातः, तत्र मृत्पिण्डव्यतिरेकेण तद्विकारो यथा नास्तीत्यादि दृष्टान्ताः यथा सौम्यैकेनेत्यादिना प्रतिपाद्यन्ते। मृत्पिण्डपदं च मुख्यार्थकैकपद-योगाद्भूमिरूपपिण्डार्थकम्, पिण्डपदं च स्थौल्यविशेषबोधकं मृण्मय-मात्रोपादानतायोग्यतालाभाय, मृण्मयपदं च भूमिविकारमात्रार्थकम्, तथाच भूमिविकारः सर्वो यथा भूमिं विना नास्तीत्यर्थः। भूमिविका-रत्वं च साक्षादेव वृक्षादावक्षतमिति भूमेर्विभक्तपिण्डस्य नानाविकारानु-पादानत्वेऽपि न क्षतिः। यद्यपि भूमिर्नाधिष्ठानं तथाप्यधिष्ठानावच्छेद-कशुक्त्यादिव्यतिरेकेण रूप्यादि नास्तीति व्यवहारवत् भूमिविकारा-दिस्वरूपविचारदशायामाधारतावच्छेदकभूम्यादिव्यतिरेकेण तद्विकारो नास्तीति व्यवहाराच्छ्रुत्या तथोक्तम्। एवं च सर्वमृण्मयमेकमृ-

1. सदाशब्दस्य—ग.

त्पिण्डाभिन्नविज्ञातस्वरूपमित्यपि बाधायां सामानाधिकरण्यम् । तत्र हेतुर्मृत्तिकेत्येव सत्यमिति, मृत्तिका भूमिरिति गृह्यमाणं यत्तदेव सत्यम् । मृत्तिकास्वरूपस्य सत्यत्वाभावात्तदवच्छिन्नसद्रूपस्य दृष्टान्तत्वबोधदशायां मृदो विविच्याज्ञानाद्भूमित्वेन ज्ञायमानत्वेन सद्रूपलाभार्थमितिशब्दः; मनो ब्रह्मेतीत्यादौ ज्ञायमानस्येतिशब्दार्थत्वात् । आद्यर्थको वा इतिशब्दः, 'इतिहेतुप्रकरणप्रकारादिसमाप्तिष्वि'त्यमरात् । तथाच भूमिविकारस्वरूपस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपविचारदशायां सापि मिथ्या, तत्कारणापञ्चीकृतभूतान्येव सत्यानि, तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्या, तत्कारणमेव सत्यमित्याद्यर्थलाभः । नखनिकृन्तनपदं चायःसामान्यपरम्, लोहमणिपदमपि सुवर्णार्थकम्, तयोर्विशेषणमेकपदं चैकजातीयार्थकम्, तदुपादानं चैकजातीयत्वेन सर्वत्र स्वविकारे उपादानत्वसंभवलाभाय, इतिशब्दस्तु तत्राप्युक्तरीत्या व्याख्येयः । 'मृत्तिकेत्येव सत्य' मित्यादौ हेतुः वाचारम्भणं विकारो नामधेयमिति, आरम्भणमसमवायिकारणजन्यत्वमुत्पत्तिर्वा वाचा वाङ्मात्रं विचारासहमिति यावत्, तथाचोत्पत्तिः सतोऽसतो वेति निरूपयितुमशक्यत्वादुत्पन्नसामान्यं विचारासहमिति भावः । तावताप्यनाद्यविद्यादिसाधारण्येन हेत्वलाभादाह—विकारो नामधेयमिति । नाशादिविकृतियुक्तं नाममात्रं विचारासहमिति यावत्, अर्थे नामाभेदासंभवात् 'अब्भक्ष्य इत्यादाविव मात्रार्थान्तर्भावेन विचारासहत्वलाभः । तथाचोत्पत्त्यादिविकृतेस्तद्युक्तस्य च संसर्गदुर्निरूपत्वादिना विचारासहत्वान्मिथ्यात्वमिति निर्विकारं ब्रह्मैव सत्यमिति दृष्टान्तोपपादकत्वेनोक्तमपि दार्ष्टान्तिकस्याप्युपपादकमिति ध्येयम् । एवं च भामत्युक्तिरपि युक्तैव, अनारोपितरूपस्यैव तत्त्वरूपत्वेनासाधारणस्वरूपधर्मयोरिवाधिष्ठानस्यापि तत्त्वरूपत्वाच्छुक्तिरेव रूप्यस्य तत्त्वमिति लोके व्यवहाराच्च । अत एव तत्त्वज्ञानान्निःश्रेयसाधिगम इति भाष्ये तत्त्वमनारोपितं

रूप[1]मित्युदयनाचार्याः । अत एव व्यवहारदशायां शुक्त्यादावनारोपितत्वभ्रमेण रूप्यादितादात्म्योपलक्षितत्वेन च रूप्यादेः स्वरूपतत्त्वं शुक्तिरिति व्यवहारः, शुक्त्यादेर्धर्मतत्त्वं शुक्तित्वादिरिति च व्यवहारः, विवेकदशायां तु ब्रह्मैवानारोपितत्वेन ज्ञायत इति वस्तुगत्या तदेव सर्वेषां स्वरूपतत्त्वमित्याशयेन 'ब्रह्म तत्त्वं तपो वेदा' इत्यमरेणोक्तम् । 'तत्त्वब्रह्ममार्गे सम्यक् सम्पन्न' इति जाबालश्रुतिः, 'युञ्जानः प्रथमं मनस्तत्त्वाये' ति श्वेताश्वतरश्रुतिः । 'भगवन् नाहमात्मवित् स्वतत्त्ववि[2]'-दिति मैत्रायणीयश्रुतिश्च । तत्त्वं परमात्मनि वाद्यभेद[3]स्वरूपे चेति हैमः । तननं तत् सम्पदादित्वात् क्विप्, तदस्यास्तीति वप्रकरणे अन्यत्रापीति वः, 'तसौ मत्वर्थे' इति भत्वान्न जस्त्वमिति बोध्यम् ॥

अहो ते पाण्डित्यम्, येन स्वमपि प्रस्मरसि, तव हि तत्त्ववादित्वं नासाधारणस्वरूपधर्मवादित्वम्; किंत्वनारोपितप्रपञ्चवादित्वम्, तस्मान्नाद्वैतमते उक्तव्याख्याने उक्तदूषणावकाशः । त्वदीयव्याख्यानं त्वयुक्तम्; तथाहि—वाचापदेन वागिन्द्रियमात्रं लक्षणीयम्; अन्यथा व्याकरणानिष्पाद्यत्वालाभेनापभ्रंशालाभापत्तेः । मन्मते वाङ्मात्रलक्षणा त्वाजानकी; अर्थासत्त्वविवक्षायां लोके वागादिशब्दप्रयोगात् । सत्यपदस्य नित्यार्थकत्वमयुक्तम्; तस्याबाध्यरूढत्वात् । संस्कृतस्य मुख्यनित्यत्वाभावेन सदाशब्दमादाय योगासंभवेन व्याकरणनिष्पाद्यत्वरूपगौणनित्यत्वे लक्षणापत्तेश्च । सदाशब्दस्य त्वनन्तत्वमपि व्याकरणाप्रसिद्धम्, विकारशब्दस्य मुख्यविकारार्थकत्वे त्वदिष्टासिद्ध्या संस्कृतोच्चारणाशक्त्योच्चार्यमाणार्थकत्वं लक्षणयैव, नामपदस्यापिशब्दार्थकत्वं लक्षणयैव, अपभ्रंशस्य सङ्केतवत्प्रातिपदिकरूपरूढ्यर्थत्वाभावात् । तनूर्वर्षिष्ठेत्यादिवद्यथेत्यादेरनुषङ्गोऽपि

---

[1] अनारोपितरूप–ग. [2] त्वं तत्ववि ग. [3] भेदे–ग.

न युक्तः; 'अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात्' इत्यधिकरणे हि 'याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचोपावधीं त्वेषं वचोपावधीं स्वाहा' इति मन्त्रपाठोत्तरं पठितयोः 'याते अग्ने रजाशया याते अग्ने हराशया' इति मन्त्रभागयोः पश्चात्तनूरित्यादिकमनुषञ्जनीयम्, बुद्धिविपरिवृत्तिमात्रेण साकांक्षाभ्यां ताभ्यां तत्संबन्धसंभवेनानुषङ्गस्य वाक्यपरिसमापकत्वादित्युक्तम्। तथाच पूर्ववाक्यप्रविष्टभागस्योत्तरवाक्यघटकत्वेन प्रतिसन्धानरूपस्यानुषङ्गस्योक्तस्थले संभवेऽपि न प्रकृते संभवः। प्रकृते हि 'मृत्तिकेत्येव सत्य'मित्यादेः पश्चात् यथा सौम्यैकेन मृत्तिकेत्यनेन सर्वस्तद्विकारो विज्ञातो भवतीत्यादि कल्पनीयम्, नचैतत्पूर्ववाक्ये प्रविष्टम्। किंच यथा वाचारम्भणमित्यादिना गुणप्रधानभावः श्रुत्या ज्ञापितः, तथा मृत्पिण्डतद्विकारयोः सादृश्यमपि ज्ञाप्येत। अथ मृत्पिण्डज्ञानेऽपि तद्विकाराणां घटत्वादिना ज्ञानासंभवान्मृत्त्वेन रूपेणैव घटादिज्ञानं मृत्पिण्डज्ञानादिति पर्यालोचनात्तत्सदृशज्ञानं तज्ज्ञानाधीनमिति लभ्यते, तर्हि संस्कृतज्ञानादपभ्रंशज्ञानासंभवात्संस्कृतस्य प्राकृतकार्यकारित्वतात्पर्यकं मृत्तिकेत्यनेन सर्वस्ताद्विकारो विज्ञातो भवतीति वाक्यं संभवतीति तदेव श्रुत्योच्येत, किं वाचारम्भणमित्यादिना गुणप्रधानभावज्ञापकेनेति श्रुतिस्वारस्यहानिः॥

अपि च कार्ष्णायसान्तानां सदृशदृष्टान्तानां पश्चादेव वाचारम्भणं नामधेयं विकार इतिवत् संस्कृतं सत्यमिति सामान्यत एवोच्येत, न तु[1] मृत्पिण्डादिदृष्टान्तस्यैकैकस्यान्ते विशिष्य मृत्तिकेत्याद्येकैकम्। शब्दान्तराणामपि संस्कृतानां सत्त्वे मृत्तिकेत्यादेरेव किमित्युपादानम्, आयसमित्येव सत्यमित्यस्यैव पूर्णत्वसंभवे कार्ष्णेति किमित्युक्तम्।

[1] ननु-ग,

मन्मते तु कार्ष्णायसादिवाचकलघुशब्दान्तरसंभवेऽपि न दोषः। न हि घटादिशब्दा एव तदर्थविवक्षया[1] प्रयुज्यन्ते न कलशादिशब्दाः॥

'को भवानिति निर्देशो वाचारम्भो ह्यनर्थकः।
शिबिकादारुसङ्घातो वचनात्स्थितिसंस्थितिः॥
आनिष्यतां[2] नृपश्रेष्ठ तद्भेदे शिबिका त्वया।
एवं छत्रशलाकानां पृथग्भावो विमृग्यताम्॥
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि॥'

इत्यादिस्मृतिवाक्यानि चास्मद्व्याख्यान एव समञ्जसानि। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्य'मित्यादिवाक्येषु त्रिवृत्कृताग्न्यादिस्वरूपस्यात्रिवृत्कृततेजोबन्नस्वरूपव्यतिरेकेण विचारासहत्वमग्नित्वमित्यन्तेन हेतूकृत्य वाचारम्भणमित्यादिना त्रिवृत्कृतमात्रमसत्यमित्यादिरूपेण विकारो नामधेयमिति प्रपञ्चितम्। त्वन्मते तु सर्वमसङ्गतम्; एकज्ञानात्तत्सदृशं तदधीनं च सर्वमन्यद्ज्ञायत इत्यनियतम्; न हि गोज्ञाने गवयादे राजज्ञाने प्रजादेर्वा नियमेन ज्ञानम्, अनियतज्ञाने च सदृशादेरेव किमित्युपादानम्। किञ्च संस्कृतज्ञानस्यापभ्रंशकार्यकारित्वं कथं दृष्टान्तः; न हि शुद्धस्य सगुणस्य वा ब्रह्मणो ज्ञानं घटादिज्ञानकार्यकारि, येन तत्त्वं तत्त्वदा[3]र्ष्टान्तिकं स्यात्। तथा स्वीकारेऽपि 'येनाश्रुतं श्रुत'मित्यादि न मुख्यार्थकं स्यात्। अत एव—ब्रह्मोपासना सर्वोपासनाफलेत्येव दार्ष्टान्तिकमिति परास्तम्; तत्रापि मानाभावात् श्रुतेः पीडनाच्च। 'यावानर्थ उदपान'इत्यादि तु नोक्तार्थकम्; किन्तु सर्वसुखानां[4] ब्रह्मसुखान्तर्भावार्थकम्। सोऽपि मोक्षसुखमेव स्वर्गादिरूपमनोवृत्त्यवच्छिन्नसुखाभिन्नम्, विशिष्टकेवल-

---

[1] विवक्षायां–ग. [2] अनिष्यन्तां [3] तत्र दा. क. ग. [4] मुख्यानां–ग.

योरभेदादित्येवंरूप इति मदिष्टसिद्धिरिति—चेन्न; तथाऽपि तत्र दृष्टान्तवैषम्यात्। दार्ष्टान्तिके हि सर्वोपासनाफलाभिन्नफलकत्वम्; दृष्टान्ते तु सर्वाधभ्रंशादिकार्यजातीयकार्यकारित्वमिति। मन्मते तु शिबिकेत्याद्युक्तवाक्योत्तरम्—

वस्तु राजेति यल्लोके यच्च राजभटात्मकम्।
तथान्यच्च नृपेत्येतन्न सत्सङ्कल्पतामयम्॥
एकमयं हि यत्।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥
एवमेवमिदं विश्वं न भेदि सकलं जगत्।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥

इत्यादिविष्णुपुराणादिवाक्यसहस्रमवयवादिव्यतिरेकेणावयव्यादेर्विचारासहत्वोक्तिपूर्वकमद्वैतबोधकमुपष्टम्भकमिति। **वाचारम्भणमित्यादिश्रुत्युपपत्तिः॥**

'इदं सर्वं यदयमात्मा' इत्यादिश्रुतिरपि मिथ्यात्वे मानम्; बाधायां सामानाधिकरण्येन सर्वप्रपञ्चाभावोपलक्षितात्मस्वरूपबोधकतया अवान्तरतात्पर्येणात्मनि सर्वाभावबोधात्। ननु—'सर्वेषु भूतेष्वोत' मिति श्रुतेः सर्वं जलं लवणमितिवत्सर्वव्याप्तया वा, 'सहि सर्वस्य कर्ते'त्यादिश्रुतेः 'वायुर्वै [1]घृतम्' 'ब्राह्मणोऽस्य मुख'मितिवत्सर्वनिमित्तत्वेन वा, 'यस्मिन् द्यौः पृथिवी'त्यादिश्रुतेः 'ब्राह्मणो वै सर्वा देवता' इतिवत्सर्वाश्रयत्वेन वा, 'न ऋते त्वत्क्रियते किञ्चने' त्यादिश्रुतेः 'यजमानः प्रस्तर' इतिवत्तत्सिद्धया वा, 'आदित्यो यूप' इत्यादिवत्सारूप्येण वा सामानाधिकरण्योपपत्तौ यः पुरुषः स स्थाणुरितिवत् यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणा

1 छत—क. ख.

न युक्ता ; 'पुरुष एवेदं सर्वं', 'पुरुषेणैवेदं सर्वं व्याप्तमातृणादाकरीषा' दिति श्रुतौ—

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ॥
पुरुष एवेदं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्न तु सर्वस्वरूपतः ॥
सर्वं समाप्नोषि ततोऽसि सर्वः ।

इति भारते व्याख्यानात् । 'इदं सर्व' मित्यस्य 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदे'ति पूर्वेण, 'यथा दुन्दुभे' रित्याद्युत्तरेण, 'पुरुष एवेदं सर्व' मित्यस्य 'स भूमिं विश्वतो वृत्वे' ति पूर्वेण 'उतामृतत्वस्येशान' इत्युत्तरेण विरोधात् । 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व' मिति श्रुतिर्योऽयमिदं सर्वं यदयमात्मेति प्रतिज्ञातः पूर्वं सोऽयं तेजोमयत्वादिनोक्त एव, इदममृतममृतत्वसाधनधीविषयत्वेन मैत्रेय्यै उक्तमिदं ब्रह्म ब्रह्म ते ब्रवाणीति पूर्वोक्तमिदं सर्वं चायमेवेति त्वद्भाष्ये व्याख्याता, तस्या अपि 'अस्यां पृथिव्यां तेजोमयोऽमृतमय' इत्यादिपूर्वेण, 'सर्वं खल्विदं ब्रह्मे' त्यस्य 'ज्यायान्पृथिव्या' इत्याद्युत्तरेण, "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः" इत्यस्य 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मान' मिति पूर्वेण, याथातथ्यतोऽर्थान् व्यदधादित्युत्तरेण च, विरोधाच्चेति—चेन्न; सर्वपदस्य सर्वाभावोपलक्षितार्थकत्वेऽप्यात्मपदस्य स्वमुख्यार्थैकदेशाखण्डात्मनि लक्षकत्वाभावात् अखण्डात्मन एव प्रकरणित्वेना[1]तात्पर्यविषयसर्वव्याप्त्यादिलाक्षणिकार्थासंभवात्सर्वं ब्रह्मणः स्वमसाधारणं रूप-

---

[1] प्राकरणिकत्वेना—ग.

मित्यर्थमादाय तत्सर्वमिति नोच्यते, किंतु तदीयत्वात्सर्वस्य ब्रह्मसंबन्धात्, संबन्धश्चासतश्चेत्यादिश्लोके विशिष्योक्तः, प्रभवाप्यययोर्भासकतायां च नियामकं तादात्म्यं संबन्ध इत्यर्थः; तथाच तस्य चिज्जडतादात्म्यानुपपत्तिदृक्दृश्यसंबन्धानुपपत्त्यादिन्यायैराध्यासिकत्वेनाध्यासे बाधायां वा सामानाधिकरण्यं न त्वभेद इत्यत्रोक्तव्याख्यानवाक्यतात्पर्यात् 'एतावदरे खल्वमृतत्व' मित्यादिवाक्यशेषादियुक्तस्य 'इदं सर्वं यदयमात्मे' त्यादेरखण्डात्मप्रकरणस्थस्य बाधायामेव, सगुणोपासनाप्रकरणस्थस्य 'सर्वं खल्विदं ब्रह्मे' त्यादेरध्यासेऽपि सामानाधिकरण्यसंभवेनाविरोधात्, 'सर्वं तं परादा 'दित्यत्रान्यत्रेत्यस्यान्यादित्यर्थकत्वात्, यथाश्रुतार्थत्वेऽप्यात्मनि सर्वमध्यस्तमित्यर्थपर्यवसानात्, दुन्दुभ्यादिवाक्यस्य दृष्टान्तद्वारेणाद्वैतपरत्वात्, स भूमिमित्यादेरस्यां पृथिव्यामित्यादेश्च सर्वव्याप्तिप्रतिपादनद्वारेणाद्वैतपरत्वात्,' यस्तु सर्वाणि 'त्यादेरप्यात्मनि सद्रूपे सर्वं सर्वत्र स्फुरणरूप आत्मेति कथनेन व्यावृत्तसर्वमनुवृत्त आत्मनि कल्पितमिति ज्ञापनद्वारात्मैवाभूत्सर्वभूतानीत्यस्योपपादनात्, 'याथातथ्यत' इत्यस्य तथ्यमधिष्ठानत्वेनानातिक्रम्येत्यर्थात् यथा पूर्वसृष्टिस्तथेत्यर्थाद्वा विरोधाभावात् । इदं सर्वमित्यादिश्रुत्युपपत्तिः ॥

"तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्,' 'ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इति श्वेताश्वतरश्रुत्यापि दृश्यमिथ्यात्वम् । अत्र हि तमेवेत्यादिना स्वान्याविषयकज्ञानस्य मुक्तिहेतुत्वमुक्त्वा जीवेशभेदादिज्ञानं मुक्तिहेतुरिति मताभासेन विरोधनिरासाय यस्मादित्यादिकमुक्तम्, परमिति तुशब्दसमानार्थकम्, यस्मादपरं तु नास्ति परशब्देनापरज्ञानस्य

मुक्तिहेतुत्वव्यवच्छेदः, जीवोऽणुरीशो महानिति तयोरखण्डैक्यज्ञानं न मोक्षहेतुरिति कथमुक्तमतविरोधो नेति भ्रान्तिं निरस्यति—'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चि'दिति। किञ्चिदपि वस्तुस्वरूपं यस्मादात्मनो न ज्यायो न वाणीयोऽस्ति यदात्मस्वरूपं मुमुक्षुभिर्ज्ञेयं तस्य ज्यायस्त्वमणीयस्त्वं वौपाधिकं न स्वाभाविकमिति तस्मादणु ज्यायो वा वस्तुतो नास्तीति भावः। ईशज्ञानादेव मोक्ष इति पाशुपतादयस्तान्निरस्यति—वृक्ष इवेत्यादि। तत ईशरूपाद्यदुत्तरतरमधिष्ठानतयाऽऽनन्दघनसद्रूपतया च श्रेष्ठतरम्। अस्मिन्नर्थे चोपबृंहणानि—

'सितनीलादिभेदेन यथैकं दृश्यते नभः।
भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्॥

एकः समस्तं यदिहास्ति किञ्चि-
त्तदच्युतो नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम्॥

इत्यादिविष्णुपुराणादिवाक्यानि। यत्तु—यस्मात्परं श्रेष्ठं नास्ति अपरं त्वस्ति तच्च किञ्चिदल्पमित्यर्थः; 'पुरुषान्न परं किञ्चित्.' 'पादोऽस्य विश्वा भूतानी'त्यादिश्रुतेः, 'वासुदेवात्परं नास्ती'त्यादिस्मृतेश्च, परमपरं च नास्तीत्यर्थे तु नञनुषङ्गापत्तिः, 'तेनेदं पूर्ण'मित्यादिविरोधश्च, विश्वस्याभावे हि किं पूर्णं स्यादिति तन्न; अस्तिक्रियानुषङ्गस्य त्रिधा वाक्यभेदस्य चापत्तेरुत्कृष्टत्वनिषेधादेरज्ञेयत्वेन ज्ञेयत्वेनोक्तशुद्ध[1]प्रतीत्यननुकूलत्वादनाकांक्षिताभिधानापत्तेश्च पूर्णत्वस्योत्तरतरत्वस्य चाविद्यकस्याविद्यादशायां शुद्धब्रह्मस्तुत्यर्थमुक्तत्वेनादोषाच्च। तमेवेत्यादिश्रुत्युपपत्तिः॥

---

[1] दरज्ञेयत्वेनोक्त—क.

"अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥
अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥
प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते" ॥

इति माण्डूक्योपनिषद्व्याख्यारूपगौडपादाचार्यग्रन्थस्थप्रथमप्रकरणोक्तश्लोकेभ्यः श्रुतित्वेन वैदिकप्रसिद्धेभ्यः परकीयेऽपि माण्डूक्यभाष्यादौ व्याख्यातेभ्योऽपि द्वैतमिथ्यात्वम् ।

'निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥

इति श्लोके तुर्य आत्मा ज्ञातः सन् विश्वतैजसप्राज्ञरूपसर्वभावरूपाणां दुःखानां निवृत्तेरीशानः यतोऽद्वैत इत्युक्त्वा—

'न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः' ।

इत्युक्तम् । तत्र कदा तुरीये निश्चिता इत्याकांक्षायामन्यथागृह्णत इत्यादिश्लोकावुक्तौ । तत्र न त्वं संसारी किंतु तत्त्वमसीति गुरुणा बोधितो मायया सुप्तो यदा प्रबुध्यते तदाद्वैतं बुध्यते । ततश्च विपर्यासे क्षीणे तुरीयं स्वप्रकाशमनुभवतीत्यर्थः । विपर्यासे नष्टे चेत्तुरीयानुभवस्तर्हि कथं स्वाभाविकमद्वैतं तत्राह—प्रपञ्चो यदीत्यादि । प्रपञ्चो यदि विद्येत यदि सन् स्यात्तदैव तत्त्वतो निवर्तेत, न सन्निति न तत्त्वतो निवर्तते किंतु मिथ्यात्वात् ज्ञाताधिष्ठानकत्वे शून्य एवेति मिथ्या द्वैतं न स्वाभाविकाद्वैतविरोधीत्यर्थः । ननु—प्रत्यक्षादिकं भवतु मिथ्या,

शास्त्रादिकं तु कथं स्वबाध्यम्? तत्राह—विकल्प इति। शास्त्रतज्जन्यतत्त्वज्ञानादिरपि विकल्पो यद्यप्यविद्यादशायामुपदेशात् ज्ञानान्मोक्ष इति वेदोपदेशं निमित्तीकृत्य केनचिद्बन्धनिवृत्त्यादिकार्यहेतुत्वरूपेण कल्पितः तथापि दृश्यत्वाविशेषात्सोऽपि निवर्तेत, बाध्येतैवेत्यर्थः। ननु—ज्ञानस्य बन्धनिवर्तकत्वं वेदोपदिष्टत्वात्सत्यं तत्राह—अयं वाद इति। 'तरति शोकमात्मवि'दित्याद्युपदेशो लोकसिद्धव्यावहारिकहेतुत्वस्यानुवादः, अतो ज्ञाते द्वैतं सर्वं न विद्यते किंतु बाधितमेवेत्यर्थः। ननु—प्रपञ्च इत्यादिश्लोके भेदरूपस्य प्रपञ्चस्य भास्करादिमतप्राप्तं सत्योपाधिकृतत्वं निरस्य विकल्प इत्यादिश्लोके मायावादप्राप्तमारोपितत्वं निरस्यानादिसत्यत्वमेवोच्यते। भेदप्रपञ्चो यदि विद्यते उत्पद्येत तर्हि निवर्तेत, न च निवर्तते; मोक्षेऽपि परमं साम्यमुपैतीति भेदश्रुतेः, तस्मान्नोत्पद्यत इत्यर्थः। विदसत्तायामिति हि धातुः, उत्पत्तिरपि हि सतायोग एव,. विद्लृलाभ इति वा धातुः, तथाच स्वं लभत इत्यर्थः। उत्पत्तिरपि ह्यात्मलाभ[1] एव; अस्तित्वार्थकत्वे तु यद्यदस्ति तन्निवर्तेतेति[2] व्याप्त्यभावादसङ्गतिः। ननूपाधिकृतो न चेद्भेदस्तर्हि किं स्वन्तत्रः, नेत्याह—मायामात्रमिति। ईश्वरेच्छाधीनमित्यर्थः।

'विष्णोरिच्छावशत्वात्तु मायामात्रमिति स्मृतेः।
स्वप्नमायास्वरूपेति सृष्टिरन्यैर्विकल्पिता'॥

इत्यैन्द्रजालिकत्वं मतान्तरत्वेनोक्तम् 'इच्छामात्रं प्रभोः सृष्टि'[3]रितीश्वराधीनत्वस्य गौडपादैः स्वमतत्वेन पूर्वमुक्तत्वात्, 'प्रभवः सर्वभावानां सता'मिति पूर्वं 'कल्पितो यदि केनचि'दिति पश्चात्प्रपञ्चसत्यत्वस्य तैरुक्तत्वाच्च। निवर्तेतेति तर्कविपर्ययपर्यवसानलब्धानिवर्त्यत्वाविरुद्धार्थस्यैव मायामात्रमित्यत्र वक्तव्यत्वाच्च॥

[1] स्वात्मलाभ—क. [2] निवर्तत इत—ग. [3] रितीच्छाधीन—ग.

अथैवम्—'अद्वैतः सर्वभावाना'मिति पूर्वं कथमुक्तम्? तत्राह—'अद्वैतं परमार्थत' इति। उक्तमिति शेषः। अद्वैत इति यदुक्तं तत्परमार्थतः परमार्थं स्वतन्त्रमपेक्ष्येत्यर्थः। सर्वभावानां मध्ये ईशोऽद्वैत इत्युक्त्या स्वातन्त्र्यमीशस्य न त्वन्यस्येति लभ्यते न त्वन्यस्य मिथ्यात्वमिति भावः। नच—सत्ये रूढत्वात्परमार्थशब्दः सत्यार्थक एवेति—वाच्यम्; मिथ्यावस्त्वपेक्षया परमत्वादेव सत्यस्य योगलभ्यत्वेन रूढ्यकल्पनात्। अत एव प्रोक्षण्यधिकरणे प्रोक्षण्यादिशब्दस्य जलादौ योग एव न रूढिरित्युक्तम्। उक्तं च वार्तिके—

'भवेतां यदि वृक्षस्य वाजिकर्णौ कथंचन।
अदृष्टां समुदायस्य शक्तिं जातु (न) कल्पयेत्[1]'॥ इति।

तथाच—

अक्षरैरेव बुद्ध्यन्ते समुदायप्रसिद्धितः।
अर्थभागोपसंहारादितरा विप्रकृष्यते॥

इति रथकाराधिकरणीयवार्तिकोक्तस्य योगापेक्षया रूढिबलवत्त्वस्य क्लृप्तरूढिविषयत्वात्, स्वतन्त्रं परमार्थमिति स्मृत्युक्तपरिभाषायाः कार्यार्थत्वेन यथा नद्या इत्यादौ 'यू स्त्र्याख्यौ नदी'ति परिभाषिता ईऊइत्यन्ताः स्थली वनीत्यादिरूपा गृह्यन्ते नदीशब्देन नतु गङ्गायमुनाद्याः, कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्यय इति न्यायात्, तथा सत्ये रूढस्यापि परमार्थशब्दस्य स्वतन्त्ररूपार्थग्रहणौचित्यात्। यववराहाधिकरणे शास्त्रीयरूढेर्लौकिकरूढ्यपेक्षया बलवत्त्वस्य स्थितत्वात्, योगेन परिभाषोपपादने सत्येऽपि योगसंभवस्योक्तत्वाच्च, परमार्थशब्दः स्वतन्त्रार्थकः। अथवा 'परमार्थोऽविनाशी'ति विष्णुपुराणोक्तेः सर्वभावानां मध्ये ब्रह्माविनाशीत्यर्थः। एवं 'विकल्प' इत्यादेरपि तर्कत्वात् न च निवर्तते,

[1] क: शक्तिं जातु कल्पयेत्—ग.

तस्मान्न कल्पित इति विपर्यये पर्यवसानं कार्यम् । 'वादो ज्ञात' इत्यत्र नञ्प्रश्लेषादज्ञाते तत्त्वे द्वैतं न विद्यत इत्यर्थः । उक्तश्लोकयोरर्तकपरत्वे यदिशब्दौ लिङ्पदानि च व्यर्थानि स्युः, स्पष्टश्चायमर्थः श्रुत्यन्तरे----

'सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥'

इत्यत्रेति—चेन्न; उक्तव्याख्याने हि प्रपञ्चपदस्य भेदे सङ्कोचः, विद्यत इत्यत्र विदेरुत्पत्त्यर्थकत्वेऽप्रसिद्धार्थकत्वम्, लाभार्थकत्वे लभते इति व्याख्यानमयुक्तम्; विन्देतेत्यस्यैव कर्त्राख्यातस्य युक्तत्वात् । अथ—कर्माख्यातेन विद्येतेति साधु, तथाच लभ्येतेत्येव पाठ इति, तदप्ययुक्तम्; लाभमात्रस्योत्पत्तित्वाभावात्, आद्यलाभार्थकत्वे च लक्षणा, सत्तायोगमात्रमपि नोत्पत्तिः; द्वितीया[1]दिक्षणेऽप्युत्पत्तिव्यवहारापत्तेः, आद्यक्षणावच्छिन्नसत्तायोगार्थकत्वे तु[2] लक्षणा, मायाशब्दस्यापि नेशेच्छाधीनमर्थः; अनिर्वाच्य एव तस्य रूढत्वात्, 'नासदासीन्नो सदासीत्तदानीम्' इत्यत्र सदसदन्यत्वेनोक्ताविद्यायाम्—

'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी माया' मित्यादिस्मृतेः 'मायां तु प्रकृति' मित्यादिश्रुतेश्च प्रयोगात्, 'अन्या माया[3] पुनः सृष्टे' ति संवरयुद्धादौ हरिवंशादौ 'स्वप्नमायागन्धर्वनगरवद्वे' ति गौतमीयपूर्वपक्षसूत्रादौ चानिर्वाच्य एव मयाशब्दप्रयोगाच्च । न हि तत्रापीशेच्छाधीनमर्थः; तथासत्यन्यत्सृष्ट[4]मित्येव हरिवंशे उक्तं स्यात्, मायापदस्याऽव्यावर्तकत्वात् । उक्त-

---

[1] माने न; उत्पत्तिद्वितीति—ग. [2] च—ग. [3] अन्यमाया—ख. [4] अन्यसृष्ट—ग.

सूत्रेऽपि सिद्धान्ताविशेषापत्तेः । 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'दिति शारीरकसूत्रेऽपि मायापदमुक्तार्थकम्; अन्यथोक्तहेत्वसङ्गतेः । 'विष्णोरिच्छावशत्वात्तु मायामात्रमि'ति स्मृतावपि मायापदमनिर्वाच्योपादानकत्वेनानिर्वाच्याभिन्नपरम् । अनिर्वाच्यस्याचेतनस्याप्युपादानत्वमुपपद्यते, ईश्वराधिष्ठानादित्याशयेन विष्णोरित्यादिहेतूक्तिः । अन्यथा मायाशब्दस्य त्वन्मते ईशेच्छाया एवार्थत्वेन (तदर्थत्वेन) तदात्मकत्वस्य प्रपञ्चे बाधात्तज्जन्ये लक्षणापत्तेः । इच्छामात्रमित्यादावप्युक्त एव मार्गः । वस्तुतस्तु—

'विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायास्वरूपेति सृष्टिरन्यैर्विकल्पिता ॥
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावो[1]ऽयमाप्तकामस्य का स्पृहा' ॥

इति श्लोकानां विभूतिं स्वीयैश्वर्यख्यापनम् । स्वप्नमायास्वरूपेति । स्वप्नस्य जाग्रद्दृष्टभ्रमरूपस्य मायाया अपि द्रव्यविशेषादौ भ्रमविशेषरूपायाः स्वरूपा अनित्यत्वयुक्तिविरुद्धत्वादिना सदृशी, न तु मिथ्या, इच्छामात्रं ईश्वरीयसत्यसङ्कल्पमात्रम्, न तु सङ्कल्पातिरिक्तेति केचित् । सृष्टिचिन्तकाः सृष्टौ विनिश्चिता इत्याभ्यां नैते तत्त्वचिन्तका इति परमतं सूचितम् । तेषामेव प्रयोजनं सृष्टेराह—भोगार्थं क्रीडार्थं वेति । स्वमतमाह—देवस्येत्यादि । सृष्टिर्देवस्यात्मनः स्वभावः स्वाभाविकाविद्यातत्परिणाम इति यावत् । स्वरूपतोऽनादित्वं प्रवाहरूपेणानादिभ्रमजनकत्वं चाविद्यादोषस्य स्वाभाविकत्वम्, तदुक्त्यैव सृष्टेर्निष्प्रयो-

[1] प्रभावो–ग.

जनत्वं सूचितम् । न ह्यनाद्यविद्यामूलस्वप्नादिभ्रमस्य किंचित्प्रयोजनमुद्दिश्य केनचित्करणीयत्वमिति बोध्यम् । भोगक्रीडाप्रयोजनकोक्तपक्षान् दूषयति—आप्तकामस्येत्यादि । तथाचाप्तकामत्वस्य स्वाभाविकत्वादैश्वर्यख्यापनमतं दुष्टम् । कामित्वसुखदुःखादि मिथ्येति सत्यस्वप्नमायादितुल्यत्वमतं दुष्टम् । अत एव सत्येच्छामात्रत्वादिमतमपि तथेति भाष्यानन्दगिर्याद्यनुसारिव्याख्यानादिच्छामात्रमिति न स्वमतम्; परं तु तवैव तथा भ्रान्तिः । अहो तव पश्यतोहरचोरत्वं यत्प्रतिश्लोकं युक्तिजालेन दृश्यमिथ्यात्वं प्रतिपादयद्वैतथ्याख्यं प्रकरणं कुर्वतां गौडपादभगवतां दृश्यसत्यत्वं सम्मतमिति ब्रूषे । तथाहि—

'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तो वितथा इव लक्षिताः ॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥
कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥
अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।
कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥'

इत्यादि श्लोका वैतथ्यप्रकरणस्थाः । यत्तु—'प्रभवः सर्वभावानां सता'मिति दृश्यसत्वसाधकमुक्तम्, तन्न; सतामित्यस्यानभिव्यक्तनामरूपात्मकानामित्यर्थकत्वात्, असत्कार्यवादनिरासाय तथोक्तत्वात् । स्पष्टं चैतद्भाष्यादौ । कल्पितो यदीत्याद्युत्तरवाक्यं तु न तेऽनुकूलम्; विकल्पपदेनोक्तस्य शास्त्राचार्यादिकल्पनस्य यदिशब्देनानावश्यकत्वद्योतनात्, ईश्वरादेराचार्यादिनैरपेक्ष्येण तपसा ज्ञानाप्तेर्वा भाष्यादावु[1]क्तत्वात्, हिरण्यगर्भस्यापि बृहदारण्यकभाष्ये तथोक्तत्वात् ।

[1] वासिष्ठादावु-ग.

यद्यपि कल्पित इत्याद्यर्थस्य भाष्योक्तत्वात्प्रपञ्चो यदीत्यादेस्तूक्तोऽर्थस्त्वत्प्रतिकूलः, अथवा यदिशब्दस्य निमित्ततावोधकत्वात्तस्याश्च स्वान्वयव्यतिरेकव्यापकान्वयव्यतिरेकशालित्वरूपत्वात् यथा 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीया' दित्यादौ रथन्तरस्यान्वयव्यापकान्वयत्वमैन्द्रवायवाग्रत्वे पाठादेव प्राप्तमतो व्यतिरेकव्यापकव्यतिरेकत्वे तात्पर्यमिति कल्प्यते तथा सत्त्वस्यान्वयव्यापकान्वयकत्वं निवर्त्यत्वे बाधितमतो यत्र शुक्तिरूप्यादौ सत्त्वाभावस्तत्रानिवर्त्यत्वमिति व्यतिरेकव्यापकव्यतिरेककत्वपरत्वं कल्प्यते, एवं च तर्कपरत्वानुसारेण मायामात्रमित्यत्र त्वदीयाथवर्णनमनवकाशम्, अत एव 'यदि क्षुधा तदा भुङ्क्ष्वे' त्यादौ लोकेऽपि क्षुधाद्यभावव्यापकत्वमभोजनादौ बुध्यते, परमार्थपदं तु यदि स्वतन्त्ररूढम्, तथापि तस्याधिष्ठानसापेक्षत्वरूपपारतन्त्र्याभावरूपत्वेन सर्वभावानां मध्येऽयमद्वैत इत्युक्तेः[1] सर्वभावानां मध्येऽयमधिष्ठाननिरपेक्ष इत्यर्थादेतदन्यत्सर्वमधिष्ठानसापेक्षमित्यर्थलाभात्तवानिष्टम् । ज्ञानानिवर्त्यत्वादिरूपं वा स्वातन्त्र्यम्, यद्विनिवर्तते तन्निवर्तकाभावाधीनस्थितिकत्वात्परतन्त्रम् । अन्यादृशमेव स्वातन्त्र्यं प्रकृते ग्राह्यमित्यत्र तु न विनिगमकम् । अत एव परमार्थस्तु भूपालेत्यादि—'एकमयं हि यत् 'विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिन' इति विष्णुपुराणे मिथ्याप्रतिद्वन्द्विशुद्धचित्स्वरूपस्य परमार्थशब्दार्थत्व[2]मुक्तम् । 'तत्याज भेदं परमार्थदृष्टि' रित्युपसंहारे च भेदमात्रस्य परमार्थप्रतिद्वन्द्वित्वमुक्तम् । लोकेऽपि सत्यत्वेन ज्ञाते परमार्थपदप्रयोगः । परमार्थोऽविनाशीति तु वाक्यं परमार्थस्याविनाशित्वं प्रतिपाद्यानात्मनि परमार्थपदप्रयोगो भ्रान्त्यैव लोकानामिति सूचकम् । अत एव परमार्थो

---

[1] इत्युक्ते—ग. [2] र्थकत्व—क.

न भेदवानिति पश्चादद्वितीयत्वं परमार्थस्य प्रतिपादितम् । अविनाशिनः परमार्थशब्दार्थत्वमुक्तवाक्यं बोधयतीति त्वयुक्तम् ; परमार्थपदस्य पूर्वत्वेनोद्देश्यबोधकत्वात्पूर्ववाक्यानां तथासत्यननुकूलत्वाच्च, अविनाशित्वेन ज्ञाते परमार्थपदाप्रयोगाच्च । अविनाशित्वेन परमार्थपदार्थतास्वीकारेऽपि दृश्यत्वेनैव तत्त्वधीनिवर्त्यत्वात्, 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुतेश्च शुद्धचिदेवानाशिनीति सैव तथा । एवं च 'वादो ज्ञात' इत्यत्र नञ्कल्पने मानाभावाद्विरोधाच्चास्मदुक्तार्थ एव श्रेयान् । 'सोऽयं सत्य' इत्यादिवाक्यं तु न श्रुतिः; अप्रसिद्धत्वात्, प्रसिद्धत्वेऽपि द्वैतं न विद्यत इति हेतोर्विनिवर्तत इत्यन्तमज्ञानिनां मतमित्यर्थो बोध्यः । किंच—

तन्वां[1] स्वस्वामिसंबन्धः प्रपञ्चोऽस्य शरीरिणः ।
वस्तुतोऽसौ न चैवास्ति परमस्य वशे यतः ।
तत्त्वादिकस्तथाप्येष ह्यभिमानात्प्रदृश्यते ॥
अतः स विद्यत इत्यङ्गीकारो भवेद्यदि ।
तथापि भगवद्ध्यानात्स निवर्तेदसंशयः ॥

इत्यादिनोक्तश्लोकयोस्त्वदाचार्यैर्माण्डूक्यभाष्ये व्याख्यातत्वात् अहमिदं ममेदमित्यादिस्वस्वामिभावरूपः प्रपञ्चो जीवस्य यद्यपि विद्येत, तथापि भगवत्प्रसादान्निवर्तेत । अद्वैतं महाद्भिर्द्वितीयेन प्रकारेणाज्ञातं परब्रह्मादि द्वैतं द्विधा ज्ञातमज्ञैः, तत्र हेतुः परमार्थतः परमेश्वरान्मायामात्रं तदिच्छाकृतं तदिच्छयैव निवर्तत इति । अतो विकल्पः शरीरादिसंबन्धः केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते । अतो ब्रह्मणि ज्ञाते सति द्वैतमन्यथाज्ञातं[2] निवर्तत इत्ययं वादः सतामिति भाष्ये त्वदीयानां व्याख्यानाच्च देहादिसंबन्ध आत्म-

---

[1] तत्त्वं–ग. [2] ज्ञानं–ग.

नोऽज्ञानकल्पित इति त्वयाप्युच्यते । तथाचात्मनि देहादिसंबन्धो देहादिर्वाऽज्ञानकल्पित इत्यनयोर्विनिगमकाभाव इत्यस्य एतद्ग्रन्थादावेव विस्तरेणास्माभिरुक्तत्वाद्देहादिमिथ्यात्वं त्वन्मते बलादापततीति कथं तव भेदसामान्यस्य सत्यतोक्तिः? देहादिमद्भिन्नभेदस्य देहादिरूपस्य मिथ्यात्वावश्यकत्वात् कथं वा त्वद्व्याख्या त्वद्भाष्यादिविरुद्धेति व्यक्तमेव भ्रान्तप्रतारकोऽसि । **श्रीगौडपादभगवतां श्लोकोपपत्तिः ॥**

'सत्यं ज्ञानमनन्त' मित्यादिश्रुतावनन्तपदादपि दृश्यमात्रं मिथ्या। नन्वन्तपदं न परिच्छिन्ने[1] व्युत्पन्नम्; येन परिच्छिन्नशून्यबोधकनञ्पदेन बहुव्रीहिणा दृश्यमात्रमिथ्यात्वलाभः, किंतु परिच्छेदे, तथाच यथा गगनादेर्देशकालापरिच्छेदस्वीकारेऽपि देशकालयोर्न मिथ्यात्वलाभः, तथा ब्रह्मणो देशनिष्ठात्यन्ताभावं कालनिष्ठध्वंसप्रागभावौ वस्तुनिष्ठभेदं च प्रति प्रतियोगित्वरूपाणां देशकालवस्तुपरिच्छेदानामभावेऽपि न दृश्यमिथ्यात्वसिद्धिः । यथा ब्रह्मणो जीवनिष्ठभेदाप्रतियोगित्वेऽपि जीवस्य स्वरूपेण न मिथ्यात्वम्; किं त्वौपाधिकरूपेण, तावतैव विरुद्धांशत्यागेनात्यन्तिकाभेदनिर्वाहात्, तथा प्रपञ्चनिष्ठभेदाप्रतियोगित्वेऽपि प्रपञ्चो न स्वरूपेण मिथ्या; किंतु औपाधिकरूपेण । किंचापरिच्छेदो न भेदाभावः; तथासति परिच्छिन्नाद्भेदाभावे ब्रह्मणोऽपरिच्छिन्नशब्दार्थत्वायोगात्, कालापरिच्छिन्नेऽपि परमाण्वादौ देशादिपरिच्छेदवद्देशकालापरिच्छिन्ने गगनादौ पृथिव्यादिभेदमात्रेण परिच्छेदस्याव्यवहारात्, अनन्तपदेन त्वयैव परिच्छिन्नभेदस्योक्तत्वेन विरोधात्, भिन्न इत्यर्थे परिच्छिन्न इत्यप्रयोगाच्च । तस्माद्देशकालगुणपरिच्छेदशून्य एवानन्तशब्दार्थ इति—चेन्न; जीवस्वरूपस्य ब्रह्मस्वरूपाविरुद्धत्वेन ब्रह्मैक्यसंभवात्, तद्भेद-

[1] नन्वनन्तपदं नापरिच्छन्ने—ग.

मात्रनिषेधात्तद्मिथ्यात्वेऽपि दृश्यस्वरूपाणां पारिणामित्वादिना ब्रह्मस्वरूपविरुद्धत्वेनैक्यासंभवात्, ब्रह्मणि तद्भेदनिषेधे[1] भेदव्याप्यानां[2] दृश्यस्वरूपाणामपि निषेधस्यार्थिकत्वात्, भेदसामान्यस्येव दृश्यसामान्यस्यापि मिथ्यात्वसिद्धेः, व्यापकनिषेधे व्याप्यनिषेधस्यावश्यकत्वात्[3]। गगनादौ तु देशादिनिष्ठाभावप्रतियोगित्वनिषेधेऽपि न देशादिनिषेधः; उक्तप्रतियोगित्वस्य देशादिसंबन्धिषु वस्त्वन्तरेष्वसत्त्वेन देशादिव्यापकत्वस्यैवाभावात्, भेदप्रतियोगित्वस्येव भेद्यदृश्यसामान्यस्यापि निषेधमादाय दृश्यभेदप्रतियोगित्वनिषेधस्य पर्यवसानसंभवेन बाधकाभावादविनिगम्यत्वाच्च दृश्यमात्रस्यैव निषेधसंभवात्। न च—भेदत्वेनैव भेदोऽनन्तपदेन निषिध्यत इति न दृश्यनिषेधपर्यवसानमिति—वाच्यम्; देशकालवस्तुघटितत्वेनैव परिच्छेदानां त्रैविध्यव्यवहारात्प्रपञ्चस्यापि वस्तुगत्या परिच्छेदशून्यत्वेनानन्तत्वापत्त्या स्वसमानसत्ताकपरिच्छेदविशिष्टत्वानां दृश्येष्वेव प्रसिद्धानामनन्त[4]पदार्थतया तच्छून्यमनन्तपदबोध्यमिति तत्तद्दृश्यसमसत्ताकानां भेदादिप्रतियोगित्वानां तादृशत्वेनैव निषेध्यत्वात्। किञ्चिद्वस्तुनिष्ठतादात्म्यावच्छिन्नप्रतियोगिताकाभावस्यैव[5] भेदत्वेन सामान्यतस्तादात्म्यत्वस्यानुगतस्याभावेन दृश्यतादात्म्यमादायैव प्रकृते निषेधात्। तादात्म्यत्वस्य भेदत्वस्य वातिरिक्तत्वेऽपि दृश्यमात्र एव स्वाश्रयाभिन्नभेदत्वसत्त्वात्तन्निषेधः सिध्यत्येव। अधिकरणमेव भेद इति मते तु सुतराम्। किंचापरिच्छेद इत्यादिकं तु न युक्तम्; भेदप्रतियोगित्वरूपपरिच्छेदाभावेऽपि परिच्छिन्नभेदानुयोगित्वसंभवात्, मिथ्यात्वाभावोपलक्षिते सत्यपदस्येव भेदोपलक्षिते भिन्नार्थकपदस्य लक्षणया प्रयोगसंभवाच्च। गगनादिकं

[1] तद्भेदमात्रनिषेधे—ग. [2] भेदे व्याप्यानां—क. [3] व्यापकनिषेधस्यावश्यकत्वात्—ग. [4] मनन्त—ग. [5] भावत्वस्यैव—ग.

देशकालापरिच्छिन्नमिति तु भ्रमः ; गुणादौ संयोगादिना तस्याभावात्। अथ—तत्रापि संबन्धान्तरेण तत्सत्वात्केनचित्संबन्धेन तत्संबन्धिनि न तदभाव इति मते तथा वाच्यम्, तथा च भेदप्रतियोगित्वरूपपरिच्छेदस्य तत्र कुतो न धीः? अनन्तपदेन मया परिच्छन्नभिन्नमुच्यत इत्यपि भ्रमः। भेदप्रतियोगित्वशून्यस्यैव बहुव्रीहिणा तत्पदेनोच्यमानत्वात्। भिन्न इत्यर्थे तु परिछिन्नपदं प्रयुज्यत एव; एकहायन्यादिद्रव्यमारुण्यादिना इतरभिन्नमित्यर्थे तत्तेन परिच्छिन्नमित्यस्यामूर्तस्य मूर्तभेदकत्वेन क्रियाकारकत्वमित्यर्थे तस्य तत्परिच्छेदकत्वेन क्रियां प्रति कारकत्वमित्यस्य च वार्तिकादौ व्यवहारस्य स्पष्टत्वात्॥

'तस्मादन्तः[1] परिच्छित्तिः सा चाभावीयतैव हि।
निषेध्यं प्रतियोगित्वमभावीयमतोऽखिलम्'॥

अति अदि बन्धन इति धातुसिद्धान्तपदस्य बन्धनार्थकतया बन्धनस्य च किञ्चिद्देशकालसंसर्गविरोधिस्वरूपतया संसर्गाभावप्रतियोगित्वरूपत्वमिव किञ्चिद्वस्त्वैक्यरूपमिलनाविरोधितया भेदप्रतियोगित्वरूपत्वं संभवतीति तदप्यन्तपदार्थः प्रकृते निषिध्यते। अत एव—

'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु'।

इति मेदिनी। संसर्गाभाववत इव भेदवतोऽपि प्रतियोगिनं प्रत्यवधित्वात्। अत एव काश्यादेरसीवरणास्थानाद्यवधिकत्वव्यवहारः। यत्तु—देशकालगुणापरिच्छिन्नमनन्तशब्दार्थ ईत्युक्तम्—तन्न; गुणापरिच्छेदोऽसङ्ख्यगुणकत्वं देशकालापरिच्छिन्नगुणकत्वं वा, नाद्यः; 'सत्यं ज्ञान'मित्यादिनिर्गुणप्रकरणे तस्य प्रतिपादनासंभवात्, 'केवलो निर्गुण' इत्यादिश्रुतिविरोधात्। अत एव नान्त्यः 'मय्यनन्तगुणेऽनन्ते गुण[2]तोऽनन्तविग्रह' इत्यादौ गुणानन्त्यस्य पृथगुक्तिवैयर्थ्यात्, देश-

[1] तस्मादतः—ग.  [2] नन्तगुण—ग.

कालापरिच्छिन्ने परिच्छेदा[1]व्यवहारस्य त्वयैवोक्तत्वेन गुणतः परिच्छेदस्य सुतरामव्यवहार्यत्वाच्च । 'पृथिव्येतावती'त्यादिश्रुतौ देशकाला[2]-परिच्छिन्नेऽपि पृथिव्यादौ गुणतः परिच्छेदो व्यवह्रियत इत्युक्तिस्तु मौढ्यात्, पृथिव्यादेर्देशादिपरिच्छेदात् । तस्माद्गुणानन्त्यस्यानन्तपदार्थत्वे मानाभावादुक्तरूपमेवानन्त्यम् । **अनन्तश्रुत्युपपत्तिः ॥**

'तदेतन्मधु दध्यङाथर्वणोऽश्विभ्यामुवाच 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू'रिति श्रुत्यापि दृश्यं मिथ्या । यत्कक्ष्यं मधु पूर्वमुक्तं तदिदं, किं तत्? रूपमित्यादि सर्वानुभूरित्यन्तं यद्रूपं रूपं प्रति प्रतिरूपो रूपान्तरम्, नानारूपमिति यावत् । किमर्थं नानारूपत्वं तत्राह—तन्नानारूपमस्यात्मनः प्रतिचक्षणाय प्रतिख्यापनाय, प्रज्ञानघनस्य हि निरुपाधिकस्वभावस्य नानारूपत्वेनैव संसारिरूपेणाचार्यादिज्ञेयब्रह्मरूपेण वा प्रतिख्यापनं नान्यथा, अतोऽयं नानारूपत्वादिन्द्रः परमेश्वर एकरूपोऽपि मायाभिर्मिथ्याभूतैरभिन्नः पुरुरूपः ईयते ज्ञायते । कुतो नानारूपा माया? तत्राह—हि यस्मादस्यात्मनो रथिस्थानीयस्य हरयोऽश्वा इन्द्रियरूपा रथस्थानीये शरीरे विषयरूपदेशप्राप्तये आगन्तुकतया युक्ताः संबद्धाः । तथाहि काठकश्रुतिः—

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । इति ।

'ततश्च हयादीनामागन्तुकत्वादयमात्मैव हरयोऽयमेव च वक्ष्यमाण-

[1] परिच्छेद-ग. [2] देशकाल-क.

दशादिरूपा विषया नात्मान्यदस्ति तत्तस्माद्धर्माद्युपाधिशून्यत्वादेतदात्मस्वरूपं ब्रह्मेत्याद्येतावन्मधुस्वरूपं प्रत्यग्ब्रह्मणोरैक्य' मिति भाष्यवार्तिकानुसारिव्याख्यानात् ॥

ननु—मायाभिर्विचित्रशक्तिभिर्मत्स्याद्यनेकरूपत्वमिन्द्र इत्यादावुच्यते, 'रूपं रूपं प्रतिरूपो बभूवे' त्यत्रापि विम्बभूतेश्वरीयरूपाणां प्रतिरूपशब्दितप्रतिबिम्बभूतजीवोपास्यानां रूपं रूपमित्यनेनोक्तत्वात्, तेषामेव पुरुरूपेत्यत्र रूपपदेन प्रत्यभिज्ञानात्, 'अयं वै हरय' इत्यत्रापि हरिशब्देन विष्णुरूपाणां दशत्वादिनोक्तत्वात्। अन्यथा अद्वैतमते चिन्मात्रस्यैव नानारूपाधिष्ठानत्वेनेन्द्रपदास्वारस्यात्। मायां तु प्रकृतिं विद्यादि' त्यत्रापि मायया संनिरुद्ध इति पूर्वोक्ता या माया सा प्रकृतिः प्रधानमित्यर्थो न तु या प्रकृतिः सा माया मिथ्येति पूर्वोक्तमायाशब्दार्थस्य जिज्ञासितत्वात्, प्राथम्येन मायाया एवोद्देश्यत्वात्प्रकृतिशब्दस्य प्रधाने प्रसिद्धत्वान्मायाशब्दस्य सत्ये मन्त्रौषधादावपि प्रयोगाच्चेति—चेन्न। 'पुनः स पक्षीभूत्वा पुरः पुरुष आविश' दित्यनेन हि यत्पुरावेशनमुक्तम्, 'रूपं रूप' मित्यादिना प्रतिलिङ्गशरीरं प्रतिबिम्बीभवनरूपत्वेन तदेव व्याख्यातं जिज्ञासितत्वान्न तु जीवोपास्यमत्स्यादिरूपमुक्तम्; अजिज्ञासिताभिधानापत्तेस्तस्याप्रक्रान्तत्वात्। पुरुरूपपदेन प्रक्रमिष्यमाणस्य तस्य ग्रहणमपि न युक्तम्; न हि जीवान्प्रति मत्स्यादिरूपं बिम्बम्; किंत्वीश्वरः, तस्य च नोक्तिसंभवः; रूपं रूपमिति वीप्साया असङ्गतेः। शरीरेश्वरयोरत्यन्ताभेदस्तु बाधितो दूषितश्च। अथ—प्रतिरूपः प्रतिबिम्बभूतो जीवः रूपं रूपं बभूव प्राप्तवान् सेवत इति यावत्, भू—प्राप्तावित्यस्य छान्दसं पदम्, तथाप्यध्यात्मप्रकरणे उपास्यरूपोक्त्यसङ्गतिः। लिङ्गशरीरप्रतिबिम्बत्वोक्त्या तु जीवस्य विवेचनं सङ्गतम्। मायाशब्दस्य च शक्तिपरत्वे लक्षणापत्तिः। 'माया प्रज्ञा वयुन' मिति नैघण्टुकोक्त्या ज्ञाने

यौगिकस्यापि तस्य मिथ्यारूढत्वात् । मिथ्याभूतस्य कारणे मन्त्रादावपि प्रयोगो लक्षणयैव । अस्येत्यस्याव्यवहितेन्द्रपरामर्शकत्वे षष्ठ्यर्थासङ्गतिः, व्यवहितजीवपरामर्शकत्वे स एव दोषः । अवतारावतारभावस्य षष्ठ्यर्थत्वेऽपि 'अयं वै हरय' इत्यादि 'इन्द्र' इत्यादि च व्यर्थ्यम् । न हीदमुपासनापरम्, निर्गुणप्रकरणस्येदं वै तन्मध्वित्यादौ स्फुटत्वात्, युक्ता ह्यस्येत्यादावस्मदुक्तार्थस्य श्रुत्यन्तरसंवादस्योक्तत्वात् ॥

'वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥'

'सूर्यो यथे'त्यादि 'न लिप्यते लोकदुःखेन बाह्य' इत्यादिश्रुतौ मदुक्तार्थस्य स्फुटत्वात् । न ह्यत्र प्रतिरूपो जीवोऽणुत्वेन [1]तदङ्गीकृतो मत्स्यादिरूपोपासक इत्युच्यते; बहिष्ट्वस्य सर्वभूतान्तरात्मत्वस्यैकत्वस्य दुःखालेपस्य चान्वयापत्तेः, किंतु प्रतिदेहं प्रवेशेन विविच्यमानजीवानुवादेन तस्य बहिष्ट्वादिकमज्ञातं ज्ञाप्यते । न च—'रूपं रूप'मित्यनेनोक्तेषु मत्स्यादिदेहेषु प्रविष्ट ईशः प्रतिरूपपदेनोच्यत इति—वाच्यम्; 'स एष इह प्रविष्ट'इत्यादिवाजसनेयाद्युक्तप्रतिरूपशब्दितजीवप्रत्यभिज्ञाविरोधात्, न लिप्यत इत्यप्रसक्तप्रतिषेधापत्तेः, प्रतिरूपबहिरनुवादेन एकपदेनाद्वितीयस्वरूपविधानविरोधात्, 'भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैवे'ति तापनीये 'स एष इह प्रविष्ट आनखाग्रेभ्यः प्राणन्नेव प्राणो भवति वदन् वाक् पश्यंश्चक्षु'रित्यत्र चोक्तप्रविष्टजीवप्रत्यभिज्ञाविरोधाच्च । 'रूपं रूपं [2]मघवानो भवती'त्यादिमन्त्रस्तु ईशस्तुतिपरो न त्वद्वैतात्मपरप्रकृतवाक्यसमानार्थकः । 'मायां तु प्रकृति'मित्यादेस्तु या प्रकृतिः सा माया मिथ्येत्येवार्थः; माया च तमोरूपानुभूतेः 'तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूप'मित्यादि 'तुच्छ्येनाभ्वपिहितं

---

[1] त्वदङ्गीकृतो—ग. [2] मघवा बोभवती—ग.

यदासीदनृतेन हि प्रत्यूढा' इत्यादिश्रुतिभ्यः । अतो मिथ्याप्रकृतिकत्वेन[1] जगन्मिथ्येत्युक्तवाक्यादपि सिद्ध्यति । यद्यपि मायाशब्दः प्रथमस्तथापि तदर्थो न जिज्ञासितः; मिथ्यारूपत्वेन लोके ज्ञातत्वात्, अतस्तमुद्दिश्य प्रधानत्वरूपविशेषो नोक्तवाक्येन बोध्यते, किंतु 'मायया संनिरुद्ध' इति पूर्ववाक्ये बन्धस्योक्तो मायारूपो हेतुः प्रकृतिर्न तु निमित्तमिति मायामित्यादिनोच्यते । अन्यथा मिथ्यानिमित्तकस्यापि मिथ्यात्वासम्प्रतिपत्त्या प्रपञ्चमिथ्यात्वासिद्धेः । **तदेतन्मधु इत्यादिश्रुत्यर्थः ॥**

'अतोऽन्यदार्त'मित्यादिश्रुत्यापि दृश्यमात्रं मिथ्या; आत्मान्यस्य सर्वस्य नाशित्वरूपार्तत्वबोधनेन तेन हेतुना मिथ्यात्वानुमाने तात्पर्यात्, धूमोऽस्तीत्यादेर्वह्न्यनुमानतात्पर्यवत् । अथवाऽऽर्तत्वं पीड्यमानत्वम्, तथाचान्यत्सर्वमत आर्तमेतज्ज्ञाननिवर्त्यमित्यर्थः, 'स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानं सन्मात्र' इति तापनीयादिश्रुतेः । अथवात एतत्संबन्धादन्यदार्तं पीडितं वितथीकृतं दृक्संबन्धाद्दृश्यं मिथ्या; संबन्धानिरूपणादिति भावः । ननु— 'ब्राह्मणादन्यमानये'त्युक्ते यथा सजातीयशूद्रादिरानीयते 'समानमितरच्छ्येनेने'त्यादिश्रुतौ प्रकृतमितरदङ्गजातं[2] श्येनयागेन समं बुध्यते न तु काष्ठादि, तथा जीवरूपं सजातीयं प्रकृतं चान्यशब्दार्थः, तस्य च नाशित्वासंभवादार्तं दुःखीत्यर्थ इति—चेन्न; 'एष त आत्मा,' 'नान्योऽतोऽस्ति श्रोते'त्यादिभिर्जीवैक्याप्रन्नब्रह्मण एव प्रकृतत्वेनातःशब्देन तस्यैवोक्तत्वात्, अतोऽन्यदित्यनेन जीवस्य ब्रह्मान्यत्वोक्तेरसंभवात्, दृष्टान्ते तु बाधकाभावात्, सङ्कोचावश्यकत्वाच्च शूद्रादिप्रकृतमात्रपरत्वमितरपदस्य युक्तम् । अथान्यपदेनात्मान्यत्वेन मनस एव बोधनात्तस्य दुःखित्वं प्रतिपाद्यतामात्मनोऽतिदुःख[3]ताऽऽभायेति—चेन्न;

[1] मिथ्याप्रकृतित्वेन—ग. [2] व्रातं—क. [3] त्मनो निर्दुःख—ग.

ईशाभेदेनैव तल्लाभादन्यपदसङ्कोचे मानाभावात्, 'हविरार्तिमार्छे'-दित्यादौ नाशस्याप्यत्यर्थत्वात्। अतोऽन्यदार्तमिति श्रुत्यर्थः॥

श्रुतिस्मृत्यादिषु दृश्यमसदवस्त्वपरमार्थं मिथ्या अतात्त्विकम-विद्यमानं स्वप्नसमं मायामयमित्यादिनिर्देशादपि दृश्यं मिथ्या। तत्र सच्छब्दस्य साध्वादिरूपनानार्थकत्वेऽपि 'अद्वयमात्मा सन्मात्र' इत्यादि[1] 'असदन्य'दित्यन्ततापनीयादौ तस्याद्वयादिपदयोगात्सत्यार्थकत्वेनास-च्छब्दस्य मिथ्यार्थकत्वम्। न हि साधुत्वसंसृष्टस्याद्वयत्वादिसंभवः॥

'तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्॥
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत्सदिवाव[2]भाति॥

इति भागवते मायिकत्वेनासदपि सदधिष्ठानत्वेन सदिव भाती-त्युक्तत्वात्॥

"सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णो न चापरः।
अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारत॥

इति भारते तु स्वातन्त्र्यं तत्त्वज्ञानाभावप्रयुक्तास्थितिकत्वरूपपारतन्त्र्य-शून्यत्वं सत्यत्वपर्यवसितम्, बिम्बप्रतिबिम्बत्वाभ्यां कृष्णजीवयोः साधु-त्वासाधुत्वे इत्यर्थो वेति तद्दृष्टान्तेनान्यत्रासच्छब्दस्यान्यादृशास्वात-न्त्र्यार्थकत्वकल्पनं भ्रान्तिः;

सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्।

इत्यमरे, 'सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्वुभयोः स्त्रियाम्' इति मेदिन्यादौ च स्वातन्त्र्यस्य सत्यत्वादिभिन्न-स्यार्थस्यानुक्तेस्तदर्थकत्वे मानाभावात्। नन्ववस्तुपदं परिणाम्यर्थकम्, अपरमार्थपदं च नाश्यर्थकम्॥

[1] सन्मात्रमित्यादि -ग. [2] सदिवावि—ख.

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥
परमार्थोऽविनाशीति प्राज्ञैरभ्युपगम्यते ।

इति वैष्णवात् । मिथ्येति च वृथेत्यर्थकम्; 'मिथ्यैष व्यवसायस्त' इति प्रयोगात् । दुष्टेत्यर्थकं वा; 'मिथ्योपपदात्कृञोऽभ्यास' इति सूत्रे 'पदं मिथ्या कारयते स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थ' इति काशिकोक्तौ 'एतेन मिथ्याशब्दस्यार्थमाचष्ट' इति न्यासे व्याख्यानात् । अतात्त्विकेति च विकारीत्यर्थकम्;

तद्वदेव स्थितं यत्तु तात्त्विकं तत्प्रचक्षते ।

इति कौर्मात् । अविद्यमानेति जीवसंबन्धित्वेनाविद्यमानेत्यर्थकम्; 'अविद्यमानं जीवस्य प्रतिभाती'ति स्कान्दात् । स्वप्नादिसमेति चानित्यत्वादिमदित्यर्थः;

अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता ॥

इति वचनात् । मायामयेति च प्राकृतेत्यर्थः;

त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् ।
अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः ॥

इति स्मृतेरिति चेन्न; तद्वस्त्वित्यस्य तदेव वस्त्वित्यर्थाद्वस्तुत्वस्यापरिणामित्वव्याप्यतया लाभेन व्यापकस्यापरिणामित्वस्वाभाव्येनावस्तु[1]त्वस्य लाभेऽपि वस्तुत्वस्यापरिणामित्वस्वरूपत्वालाभात् । 'परमार्थं न पृच्छसि' परमार्थो न भेदवान्, 'परमार्थोऽविनाशी' त्यादि 'विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिन' इत्यन्तेनाद्वैतचिन्मात्ररूपपरमार्थनिरूपणस्यैव प्रकृतत्वेन प्राधान्येनापरिणाम्युक्तेरनुपयोगात् ।

[1] त्वस्याभावेनावस्तु—ग.

'ज्योतींषि विष्णुर्भुवनानि विष्णु'रित्यादिना ब्रह्मणः सार्वात्म्यमुक्त्वा- 'ज्ञानस्वरूपो भगवान् यतोऽसावशेष मूर्तिः[1] न तु वस्तुभूत' इत्यत्र ज्ञानरूपत्वेन तदन्यरूपस्यावस्तुत्वोक्तेः। न हि परिणामित्वरूपावस्तुत्वे उक्तहेतुसंभवः। 'तस्मान्न विज्ञानमृतेऽस्ति किंचि'दित्युपसंहाराच्च 'परमार्थोऽविनाशी'त्यत्रापि परमार्थमुद्दिश्यानाशित्वविधिर्न त्वनाश्युद्देशेन परमार्थसंज्ञाविधिः। 'परमार्थस्तु भूपाल संक्षेपाच्छ्रूयता'मित्यादिना पश्चा देव परमार्थप्रतिपादनप्रतिज्ञानेन पूर्वं नाशित्वाद्यभावप्रतिपादनमात्रस्य परमार्थे कृतत्वात्परमार्थसारभूतं यत्तदद्वैतमशेषतः 'तत्याज भेदं परमार्थ- दृष्टि'रित्युपसंहारे परमार्थस्याद्वैतत्वेनोक्तेः परमार्थसारेत्यस्य कर्मधारयत्वा- दन्यपरमार्थत्वशङ्काविरहात्। मिथ्यापदं तु वितथे रूढम्; मृषा मिथ्या च वितथे इत्यमरात्। मिथ्यैष व्यवसाय इत्यत्रापि निश्चय एष वितथ इत्यर्थात्पदं स्वरादिदुष्टमित्यस्यापि स्वरादिदोषेण पदमाभासीकृतमित्य- र्थात्। अन्यथा दुष्टजलादौ मिथ्याजलादिव्यवहारापत्तेर्वृथाद्यर्थकत्वे मानाभावाच्च। अतत्त्वेत्यस्यापि मृषार्थत्वमेव; तत्त्वशब्दस्य सत्यरूढत्वस्य वाचारम्भणश्रुतिव्याख्याने पूर्वमुक्तत्वात्। तद्वदेवेत्यादावेवकारस्यानुषङ्गा- त्तद्वदेव स्थितं यत्तदेव तात्त्विकमित्यर्थादविकारित्वव्याप्यत्वस्य तत्त्व- रूपतायामुक्तत्वेनाविरोधात्। तद्वदिति वत्यर्थस्त्वविवक्षितः; अन्यथा भेदघटितसादृश्ये सत्यपरिणामित्वस्याप्यसंभवात्॥

अविद्यमानोऽप्यवभासतेऽर्थो
ध्यातुर्धिया स्वप्नमनोरथौ यथा।
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।
छायाप्रत्याह्वया भासा ह्यसन्तोऽप्यर्थकारिणः॥

इत्यादौ चाविद्यमानासदादिपदं प्रतिपन्नोपाधावविद्यमानरूपमिथ्यातात्प- र्यकम्; स्वभावकालीनविद्यमानसामान्यस्य भेदबोधनान्न तु जीवसंब-

[1] सावशेष—ग.

न्धित्वेनाविद्यमानबोधकम्; लक्षणापत्तेः। अत एवाविद्यमानं जीवस्य प्रतिभातीति जीवस्य मूढस्याविद्यमानमेव भाति, अमूढस्य तु तत्त्वमपीत्यर्थकम्। अत एवासन्त इत्यनेन मिथ्याभूतमर्थक्रियाकारि दृष्टान्तत्वेनोक्तम्। अत एव च स्वप्नादिसाम्यं मिथ्यात्वेन; तत्त्वनित्यत्वादिना तस्य प्रत्यक्षादिसिद्धत्वेन तदुक्तिवैयर्थ्यात्। अनित्यत्वेत्यादिवचनं त्वप्रामाणिकम्; प्रामाणिकत्वेऽपि पारतन्त्र्यमुक्तरूपम्। बोधपदं च व्यवहारकालीनजाग्रद्बोधपरम्; अत एव 'वैधर्म्याच्च न स्वप्नादिवत्'। इति सूत्रे तथोक्तम्--'इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदळीगर्भ इवासारं नट इव क्षणवेशं चित्रभित्तिरिव मिथ्यामनोरम' मिति। मैत्रायण्यादिश्रुतौ तु मिथ्यादर्शनविषयत्वेन स्वप्नसादृश्यं स्फुटम्। तेन च ज्ञानमिथ्यात्वे लब्धेऽपि ज्ञेयमिथ्यात्वलाभायेन्द्रजालदृष्टान्तेन मिथ्याप्रकृतिकत्वं मायामयशब्देनोक्तम्। प्राकृतं तु प्रकृते न मायामयशब्दार्थः; इन्द्रजालदृष्टान्तासङ्गतेः। न हि प्रपञ्चे प्राकृतत्वसाध्यताकाले इन्द्रजाले प्राकृतत्वं सिद्धम्। मिथ्याप्रकृतिकत्वस्य प्रपञ्चे साध्यताकाले तु तदिन्द्रजाले सिद्धम्; मिथ्यात्वेनानुभूयमानस्य शुक्तिरूप्यादेर्मिथ्याभूताज्ञानोपादानकत्वेन क्लृप्तत्वात्। मायाशब्दो लोके मिथ्यारूढ इति तूक्तमेव। अत एव 'सेयं माया भगवतो यन्नयेन विरुध्यत' इति भागवतादौ युक्तिविरुद्धस्य मायात्वमुक्तम्। भगवत इति षष्ठ्यर्थस्तु नियम्यत्वादिः। युक्तिविरुद्धस्यापि सत्यत्वे शुक्तिरूप्यादेरपि तदापत्तिः[1]। त्रिगुणेत्यादौ तु मिथ्यास्वरूप[2]मायाशब्दरूढ्यर्थस्य मिथ्याप्रकृतिकत्वेन जगत्युपपादनं कृतम्। या मूलप्रकृतिः सा मिथ्या तदुपादानकत्वात्कार्यमात्रं मिथ्येत्यर्थात्। न तु प्रकृतौ मायाशब्दरूढिरुक्ता; लोकक्लृप्तमिथ्यारूढ्यैव तस्यां श्रौतप्रयोगसंभवात्, रूढ्यन्तरकल्पने मानाभावात्। मायाविद्याभेदमते त्वविद्याख्या-

---

1 तदापत्तेः--ग. 2 मिथ्यात्वरूप-क. ग.

वृत्तरूपेण मायापदप्रयोगो नायुक्तः[1], यथा हि ज्ञानमात्रस्य विद्या-ज्ञानादिपदमुख्यार्थत्वेऽपि तत्त्वज्ञानमात्रवृत्तिना मुख्यज्ञानत्वादिना 'उप-देक्ष्यन्ति ते ज्ञानं ज्ञानिन' इत्यादौ लाक्षणिकः प्रयोग आजानिकस्तथा सर्वमिथ्यामूलत्वश्रेष्ठत्वादिना भगवदुपाधिमात्रवृत्तिरूपेण मायापदस्य तादृशप्रयोगसंभवात् । अत एव 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती' त्यादिश्रुतिरपि व्याख्याता । न हि धार्मिक एव मनुष्य इत्यादिप्रयोगानुरोधेन धार्मिकादौ मनुष्यादिपदस्य रूढिः कल्प्यते । अतएव—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।

तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥

इति भागवतम् । अर्थस्य प्रतीयमानस्य स्वस्याभावेऽपि यत्प्रतीयते, स्वाधि-करणे वर्तमानाभावप्रतियोगीति यावत्, तन्मायापदार्थं विद्यात्, तस्य-चात्मैवावच्छिन्नानवच्छिन्नरूपेणाधिष्ठानम्, अन्यस्य सर्वस्यापि कल्पित-त्वादित्याशयेन—आत्मन इत्युक्तम् । नन्वेवम्—स्वप्रकाशस्याधिष्ठानस्य सर्वदा भानात्कथं तत्रारोपस्तत्राह—**न प्रतीयेत चात्मनीति** । आत्मनि परमानन्दरूपेण प्रतीयत इति यत्तदपि माया, पूर्णानन्दस्वप्रकाशस्फुरण-रूपप्रतीत्यभावत्ववत् भावरूपमज्ञानं जगदुपादानमपि तादृशमायेति यावत् । तथा च स्वप्रकाशेऽप्यप्रकाशस्य कल्पितत्वात्तन्मूलकोऽन्यस्य सर्वस्यारोप इति भावः । अर्थाभावे प्रतीयमानत्वे दृष्टान्तमाह—**यथाभास इति** । यथा शुक्त्यादौ रूप्याद्याभास इत्यर्थः । प्रकाश-स्वरूपे तदभावत्वेन कल्प्यमानत्वे दृष्टान्तमाह—**यथा तम इति** । यथा मध्यान्हसूर्यालोके तदभावत्वेनोलूकैः कल्प्यमानं तम इत्यर्थः ॥

किंच तार्किकधुरन्धरगौतमसूत्रैरपि प्रपञ्चो मिथ्या ; तथाहि—'एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः (१), बुद्ध्या विवेचनात्तु

[1] न युक्तः–ख.

भावानां याथार्थ्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् (२), स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः (३), मायागन्धर्वनगरमृगतृष्णावद्वा (४), मिथ्योपलब्धेर्विनाशः[1] स्वप्नविषयोपलब्धिप्रणाशवत्प्रबोधे (५), बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् (६), तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः (७), दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः(८), दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः (९), तन्निमित्तं त्ववयव्यभिमानः (१०), विद्याऽविद्याद्वैविध्यात्संशयः (११)', इति तत्त्वनिर्णयनामकचतुर्थाध्यायसूत्राणि गौतमीयानि । अथ पूर्वपक्षसूत्राणीमानि 'आरम्भवादरूपतत्सिद्धान्तविरुद्धत्वादिति चेन्न बुद्ध्या विवेचना'दित्यादिना 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्, अपागादग्नेरग्नित्व'मित्यादिश्रुत्युक्तस्य तर्कस्योक्तत्वात् । अत एवोक्तसूत्रार्थस्त्रोटकाचार्यैः श्रुत्यर्थत्वेनोक्तः ॥

" प्रदिदर्शयिषुर्वसनस्य यथा
वितथत्वमथास्यति तन्तुगुणम् ।
अपकृष्य तु तन्तुसमं त्रितयं
ज्वलनप्रमुखस्य तथोक्तवती " ॥ इति ।

यदग्नेरित्यादिश्रुतिरिति शेषः । मायेत्यादिना 'इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शन'मित्यादिश्रुत्युक्तस्य, मिथ्येत्यादिना 'यत्र हि द्वैतमिव भवती'त्यादि श्रुत्युक्तस्य, सङ्कल्पकृता इत्यादिना 'एतत्सर्वं मन एवे'त्यादि श्रुत्युक्तस्य तर्कस्यापरिहार्यस्योक्तत्वात्, आरम्भादिप्रक्रियाया अवैदिकनिरासमात्राभिप्रायेणोक्तत्वाच्च । अन्यथा चतुर्थाध्यायान्ते तादृशप्रक्रियाया हेयत्वमद्वैतमतस्य च ग्राह्यत्वं सूत्रभाष्ययोर्नोच्येत । तथाहि—'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चात्मविध्युपायैः (१) । तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः

[1] मिथ्योपलब्धे विनाशः–ग.

कर्तव्यः, यमः समानमाश्रमिणां धर्मसाधनम्, नियमः प्रतिविशिष्ट-मात्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च योगशास्त्राच्चाध्यात्मविधिः प्रति-पत्तव्यः, स पुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति, इन्द्रिय-विषयेषु च प्रसङ्ख्यानाभ्यासो रागद्वेषनिघातार्थः । उपायस्तु योगाचार-विधानमिति, ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः (२) तदर्थमिति प्रकृतं ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रम्, तस्य ग्रहणमध्ययनधारणे, अभ्यासः सततं तत्क्रिया, अध्ययनानुबन्धश्रवणाचिन्तनानि, तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम्, प्रज्ञापरिपाकस्तु संशयच्छेदनं विज्ञा[1]तार्थावबोधो[2]ऽध्यवसितार्थाभ्यनुज्ञानमिति, समायवादः[3] संवाद-स्तद्विद्यैश्च सह संवाद इत्यविविक्तार्थं वचनं तद्विभजते—तं शिष्यगुरु-सब्रह्मचारिविशिष्टश्रेयोर्थिभिरनुसूयिभिरभ्युपेयात् (३), एतन्निगदव्याख्या-नेनैव नीतार्थमिति । यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति, प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे (४) । तमभ्युपेयादिति वर्तते परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रज्ञापनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेत्, अन्योन्यप्रत्यनीकानि च प्रवादुकानां दर्शनानि स्वपक्षरागेण चैके न्यायमतिवर्तन्ते[4] । तत्र तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे[5] बीजप्ररोहरक्षणार्थं[6] कण्टकशाखावरणवत् (५) । अनुत्पन्न-तत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति, विद्यानिर्वेदादि-भिश्च परेणावज्ञायमानस्य ताभ्यां विगृह्य कथनम् (६) । ताभ्यां जल्प-वितण्डाभ्यां विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति । तदेतद्विद्या-पालनार्थं न लाभपूजाख्यात्यर्थमि'ति । एवमन्या अपि श्रुतिस्मृतिपुराणेति-हासादिकोटयो दृश्यमात्रमिथ्यात्वबोधिकाः सत्योऽपि ग्रन्थगौरवभिया न लिख्यन्त इति । तस्मान्मूढमतिर्नैव[7] श्रद्धेयोऽयं प्रलापकृत् ॥

---

[1] नविज्ञा—ग. [2] बोधा—ग. [3] समयवादः—ग. [4] मतिवदन्ते—क. [5] विदण्डे—क. ग. [6] संरक्षणार्थं—ग. [7] मतिनैव—ग.

# अथ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः.

'तरति शोकमात्मवित्' 'तथा विद्वान्नामरूपाद्विमुक्तः'
'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥

इत्यादिश्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम्; सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः। तथाहि—शुक्तिरूप्यरज्जुसर्पादौ ज्ञाननिवर्त्ये[1] न तावत्तत्तद्रूपवत्त्वं ज्ञाननिवर्त्यतावच्छेदकम्; अननुगमात्, किंतु सर्वानुगतं मिथ्यात्वमेवाज्ञानकल्पितत्वापरपर्यायमवच्छेदकम्। एवं ज्ञानस्यापि तन्निवर्तकत्वे न

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ॥
श्रुतिस्मृतिमहातर्ककोटिभिर्जगती मृषा ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां सर्वाद्वैतश्रुतेरद्वैततात्पर्यकत्वनिर्णयः ॥

## अथ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः.

तरति शोकमात्मविदिति । तरति अतिक्रामति अत्यन्तं नाशयतीति यावत् । शोकं भीहेतुं द्वैतमिति यावत् । भिद्यते नाश्यते । हृदयग्रन्थिः अहङ्कारः । छिद्यन्ते कारणीभूताज्ञानोच्छेदान्नोत्पाद्यन्ते,[2] श्रुतिबोधितेति । आत्मविदित्यादीनां हेतुगर्भविशेषणत्वात् ज्ञानात्पूर्वं शोकाद्यनिवृत्तेर्लोकसिद्धत्वेन ज्ञानकाले तदुक्त्या च ज्ञानस्य तद्धेतुत्वलाभाच्च दृश्यस्य ज्ञाननिवर्त्यत्वं श्रुतिबोधितमिति भावः । बन्धमिथ्यात्वे दृश्यमात्रमिथ्यात्वे । अज्ञानकल्पितत्वेति। अज्ञानरूपदोष-

1 निवर्त्यत्वे 2 नोत्पद्यन्ते—ग.

**शुक्त्यादिविषयत्वमवच्छेदकम्; अननुगमात्, किंतु सर्वानुगतमधिष्ठानप्रमात्वमेव। तथाच यत्र ज्ञानस्याधिष्ठानप्रमात्वेन निवर्तकता तत्र मिथ्यात्वेनैव निवर्त्यतेति नियमः सिध्यति। एतादृशनियमानभ्युपगमे चानन्तानियमकल्पनागौरवरूपो बाधकस्तर्कः। तथाहि—यन्निष्ठा यदाकारा प्रमारूपान्तःकरणवृत्तिरुदेति, तन्निष्ठं तदाकारमज्ञानं नाशयतीति नियमस्य सिद्धत्वात्, उपादाननाशस्य चोपादेयनिवर्तकत्वात् शुक्त्यादिज्ञानेन तत्तदाकाराज्ञाननाशे तदुपादेयानां रजतादीनां निवृत्तिरौचित्यावर्जितैवेति नियमान्तराकल्पनेन लाघवमनुकूलस्तर्कोऽस्मत्पक्षे। अज्ञानोपादेयत्वं च शुक्तिरजतादीनामन्वयव्यतिरेकासिद्धमग्रे स्थास्यति। एवं स्थिते**

---

प्रयुक्तधीविषयत्वयोग्यत्वं स्वाश्रयनिष्ठाभावप्रतियोगितारूपमित्यर्थः ॥ **अधिष्ठानप्रमात्वमिति।** मिथ्यानिष्ठप्रतियोगितया नाशं प्रति स्वविषयविषयाज्ञानतत्प्रयुक्तान्यतरत्वसंबन्धेन प्रमात्वेन हेतुतेति भावः ॥

ननु—दृश्यनिष्ठप्रतियोगितया नाशं प्रति प्रमात्वेन हेतुत्वमस्तु; यन्निष्ठेत्यादिवक्ष्यमाणनियममूलहेतुत्वानां मयापि स्वीकारान्न घटादिप्रमया पटाद्यज्ञाननाशः। तथाचाकाशादेरज्ञानानुपादानकत्वेऽपि व्यावहारिकदृश्यनाशे मूलाज्ञाननिवृत्तेर्हेतुत्वकल्पनादाकाशादेरात्मज्ञाननिवर्त्यत्वस्य श्रौतस्योपपत्तिः। शुक्त्यादिप्रमाया अपि शुक्त्याद्यज्ञाननिवृत्तौ शुक्तिरूप्यादिनिवृत्तिं प्रति विशिष्य हेतुत्वेन क्लृप्तायां हेतुत्वम्, न तु शुक्तिरूप्यादेरज्ञानप्रयुक्तत्वादज्ञाननाशनाश्यत्वम्; येन तत्र क्लृप्तसामान्यहेतुत्वेनैवाकाशादिनाशसिद्धिः, शुक्तिरूप्यादेर्भास्करादिमते सत्य एव मिथ्यात्वादानन्दतीर्थादिमते तुच्छत्वादज्ञानाप्रयुक्तत्वात्। एवं चाकाशदेरज्ञानप्रयुक्तत्वासिद्ध्या मिथ्यात्वासिद्धिरित्यत आह—**एतादृशनियमानभ्युपगम इति। नियमान्तराकल्पनेनेति।** शुक्तिरूप्यादिनिवृत्तौ शुक्त्यज्ञानादिनाशस्य विशिष्य हेतुत्वकल्पनामूलक-

**कृत्स्नस्यापि प्रपञ्चस्यात्मप्रमानिवर्त्यत्वे तदज्ञानकल्पितत्वमेव तत्रावच्छेदकं कल्प्यते, न त्वननुगतमाकाशत्वादि; न वा ब्रह्मभिन्नत्वं सद्भिन्नत्वं वा सर्वानुगतमपि, तुच्छेऽतिप्रसक्तेः, तद्वारकविशेषणप्रक्षेपे तु सदसद्विलक्षणत्वरूपमिथ्यात्वमेव निवर्त्यताप्रयोजकं पर्यवसितम्; अन्यथा नियमान्तरकल्पनागौरवा-**

---

नियमाकल्पनेनेत्यर्थः । **आत्मप्रमानिवर्त्यत्वे** आत्मप्रमाजन्येनात्माज्ञाननाशेन निवर्त्यत्वे । **तदज्ञानकल्पितत्वं** तदज्ञानप्रयुक्तत्वम् । सामान्यतो मिथ्याभूतप्रतियोगिकनाशे प्रमात्वेनोक्तहेतुत्वेऽपि प्रमाविशेषस्यैव मिथ्याविशेषनिवर्तकत्वाय यन्निष्ठत्याद्युक्तनियममूलहेतुत्वविशेषस्येव स्वविशिष्टे प्रयोज्यनाशे प्रयोजकनाशस्यापि हेतुत्वस्य क्लृप्तत्वादात्माज्ञाननाशात्प्रपञ्चनाशनिर्वाहाय प्रपञ्चस्योक्तप्रयुक्तत्वं कल्प्यते । जीवेश-भेदादेरनादेरप्यज्ञानप्रयुक्तत्वान्नाशोत्पत्तिः । प्रयोजकीभूतदण्डादेर्नाशेऽपि घटाद्यनाशात्स्वविशिष्टत्वस्य नाश्यतावच्छेदके निवेशः । निमित्तनाशोपादाननाशोभयसाधारण्येनैकहेतुत्वलाभायोपादानत्वादि विहाय प्रयोजकत्वनिवेशः । तच्च निमित्तोपादानसाधारणोऽखण्डधर्मविशेषः । स्व(प्रतियोगिप्रयुक्त)प्रतियोगिकत्वसंबन्धेन नाशविशिष्टं नाशं प्रत्युक्तप्रयुक्तत्वसंबन्धेन नाशो हेतुः प्रतियोगितासंबन्धेन कार्यत्वमिति भावः । **तत्रावच्छेदकं कल्प्यत इति ।** अवच्छेदकत्वेन क्लृप्तं तत्र कल्प्यत इत्यर्थः । **आकाशत्वादीति ।** अनन्तकार्यकारणत्वमूलकानन्तनियमापत्तेरिति शेषः। **तुच्छ इति ।** शुक्तिरूप्यादौ चेति शेषः । **अतिप्रसक्तेरिति ।** तुच्छस्यानिवर्त्यत्वाच्छुक्तिरूप्यादेर्मूलाज्ञाननाशानाश्यत्वादुक्तरूपं मूलाज्ञाननाश्यत्वाति[1]प्रसक्तमिति भावः । **निवर्त्यताप्रयोजकं** प्रमाणमात्रनिवर्त्यतावच्छेदकम् । **अन्यथेति ।** आकाशादौ सत्यत्वा[2]ङ्गीकारेणाज्ञानप्रयुक्तत्वमस्वीकृत्य स्वकालीनदृश्यत्वरूपव्यावहारिकदृश्यत्वस्य मूलाज्ञाननाशं प्रति नाश्यतावच्छेदकत्वस्वीकारे इत्यर्थः । **नियमान्तरेति ।**

---

1 नाश्यत्वादिति–ग.   2 सत्वा–क.

पत्तेः। तथाच शुक्त्यादिज्ञानस्य येन रूपेण निवर्तकत्वम्, तेन रूपेणात्मज्ञानस्य निवर्तकत्वम्। रूप्यादौ येन रूपेण निवर्त्यत्वम्, प्रपञ्चे तद्रूपं विनानुपपद्यमानं स्वोपपादकतया तत्र तत्कल्पयतीति सिद्धं मिथ्यात्वम्। ननु—भवेदेतदेवम्; यद्यात्मज्ञानस्य प्रपञ्चे निवर्त्ये शुक्त्यादिज्ञानसाधारणमधिष्ठान-प्रमात्वमेवावच्छेदकमित्यत्र किंचिन्मानं भवेत्; रूपान्तरेणापि निवर्तकत्वसंभवात्, श्रुतिस्तु द्वैतप्रपञ्चस्याद्वितीयात्मज्ञानं निवर्तकमित्येतावन्मात्रे प्रमाणम्, न त्ववच्छेदकविशेषेऽपि। न च ज्ञान-निवर्त्यतामात्रान्मिथ्यात्वसिद्धिः; सेतुदर्शनादिनिवर्त्यदुरितादिषु व्यभिचारात्। तत्र विहितक्रियात्वादिना निवर्तकत्वान्न व्यभिचार इति-चेत्, प्रकृतेऽपि रूपान्तरं नावच्छेदकमिति कुतो निरणायि। ज्ञानस्य हि स्वप्रागभावं प्रति प्रतियोगित्वेन निवर्तकता, पूर्वज्ञानादिकं प्रति तूत्तरवर्तिविरोधिगुणत्वेन, संस्कारं प्रति फल-

---

उक्तनाश्यताकल्पनमूलकनियमेत्यर्थः। **येन रूपेण निवर्तकत्वमिति**। येन प्रमात्वेन धर्मेण येन स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वसंबन्धेन निवर्तकत्वं मिथ्यामात्रनिवर्तकत्वं येन प्रयोजकीभूताज्ञाननाशद्वारा रूप्यादिनिवर्तकत्वं चेत्यर्थः। **येन रूपेण निवर्त्यत्वमिति**। येन मिथ्यात्वेन प्रमासामान्यनिवर्त्यत्वं येनाज्ञानप्रयुक्तत्वेन धर्मेणाज्ञानरूपप्रयोजकनाशनाश्यत्वं चेत्यर्थः। **तद्रूपं विनेति**। उक्तसंबन्धं विना तेन संबन्धेनोक्तद्वारं च निवर्तकत्वमनुपपन्नं; मिथ्यात्वं विना प्रमासामान्यनिवर्त्यत्वमज्ञानप्रयुक्तत्वं विना तेन रूपेणोक्तनाश्यत्वं चानुपपन्नमित्यर्थः। **अधिष्ठान-प्रमात्वमेवेति**। उक्तान्यतरत्वसंबन्धेन प्रमात्वेन प्रयोजकीभूताज्ञान-नाशद्वारा निवर्तकत्वं न प्रपञ्चेऽस्ति; येन तत्रोक्तसंबन्धो मिथ्यात्वं वा

त्वेन, रागादिकं प्रति विषयदोषदर्शनत्वेन, विषं प्रति गरुडध्यानत्वेन, सेत्वादिदर्शनस्य दुरितं प्रति विहितक्रियात्वेन। एवं च मिथ्यात्वं विनापि ज्ञाननिवर्त्यत्वदर्शनान्न तन्मिथ्यात्वस्य साधकम्। उदाहृतेष्वपि सत्यत्वासम्प्रतिपत्त्या मिथ्यात्वमेवास्तीति चेत्, अस्तु वा मास्तु; ज्ञाननिवर्त्यत्वमात्रं तु न तस्य साधकमिति ब्रूमः। हेत्वन्तरेण सिद्धौ चैतदुपन्यासो व्यर्थः। शुक्तिरूप्यादौ कथमिति चेच्छृणु। अधिष्ठानज्ञानत्वेन तत्र ज्ञानस्य निवर्तकत्वात्। अधिष्ठानज्ञानत्वं हि अज्ञाननाशकज्ञानत्वं वा, अज्ञानसमानविषयकप्रमात्वं वेति तेन रूपेण निवर्तकत्वे तन्निवर्त्यस्य तज्ज्ञानसमानविषयकाज्ञानोपादानकत्वरूपमिथ्यात्वं सिद्ध्यतीति युक्तं शुक्त्यादिज्ञानसमानविषयकाज्ञानोपादानकत्वेन रजतादेर्मिथ्यात्वम्। सेत्वादिदर्शनादिनिवर्त्यदुरितादेस्तु न निवर्तकज्ञानसमानविषयकाज्ञानोपादानकत्वमिति न मिथ्यात्वम्। एवं चात्मज्ञानस्यापि विहितक्रियात्वेन निवर्तकत्वसंभवादधिष्ठानज्ञानत्वेन च निवर्तकत्वे मानाभावान्नात्माज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिः प्रपञ्चस्येति प्राप्तम्। अत्रोच्यते—आत्म-

---

कल्प्यमिति[1] भावः। **दोषदर्शनत्वेनेति**। रम्यत्वसंस्कारस्यारम्यत्वरूपदोषसंस्कार एव नाशको विरोधिसंस्कारत्वात् तद्द्वारोक्तदोषनिश्चयोपि तथेति भावः। **एवास्तीति**। अस्त्येवेत्यर्थः। तथाच मिथ्यात्वं विनेत्युक्तमसिद्धमिति भावः। **हेत्वन्तरेण** दृश्यत्वादिना। **अज्ञाननाशकेति**। तदुपादानाज्ञाननाशकेत्यर्थः। **तेन रूपेणेति**। तद्रूपव्याप्ये[2]त्यर्थः। यद्यपि विहितक्रियात्वेनेति परेणोक्तम्, तथापि प्रतियोगित्वादिनापि निवर्तकत्वशङ्कासंभवत्तामपि निरस्यति—**तत्रेत्यादि**।

---

1 कल्पनीयमिति—ग. 2 व्याप्यं- ग.

ज्ञानस्याप्यधिष्ठानज्ञानत्वेनैव प्रपञ्चं प्रति निवर्तकत्वम्, प्रकारान्तरासंभवात्। तथाहि—प्रतियोगित्वं तावन्न निवर्तकतावच्छेदकम्; प्रपञ्चस्य भावरूपत्वात्, ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन प्रतियोगित्वेन प्रागभावनिवर्तकत्वासिद्धेश्च। नाप्युत्तरगुणत्वम्; आकाशादेरात्मविशेषगुणत्वाभावात्, इच्छादेरपि प्रपञ्चनिवर्तकत्वापाताच्च। नापि फलत्वम्; संस्कारस्य स्मरणजनकत्ववदाकाशादेरात्मज्ञानजनकत्वाभावात्, संस्कारस्य स्मृत्यनाश्यत्वेनोदाहरणासिद्धेश्च। विषयदोषदर्शनस्य तु रागादि निवर्तकत्वं रागादिकारणीभूतबलवदनिष्टाननुबन्धीष्टसाधनत्वभ्रमरूपतत्कारणनिवर्तकत्वेनेति न प्रकृतोदाहरणादतिरिच्यते, शुक्तिरूप्यतुल्यत्वात्। गरुडध्यानं तु न प्रत्युदाहरणम्; ध्यानस्य रागादेरिव ज्ञानत्वानभ्युपगमात्, ज्ञानस्येच्छानधीनत्वेन तदधीनध्यानापेक्षया[1] वैलक्षण्यात्। स्पष्टं चैतदाकरे। ज्ञानत्वेऽपि तस्य सेतुदर्शनपक्षान्नातिरेकः; शास्त्रविहितत्वाविशेषात्। केवलं सेत्वादिदर्शनवद्विहितक्रियात्वमवशिष्यते। तच्च न संभवति; ज्ञानस्य कर्तुमकर्तुमशक्यत्वेन विधेयत्वायोगात्। विस्तरेण च ज्ञाने विधिराकरेषु निराकृतः, निराकरिष्यते चेहापि। सेतु-

रूपत्वादिति। आकाशादेरधिकवृत्तित्वादिना न ज्ञानप्रागभावत्वमित्यपि बोध्यम्। ननु—दृष्टिसृष्टिपक्षे आकाशादेर्मनःपरिणामत्वात्तादात्म्येन पृथिव्याद्यसंबन्धत्वेनानधिकवृत्तित्वात् ज्ञानप्रागभावत्वमस्तु; भावस्यापि तस्य स्वध्वंसरूपज्ञानप्रागभावत्वे बाधकाभावात्तत्राह—ज्ञानस्येति। असिद्धेरिति। ज्ञानस्य स्वनिवर्तकत्वासंभवोऽपि बोध्यः। जनकत्वाभावादिति। मनआदेर्जनकत्वेऽप्यसंस्कारत्वात्। न हि जनकमात्रं फलनाश्यमिति शेषः। दोषदर्शनस्य बहुविधदुःखप्रयोजकत्वादिदर्शनस्य। आकरेषु

[1] ज्ञानापेक्षया.

दर्शने कथमिति चेत्? विशिष्टाकारेण विधेयत्वोपपत्तेः[1] । न हि सेतुदर्शनमात्रस्य दुरितनाशकत्वम्; तत्रत्यम्लेच्छानामपि दुरितनाशप्रसङ्गात्, किंतु परराष्ट्रादुपस्थानादिपूर्वकव्रतकलापविशिष्टस्य; तथाच छत्रपादुकादिवर्जनदोषोद्घोषणदूरदेशगामित्वभिक्षाभोजित्वादिनियमानां कृतिसाध्यत्वात्तद्विशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति विशिष्टरूपेण विधानोपपत्तिः । आत्मज्ञाने तु नास्ति किंचिद्विशेषणमपि कृतिसाध्यम्, येन तद्विशिष्टत्वेनापि विधेयत्वं स्यात्, कर्मसमुच्चयस्य निराकरिष्यमाणत्वात्, बन्धस्याज्ञानमात्रहेतुकत्वेन ज्ञानातिरिक्तनिवर्तकानपेक्षणाच्च । बन्धस्याज्ञानहेतुकत्वं च 'मायां तु प्रकृतिं विद्यात्', 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यादिश्रुतिस्मृतिन्यायसिद्धम् । वक्ष्यते चाग्रे । अज्ञाननिवर्तकज्ञानस्य चोत्पत्तिमन्तरेणान्यापेक्षा नास्तीति शुक्त्यादिज्ञाने दृष्टम् । तथाचोक्तं वार्तिककृद्भिः—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥ इति ॥

---

समन्वयसूत्रभाष्यादिषु । विशेषणमपि कृतिसाध्यमिति । श्रवणादेरङ्गत्वे मानाभावादिति भावः । बन्धस्य मनआदेः । अज्ञानमात्रहेतुत्वेन[2] अज्ञानात्मकमात्रपरिणामिकत्वात् । निवर्तकानपेक्षणात् निवृत्तिजनकानपेक्षणात् । असंभावनादिरूपदोषाभावस्य प्रतिबन्धकाभावत्वेनात्मनिश्चयनिष्ठायां निवर्तकशक्तौ व्याप्यत्वेनापेक्षायामपि न जनकत्वम् । अदृष्टं न निवृत्तौ कारणम्; सुखदुःखतज्जनकेष्वेव तस्य तत्त्वादिति द्रव्यवर्धमानादौ स्पष्टम् । कालस्य हेतुत्वे तु मानस्याभावः, भावे वा ज्ञानमपि काल इति तदन्यमात्रवृत्तिरूपावच्छिन्नस्यैव

[1] पपत्तिः. [2] हेतुकत्वेन—क. ग.

प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा चात्मोत्पत्तितो नान्यद्भ्रान्तध्वस्तावपेक्षते ॥ इति च ॥

अत एव 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिः,

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

इत्यादिस्मृतिश्चाविद्यावस्थायां संसारोपलम्भं विद्यावस्थायां च तदनुपलम्भं दर्शयति । तस्मादधिष्ठानप्रमात्वेनात्मज्ञानानिवर्त्यत्वाच्छुक्तिरूप्यादिष्विव बन्धेऽपि मिथ्यात्वं सिद्धम् ।

---

प्रकृते व्यवच्छेदान्न दोषः । साधारणकारणं हि निवृत्तौ प्रतियोग्यपीति तन्न व्यवच्छिद्यते । [1]यत्तु 'तदा विद्वान्नामरूपाद्विमुक्त' इति श्रुतेः कालोऽप्यज्ञानकार्यनिवर्तक इति—तच्चित्रम्; यथा नद्य इत्यादि तथा विद्वानित्यन्तस्यैव मुण्डकपाठत्वात्, श्रुत्यन्तरे तदापदसत्वेऽपि तेन ज्ञानसामग्रीकालस्यैवोक्तत्वेन तद्धेतुत्वालाभात्। **इत्यादिश्रुतिस्मृतीति ।** आदिना व्यवहरन्नास्ते, माययैव मायया ह्यन्यदिव, तम आसीत्, मायामयमिदं द्वैतम्, विभेदजनकेऽज्ञाने इत्यादिश्रुतिस्मृतयो बोध्याः । **दर्शयतीति ।** यद्यन्यदपेक्ष्येत, तदा विद्यासत्वेऽपि तद्विलम्बेन कार्यं विलम्बेत; विद्यासत्वे कार्याविलम्बे तु तदन्यहेतुत्वे न मानमिति भावः । **तस्मादिति ।** शुक्तिरूप्यादेर्ज्ञाननिवर्त्यत्वं वदता त्वयापि शुक्त्यादिप्रमात्वेन तन्निवर्तकता न वाच्या; गौरवात्, किं तूक्तरीत्या प्रयोजकीभूताज्ञाननाशद्वारा प्रमामात्रस्य; तथाचात्माज्ञाने प्रपञ्चप्रयोजकत्वस्य श्रुत्यादिना लाघवाच्च सिद्धेरात्मज्ञाने प्रपञ्चनिवर्तकत्वं लोकसिद्धत्वादुक्तदोषाच्च न विधिविषयः । शुक्तिरूप्यादेर्ज्ञाननिवर्त्यत्वं

[1] न हि प्रकृते कालादिकं विधेयम्, न वानुष्ठातुं योग्यम्; येन तद्विशिष्टतया ज्ञानं कृतिसाध्यमिति भावः । यत्तु—ग.

यत्त्वीश्वरज्ञानेन सत्यं घटादि निवर्तत इति प्रत्युदाहरणम्, तन्न; ईश्वरज्ञानस्य तार्किकमतेऽप्युपादानगोचरापरोक्षज्ञानत्वेनैव कारणत्वात्, अभावस्य च निरुपादानत्वात्, अभावं प्रति कारणत्वे मानाभावात्, सोपादानत्वे तु समवेतत्वेन तस्यापि भावत्वापत्तेः, अत्यन्ताभावादिवच्च तदजन्यत्वेऽपि ध्वंसस्य तद्विषयत्वोपपत्तेः। न च तादृगीश्वरज्ञाने सम्प्रतिपत्तिरन्येषामिति न काप्यनुपपत्तिः। यथा च शुक्त्यादिज्ञानस्य

---

तु शुक्त्यादिप्रमया तदज्ञानतत्प्रयुक्तं नष्टमित्यनुभवाद्दोषादिनिमित्तसत्त्वेऽपि तन्नाशस्य जायमानत्वेन निमित्तनाशनाश्यत्वेनान्यथा सिद्धयितुमशक्यत्वादिति भावः। तद्विषयत्वोपपत्तेरिति। किंचिद्विषयकत्वे नियामकाभावेन न बाधकाभावाच्छ्रुत्यादिना सर्वविषयकत्वमिति भावः। अन्येषाम् औपनिषदादीनाम्। ईक्षणाकाशाद्योः पाठात्क्रमलाभेऽपि न हेतुतद्वत्त्वम्, घटादौ तु कर्तुरेव हेतुत्वे न मानम्, नतरां तज्ज्ञानादिहेतुत्वे इति तद्दृष्टान्तेनापि न तत्सिद्धिः। यत्तु सोपादानं प्रत्युपादानज्ञानादिसत्त्वरूपकर्तृत्वेनेव[1] कार्यमात्रं प्रत्युपादानाघटितरूपेणेशज्ञानादेर्हेतुत्वमिति—तत्तुच्छम्; उक्तकर्तृत्वविशिष्टस्य हि हेतुत्वग्राहकं मानं बाधकाभावाद्विशेषणस्योक्तज्ञानादेरपि हेतुत्वं गृह्णाति; विशिष्टे प्रवर्तमानस्य[2] विशेषणेऽपि प्रवृत्तेरौत्सर्गिकत्वात्। तथाचोपादानघटितरूपेणैव ज्ञानादेर्हेतुत्वे मानम्, न त्वन्यरूपेणेति भावः॥

ननु—यथा सेतुदर्शनमुक्तविशिष्टरूपेण विधेयम्, तथात्मप्रमाप्यध्ययनादिनियमादृष्टादिविशिष्टतया विधेया; अन्यथा अनधीतवेदान्तादिजन्यापि सा निवर्तिका स्यात्तत्राह—यथा च शुक्त्यादीति।

---

[1] सत्त्वरूपकर्तृत्वेनैव–ग. [2] प्रवृत्तमानस्य–ग.

**रूप्यादिनिवर्तकत्वमप्रामाण्यज्ञानाविरहमपेक्ष्यैव, एवमात्मज्ञानस्यापि श्रवणादिनिर्वृत्तासंभावनादिनिवृत्तिरूपाप्रामाण्यज्ञानविरहापेक्षत्वमिति न किंचिदप्याधिकं कल्पितम्। आत्मज्ञानस्य सर्वसुकृतसाध्यत्वं शुक्त्यादिज्ञानापेक्षया विलक्षणमिति तु दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमात्रोद्भावनात् वैधर्म्यसमा जातिः**

**निवृत्तिरूपेति**। निवृत्तिप्रयोज्येत्यर्थः। वाक्यार्थेऽसंभावितत्वज्ञानेन[1] प्रपञ्चसत्यत्वदेहात्म[2]संस्काररूपविपरीतभावनया च दोषेण बाधितविषयकत्वरूपाप्रमात्वं वाक्यार्थज्ञाने ज्ञाप्यते; तादृशभ्रमोपादानाज्ञानावृतत्वात्, तन्नाज्ञाननिवर्तकम्; अनावृतप्रमात्वाश्रयस्यैव शुक्त्यादिज्ञानस्य तत्त्वेन क्लृप्तत्वात्। तथाचाध्ययनश्रवणादिनियमादृष्टादेरुक्तप्रमात्वाज्ञाननिवृत्तौ तादृशाज्ञानशून्यप्रमाप्रतिबन्धकपापनिवृत्तौ वा जनकत्वम्। असंभावनादिनिवृत्तौ श्रवणादेर्जनकत्वमनावृतप्रमात्वमात्रेण ज्ञानस्य निवर्तकत्वं क्लृप्तमिति न विधेयम्। न वाध्ययनश्रवणादिनियमविशिष्टरूपेण विधेयत्वावकाशः; साङ्गप्रधानस्य हि कृतिसाध्यता प्रयोगविधिना बोध्यते। न वाध्ययनश्रवणादिनियमो ज्ञानाङ्गम्; येन तद्विशिष्टं ज्ञानं कृतिसाध्यतया बोध्येत, उक्तफलविशिष्टज्ञानादिस्वतन्त्रफलकत्वेन प्रधानत्वात्। न च विधेयजन्यफलजन्यफलं प्रत्येव नियमादृष्टं हेतुरिति नियमः; येन ज्ञानफलहेतुत्वं नियमादृष्टस्योच्येत, पुरुषार्थनियमस्थले व्यभिचारस्योक्तत्वादिति भावः॥

ननु—लोके शुक्त्यादिप्रमा पापनाशनिरपेक्षैवाज्ञानकार्यनिवर्तिकेति, कल्पित[3]त्वस्योक्तनिरपेक्षप्रमानिवर्त्यत्वव्याप्यत्वात्तदभावात्प्रपञ्चे कल्पितत्वाभावस्तत्राह—**आत्मज्ञानस्येति**। साध्यत्वं पापनाशद्वारा जन्यत्वम्। **वैधर्म्यमात्रेति**। अधिष्ठानप्रमात्वेन निवर्तकत्वं शुक्त्यादा-

[1] ज्ञानेन प्रपञ्चसत्यत्वज्ञानेन—ग. [2] देहासत्त्व—क. देहात्मत्व—ग.
[3] निवर्तके कल्पित—क. ख.

वात्मनि च ज्ञानयोस्तुल्यम् । शुक्त्यादिज्ञानं प्रति काचादिदोषः आत्मज्ञानं प्रति तु पापविशेषः प्रतिबन्धकः । तयोर्वैधर्म्यमात्रमप्रयोजकम् । अन्यथा काचादीनां मिथो वैधर्म्यमपि दोषः स्यात्, अत उक्तव्याप्यत्वमेवासिद्धमिति भावः । एतेन—गरुडादिध्यानस्य संस्कारसापेक्षस्य निवर्त्यविषादिकमिव श्रवणादिजन्यसंस्कारापेक्षात्मधीनिवर्त्यमपि सत्यमित्यपास्तम्; असंभावनादि[1]विषये लोके प्रमायाश्चा[2]संभावनादिदोषनिवृत्तये संस्कारापेक्षणेऽप्यधिष्ठानप्रमात्वेनैवात्मज्ञानस्य निवर्तकत्वादिति भावः ॥

ननु—लोके निवृत्तिनिवर्त्ययोः सत्ता समा, न हि रूप्यस्य निवृत्तिः शुक्तिस्वरूपा; तथासति शुक्तिरूप्यभेदाभेदयोरिव तयोरविरोधः स्यात्, एवमज्ञानाज्ञेययोर्दोषाधिष्ठानयोः सत्ता समैव; तथा च निवृत्त्यधिष्ठानरूप[3]ब्रह्मेवाज्ञानं सत्यं स्यादिति—चेन्न; अधिकरणस्य ध्वंसत्वमतेऽपि यद्यपि प्रतियोगिकालेऽपि ध्वंसस्तथापि नाशकत्वाभिमतसामग्र्युपहितस्यैवाधिकरणस्य ध्वंसव्यवहारनियामकत्वान्नातिप्रसङ्गः, तथाधिष्ठानस्य कल्पितध्वंसत्वेऽपि ज्ञानत्वोपहितस्यैव ध्वंसव्यवहारविषयत्वान्न सः । अज्ञेयाधिष्ठाने तु नान्यसमसत्ते; चिद्रूपत्वात्प्रातिभासिकस्यापि दोषस्योक्तत्वाच्च । यत्तु—यथानादिभावस्याज्ञानस्य निवृत्तिरदृष्टापि श्रुतिबलात्कल्प्यते, तथा सत्यस्यापि तस्य ज्ञाननाश्यत्वं तत एवेति—तन्न; न हि तस्य लोके श्रुत्यादिज्ञाननाश्यता न दृष्टा, न वा विदुषा तन्नाशो नानुभूयते; येन श्रुतिबलादेव तन्नाशकल्पना, न वा संस्काराद्यन्यस्य ज्ञाननाश्यस्य सत्यता युक्ता; मिथ्यात्वादिना ज्ञाननाश्यताया उक्तत्वात्, श्रुत्यापि हि लोकसिद्धमेवाज्ञानस्य ज्ञाननिवर्त्यत्वमुक्तं तत्त्वपूर्वम्,[4] अत एवाज्ञानसमान-

[1] असंभावितादि—ख. ग.　[2] प्रमाया इवा ग.　[3] रूपं—ग.　[4] न त्वपूर्वम्—ग.

**अज्ञानस्य च समानाधिकरणसमानाकारज्ञाननिवर्त्यत्वम् । जीवन्मुक्तौ च प्रारब्धकर्मप्रतिबन्धेन बन्धनाशविलम्ब इत्यादि सर्वं-**

विषयज्ञानत्वेन ज्ञाननिवर्त्योऽपि[1] प्रपञ्चोऽज्ञानवदज्ञानानुपादानक इत्यपास्तम् । अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यत्वस्याज्ञानप्रयुक्तत्वव्याप्यत्वात्, अन्यथा लोकाक्लृप्तहेतुत्वकल्पनागौरवात् ॥

ननु—ज्ञानमज्ञानात्मकस्यैव निवर्तकमित्यत्र ज्ञानं वृत्तिः, तत्प्रतिबिम्बितचिद्वा, नाद्यः; तस्या अज्ञप्तित्वात्, नान्त्यः; मुक्तानन्दस्य ज्ञप्त्यभावापत्त्या तस्याप्यज्ञप्तित्वात्, साक्षिभास्यसुखादौ तदभावाच्चेत्यत्राह—**अज्ञानस्य चेति** । यद्यप्यनावृतचिदेव ज्ञप्तिः, तथाप्यनावृतत्वप्रयोजकतया वृत्तावपि ज्ञानपदप्रयोगात्तामादायोक्तनियम इति भावः । ननु—लोकेऽधिष्ठानतत्त्वे साक्षात्कृते कर्मादिना न भ्रमानुवृत्तिरिति जीवन्मुक्तावनुवृत्तं जगत्सत्यम्, तत्राह—**जीवदिति** । यथा सोपाधिकभ्रमे नोक्तनियमः; उपाधिना प्रतिबन्धस्य दृष्टत्वात्, तथा निरुपाधिकभ्रमेऽपि भुज्यमानकर्मणा प्रतिबन्धस्य दृष्टत्वात् । न हि शतादिवर्षावच्छिन्नभोगहेतुत्वेन श्रुत्युक्तं कर्म दशादिवर्षमात्रावच्छिन्नभोगेऽपि हेतुरिति कल्पना युक्ता; अनन्तहेतुत्वापत्तेः, अज्ञानकार्यनाशे भुज्यमानकर्मत्वेन प्रतिबन्धकत्वस्य तदपेक्षया लघुत्वात्, ज्ञानमेवाज्ञानतत्प्रयुक्तनाश इति पक्षे प्रारब्धभोगकालीनत्वेन श्रुत्यादिसिद्धं यत्तदन्यज्ञानमेव तथेति कल्पनस्य ततोऽपि लघुत्वाच्च । ज्ञानस्याज्ञाननाशस्य वानु[2]भूयमानत्वान्नोक्तकर्मप्रतिबध्यता । तच्च ज्ञानं सत्यं मिथ्या वा । आद्ये, तदुपादानकत्वेन मिथ्यात्वं न सिध्येत् । नान्त्यः; शुक्त्याद्यज्ञानस्य सत्यत्वात् । न हि शुक्त्यादौ ज्ञाते तदज्ञानं मिथ्येति धीः; प्रत्युत तदज्ञानमासीदिति सत्यत्वधीरेव । एवं ज्ञानेनाज्ञानकार्यस्य

[1] त्वेन निवर्त्योऽपि—क. ग. [2] चानु—क.

**मुपरिष्टादुपपादयिष्यते । सत्यस्य ज्ञाननिवर्त्यत्वे त्वाश्रयविषयोभयसंबन्धित्वादिनातिप्रसङ्गो विवरणकारैर्वर्णितः ।**

---

न नाशः; न हि रूप्यादेर्ज्ञाननाश्यत्वमनुभूयते, नापि प्रतिपन्नोपाधौ निषेधः; 'क्षीयन्ते चास्ये'त्यादि श्रुत्यादिविरोधात्तत्राह—**इत्यादि सर्वमिति** । बाधकाले ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य रूप्यतदुपादानाज्ञानादौ प्रतीतेः, शुक्त्यज्ञानतत्प्रयुक्तं शुक्तिज्ञानान्नष्टमित्याद्यनुभवात्, स्वप्रकाशचित्प्रकाशरूपाज्ञानस्यानुपपन्नत्वाच्च । अत एव ऋतेऽर्थमित्यादिनानुपपन्नस्य मायाशब्दितमिथ्यात्वमुक्तम् । आसीदिति धीस्तु रूप्यादाविवाज्ञानेऽप्यनृते नायुक्तेत्याद्यग्रे उपपादनीयमित्यर्थः । **आश्रयविषयेत्यादि** । ज्ञानेन सत्यस्य निवृत्तिश्चेत्कीदृशस्य ज्ञाननाश्यत्वनियमः किं ज्ञानस्याश्रयेणाप्यथविषयेण अथोभयेन संबद्धस्य, नाद्यः; आत्मज्ञानेन धर्माद्यनाशात् । न द्वितीयः; नीलपीतावयविनो नीलत्वेन ज्ञानात्पीतिमनिवृत्तेः । न तृतीयः; देहज्ञानेन देहात्मतादात्म्यानिवृत्तेः । मिथ्याभूतस्यैव ज्ञाननाश्यत्वपक्षे तु ज्ञानात्तत्समानाश्रयविषयकाज्ञानस्यैव निवृत्तिः । तथा च[1] स्वप्रतियोग्यज्ञानप्रयुक्तस्यैव निवृत्तिरिति भावः । यत्तु—ईशप्रसादादेव बन्धनाशः; 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेणे'त्यादिश्रुतेः 'मत्प्रसादात्तरिष्यसी'त्यादिस्मृतेश्च । ज्ञानं तु प्रसादद्वारा हेतुः । तदुक्तम्—

'यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत् ।
एवं दृष्टः स भगवान् कुर्याद्बन्धविभेदनम् ॥'

इति । 'दृष्ट्वैव तं मुच्यत' इति श्रुताववधारणं त्वयोगव्यवच्छेदपरम्, मोक्षहेतुप्रसादेऽन्ययोगव्यवच्छेदपरं वा । अत एव—

'एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः ।

1. तया च—क. ग.

**तस्मादधिष्ठानज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम्।**

**इत्यद्वैतसिद्धौ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः.**

प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः ॥'

इति विष्णुपुराणमित्यत्राह—**तस्मादिति**। अधिष्ठानप्रमात्वेन मिथ्यानिवर्तकत्वस्य लोके क्लृप्तस्य 'तरति शोकमि'त्यादिशास्त्रोक्तत्वादित्यर्थः। न हि ज्ञानं प्रसादहेतुत्वेन लोके क्लृप्तम्, किंतु सेवा; तथाच 'यस्य प्रसादा'दित्यादेरीश्वरसेवाजन्यप्रसादो ज्ञानद्वारा मोक्षप्रयोजक इत्यर्थः; 'यस्य देवे परा भक्ति'रित्यादिश्रुतेः। 'यथा दृष्टये'त्यादेस्तु प्रसन्नो राजा पश्चाद्दृष्टो यथा मोचकस्तथेश इत्यर्थः।. न हि राजा बद्धं प्रति दृष्टिमात्रेण प्रसन्नः, प्रत्युत सापराधं[1] बद्धं प्रति भूयो निग्राहकः। 'तमेवे'त्यादिश्रुत्या शुद्धात्मज्ञानस्य सर्वद्वैतनिवर्तकत्वेन प्रसादहेतुत्वासंभवाच्च। 'दृष्टैवे'वेत्यादेः प्रसादेऽन्ययोगव्यवच्छेदपरत्वोक्तिः शोभते; अदृष्ट्वा न मुच्यते इत्यस्यैव प्रतीतेः प्रसादस्याश्रुतत्वाच्च। एवं 'ज्ञाते त्वि'त्यादिविष्णुपुराणे तु ज्ञानं न तत्त्वदर्शनम्; किंतु सर्वत्र विष्णुरूपत्वदर्शनरूपं समत्वम्—

'यतितव्यं समत्वे च निर्वाणमपि चेच्छता।
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ॥
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम्।
एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ॥
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृत्।'

[1] अपराधं—क. ग.

इति पूर्ववाक्यात्। अत एवात्मतुल्यत्वस्य रागद्वेषविषयत्वायोग्यत्वरूपस्य ज्ञानं तत्फलमुक्तम्। अत एव च—

'सर्वत्र दैत्याः समतामुपेत समत्वमाराधनमच्युतस्य।
तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते'॥

'समाश्रिताद्ब्रह्मतरोरनन्तान्निस्संशयं प्राप्स्यथ वै महत्फल'मित्यत्र विष्णुपुराण एव समत्वरूपाराधनजन्यप्रसादस्य तर्वाश्रयणदृष्टान्तेन परम्परया मोक्षफलप्रयोजकत्वमुक्तम्। न हि सफलतर्वाश्रयणस्याऽव्यवधानेन फलप्रापकत्वनियमः; किंतु लोष्टादिव्यापारव्यवधानेनेति भावः॥

'तस्योपनिषत्, सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यः। अथ नामधेयम्, सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य' इति बृहदारण्यकोक्तिभ्यां ब्रह्मसत्तातोऽपकृष्टत्वेन प्रपञ्चसत्ताप्रतीत्यापि प्रपञ्चो मिथ्या। न च—राजराजो देवदेवो मन्मथमन्मथ इत्यादौ देवत्वादीनामिव प्रपञ्चसत्त्वस्याप्यपकृष्टत्वं न तु बाध्यवृत्तित्वमिति—वाच्यम्; देवत्वादिजातेर्हि नापकृष्टत्वं संभवतीति आराध्याद्यपेक्षयोत्कृष्टमाराध्यत्वादिकं बुध्यते। तथाच तद्व्यवहारकालाबाध्यत्वरूपप्रपञ्चसत्वापेक्षयोत्कृष्टं सत्त्वं त्रिकालाबाध्यत्वमेव। सर्वाराध्यत्वरूपत्वस्येव सर्वकालाबाध्यत्वरूपत्वस्यैवोत्कर्षस्योत्कृष्यमाणस्वरूपघटकत्वात्। अविनाशिवृत्तित्वादिकं तु तदाश्रयोत्कर्षमात्रपर्यवसन्नम्। किञ्च देवदेवेत्यादौ न निर्धारणम्; समासत्वात्। 'सत्यस्य सत्य'मित्यत्र तु सत्यब्रह्मभेदेन प्रतीयमानानां मध्ये ब्रह्मैव सत्यमित्यर्थसंभवान्निर्धारणम्। अत एव 'क्षत्रियो मनुष्येषु शूरतम' इत्यादौ क्षत्रियगतमनुष्यत्वं मनुष्याणामिव ब्रह्मगतसत्त्वं प्राणानां निर्धारणोपपादकं 'प्राणा वै सत्य'मित्यनेनोक्तम्। एक ब्रह्मरूपसत्तासंबन्धः प्रतीतिविषयो लाघवात्सर्वत्रेति ज्ञापयितुमेकवचनम्। अन्यथा सत्यमिति प्राणाः सत्या इति एष तत्सत्यमिति च ब्रूयात्। लाघवेन समासस्यौत्सर्गिकत्वेन विशेष्यविशेषणयोरेकविभक्ति-

कत्वस्य च युक्तत्वात् । तथाच क्षत्रियस्यैव शूरतमत्वमिव ब्रह्मण एव सत्यत्वं शब्दार्थः । अथ न निर्धारणमित्यत्र तुष्यसि, तुष्य ; तथापि देवदेवेत्यादावाराध्यत्वमिव प्रकृतेऽधिष्ठानत्वं षष्ठ्यर्थः ; रूप्यादेः सत्यं शुक्त्यादीत्यादौ तथा प्रतीतेः । शुक्तिरूप्यमित्यादाविवारोप्यत्वं तु न तदर्थः ; त्वयाप्यनङ्गीकारात् । ब्रह्मणः सत्यस्वरूपत्वस्य लोके सन्दिग्धत्वेन तस्यैव लोकसिद्धव्यावहारिकप्रपञ्चसत्त्वानुवादेन श्रुतिप्रतिपाद्यत्वेन तद्विरोधाच्च ॥

'सत्यं ज्ञान'मिति सत्यस्वरूपस्य ब्रह्मलक्षणस्योक्त्यापि दृश्यं मिथ्या ; अन्यथा तत्रातिव्याप्तेः । ननु— बृहदारण्यके 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्य'मिति, 'तानि ह वा एतानि त्रीण्यक्षराणि सत्ताय[1]मिति 'तद्यत्सत्तदमृतमथ यत्तन्मर्त्यमथ यद्यन्तेनोभे यच्छती'त्यनेनामृतमर्त्यशब्दितमुक्तामुक्तनियन्तृत्वं सत्यत्वं ब्रह्मणीत्युक्तेः प्रपञ्चसत्यत्वेऽपि न दोषः ;

'सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन् प्रतिष्ठितम् ।
सत्तासत्ते च गोविन्दस्तस्मात्सत्यं सतां मते ॥

इति भारतोक्तेश्च ! न च—रूढ्यर्थे योगत्यागः ; 'यदाजिमीयुस्तदाज्यानामाज्यत्व'मित्यादाविव निरवकाशश्रौतयोगबाधायोगात् । 'शास्त्रस्था वा तन्निमित्तत्वात्' इति जैमिनिसूत्रे यवमयश्चरुरित्यादौ प्रियङ्ग्वादिकं दीर्घशूकादिकं वा यवशब्दार्थ इति संशये, 'यदान्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ती'त्यादिवाक्यशेषेण दीर्घशूकादिकमेव, न तु पृथग्जनप्रसिद्ध्यान्यत् । शास्त्रार्थसन्देहे शास्त्रस्था प्रसिद्धिर्हि निर्णायिका ; तस्या लोकप्रसिद्ध्यपेक्षया बलवत्त्वेन

[1] सत्ताया—ग.

शास्त्रार्थनिर्णयस्य तन्निमित्तकत्वादिति हि स्थितम् । उक्तं च स्मृतिपादवार्तिके—

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ इति ॥

गौणं श्येनादिशब्दस्य यागविशेषादिरूपं 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्य' मित्यर्थवादोक्तम् । लाक्षणिकं तु पुरोडाशानलङ्कुरु' इत्यादौ पुरोडाशशब्दस्य धानाः, करम्भः, पुरोडाशः, परीवापः, पयस्या, इति सवनीयहविःपञ्चकरूपम् । वाक्यभेदेन 'आश्ववालः प्रस्तर' इत्यादौ काशानामश्ववालशब्दवाच्यत्वं प्रस्तरकार्ये विधानं चेति वाक्यभेदेनेति—चेन्न; बृहदारण्यके तस्येत्यादेरुन्मत्तप्रलापत्वात् । छान्दोग्ये हि तस्येत्यादिवाक्यम्; तच्च ब्रह्मनामस्तुतिद्वारा दहरब्रह्मण उपास्यस्य स्तुतिपरत्वेन सावकाशत्वान्न योगव्यवस्थापकम्! उक्तं हि भाष्ये—सद्ब्रह्माऽमृतवाचकत्वात् सकारोऽमृतः तिकारो मर्त्यस्तयोरन्तरत्वात्,[1] यमिति नियामकम्, एवं ब्रह्मनामाक्षरस्याप्यमृतत्वं नियन्तृत्वं च किमुत ब्रह्मण इत्युपास्यं ब्रह्म स्तूयत' इति । तिकारो मर्त्य इत्यनेनापि सकारस्य न हि निन्दान्यायेन स्तुतिर्बोध्या । तथाच 'एकमेवाद्वितीयं तत्सत्यं स आत्मे' त्यादिना सर्वद्वैतनिषेधपूर्वकं ब्रह्मण एव सत्यशब्देनोक्तत्वात्, तादृशस्यैव दहरब्रह्मस्वरूपत्वेन तत्र रूढसत्यशब्दस्तुत्यर्थमुक्तवाक्यस्योक्तत्वात्, 'सद्भाव एष भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्य' दित्यादि विष्णुपुराणाच्च, शास्त्रप्रसिद्ध्या ब्रह्मण एव सत्यशब्दरूढिविषयत्वात्, 'सत्यं ज्ञान' मित्यादिवाक्यमबाध्यत्वोपलक्षितस्वरूपलक्षणपरमेव । 'सत्ये प्रतिष्ठित' इत्यादेस्तु सत्ये स्वस्वरूपे प्रतिष्ठितः

[1] रन्तत्वा–ख. रन्त्यत्वा–ग.

'स्वे महिम्नी' ति श्रुतेः। सत्यमस्मिन्नैक्येन प्रतिष्ठितं काष्ठां प्राप्तम्; 'सत्यस्य सत्यमि' ति श्रुतेः। सत्तासत्ते व्यावहारिकं सत्यमनृतं च गोविन्दः; 'सत्यं चानृतं च सत्यमभव' दिति श्रुतेः। सत्तासत्ते मुक्तामुक्तौ गोविन्दाधीनावित्यर्थस्तु न युक्तः; आधुनिकलक्षणापत्तेः। तस्मात्सर्वापेक्षया सत्यत्वात्सर्वाधिष्ठानत्वाच्च कृष्णः सत्य इति व्याख्यानम्। यत्त्वन्यानधीनसत्यत्वं लक्षणमपरिच्छिन्नानन्दत्वादिवदिति, तन्न; आनन्दस्वरूपस्येव सत्यस्वरूपस्यैवास्मन्मते लक्षणत्वसंभवात्। त्वद्रीत्या धर्मस्य लक्षणत्वेऽपि सत्यादिपदलक्षणायां मानाभावेन ब्रह्मण्येव सत्यत्वानन्दत्वादिस्वीकारौचित्याच्च। 'विमुक्तश्च विमुच्यत' इति श्रुत्यर्थापत्तिरपि तत्र मानम्। न चासत्सङ्गात्सतां दोषस्येव संसारस्य सत्यत्वेऽप्यस्वाभाविकत्वात्सज्जनः सज्जनो जात इत्यस्येवोक्तश्रुतेरुपपत्तिरिति—वाच्यम्; पूर्वं दौर्जन्यत्यागेन सज्जनत्ववत्संसारित्वत्यागेन पूर्वं विमुक्तत्वासंभवाद्विमुक्तपदस्य स्वभावतोऽसंसारिलाक्षणिकत्वं वाच्यम्। तत्र च मानाभावात्, 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति, ब्रह्मैवसन् ब्रह्माप्येति'—

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमला धर्माः प्रकृतेस्तु न चात्मनः॥

इति श्रुतिस्मृतिभ्यश्च। धृतराष्ट्र उवाच—

सनत्सुजात यदिदं शृणोमि
मृत्युर्हि नास्तीति तवोपदेशः।
देवासुरा आचरन् ब्रह्मचर्य-
ममृत्यवे तत्कतरन्नु सत्यम्॥

सनत्सुजात उवाच—

अमृत्युं कर्मणा केचित् मृत्युर्नास्तीति चापरे।
शृणु मे ब्रुवतो राजन् यथैतन्मा विशङ्किथाः॥

उभे सत्ये क्षत्रियाद्यप्रवृत्ते
मोहो मृत्युः सम्मतोऽयं कवीनाम् ।
प्रमादं मृत्युमहं ब्रवीमि
सदाप्रमादममृतत्त्वं ब्रवीमि ॥
प्रमादाद्वा असुराः पराभव-
न्नप्रमादाद्ब्रह्मभूताः सुराश्च ।
न वै मृत्युर्व्याघ्र इवात्ति जन्तू-
न्नाप्यस्य रूपमुपलभ्यते[1] ॥

इति भारतोक्तिरपि मानम् । मृत्युर्नास्तीति तवोपदेशं देवासुरा अमृत्यवे ब्रह्मचर्यमाचरन्निति च यदिदं शृणोमि तत्तयोर्मध्ये कतरत्सत्यम्? उभयं न हि सत्यम्; विरोधात् । मृत्योर्नास्तित्वे तदभावाय ब्रह्मचर्यं न युक्तम् । अस्तित्वे तु न नास्तित्वमिति भावः । केचिद्वेदोक्तेन कर्मणाऽमृत्युर्मोक्षो भवतीत्याहुः । अपरे त्वात्मव्यतिरेकेण द्वितीयमपश्यन्तो मृत्युर्नास्तीत्याहुः । तत्राद्यपक्षो मृत्योस्तात्त्विकत्वपक्षस्वीकारेणेति स न युक्त इत्याशयेनाह—उभे इति । उभे सत्ये प्रवृत्ते सत्यतया प्रवृत्ते, नच विरोधः; यतो मृत्युः संसारः सत्य इति मूढानां संमतम्; कवीनां तु मृत्युर्मोहो मिथ्याज्ञानमनात्मन्यात्माभिमान इत्यादि संमतम् । तथाच मिथ्याज्ञानं भ्रम इत्यमृत्युरेव सत्यः, तेषां कवीनां मध्येऽहं प्रमादं स्वाभाविक[2]ब्रह्मभावात्प्रच्यवरूपामनवधानतां ब्रह्मात्मैक्यरूपावधानविरोधिस्वरूपमुक्तमोहस्यापि मूलं भावरूपमज्ञानं मृत्युं ब्रवीमि । अप्रमादमुक्तप्रमादशून्यमात्मस्वरूपं सदातनमुक्तप्रमादस्य मिथ्यात्वादमृतत्वं ब्रवीमि । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' 'नीहारेण प्रावृता जल्प्या' इत्यादिश्रुतेः । तथा च मृत्युरूपः

---

[1] लक्ष्यते-ग. [2] स्वाभाविकं ब्र-ग.

# अथ दृष्टिसृष्ट्युपपत्तिः.

**शुक्तिरूप्यस्वप्नादिवद्दृष्टिसृष्ट्यन्यथानुपपत्त्यापि जगतो मिथ्यात्वसिद्धिः। अथ केयं दृष्टिसृष्टिः? (१) दृष्टिरेव सृष्टि-**

---

संसारो ज्ञानाभेदादवधानरूपज्ञाननिवर्त्यत्वरूपविरोधित्वात्प्रमादात्मकसंसारवति सदा तदभावोक्तेश्च ामिथ्येति भावः। प्रमादाप्रमादयोर्मृत्य्वमृत्युत्वे मानमाह—**प्रमादादीति**। देहात्मधीरूपेण परिणतादज्ञानादसुरा विरोचनादयः पराभूताः 'अनुपलभ्यात्मान' मित्यादि 'पराभविष्यन्ती' त्यन्तश्रुतेः। अप्रमादात्प्रमादात्मकद्वैतविरोधि स्वस्वरूपं निर्णीय सुरा ब्रह्मभूताः 'तं देवा आत्मानमुपासते तस्मात्तेषां सर्वे लोका आप्ता' इति श्रुतेः। अथवा असुषु रमन्त इत्यसुरा मूढाः, स्वस्मिन् ब्रह्माभिन्ने रमन्त इति सुरा ब्रह्मविदः। तदुक्तम्—

'आत्मन्येव रतिर्येषां स्वस्मिन् ब्रह्मणि चामले ते सुरा' इति। मृत्युर्यमो व्याघ्र इव साक्षान्नात्ति किं त्वज्ञानतत्कार्यद्वारा दुःखदातृत्वेनात्तीव अस्य व्याघ्र इवादतो यमस्य रूपं नोपलभ्यते न प्रामाणिकम्। तथा चाज्ञानतत्कार्यस्य साक्षाद्दुःखदत्वेनोपलम्भात्तदेव मृत्युरज्ञानकार्यकर्मफलव्यवस्थापकत्वाद्यमोऽपि मृत्युरुपचर्यते। अत एव 'न चेदिहावेदीर्महती विनष्टिरि'ति श्रुतिरज्ञानं मृत्युपर्याय[1]विनष्टिशब्देनाह। 'मृत्युर्वै तमो ज्योतिरमृतम्' इति च श्रुतिः। यत्तु मोहोऽज्ञानहेतुकः प्रमादोऽस्वाभाविक इति व्याख्यानं तन्न शोभते; आधुनिकलक्षणापत्तेः। 'सत्यस्य सत्य'मित्यादिश्रुत्यादिना मिथ्यात्वसिद्धिः॥

इति ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः॥

---

[1] पर्यायं--ग.

रीति वा, (२) दृष्टिव्यतिरिक्तसृष्ट्यभावो वा, (३) दृष्टि व्यतिरेकेण सृज्याभावो वा, (४) दृष्टिसामग्रीजन्यत्वं वा, (५) दृष्टिसमानकालीनसृष्टिर्वा, (६) दृष्टिसमानसत्ताकसृष्टिर्वा, (७) सदसद्विलक्षणत्वं वा, (८) त्रिविधसत्त्वबहिर्भूतत्वे सत्य-सद्विलक्षणत्वं वा, (९) अज्ञातसत्त्वाभावो वा, (१०) ज्ञातैक-सत्त्वं वा। आद्ये वृत्तिरूपा चैतन्यरूपा वा दृष्टिरभिमता। प्रथमे चरमवृत्तिविषयब्रह्मणोऽपि दृष्टिसृष्ट्यापत्तिः। द्वितीये सर्वदापि सृष्ट्यापत्तिः। न द्वितीयः; चैत्रेण सृष्टो मया दृष्ट इति वैलक्षण्येन व्यवहारानुपपत्तेः। न तृतीयः; ज्ञातो घटो न ज्ञानमित्यनुभवविरोधात्। न चतुर्थः; एकसामग्रीप्रसूतत्वेन घटादेर्दृष्ट्यभिन्नत्वेनानन्तरोक्तदोषात्। न पञ्चमः; शाब्दादि-ज्ञानसमकालोत्पन्नघटादौ सिद्धसाधनात्तद्वदन्यत्रार्थान्तरतापत्तेश्च। न षष्ठः; उभयसत्त्वेऽप्युपपत्तेः सिद्धसाधनात्। न सप्तमः; अस्यैव मिथ्यात्वरूपत्वेन तत्साधनायैव तदुपन्यासानुपपत्तेः। नाष्टमः; त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्याप्यन्तर्भावेन दृष्टिसृष्टिपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः। न नवमः; तुच्छसाधारण्यात्। न दशमः; सुखादौ सिद्धसाधनात्तद्व-दन्यत्रार्थान्तराच्चेति—चेन्न; दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैक-

---

अथ दृष्टिसृष्ट्युपपत्तिः.

दृष्ट्यभिन्नत्व इति। दृष्टिभिन्नत्वे मानाभावात्सिद्धे इत्यादिः न चोक्तदोष एव भेदे मानमिति—वाच्यम्; एकसामग्रीजत्वस्या[1] भेदव्याप्यतयोक्तदोषवारणाय सामग्रीभेदस्यावश्यकत्वात्। **तद्बहिर्भावेति**। तच्छून्यत्वेत्यर्थः। **दोषेत्यादि**। दोषत्वं तावदन्यतमत्वं

[1] जन्यत्व-ग.

सत्त्वस्याज्ञातसत्त्वाभावस्य वा, प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैक-सत्त्वस्य वा, द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्त्वस्य वा विवक्षितत्वात्। तथा च न सुखाद्यंशे सिद्धसाधनम्, तद्वदन्यत्रार्थान्तरं वा। ननु—

'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥'

इति प्राचां वचनेन बौद्धं प्रति प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वप्रतिपादकेन च सूत्रभाष्यविवरणादिग्रन्थेन विरोध इति—चेन्न; अनाद्यतिरिक्तसृष्टिविषय एव दृष्टिसृष्टिस्वीकारात्, कारणात्मना स्थायित्वस्वीकाराच्च। तावतैव बौद्धाभिमतक्षणिकत्वनिराकरणोपपत्तेर्नाकरविरोधः, प्रत्युताकरेषु बहुशो दृष्टिसृष्टि-

अतो नाननुगमः। भ्रमत्वजातिमद्धीविषयत्वं वा दोषप्रयुक्तत्वम्, भ्रमत्वावच्छिन्नजनकतावच्छेदकजातिरविद्यात्वं वा दोषत्वं ग्राह्यम्। तथाच दोषप्रयुक्तत्वे सति ज्ञातैकसत्त्वं लक्षणम्। परमते सत्यस्य भ्रमाङ्गीकारेण सिद्धसाधनाद्भ्रमप्रागभाववद्वैयर्थ्याच्च विशेष्यदळम्। स्वज्ञानव्याप्यत्वं तदर्थः। व्याप्यत्वव्यापकत्वे कालिके न ग्राह्ये। ज्ञानमज्ञानशून्यचिद्रूपमपेक्ष्य लाघवादाह—**अज्ञातसत्त्वाभावस्येति**। स्वीयेनाज्ञानाभावेन व्याप्यत्वस्येत्यर्थः। निबन्धनस्येत्यन्तमनुषज्यते। तस्य च पूर्वत्रेवात्रापि दोषप्रयुक्तवृत्तेरित्यर्थः। पुरुषान्तरवेद्ये च नाज्ञानम्; मानाभावात्। यत्र हि यं पुरुषं प्रति प्रकाशप्रसक्तिस्तत्र तस्याज्ञानं युक्तं[1] तत्तत्पुरुषीयाज्ञानाभावव्याप्यत्वं तत्पुरुषं प्रति दृष्टिसृष्टिरिति बोध्यम्। परोक्षविषयसङ्ग्रहायासत्त्वापादकाज्ञानमेव लक्षणद्वयेऽपि निवेश्यम्। **प्रतिपन्नेत्यादि**। स्वप्रतिपत्तिविशेष्य-

[1] न प्रयुक्तं—ग.

रुपपादितैव। नन्वेवं—प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेर्ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वस्य चोक्तिरयुक्तेति—चेन्न; स्वाप्नकार्यकारणभावबोधकवाक्यवदुपपत्तेः। न चैवं वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वप्नवाक्यतन्मीमांसातुल्यतापत्तिः; विषयबाधाबाधाभ्यां विशेषोपपत्तेः। अत एव—तृप्त्यर्थं भोजने परप्रत्यायनार्थं शब्दादौ च प्रवृत्तेरयोगेन स्वक्रियाव्याघात इति—निरस्तम्; स्वाप्नव्यवहारवदुपपत्तेः। अथैवं—घटादेः स्वज्ञानात्पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तिः; अधिष्ठानस्यापि शुक्तीदमंशस्य रूप्यादिवत् इदं रजतमिति ज्ञानात्प्रागसत्त्वेन सम्प्रयोगादिहेतुत्रयजन्यत्वरूपाध्यासतटस्थलक्षणस्य सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इत्यस्य स्वरूपलक्षणस्य चायोग इति—चेन्न; प्रतिकर्मव्यवस्थायाः सम्प्रयोगा-

---

दृष्टिजन्यवृत्तेर्ज्ञातैकसत्त्वस्येत्यर्थः। अधिष्ठानसामान्यांशदृष्टेरारोप्यमात्रहेतुत्वादुक्तदृष्टिजन्यत्वं जन्यमात्रस्याक्षतम्। दृष्ट्रन्तरेत्यादि। दृष्टिसृष्टिपक्षे पुरुषान्तरीयसुखादि न ज्ञायते, किंतु पुरुषान्तरीयत्वेन स्वस्मिन्नेव कल्प्यत इति भावः। सृष्टिविषये सृज्यमान एव या दृष्टिः सा अनाद्यन्यत्र, न त्वनादौ स्वीक्रियते। अनादौ मिथ्यात्वसिद्धिस्तु दृश्यत्वादिनैव न तु दृष्टिसृष्ट्येति भावः। विषयबाधेति। यत्तु—स्वप्नाविशेषे बाधाभावेऽप्यनुपपन्न इति—तन्न; दोषप्रयुक्ताप्रयुक्तत्वाभ्यां बाधाबाधयोरुपपत्तेः, अन्यथा 'अहमेवेदं सर्वोऽस्मी'ति श्रुत्युक्तस्वप्न[1]तत्त्वविद्याया अपि बाधापत्तेः। उक्तं च शाबरभाष्ये—'यस्य दुष्टं करणं यत्र च मिथ्येति प्रत्ययस्तद्भ्रान्तिः, अन्यत्समीचीन'मिति। सत्यस्य वस्तुनः

---

[1] स्वाप्न—ग.

दिहेतुत्रयजन्यत्वरूपाध्यासतटस्थलक्षणस्य च मन्दाधिकारिविषयत्वात् । सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इति स्वरूपलक्षणं तु दृष्टिसृष्टिपक्षेऽप्यविरुद्धम् । न हीदमंशावच्छिन्नं चैतन्यं न वस्तु; न वा मिथ्यारूप्यस्य तेन सह न संभेदावभासः । न च—इदं रूप्यमिति ज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोध इति—वाच्यम्; इदं रूप्यमिति ज्ञानकाले शुक्तित्वस्याभावेऽपि तदज्ञानस्थित्यविरोधात् । न हि सत्ताकाल इव सत्ताविरहकालेऽप्यज्ञानं विरुध्यते । न च–इदं रूप्यं नेदं रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तिरिति–वाच्यम्; भिन्नविषयत्वेऽपि विषययोः सारू-

---

इदमवच्छिन्नचितः । **मन्दाधिकारीति** । अधिकारिभेदकल्पिता हि प्रक्रियाभेदाः शास्त्राचार्यैरनूदिता इति भावः । यद्यपीदं रजतमित्यादावधिष्ठानरूपेदमाकारा वृत्तिः पूर्वं संभवति, सृष्टदृष्टिपक्ष इव पूर्वजातायास्तस्या रूप्याकारवृत्तिकालानुवृत्तिसंभवात्; तथापीदं रूप्यमित्याकारैकैव विशिष्टगोचरा[1] वृत्तिर्लाघवात्, अधिष्ठानज्ञानहेतुत्वपक्षे तु वृत्तिद्वयस्वीकारादेव न दोषः । **चैतन्यं न वस्त्विति** । उपाधेर्मिथ्यात्वेऽप्युपहितस्य स्वरूपं सत्यमिति भावः । **स्थित्यविरोधादिति** । भाविनि सृष्टदृष्टिपक्षे ज्ञानविषयत्वस्येवाज्ञानविषयतावच्छेदकत्वस्यापि स्वीकाराद्दृष्टिसृष्टिपक्षे आद्यस्यास्वीकारेऽपि द्वितीयाविरोधादिति भावः । **सत्ताकाल इति** । दृष्टिसृष्टिपक्ष इत्यादिः । सत्ताकाले ज्ञानाज्ञानयोर्विरोधेऽपि तत्पूर्वकाले तज्ज्ञानाभावात्तदज्ञानं न विरुद्धम्; पक्षान्तर इव भाव्यवच्छेदेनाज्ञानानुभवसंभवात्तादृशज्ञानस्य कार्यान्यथानुपपत्तिकल्प्यत्वाच्चेति भावः । **भिन्नविषयत्वेऽपीत्यादि** । पूर्वज्ञाने

[1] विशिष्टागोचरा–ग.

प्यात् स्वप्नबाध्यबाधकयोरिव बाध्यबाधकभावोपपत्तेः। न च रूप्यादिबाधस्यापि दृष्टिसृष्टित्वे तेन रूप्यादेर्मिथ्यात्वासिद्धिरिति—वाच्यम्; बाध्यान्यूनसत्ताकत्वमेव बाधकत्वे प्रयोजकम्, न त्वधिकसत्ताकत्वमित्यस्योपपादितत्वेन व्यावहारिकेण व्यावहारिकबाधवत् प्रातिभासिकेन प्रातिभासिकबाधाविरोधात्। न च—सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रतिसुषुप्ति प्रतिप्रलयं च मुक्तस्य पुनरावृत्त्यापत्तिरिति—वाच्यम्; जीवब्रह्मविभागादेरनादित्वेन दृष्टिसृष्टित्वानभ्युपगमस्योक्तत्वात्। न च सुषुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनः

रूप्यमिदमात्मकम्, द्वितीयज्ञाने तु प्रतियोगितासंबन्धेनाभावगतं ज्ञायते; यथाज्ञानं सृष्टिस्वीकारात्। अतो भिन्नविषयकत्वेऽपि स्वप्नवत्सारूप्यादुक्तरूप्ययोः रूप्यत्वरूपानादिधर्मवत्तया ज्ञायमानत्वाद्बाध्यबाधकत्वोपपत्तेरित्यर्थः। अथवा सारूप्याद्विरोधिधीविषयत्वेन समानत्वादित्यर्थः। यथा सृष्टदृष्टिपक्षे बाध्यप्रतियोगिकाभावधीर्बाधिका तथा दृष्टिसृष्टौ तत्तत्प्रतियोगिकाभावधीस्तत्र [1] बाधिका। न चापूर्वकल्पनेति वाच्यम्; अनादिशक्तिविशेषस्य बाधकतावच्छेदकत्वात्। एवं च रूप्यत्वादेः प्रतिरूप्यं दृष्टिभेदेऽपि [2] न क्षतिरिति ध्येयम्। **व्यावहारिकेण** द्वैतभानेन [3]। **व्यावहारिकबाधवत्** पूर्वोक्तव्यावहारिकद्वैतबाधवत्। **उक्तत्वादिति**। वस्तुत ईशस्येव तस्माज्जीवे भेदस्यापि स्थूलमनःपरिणामत्वमेव; सुषुप्तयन्यदशायामेव तस्य दृश्यत्वात्। अज्ञानोपाधेर्विद्यमानत्वादेव सुषुप्तिप्रळययोर्न मुक्ततापत्तिरिति ध्येयम्। **संस्कारादेरिति**। अज्ञायमानकार्यानङ्गीकारेण तादृशसंस्काराद्यसंभव [4]

[1] स्तत्र तत्र–ग. [2] सृष्टिभेदेऽपि–ग. [3] द्वैताभावेन–ग. [4] संस्कारावेद्यसंभव–ग.

प्रबोधायोगः; कारणात्मना संस्कारादेः सत्त्वात्। न च—मोक्षस्य दृगन्यत्वेन स्वाप्नमोक्षवत् दृष्टिसृष्ट्यापत्तिः; मोक्षस्य ब्रह्मस्वरूपत्वेन दृग्भिन्नत्वासिद्धेः। न च—चैतन्यमात्ररूपा दृष्टिर्न सृष्टिः, किंतु वृत्तिविशिष्टचैतन्यरूपा वा, वृत्तिरूपा वा दृष्टिः सृष्टिरिति वाच्यम्, तथा च तस्या अपि दृष्ट्यन्तरं सृष्टिरित्यनवस्थेति—वाच्यम्; चैतन्यमात्रस्य

---

इति भावः। कारणात्मनेति। कारणीभूताज्ञानगतसूक्ष्मावस्थारूपेणेत्यर्थः। तादृशरूपस्य तु न दृष्टिसृष्टिः। अत एव धर्माधर्मयोरपीश्वरप्रसादकोपरूपयोर्विहितानिषिद्धक्रियोत्तरं परोक्षतया दृश्यमानयोः संस्काररूपेण पश्चादवस्थानान्न दोषः। अथवा—कारणीभूतसाक्षिवीक्ष्यमाणसूक्ष्मावस्थारूपेणेत्यर्थः। तथा च यथाज्ञानाकारा निर्विकल्पकवृत्तिस्तथा संस्काराकारापि सुषुप्तौ स्वीक्रियते, अनुपपत्तेस्तुल्यत्वात्। एकस्या एव साक्षिसुखाज्ञानसंस्काराकारत्वकल्पनाच्च गौरवम्। एवमशि प्रसादकोपाकारवृत्त्युत्तरं प्रसादसं[1]स्काराकारा वृत्तिर्वाच्या, ईशतत्प्रसादकोपानां साक्षिनिष्ठतत्तन्मनोनिष्ठानामेव साक्षिणा दृश्यत्वात्तत्संस्काराणामपि तत्तन्मनोनिष्ठानामेव दृष्टिसृष्टेस्तत्तन्निष्ठभोगजनकत्वोपपत्तिः। नचाहं सुखीतिवदहं तत्तत्संस्कारवानित्यादिव्यवहारापत्तिरिति—वाच्यम्; संस्काराकारवृत्तिविशेषस्यैव तादृशव्यवहारदृष्टिसृष्टिप्रयोजकत्वात्। नहि दृष्टिसृष्टिपक्षेऽपि सर्वापि वृत्तिर्व्यवह्रियते। उपेक्षात्वकल्पनाच्च न ततः स्मृतिरित्यादि बोध्यम्। अथवा सौषुप्तसंस्काराणामिव प्रसादकोपसंस्काराणामपि साक्षिण्येव निर्विकल्पिका वृत्तिर्न तु मनस्तादात्म्यविषयिकेति नोक्तव्यवहाराः[2]। तेषामिव तेषामपि स्वपरिणामिमनःप्रवाहे स्वकार्यजनकत्वम्। वस्तुतः श्रुत्यादिसिद्धप्रसादकोपयोः

---

[1] कोपसं--ग. [2] व्यवहारः--ग.

**दृष्टित्वे यद्यपि तत्समानसत्ताकतया घटादेः सदातनत्वापत्तिः, तथापि वृत्त्युपहितचैतन्यमेव दृष्टिशब्दार्थः । वृत्तावपि वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति नानवस्था । अत एव— दोषाज्ञानादृष्टदेहेन्द्रियादीनामभावे न भ्रम इति तेषामपि दृष्टिसृष्टित्वेऽनवस्थेति—निरस्तम् ;स्वाप्नभ्रमवद्देहेन्द्रियादिनैरपेक्ष्येणाप्युपपत्तेः । अन्वयव्यतिरेकानुविधानं च तद्वदेव । न च— दृष्टिसृष्टेरपि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्टित्वापत्तिरिति—**

स्वोपलक्षिततत्तन्मनःप्रवाहसंबन्धेन भोगहेतुत्वसंभवात्तत्संस्कारानभ्युपगमेऽपि न क्षतिः । एवं सुषुप्तावपि प्रपञ्चसंस्कारे मानाभावः, 'असदेवेदमग्र आसी' दित्यादि श्रुतिरपि दृष्टिविशेषानुवादिका ; मनःप्रवाहघटकतया मनःसंस्कारमात्रकल्पनात् । तत्संबन्धेन पूर्वपूर्वप्र[1]पञ्चस्याविद्याविशेषाणां वा प्रबोधे तत्तन्मनःपरिणामहेतुत्वसंभवादिति ध्येयम् । **सदातनत्वेति** । अनाद्यनन्तत्वेत्यर्थः । **स्वस्वरूपेति** । स्वच्छे सुखादौ चित्प्रतिबिम्बसंभवाद्वृत्त्यन्तरानभ्युपगमः, तदभ्युपगमेऽपि [2]परस्परविषयकवृत्तिद्वयस्वीकारान्नानवस्थादि । यदि तु तत्तद्दृश्यावच्छिन्ना चिदेव[3] तत्तद्दृश्यसत्तेति न सदातनत्वापत्तिरिति विभाव्यते, **तथाप्यविद्यावृत्त्यनभ्युपगमेऽपि** चाक्षुषत्वादिधर्मविशिष्टविषयत्वविशिष्टस्यैव घटादेरुत्पत्तिर्वाच्या ; घटं पश्यामीत्याद्यनुभवस्यान्यथानुपपत्तेः । अत एव स्वप्ने तथा स्वीक्रियत इति भावः । **अदृष्टिसृष्टित्वापत्तिरिति** । दृष्टिसृष्टेस्तत्त्वेन मिथ्यात्वे घटादौ तदभावसिद्धिरिति भावः ॥

तत्र तत्सिद्धावपि घटादेः स्वसमसत्ताकदृष्टिसिद्धिरव्याहता ; यथा ज्ञानस्य ज्ञेयत्वेऽपि तद्विषयस्य नाज्ञेयत्वम्, तथा दृष्टिसृष्टेः स्वसमसत्ताकदृष्टिसिद्धावपि तद्विषयघटादेरपि स्वसमसत्ताकदृष्टि-

[1] पूर्वप्र–ग.  [2] द्वृत्त्यन्तरानभ्युपगमेऽपि–ग.  [3] च्छिन्नाचिदेव–ग.

वाच्यम्; ज्ञानस्य ज्ञेयत्वेऽपि विषयस्याज्ञेयत्वाभाववत् दृष्टिसृष्टेर्दृष्टिसृष्टित्वेऽपि घटादेर्दृष्टिसृष्टित्वोपपत्तेः। नन्वैक्यप्रत्यभिज्ञाविरोधः; पूर्वकालप्रतीतस्येदानीमभावात्, न चैषा भ्रान्तिः; दीपादौ परिणाम[1]भेदस्येवेह बाधकस्याभावात्, तदभावेऽपि भ्रान्तित्वे घटादेरप्येकस्मिन् क्षणे भेदस्यात्मनोऽपि प्रतिक्षणं भेदस्य प्रसङ्ग इति—चेन्न; 'नेह नाने'त्यादिश्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽवधृते रज्जुसर्पादिवत्प्रतिभासमात्रशरीरत्वमेव प्रतिभासकालातिरिक्तकालसत्त्वे बाधकम्, अतो भिन्नकालानामात्मभिन्नानां प्रत्यभिज्ञा भ्रान्तिः। आत्मन्येकप्रतीतिरेककालावच्छेदेन घटादौ चैक्यप्रत्यभिज्ञा न भ्रान्तिः। एककालावच्छिन्नघटादावात्मनि चाभेदे बाधकाभावात्। पुरुषान्तरप्रतीतेन सहैककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव; प्रतिभासस्य भेदात्। यथा एकस्यामेव रज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत्सर्पभ्रमेण पलायमानानां परस्परसंवादेनैक एव सर्पः सर्वैरनुभूयत इति प्रत्यभिज्ञा भ्रमः; अन्यभ्रमसिद्धस्यान्येन ज्ञातुमशक्यत्वात्। नन्वत्र कथमभेदभ्रमः? तत्कारणस्य सादृश्यादेः कस्याप्यभावादिति—चेन्न; स्वप्नाभेदभ्रमवत् दृष्टिसृष्टिसिद्धसादृश्यादिसंभवात्। न चैवमभेद एवोत्पद्यतामिति—वाच्यम्; इष्टापत्तेः, रज्जुसर्पादिवदुत्पन्नस्यैव ग्रहणनियमात्। न च क्वचिदुत्पद्यते क्वचिन्नेत्यत्र नियामकाभावः; मायाया विचित्रशक्तिकत्वाभ्युपगमात्।

---

रव्याहतेत्याह—ज्ञानस्येत्यादिना। अन्यभ्रमसिद्धस्य अन्यदीयाज्ञानावस्थोपादानकस्य। विचित्रशक्तिकत्वेति। विचित्रका-

---

[1] परिमाण.

न च—'सोऽयं देवदत्त' इति दृष्टान्तेन तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोग इति वाच्यम्; यद्यपि धर्मवद्धर्म्यभेदोऽपि बाधित एवेति जहदजहल्लक्षणापि न युज्यते; तथापि यदा धर्मभेदो बाधान्न गृहीतः, किंतु धर्म्यभेद एव, तदा सोऽयमित्यादौ जहदजहल्लक्षणासंभवेन दृष्टान्तत्वोपपत्तिः। न चाभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगः; आत्माभेदस्यात्मरूपत्वेन दृष्टिसृष्टित्वाभावात्, अन्यूनसत्ताकत्वमात्रेण बाधकत्वोपपत्तेश्च। न च—साक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात्तत्त्वज्ञानत्वाभावेन ततो मुक्तिर्न स्यादिति—वाच्यम्; अबाधितविषयत्वेनैव तत्त्वज्ञानत्वोपपत्तेः, तस्य च दृष्टिसृष्टित्वेऽप्यक्षतेः। न च 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ध्रुवं विश्वमिदं जग'दित्यादिश्रुतिविरोधः; अनित्यतावादिभिरपि ध्रुवेत्यस्यान्यथानयने आवश्यके दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेन आकल्पं सन्तानाविच्छेदपरत्वस्यैव

र्यानुकूलविचित्राज्ञानावस्थावत्त्वेत्यर्थः। जगदिति। 'ध्रुवो राजा विशामय'मिति शेषः। अन्यथानयन इति। नित्यरूपमुख्यार्थभिन्नक[1]त्ववचन इत्यर्थः। सन्तानाविच्छेदेति। सृष्टदृष्टिपक्षे यावत्कालं पृथिव्यादि तिष्ठति तावदित्यादिः। सुषुप्तौ संस्कारानङ्गीकारे तु तदन्यकाल इत्यप्यादिः। एवं च सङ्ग्रामोद्यतस्य राज्ञः सन्नाहने पुरोधसा कर्तव्ये विनियुक्त 'आ त्वा हर्षमन्तरेधी' त्यादिसूक्तान्तर्गतस्य राजस्थैर्याशासने विनियुक्तस्य 'ध्रुवे'त्यादेर्यथा पृथिव्यादि स्थिरं तथा त्वं राजा स्थिरो भवेत्यर्थ इति माधवीयभाष्याद्युक्तिर्न विरुध्यते; सन्तान[2]विच्छेदस्यैव

[1] भिन्नार्थक–ग. [2] सन्ताना–ग.

युक्तत्वात्, अन्यथा 'ध्रुवो राजे' त्यादावगतेः। दृष्टिसृष्टौ च 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ती' ति श्रुतिः सुप्तोत्थित-जीवात्प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम्। न च सुषुप्तौ प्राणादिपञ्चकस्य[1] सत्त्वात्किमर्थं पुनः सृष्टिरिति वाच्यम्; 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि' त्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात्। न च सुषुप्तौ हिता नाम नाड्य इति नाडीसत्त्वप्रतिपादकवाक्यविरोधः; केन क्रमेण सुषुप्तौ भवतीत्यपेक्षायां 'हिता नाम नाड्यो हृदयात्पुरीततमभि-प्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यादिना सुषु-प्त्यव्यवहितकाले क्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते, न तु

---

स्थैर्यरूपत्वादिति भावः। अगतेरिति। राजत्वाश्रयस्य देहस्य मरण-पर्यन्तं नाविच्छेदः; बाल्ययौवनादिषु ह्रासवृद्ध्यादिना विच्छेदात्। अतश्चैत्रत्वाद्याश्रयदेहसन्तान[2]विच्छेद एव स्थैर्यम्। चैत्रत्वादिकं तु कारणीभूताज्ञानावस्थाविशेषरूपत्वादनादित्वेन सुप्तिकालसत्त्वेऽपि देह-सन्तानवृत्तीति भावः। काल इति। नाडीसत्त्वमित्यत्रान्वेति। 'यदा सुषुप्तो भवति, न कस्यचन वेद, हिता नाम नाड्यो द्वासप्ततिः सहस्राणि ताभिः प्रत्यवसृप्य पुरीतति शेते, स यथा कुमारो महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत एवमेवैष एतच्छेते' इति वाक्ये 'यदा सुषुप्तः शेते' तदा एष एवमेतच्छेते। एतदिति पूर्ववाक्योक्तमाकाशशब्दितब्रह्माधारकार्थकं शयनक्रियाविशेषणम्। कीदृशं शयनं तत्राह–यथेत्यादि शयीतेत्यन्तम्। गत्वा शयीतेति सुखं व्यादाय स्वपितीत्यादाविव शयित्वा गच्छेदित्यर्थः; अन्यथा शयनोत्तर-

[1] प्राणादिप्रपञ्चस्य. [2] सन्ताना–ग.

सुषुप्तिकालेऽपि, वाक्यान्तरविरोधात्; प्राक् सत्त्वमात्रेण च क्रमाभिधानपर्याप्तेः। ननु—'यत्रैष एतत्सुप्तोऽभू' दिति यच्छब्देन सुप्ताधारत्वेनोक्तस्य ब्रह्मण एव 'अस्मादात्मन' इत्यनेन परामर्शात्तत्कर्तृकैव प्राणादिसृष्टिर्न तु सुप्तोत्थितजीवकर्तृका; अन्यथाऽग्न्यूर्णनाभ्यादेस्तन्तुविस्फुलिङ्गादिजननोक्तिरत्रापि वाक्ये सर्वलोकसृष्ट्युक्तिश्चालीकार्था स्यात्, न हि दृष्टिसृष्टिपक्षे अग्न्यूर्णनाभ्यादेस्तन्त्वादिजनकत्वं सर्वलोकसृष्टिर्वास्तीति—चेत्, न; यत्रेत्यस्य कालपरत्वेन यच्छब्देन ब्रह्मणो निर्देशाभावात्। न च यत्रेत्यस्य ब्रह्मरूपाधिकरणपरत्वं कालपरत्वं वेत्यत्र विनिगमनाविरहः; अनन्तरवाक्ये 'क्वैष तदाभू' दित्यत्र क्व तदेति पदद्व-

---

मेवानन्दप्राप्तेर्यथाश्रुतासङ्गतेः। तथा च यथा कुमारादिः शयित्वानन्दातिशयं गच्छति एवमस्य विज्ञानमयस्य शयित्वानन्दातिशयरूपब्रह्मप्राप्तिरूपं शयनमित्यर्थे दृष्टान्तदार्ष्टान्तिकयोः पर्यवसानम्। आनन्दातिशयप्राप्तिरूपशयनात्पूर्वं शयनं विवेचयन्ती श्रुतिराकाङ्क्षितं क्रममाह—**हिता नामेत्यादि**। एवं च पुरीतदाधारिका सुषुप्तिरिति प्रलापो वाक्यार्थाज्ञानादेव; पुरीतत्प्राप्त्युत्तरं मनआद्युपाधिलयेन मनआद्युपाधिकृतभेदाभावरूपब्रह्मप्राप्तेरेव सुषुप्तित्वस्य श्रुतिसिद्धत्वात्। अत एव 'तदभावो नाडीषु तच्छ्रुतेरात्मनि चे'ति सूत्रे नाडीपुरीतद्ब्रह्मणां सुषुप्तौ क्रमसमुच्चयः सिद्धान्तितः। **वाक्यान्तरेति**। 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त'मित्यादिवाक्येत्यर्थः। **सर्वलोकसृष्टिः** सर्वलोककर्मिकैका सृष्टिः। **अनन्तरवाक्येति**। गार्ग्यं प्रति ब्रह्म ज्ञापयन्नजातशत्रुर्गार्ग्यस्य ब्रह्मस्वरूपप्रश्नेऽप्यसामर्थ्यात्स्वयमेव प्रश्नपूर्वकं ब्रह्मोक्तवान् 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागा'दिति प्रश्नः 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुष-

**योपादानस्यैव विनिगमकत्वात्, यत्रेत्यनेन देशनिर्देशे क्वेति देशप्रश्नानुपपत्तेः, कालानिर्देशे च तदेति प्रतिनिर्देशानुपपत्तेः**

---

स्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिं छेते' इति प्रत्युत्तरम्। तत्र क्वेत्यनेन देशस्यैव प्रश्नः, अन्यथाकाशरूपदेशोत्तरासङ्गतेः। तथाच यत्रेति कालस्यैव निर्देश इति भावः। ननु—यत्रेति क्वेत्यस्य विशेषणं तत्राह—**कालानिर्देश इति**। यच्छब्देन कालनिर्देशे प्रश्नवाक्ये तदेति निर्देशो न स्यात्; यच्छब्देनोद्दिष्टस्यैव तच्छब्देन प्रतिनिर्देशौचित्यात्, प्रसिद्धार्थकत्वस्य प्रकृते तच्छब्दस्यासंभवादित्याशयेनाह—**कालानिर्देश इत्यादि**॥

ननु—तथाप्याकाशशब्दितं ब्रह्मैवैतस्मादात्मन इत्यत्रोक्तमिति—चेन्न; 'एवमेवैष एतच्छेत' इत्यत्राऽव्यवहितपूर्ववाक्ये जीवस्यैव प्राधान्येनोक्तत्वेन तत्पदबोध्यत्वौचित्यात् 'पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्र' मित्यादिश्रुत्यन्तराच्च। तत्र यतः[1] क्रीडति भुङ्क्ते अतः कारणा[2]दृष्टुरेवोपादानत्वादिति ज्ञापयितुं क्रीडतीत्यन्तम्। अत एव 'तस्माद्वा एतस्मादात्मन आकाश' इत्यादौ एतस्मादात्मन इति सार्थकम्; ब्रह्माभिन्नजीवकारणत्वपरत्वात्। अत एव च वाक्यान्तरे ब्रह्महेतुत्वोक्तिर्ब्रह्माभिन्नजीवपरा। अत एव च 'असतोऽधि मनोऽसृज्यत मनः प्रजापतिमसृजत्तच्चेदं मनस्येव प्रतिष्ठितं यदिदं किंचे' इत्यादिश्रुतिर्जगतो मनःपरिणामत्वमाह। 'एतत्सर्वं मन एवे'ति श्रुतिव्याख्याने—

शुक्लं कृष्णमणु स्थूलमिति धीः कर्मणो वशात्।
द्वैताधिकारमापन्ना वैश्वरूप्यं नियच्छति॥

---

[1] यः–ग. [2] कारण–ग.

धीर्विपर्ययरूपेयं यतः शुभ्रादिरूपिणी ।
मन एवेत्यतः प्राज्ञाः सर्वं रूपं प्रचक्षते ॥

इति वार्तिकामृतमपि तथाह । यतो धीः मनःपरिणामोऽतस्तद्विषयोऽपि सुषुप्तौ मनोऽभावे दृश्यदर्शनयोरभावात्सुप्तोत्थितस्य मनोन्वये कार्यमात्रान्वयाच्च । गौडपादीयभाष्यतदानन्दगिर्यादौ चायमर्थः प्रपञ्चितः । शारीरकसंक्षेपे च—

तस्माद्ब्रह्माऽविद्यया जीवभावं प्राप्यासित्वा तावके तु स्वरूपे ।
त्वच्चित्तेन स्पन्दितं जीवजातमाकाशादि क्ष्मावसानं च पश्येः ॥

विद्याविद्ये बद्धमुक्तौ त्वदन्यावाकाशादि क्ष्मावसानं च विश्वम् ।
स्वाविद्योत्थस्वान्तविस्पन्दितं तद्विज्ञातव्यं माग्रहीरन्यथैतत् ॥

वासिष्ठेऽपि—

मनोमयमिदं विश्वं यन्नाम परिदृश्यते ।

इत्यादिप्रपञ्चः । तस्मादविद्योपाधिकस्य जीवस्य मनउपादानत्वं[1] मनउपाधिकस्य तस्यैवेतरकार्यमात्रोपादानत्वमिति सर्वमानसिद्धान्तसिद्धम् । 'आकाशाद्वायु' रित्यादिश्रुतिस्तु कश्चिद्वाय्वादिराकाशादिजन्यत्वेन दृश्यमान आकाशादिजन्य इत्यभिप्राया । अत एव छान्दोग्ये तेजआदिसृष्टिरुक्ता । वियदादिसृष्टिक्रमपरसूत्राण्यपि दृष्टिविशेषाभिप्रायकाणि । अत एव सृष्टौ श्रुतितात्पर्यमभ्युपेत्यवादत्वं तेषामाकरे उक्तम् अद्वैतब्रह्मण्येव तत्तात्पर्याच्च । अत एव 'कुत एतदागा' दिति संसारित्वरूपागमनं जीवस्य किमुपादानाभिन्नकर्तृकमिति प्रश्नस्य अस्मादात्मन इति जीवरूपोपादानाभिन्नकर्तृकमित्यर्थकमुत्तरं श्लिष्टम् । आत्मपदस्य

[1] दानकत्व—ग.

**भाष्यकारादिभिश्च स्थूलाधिकारिणं प्रति तथा व्याख्यानात्, ऊर्णनाभ्यादेस्तन्त्वादिजन्मोत्पत्तिस्तु लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुद्ध्य। सर्वलोकादिसृष्टिश्च तत्तदृष्टिव्यक्तिमभिप्रेत्य; यदा यत्पश्यति तत्समकालं तत्सृजतीत्यत्र तात्पर्यात्। न चाविद्यासहकृतजीवकारणकत्वे जगद्वैचित्र्यानुपपत्तिः; जगदुपादानस्याज्ञानस्य विचित्रशक्तिकत्वात्। उपपत्त्यन्तरं चात्र**

---

चेश्वरपरत्वे प्रसिद्धिविरोधः; 'क्षेत्रज्ञ आत्मा पुरुष' इति प्रत्यगात्मन्येव तत्प्रसिद्धेः। **स्थूलाधिकारिणमिति**। उक्तं हि शारीरकसंक्षेपे—

तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा
तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मता।
जीवैकत्वमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा
भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोऽर्ध्वलब्धिर्भवेत्॥ इति।

प्रत्यक्षादिमानानां तत्त्वावेदकत्वदृष्टिराद्या, तेषां व्यावहारिकमानत्वदृष्टिर्द्वितीया, तत्त्वप्रच्युतेर्व्यावहारिकमानत्वस्य प्रत्यक्षादौ शुक्तिरूप्यादिबुद्धाविव विभ्रमत्वदृष्ट्या क्षतिकरी जन्यदृश्यमात्रे प्रातीतिकत्वदृष्टिपर्यवसिता तृतीया, सापि जीवैकत्वे मुमुक्षुभेदाद्गमनाद्विविधा व्यावहारिकत्वाभावभ्रमत्वविषयकत्वेन व्यामिश्रा दृष्टिः। पूर्वपूर्वविलयादिति। मुमुक्षुभेददृष्टेः पश्चादुक्तावप्यार्थिकं पूर्वत्वं बोध्यम्। **उपपत्त्यन्तरमिति**। अज्ञायमानतादशायां पृथिव्यादावनन्तसंयोगादिकमिन्द्रियतत्क्रियासंयोगादिकं तस्य प्रत्यक्षहेतुत्वं प्रातीतिकव्यावहारिकयोर्मिथो व्यावृत्तरूपेणान्यत्र हेतुत्वादिकं च न कल्प्यते। ज्ञानहेतुत्वस्थले विषयस्यैव हेतुत्वं जन्यज्ञानाकल्पनं चेति लाघवम्। 'घटं पश्यामी' त्यादिप्रत्यये च घटाभिन्नचाक्षुषादिर्विषयो घटादावेव

सिद्धान्तबिन्दुकल्पलतिकादावस्माभिरभिहितम् । वासिष्ठवार्तिकामृतादावाकरे च स्पष्टमेवोक्तम् । यथा—

अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥

इत्यादि । तस्माद्ब्रह्मातिरिक्तं कृत्स्नं द्वैतजातं ज्ञानज्ञेयरूपमाविद्यकमेवेति प्रातीतिकसत्त्वं सर्वस्येति सिद्धम् ॥

रज्जुसर्पादिवद्विश्वं नाज्ञातं सदिति स्थितम् ।
प्रबुद्धदृष्टिसृष्टित्वात्सुषुप्तौ च लयश्रुतेः ॥

इत्यद्वैतसिद्धौ दृष्टिसृष्ट्युपपत्तिः.

## अथ एकजीवाज्ञानकल्पितत्वोपपत्तिः ॥

स च द्रष्टैक एव; तन्नानात्वे मानाभावात् । ननु—कथमेक एव जीवः? प्रतिशरीरं 'अहं सुखी अहं दुःखी अहं संसारी अहमस्वाप्स' मित्याद्यनुभवविरोधादिति—चेन्न; अविद्यावशाद्ब्रह्मैवैकं संसरति । स एव जीवः । तस्यैव प्रतिशरीरमहमित्यादिबुद्धिः । स्वाप्नशरीरे 'अयं सुखी अयं दुःखीत्येव

चाक्षुषत्वादिधर्मस्वीकारादित्यादिरूपमिति शेषः । द्वैतजातम् जातं द्वैतम् ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तनाशाय दृष्टिसृष्ट्युपपादनम् ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां दृष्टिसृष्ट्युपपत्तिः ॥

यत्र बुद्धिर्न त्वहं सुखीत्यादि' तत्तु निर्जीवम्। यत्र त्वहमित्यादि तत्सजीवम्। जाग्रच्छरीरान्तरे अहमिति प्रतीत्यवच्छेदके सजीवतोक्तिर्न द्वितीयेन जीवेन सजीवत्वमित्याभिप्रेत्य; तत्र मानाभावात्। (बन्धमोक्षादिव्यवस्थानुपपत्तिस्तत्र मानमिति चेन्न; बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद्यावदविद्यमुपपत्तेः। न चैवं तस्मिन्नेकस्मिन्नेव जीवे सुप्ते समस्तजगदप्रतीत्यापातः; समष्ट्यभिमानिनो मुख्यजीवस्यासुप्तत्वात्। तस्मिन् लयकाले प्रसुप्ते जगदप्रतीतेः। अन्तःकरणावच्छिन्ने जीवाभासे तु सुप्ते तमेव प्रति जगदप्रतीतिः, न त्वन्यानपि प्रति; तदुपाधीनामप्रलीनत्वात्। संस्कारस्य कारणात्मना स्थितेर्न सुप्तस्य पुनरुत्थानानुपपत्तिरित्युक्तम्। एतेन—मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगः; तव कल्पकत्वे त्वत्कल्पितास्मदादिबोधार्थं तव शब्दप्रयोगाद्यनुपपत्तिः, न च स्वप्नवत्पर्यनुयोगायोगः; एवमपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारप्रसङ्गादिति—निरस्तम्; चैत्रमैत्रादिसर्वाभिमानिनो जीवस्य कल्पकत्वेन तव ममेत्यादिविकल्पानुपपत्तेः। नापि स्वक्रियादिविरोधः; स्वक्रियायाः कल्पितत्वादिनिश्चयविरहकालीनत्वेन पर्यनुयोगायोगात्।

अथ एकजीवाज्ञानकल्पितत्वोपपत्तिः ॥

निर्जीवम् जीवावच्छेदकमनःसुखाद्यनवच्छेदकम्। सजीवम् उक्तान्यत्। समष्ट्याभिमानिनः तत्तन्मनोवच्छिन्नानां तत्तद्देहाद्यभिमानानामाश्रयस्य। लयकाले प्रळयकाले। तमेव—तन्मनोवच्छिन्नमेव तदुपाधीनां तत्तन्मनसाम्। कल्पकत्वेन मनस्तत्परिणाममात्रद्रष्टृत्वेन। स्वक्रियेति। उक्तशब्दप्रयोगादीत्यर्थः। कल्पितत्वादीत्यादिना-

अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वादिश्रुतिविरोधः, न; मुक्तेः स्वस्वरूपत्वेन बन्धस्य चाविद्यकत्वेन तदविरोधः। न हि मृगतृष्णिकाकल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवति। एतेन—कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वायोगः; तेन कल्पकेन प्रत्यक्त्वेनाज्ञानात्, अन्यस्यानुभवितुरभावात्, तथानुभवापलापे एकजीवाद्वैतश्रुत्यादेरप्यासिद्धिरिति–निरस्तम्; अनेकशरीरे एकजीववादस्याङ्गीकारात्। न च—तर्हि तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगः मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य तमेव प्रति अहमितिधीविषयत्वायोगश्चेति—वाच्यम्; भिन्नभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वाह[1]मित्यादिबुद्धिविषयत्वव्यवस्थोपपत्तेः। न च चैत्रसुखदुःखादीनां मैत्रेणानुसन्धानापत्तिः; अन्तःकरणावच्छिन्नेनाविद्यावच्छिन्नेन वा। नाद्यः; तत्र परस्परं भेदात्। न

एकजीवेन सर्वप्रमात्रादि कल्पितमित्यादि ग्रहणम्। तथाच जीवभेदज्ञानादेकबोधनार्थमपरस्य प्रवृत्तिः (एकजीवकल्पितं सर्वमिति निश्चयेऽपि मनोवच्छिन्नानां भिन्नत्वात्। एकस्य बोधनार्थमपरस्य प्रवृत्तिः) युक्ता; न ह्येकमनोवच्छिन्नेनापरमनोवच्छिन्नं कल्पितम्। न चैकस्य मोक्षार्थं प्रवृत्तिं जानतोऽपरस्य तदर्थं प्रवृत्तिर्न स्यादिति—वाच्यम्; परप्रवृत्त्या मोक्षावश्यम्भावानिश्चयान्मुमुक्षुवत् प्रतारकाणामपि दृष्टत्वात्, विवेकिनां मोक्षार्थं प्रवृत्तेरेव रोचमानत्वात्सांसारिकप्रवृत्तेर्दुःखबहुत्वनिश्चयादिति भावः। **तथानुभवेति**। नानाशरीरेषु जीवस्य प्रत्यक्त्वेनानुभवेत्यर्थः। **श्रुत्यादेरीति**। तदनुभवस्याप्यपलापसंभवादिति शेषः।

[1] प्रत्यक्परा क्त्वमह.

द्वितीयः; इष्टापत्तेः। अत एव—चैत्रस्य शुक्तिसाक्षात्कारेण रजतभ्रमनिवृत्तावन्येषामपि तन्निवृत्तिः स्यादिति—निरस्तम्; अन्तःकरणभेदेन व्यवस्थोपपत्तेः। नन्वेवम्—मुक्तावपि चैत्राद्यन्यतमान्तःकरणावच्छेदेन साक्षात्कारे उत्पन्ने तदवच्छेदेनैव संसारनिवृत्तिः स्यात्, न तु तदितरान्तःकरणावच्छेदेनेति—चेन्न; तत्साक्षात्कारस्य सविलासमूलाज्ञाननिवृत्तिरूपतया तत्कालेऽन्तःकरणस्याभावेन वैषम्यात्। ननु—श्रुतिषु 'अविद्यायामन्तरे वर्तमाना' इत्यादावविद्या, 'रमणीयचरणा' इत्यादौ कर्मबन्धः, 'सति सम्पद्य न विदु'रित्यादौ सति सुषुप्तिः, 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादौ तत्त्वज्ञानं 'परामृतात्परिमुच्यन्ति सर्वे' इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्यत इति—

---

वैषम्यादिति। पल्लवाज्ञान[1]तत्तन्मनोऽवच्छिन्नत्वेन तत्तन्मनःपरिणामज्ञानेन निवृत्तिः, मूलाज्ञानस्य त्वनवच्छिन्नत्वेन किंचिन्मनःपरिणामज्ञानेन निवृत्तौ सर्वदृश्यनिवृत्त्या मनोन्तरमेव दुर्लभम्, दूरतस्तत्र संसारापत्तिः, प्रारब्धकर्मसत्त्वे तु मनोऽन्तरे संसार इष्टस्तत्त्वज्ञानावच्छेदकमनसीवेति भावः ॥

यत्तु—सर्वाभिमानिनो हिरण्यगर्भस्य जीवस्य स्वीकारे तस्य कल्पान्ते मुक्त्यापत्तिः[2] तदन्यजीवस्वीकारे तु नानाजीववादापत्तिः, तत्तन्मनोवच्छिन्नानां तु चित्त्वे नानाजीवत्वापत्तिः, अचित्त्वे जगदान्ध्यापत्तिरिति — तन्न; सकलस्थूलसूक्ष्मसमष्ट्यभिमानाश्रयस्यैकस्यैव जीवस्योक्तत्वेन हिरण्यगर्भस्य च सूक्ष्मसमष्टिमात्राभिमानिनो जीवत्वाभावात्, कल्पान्ते तन्मुक्त्यस्वीकाराच्च। सगुणब्रह्माहङ्ग्रहोपासनाया ब्रह्मलोकप्राप्तिजनकमदृष्टं चित्तैकाग्र्यं च फलम्, तस्य च सर्वमुक्ति

---

[1] ज्ञानस्य–ग [2] मुक्त्या सर्वमुक्त्यापत्तिः–ग.

**चेन्न; 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिश्रुतिष्वेकवचनप्राप्तैकत्वविरोधेनोदाहृतश्रुतीनामनेकत्वपरत्वाभावात्। सार्वजनीनभ्रमसिद्धतदनुवादेनाविरोधात्। न चोदाहृतश्रुति-**

---

जनकधीप्रयोजकवैलक्षण्यं स्वीक्रियते, न तु कस्यचिदेव क्रममुक्तिप्रयोजकवैलक्षण्यम्। तथाच कदाचित्कुत्रचिन्मनसि तत्त्वधीः सर्वमुक्तिप्रयोजिका श्रवणादिना तादृशादृष्टादिना च मिळित्वा प्रयुज्यते; वामदेवमुक्तत्वादिश्रुतेरिव 'ब्रह्मणा सहे'त्यादेरुपासनास्तावकत्वेन कल्पान्ते मुक्तिबोधकत्वाभावात्, उक्तलाघवानुगृहीतैकजीवश्रुत्यनुरोधात्, मनोवच्छिन्नानां (चित्त्वे नानाजीवत्वे हस्तपादाद्यवच्छिन्नानां) चित्त्वेनापि तेषां तदापत्तेः। यदपि बन्धतत्त्वज्ञानमोक्षावच्छेदकत्वेन मनसां जीवभेदकत्वमिति, तदपि न; अविद्यातन्नाशयोर्बन्धमोक्षयोर्मनोऽनवच्छिन्नत्वात्। ज्ञानावच्छेदकभेदस्तु न जीवभेदप्रयोजकः; हस्तादिरूपावच्छेदकभेदस्यापि तत्त्वापत्तेर्मानाभावाच्च। **एकवचनेति**। 'साक्षी चेते'त्यादिवाक्यशेषाद्देवपदं पुरत्रये क्रीडकपरम्। अज्ञानावृतवास्तवस्वरूपकत्वेन गूढ इति भावः। इत्यादिश्रुतीत्यादिपदेन 'पुरत्रये क्रीडति यस्तु जीवः' 'प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते,' 'स एष इह प्रविष्ट आनखाग्रेभ्यः,' 'मायया सन्निरुद्धः' इत्यादिश्रुतिः, 'देही कर्मानुगोऽवशः,' 'विहाय जीर्णान्यन्यानि गृह्णाति नवानी'त्यादिस्मृतिश्च ग्राह्या। **अनेकत्वपरत्वेति**। जीवानेकत्वपरत्वेत्यर्थः। **तदनुवादेन** जीवानेकत्वानुवादेन। वस्तुतोऽविद्यान्तरे वर्तमानत्वमविद्याप्रयुक्तसुखदुःखाभिमानत्वम्। अत एव 'पण्डितं मन्यमाना' इत्यादि शेषः। तथाचाविद्यान्तरे वर्तमानत्वं रमणीयचरणत्वं सति लीनोपाधिकत्वं चैतत्त्रयं मनोवच्छिन्नस्यैव। 'सति सम्पद्य न विदुः सति सम्पद्यामह' इति वेत्तृत्वाभावस्तु तादृशस्मर्तृत्वाभावरूपः, अन्यथा सम्पद्यमाना

विरोधेन 'इति सृष्टौ विनिश्चिता' इति पूर्वेण 'स पूज्यः सर्वभूताना'मित्युत्तरेण च विरोधेनेदमेकवचनं 'यदा नीतिपरो राजा' 'स्वर्गकामो यजेते'त्यादिवन्नैकत्वपरमित्येव किं न स्यादिति—वाच्यम्; प्रत्यक्त्वपराक्त्वमहमित्यादिव्यवहारप्रयोजकान्तःकरणाभेदाध्यासबलाद्बहुत्वस्य प्राप्तत्वेन पूर्वोत्तरवाक्योदाहृतश्रुत्यादीनामतत्परत्वात्। न च—मुक्तबहुत्वं नान्यतः प्राप्तमिति—वाच्यम्; जीवबहुत्वस्य प्राप्तत्वेन मुक्त्यंश एवाप्राप्तत्वपर्यवसानात्। न चैकस्यैव जीवस्य सर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्य ईश्वरकारणत्वविधायकैः श्रुत्यादिभिर्विरोधः, अविद्याचिन्मात्राश्रयत्वोपपादने निरासिष्यमाणत्वात्। न चैवम्—सर्वज्ञत्वसर्वकर्तृत्वादिबोधकश्रुतीनां निर्विषयत्वम्; शुद्धचैतन्ये सत्त्व[1]स्यैवाभावात्, ईश्वरस्य च जीवभिन्नस्याभावात्, जीवे सार्वज्ञ्यस्यानुभवबाधितत्वादिति—वाच्यम्;

इत्युच्येत। तथाच मनोवच्छिन्नताकाल एव साक्षिणस्तदुक्तिः। एवं सुनिश्चितार्थत्वं मनोऽवच्छिन्नस्य परिमुक्तिरपि दुःखादिशून्यत्वरूपा दुःखादिशून्यशुद्धाभेदविवक्षया तस्यैवेति तस्यैव नानात्वमुक्तवाक्यैरुक्तम्, न तु जीवस्याविद्योपहितस्येति ध्येयम्। गौडपादीये 'अनादिमायये'त्यादिवाक्ये स्वर्गकाम इति यजेतेत्याख्यातैकवचनस्योपादेयकर्त्रैक्यपरत्वेऽपि स्वर्गकाम इत्युद्देशवाचकपदोत्तरं सुबेकवचनमविवक्षितार्थकमेव। अत एव पुंस्त्वस्याविवक्षितत्वात् स्त्रिया अप्यधिकारः षष्ठे उक्तः॥

अतत्परत्वात्। एकत्वश्रुत्यादिकं तु तत्परम्; एकत्वस्या-

[1] सर्वज्ञत्व.

समष्ट्यभिमानिनो जीवस्य सर्वज्ञत्वसर्वकर्तृत्वादिस्वीकारात् । न चानुभवविरोधः ; अन्तःकरणाभेदाध्यासबलात्तदननुभवताद्विपरीतानुभवयोरुपपत्तेः । सर्वाभिमानिनस्तु सार्वज्ञ्यानुभवोऽस्त्येव । अत एव 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतपे' त्याद्युपपद्यते । नच—'आचार्यवान् पुरुषो वेदे'तिश्रुतेरुपदेशं विना जीवस्य तत्त्वज्ञानमनुपपन्नम्, उपदेष्टव्यादन्यस्य चैतन्यस्याभावाच्च नोपदेशो युज्यत इति—वाच्यम् ; स्वप्न इवोपदेष्टुः कल्पितस्य संभवात् । ननूपदेष्टृत्वं न कल्पितमात्रस्य, किंतु तत्त्ववित्त्वेन कल्पितस्य, तथा चोपदेशात्प्राक्तत्त्वज्ञाने तदैव मोक्षापत्तिः, उपदेशवैयर्थ्यं च, न चैवं स्वप्नेऽपि तुल्यम् ; तदा हि शब्दविशेषवक्तृत्वेनैव गुरुकल्पना, न तूपदेशसाध्यज्ञानविषयविशेषवित्त्वेनेति विशेषादिति—चेन्न ; अत्रापि तद्वदेव वाक्यविशेषवक्तृत्वेनैव तत्कल्पनसंभवात् । ननु—तर्हि 'यदेव भगवान् वेद तदेव मे ब्रूही'त्यादिश्रुतिः 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इत्यादिस्मृतिश्चायुक्ता स्यादिति—चेन्न ; सामान्यतो मोक्षोपयोगिज्ञानविषयवित्त्वेनाज्ञाततत्त्ववित्त्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्य उपदेष्टृत्वसंभवेनोदा-

प्राप्तत्वात्, लाघवानुग्रहाच्च । समष्ट्यभिमानिन इति । तत्तन्मनोवच्छिन्नतत्तदभिमानवतोऽविद्योपहितस्येत्यर्थः । सर्वाभिमानिन इति । स्वकल्पितसर्वात्मकत्वसर्वज्ञत्वादिविशिष्टेश्वराभेदोपासनाधीनसर्वाभिमानयुक्तस्येत्यर्थः । उपपद्यत इति । तादृशाभिमानयुक्तप्रमात्रैव तथोक्तमिति भावः । ननु—भेदस्यापि तादृशज्ञानविषयत्वसंभावनाया भेदवादिनोऽपि तत्त्वमस्यादिवाक्यवक्तृत्वसंभावनायाश्च संभवाद्विशिष्य तत्त्वज्ञत्वेनैव

हृतवाक्याविरोधात्। अन्यथा तवापि मते तत्त्वविस्त्वेन प्रमित एवाचार्यत्वेनानुसरणीय इति प्रथमत एव तत्त्वज्ञाने तत्काल-मोक्षापत्त्युपदेशवैयर्थ्यादिकं च स्यात्। एतेन—'स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्य'मित्यादिविधिरपि भावितत्त्वज्ञानि-कल्पकचेतनं प्रत्येव, नच तस्य शिष्यः स्वाज्ञानकल्पित इति ज्ञानत[1]स्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता; नच स्वप्नवत् कल्पि-तत्वाज्ञानात्प्रवृत्तिः; तत्त्वविदस्तदज्ञानानुपपत्तेरिति–निरस्तम्; स्वप्नगुरुवत् कल्पितत्वेन गुरोरपर्यनुयोज्यत्वात्। न च—तत्त्व-ज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववत् गुरोरपि पर्यनुयोज्यत्वमिति–वाच्यम्; तर्केण वेद इव तत्तद्रूपकल्पनया गुरावपि तत्परि-हारात्। न च—कथास्वपि सदुत्तरापरिस्फूर्तावहं त्वत्कल्पितो न पर्यनुयोज्य इत्युत्तरं स्यादिति—वाच्यम्; कथायाः कल्पि-तत्वानिश्चयकालीनत्वेन समयबन्धविशेषनिबन्धनत्वेन च ताह-

गुरुः कल्प्यः; तत्राह—अन्यथा तवापीति। तथाच भेदवादिमते स्वसिद्धान्तश्रवणाद्यथा नाद्वैते तत्संभावना, तथैवाद्वैतमतेऽपि भेदे न तत्संभावना। यथा च तव भेदानिर्णयेऽपि भेदनिर्णयवानिति कल्पना, तथैवाद्वैतानिर्णयेऽपि ममाद्वैतनिर्णयवानिति कल्पना। अन्यथा तत्त्व-निर्णयात्पूर्वं तत्र मोक्षसाधनत्वेन ज्ञानासंभवादिच्छापि न स्यात्। यथा तवेदानीं भेदनिश्चयसत्त्वेऽपि विचारादियुक्तशास्त्रजन्यं भेदज्ञानमेव मोक्षहेतुः, तथा ममापि तादृशमद्वैतज्ञानमेव तथेति भावः। भावि-तत्त्वज्ञानिकल्पकचेतनमिति। सर्वमोक्षकारणतत्त्वज्ञानयुक्तो [2]भावी शिष्यशास्त्रादिकल्पकश्चेतनः तमित्यर्थः। प्रवचने—अध्यापने। समयबन्धेति। नियमबन्धेत्यर्थः। तादृशतादृशाक्षेपपर्यनुयोगघटित-

1 जानत. 2 भाविशिष्य–ग.

गुत्तरानवकाशात् । तस्माच्छिष्यवद्गुरोरपि कल्पितत्वात्स्वप्नवत्सर्वव्यवस्थोपपत्तिः । अथ—कल्पको न निश्चिताद्वैतः; शास्त्रप्रणयनवैयर्थ्यात्. नाप्यनिश्चिताद्वैतः; शास्त्रस्य प्रमामूलकत्वाभावप्रसङ्गादिति —चेन्न; प्रमामूलकत्वाभावेऽप्यबाधितविषयत्वेन शास्त्रप्रामाण्योपपत्तेरन्त्यपक्षाभ्युपगमात् । न चामुकः स इत्यनिश्चये बह्वायाससाध्यमोक्षार्थप्रवृत्त्ययोगः; प्रतिशरीरमहमहमिकया बद्धोऽहमिति निश्चयस्य स्वानुभवसाक्षिकत्वेन प्रवृत्तिसंभवात्, एकेनैव जीवेन चैत्रमैत्रादिशरीराणां सजीवत्वसंभवस्य प्रागेवोक्तत्वात् । किंच चैत्रमैत्रादिषु कोऽसाविति प्रश्नस्य किं केनचित् क्रोडीकृतं चैतन्यं विषयः, किं वा निरस्तसमस्तभेदम् । नाद्यः; तस्य कल्पितत्वेनाकल्पकत्वात् । न द्वितीयः; तस्यैकत्वेन तदनिश्चयासिद्धेः । शुद्धचित एकत्वेन वस्तुतोऽसंसारित्वेऽप्यावरणविक्षेपशक्तिद्वयशालिस्वाश्रिताविद्यावशात्संसारित्वकल्पकत्वमोक्षार्थयतमानत्वाद्युपपत्तिः । ननु—अनादौ संसारे कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभून्न वा, आद्ये इदानीं

कथाया एव तत्त्वनिर्णयहेतुत्वेन साम्प्रदायिकत्वमिति भावः । प्रमामूलकत्वेति । निश्चयमूलकत्वेत्यर्थः । अन्त्यपक्ष इति । आद्यपक्षेऽपि न दोषः; चैत्रो ब्रह्मेत्यादिवाक्यजन्यनिर्विकल्पकानिश्चयस्य मोक्षजनकत्वेन विजातीयनिश्चयस्यैव मोक्षजनकत्वादतादृश[1]निश्चयेन शास्त्रप्रणयनसंम्भवात । मोक्षजनकज्ञानमूलकत्वं तु शास्त्रे नापेक्षत[2] इति ध्येयम् । केनचित्—मनआदिना । क्रोडीकृतम्—विशिष्टं प्रमात्वरूपम् । एकत्वेनेति । न च—तत्तन्मनउपहितेषु क इत्यनिश्चय इति—वाच्यम्; अविद्योपहितस्यैव मनउपहितत्वेन सर्वमनउपहितानां कल्प-

[1] त्वात्तादृश—ग. [2] शास्त्रेणापेक्षत—ग.

संसारोपलब्धिर्न स्यात्; जीवस्यैकत्वात्, अन्त्ये सम्प्रदायासंभवेन तत्त्वज्ञानासंभव इति—चेन्न; न ह्यसाम्प्रदायिकत्वमुत्पत्तिविरोधि; अपूर्वजातीयानुत्पत्तिप्रसङ्गात्। किंतु कारणासत्त्वम्, तन्नेदानीम्; उपदेष्टृत्वादिकारणस्य कल्पनासुदृढस्य सत्त्वात्। जीवैक्यस्य प्रमाणसिद्धत्वे संसारोपलम्भ एवातः पूर्वं तत्त्वज्ञानानुत्पत्तौ प्रमाणम्। न च—तत्त्ववित्त्वेन श्रुत्यादिसिद्धानां शुकवामदेवादीनां मुक्तिर्माभूत्, मम तु भविष्यतीति कथं श्रद्दध्यादिति—वाच्यम्; शास्त्रप्रामाण्यदार्ढ्यादिति गृहाण। अन्यथा तेषां महानुभावानां मुक्तत्वेऽपि मम भविष्यति न वेति शङ्कापिशाच्या प्रवृत्तिप्रतिबन्धापत्तेः। ननु—तर्हि श्रुतिप्रामाण्यबलादेव तात्सिद्धो[1]जीवभेदः; पूर्वमपि केषांचिन्मोक्षश्चाभ्युपे-

कत्वनिश्चयात्। सम्प्रदायेति। अनादितत्त्वज्ञानप्रवाहेत्यर्थः। अपूर्वजातीयेति। पूर्वानुपलब्धचैत्रत्वादिजातीयेत्यर्थः॥

ननु—कर्मणां तत्तज्जातीयापूर्वाणां तत्फलानां च प्रवाहरूपेणानादित्वान्न पूर्वानुपलब्धजातीयमुत्पद्यत इति—चेत्, भ्रान्तेनोपादिष्टोऽसि; न हि यद्यज्जातीयमिदानीं जायते तज्जातीयोपधायक[2] कर्मपूर्वमपि केनचित्तादृशं कर्मानुष्ठितमित्यत्र मानमस्ति, येन कर्मादीनामुक्तानादित्वनियमः स्यात्। आस्तां वा तथा, तथापि चैत्रत्वादिकं न विहितक्रियाकार्यतावच्छेदकम्; चैत्रशरीरकामोऽमुकं कुर्यादित्यादिविध्यभावात्, किंतु ब्राह्मणादिदेहजनककर्मव्याप्यदृष्टकारणकार्यतावच्छेदकम्। न च दृष्टकारणप्रयोज्यजातीयानामप्युक्तानादित्वनियमः; मानाभावात्। आस्तां वा सोऽपि, तथापि तत्त्वज्ञानस्य तादृशानादित्वमिष्टमेव; अधीतवाक्याद्यत्प्रवाहानादित्वसंभवात्! असंभावनादिशून्यज्ञानत्वम-

---

[1] सिद्धो. [2] तज्जातीयोपधायकं—ग.

यताम्। श्रूयते हि 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'नित्यो नित्यानां चेतनश्चेतनाना' मित्यादि। स्मर्यते च—

'बहवो ज्ञानतपसा पूता मद्भावमाश्रिताः।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'॥

इत्यादीति—चेन्न; उक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन तत्परत्वाभावात्, जीवैक्यबोधकवाक्यानां च मानान्तराप्राप्तस्वार्थपरत्वात्, स्वप्नन्यायेन भेदस्य कल्पितत्वोपपत्तेश्च, ज्ञानस्तुतिपराणि वाक्यानि नात्मभेदं प्रमातुं शक्नुवन्ति; तात्पर्यवद्वाक्याविरोधेनातात्पर्यवद्वाक्यानां गुणवादत्वोपपत्तेः॥

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्॥

इत्यादिस्मृतिरपि जीवोपाधिभेदानुवादकतया व्याख्येया। तस्मादविद्योपाधिको जीव एक एवेति सिद्धम्॥

इत्यद्वैतसिद्धौ एकजीवाज्ञानकल्पितत्वोपपत्तिः

नावृत[1]प्रमात्वं वा न कार्यतावच्छेदकम्। न चासंभावनानिवृत्त्यादिकमेवानादीति—वाच्यम्; तद्धटप्रागभावत्वनिवृत्तेरप्यनादित्वापातात्। न च—विजातीयतत्त्वज्ञानस्यैव हेतुत्वेन तदनादीति—वाच्यम्; एकजीववादे तद्व्यक्तित्वस्यैव विजातीयत्वरूपत्वात्॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तनाशार्थमेकजीवोपपादनम्॥

इत्येकजीवाज्ञानकल्पितत्वोपपत्तिः.

1. वृतत्व—ग.

# अथाज्ञानवादेऽविद्यालक्षणोपपत्तिः.

अथ—केयमविद्या? न तावदनादिभावरूपत्वे सति ज्ञाननिवर्त्या सा; सादिशुक्त्याद्यवच्छिन्नचैतन्यावारकाज्ञानेऽव्याप्तेः, तस्यानादित्वाभावात्। अभावोपादानाज्ञाने च भावत्वाभावात्तत्राव्याप्तिः, अभावस्य भावोपादानकत्वे असत्यस्यापि सत्योपादानकत्वं स्यात्, अज्ञानानुपादानकत्वे तस्य ज्ञानान्निवृत्तिर्न स्यादिति; अत्र ब्रूमः, रूप्योपादानाज्ञानमप्यनादिचैतन्याश्रितत्वादनाद्येव, उदीच्यं शुक्त्यादिकं तु तदवच्छेदकमिति न तत्राव्याप्तिः। भावत्वं चात्राभावविलक्षणत्वमात्रं विवक्षितम्, अतः आरोपिताभावोपादानाज्ञानेऽप्यभावविलक्षणत्वस्वीकारान्नाव्याप्तिः। न च—सजातीयोपादानकत्वनियमः, अन्यथा असत्यस्यापि सत्यमुपादानं स्यादिति—वाच्यम्; सर्वथा साजात्ये सर्वथा वैजात्ये वोपादानोपादेयभावादर्शनेन तथा साजात्यस्य वैजात्यस्य वा आपादयितुमशक्यत्वात्। न हि कार्याकारकारणाकारतोऽप्यभेदे कार्यकारणभावः; सत्यस्य त्वसत्योपादानत्वे सत्यस्य निवृत्त्यसंभवेन तदुपादेयस्यासत्यस्यापि निवृत्तिर्न स्यात्, उपादाननिवृत्तिमन्तरेणोपादेयानिवृत्तेः, अतो न सत्यमसत्यस्योपादानम्; सत्यस्यापरिणामित्वाच्च। विव-

---

अथाज्ञानवादेऽविद्यालक्षणोपपत्तिः.

सत्योपादानकत्वं स्यादिति। तथाचेति शेषः। तदवच्छेदकमिति। अनाद्यत्यन्ताभावस्य तार्किकादिमते यथा तत्तत्कालादिरवच्छेदक इति शेषः। न सत्यमिति। निमित्तनाशादिनैवासत्यस्य नाश इति तु न युक्तम्;। दृश्यमात्रे ज्ञाननिवर्त्यत्वस्य श्रुत्यनुभवादिसिद्धत्वेनोपादानाज्ञानस्य नाशावश्यकत्वात्। सत्यस्यापरिणामित्वा-

तधिष्ठानत्वं त्वभ्युपेयत एव। न च—ब्रह्माज्ञाने ब्रह्मणो वृत्त्यव्याप्यत्वपक्षेऽव्याप्तिः, तस्य ज्ञानानिवर्त्यत्वादिति—वाच्यम्; स्वरूपसदुपाधिमत्तद्विषयकज्ञाननिवर्त्यत्वस्य तन्मतेऽपि भावात्। उपपादितं चैतत् दृश्यत्वहेतूपपादने। अथौपाधिक भ्रमोपादानाज्ञाने ब्रह्मसाक्षात्कारानन्तरविद्यमानजीवन्मुक्ताज्ञाने च ज्ञाननिवर्त्यत्वाभावादव्याप्तिः; तयोर्ज्ञाननिवर्त्यत्वे उपाधिकालजीवन्मुक्तिकालयोरेव ज्ञानप्रागभाववत्तन्निवृत्त्यापत्तिरिति—चेन्न; उपाधिप्रारब्धकर्मणोः प्रतिबन्धकयोरभावविलम्बेन निवृत्तिविलम्बेऽपि तयोर्ज्ञाननिवर्त्यत्वानपायात्। न हि क्वचिदविलम्बेन जनकस्य क्वचित्प्रतिबन्धेन विलम्बे जनकताऽपैति। न च तर्हि ज्ञातेऽपि तत्राज्ञात इति व्यवहारापत्तिः; तादृग्व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वेन तदावरणशक्त्यभावादेवेदृग्व्यवहारानापत्तेः। यथा चैतत्तथोपपादयिष्यते। न चाविद्याचैतन्यसंबन्धेऽतिव्याप्तिः; साक्षाज्ज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्, तस्याप्यविद्यात्मकत्वाद्वा। न च विशेषणान्तरवैयर्थ्यम्; अनादिपदस्योत्तरज्ञानानिवर्त्ये पूर्वज्ञाने भावपदस्य ज्ञानप्रागभावे ज्ञानजन्यकार्यप्रागभावे चातिव्याप्तिवारकत्वेन

---

दिति। परिच्छिन्नत्वस्य मिथ्यात्वव्याप्यत्वाद्‌गगनादिसत्यत्वस्य विप्रतिपन्नत्वात्। 'परमार्थोऽविनाशी'ति, "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसंभूतां तद्वस्त्वि"त्यादिस्मृतेश्चेति शेषः। स्वरूपसदुपाधिमत्तद्विषयकेति। उपाध्यविषयकत्वे सत्युपहितब्रह्मविषयकेत्यर्थः। कारणत्वेन विषयत्वेन। यथा चैतदिति। शक्तेरज्ञानान्यत्वेऽपि न तस्यामतिव्याप्तिः; निवर्त्यशक्तिमत्त्वस्यैव लक्षणत्वसंभवादित्याद्युपपादनमिति भावः। अविद्यात्मकत्वादिति। अविद्या-

**सार्थकत्वात् । ज्ञानत्वेन साक्षात्तन्निवर्त्यत्वं तु भवति लक्षणान्तरम् । नन्वसंभवः; कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्य ज्ञाननिवर्त्यस्याऽभावविलक्षणस्य च रूप्यवदनादित्वायोगादिति—चेन्न; काल्पितत्वमात्रं हि न दोषजन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रम्, किंतु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वम्, सादिकल्पकवत्त्वम्, विद्याऽनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वम्, प्रागभावप्रतियोगित्वं वा तन्त्रम् । न च तत्प्रकृतेऽस्ति । ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविलक्षणत्वेनाविद्यायाः सादित्वसाधने 'अजामेकाम्' 'अनादिमायये'त्यादिशास्त्रविरोधः, अनादित्वसाधकेन ज्ञाननिवर्त्यत्वे सति भाव-**

---

चिदुभयमेव तत्संबन्धो नातिरिक्त इत्यर्थः । **प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं** स्वविषयकजन्यधीकालत्वव्याप्यस्वद्रष्टृकत्वम् । अविद्याविषयकाविद्यावृत्तेः प्रळयादिकालेऽनङ्गीकारान्नाविद्यायां तदिति भावः । **सादिकल्पकेति** । अविद्योपहितचिद्रूपोऽविद्याकल्पकोऽनादिः, शुक्तिरूप्यादेस्त्वधिष्ठानज्ञानवान् कल्पकः सादिः । अथवा सादिकल्पनायां[1] विषयत्वमर्थः अविद्यायास्तु कल्पना स्वोपाहितचिद्रूपा न वृत्तिरूपेत्यनादिरिति भावः । प्रलयादावप्यन्यदैव वा अविद्यावृत्तेरविद्याविषयिण्याः स्वीकारमतेऽप्याह—**विद्याऽनिवृत्तीत्यादि** । विद्याया अनिवृत्तिः संबन्धस्तदप्रयुक्ता निवृत्तिर्नाज्ञानस्य, किंतु तत्कार्यस्य । जीवेशभेदादिनिवृत्तिरपि तत्प्रयुक्तेति भावः । यदि च सापि तदप्रयुक्ता तदाप्याह—**प्रागभावेति** । कल्पितत्वेनाज्ञाने प्रागभावप्रतियोगित्वाद्यनुमेयमिति तु न युक्तम्; व्याप्तिग्राहकतर्काभावात् । प्रागभावानङ्गीकारे कार्यत्वादि तथा बोध्यम् । प्रकृते अज्ञाने । **अनादित्वसाधकेनेति** । ज्ञानजन्य-

---

[1] कल्पनायाः—ग.

**विलक्षणत्वेन सत्प्रतिपक्षश्च, भावत्वस्योपाधित्वं च। न चाभावविलक्षणाविद्यादौ भावविलक्षणत्वमसंभवि, परस्परविरोधादिति वाच्यम्; भावत्वाभावत्वयोर्बाधकसत्वेन तृतीयप्रकारत्वसिद्धौ पर[1]स्परविरहव्यापकत्वरूपविरोधासिद्धेः, परस्परविरहव्याप्यत्वरूपस्तु विरोधो नैकविरहेणापरमाक्षिपति । न हि गोत्वविरहोऽश्वत्वमाक्षिपतीत्युक्तम् । न चात्मवदनादेरभावविलक्षणस्यानिवर्त्यत्वम्; आत्मत्वस्यैवोपाधित्वात्। न चात्यन्ताभावान्योन्याभावयोः साध्याव्याप्तिः; अधिकरणातिरिक्तस्यानिवर्त्यस्यात्यन्ताभावादेरनभ्युपगमात्। न च तुच्छे साध्याव्याप्तिः; अभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वोप-**

---

कार्यस्य प्रागभावेऽनादित्वव्याप्यतया गृहीतेनेत्यादिः । अजामेकामित्यादिकं प्रकृतिपरम्, अनादिमाययेत्यादि चेश्वरेच्छापरम्, अतो न शास्त्रविरोध इति तु न युक्तम्; मन्मते दृश्यमात्रस्यैव ज्ञाननिवर्त्यत्वेन प्रकृत्यादावपि सादित्वस्य त्वयानुमेयतापत्तेः । **बाधकसत्वेनेति** । विनाशिभावस्य सादित्वनियमो भावत्वे उपादानत्वादिकमभावत्वे बाधकमिति भावः । वस्तुतो भावत्वाभावत्वे सदसद्रूपत्वे । आद्ये बाध्यत्वादि द्वितीये जनकत्वादि बाधकम् । अत एवाभावविलक्षणत्वस्य तुच्छव्यावृत्तत्वं वक्ष्यते । अभावत्वधर्माश्रयविलक्षणत्वं तु तुच्छेऽप्यस्तीति तदसङ्गतिः । अत एव च सद्विलक्षणयोरज्ञानभ्रमयोरित्यादि वक्ष्यते । यत्तु—तृतीयप्रकारसिद्धौ सत्यां विरोधासिद्धिः, तस्यां च सत्यां सेत्यन्योन्याश्रय इति—तन्न; तृतीयप्रकारसिद्धेर्बाधकसत्वाधीनत्वेन विरोधासिद्ध्यनपेक्षत्वात्, अन्यथा कर्मादावपि द्रव्यगुणापेक्षया तृतीयप्रकारासिद्धिर्न स्यादिति भावः । **अनादेरभावविलक्षणस्येति** ।

[1] परस्परविरहरूपत्वपर.

पत्तेः। किंच सादित्वमनादित्वं वा न निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकम्; ध्वंसप्रागभावयोस्तदभावात्। नापि भावत्वविशेषितं तत्तथा; अभावे तदसत्त्वेन भिन्नभिन्नप्रयोजककल्पनापत्तेः, भावनिवृत्त्यनिवृत्तयोरेव तयोः प्रयोजकत्वे च भावविलक्षणाविद्यादौ ताभ्यां तयोरनापादनात्। तस्मान्नाशसामग्रीसन्निपातासन्निपातावेव निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकाविति मन्तव्यम्। तौ च फलबलकल्प्याविति न कोऽपि दोषः। अपि च यद्यविद्यादेरभावविलक्षणत्वसमानाधिकरणानादित्वेनात्मवदनिवर्त्यत्वं साध्यते, तर्हि भावविलक्षणत्वेन प्रागभाववन्निवर्त्यत्वमेव किं न साध्यते? न च ध्वंसात्यन्तान्योन्याभावेषु व्यभिचारः; अधिकरणातिरेके तेषामपि निवर्त्यत्वाभ्युपगमात्। न चाज्ञानस्य यावत्स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियमेन निवृत्त्ययोग इति वाच्यम्; दुःखशुक्तिरूप्यादेः स्वभासके साक्षिणि सत्येव निवृत्त्यभ्युपगमेन साक्षिभास्यानां यावत्साक्षिसत्त्वमवस्थाननियमानभ्युपगमात्। किंच केवलचिन्मात्रं न साक्षि किंत्वविद्यावृत्त्युपहितम्; तथाचास्थिराविद्यावृत्त्युपहितस्य साक्षिणोऽप्यस्थिरत्वेन तत्सत्त्वपर्यन्तमवस्थानेऽप्यविद्यादेर्निवृत्तिरुपपद्यते। न च वृत्त्यनुपधानदशायामविद्यादेः शुक्तिरूप्यवदसत्त्वापत्तिः; सादिपदार्थ एवैतादृङ्नियमात्, धारावाहिकाविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमाच्चेति शिवम्॥

---

अनादित्वे सत्यसद्विलक्षणत्वं हेतुः, प्रागभाववारणाय विशेष्यम्, अभावमात्रं तु तुच्छत्वान्नासद्विलक्षणम्, अभावस्य तुच्छत्वानङ्गीकारेऽपि तुच्छवारणायैव विशेष्यमिति भावः। साक्षिणि अविद्योपहितचिति। वृत्त्युपहितस्य साक्षित्वमतेऽप्याह—किंचेति। धारावाहिकेति।

यद्वा भ्रमोपादानत्वमज्ञानलक्षणम् । इदं च लक्षणं विश्वभ्रमोपादानमायाधिष्ठानं ब्रह्मेति पक्षे, न तु ब्रह्ममात्रोपादानत्वपक्षे, ब्रह्मसहिताविद्योपादानत्वपक्षे वा ; अतो ब्रह्मणि नातिव्याप्तिः, इतरत्र तु पक्षे परिणामित्वेनाचेतनत्वेन वा भ्रमोपादानं विशेषणीयमिति न दोषः; न वा अभा-

---

सर्वदोत्पद्यमानेत्यर्थः । अविद्याविषयिकाया एकस्या एव वृत्तेः स्वीकारे तु संस्कारानुपपत्तिः, संस्कारोत्पत्तिपूर्वमेका वृत्तिरिति स्वीकारे संस्कारोत्पत्तिकालेऽनाद्यविद्यादेरसत्त्वापत्तिः, यावत्कालमेकवृत्तिस्वीकारे न दोषस्तावत्कालमध्ये एकैव वृत्तिरिति स्वीक्रियते, नाशकविशेषकल्पनान्नोत्तरवृत्तिमात्रेण तन्निवृत्तिः ; अन्यथानन्तवृत्तिकल्पने गौरवादिति ध्येयम् ॥

यत्त्वधिकरणातिरिक्तस्येत्याद्ययुक्तम् ; नेतीत्यादिश्रुत्या शुद्धचिद्बोधने[1]नाधिकरणस्वरूपाभावबोधने तस्या बोधकत्वासिद्धिरिति तन्न ; यतो नेतीत्यादिश्रुतिर्मिथ्यात्वबोधिका न तु चिन्मात्रबोधिका । यत्तु— प्रतीतिसत्त्वे सुखादेर्निवृत्त्यसंभवः ; प्रतीतिनाशकस्यैव तन्नाशकत्वात्, वृत्त्युपहितचितः सुखादिसाक्षित्वे सुखादिधीर्व्यावहारिकप्रमा न स्यात् ; अविद्यावृत्तेर्दोषजन्यत्वात्, वृत्त्यभावकाले चाविद्यादि न स्यात् ; सादिपदार्थ एव तथा नियम इत्यत्र तु न मानमिति—तन्न ; प्रतीतिनाशकासत्त्वे निमित्तनाशादेरपि नाशकत्वात्, विषयसंबन्धनाशादेव सुखादिनाशसंभवात् । सुखाद्याकारवृत्तिस्तु प्रमैव ; अविद्यारूपदोषजन्यत्वेऽप्यागन्तुकदोषाजन्यत्वात् । वृत्त्यभावकालेऽप्यविद्यादि तिष्ठत्येव ; निमित्तनाशादिरूपनाशकाभावादविद्यादेरनादित्वेनानिमित्तकत्वादिति भावः ॥

ब्रह्मणः परिणामित्ववादिनं प्रत्यप्याह—अचेतनत्वेनेति ।

---

[1] चिद्बोधने-ख.

वारोपनिवर्तकप्रमानिवर्त्येऽव्याप्तिः; तस्यापि भ्रमोपादानत्वात्। ननु—भ्रमे भावविलक्षणाज्ञानोपादानकत्वं न घटते; भ्रमस्य भावविलक्षणत्वे उपादेयत्वायोगात्, भावत्वे च भावोपादानकत्वनियमादिति—चेन्न; अज्ञानस्य भ्रमस्य च भावविलक्षणत्वेऽप्युपादानोपादेयभावोपपत्तेः। न हि भावत्वमुपादानत्वे उपादेयत्वे वा प्रयोजकम्; आत्मनि तददर्शनात्, किंत्वन्वयिकारणत्वमुपादानत्वे तन्त्रम्; सादित्वमुपादेयत्वे, तदुभयं च न भावत्वनियतम्। अत उपादानोपादेयभावोऽपि न भावत्वनियतः। न चैवं ध्वंसस्याप्युपादेयत्वापत्तिः; इष्टापत्तेः। न चैवं—ज्ञानप्रागभावस्यैव भ्रमोपादानत्वमस्तु, किमभावविलक्षणाज्ञानोपादानकल्पनेनेति—वाच्यम्; प्रागभावस्य प्रतियोगिमात्रजनकत्वनियमेन भ्रमं प्रति जनकत्वस्याप्यसिद्धेः, तद्विशेषरूपोपादानत्वस्यैव दूरनिरस्तत्वात्। अतः सद्विलक्षणयोरज्ञानभ्रमयोर्युक्त उपादानोपादेयभावः। भ्रमस्य च सद्विलक्षणत्वमुक्तं वक्ष्यते च। न चैवमज्ञानानुविद्धतया भ्रमस्य प्रतीत्यापत्तिः, मृदनुविद्धतया घटस्येवेति—वाच्यम्; यद्यदुपा-

---

निवर्त्य इति—अज्ञान इति शेषः। तस्यापीति। अभावविलक्षणस्याप्यज्ञानस्याभावोपादानत्वसंभवस्योक्तत्वेनेत्यादिः। आत्मनीति। शुद्धात्मनोऽनुपादानत्वपक्षे शुद्ध इत्यादिः। अन्वयिकारणत्वं—कार्यात्मककारणत्वम्। ज्ञानप्रागभावस्य—भ्रमनिवृत्तिस्वरूपयोग्यप्रमाप्रागभावस्य। निरस्तत्वादिति। प्रागभावे मानाभावः, भावे वा परोक्षप्रमानिवर्त्यभ्रमस्यो[1]पादानत्वं मनोनिष्ठे प्रमाप्रागभावे न संभवति। प्रत्यक्षप्रमा यत्र विषये कदापि न जायते, तत्र तत्प्रागभावस्या-

[1] भ्रमत्वस्यो-ग.

दानकं तत्तदनुविद्धतयैव प्रतीयत इति व्याप्त्यसिद्धेः । न हि घटोपादानकं रूपं घट इति प्रतीयते ; प्रकृतिद्व्यणुकाद्यनुविद्धतया प्रतीतेः परैरप्यनभ्युपगमात्, केनचिद्धर्मेण तदनुवेधस्तु प्रकृतेऽपीष्ट एव । न च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति पक्षे भ्रमापूर्वकप्रमानिवर्त्येऽज्ञानेऽव्याप्तिः ; भ्रमोपादानतायोग्यत्वस्य विवक्षितत्वात्, सहकारिवैकल्यात्कार्यानुदयेऽपि योग्यता-

लीकत्वेन भ्रमोपादानत्वासंभवः । यत्र विषये प्रत्यक्षप्रमा जनिष्यते, तत्रापि भ्रमोपादानत्वेन सिद्धस्य प्रतियोगिज्ञानसापेक्षधर्मिकत्वकल्पने गौरवान्नाभावत्वम् । भावरूपस्यापि तस्य प्रमाप्रागभावत्वमविरुद्धम्; जन्यभावमात्रस्य स्वध्वंसप्रागभावत्वादित्यपि बोध्यम् । यत्तूत्पन्नपुनरुत्पत्तिवारणाय प्रागभावस्याभावरूपस्य कल्पनमिति तत्तुच्छम्; अभावरूपत्वे मानभावात्, गौरवस्योक्तत्वात्, सामग्र्युत्तरक्षणत्वं कार्येण व्याप्यं[1] न तु तदुत्पत्त्येति पुनरुत्पत्त्यापादनासंभवाच्च ॥

**एव प्रतीयते**—प्रतीयत एव । ननु—'शुक्लो घटः' 'मृद्घट' इत्यादिशुक्लत्वमृत्त्वादिना रूपप्रकृत्यादितादात्म्यं घटे प्रतीयत एवेत्यत आह—**केनेति** । यथा शुक्लत्वादिना रूपाद्यनुवेधस्तथा जडत्वादिनाऽज्ञानानुवेधः । अज्ञानत्वेनाननुवेधस्तु भ्रमस्य भ्रमत्वाज्ञानात् बाधकाले तु नेदं रूप्यं रूप्यतया यदभात्तदज्ञानमित्यनुभूयत एव । किंच विशेषदर्शिनामज्ञानं सर्वकार्यमिति धीरस्त्येव ; अत एव—

यत्तु दृष्टिपथः प्राप्तं तन्मायैवास्तु तुच्छकम्, ।

इति भाष्योदाहृतं साङ्ख्यवाक्यम् । अविशेषदर्शिनां तु मृद्घट इत्याद[2] धीर्नास्तीति भावः। **योग्यतेति**। कारणतावच्छेदकीभूताज्ञानत्वजातीत्यर्थः।

[1] व्याप्यत्वं—ग.  [2] इत्यपि—ग.

नपायात्। अथ योग्यतावच्छेदकरूपापरिचये कथं तद्ग्रहणम्? प्रथमलक्षणस्यैव योग्यतावच्छेदकत्वात्। एकमेवाज्ञानमिति पक्षे तु तत्र भ्रमोपादानत्वमक्षतमेव। न चैवं शुक्तिज्ञानेनैवाज्ञाननाशे मोक्षापत्तिः, तस्यावस्थाविशेषनाशकत्वाङ्गीकारात्। व्युत्पादितं चैतदस्माभिः सिद्धान्तबिन्दौ। ज्ञानत्वेन रूपेण साक्षाज्ज्ञाननिवर्त्यत्वं वा तल्लक्षणमिति च प्रागुक्तमेव। तस्मान्नाविद्यालक्षणासंभव इति सर्वमवदातम्॥

इत्यद्वैतसिद्धावविद्यालक्षणोपपत्तिः

अवच्छेदकरूपेति। व्याप्येत्यर्थः। लक्षणस्येति। साक्ष्यादिना तद्ग्रहणं बोध्यम्। अवस्थाविशेषानङ्गीकारपक्षेऽप्याह—व्युत्पादितमिति। प्रमाविरहविशिष्टाज्ञानं न भातीत्यादिव्यवहारनियामकमित्यादिनेति शेषः। नव्यमते उत्तरज्ञानादेरपि ज्ञानत्वादिना निवर्तकत्वादाह—साक्षादिति। समानविषयकत्वसंबन्धेनेत्यर्थः। ज्ञानस्य स्वप्रागभावं प्रति प्रतियोगित्वेन[1] नाशकत्वमिति तत्रातिव्याप्तिर्दूरापास्ता। वस्तुतो ज्ञानत्वेन[2] प्रमात्वेन; पूर्वं प्रामा[3]त्वेनाज्ञाननिवर्तकत्वस्योक्तत्वात्। तथाच साक्षादित्यपि न देयम्; अज्ञानप्रयुक्तनाशस्य प्रमात्वेन ज्ञानजन्यत्वाभावादेवाज्ञानप्रयुक्तवारणादिति ध्येयम्॥

'तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तनाशार्थमविद्यालक्षणोदयः॥

इत्यविद्यालक्षणोपपत्तिः

1 स्वप्रागभावप्रतियोगित्वेन—ग. 2 वस्तुज्ञानत्वेन—ग. 3 पूर्वप्रमा—ग.

# अथ अज्ञानप्रत्यक्षोपपत्तिः

तत्र चाज्ञाने 'अहमज्ञो मामन्यं च न जानामी'ति प्रत्यक्षम्, 'त्वदुक्तमर्थं न जानामी'ति विशेषतः प्रत्यक्षम्, 'एतावन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिष'मिति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रमाणम्। न चाहमर्थस्याज्ञानानाश्रयत्वेन कथमयं प्रत्ययो भावरूपाज्ञानपक्षे उपपद्यत इति—वाच्यम्; अज्ञानाश्रयीभूतचैतन्ये अन्तःकरणतादात्म्याध्यासेनैकाश्रयत्वसंबन्धेनोपपत्तेः। अत एव—जडे आवरणकृत्याभावात् 'घटं न जानामी'त्यादिप्रतीतेर्ज्ञानाभावविषयत्वे प्रकृतेऽपि तथास्त्विति-निरस्तम्; तत्तदवच्छिन्नचैतन्यस्यैवाज्ञानाश्रयत्वेन तत्रापि तद्व्यवहारोपपत्तेः। न च साक्षिवेद्ये सुखदुःखाज्ञानादौ प्रातिभासिके च भावरूपाज्ञानाभावेन तत्र न जानामीति प्रतीतिः कथमुपपद्यत इति—वाच्यम्; स्वस्मिन्विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ च 'न जानामी'ति व्यवहारासंभवात्, परसुखादौ 'न जानामी'ति व्यवहारस्य परोक्षज्ञानानि-

अथ अज्ञानप्रत्यक्षोपपत्तिः

उपपत्तेरिति। शुद्धचितोऽज्ञानाश्रयत्वविषयकप्रत्ययान्तराभावादयं प्रत्ययोऽहमर्थेऽज्ञानवत्त्वाप्रकारकत्वेन[1] न निर्णेतुं शक्यत इति न युक्तम्; 'पूर्वसिद्धतमसो हि पश्चिमो नाश्रय' इत्यादियुक्तेरज्ञानाश्रयकोटौ चिदन्यनिवेशे गौरवाच्च तथा निर्णयात्, सौषुप्तस्य तादृशप्रत्ययान्तरस्य सत्त्वाच्च। स्वस्मिन्निति विद्यमानत्वान्वयि। परसुखादावित्यादिना अतीतानागतस्य स्वसुखस्य स्वभ्रमसिद्धशुक्तिरूप्यादेश्च

[1] वस्त्वाविषयकत्वेन—ग.

वर्त्येन प्रमातृगताज्ञानेनैवोपपत्तेः। अत एव परोक्षज्ञानेन प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेन 'न जानामी'ति व्यवहारापत्तिरिति—निरस्तम्; प्रमातृगताज्ञानकार्यस्य 'न जानामी'ति व्यवहारस्य विषयगताज्ञानेनापादयितुमशक्यत्वात्। ननु—भावरूपाज्ञानविषयत्वेनाभिमतस्य 'अहमज्ञ' इति प्रत्ययस्य 'मयि ज्ञानं नास्ती'ति ज्ञानाभावविषयात्प्रत्ययात् 'अघटं भूतल'मिति प्रत्ययस्य 'घटो नास्ती'ति प्रत्ययादिव विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतिरिति—चेत्, सत्यम्; धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावज्ञानस्य व्याहतत्वेन 'मयि ज्ञानं नास्ती'त्य-

---

सङ्ग्रहः। प्रमातृगतेति। न जानामीत्यत्र हि ज्ञानसामान्यविरोध्य[1]ज्ञानं विषयः, तच्च न विषय[2]गतम्; तस्य[3] परोक्षज्ञानाविरोधित्वात्। अत एव प्रत्यक्षधीविरोध्यज्ञानविषयको न भातीति व्यवहारो विषयगताज्ञानमात्रेण भवत्येव। न च—विषयगताज्ञानस्य प्रमातरि निरूपकत्वसंबन्धसत्त्वोत्तनैव न जानामीति धीरिति—वाच्यम्; परोक्षज्ञानेनापरोक्षभ्रमोपादानाज्ञाननिवृत्त्यसंभवात्। न च—परोक्षं नाज्ञाननिवर्तकम्, किंतु भ्रमविषये मिथ्यात्वनिश्चायकमिति—वाच्यम्; अपरोक्षेऽपि तथापत्तेः, परोक्षज्ञाने सति न जानामीति व्यवहारापत्तेः, ज्ञानादज्ञानं नष्टमित्यनुभवस्य परोक्षस्थलेऽपि तुल्यत्वाच्च। ज्ञानाभावविषयात् ज्ञानाभावविषयकत्वेनाभिमतात्। तेन सत्यमित्यग्रिमस्य न विरोधः। इच्छेत्यादि। इच्छामि न द्वेष्मीति ज्ञानयोर्यथा भिन्नो विषयः प्रतीयते तथा प्रकृते नेत्यर्थः। नन्ववच्छेदकत्वं नानतिरिक्त-

---

[1] परोक्षापरोक्षसाधारणज्ञानमात्राविरोध्य—ख. [2] तच्च प्रमातरि न तु. विषय—ग. [3] विषयताज्ञानस्य—ख.

स्यापि भावरूपाज्ञानविषयत्वेन विषयभेदाप्रतीतेर्युक्तत्वात् । तथाहि—'मयि ज्ञानं नास्ती'ति प्रतीतिः 'वायौ रूपं नास्ती' ति प्रतीतिवद्यावद्विशेषाभावान्यसामान्याभावविषया, सामान्यावच्छिन्नप्रतियोगिताकयावद्विशेषाभावविषया वा अभ्युपेया । तथाच तत्कारणीभूतधर्मिप्रतियोगिज्ञानाज्ञानाभ्यां कथं न व्याघातः ? यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात्, अभावज्ञाने प्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वात् । अन्यथा सामान्याभावसिद्धिर्न स्यात् । यावद्विशेषाभावान्यसामान्याभावानभ्युपगमेऽप्ययं दोषः । यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटव-

वृत्तित्वादिकम्; [1] 'कम्बुग्रीवादिमान्नास्ति' 'प्रमेयघटो नास्ती' त्यादेरपि प्रमात्वापत्तेः, किंत्वखण्डो धर्मविशेषः, स च सामान्यधर्मस्य किंचिद्विशेषाभावप्रतियोगितां प्रत्यप्यस्तु, तत्राह—**अभावज्ञान इति । धर्मस्यैवेति ।** अन्यथा घटो नास्तीत्यादौ पटत्वाद्यवच्छिन्नप्रतियोगित्वस्यापि भानापत्तेरिति भावः । ननु—प्रतियोग्यंशे प्रकारीभूतं तद्व्यापकं वा अवच्छेदकतयाऽभावबुद्धौ भाति; अत एव कम्बुग्रीवादिमान्नास्तीत्यादावपि घटत्वादेरवच्छेदकतया भानात्प्रमात्वमेव, पूर्वस्यावच्छेदकत्वासंभवे सत्येवोत्तरस्य तथा भानान्नातिप्रसङ्ग इत्यत आह—**अन्यथेति ।** सामान्यावच्छिन्नप्रतियोगिताकत्वबुद्धौ विशेषाभावस्यापि भाने इत्यर्थः । तादृशबुद्धिमात्रे तथा संभवादिति शेषः । अयं प्रतियोग्यंशे प्रकारान्यस्यावच्छेदकत्वासंभवरूपः । न च प्रतियोग्यंशेऽपि सामान्यधर्मः प्रकार इति—वाच्यम्; तथा सति विनिगमकाभावेन सामान्यधर्माश्रयाणां

[1] वृत्तित्वाद—ग.

**त्यपि भूतले 'निर्घटं भूतल' मिति प्रतीतिः स्यात्' 'वायौ रूपं नास्ति' 'पुरो देशे रजतं नास्ती' त्याद्याप्तवाक्यजन्यप्रतीत्यनन्तरमपि तत्तत्संशयनिवृत्तिर्न स्यात्; एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेः। अथ—अभावबोधे**

---

सर्वेषामेव प्रतियोगितया भानापत्त्या विशेषाभावभानोक्तिविरोधादिति भावः। **प्रतीतिः** प्रमा॥

**संशयोपपत्तेरिति** । नच—रूपत्वावच्छिन्नप्रतियोगिताकत्वविषयकाभावधीत्वेन विशेषाभावधीरपि सामान्यसंशयविरोधिनीति—वाच्यम्; घटत्वेन पटो नास्त्यत्रेति ज्ञानस्य घटवदिदमिति ज्ञाने विरोधित्वापत्त्याऽभावांशे प्रकारता येन रूपेण तदवच्छिन्नप्रतियोगिताकत्वधीत्वेनैव तद्रूपविशिष्टवत्ताधीविरोधित्वस्य त्वया वाच्यत्वात्। यत्तु—'अपशवो वान्ये गोऽश्वेभ्य' इत्यस्येव वायौ न रूपमित्यस्यापि सामान्यरूपेण विशेषाभावपरत्वधीकाले विशेषान्तरसंशयाविरोधित्वेऽपि तस्य सकलरूपाभावपरत्वधीकाले तज्जन्यज्ञानं सकलरूपसंशयविरोध्येवेति—तन्न; विपरीतव्युत्पन्नस्य घटः कर्मत्वमित्यादिवाक्याद्बोधविशेषस्यैवोक्त[1]वाक्याद्विशेषाभावबोधेऽपि सद्व्युत्पन्नस्य तदभावात्सद्व्युत्पन्नमधिकृत्यैव प्रकृतोक्तेः प्रवृत्तत्वात् प्रतियोग्यंशे प्रकारस्यैवावच्छेदकतया शाब्दबोधे भानस्य व्युत्पत्तिसिद्धत्वात्। अपशव इत्यत्र तु पशुपदेन प्रशस्तपशुत्वेन बोध्यत इति गौण्या वृत्तेर्व्युत्पादनप्रस्तावे तात्सिद्धिपेटिकायां स्थितम्। पशुत्वेन प्रशस्तपशुभेदबोधने तु गौण्या व्युत्पादनं व्यर्थम्; पशुत्वसामान्यस्यैव तदाश्रयविशेषे प्रतियोगिनि प्रकारत्वसंभवात्। प्रशस्तपशुत्वस्य प्रतियोग्यंशे प्रकारत्वे तु तस्यैव प्रतियोगितावच्छेदकतया भानम्। न हि शुद्धपशुत्वं त्वत्कुलधर्मः, येन तत्र भक्तोऽसि॥

---

[1] विशेषस्येवोक्त—ग.

प्रकारीभूतधर्मस्यावच्छेदकत्वं पूर्वानुपस्थितमपि संसर्गमर्यादया शाब्दबोधे अन्यत्र च भासते, न ह्यवच्छेदकत्वस्य स्वरूपसंबन्धविशेषस्य ग्रहे अन्या सामग्री क्लृप्ता; तथाच तत्तद्विशेषाभावानां तत्तद्विशेषावच्छिन्नप्रतियोगिताकत्वात्सामान्यावच्छिन्नप्रतियोगिताकत्वं यावद्विशेषाभावकूटे वा व्यासज्यवृत्ति तदतिरिक्तसामान्याभावे वा प्रत्येकविश्रान्तमिति तादृगभावप्रतीतेर्यावद्विशेषप्रतीतिविरोधित्वात्कुतो विशेषसंशयादिरिति चेत्, सत्यम्; प्रकृतेऽपि ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकाभावप्रतीतिर्यावज्ज्ञानविशेषविरोधिनीति कथं तत्तत्कारणत्वाभिमतज्ञा-

---

संशयनिवर्तकत्वमुक्तवाक्यस्य व्युत्पादयन् तद्दृष्टान्तेन न जानामीत्यस्यापि ज्ञानसामान्याभावविषयकत्वावश्यकत्वेन विरोधमाह—**अथेत्यादिना व्याहन्यत इत्यन्तेन । अवच्छेदकत्वमिति ।** प्रतियोग्यंशे प्रकारस्यैवाभावांशेऽप्यवच्छिन्नप्रातियोगिताकत्वसंसर्गेण प्रकारता, न तु संसर्गमध्येऽवच्छेदकीभूतधर्मस्य निवेशः; तथा च प्रतियोग्यंशे प्रकारादन्यस्यावच्छेदकत्वभानं दूरापास्तमिति साम्प्रदायिकमतं ज्ञापयितुमवच्छेदकाविशेषितमवच्छेदकत्वं संसर्गत्वेनोक्तम्। **अवच्छेदकत्वं** प्रतियोगितावच्छेदकत्वम् । **अवच्छेदकत्वस्य** प्रतियोगितावच्छेदकत्वस्य । तेन प्रतियोगित्वस्यापि स्वरूपसंबन्धस्यानुपस्थितस्य संसर्गतया भानोक्तिर्लभ्यते । **अन्येति ।** अवच्छेदकस्य ग्रहे तु प्रतियोग्यंशे प्रकारतया भासकसामग्र्येव सामग्रीत्वेन क्लृप्तेति भावः । **ज्ञानविशेषविरोधिनीति ।** ज्ञानादिमति तदभावज्ञानानुदयात्तार्किकादिमते स्वरूपसत् ज्ञानादिकं स्वाभावधीविरोधि, तस्य साक्षिभास्यत्वमते तु ज्ञानादि विद्यमानं स्वाश्रये ज्ञायत एवेत्युभयथापि ज्ञानादिसत्त्वे तत्सामान्याभावधीर्विरुध्यत इति भावः । ननु—रूपाद्यभावबुद्धे रूपादिमत्त्वबुद्धिप्रतिबध्यत्वेपि न

**नविशेषे सति सा न व्याहन्यते। तथाच क्लृप्ताभावप्रतीतिवैलक्षण्ये-ऽवश्यकल्प्ये लाघवाद्विषयस्यैवाभाववैलक्षण्यं कल्पयितुमुचितम्;**

---

जानामीति बुद्धे(र्ज्ञानादिमत्त्वधीप्रतिबध्यत्वम्। न च तथापि न जानामीति बुद्धे)[1]र्न ज्ञानादिमत्त्वधीप्रतिबध्यत्वम्। न च – तथापि न जानामीति बुद्धेर्भ्रमत्वापत्तिरिति–वाच्यम्; इष्टत्वात्तत्राह–**तथा चेति**। न जानामीति बुद्धाविति शेषः। **वैलक्षण्ये** स्वविषयीभूताभावप्रतियोगिमत्ताधीप्रतिबध्यत्वशून्यत्वे। **लाघवादिति**। अहमर्थान्यांशे ज्ञानाभाववत्ताबुद्धित्वेन ज्ञानवत्ताधीप्रतिबध्यत्वं त्वयावश्यं वाच्यम्, अन्यथा घटो ज्ञानाभाववानिति बुद्धेरपि घटो ज्ञानवानिति धीविरोधित्वं न स्यात्; तथाच लाघवाद्धर्मितावच्छेदकत्वसंबन्धेन ज्ञानतदभाववत्ताबुद्ध्योः प्रतिबध्यप्रतिबन्धकभावकल्पनाज्जानामीति धीकालीनायां न जानामीति बुद्धौ भ्रमत्वस्य दोषजन्यत्वस्य च कल्पनागौरवाच्च तस्यां ज्ञानाभावत्वं न प्रकारः; किंत्वहमर्थसमानाधिकरणाभावरूपाज्ञानांशे ज्ञानविरोधित्वमिति स्वीकृत्याभावाविषयकत्वं कल्प्यताम्। न च— घटो न जानाति न जानामी'ति प्रतीत्योर्वैरूप्यं दोष इति—वाच्यम्; इदमसुरं बलिरसुर' इति बुद्ध्योरिव तस्यादोषत्वादिति भावः॥

**ननु—व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्त्वयापि स्वीक्रियते, अन्यथा पारमार्थिकत्वेन दृश्याभावघटितमिथ्यात्वलक्षणोक्तिर्विरुध्येत; तथाच प्रतियोग्यंशे प्रकारस्यैवावच्छेदकत्वे मिथ्यात्वानुमानं भ्रमः स्यादिति—चेत्, भ्रान्तोऽसि; न हि परमार्थः प्रपञ्चो ब्रह्मणि नास्तीत्यादि मिथ्यात्वानुमानस्याकारः; येन भ्रमत्वं स्यात्, किंतु पारमार्थिकत्वावच्छिन्नप्रतियोगिताकस्वसमानाधिकरणाभावप्रतियोगितावान् प्रपञ्च इत्याकारः। न च–पारमार्थिकत्वेन प्रपञ्चो नास्तीत्या-**

---

[1] अयं कुण्डलितः पाठः ग–पुस्तके न दृश्यते.

विषयावैलक्षण्ये प्रतीतिवैलक्षण्यायोगात् । विषयाज्ञानमनुभूय च पुरुषस्तन्निवृत्त्यर्थं विचारे प्रवर्तत इति सर्वानुभवसिद्धम् । तद्यदि ज्ञानविशेषाभावो 'न जानामी'ति प्रतीतेर्विषयः, तदा ज्ञातेऽपि तथा प्रतीत्यापातः; तद्विचारार्थं च प्रवृत्तिः स्यात् । सामान्याभावे च बाधकमुक्तमेव । तस्मादभावविल-

---

द्बुद्धेः प्रतियोगिनि पारमार्थिकत्वभ्रमत्वादभावांशे तदवच्छिन्नप्रतियोगिताकत्वभ्रमत्वमपि स्यादिति—वाच्यम्; उक्तप्रतियोगिताकत्वांशे बाधकाभावादबाधितप्रतीत्याव्यधिकरणरूपेणावच्छिन्नप्रतियोगिताकाभावसिद्धेः । न चैवं—विशेषाभावांशे सामान्यावच्छिन्नप्रतियोगिताकत्वमपि धीबलात्स्वीकृत्य प्रतियोग्यंशे प्रकारस्यैवावच्छेदकत्वमिति नियमस्त्यज्यतामिति- वाच्यम्; वन्हित्वेन द्रव्यं नास्तीत्यादाविव द्रव्यत्वेन 'वन्हिर्नास्तीत्यत्रापि प्रतियोग्यंशे प्रकारवन्हित्वस्यैवावच्छेदकतया भानसंभवेन वन्ह्यादिमात्रनिष्ठप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वादावक्लृप्तस्य भाने मानाभावेन धीबलाभावात् । न ह्यवच्छेदकतया भासमानस्यैव प्रतियोग्यंशे प्रकारत्वमिति नियमः; प्रमेयघटो नास्तीत्यादौ प्रमेयत्वादेरनवच्छेदकस्यापि प्रतियोगिनि प्रकारत्वमिति मिश्रादिभिरुक्तत्वात्, 'प्रतियोगिताश्च विशिष्योपादेया' इत्यादिदीधित्यादिग्रन्थेषु पारिभाषिकावच्छेदकत्वविशिष्टतत्तद्व्यक्तीनां तत्तद्व्यक्तित्वैर्भेदकूटनिवेशस्योक्तत्वाच्च। न च–घटो न पट इत्यादिधीकालेऽपि पटत्वेन घटो नास्तीति बुद्ध्युदयान्नोक्तनियम इति—वाच्यम्; उक्तधीकालेऽपि घटत्वपटत्वयोः 'एकत्र द्वयमिति' न्यायेन भानसंभवेनोक्तबुद्धिसंभवात् ॥

विषयाज्ञानं—विषयविशेषिताज्ञानम् । ज्ञानविशेषाभावः—विषयविशेषितज्ञानविशेषस्याभावः । ज्ञातेऽपीति । विषय इति शेषः । विषयज्ञानं विना विषयविशिष्टज्ञानस्य ज्ञानासंभवादिति भावः ।

**क्षणमेवाज्ञानं 'मयि ज्ञानं नास्ति' 'अहमज्ञ' इत्यादिधीविषय इति सिद्धम् । नन्वभावविलक्षणमप्यज्ञानं 'न जानामी'ति ज्ञानविरोधित्वेनैव भासते, मोहादिपदेऽपि प्रळयादिपदवत्तद्नुल्लेखमात्रम्; उक्तं च विवरणे—'अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानादि'ति । अन्यथा ज्ञानस्याज्ञानविरोधित्वमप्रामाणिकं स्यात्; तथाच विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां तवापि कथं न व्याघातः? एवं निर्विषयाज्ञानाप्रतीतेर्विषयज्ञानाज्ञानयोरपि व्याघात आपादनीयः; तथाच—**

---

**द्वयसापेक्षज्ञानपर्युदासेनेति** । अज्ञानं भावरूपं स्वाश्रयविषयमित्युक्त्वा ज्ञानस्य न स्वविषयाश्रितत्वमत्रास्याज्ञान[1]मिति विषयाश्रयभेदानुभवादित्याशङ्क्य नोक्तानुभवेऽस्येति अज्ञानाश्रयभानम्; किंत्वस्यात्र यज्ज्ञानं तद्विरोधित्वेनाज्ञानभानमित्याशयेनोक्तमज्ञानमिति । **द्वयेत्यादि** आश्रयविषयरूपद्वयसापेक्षं यज्ज्ञानं तत्पर्युदासेनाज्ञानमित्यभिधानादित्यर्थः । **तवापीति** । प्रमाणवृत्त्यभावकाले न जानामीति धीर्वाच्या; अन्यथाऽविद्यावृत्त्यादिकाले सा न स्यात् । तथाच प्रमाणवृत्तिसामान्यविरोधित्वेनाज्ञानविषयकोक्तधीकालेऽज्ञानाकारायाः प्रमाणवृत्तेरावश्यकत्वात् तादृशस्मृतेः सर्वत्रासंभवात्, संभवेऽपि तस्या विशेषणधीविधया हेतुत्वेऽपि ज्ञानविरोधित्वप्रकारकप्रमाणवृत्तेरवश्यं वाच्यत्वात्, अन्यथा अज्ञानमात्रस्य साक्षिभास्यत्वेन ज्ञानविरोधित्वेन भानासंभवाद्व्याघात इति भावः । ननु—ज्ञानविरोधित्वेनाप्यज्ञानं साक्षिणा भास्यतां तत्राह—**अन्यथा ज्ञानस्येति** । अज्ञाने ज्ञानविरोधित्वप्रकारकवृत्तिं विना तत्र तदसिद्धेः सावश्यं वाच्या । तस्याः सत्त्वे च तद्घटितज्ञानसामान्यविरोधित्वं न संभवतीति भावः ॥

[1] मात्रस्याज्ञाना—ग.

यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायेनोभयपरिहरणीयस्य व्याघातस्य ज्ञानाभावपक्ष एवा-

---

यद्यपि भावरूपाज्ञानस्यापि प्रमाणरूपविषयनिष्ठता, तद्वृत्तिका-र्योपादानत्वात् । अत्रास्याज्ञानमित्यत्र त्वस्येति निरूपितत्वं षष्ठ्या निर्दि-श्यते, तत्पुरुषीयज्ञाननिवर्त्यत्वनियामकस्य तत्पुरुषनिरूपितत्वस्याज्ञानेऽ-वश्यं वाच्यत्वात् । तथा च न ज्ञानविरोधित्वं न जानामीति धीवि-षयः ; किं त्वखण्डोऽज्ञानत्वाख्यो धर्मः । विवरणोक्तिस्तु संभवप्रा-चुर्येणाज्ञानाकारप्रमाणवृत्तिसत्त्वेऽत्रास्याज्ञानं स्थितमित्यादिबुद्धिमादाय बोध्या । अत एवाभिधानादित्यनेन परोक्षत्वं सूचितम् । एवं चातीतमे-तद्विषयाश्रितमज्ञानमेतद्विषयकप्रमाविरोध्यज्ञानसामान्यं स्वविषयाश्रयवि-षयकप्रमाविरोधि वेत्यनुमानेऽपि न दोषः । न हि तदज्ञानस्याज्ञानसा-मान्यस्य वा स्थितिकाले उक्तानुमानम् ; येन विरोधः, तथाच न जानामीति प्रत्यक्षे तद्विषयकत्वेन कारणतावच्छेदकत्वेन च सिद्धम-खण्डमज्ञानत्वं भातीत्यस्मन्मते न दोषः । न च न जानामीति वाक्येनो-क्तप्रत्यक्षाभिलापासंभवः ; उक्तवाक्यप्रत्यक्षयोर्भिन्नविषयकत्वादिति–वा-च्यम् ; लक्षणयोक्तवाक्यस्योक्तप्रत्यक्षसमानविषयकत्वात्, अन्यथा पाप-त्वादेर्नीलत्वादिव्याप्यजातेश्च ज्ञान[1] स्याधर्मानुद्भूतरूपादिशब्दैरभिलापा-संभवात् । न चैवमप्यज्ञानविषयस्य ज्ञानाज्ञानाभ्यां व्याघात इति— वाच्यम् ; ज्ञानादिष्विवाज्ञानेऽपि विशेषणतया विषयस्य साक्षिभास्यत्व-संभवात् । विषयत्वविशिष्टे विद्यमानेऽनावृतसाक्षिसंबन्धस्वरूपस्य साक्षि-भास्यत्वस्य माध्वैरपि स्वीकारेण तत्र संशयाद्ययोग्यत्वस्य सर्ववादिसम्म-तत्वात्, तथापि न जानामीति प्रत्यक्षे प्रमाविरोधित्वेनाज्ञानभानेऽपि

1 ज्ञात–ग.

पादनमनुचितमिति—चेन्न; प्रमाणवृत्तिनिवर्त्यस्यापि भावरूपाज्ञानस्य साक्षिवेद्यस्य विरोधिनिरूपकज्ञानतद्व्यावर्तकविषयग्राहकेण साक्षिणा तत्साधकेन तदनाशाद्व्याहत्यनुपपत्तेः। अज्ञानग्रहे विषयगोचरप्रमापेक्षायां व्याहृतिः स्यादेव, सा च नास्ति। तदुक्तं विवरणे—'सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवे'ति। न चैवं—ज्ञानाभावपक्षेऽपि विषयादिज्ञानं साक्षिरूपम्, 'न जानामी'ति धीस्तु प्रमाणवृत्त्यभावविषयेति न व्याहतिरिति—वाच्यम्; भावरूपाज्ञानस्य साक्षात्साक्षिवेद्यत्वेन तदवच्छेदकविषयादेस्तद्द्वारा साक्षिवेद्यत्वसंभवेऽप्यभावस्यानुपलब्धिगम्यत्वेन साक्षात्साक्षिवेद्यत्वाभावान्न तद्द्वारा तदवच्छेदकविषयादेः साक्षिवेद्यत्वमिति वैषम्यात्। यद्यपि ज्ञानं साक्षिवेद्यम्, तद्द्वारा तदवच्छेदको विषयश्च साक्षिवेद्यः, तथापि ज्ञानाभावो न साक्षिवेद्यः; तस्यानुपलब्धत्वात्।

---

न क्षतिरित्याशयेन समाधत्ते—न प्रमाणवृत्तिनिवर्त्यस्येत्यादि। तद्व्यावर्तकेति। अज्ञानविशेषणे[1]त्यर्थः। तत्साधकेनेति। प्रमाविरोधित्वसविषयकत्वविशिष्टाज्ञानस्यानावृतसंबन्धवत्त्वरूपं साधकत्वं साक्षिणोऽज्ञाननाशकत्वेऽनुपपन्नमिति भावः। अज्ञानग्रहे अज्ञानं विषयीकर्तुम्। साक्षात्साक्षिवेद्यत्वाभावादिति। सविषयकत्वाविशिष्टस्य सर्वस्यानावृतसाक्षिसंबन्धतया कलृप्तत्वेन ज्ञानादिविषयीभूतस्याभावस्य साक्षिवेद्यत्वेऽप्यतादृशाभावस्य तदभावादित्यर्थः। ननु यथा ज्ञानं प्रति विशेषणतया तद्विषयः साक्षिवेद्यः, तथा विशेष्यतयाभावोऽपीत्यत्राह—यद्यपीति। अनुपलब्धत्वादिति। घटादौ ज्ञानाभावस्यानुपलब्ध्यैव धीः। न हि स्वमनोभिन्नदेशावच्छिन्नतयाज्ञानस्य[2]

---

[1] विशेषणे—ग. [2] ज्ञानाभावस्य—ग.

**उत्पन्नं च ज्ञानं साक्षात्साक्षिवेद्यम्। तस्मिंश्चोत्पन्ने तद्विषयोऽपि स्फुरतीति कुतो ज्ञानाभावोऽपि? अज्ञानविशेषणतया त्वनुत्पन्नमपि ज्ञानं साक्षिवेद्यमिति न दोषसाम्यम्। न चावच्छेदकस्य**

---

साक्षिवेद्यत्वं संभवति। यादृशस्य हि तार्किकादिमते मानसप्रत्यक्षविषयता तादृशस्यैव त्वया साक्षिवेद्यता वाच्या; अन्यथाऽनुभवविरोधात्, घटादौ ज्ञानाभावं साक्षात्करोमीत्यापत्तेश्च। तथाच ज्ञानाभावस्यानुपलब्धत्वेन क्लृप्तत्वादात्मन्यपि तस्य तथात्वमिति भावः। ननु—साक्षिवेद्यत्वेन ज्ञानं क्लृप्तम्, तदधिकरणे तदभावोऽपि तथा कल्प्यताम्; तथाच ज्ञानतदभावयोः साक्षात्साक्षिवेद्यत्वेन न दोषस्तत्राह—**उत्पन्नमिति**। विद्यमानमित्यर्थः। **अभावोऽपीति**। साक्षात्साक्षिवेद्य इत्यनुषज्यते। तथाच ज्ञानतदभावयोरेकतरस्य सत्त्वेऽन्यतरस्यासत्त्वादविद्यमाने च साक्षिणस्तादात्म्यरूपसाक्षाद्वेद्यत्वासंभवान्न तयोः साक्षात्साक्षिवेद्यत्वमिति भावः। **अनुत्पन्नं**—अविद्यमानम्। विषयस्येव ज्ञानस्याप्यविद्यमानस्याज्ञानविशेषणतया भानसंभवः। प्रमिणोमीत्यादौ प्रमाविशेषणतया प्रमात्वादेरिवाज्ञानविशेषणतया प्रमाविरोधस्यापि भानसंभवात्। अविद्यमानत्वं च प्रमायामिव[1] प्रमात्वघटकाज्ञातत्वेऽपि सममिति भावः। अहं जानामीति धीसत्त्वेऽहं न जानामीति ज्ञानाभाववदहं प्रमावानिति भ्रमकालेऽहं प्रमाभाववानिति बुध्यभावादहमर्थे प्रमोपलब्ध्यभावरूपानुपलब्धेरहमेवार्थे[2] प्रमाभावबुद्धिहेतुत्वावश्यकत्वात् प्रमाभावस्य साक्षिवेद्यत्वे मानाभावः। न चानुपलब्धेः प्रतियोगिज्ञानसहकारेणैवाभावप्रमापकत्वात्प्रकृते च तदनुपपत्तेः साक्षिवेद्यत्वं तस्योच्यत इति—वाच्यम्; साक्षिणोऽप्यविद्यावृत्त्यवच्छिन्नस्य जन्यत्वात्। जन्याभावप्रत्यक्षे च प्रतियोगिज्ञानस्य हेतुत्वात्तथाप्यनुपपत्तेः। न हि न

---

[1] प्रमाया इव—ख.　　[2] अहमर्थे—ग.

**विषयादेः प्रागज्ञाने कथं तद्विशिष्टाज्ञानज्ञानम्? विशेषण-ज्ञानाधीनत्वाद्विशिष्टज्ञानस्येति—वाच्यम्; विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे मानाभावात्, प्रतियोगित्वाभावत्वयोः पूर्वानुपस्थितयोरपि तार्किकैरभावबोधे प्रकारीभूय माना-भ्युपगमात्, तथाहि—विशेषणतावच्छेदकप्रकारकज्ञानं विना कथं विशिष्टवैशिष्ट्यबुद्धिरीति—चेन्न; विशिष्टवैशिष्ट्यबुद्धित्वेन विशेषणतावच्छेदकप्रकारकज्ञानत्वेन च कार्यकारणभावे माना-भावात्, प्रत्यक्षत्वादिरूपेण पृथक् पृथक् क्लृप्तकार्यकारणभावे-**

---

जानामीति प्रत्यक्षकाले प्रमारूपप्रतियोगिस्मृतिनियमः; तथा सति हि त्वन्मते प्रतियोगिस्मृतिव्यक्तीनां तदा कल्पनायां महागौरवादित्यपि बोध्यम्। **अज्ञानज्ञानम्**—अज्ञानाकाराविद्यावृत्त्यवच्छिन्नचिद्रूपम्। अविद्योपहितचिन्मात्रस्य साक्षित्वे तु नायं दोषः; जन्यविशिष्टबुद्धावेव विशेषणधीहेतुत्वात्। विशिष्टबुद्धित्वेनैव जन्यत्वेऽपि विशिष्टबुद्धेः स्वाव्यवहितप्राक्क्षणाः यावन्तस्तत्तदव[1]च्छेदेन स्वाश्रये विद्यमानस्याभावस्याप्रतियागित्वस्य[2] कारणतात्वेन व्यभिचारासंभवात्। यद्धीप्राक्कालः प्रसिद्धः, तदवच्छेदेन तद्धीमति विशेषणधीविरहो हि व्यभिचारः; न च नित्यसाक्षिणः प्राक्कालोऽस्तीति ध्येयम्। **प्रत्यक्षत्वादीति।** रक्तदण्डवानित्यादिप्रत्यक्षस्थले रक्तत्वादिनिष्ठलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति लौकिकसन्निकर्षस्य तन्निष्ठस्य हेतुत्वात्, तन्निष्ठलौकिकान्यप्रकारताकप्रत्यक्षे लौकिकान्यसन्निकर्षस्य हेतुत्वात्, तादृशतादृशविषयताकानुमित्यादौ तादृशतादृशपरामर्शादेर्हेतुत्वात्, रक्तदण्डत्वाद्यवच्छिन्नविषयताकधीत्वं न कार्यतावच्छेदकम्; बाधाभावादिसहकृतेन्द्रियसन्निकर्षादिना दण्डादौ रक्तत्वाद्यवच्छिन्नप्रकारताकस्य पुरुषादौ दण्डत्वाद्यवच्छिन्नप्रकारताकस्य चोत्पत्तिसंभवेन नीलघटत्वादिवदर्थ-

---

[1] तदव—ग. [2] वच्छेदेन विद्यमानाभावप्रतियोगित्वस्य—ग.

**नैवोपपत्तेर्विशिष्टवैशिष्ट्यबुद्धित्वस्यार्थसमाजसिद्धत्वात्, इह च सामग्रीतुल्यत्वेन 'विशेष्ये विशेषणं तत्र च विशेषणान्तर'मिति**

समाजग्रस्तत्वात्। रक्तदण्डत्वाद्यवच्छिन्नप्रकारताकस्य च सधर्मितावच्छेदकस्योक्तकारणेनोत्पत्तिसंभवात्, दण्डो रक्तो न वेति सन्देहेऽपि रक्तदण्डवानिति बुद्धौ जायमानायां 'विशेष्ये विशेषणं तत्रापि विशेषणान्तर'मित्यस्या इव 'विशिष्टस्य वैशिष्ट्य'मित्यस्या अपि विषयताया वक्तुं शक्यत्वात्, द्वितीयायां मानाभावात्, पक्षधरमिश्रादिभिरस्वीकारात्, विशेषणस्य स्वविशेष्यान्विते विशेषणत्वस्थल एव विशिष्टवैशिष्ट्यव्यवहारसंभवाच्चेति भावः। उक्तहेतुत्वमङ्गीकृत्याप्याह—**इह चेति**। विशेषणतावच्छेदकप्रकारकानिश्चयासंभवस्थले चेत्यर्थः। **सामग्रीतुल्यत्वेनेति**। यावन्ति विशिष्टवैशिष्ट्यबुद्धौ कारणानि तावतां विशेष्ये विशेषणमित्यादिबुद्ध्युपधायकत्वसंभवेनेत्यर्थः। **न्यायेनेति**। सर्वेषां विशेषणतावच्छेदकानामिति शेषः। अथवा—**इह चेति**। विशेषणतावच्छेदकांशे धर्मितावच्छेदकं यत्र नास्ति तादृशस्थले चेत्यर्थः। विशिष्टस्य वैशिष्ट्यं विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमित्येतयोरीति शेषः। घटवदिति बुद्धेरुक्तद्वैविध्येऽपि विशेषणतावच्छेदकानिश्चयो न तत्र हेतुः, किंतु रक्तदण्डवदित्यादिबुद्धेर्विशिष्टवैशिष्ट्यधीरूपत्वेन तत्र; अन्यथा दण्डो रक्तो न वेति धीकालेऽपि तदापत्तेः। तथाच ज्ञानविरोधित्वसविषयक[1]त्वविशिष्टाज्ञान[2]वैशिष्ट्यबुद्धावपि न विषयादिनिश्चयो हेतुः। न हि तयोरेकांशेऽपरस्य धर्मितावच्छेदकत्वमित्यत्र मानमस्ति, न वा ज्ञानविरोधित्वेनाज्ञानस्य प्रत्यक्षे भाननियमस्वीकारेऽज्ञानत्वाख्याखण्डधर्म[3]भाने मानमस्ति; येन स एव धर्मितावच्छेदको

[1] समानविषयक—ग. [2] नस्य—ग. [3] धर्मस्य धर्मितावच्छेदकत्वनियमः; मानाभावादिति भावः—ग.

**न्यायेन विशिष्टवैशिष्ट्यज्ञानसंभवात् । अन्यथा तार्किकाणामपीश्वरस्य भ्रान्तिज्ञत्वं न स्यात् । भ्रमविषयस्य स्वातन्त्र्येण ग्रहे भ्रान्तत्वापत्त्या भ्रमावच्छेदकतयैव तद्ग्रहणं वाच्यम्; तथाच क्व प्रागुक्तदवच्छेदकग्रहनियमः । ग्रहणसामग्रीतुल्यत्वं च प्रकृ-**

---

ज्ञानविरोधित्वाद्यंशे स्यात् । **विशेष्ये इत्यादि** । अज्ञाने विरोधो विशेषणम्, तत्रापि ज्ञानम्, रक्तदण्डं न जानामीत्यादावप्यज्ञाने दण्डादिः, तत्रापि रक्तत्वादिरिति[1]भावः । **विशिष्टेति** । विरोधदण्डादि-विशिष्टाज्ञानस्वरूपेत्यर्थः । एवं च विशिष्टवैशिष्ट्येत्यपि सार्थकम्; अन्यथा न्यायेन ज्ञानसंभवादित्येवोच्येत । ननु—ससंबन्धिकस्य प्रत्यक्षं विशिष्टस्य वैशिष्ट्यमिति रीत्यैव, अन्यथा रक्तदण्डो नास्ती-त्यभावप्रत्यक्षेऽपि तद्रीतिनियमः सर्वसम्मतो न स्यात्; तत्राह— **अन्यथेति** । उक्तप्रत्यक्षस्योक्तरीतिनियम इत्यर्थः । **भ्रमविषयस्य** भ्रमविशेष्यविशेषणयोः । **स्वातन्त्र्येण** विशिष्टस्य वैशिष्ट्यमिति रीत्या ग्रहे रजतेदं ज्ञानवानयमिति ग्रहे । **भ्रमावच्छेदकतया**— भ्रमांशे विशेषणतया । **तद्ग्रहणं** भ्रमविशेष्यविशेषणयोर्ग्रहणम् । **तथाचेति** । उक्तप्रत्यक्षे उक्तरीत्यनियमे चेत्यर्थः । **तदवच्छेदकेति** । न जानामीति प्रत्यक्षे विशेषणतावच्छेदकज्ञानादित्यर्थः[2] । न चेदंरज-तयोर्भ्रमे विशेषणतया भानेऽपि तयोरेकविषयतावच्छिन्नस्यापरविषय-त्वस्याभानेन भ्रमज्ञत्वं समूहालम्बनज्ञानज्ञत्व[3]साधारणमिति—वाच्यम्; विशिष्टस्य वैशिष्ट्यमिति रीतावपि तदभानस्य तुल्यत्वात् । अथ रजतस्य विशेषणत्वेन स्वविशेष्येदमंशे विशेष्ये ज्ञानेऽपि विशेषणत्वात् ज्ञानस्य चेदंविषयताविशिष्टत्वेन विशेष्यत्वादिदंविषयतावच्छिन्नविष-यतासंबन्धेन रजतस्य ज्ञाने भानम्, तर्हि रजतस्येदमंशे विशेषणत्वं विनापि तद्बोध्यम् । **ग्रहणसामग्रीतुल्यत्वमिति** । विशिष्टस्य

---

[1] रक्तत्वादिविशेषणमिति–ग. [2] ज्ञानदीत्यार्थः–ग. [3] ज्ञत्व–ग.

तेऽपि समम् । ननु–श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानं त्वयापि वाच्यम्; तथा च तत्रापि व्याहतिस्तुल्येति–चेन्न; श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानरूपस्य प्रतियोगिनो ज्ञानाज्ञानाभ्यां व्याहत्यभावात्, न हि श्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकब्रह्मज्ञानज्ञानं ब्रह्मज्ञानमपि सत् श्रवणादिसाध्यं, मोक्षहेतुर्वा; येन तस्मिन् सति तादृग्ज्ञानप्रागभावो व्याहन्येत । नन्वेवं—'न जानामी'ति धियो ज्ञानाभावविषयत्वेऽपि न प्रतियोगिज्ञानादिना व्याहतिः; सामान्यतो विषयप्रतियोगिज्ञानेऽपि विशेषतस्तदभावसंभवात्, अन्यथा प्रागभावधीर्न स्यात्; तत्प्रतियोगिविशेषस्य सामान्यधर्मं विना

---

ष्ट्यमिति रीत्यसंभवेऽपि ग्रहणस्य सामग्रीसमग्रता तत्तद्विषयावगाहित्वरूपा अपलापानर्हत्वेन तुल्या, यथा विशिष्टस्य वैशिष्ट्यमिति बोधे नापलापनीया, तथा विशेष्ये विशेषणमित्यादिरीत्या भ्रमस्य ज्ञानेऽपीति यावत् । प्रकृतेऽपि अज्ञानप्रत्यक्षेऽपि । सममिति । उक्तसमग्रता नापलापार्हेत्यर्थः । यथाश्रुते ईशज्ञानस्य नित्यस्य कारणकूटरूपसामग्र्युक्तिरसङ्गतेति ध्येयम् । न जानामीति प्रत्यक्षे विशेष्ये विशेषणमिति रीत्या ज्ञानाभावविषयकत्वं न संभवति; अभावप्रत्यक्षे विशिष्टस्य वैशिष्ट्यमिति रीतेः सर्वसम्मतत्वादित्यवधेयम् । मन्मते विशिष्टस्य वैशिष्ट्यमिति रीत्या भ्रमविषयज्ञानेऽपि नेशस्य भ्रान्तत्वम्; [1]विशेषादर्शनस्यैव भ्रमस्य भ्रान्तत्वरूपत्वात्, अन्यथा विशेषदर्शिनः सोपाधिकभ्रममादाय भ्रान्तत्वव्यवहारापत्तेरतस्तार्किकाणामित्युक्तम् । विशेषतस्तदभावेति । ज्ञानत्वावच्छिन्नतया ज्ञानविशेषीयतया च भासमानप्रतियोगिताका-

[1] विशेषादर्शनकालीनस्यैव–ग.

विशेषतो ज्ञातुमशक्यत्वादिति—चेन्न; विशेषज्ञानाभावे हि विशेषज्ञानत्वावच्छिन्नं प्रतियोगीति तस्य ज्ञाने स विशेषोऽपि ज्ञात एवेति विशेषज्ञानाभावव्याघातात् । यत्किंचिद्विशेषाभावश्च न सामान्यावच्छिन्नप्रतियोगिताक इत्युक्तम् । प्रतियोगितावच्छेदकप्रकारकज्ञानाभावेन प्रागभावप्रतीतिरसिद्धैव । ननु—प्रतियोगितावच्छेदकप्रकारकज्ञानं नाभावज्ञाने कारणम्, किंत्वभावज्ञाने भासमानप्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानम्; सामान्यलक्षणाप्रत्यासत्त्यभ्युपगमे तु प्रतियोगिविषयत्वमपि तस्याधिकम्, इतरथा तु तदेव, इष्टवृत्तिसामान्यधर्मप्रकारकज्ञानमिवासिद्धव्यक्तिविषयेच्छाकृत्योः । न च—प्रतियोगितानवच्छेदकधर्मेण कथं प्रतियोगिता गृह्यतामिति—वाच्यम्; विशेषावच्छिन्नाया व्याप्तेरिव सामान्येन ग्रहणसंभवात् । तथाहि 'इदमभिधेयवत्, प्रमेया'दित्यनुमाने 'यत्र प्रमेयं तत्राभिधेय'मिति व्याप्तिग्रहणसमये वृत्तिमत्प्रमेयत्वावच्छेदेनैव सामानाधिकरण्यरूपव्याप्तिसत्त्वेऽपि तस्याः प्रमेयत्वरूपेणैव ग्रहणम्, न तु वृत्तिमत्प्रमेयत्वेन; गौरवात्, वृत्तिमत्त्वविशेषणस्य व्यभिचारावारकत्वेन वैयर्थ्याच्च; अवृत्तिषु साध्यसामानाधिकरण्यरूपव्याप्त्यभाववत् साध्याभावसामानाधिकरण्यरूपव्यभिचारस्याप्यभावात्, व्यर्थविशेषणत्वरहितत्वे सति व्यभिचारिव्यावृत्तत्वमात्रेणैव व्याप्यतावच्छेदकत्वसंभवाच्च । तथाच यथा वृत्तिमत्प्रमेयगतापि व्याप्तिः प्रमेयत्वेनैव गृह्यते तथा तत्तन्नीलादि-

भावेत्यर्थः । विशेषतः तद्व्यक्तित्वेन । प्रतियोगितावच्छेदकेति । तत्तद्व्यक्तित्वरूपेत्यादिः । प्रतियोगिविषयत्वं प्रागभावप्रतियोगिविषयकत्वम् । तदेवेति । अभावज्ञाने कारणमित्यनुषज्यते । संभवात्—

व्यक्तिगता प्रतियोगिता नीलत्वादिरूपेण गृह्यत इति न काचिदनुपपत्तिः। एवं च 'इहेदानीं घटो नास्ती'ति प्रतीतिरिव घटोपादानगततत्प्रागभावविषया 'मयि ज्ञानं नास्ती' ति प्रतीतिरपि प्रमातृगततत्प्रागभावविषयेति न काप्यनुपपत्तिरिति—चेन्न; अभावज्ञाने प्रतियोग्यंशे भासमानस्य धर्मस्यैव प्रतियोगितावच्छेदकतया यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले 'निर्घटं भूतल' मिति घटज्ञानवत्यपि स्वस्मिन् 'मयि घटज्ञानं नास्ती' ति च प्रतीतेरापत्तेः पूर्वोक्तदोषात्। यत्किञ्चिद्घटज्ञानं घटाभावज्ञाने प्रतिबन्धकमिति तु ज्ञानज्ञानेऽपि तुल्यम्, उदाहृतव्याप्तिग्रहणे तु बाधकाभावात्सामान्यावच्छेदेऽपि न दोषः। अथैवं प्रागभावप्रतीतिरेव न स्यात्, न स्यादेव; 'घटो भविष्यती' ति प्रतीतेः धात्वर्थभविष्यत्ताविषयत्वेन प्रागभावाविषयत्वात्। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन 'अद्य घटो भविष्यती' ति धीप्रसङ्गः। भविष्यत्त्वं च प्रतियोगितद्ध्वंसानाधारकालसंबन्धित्वम्। ध्वंसत्वं च प्रागभावानङ्गीकर्तृमते कादाचित्काभावत्वमेव। तदङ्गीकर्तृमतेऽपि प्रतियोग्यजनक-

---

धीसंभवात्। तत्प्रागभावेति। प्रमाप्रागभावेत्यर्थः। घटवतीति। सामान्यधर्मस्यैव प्रतियोगितावच्छेदकतया भासमानस्य प्रतियोग्यंशेऽपि प्रकारत्वावश्यकत्वादित्यादिः। सामान्यावच्छेदेऽपीत्यपिकारेण गगनादाववर्तमानाया व्याप्तेः प्रमेयत्वं नावच्छेदकमतिप्रसक्तत्वात्, वृत्तिमत्त्वावच्छेदेनैव ग्रहणसंभवेन व्यर्थविशेषणत्वाभावात्, वृत्तिमत्प्रमेयत्वावच्छिन्नत्वस्य व्याप्तौ सत्त्वे ग्रहणेऽप्यदोषात्, असत्त्वे ग्रहणस्यापि भ्रमत्वादित्यादि सूचितम्। कादाचित्काभावत्वमिति। कालत्वाव्याप-

कादाचित्काभावत्वम् । जनकत्वं च स्वरूपसंबन्धविशेषः । न प्रागभावघटितः; प्रागभावस्याजनकत्वापत्तेः, अन्यथात्माश्रयात् । अतः प्रागभावमङ्गीकुर्वतोऽपि तत्प्रत्यक्षत्वं दुर्लभम्, तमनङ्गीकुर्वतस्तु न कापि हानिः । 'इहेदानीं घटो नास्ती' ति प्रतीतिस्तु सामान्यधर्मावच्छिन्नप्रतियोगिताकतत्कालावच्छिन्नयावद्विशेषाभावविषया; समयविशेषस्याप्यभावावच्छेदकत्वात् । अन्यथा 'आद्यक्षणे घटो नीरूप' इत्यादिप्रतीतिर्न स्यात् । अथास्मिन् पक्षे सामान्याभावो न सिद्ध्येदिति—चेत्; प्रागभावाभ्युपगमेऽपि तुल्यमेतत्, सामान्याभावप्रागभावयोः सुन्दोपसुन्दयोरिव परस्परपराहतत्वात् । तथाहि प्रागभावसिद्धौ विशेषाभावस्यापि सामान्यावच्छिन्नप्रतियोगिताकत्वान्न तावन्मात्रप्रमाणकसामान्याभावासिद्धिः, सामान्याभावसिद्धौ च

---

काभावत्वमित्यर्थः । अखण्डोपाधिरूपं वा न तु प्रागभावप्रतियोग्यभावत्वरूपत्वमिति शेषः । **प्रागभावघटितः** कार्यस्य प्रागभाववत्कालत्वरूपप्राक्कालत्वघटितः । **आत्माश्रयेति** । प्रतियोगिजनकत्वेन च प्रागभावः कल्प्यते । उक्तजनकत्वं च प्रागभावकल्पनात्पूर्वं ज्ञातुमशक्यम्; प्रागभावघटितत्वादतः प्रागभावज्ञप्तिः स्वाधीनेति ज्ञप्तावात्माश्रयेत्यर्थः । **अन्यथेति**—प्रतियोगिमत्यत्यन्ताभावानङ्गीकार इत्यर्थः । **न स्यादिति** । प्रागभावस्यैव नीरूप इति धीविषयत्वे रूपवत्यपि पाकेन जनिष्यमाणरूपप्रागभावमादाय सा स्यादिति शेषः । यद्यपि सामान्याभावोऽप्युक्तधीविषयः संभवति, तथापि विशेषाभावकूटोक्तिरथेत्यादिग्रन्थावतारणायेति बोध्यम् । **तावन्मात्रप्रमाणकेति** । उक्तप्रतियोगिताकत्वधीमात्रप्रमाणकेत्यर्थः । ननु—विशेषाभावप्रतियोगितापि सामान्यरूपेण वाच्या; अन्यथा इदानीं कपाले घटो, नास्तीति

विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात्, कादाचित्काभावस्य च सामान्याभावत्वायोगात्, न सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषप्रतीतिमात्रशरणप्रागभावसिद्धिरिति न तदुभयमपि विपश्चितां चेतसि चमत्कारमावहति । ननु—यावद्विशेषाभावनिश्चयेऽपि 'रूपं वायुवृत्ति न वा वायू रूपवान्न वे'ति रूपाभावसन्देहात् निश्चिते च संशयायोगाद्यावद्विशेषाभावान्यसामान्याभावासिद्धिः, अत[1] एतावन्त्येव रूपाणीति निश्चयदशायामेतादृशसंशयस्याननुभूयमानत्वेन तदनिश्चयदशायामेवैतादृशः संशयो वाच्यः, तथा च 'रूपत्वं पार्थिवाप्यतैजसरूपात्रितयातिरिक्तवृत्ति भविष्यती' त्यधिकसंभावनया निश्चितेष्वेव संशयः, उक्तसंभावनाविरहसहकृतनिश्चयस्यैव प्रतिबन्धक-

---

प्रतीतौ तद्घटाभावस्य घटत्वावच्छिन्नप्रतियोगिताकत्वेन भानं न स्यात्, न च—तत्र घटसामान्याभावो भातीति—वाच्यम्; सामान्याभावस्य कालानवच्छिन्नस्यैव सर्वत्र भानात्तत्राह—**कादाचित्काभावस्येति** । कालावच्छिन्नतया भासमानस्येत्यर्थः । **सामान्याभावत्वायोगात्** सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात् । सामान्याभावानभ्युपगमे यावद्विशेषाभावेषूक्तप्रतियोगिताकत्वमुक्तधीविषय इत्युक्तम् । तदभ्युपगमेऽपि कदाचित्संसृष्टव्यक्तित्वावच्छिन्नप्रतियोगिताको विशेषाभाव एवोक्तधीविषय इति भावः । अथवा **कादाचित्काभावस्य** कदाचिदेव विद्यमानस्वरूपकाभावस्य । ध्वंसप्रागभावत्वेनाभिमतस्य **सामान्याभावत्वाभावात्** सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात् । तत्र हेतुः प्रतियोगिताकत्वाभावादित्यन्तः । चकारोऽप्यर्थकः, विशेषात्यन्ताभावस्येव कादाचित्काभावस्यापि प्रतियोगिता न सामान्यरूपा[2]वच्छिन्नेति

[1] अथ.  [2] सामान्यस्वरूपा.

त्वादिति—चेन्न; एवं प्रतिबन्धककल्पने मानाभावादुक्तसंभावनाविरहदशायामप्येतादृशसंशयदर्शनाच्च। ननु—यथा यावद्विशेषाभावेभ्योऽतिरिक्तं सामान्याभावो रूपस्य संशयकोटिः, तथा रूपसामान्यमपि यावद्विशेषेभ्योऽतिरिक्तं संशयकोटिर्नाभ्युपगन्तुं शक्यते, तथा च कथं रूपस्य संशयकोटित्वम्? सर्वरूपाभावनिश्चयात्। यदि तु नीलपीताद्यभावत्वेन निश्चयेऽपि रूपाभावत्वेनानिश्चयाद्रूपासंशय इति ब्रूषे, तदा किं सामान्याभावेन; रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेन संशयसंभवात्, धर्मिकल्पनातो धर्मकल्पनाया लघुत्वेन यावद्विशेषाभावानामेव रूपत्वावच्छिन्नप्रतियोगिताकत्वकल्पनात्, अतो न यत्किंचिद्भावमादाय 'घटो नीरूप' इति प्रतीतिप्रसङ्ग इति—चेन्न; यावद्विशेषाभावेषु यद्रूपत्वावच्छिन्नप्रतियोगिताकत्वं तत्प्रत्येकं विश्रान्तम्, व्यासज्यवृत्ति वा। आद्ये यत्किंचिदभावमादाय 'घटो नीरूप' इति प्रतीति प्रसङ्गः। द्वितीये तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वस्याव्यासज्यवृत्तिस्वभावत्वेन तद्व्यतिरिक्तं रूपत्वावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति कल्पनीयम्। तद्वरं रूपत्वावच्छिन्नप्रतियोगिताक एक एवाभावः कल्प्यते। ममैकोऽभावः रूपत्वावच्छिन्नप्रतियोगिताकत्वं चेति वस्तुद्वयं कल्प्यम्, तव तु रूपत्वावच्छिन्नप्रतियोगिताकत्वं तस्य च व्यासज्यवृत्तित्वेन बहुष्वभावेषु प्रत्येकं संबन्धा इति बहुकल्पनम्। 'धर्मिकल्पनातो धर्मकल्पनाया लघुत्व' मिति न्यायस्तु कल्पनीयाधिक्यापेक्षः। किंच घटद्वये यावद्विशेषाभावसत्त्वेऽपि

यावत्। विशेषप्रतीतीति। विप्रतीतीत्यर्थः। विरहदशायामिति। विशेषाभावकूटनिश्चयेऽपीति शेषः। प्रत्येकं संबन्धा इति। प्रत्ये

रूपसामान्याभावबुद्ध्यनुदयात् ऐकाधिकरण्यावच्छेदेनाप्यभावा विशेषणीयाः; तथाचातिगौरवम्। अपि च व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयग्रहस्तद्भेदग्रहश्च हेतुः; अगृहीतेषु भिन्नतया वागृहीतेषु वस्त्रादिषु द्वित्वादिबुद्ध्यनुदयात्। तथाच यावद्भावतद्भेदाग्रहे प्रथमत एव नीरूप इति धीर्न स्यात्; व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्याग्रहणात्। अतः सामान्याभावस्य प्रामाणिकत्वात्कथं तत्पराहतिरिति—चेत्, अत्र ब्रूमः—एवं तर्हि सामान्यप्रकारेण विशेषाभावाप्रतीतेर्ज्ञानविशेषप्रागभावो न जानामीति धियो ज्ञानत्वावच्छिन्नप्रतियोगिताको न विषय इति सिद्धं नः समीहितम्। न हि प्रागभावोऽपि कश्चित्सामान्याभावोऽस्ति; येन तत्प्रतियोगिता सामान्यधर्मेणावच्छिद्येत; विशेषाभावप्रतियोगिता तु तत्तद्घटत्वादिना विशेषेणावच्छिद्यते। न च तेन तेन रूपेण भविष्यद्घटादि ज्ञातुं शक्यम्; तज्जन्मानन्तरं तु तत्तद्रूपेण तज्ज्ञानसंभवेऽपि न प्रागभावधीः प्रत्यक्षा स्यात्; तदानीं प्रागभावासत्त्वात्, प्रत्यक्षस्य विषयजन्यत्वात्। सामान्यप्रकारकज्ञानं च न विशेषाभावज्ञाने हेतुरित्युक्तम्; प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावत्वप्रकारकाभावज्ञाने हेतुत्वात्, तस्यानुमानगम्य-

---

कावृत्तेः समुदायवृत्तित्वासंभवात्समवायवद्बहुष्वेकस्य संबन्धत्वासंभवाच्च नानापर्याप्तिसंबन्धा वाच्या इत्यर्थः। समवायस्य प्रत्येकानुयोगिकत्वेन नानात्वं पर्याप्तेस्तु तदभावेनैकत्वमित्याशयेन त्वग्रे सामान्याभावं खण्डयिष्यति। **अवच्छेदेन**—विशिष्टत्वेन। **विशेषणीया इति।** अन्यथा पृथिव्यां सर्वं नीलरूपमितिवत् पृथिव्यां रूपं नास्तीत्यपि स्यादिति शेषः। इदंत्वादिनाभावप्रत्यक्षवारणायाह—**अभावत्वप्रकारकेति। अभावज्ञाने** अभावप्रत्यक्षे। **हेतुत्वादिति।** अन्यथा नेत्येवा-

त्वेऽपि 'न जानामी' ति धियः अपरोक्षायास्तद्विषयत्वायोगात्। अव्यभिचारीलिङ्गाद्यभावात्तदनुमानमपि दूरनिरस्तमेव। ननु— 'इदं माभू' दितीच्छाविषयतया तत्सिद्धिः, न; प्रागभावस्य स्वरूपतोऽसाध्यत्वेन प्रतियोगिजनकविघटनेन तत्संबन्धस्येवात्यन्ताभावसंबन्धस्यापि साध्यत्वात्तेनैवान्यथासिद्धेः। अथोत्पन्नस्य द्वितीयक्षणे पुनरुत्पत्त्यभावात्तत्पूर्वक्षणे सामग्र्यभावो वाच्यः; स च प्रागभावाभावादेव, अन्यहेतूनां सत्त्वादिति—चेन्न; सामायिकात्यन्ताभावेनैवान्यथासिद्धेः, उत्पन्नस्यैव स्वोत्पत्तिविरोधित्वाच्च। अपि च सामग्री कार्यसत्त्वे प्रयोजिका न तु तस्याद्यकालसंबन्धरूपोत्पत्तावपि। आद्यकालसंबन्धो हि स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वम्। तत्र सामग्री कार्यस्य कालाधारत्वांशमात्रे प्रयोजिका न तु विशेषणांशेऽपि; तस्य तादृक्पदार्थध्वंससामग्रीविरहादेव सिद्धेः। पाकजरूपादिभेदोऽप्यग्निसंयोगभेदात् पूर्वरूपादिध्वंसभेदाद्वा, न तु प्रागभाव-

---

कारकस्यापि प्रत्यक्षस्य दुर्वारत्वादिति शेषः। **साध्यत्वात्**–क्षेमसाधारणसाध्यत्वात्। **सामयिकेति**। समयविशेषावच्छिन्नेत्यर्थः। **उत्पन्नस्येति**। वस्तुतो द्रव्यत्वाद्यवच्छिन्नं प्रति कारणकूटस्याधिकरणीभूतो द्रव्यादिशून्यो यः क्षणस्तदुत्तरक्षणत्वं द्रव्याद्युत्पत्तिव्याप्यमित्येव द्रव्यादेः स्वोत्पत्तिविरोधित्वमिति ध्येयम्। ननु पाकजानां रूपरसगन्धस्पर्शानां भेदः कारणभेदं विनाऽनुपपन्नः कारणान्तराणां पाकादीनामभेदान्नानाप्रागभावरूपकारणं रूपादौ कल्पयतीत्यत आह—**पाकजेति**। **न तु प्रागभावेति**। तयोः क्लृप्तत्वादित्यादिः। यद्यपि रूपाद्यत्यन्ताभावस्य रूपादिहेतुत्वं संभवति, तथापि रूपव्यक्तीनामेकेन तेजःसंयोगादिना जायमानानां मिथो भेदाय तत्तद्ध्वंसहेतुत्वमुक्तम्। एकस्य पूर्वरूपध्वंस-

भेदात्, प्रतियोगिभेदं विना प्रागभावभेदायोगाच्च। नाप्युपादानत्वव्यवस्था तत्र मानम्; तन्तुत्वादिनैव तत्सिद्धेः। अन्यथा प्रागभावस्य संबन्धिविशेषोऽपि कुतः सिद्ध्येत्? न च तदत्यन्ताभाववतः कथं तदुपादानत्वम्? संबन्धान्तरेण त्वयाप्यभ्युपगमात्समयावच्छेदतदनवच्छेदाभ्यां वैलक्षण्याभ्युपगमाच्चेत्यलमतिविस्तरेण। एवं सामान्याभावोऽपि गौरवपराहत एव। तथाहि सामान्यावच्छिन्नप्रतियोगिताकत्वं अभावः तस्य च तत्तदधिकरणसंबन्धा इति त्रयं वा कल्प्यताम्, क्लृप्ततत्तदधिकरणसंबन्धानामेकाधिकरणवृत्तित्वावच्छेदेन सिद्धानामभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वं तस्य च व्यासज्यवृत्तित्वमिति द्वयं वा कल्प्यताम्। तत्रोत्तरः पक्ष एव प्रेक्षावद्भ्यो

स्याश्रये बहूनामुत्तररूपाणामुत्पत्तिस्थले तु तेजस्संयोगादीनामेव बहूनां हेतुत्वं कल्प्यत इति भावः। भेदं भेदसिद्धिम्। भेदायोगात् भेदसिद्ध्ययोगात्। वस्तुतः कारणाभेदेऽपि प्रमाणसिद्धे कार्यभेदे न क्षतिरिति बोध्यम्। वैलक्षण्येति। प्रतियोग्यधिकरणानधिकरणवृत्तित्वेत्यर्थः। त्रयमिति। तत्तदधिकरणसंबन्धसमुदायत्वेन संबन्धानामेकत्वात्त्रित्वं बोध्यम्। रोचत इति। यद्यपि समवायः प्रत्यधिकरणव्यक्ति विशिष्टप्रमानियामकत्वेन प्रत्यधिकरणव्यक्तिकं भिन्नः, तथापि पर्याप्तिः प्रत्येकाधिकरणव्यक्तौ विशिष्टबुद्ध्यनियामकत्वेन न प्रत्येकाधिकरणं भिन्ना। तथाच प्रत्येकानतिरिक्तसमुदायानुयोगिकपर्याप्तेः प्रत्येकानुयोगिकत्वेऽपि समुदितत्वावच्छिन्नाया एकस्या एव तस्याः स्वीकारात् सामान्यावच्छिन्नप्रतियोगिताकत्वस्य सर्वविशेषाभावेष्वेकैव पर्याप्तिः, सामान्याभावस्य तु स्वाधिकरणेषु प्रत्येकं नानाविशेषणता अतिरिक्ताः कल्प्याः। स्वरूपसंबन्धस्य निरस्तत्वादित्यन्त्यपक्ष एव रोचत इति भावः॥

**रोचते ; आद्यक्षणे 'घटो नीरूप' इति प्रतीतेः सर्वसिद्धत्वात्, यावदाश्रयतद्भेदग्रहस्य द्वित्वादिग्रहे हेतुत्वेऽप्युक्तप्रतियोगिताग्रहे हेतुत्वानभ्युपगमात्, कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात्।**

---

यत्तूक्तप्रतियोगितानिरूपकत्वमव्यासज्यवृत्तिस्वभावतत्तदभावस्वरूपत्वान्न व्यासज्यवृत्तिकं संभवतीति दीधितावुक्तम्, तन्न युक्तम्; बौद्धाधिकारशिरोमणौ विषयतादेः स्वरूपसंबन्धत्वनिरासेनाभावस्वरूपस्य स्वस्मिन्संबन्धत्वासंभवादतिरिक्तसामान्याभावस्वीकारेऽपि तदतिरेकस्योक्तनिरूपकत्वेऽवश्यं वाच्यत्वात्। यदप्यैकाधिकरण्यावच्छिन्नत्वेनाभावा 'रूपं नास्ती'त्यादिधीविषया वाच्याः; अन्यथा पृथिव्यां यावन्ति नीलरूपाणीत्यादिवत् पृथिव्यां न रूपमित्यादिकमपि वाक्यं योग्यं स्यादिति, तदपि न युक्तम्; यावन्नीलत्वावच्छिन्नाधेयतायाः पृथिव्यनिरूपितत्वात्, नीलत्वाद्यवच्छिन्नाधेयत्वस्यैव पृथिवीनिरूपितत्वेन यावन्नीलेषु दृष्टान्ते बोधात्, दार्ष्टान्तिके तादृशप्रत्ययादर्शनेन रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वावच्छिन्नाधेयताबोध्यं[1] प्रत्येव पृथिव्यां रूपं नेत्यादिवाक्ये[2] साकांक्षत्वस्य कल्पनात्[3]। **सिद्धत्वादिति।** तथाच सामान्यरूपेणात्यन्ताभावे समयविशेषावच्छिन्नवृत्तिके न विवादः; नञः स्वसमभिव्याहृतपदार्थतावच्छेदकरूपेणात्यन्ताभावबोधकत्वस्य व्युत्पन्नत्वेन नीरूपमित्यादिवाक्यस्य तदावश्यकत्वात्, अन्यथा निर्घटं सघटमित्याद्यापत्तेः। एवं च सामान्यरूपेण विशेषस्य प्रागभावादिः समया[4]वच्छिन्नत्वेनेह कपाले इदानीं घटो नास्तीत्यादौ विषय इति यत्परेणोक्तं तदपास्तमिति भावः। **ग्रहे** निरूपकत्वग्रहे। **अनभ्युपगमादिति।** न चोक्तप्रतियोगिताकत्वान्यव्यासज्यवृत्तिप्रत्य-

---

1 बोधं -ग. 2 वाक्यस्य–ग. 3 साकाङ्क्षत्वकल्पनात्–ग. 4 समवाया–ग.

नचैवमतिलाघवात् क्लृप्तानामधिकरणानामेवाभावधीहेतुत्वमस्तु, किं विशेषाभावैरपीति—वाच्यम्; अस्माकमिष्टापत्तेः, घटाभावो नेत्यादावतिरिक्ताभावस्य त्वयाप्यनभ्युपगमेन भावस्याप्यभावत्वप्रकारकप्रमाहेतुत्वस्योभयवादिसिद्धत्वात्। यदपि कश्चिदाह—प्रतियोगितावच्छेदकभेदस्याभावभेदनियामकत्वाद्विशेषाभावान्यसामान्याभावसिद्धिः; अन्यथा अभावभेदासिद्धेः, प्रतियोगिभेदस्याभावभेदकत्वे एकघटप्रतियोगिकस्य प्रागभावादिचतुष्टयस्याभेदप्रसङ्गात्, अवच्छेदकभेदात्तु तद्भेदे न कोऽपि दोषः; क्वचित्तादात्म्यस्य क्वचित्संसर्गस्य क्वचित्पूर्वापरकालीनतद्घटत्वादेश्च भेदादिति, तन्न; संसर्गप्रतियोगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्वचत्वात्, तादात्म्यादेश्च प्रतियोगितावच्छेदकत्वे मानाभावात्। भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्माध्यासादेव। अवच्छेदकभेदस्याभावभेदनियामकत्वं

क्षत्वेन कार्यत्वे गौरवमिति—वाच्यम्; अनन्तसामान्याभावकल्पनापेक्षया प्रतियोगितानिरूपकत्वान्यत्वनिवेशस्यैव लघुत्वात्, व्यासज्यवृत्तिकत्वस्यानुगतस्य दुर्वचत्वेन शक्तिविशेषस्यैवावच्छेदककोटौ निवेशेनोक्तान्यत्वानिवेशाच्च। **संसर्गस्य**—संयोगादेः। **तद्घटत्वेति**। तद्व्यक्तित्वेत्यर्थः। तत्परिचायकमाह—**पूर्वापरकालीनेति**। **साधारणस्येति**। विशेषणस्य न्यूनाधिकावृत्तेर्नावच्छेदकत्वम्; संसर्गस्य तु तादृशस्यापि तदिति वैलक्षण्यात्तयोर्भेद इति भावः। **तादात्म्यादेश्चेति**। तादात्म्यं भेदस्य तत्तद्व्यक्तित्वं ध्वंसादेः प्रतियोगितायां नावच्छेदकम्; मानाभावात्, संयोगादिकमपि नावच्छेदकम्; संयोगेन घटो नास्तीत्यादौ संयोगाद्यभावभानस्योक्तत्वात्। एवं प्रतियोगिविशेषणमपि नावच्छेदकम्;

लिङ्गविधया तज्ज्ञापकत्वमेव वाच्यम्; न तु तज्जनकत्वम्, तच्च न; विपक्षबाधकतर्काभावेन सामानाधिकरण्याभावेन च व्याप्तेरेवासिद्धेः। अत एव तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वव्याप्यमित्यपि निरस्तम्। एवं चावृत्तीनां गगनादीनां समनियतानां वान्येषां धर्माणामेक एवात्यन्ताभावः; युगपद्विनष्टानामुत्पन्नानां वा समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वा; व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकः, तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैः सर्वैश्च समानाधिकरणैः सर्वधैरेवावच्छिद्यन्ताम्, आकाशाभाव एव वा तथास्ताम्; एकेनैवोपपत्तावभावभेदकल्पने मानाभावात्। न चैवमेक एव जगतीतले भवत्वभावः, स एव तत्तदवच्छेदकदेशकालादिभेदेन तत्तद्व्यवहारभेदं जनयिष्यतीति किमधिककल्पनयेति—वाच्यम्; उपपद्यते चेदस्तु। प्रकृते तु न बाधकं किंचित्। अत एव वैशेषिकाणां स्वाभ्युपगतकालपदार्थस्यैव सर्वव्यवहारहेतुत्वोपपत्तौ

प्रतियोगिताविशेषसंबन्धेन मण्यादिमदभावादेः कारणत्वादिसंभवादिति भावः। **सामानाधिकरण्याभावेनेति**। यत्र यत्रावच्छेदकभेदः तत्राभावभेद इत्यत्राभावे व्यभिचारात्, यत्र यत्रैकावच्छेदकभिन्नान्यावच्छेदकत्वं तत्रैकाभावभिन्नापराभावत्वमिति वाच्यम्; तथाच साध्यहेत्वोरसामानाधिकरण्यमिति भावः। **बाधके**—मूलाग्रादिरूपावच्छेदकभेदादिरूपे। **एक एवेति**। अभावांशे प्रतीतेरनुगताकारत्वायेदम्, तदनपेक्षायां तु तत्तदधिकरणेष्वेवाभावत्वं पूर्वोक्तं युक्तम्। **उपपद्यते चेदिति**। रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्यावच्छेदकता बाधा-

न पदार्थान्तरसिद्धिरित्यद्वैतवादिनो वदन्ति। तदेवं 'अहमज्ञ' इति ज्ञानस्याभावज्ञानसामग्रीविलक्षणसामग्रीजन्यत्वादभावविलक्षणविषयत्वं सिद्धम्॥

एवं 'त्वदुक्तमर्थं न जानामी' ति प्रत्यक्षस्यापि। ननु—साक्षात्त्वदुक्तार्थविषयं प्रमाणज्ञानं मयि नास्तीत्येतद्विषयकमुदाहृतज्ञानम्। तच्च न साक्षादर्थविषयम्; प्रमाणज्ञानावच्छेदकतयार्थस्य भानात्, अतो न व्याघात इति चेन्न; साक्षात्त्वदुक्तार्थमवेत्य हि तदभावो ग्राह्यः। तज्ज्ञानं च न साक्षिणा; स्वस्मिंस्तादृक्प्रमाणज्ञानाभावात्, अन्यनिष्ठं तु शब्दादिना ग्राह्यम्। शब्दादिश्च त्वदुक्तार्थं बोधयन्नेव तद्विषयत्वं ज्ञाने बोधयेत्। तथाच प्रथमतस्त्वदुक्तार्थविषयकं साक्षादेव

दा[1]ववश्यं कल्प्या; तथाच किमपराद्धं वाय्वादिमात्रवृत्त्यभावे[2]। नच—तस्यातिरिक्तसंबन्धादिकल्पने गौरवमिति—वाच्यम्; तस्यामपि तस्य तुल्यत्वादिति भावः। सिद्धिः तात्त्विकत्वम्। कालस्य तात्त्विकत्वेन सर्वदृश्यसंबन्धित्वेन च पराभ्युपगतस्य (पराभ्युपगत) ज्ञानस्थानीयज्ञेयानां प्रकार[3]रूपतास्वीकारेणोपपत्त्या स्थिरतात्त्विकज्ञेयपदार्थकल्पने मानाभाव इति भावः। साक्षात्त्वदुक्तार्थविषयमिति। स्वविषयज्ञानं प्रत्यविशेषणीभूतः त्वदुक्तार्थो विषयितासंबन्धेन यत्र ज्ञाने तदित्यर्थः। तदभावः उक्तज्ञानाभावः। तज्ज्ञानं उक्तज्ञानस्य ज्ञानं अर्थम्। त्वदुक्तार्थं बोधयन्निति। त्वदुक्तार्थज्ञानवानयमित्यादिवाक्यजन्यबोधोऽर्थस्त्वत्त्वदुक्त इत्यवान्तरवाक्यार्थबोधपूर्वको वाच्यः; अन्यथा तस्य विशिष्टवैशिष्ट्यबोधत्वा[4]संभवात्। न च—भावरूपाज्ञानप्रत्यक्षस्येवोक्तज्ञानाभावप्रत्यक्षस्यापि 'विशेष्ये विशेषण'मित्यादिरीत्या वाच्यत्वात्तन्मूलं शाब्दज्ञानमपि

[1] वाय्वादा—ग. [2] भावेन—ग. [3] प्रकाश—ग. [4] बोधकत्वा—ग.

**ज्ञानमागतमिति तन्निषेधे न कुतो व्याघातः? अत एव विशेषस्य स्वरूपतो ज्ञानेऽपि विशेषप्रकारकज्ञानाभावो न व्याहत इत्यपास्तम्, करतलामलकज्ञाने स्वविषयव्यावर्तकधर्मविषयत्वं प्रसिद्धमिह निषिध्यत इत्यपि न; त्वदुक्तत्वस्यापि मदुक्ताद्व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्मविषयत्वस्य निषेद्धुमशक्यत्वात्। नन्ववच्छेदकतया विशेषज्ञाने जातेऽपि न व्याहतिः। तथा हि—न हि विशेषज्ञानाभावस्त्वदुक्तार्थविषयकज्ञानाभावो वात्र प्रतीयते; किंतु त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानाभावः, तत्र च त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिज्ञानेऽपि तादृक्प्रकारकतद्विशेष्यकज्ञानाभावसंभवः; अस्य ज्ञानस्य ज्ञाने विशेष्ये विशेषप्रकारकत्वप्रकारकत्वात्, यत्रापि त्वदुक्तविशेषं न जानामीत्यभिलापः, तत्राप्येवमेव व्याहत्यभावः कथं-**

---

समूहालम्बनप्रत्येकपदार्थोपस्थित्या तथैवास्त्विति—वाच्यम्; अभावप्रत्यक्षस्य तद्रीत्या केनाप्यस्वीकारात्। न च—त्वदुक्तार्थप्रमात्वादिना स्मरणात्तेन रूपेणाभावप्रत्यक्षमिति—वाच्यम्; त्वदुक्तार्थत्वस्याननुभवे तद्विशिष्टप्रमात्वेन पूर्वानुभवायोगात्। अत एव त्वदुक्तार्थस्मृत्या त्वदुक्तार्थप्रमात्वेनानुमानादेरप्यसंभवः; त्वदुक्तार्थे पूर्वाननुभूते तदसंभवात्। तज्जन्मान्तरीयसंस्कारादिकल्पनापेक्षयोक्तप्रत्यक्षस्य भावरूपाज्ञानविषयकत्वस्यैव युक्तत्वादिति भावः। **अत एव**—विशेषप्रकारकज्ञाने ज्ञेये विशेषप्रकारकज्ञानस्यावश्यकत्वादेव। **स्वरूपतो** विशेष्यतया। **अशक्यत्वादिति।** त्वदुक्तान्यव्यावर्तकनिवेशेऽपि त्वदुक्तं नीलघटादिकं न जानामीत्यत्र नीलत्वघटत्वादिरूपव्यावर्तकविषयकत्वेन विरोधात्, तदन्यत्वस्यापि निवेशे नीलघटत्वादिना निश्चयस्थलेऽपि नीलघटादि न जानामीति स्यात्, इष्टापत्तावनुभवविरोधात्, स्वपदार्थाननुगमेन स्वविषयव्यावर्तकधर्माज्ञानकाले प्रतियोग्यप्रसिद्धेश्चाशक्यत्वमिति भावः।

**चित्सुखेयः । न च—यत्रोक्तप्रतियोग्यप्रसिद्धिः, तत्र कथमभावप्रतीतिरिति—वाच्यम्; समवेतवाच्यत्वं नास्तीत्यत्रेव विशेष्ये विशेषणाभावविषयत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वोपपत्तेरिति—चेन्न; अनुभवविरोधात्, विशेषज्ञानाभावस्य त्वदुक्तार्थज्ञानाभावस्य वा अनभ्युपगमे तद्विषयज्ञानसत्त्वेन तद्व्यवहारापत्तेश्च । न चैवं दृश्यते । स्वतः प्रामाण्यमते तु तत्प्रकारकत्वे तद्विशेष्यकत्वे च गृह्यमाणे तद्वत्त्वग्रहणस्यावश्यकतया तदंशे तत्प्रकारकतद्विशेष्यकत्वस्य तादृशप्रतियोगि-**

---

**कथंचिदिति ।** विशेषनिष्ठाज्ञानावच्छिन्न[1]विषयताकज्ञानाभावो विषयः, प्रतियोगिज्ञाने तु विशेषत्वेन विशेषभानमिति भावः । **विशेष्ये विशेषणाभावेति ।** त्वदुक्तार्थज्ञाने विशेषप्रकारकत्वस्य विशेषप्रकारकज्ञानादौ त्वदुक्तार्थविषयकत्वादेर्वाऽभावेत्यर्थः । **अनुभवविरोधात् ।** त्वदुक्तार्थविशेषविशेषिताज्ञान[2]विरोधित्वेनानुभवस्यापलापापत्तेः । **अनभ्युपगम इति ।** त्वदुक्तार्थं न जानामीति धीकाल इत्यादिः । **दृश्यत इति ।** तादृशाभावस्याभ्युपगमे तु प्रतियोग्यज्ञानादेव तव नोक्तानुभवः; मम तु निर्विघ्नः स इति शेषः । **तद्वत्त्वग्रहस्येति ।** तदंश इत्यग्रेऽन्वयः । त्वदुक्तार्थांशे विशेषप्रकारकग्रहस्येत्यर्थः । तत्प्रकारकतद्विशेष्यकत्वस्य विशेषप्रकारतानिरूपितस्य त्वदुक्तार्थविशेष्यत्वस्य प्रतियोगिज्ञाने उक्तविशेष्यत्ववत्त्वेन ज्ञानस्य ज्ञाने संभवादिति । न च—विद्यमान एव ज्ञाने प्रमात्वस्य साक्षिणा मन्मते ग्रहादविद्यमानज्ञानस्योक्तविशेष्यत्ववत्त्वेन ग्रहे न तदंशे तत्प्रकारक इति—वाच्यम्; अविद्यमानस्याप्युक्तविशेषत्ववत्त्वेनेव प्रमात्वेनापि पूर्वानुभवसत्त्वे स्मृतिसंभवात्, विशेष्यविशेषणयोरुपस्थितिसत्त्वे विशिष्टबुद्धेः

---

1 निष्ठानवच्छिन्न—ग. 2 विशेषितज्ञान—ग.

ज्ञाने संभवात् स्पष्ट एव व्याघातः, भावरूपाज्ञानपक्षे तु सर्वस्यापि साक्षिवेद्यतया न व्याघात इत्युक्तम् । तदेवं 'त्वदुक्तमर्थं न जानामी'ति प्रत्यक्षं भावरूपज्ञानविषयमिति सिद्धम् ॥

एवं 'एतावन्तं कालं न किंचिदवेदिष'मिति परामर्शसिद्धं सौषुप्तं प्रत्यक्षमपि भावरूपाज्ञानविषयमेव । ननु—परामर्शः किमनुमानं, किं वा स्मरणम् । आद्ये ज्ञानाभाव एवानुमीयताम्, किं भावरूपाज्ञानेन ; तथाहि—संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमययोरन्तराळकालमनुमाय तत्कालमहं ज्ञानाभाववान्, अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, तुल्ययोगक्षेम आत्मादौ स्मर्यमाणेऽपि तद्वत्तया नियमेनास्मर्यमाणत्वाद्वेति प्रयोगसंभवात्, द्वितीये तु नास्त्युपपत्तिः; संस्कारासंभवात्, विनश्यदेव हि ज्ञानं संस्कारं जनयति ; विना व्यापारं व्यवहितकार्यजननाक्षमत्वात् । अविनश्यता तु

संभवात्. प्रमात्वाग्रहेऽपि तदंशे तत्प्रकारकत्वे बाधकाभावादिति भावः । परतः प्रामाण्यमते क्वचित्प्रामाण्यसंशयस्योपपत्तये प्रथमानुव्यवसायसामग्र्यादेः प्रामाण्यग्रहप्रतिबन्धकत्वकल्पनात्स्वतः प्रामाण्येत्युक्तम् । 'घटं जानामी'त्यत्रेव 'तदुक्तं[1] घटं न जानामी'त्यत्र स्वरूपतो घटत्वं भाति, घटश्च तेन रूपेण विशेषणम्, तथाच तेन रूपेण ज्ञानस्य कारण[2]स्यापेक्षायां त्वदुक्तार्थविशेषं न जानामीत्यत्रापि स्वरूपतो विशेषस्य भानात्स्वरूपतस्तज्ज्ञानस्यापेक्षायां च व्याघातो गूढ इति सूचयति—**स्पष्ट इति** । **तत्कालमहं** तत्कालावच्छिन्नोऽहम् । **तद्वत्तया** ज्ञानवत्तया । **नियमेन** सर्वदा । स्मर्यमाणेऽपीत्यन्तं 'यदि तत्कालमहं ज्ञानवान् स्यां तदा तद्वत्तया स्मर्यमाणः स्या' मित्यादितर्क-

[1] त्वदुक्तघटं न जानामीत्यत्रेव त्वदुक्तं—ग. [2] तज्ज्ञानकारण—ग.

तेन स्वयमेव तत्कार्यस्य जनयितुं शक्यत्वात् किमिति संस्कारो जन्येत? न हि संस्कारोऽपि प्रत्यक्षः, येन कार्यान्यथानुपपत्तिमन्तरेणाप्यभ्युपेयते; सौषुप्तं चानाद्यज्ञानोपरक्तं साक्षिचैतन्यरूपं ज्ञानं स्वतो वा उपाधितो वा न विनश्यतीति संस्कारं कथं जनयेत्? तदभावात्कथं स्मर्येत? अस्मर्यमाणं वा कथं प्रमाणत्वेनोदाह्रियेतेति—चेत्, न तावदनुमानं तत्र संभवति; हेतोः पक्षविशेषणस्य चाज्ञानात्। न हि ज्ञानाभावमन्तरेणावस्थायां विशेषो वक्तुं शक्यः। ज्ञानसामग्रीविरहश्च ज्ञानाभावानुमेयत्वेनान्योन्याश्रयग्रस्तः। न चेदानीन्तनेनेन्द्रियप्रसादेन पूर्वकालीनं तदुपरममनुमाय सामग्रीविरहानुमानम्; इन्द्रियप्रसादस्य सुखानुभवहेतुकस्य तदुपरमहेतुकत्वासिद्धेः। निय-

---

ज्ञापनाय, न तु हेतौ प्रविष्टम्। किमितीति। स्मृतेः स्मृतित्वादेवानुभवेन स्वयमेव[1] जनयितुमशक्यत्वात् संस्कारः स्मृत्युपधायकतया सार्थकः, ज्ञापनस्य[2] नाशे सति तु स एव संस्कारो लाघवादिति नेदं पुरोक्तं[3] युक्तमिति ध्येयम्। स्मर्येतेति। अज्ञानमित्यादिः। वक्तुं शक्य इति। नच—प्राज्ञपरिष्वङ्गरूपा सुषुप्तिः श्रुत्यैव बोध्यत इति वाच्यम्; सौषुप्तानुभवसिद्धस्यैव श्रुत्याऽनुवादात्, श्रुत्यप्रतिसन्धानकालेऽपि न किंचिदवेदिषमिति प्रत्ययाच्च। सुखानुभवेति। सुषुप्तावपि स्वरूपसुखानुभवोऽस्तीति स एव प्रसादहेतुः। न च—स्वरूपसुखानुभवस्य जागरेऽपि सत्त्वादिन्द्रियोपरमकालीनस्यैव तस्य प्रसादहेतुत्वमिति—वाच्यम्; स्वरूपसुखाकारवृत्तेः प्रसादहेतोः समाध्युत्तरकाले चित्तावैयग्र्यकाले च सत्त्वेऽपि प्रसादस्यापि तदा सत्त्वादुक्तविशेषणादानात्सुखानुभवोत्तरकालीनत्वस्यैव प्रसादत्वेन तत्रेन्द्रियोपरमस्याप्रयो-

[1] स्मृतित्वेनानुभवस्य स्वयमेव–ग. [2] ज्ञानस्य–ग. [3] परोक्तं–ग.

**मेनास्मर्यमाणत्वं च यथाश्रुतं वा सुषुप्तिकालावच्छेदेनेति वा। आद्ये असिद्धिः। द्वितीये तूपेक्षणीयज्ञानाभावो न सिद्ध्येत्,**

जकत्वात्, तन्मात्रस्य प्रयोजकत्वे तूक्तकाले प्रसादो न स्यात्, मरणकाले च स्यात्। न च—स्वरूपसुखाकारवृत्ताावितरवृत्त्यभावस्य हेतुत्वात्सैव तत्रानुमापिकेति—वाच्यम्; तस्या जागरे एकाग्रमनोवृत्तिसत्त्वेऽपि सत्त्वात्। एवं (च) वैषयिकसुखानुभवादेवं[1] प्रसाद इति भ्रान्तिरिति भावः। **सुषुप्तिकालावच्छेदेनेति।** नियमेत्याद्यनुषज्यते, सुषुप्तिकालावच्छिन्नज्ञानत्वेना[2]स्मर्यमाणत्वमित्यर्थः। **असिद्धिरिति।** यद्यपि सुषुप्तिकालावच्छिन्नोऽहं पक्षः, तथापि तस्य ज्ञानवत्त्वेन भ्रान्त्या स्मर्यमाणत्वमस्त्येवेति भावः। **द्वितीयेत्विति** तु शब्दादसिद्धिर्व्यवच्छिद्यते; सुषुप्तिमात्रस्याव्यावर्तकतया पक्षीभूताहमर्थसुषुप्तेरेव निवेश्यतया पक्षस्य तदीयसुषुप्तिकालीनज्ञानवत्त्वेनानुभवितुमशक्यतया उक्तज्ञानवत्त्वेनाहार्यज्ञानस्यानुभवत्वस्वीकारेऽपि तस्याकारणतया च पुरुषान्तरस्यैव तेन रूपेण स्मर्यमाणत्वात्। नचैवं—सुषुप्तिकालीनाहमर्थस्यैव पक्षतया तस्य ज्ञानवत्त्वेनानुभवासंभवादाद्यपक्षेऽपि नासिद्धिरिति—वाच्यम्; सुषुप्तिकालस्य तद्व्यक्तित्वेनैव पक्षे निवेशात्। तथाच सुषुप्तेर्ज्ञानसामान्याभावरूपतया स्वीयज्ञानाभावकालीनाहमर्थो ज्ञानवानिति ज्ञानस्याहार्यत्वेऽपि तद्व्यक्तिमानहमर्थो ज्ञानवानिति धीरनाहार्यैव। हेतावपि तथा निवेशे द्वितीयेऽप्यसिद्धिर्बोध्या। नच—जाग्रत्कालीनेऽहमर्थे ज्ञानाभावासत्त्वाद्व्यभिचारोऽपि कुतो नोक्त इति—वाच्यम्; स्वसुषुप्तिकालीनज्ञानप्रतियोगिकाभावस्य साध्यत्वामिति भावात्। **उपेक्षणीयेति।** यः स्वकीयसुषुप्त्यादिरूपयत्कालीनयाद्विषयकज्ञानवत्त्वेन न स्मर्यते, स तत्कालीनतद्विषयकज्ञानप्रतियोगिकाभावस्याश्रयः, यथाऽहं

[1] देव–ग. [2] ज्ञानवत्त्वेना–ग.

तत्रैव व्यभिचारश्च । न च—तर्हि प्रातरनुभूतचत्वरे गजज्ञानाभावज्ञानं कथमिति—वाच्यम्; ज्ञानानुपलब्ध्यैवेत्यवेहि । अनुपलब्धिज्ञानं च भावरूपाज्ञानेन लिङ्गेन । तथाहि—पूर्वकालेऽहम्, गजज्ञानाभाववान्, गजाज्ञानवत्त्वात्, यन्नैवं तन्नैवम्, यथा गजज्ञानवानहमिति, एवं सर्वत्राज्ञानस्य ज्ञानाभावव्याप्यत्वेन तदनुमापकत्वम् । न च—सुषुप्तिकाले ज्ञानाभावानुमानार्थं भावरूपाज्ञानमिव रागाभावानुमानार्थं द्वेषोऽपि स्वीकरणीयः, तद्विरोधिपदार्थानुभवं विना तदभावानुमानायोगादिति—वाच्यम्; भावरूपाज्ञानेन ज्ञानाभावेन वा रागाभावानुमानसंभवात्, तस्यापि तद्विरोधित्वात् । अथापरोक्षतो ज्ञातेऽज्ञानाभावात्कथं परोक्षज्ञानाभावानुमानम्? सामग्रीविरहादिनेति गृहाण । न चात्राप्यन्योन्याश्रयः; शब्दादीनां योग्यानां योग्यानुपलब्ध्याभावनिश्चयेन परोक्षज्ञानविरहज्ञानं विनैव सामग्रीविरहनिश्चयात्, सुषुप्तिकाले चेन्द्रियादिघटितसामग्रीविरहस्य फलाभावं विना ज्ञातुमशक्यत्वेनान्योन्याश्रयोक्तेः । न च स्मरणपक्षे संस्कारानुपपत्तिः; अज्ञानस्याज्ञानवृत्तिप्रतिबिम्बितसाक्षिभास्यत्वेन वृत्तिनाशादेव संस्कारोपपत्तेः, अज्ञानवृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थत्वात् । न च—जागरेऽप्य-

---

प्रातर्घटज्ञानवत्त्वेनास्मृतः प्रातर्घटज्ञानाभाववानिति सामान्यतो व्याप्तिर्वाच्या; अन्यथा दृष्टान्ताभावात्, तत्र चापेक्षणीयज्ञानस्यैव निवेशे उपेक्षणीयज्ञानस्याभावो न सिद्ध्येदित्यर्थः । ज्ञानसामान्यनिवेशेऽप्याह-तत्रैवेति । उपेक्षणीयज्ञानघटित इत्यर्थः । उपेक्षणीयज्ञानवत्त्वेनास्मृतेऽपि तादृशाज्ञाना[1]भावस्यासत्त्वाद्व्यभिचार इति भावः । **फलाभाव-**

---

[1] तादृशज्ञाना—**ग**

ज्ञानस्य वृत्तिवेद्यत्वे वृत्त्यभावदशायां संशयाद्यापत्तिरिति—वाच्यम्; अज्ञानविषयाज्ञानाभावेन तदयोगात्, संशयादेस्तत्कारणीभूताज्ञानसमानविषयत्वनियमात्। भावत्वादिना संशये त्विष्टापत्तिरेव; भावत्वादेः साक्षिवेद्यत्वाभावेनाज्ञानविषयत्वात्, अज्ञानस्य स्वरूपेणैव साक्षिवेद्यत्वात्। ननु—तदा ज्ञानाभावोऽपि स्वरूपेणैव भासताम्, सप्रतियोगिकत्वेनाभावज्ञान एव प्रतियोगिज्ञानस्य हेतुत्वात्, अन्यथा 'प्रमेय' मिति ज्ञानेऽप्यभावो न भासेतेति—चेन्न; साक्षिणा तावन्न स्वरूपेणाभावावगाहनम्; तस्य साक्षात्साक्ष्यवेद्यत्वात्। नापि शब्दादिना; तदानीं तेषामभावात्। नाप्यनुपलब्ध्या; तस्याः प्रतियोगिज्ञाननिरपेक्षाया अजनकत्वात्। नच—दृष्टाभावान्तरविलक्षणस्वभाव एवायमभाव इति स्वरूपेण साक्षिवेद्योऽस्त्विति—वाच्यम्; निर्विकल्पकबुद्धिवेद्यत्वे भावत्वस्यैवौचित्यात्, अन्यथा परिभाषामात्रापत्तेः। ननु ज्ञानविरोधित्वादेस्तदाननुभवेन 'नावेदिष' मिति तेनाकारेण कथं परामर्शः? न; द्रष्टुरन्तःकरणतादात्म्येनाहमुल्लेखस्येव ज्ञानविरोधित्वादेरपि तदैवानुभूयमानत्वेन तदंशे परामर्शत्वानभ्युपगमात्, सुषुप्तिकालीनस्य

---

मिति। हेतुमिति शेषः। अजनकत्वादिति। अन्यथा तया नेत्येवाकारकज्ञानस्यापत्तिरिति[1] भावः। तदैवेति। सविकल्पकवृत्तेरहङ्कारजन्यत्वेन ज्ञानविरोधित्वसविषयकत्वादिप्रकारकाविद्यावृत्तिर्न सुषुप्तौ जायते। अत एवोक्तं सिद्धान्तबिन्दौ—'अहङ्काराभावाच्च न विशिष्टवृत्ति'रिति। अज्ञानस्वरूपमात्रांशे स्मृत्यैव स्मृतित्वानुभवोपपत्तौ ज्ञानविरोधित्वाद्यंशे स्मृतितन्मूलवृत्तिकल्पने मानाभावेनान्वयव्यतिरेका-

---

[1] स्याप्यापत्तिरिति—ग.

द्रष्टुरेव परामृष्टत्वात् । नन्वज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्याज्ञानानुभवस्य जाग्रत्यपि विद्यमानत्वात्कथमज्ञानस्मरणम्? न हि धारावाहिकेष्वनुभवेषु तुल्यसामग्रीकेषु स्मरणव्यवहारः; तथाच धारावाहिकोऽज्ञानानुभव इति वक्तव्यम्, न तु परामर्श इति, सत्यम्; सुषुप्त्याख्यायास्तामस्या अज्ञानवृत्तेर्नाशेन जाग्रति तद्विशिष्टाज्ञानस्य साक्षिणानुभूयमानत्वाभावेन संस्कारजन्याविद्यावृत्त्यैव सुषुप्तिविशिष्टाज्ञानभानात्परामर्शत्वोपपत्तेः, केवलाज्ञानांशे तु तुल्यसामग्रीकत्वाद्धारावाहिकत्वमेव; अत एव कार्योपाधिविनाशसंस्कृतमज्ञानमात्रमेव प्रलयोपमं सुषुप्तिरित्य-

---

भ्यामहङ्कारस्य सप्रकारकवृत्तिसामान्यहेतुता । वस्तुतोऽहङ्कारस्यैव ज्ञानविरोधित्वसविषयकत्वादिरूपाणामज्ञानपरिणामानां सुषुप्तौ संस्कारतापन्नत्वेन साक्षिभास्यत्वायोग्यत्वादेव तदा सप्रकारकवृत्त्यभाव इति नोक्तहेतुतापीति ध्येयम् । **परामृष्टत्वात्** स्मर्तृत्वात् । प्रमां प्रत्येव मनसः परिणामित्वेनाविद्यावृत्तिरूपस्मृतेरविद्यामात्रपरिणामित्वेनाविद्योपहितस्य साक्षिण एव तदाश्रयत्वमिति भावः । **अविद्यावृत्त्यैवेति** । नच—जागरे बाधाभावादागन्तुकदोषाजन्यत्वाच्च सुषुप्तिः स्मृतिर्वा नाविद्यावृत्तिरिति—वाच्यम्; अविद्यावृत्तिसामान्यस्य जागरे बाध्यत्वाद्यनियमात् । ब्रह्मज्ञानान्यावाध्यासु देहात्मैक्यादिगोचरासु चाविद्यावृत्तिषु व्यभिचारात्, सुषुप्तिपूर्वस्वप्नादेरेवागन्तुकदोषत्वसंभवाच्च । **सुषुप्तिविशिष्टाज्ञानेति** । अज्ञानस्य विशिष्टस्वरूपमात्रत्यर्थः । **भानात्** विषयीकरणात् । **केवलाज्ञानेति**—विशिष्टस्वरूपान्याज्ञानस्वरूपेत्यर्थः । एकैव निर्विकल्पकवृत्तिर्विशिष्टकेवलाज्ञानस्वरूपद्वयविषयिका विशिष्टांशे स्मृतिः केवलांशे त्वनुभव इति भावः । **विनाशसंस्कृतं**—विनाशरूपसूक्ष्मावस्थायुक्तम् । अज्ञानमात्रं तु न

भिप्रेत्य वार्तिककारपादैः सौषुप्ताज्ञानस्मरणमपाकृतम् । तथा चोक्तम्—

'न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥
न भूतकालस्पृक्प्रत्यक् न चागामिस्पृगीक्षते ।
स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन स स्मृतः' ॥

इत्याद्यव्याकृतप्रक्रियायाम् । विवरणकारैस्तु—'अभावप्रत्यया-

---

वृत्तिः; सुषुप्तिकालमात्रगताया एकस्या वृत्तेः स्वीकार इति भावः । **सुषुप्तिगेति**—सुषुप्तिकालमात्रगतेत्यर्थः । एकैवाविद्यावृत्तिरविद्याविषयिणी सुषुप्त्यादिकालस्थायिनी[1] न तु सुषुप्तिकालमात्रगता काचन वृत्तिः; यन्नाशात्स्मरणमित्यर्थः । अथवा प्रलये सुषुप्तौ च न वृत्तिरित्याशयेन प्रलयोपममित्युक्तत्वाद्विज्ञानं जन्यज्ञानं सुषुप्तिगं नेत्यर्थः । **कालाद्यव्यवधानत्वात्** सुषुप्तिजाग्रत्कालयोः संस्कारकालव्यवधानाभावात् । ननु—सौषुप्तवृत्तिनाशाभावेऽपि सुखादाविव विषयनाशाद्विषयावच्छिन्नज्ञाननाशात्स्मृतिरस्तु, तत्राह—**न हीति । आत्मस्थं** अज्ञानम् । **अतीतभाक्** अतीतताभाक् । हेतुमाह—**न भूतेति । प्रत्यक्** अज्ञानोपहितसाक्षी । **तेन** उक्तहेतुना । **विकल्पः** न तु स्मृतिरूपो निर्विकल्पः । सः नावेदिषमिति प्रत्ययो विकल्पतां घटयति, यतस्तस्य प्रत्ययस्य **स्वार्थदेशः** स्वार्थाधिकरणकः **परार्थोऽर्थः** विषयः अज्ञानरूपस्वविषयाधिकरणको ज्ञानविरोधित्वादिरूपः परार्थोऽज्ञानभिन्नार्थो विषय इति यावत् । अथवा विकल्पो भ्रमो यतः स्वार्थज्ञाना[2]दिनिष्ठतया परार्थः स्मृतिविषयतायोग्योऽतीतकालो विषय इत्यर्थः ॥

---

[1] कालावस्थायिनी-ग [2] स्वार्थाज्ञाना-ग.

**लम्बना वृत्तिर्निद्रे' ति योगसूत्रानुसारेण तमोगुणात्मकावरणमात्रालम्बना काचिद्वृत्तिः सुषुप्तिरित्यभिप्रेत्य तदुपरक्तचैतन्यस्य तन्नाशेनैव नाशात्तत्कालीनाज्ञानानुभवजनितसंस्कारवशेन 'न**

---

अभावपदं कार्यसामान्यध्वंसरूपसंस्कारोपहितार्थकम्, प्रत्ययपदं च कारणपरम्। प्रतियन्ति लीयन्ते कार्याण्यत्रेति व्युत्पत्तेः; तथाच सर्वकार्यसंस्कारोपहितं यत्तमोगुणरूपं स्वपरिणामिकारणं तद्विषयिका वृत्तिरिति सूत्रपदार्थः। अत एव स्वपितिनिरुक्तोपपादने तमोगुणोद्रेक इतीक्षत्यधिकरणे भामत्यां सांख्यमते उक्तं प्रमाणविपर्ययविकल्पस्मृतिरूपपूर्वसूत्रोक्तवृत्त्यन्तराभावकारणतमोगुणालम्बनेति भामतीव्याख्यानमविरुद्धमित्याशयेनाह — **तमोगुणात्मककारणमात्रालम्बनेति।** स्वप्ने तु नोक्तवृत्तिः, मिथ्यानाडीमनःसंयोगमादाय तत्र निद्राव्यवहारः 'गाढमूढोऽहमास' मिति तमोगुणस्यैव स्मरणात्तद्विषयिकैव सा वृत्तिः। यत्त्वभावपदं प्रमासामान्याभावार्थकम्, प्रत्ययपदं साक्ष्यर्थकम्, तथाच प्रमाभावाकारा साक्ष्याकारा च वृत्तिरित्यर्थ इति,[1] तन्न; तादृशवृत्तेर्जागरेऽपि संभवात्। अथाभावमात्राकारेति वाच्यम्, तदपि न; साक्षिसुखाकारत्वस्यापि तत्र स्वीकारात्। अथाभावांशे सप्रतियोगिकत्वाविषयिकेति वाच्यम्, तदपि न; अभावस्वरूपस्य निर्विकल्पानुपपत्तेः, अन्यथा अभावत्वव्याघातात्। अथ प्रत्ययपदेनाभावगतमिदंत्वादिधर्मं विवक्षित्वेदंत्वादिना प्रमाभावविषयिका वृत्तिर्वाच्या, तदपि न; निर्विकल्पकत्वव्याघातात्। न हि सुषुप्तौ सविकल्पं[2] केनाप्यनुभूयते; तदा सर्वस्य कार्यस्य लयेनाभावतद्धर्मादेः संस्कारतापन्नत्वेन साक्षिवेद्यत्वासंभवात्, अन्यथा जीवेशभेदादेरपि तदानीमनुभवापातात्। अभेदस्वरूपमात्रस्यानादित्वेऽपि सप्रतियोगिकत्वा-

---

1 वृत्तिरिति–ग.    2 सविकल्पकं -ग.

**किंचिदवेदिष' मिति स्मरणमभ्युपेतमिति वार्तिकविवरणयोरप्यविरोधः । अत एवोक्तं वार्तिककारैरुषस्तिब्राह्मणे—**

**न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते ।**
**नावेदिषं सुषुप्तोऽहमिति धीः किं बलाद्भवेत् ॥**

---

दीनामविद्यापरिणामित्वाङ्गीकारात् सविकल्पवृत्तावहङ्कारस्य हेतुत्वाद्वा दृष्टिसृष्टिपक्षे भेदादेरप्यहङ्कारपरिणामत्वाच्च नोक्तानुभव इति तु प्रकृतेऽपि तुल्यमित्याशयेन मात्रपदमुक्तम् । तमोगुणस्वरूपमात्रगोचरत्वमेव सूत्रार्थतया वक्तुं युक्तमिति भावः ॥

**इति धीः** अज्ञानांशे स्मृतित्वेनानुभूयमाना धीः । **सुषुप्तेति** । धीरित्यन्वयः । सुषुप्तिस्वरूपसुखयोरित्यर्थः । तेन सुषुप्ते नावेदिषमित्याकारत्वे सविकल्पकत्वेऽपि न क्षतिः । उक्तधियोऽज्ञानांशेऽनुभवत्वं वक्तुं शक्यम्, न तु सुषुप्त्यंशे स्वरूपसुखांशे वा; न हि विक्षेपबाहुल्यकाले जागरे तदनुभवः संभवति । न च—कार्यसामान्यसंस्कारेणोपहिते चैतन्याज्ञाने स्वरूपसुखसुषुप्ती, तत्प्रकाशरूपचैतन्यस्योक्तसंस्कारनाशरूपजाग्रदवस्थायां नाशत्वस्वीकारात्तत एव तयोः स्मृतिरिति वाच्यम्; उक्तसंस्कारस्य तदुभयाविषयकत्वात्तदात्मकजाग्रदवस्थायास्तदुभयविषयकसंस्कारत्वासंभवात् । अथोक्तचैतन्यात्मकत्वस्यापि तस्यां स्वीकारात्तत्संभव इति चेन्न; चैतन्यवृत्तिसाधारणविषयत्वस्याभावादनुमित्यादिवृत्तिनाशरूपसंस्कारसाधारण्याय वृत्तिनिष्ठाकाररूपतदुभयविषयताशालिसंस्कारस्य स्मृतिहेतुत्वस्य क्लृप्तत्वात्तदुभयविषयकवृत्तेरावश्यकत्वात् । किंच चैतन्यस्वरूपस्यैव सुखत्वात् जाग्रदादिकालेऽपि तदनुभवप्रयुक्तनिरुपाधिकप्रेमदर्शनात् सुषुप्त्युत्तरमेव सुखमासमिति स्मरणमित्यत्र बीजाभावः, अतः सुखाकारसौषुप्तवृत्तिरावश्यकी; सैवा-

इत्यादि । अभिप्रायस्तु वर्णितः । एवंच साक्ष्यज्ञानसुखाकारास्तिस्रोऽविद्यावृत्तयः, सुषुप्त्याख्यैकैव वा वृत्तिरित्यन्यदेतत् । निर्विकल्पकस्यापि स्मरणजनकत्वम् । अहङ्कारोपरागकालीनत्वाभावेन तत्तानुल्लेख इत्यादि सर्वमुपपादितमस्माभिः सिद्धान्तबिन्दौ । तस्मात्सौषुप्तानुभवोऽपि भावरूपाज्ञानविषय इति सिद्धम् ॥

इत्यद्वैतसिद्धौ अज्ञानप्रत्यक्षत्वोपपत्तिः ॥

---

ज्ञानाकारा सुषुप्तिः, तत्सूक्ष्मावस्थारूपा नाशश्च तद्विषयकोऽपि [1]तत्स्मृतिहेतुः, वृत्तिसामान्यस्य स्वस्वविषयस्मृतिहेतुत्वना[2]प्रतियोगित्वकल्पनात् । ज्ञातत्वेनैव हि सर्वं स्मर्यते, तादृशवृत्तेस्तद्विषयीभूतवृत्त्यन्तरविषयत्वं वा कल्प्यत इति नानवस्था । तथाचैतादृशसुषुप्तौ स्वरूपसुखं चोक्तानुभवो न चेदभ्युपेयते, तदा नावेदिषमिति धीस्तदुभयविषयिका किंनिबन्धनेत्यनेन तदुभयविषयकत्वानुरोधेन सौषुप्तवृत्तिरावश्यकी । ततश्च तस्यामेवाज्ञानविषयकत्वं स्वीकृत्याज्ञानांशेऽप्यनुभूयमानं स्मृतित्वं सुषुप्तिसुखाकारस्मृतेर्नापलपितुं युक्तमित्युक्तमिति ध्येयम् ॥

**वर्णित इति** । विवरणस्य योऽभिप्राय उक्तः स एव न चेत्यादिवार्तिकस्यापीत्यर्थः । **जनकत्वमिति** । अदृष्टदशरथत्वादिविशिष्टे शक्तिग्रहाद्यनुरोधेन प्रमृष्टविशेषणिकाया आकाशादिपदजन्यायाश्च स्मृतेः स्वीकारादिति शेषः । **तत्तानुल्लेख इति** । तद्देशकालीनत्वरूपतत्तायाः सुषुप्तौ लयेनाहङ्कारकाल एवानुभवात्तत्कालीनानुभवजन्यस्मृतेरेव तद्विषयकत्वमिति भावः ॥

[1] तत्स्मृतिहेतु वृत्तिसामान्यस्य स्वस्वविषय स्मृतिहेतुः; वृत्ति—ग. [2] नाशक—ग.

# अथाज्ञानवादे अनुमानोपपत्तिः.

अनुमानमपि तत्र विवरणोक्तं प्रमाणम्। 'विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभाव' दिति। अत्र प्रमाणपदं प्रमाणवृत्तेरेव पक्षत्वेन सुखादिप्रमायां साक्षिचैतन्यरूपायामज्ञानानिवर्तिकायां बाधवारणाय। धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकायाः पक्षबहिर्भावाय विवादपदमिति विशेषणम्। विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः। परोक्षप्रमाया अप्यसत्त्वावरणरूपप्रमातृगताज्ञाननिवर्तकत्वान्न तदंशेऽपि बाधः। नन्विदमिति प्रमाणवृत्तेरज्ञानानिवर्तकत्वे अज्ञातज्ञापकत्वरूपप्रमात्वेन व्यवहारो न स्यात्, न; इदमाकारभ्रमसंशयादर्शनेन तद्गोचराज्ञानकल्पने मानाभावेन तत्र सुखादिज्ञानवद्यथार्थत्व-

---

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तनाशायाज्ञानाध्यक्षोपपादनम्॥

इति गुरुचन्द्रिकायामज्ञानप्रत्यक्षोपपादनम्॥

## अथाज्ञानवादे अनुमानोपपत्तिः.

**विशेषाकारप्रमाणेति।** इदंत्वान्यस्य प्रमेत्यर्थः। प्रमात्वं चेन्द्रियादिजन्यवृत्तिनिष्ठा जातिः। **असत्त्वावरणेति।** स्वविषयविषयकेत्यादिः। **यथार्थत्वेति।** व्यवहारकालाबाध्यविषयकत्वेत्यर्थः।

मात्रेण प्रमात्वव्यवहारोपपत्तेः। यदाहुः—

'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्यय' इति।

यदि तु भ्रमसंशयाजनकमपि तदाकारमज्ञानमनुभवबलादास्थीयेत, तर्हि सापि पक्षेऽन्तर्भवतु, प्रमाणवृत्तित्वावच्छेदेनैवाज्ञाननिवर्तकत्वानपायात्, तदा च विवादपदमिति विशेषणमनादेयम्। एतास्मिन् पक्षे भ्रमोपादानत्वयोग्यत्वमविद्यालक्षणं द्रष्टव्यम्; भ्रमोपादानत्वस्य धर्म्यंशज्ञाननिवर्त्याज्ञानेऽव्याप्तेरित्यवधेयम्। धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयत्वेनाज्ञातज्ञापकत्वमस्त्येव; कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्। अनात्माकारप्रमाणवृत्तीनां च तत्तदवच्छिन्नचैतन्यविषयत्वेन

---

**धर्म्यंशे**—इदंत्वांशे। **प्रकारे** इदंत्वान्यांशे। **भ्रमोपादानत्वस्य**—भ्रमोपधायकत्वस्य। **कालावच्छिन्नेति**। कालविशिष्टेत्यर्थः। न च—तत्तत्क्षणानामतीन्द्रियत्वात् स्थूलकालस्य च प्रथमज्ञानेन गृहीतत्वेन द्वितीयादिज्ञानानां तद्विषयकाज्ञाननिवर्तकत्वासंभव इति–वाच्यम्; स्वोत्पत्तिकालोत्पन्नस्थूलकालस्यैव तत्तज्ज्ञानग्राह्यत्वात्, क्षणानामतीन्द्रियत्वे मानाभावाच्च। न च—परोक्षापरोक्षयोर्घटादिज्ञानयोस्तुल्यविषयकत्वानुभवादपरोक्षे कालो[1] न विषय इति—वाच्यम्; परोक्षस्यापि तद्विषयकत्वस्य परिच्छिन्नत्वहेतूपपादनेऽस्माभिरुपपादितत्वात्। धारास्थले वृत्त्यैक्यस्वीकारे तु नोक्तशङ्कापि; प्रकृतानुमानादेव लाघवसहकृतात्तदैक्यसिद्धिसंभवेन तार्किकादीन्प्रत्यपि प्रकृतानुमानसंभवात्। **सर्वप्रमाणेति**। परिच्छिन्नत्वहेतूपपादने विवेचितमेतत्। **तत्तदवच्छिन्नेति**। ज्ञानसामान्यसामग्र्या एव ज्ञानेषु तत्तदर्थोपहितचिद्रूपसत्ताविषयकत्वे प्रयोजकत्व-

[1] अपरोक्षकालो—ग.

स्वविषयावरणनिवर्तकत्वमस्त्येव; चित्त्वेनैव प्रकाशप्रसक्तेः, न त्वनवच्छिन्नचित्त्वेन; गौरवात्, 'एतावन्तं कालं मया न ज्ञातोऽयमिदानीं ज्ञात' इत्यनुभवाच्च। रूपादिहीनस्यापि तत्तदवच्छिन्नचैतन्यस्य प्रत्यक्षादिविषयत्वमुक्तं प्राक्। प्रतिकर्मव्यवस्थामभ्युपगम्य चेदमनुमानम्, न तु दृष्टिसृष्टिपक्षे इति ध्येयम्। साध्ये चाद्यं विशेषणं प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मते प्रागभावेनार्थान्तरवारणाय। तदुदीच्यध्वंसादिकमादाय नार्थान्तरप्रसक्तिः, किंतु पूर्ववृत्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदम्। अवैयर्थ्यं च प्रतियोगिविशेषणत्वेनाखण्डाभावसंपादकतया। एतेन—यतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियमस्तस्मात्स्वनिवर्त्यपदेनैव प्रागभावव्युदासे किमाद्यविशेषणेनेति—निरस्तम्; प्रमात्वेन ज्ञाननिवर्त्यत्वमन्येषां नेत्यत्र तात्पर्यात्। न च स्वविषयावरणपदेनैव तद्व्युदासः; 'अस्ति प्रकाशत'

---

मित्यादि पूर्वोक्तं बोध्यम्। **चित्त्वेन**—चित्स्वरूपकत्वेन[1]। **गौरवादिति**। अन्यथा सुखाद्यवच्छिन्नचितः प्रकाशाभावे सुखादेः परमतेऽपि साक्षिभास्यता न स्यादित्यपि बोध्यम्। **न ज्ञातः**। अयं घटादिः अज्ञातचिदवच्छेदकत्वाद्घटादावज्ञातत्वमिति भावः। **प्रतियोग्यतिरिक्तेति**। घटात्तत्प्रागभावो नष्ट इत्याद्यनुभवाद्यथा घटजन्यस्तत्प्रागभावनाशः, तथा ज्ञानादज्ञानं नष्टमित्यनुभवाज्ज्ञानजन्योऽज्ञाननाशः। प्रतियोग्येव प्रागभावनाश इति मते तु ज्ञानमेवाज्ञाननिवृत्तिरिति तदनुसार्येव साध्यम्, न तु यथोक्तमिति भावः। **अवैयर्थ्यमिति**। संभवप्राचुर्येणेदम्। साध्ये व्यर्थविशेषणत्वस्यादोषत्वाद्दोषत्वेऽपि प्रागभावत्वस्याखण्डोपाधेः प्रकृते निवेशेनाभावत्वानिवेशात् शरीराजन्यत्वादाविव वैयर्थ्यशङ्काविरहादिति ध्येयम्।

---

[1] चित्स्वरूपत्वेन—ग.

इति व्यवहारविरोधित्वरूपस्यावरणत्वस्य भावाभावसाधारणत्वात्। वृत्तिजनकादृष्टेनार्थान्तरवारणाय तु विशेषणमिदम्। न चावरणपदेनैव तद्व्युदासे स्वविषयेति व्यर्थम्; यददृष्टं स्वविषयज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावारकं तादृशादृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्। न च—जडे अज्ञानस्यानङ्गीकाराच्चितश्चाज्ञानादिसाक्षितया भासमानत्वात्क्वावरणमिति—वाच्यम्; अज्ञानादिसाक्षितया चितः प्रकाशमानत्वेऽपि 'अस्ति प्रकाशत' इति व्यवहाराभावेन तदंशेऽज्ञानावरणस्यावश्यकत्वात्। वक्ष्यते चैतत्। स्वनिवर्त्येति च विशेषणं वृत्ति-

---

विरोधित्वेति—प्रतिबन्धकत्वेत्यर्थः। चाक्षुषवृत्तिप्रतिबन्धद्वारा तमस इवाज्ञानस्य ज्ञानाभावस्य चोक्तव्यवहारानुत्पादप्रयोजकत्वेन तत्प्रतिबन्धकत्वमिति भावः। इदं स्वविषयावरणेत्येवं रूपम्। अदृष्टस्य चरमफलनाश्यत्वेन स्वात्मकचरमफलजनकस्य स्वनिवर्त्यत्वात्तद्वारणायेदमिति भावः। **वाचकत्वादिति।** नच—तथापि स्वजनकं स्वसमानविषयकज्ञानान्तरप्रतिबन्धकादृष्टमादायार्थान्तरमिति—वाच्यम्; आलोकविषयाप्रसिद्ध्या स्वविषयविषयकोक्त[1]व्यवहारनिवेशासंभवेन स्वप्रयुक्तोक्तव्यवहारप्रतिबन्धकत्वनिवेशात्, ज्ञानान्तरप्रतिबन्धकस्य स्वप्रयुक्तोक्तव्यवहाराप्रतिबन्धकत्वात्। तमस्त्वालोकजन्यस्वनाशाधीनचाक्षुषप्रतिबन्धद्वारा चाक्षुषजन्ये आलोकप्रयुक्तोक्तव्यवहारे प्रतिबन्धकमित्यालोके साध्यावैकल्यम्। अज्ञानमपि स्वनाशद्वारा वृत्तिप्रयुक्तोक्तव्यवहारे साक्षादेव प्रतिबन्धकमिति विवेचयिष्यते। **तदंशे**—जडांशे, तदंशे व्यवहाराभावेन तदंशावच्छेदेन चित्यावरणेऽस्या[2]वश्यकत्वादित्यर्थः। अज्ञानावच्छेदकत्वेन साक्षिभास्यस्य तेन रूपेणैव 'अस्ति भाती'ति व्यवहारो

---

[1] स्वविषयकोक्त–ग.　　[2] चित्यावरणस्य–ग.

प्रतिबन्धकादृष्टेनार्थान्तरवारणाय। न च—चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्धिः, तन्निवर्त्यत्वे तद्व्युदसनमशक्यमिति—वाच्यम्; प्रतिबन्धकादृष्टे विद्यमाने न ज्ञानोत्पत्तिरिति प्रथमं तन्निवृत्तेः कारणात्मना स्थितस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वम्। न चैवमपि स्वनिवर्त्यत्वमव्याहतम्; स्वानिवर्त्यस्वरूपत्वे तात्पर्यात्। अन्धकारेणार्थान्तरवारणार्थमिदमिति केचित्, तन्न; स्वदेशगतेत्यनेनैव तद्व्युदासात्। यथा च वृत्तिप्रतिबिम्बितचैतन्यस्य विषयावच्छिन्न-

---

न तु केवलघटत्वादिनेति भावः। **तात्पर्यादिति।** ज्ञानप्रयुक्तो यदवस्थासामान्याभावस्तत्त्वं मिथ्यात्वमित्याद्युक्तम्, प्रकृते तु स्वजन्यनाशप्रतियोगित्वरूपं स्वनाश्यत्वं प्रविष्टमिति भावः। **तद्व्युदासादिति।** स्वदेशगतत्वं स्वाश्रयतावच्छेदकान्यदेशानवच्छिन्नाश्रयताकत्वं वाच्यम्; अन्यथा स्वाश्रयगतत्वमात्रेण विषयगताज्ञातत्ववारणस्य वक्ष्यमाणस्यासंभवात्। स्वाश्रयत्वगतत्वे[1] हि तादात्म्यसंबन्धेन निवेश्ये[2] तादात्म्येनैवालोकतमसोर्वृत्त्यज्ञानयोश्चैकचिति सत्त्वात्। तथाच विषयगतो ज्ञातत्वाभावोऽपि वृत्तितादात्म्ये च[3] विषयचिति तादात्म्येनैव संबद्धः। एवं च तमसो वृत्तितादात्म्यापन्नचित्तादात्म्येऽपि वृत्त्याश्रयतानवच्छेदकदेशावच्छिन्नत्वेन व्युदासः। न हि तमो वृत्त्यवच्छेदकदेशेनैवावच्छिद्यते, मानाभावात्। अज्ञानं तु वृत्तिनाश्यत्वानुरोधात्तथाभूतस्यैव वृत्तिनाश्यत्वात्। नच—तथाभूतस्तमोऽवयवः संभवतीति—वाच्यम्; तमसः सावयवत्वे मानाभावात्। स्वल्पदेशस्थालोकेन च बहुदेशस्थतमसो नावयवनाशः, किंतु तस्यैव नाशे सति आलोकासंयुक्तदेशे तमोन्तरोत्पत्तिः। दृष्टान्तस्तु स्वन्यूनदेशवृत्तितमोनाशका-

[1] गतत्वं-ग. [2] निवेश्यं-ग. [3] वृत्तितादात्म्यवत्यां-ग.

**चैतन्येन सहैकलोलीभावादज्ञाननिवर्तकत्वं तथोक्तं प्राक्। स्वदेशगतेति च विशेषणं विषयगताज्ञातत्वेनार्थान्तरवारणाय। यद्यप्यविद्याविषयत्वरूपमज्ञातत्वमसिद्धम्, ज्ञातत्वाभावरूपं तु प्रथमविशेषणेनैव परास्तम्; तथापि प्रथमेन प्रागभावव्युदासा दत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यम्। ननु—कथं ज्ञानाश्रयगतत्वमज्ञानस्य? वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रयचिदनाश्रितत्वादिति—चेन्न; अन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तेस्तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसंभवात्,**

---

लोक इति न साध्यवैकल्यम्। विषयगतोऽज्ञातत्वाभावस्तु वृत्त्यवच्छेदकदेशेनाप्यवच्छिद्यत इति तद्वारणमिति भावः। **तथोक्तमिति।** तथाच विषयचिद्गताज्ञानमपि प्रमाश्रयचिदाश्रितमिति भावः। **असिद्धम्** विषयावृत्ति। अविद्याविषयतावच्छेदकत्वं त्वविद्यासिद्धेः पूर्वमसिद्धत्वेनोद्देश्यसिद्धिकरत्वान्नार्थान्तरसंपादकमित्यपि बोध्यम्। **अत्यन्ताभावेति।** सामयिकात्यन्ताभावस्य प्रतियोगिनाश्यत्वमत इत्यादिः। तेन मतान्तरे तस्य स्वनिवर्त्यदळेनैव वारणेऽपि न क्षतिः। **चिदनाश्रितत्वादिति।** शुद्धस्याज्ञानोपहितस्य वाऽज्ञानाश्रयत्वात्तस्य च वृत्त्यादिरूपज्ञानाश्रयत्वमिति भावः। **चिदाश्रितत्वेन**—अज्ञानोपहितचिदाश्रितत्वेन। **चिदाश्रितत्वेति**—उक्तचिदाश्रितत्वेत्यर्थः। अज्ञानोपहितचिदेव ज्ञानाज्ञानयोराश्रय इति भावः॥

ननु—शुद्धस्याज्ञानाश्रयत्वे तथापि दोषः, न चाज्ञानपरिणाममनसोऽपि तत्पक्षे शुद्धाश्रितत्वेन तत्परिणामवृत्तेरपि तदाश्रितत्वमिति—वाच्यम्; अज्ञानोपहिताश्रितस्य मनसः शुद्धाश्रितत्वासंभवात्, अन्यथा दृश्यत्वमिथ्यात्वादेरपि शुद्धाश्रितत्वापत्तेः। अत एवाज्ञानस्य स्वोपहिताश्रितत्वपक्षेऽप्यनुपपत्तिः; ज्ञानस्यापि स्वोपहिताश्रितत्वेनाज्ञानोप-

**किंचिदवच्छिन्नतदाश्रितस्यापि तदाश्रितत्वानपायात्, कर्णशष्कुल्यवच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत्। एवं च भावाभावसाधारणमावरणमिति मतेन साध्यमुपपादितम्। अभावो नावारक इति सिद्धान्ते तु साध्यद्वये तात्पर्यम्।**

---

हितानाश्रितत्वात्तत्राह—**किंचिदवच्छिन्नतदिति**। अज्ञानोपहितचित एव वृत्त्युपहितत्वेन स्वोपहिताश्रितमपि ज्ञानमज्ञानोपहिताश्रितमिति द्वितीयपक्षे न दोषः। अज्ञानस्य शुद्धाश्रितत्वपक्षेऽपि शुद्धस्यैवाधिष्ठानत्वेन तत्तदुपाधिसंबन्धात्तदाश्रितत्वं ज्ञानस्याविरुद्धम्। **आकाशाश्रितत्ववेति**। तार्किकादिमते शुद्धाकाशभिन्नत्वेनाभ्युपगतस्य कर्णावच्छिन्नाकाशस्य धर्मः शब्दो यथा शुद्धाकाशस्यापि धर्मः; अन्यथा शुद्धाकाशस्यातीन्द्रियस्य शब्दाश्रयत्वेनानुमानासंभवात्, तथा मन्मतेऽपि उपहितचिति शुद्धस्याधिष्ठानत्वेनानुगमात्तत्प्रतीतौ प्रतीतेश्च 'तमेव भान्तमनुभाति सर्वं' मित्यादिश्रुतेरुपहितचिदाश्रयस्यापि तदधिष्ठानचिदाश्रितत्वम्। दृश्यत्वं तु शुद्धचित्तादात्म्यादिरूपत्वान्न शुद्धनिष्ठम्; अभेदे संबन्धविरहात्, मिथ्यात्वमपि न शुद्धनिष्ठम्; तत्साधकदृश्यत्वादेः शुद्धनिष्ठत्वाभावात्, श्रुत्यादिना शुद्धस्य सत्यत्वप्रमितेश्च। तथाच बाधकं विनोपहिताश्रितस्य शुद्धचिदाश्रितत्वमिति भावः। यथाश्रुतस्वदेशगतत्वानुसारेणेदमुक्तम्। विवक्षितं तु स्वावच्छेदकदेशान्यावच्छिन्नत्वस्वरूपं[1] घटावच्छिन्नपल्लवाज्ञान इवानवच्छिन्नमूलाज्ञानेऽप्यस्त्येव। न हि स्वोपहितचिन्मात्रगताया अपि ब्रह्माकारवृत्तेर्घटाद्यवच्छिन्नत्वं न संभवतीति ध्येयम्। **आवरणं** अस्ति प्रकाशत इति व्यवहारप्रतिबन्धकत्वम्। **नावारकः** नोक्तप्रतिबन्धकः। **सिद्धान्ते** अस्मत्सिद्धान्ते। अवश्याभ्युपेयस्याज्ञानस्यैवोक्तव्यवहारप्रतिबन्धकत्वम्,

[1] च्छिन्नत्वरूपं—ग.

**स्वप्रागभावातिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकामित्येकम् ।**

न तु ज्ञानाभावस्य ; तद्विषयकाज्ञानत्वापेक्षया तद्विषयकज्ञानाभावत्वस्य गुरुत्वात्, अज्ञानत्वस्याखण्डस्यावरणशक्तिरूपस्यैव निवेशात् ॥

नन्वज्ञानस्यापि[1] प्रतिबन्धकत्वे मानाभावः ; असत्त्वापादकाज्ञानशून्यचिद्रूपस्यास्तित्वस्याज्ञानशून्यचिद्रूपस्य भानस्य च व्यवहारे उक्ताज्ञानस्याज्ञानसामान्यस्य चानुपलब्धेर्हेतुत्वात्, उक्तव्यवहारकाले उक्ताज्ञानसत्त्वे तदनुपलब्ध्यसंभवेन तत एवोक्तव्यवहारानुत्पादेनाज्ञानप्रतिबन्धकत्वकल्पनावैयर्थ्यमिति चेन्न ; यत्र हि प्रतियोगिसत्त्वेऽप्यभावव्यवहारकाले प्रतियोग्यनुपलब्धिः, तत्रैव तस्या हेतुत्वम् ; अज्ञानस्य तु सत्त्वे सुषुप्तिसमाध्यादिकाले यद्यपि तद्वैशिष्ट्यानुपलब्धिः, तथापि तदभावव्यवहारकाले न सति न तस्या उक्तव्यवहारहेतुत्वम् ; किंतु लाघवादज्ञानस्यैव प्रतिबन्धकत्वम् । न चाज्ञानाभावस्यानुपलब्धत्वत्यागे साक्षिभास्यत्वमेवास्तु, अज्ञानसत्त्वे च तदभावासत्त्वान्नोक्तव्यवहार इति—वाच्यम् ; मन्मतेऽत्यन्ताभावस्य प्रतियोगिसत्त्वेऽपि तद्वति सत्त्वेनाज्ञानकालेऽपि तदभावस्य साक्षिभास्यतापत्तेः अथैवं शुक्तिरूप्याद्यभावव्यवहारेऽपि शुक्तिरूप्यादेः प्रतिबन्धकत्वमप्यास्तामिति चेदास्त एव । तस्मादुक्तास्तित्वभानयोरविद्यावृत्तिरूपे व्यवहारे उक्ताज्ञानप्रतिबन्धकत्वमावश्यकम्, शब्दरूपमात्रे व्यवहारे तत्प्रतिबन्धकत्वे तु तयोः स्फुरणं दुर्वारम् ; यद्यपि मन्मते प्रतिबन्धकाभावः कारणं नोच्यते, तत्कारणत्वेऽप्यज्ञानसत्त्वेऽपि तदभावसत्त्वेनोक्तव्यवहारापत्तिश्च, तथापि प्रतिबन्धकस्य सर्वत्र कारणनिष्ठशक्तिविघटनद्वारा कार्यानुत्पादप्रयोजकत्वात्प्रकृते विषयविधया अस्तित्वादेः स्वाकारवृत्तिकारणत्वात्तन्निष्ठशक्तिविघटकत्वमज्ञानस्येति ध्येयम् ॥

[1] तत्त्वज्ञानस्यापि ग.　[2] वैयर्थ्यं चेति–ग.

**स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरामिति न किंचिदसमञ्जसम् । हेतौ च प्रकाशकत्वं प्रकाशकपदवाच्यत्वम्, अप्रकाशविरोधित्वं वा ज्ञानालोकयोः साधारणम् । यद्यपि प्रकाशकपदवाच्यत्वं नामकरणवशात् कस्मिंश्चित्पुरुषेऽप्यस्ति ;**

---

अपरमिति । साध्यद्वयेऽपि वस्त्वन्तरपदं प्रमामात्रस्य भ्रमपूर्वकत्वसिद्धिमादायार्थान्तरस्य वारणाय स्वनिवर्त्यजन्य[1]भ्रमान्यार्थकम् । यद्यपि द्वितीयसाध्ये स्वदेशगतत्वं न विषयगताज्ञातत्ववारणाय; प्रागभावस्येवात्यन्ताभावस्यापि ज्ञानीयस्य स्वविषयावरणपदेनैव वारणात् । तथापि जीवेशविभागपूर्वकत्वेन ब्रह्मप्रमायां सिद्धसाधनवारणाय तत्, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि प्रमामात्रमेकैकं जीवेशविभागं निवर्तयति; तस्यैव क्लृप्तजातीयस्य स्वविषयावरणत्व[2]मप्यास्ताम्, नास्तां चावारकस्य तस्याभावत्वेन सौषुप्तनिर्विकल्पकविषयत्वम्; नावेदिषमित्यस्यानुभवत्वसंभवादित्यर्थान्तरात् । नचैवं— विषयगताज्ञातत्वस्य सिद्धान्ते आवरणत्वानङ्गीकारेऽपि क्लृप्तस्य तस्यैवोक्तस्वविषयावरणत्वमास्तामिति परेण वक्तुं शक्यत्वात्तदादायार्थान्तरसंभवादेकमेव साध्यं कुतो न कृतमिति—वाच्यम्; परमते हि ज्ञानमात्रमास्तित्वं प्रत्यक्षं च भानं वाच्यम्; तथाच कारणाभावतयोक्तव्यवहारस्यानुत्पादे विषयगताज्ञातत्वस्योक्तप्रयोजकत्वेऽपि कारणगतशक्तिविघटनद्वारोक्तप्रयोजकत्वरूपप्रतिबन्धकत्वस्य निवेशेऽर्थान्तरासंभवः । जीवेशभेदादेस्तु मन्मतरीत्योक्तप्रतिबन्धकत्वमादायार्थान्तरं परेण वक्तुं शक्यते । एकसाध्यवादिनां प्राचां तूक्तद्वारनिवेशस्य विषयाज्ञातत्ववारणमेव प्रयोजनम्, तच्च स्वदेशगतत्वप्रागभावान्यत्वाभ्यामेव सिध्यतीति स व्यर्थ इत्याशय इति ध्येयम् ॥

---

[1] निवृत्त्यजन्य—ग. [2] वरकत्व—ग.

तथापि प्रकाशकशब्देन शास्त्रे सर्वदेशकालयोर्वा व्यवह्रियमाणत्वं तद्विवक्षितम्। अथवाऽस्तु साधारणम्। अप्रकाशितार्थगोचरेति विशेषणाद्व्यभिचारव्युदासः। अप्रकाशितत्वं च 'न प्रकाशत इति' व्यवहारगोचरत्वम्, तच्च स्वप्रकाशचैतन्येऽप्यस्तीत्युपपादितम्। एवं निरुक्ताप्रकाशविरोधित्वमपि ज्ञानालोकयोः प्रत्यक्षसिद्धम्। उक्तं च विवरणे—'ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेवालोकप्रकाश्यत्वं तमोविरोधित्वं नामे'ति। अत उभयोरेव साक्षादप्रकाशविरोधित्वसंभवान्नेन्द्रियसन्निकर्षादौ व्यभिचारः। एवं चाप्रकाशितार्थगोचरत्वे सति

---

प्रकाशशब्देन लक्षणया ज्ञानालोकभिन्नेऽपि व्यवहारादाह—**सर्वदेशकालयोरिति**। सर्वदेशेषु व्यवह्रियमाणत्वं व्यवहारयोग्यत्वम्, प्रकाशपदस्यानादिसङ्केतत्वमिति[1] यावत्। **विशेषणादिति**। अप्रकाशितार्थगोचरत्वं अप्रकाशितार्थे प्रकाशत इति व्यवहारस्य प्रयोजकत्वम्; तच्च अज्ञाननाशद्वारा ज्ञाने, तमोनाशाधीनचाक्षुषद्वारा आलोके च बोध्यम्। तेनालोकस्य विषयरूपगोचराप्रसिद्ध्या न साधनवैकल्यम्। **चैतन्येऽपीति**। न प्रकाशत इति व्यवहारः प्रकाशविरोध्याश्रयविषयकः, तादृशाश्रयत्वं च यद्यपि तमोऽज्ञानयुक्ततयालोकज्ञानयोः, तथापि तदवच्छेदकत्वाद्घटादावपि न प्रकाशत इति व्यवहार इति भावः। **निरुक्तेति**। न प्रकाशत इति'व्यवहारगोचररूपेत्यर्थः। तादृशोऽप्रकाशस्तद्विरोधित्वमित्यर्थः। **ज्ञानप्रकाश्यत्वात्** ज्ञानप्रयुक्तनाशवत्त्वात्। **अज्ञानविरोधित्वात्**। अज्ञानस्य नाश्यत्वरूपविरोधित्वघटिताज्ञानप्रयुक्ताज्ञाननाशवत्त्वपर्यवसितादिति यावत्। **तमोविरोधित्वं**—तमसो नाशत्वेन घटितमालोकप्रयुक्ततमोनाशवत्त्वपर्यवसित-

[1] सङ्केतवत्त्वमिति -ग.

**प्रकाशशब्दवाच्यत्वात् अप्रकाशविरोधिप्रकाशत्वादिति वा हेतुः पर्यवसितः। विपर्ययविषयस्तु नाज्ञातः; विपर्ययान्यकालासत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभावेन प्रकाशप्राक्कालसत्त्वघटिताप्रकाशितत्वासंभवात्, अत एव स नाप्रकाशविरोधी; स्वविषये अप्रकाशाभावात्, अधिष्ठानाप्रकाशस्तु तस्य जनक एव। स्मरणे च व्यभिचाराभावः स्पष्टः। अनुकूलतर्कश्च 'त्वदुक्तमर्थं न जानामी'ति प्रतीत्यन्यथानुपपत्त्यादिरूपः प्रागुक्त**

---

मिति यावत्। **वाच्यत्वात्** अनादिसङ्केतविषयत्वात्। उक्तगोचरत्वस्याधुनिकप्रकाशपदसङ्केतविषयत्वस्य च सन्निकर्षादौ व्यभिचारित्वेनोक्तवाच्यत्वमेवोपसंहृतम्। **प्रकाशत्वादिति**। यद्यपि विरोधित्वान्त एव हेतुः, तथापि विरोधित्वं नाशकतावच्छेदकरूपम्; तच्च प्रमात्वमालोकत्वं चोक्तावच्छेदकत्वेनानुगतं हेतुः। ज्ञानत्वमालोकत्वं च प्रकाशपदवाच्यतावच्छेदकत्वेनाद्यहेतौ प्रविष्टमिति ज्ञापयितुं प्रकाशत्वादित्युक्तम्। तावता च पक्षीभूतप्रमादृष्टान्तीभूतालोकयोरन्यतरत्वं वा हेतुरित्यपि सूचितम्। सत्यन्तव्यावर्त्यमाह--**विपर्ययेत्यादि**। **नाज्ञातः**—नोक्ताप्रकाशितः। **घटितेति** व्याप्तेत्यर्थः। **अत एवेत्यादि**। तथाच सत्यन्तं द्वितीयहेतौ न देयमिति भावः। **जनक एवेति**। न नाश्य इति शेषः। **स्पष्टः**—द्वितीयहेतौ स्पष्टः। प्रमात्वस्य विरोधितावच्छेदकस्य स्मरणावृत्तित्वात्प्रथमहेतावपि प्रत्यक्षादिगृहीतार्थकशब्दादिवृत्तौ व्यभिचारवारणाय न प्रकाशत इति व्यवहारगोचरस्य नाशं द्वारीकृत्य प्रकाशत इति व्यवहारप्रयोजकत्वस्य सत्यन्तेन वाच्यत्वादव्यभिचारः। विशेष्यदळं तु सन्निकर्षादिवारणायेति[1] बोध्यम्। न चासिद्धिः; न प्रकाशत इति व्यवहारगोचरत्वेन

---

1. येवेति-ग.

एव। एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमाना-पातोऽपास्तः; तत्रानुकूलतर्काभावात्। अज्ञानस्य स्वरूपेणा-ज्ञानाविषयत्वेऽपि तद्भावत्वादिकमज्ञानविषयो भवत्येव; तस्या-ज्ञानग्राहकसाक्ष्यग्राह्यत्वात्। अन्यथा तत्र विवादो न स्यात्। एवं प्रमायाः स्वविषयावरणभावपूर्वकत्वमपि न प्रमास्वरूप-ग्राहकसाक्षिग्राह्यम्। तथाच तद्ग्राहिकाया एतस्या अनुमितेः साध्यसाधनोभयाधिकरणत्वान्न कोऽपि दोषः। दृष्टान्ते चान्ध-काराव्यवहितोत्पत्तिकत्वं विशेषणम्; तेन न प्रथमपदवैयर्थ्यं

---

पराभ्युपगतस्य प्रकाशप्रागभावस्य प्रकाशनिवर्त्यत्वेन प्रकाशत इति व्यवहारप्रयोजके तन्नाशे प्रयोजकत्वस्य सत्यन्तपर्यवसितार्थस्य पक्षे सत्त्वात्। न चोक्तनाशो नोक्तव्यवहारप्रयोजकः, किंतु प्रकाश एवेति—वाच्यम्; कालादिविधयोक्तनाशे व्यधिकरणप्रकाशस्यापि प्रयोजकत्वे-नासाधारणस्य नाशप्रयोजकत्वस्य लाभायैवाद्यप्रयोजकान्तस्योक्तत्वेन हेतावनिवेशात्। अन्यथा वैयर्थ्यात्। अत एव[1] तमसो द्रव्यत्वा-नङ्गीकारमते न साध्यसाधनवैकल्यम्; आलोकप्रागभावस्यालोक-निवर्त्यत्वादिसत्त्वात्। अत एव द्वितीयहेतुरपि नासिद्ध इति ध्येयम्॥

**तद्ग्राहिकायाः** अज्ञाने भावत्वादि प्रमायामुक्तपूर्वकत्वं च गृह्णन्त्याः। **साध्येति**। भावत्वाद्यज्ञाननाशकत्वेत्यादिः[2]। **दोषः** प्रसिद्धि[3]बाधौ। **अन्धकारेत्यादि**। स्वसमानाधिकरणतमःकालवृत्ति-त्वमित्यर्थः। तेनोत्पत्त्यादेर्व्यर्थत्वेऽपि न क्षतिः। **वैयर्थ्यं** अर्थशून्य-त्वम्। अन्धकारेत्यादिकमेव प्रथमपदार्थ इति भावः। उक्तविशेषण-

[1] तमो—क. [2] त्वेनेत्यादिः—ग. [3] असिद्धि—ग.

**न वा द्वितीयादिप्रमायां साध्यसाधनवैकल्यम् । विस्तरेण चान्यत्र व्युत्पादितमिदमस्माभिः ॥**

---

व्यावर्त्यमाह—**न वेति** । **वैकल्यमिति** । साध्यवैकल्यं नेत्यपि बोध्यम् । साध्यसाधनयोरप्रकाशनाशोपधानं प्रविष्टम् । अन्यथोक्तपक्षतावच्छेद-कावच्छेदेन तदसिद्ध्यार्थान्तरापत्तेः । तथाचोक्तविशेषणाभावे दोष इति भावः ॥

आश्रमस्वामिनस्तु—जन्यसविकल्पकाजन्या घटचाक्षुषप्रमा स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्विकेत्येकम् । स्वविषयावरणत्वं स्वजननायोग्यत्वम्, स्वनिवर्त्यत्वं स्वजन्यनाशप्रतियोगित्वम्, वस्त्वन्तरं स्वभिन्नम् । तच्च स्वकालपूर्वकालवृत्तिस्वमादायार्थान्तरादुक्तम् । इच्छाप्रागभावादिनार्थान्तरात्स्वनिवर्त्येति । प्रतियोग्यन्या प्रागभावस्य निवृत्तिरिति मते इच्छाप्रागभावो न ज्ञाननिवर्त्यः; किंत्विच्छानिवर्त्यः । स्वप्रागभावमादायार्थान्तरात् स्वविषयावरणेति । स्वप्रागभावान्यस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरं साध्यम् । स्वसमानाधिकरणप्रागभावान्यार्थकमाद्यमिच्छाभ्रान्तिप्रागभावादिनार्थान्तरस्य वारणाय। आत्मत्वादिनार्थान्तराद्वितीयम् । स्वजनकादृष्टादिनार्थान्तरात्तृतीयं स्वसमानाधिकरणयोग्यार्थकम् । अथवा एकमेव साध्यम् । स्वदेशगतत्वं स्वाश्रये वर्तमानत्वम् ; तेनोपादानप्रत्यक्षविषया संयोगादेः पक्षीकृतप्रमाजन्यत्वेन संयोगादिप्रागभावस्य स्वनिवर्त्यत्वादर्थान्तरस्य करण[1]मित्याहुः ॥

तत्र [2]यद्यपि यथाश्रुते पटचाक्षुषोत्तरघटचाक्षुषप्रमायां सिद्धसाधनम् ; भिन्नविषयकानुमित्यादिसामग्रीकालीनघटचाक्षुषेच्छाजन्यत्वे [3]तस्याः [4]पटविषयकत्वेन पटसविकल्पकाजन्यत्वेन पक्षत्वसंभवात्, तथापि योग्यात्मगुणाव्यवहितोत्तरान्यस्य सविकल्पाजन्यपदेनोक्त-

[1] वारण—ग. [2] तत्र—ग. [3] जन्यत्वेन—क ग. [4] पटाविषय—क.

**नन्वनादित्वे सति भावत्वमभावविलक्षणत्वं वा न निवर्त्यनिष्ठम्; अनादिभावमात्रवृत्तिधर्मत्वात्, अनाद्यभावविलक्षण-**

त्वान्न दोषः। परमते निर्विकल्पकाव्यवहितोत्तरत्वस्य पक्षे सत्त्वाद्योग्येति। सविकल्पकधीसुखादेर्योग्यगुणत्वान्न तेन सिद्धसाधनम्। अत एव स्वप्रागभावपदं स्वप्रागभावार्थकं, स्वविषये संशयादिजनकं स्वविषयावरणं, स्वसत्ताक्षणनियतध्वंसप्रतियोग्येव स्वनिवर्त्यम्। तथाच प्रागभावोऽपि परमते विशेषादर्शनतया संशयादिजनकः। तथाच स्वप्रागभावस्वजनकादृष्टमनःसंयोगतमसां वारणाय क्रमेण स्वप्रागभावेत्यादिचतुष्टयमिति आश्रमोक्तव्याख्यानान्तरपक्षेऽपि घटसंशयपूर्वकत्वमादाय न सिद्धसाधनम्; धर्मिज्ञानविधया घटसंशयस्य घटसंशयान्तरजनकत्वेन विषया[1]वरणत्वेऽपि तत्पूर्वकचाक्षुषस्यापक्षत्वात्। न च—मूलोक्ते आश्रमोक्ते च साध्ये तमोनाशकत्वमुपाधिरिति—वाच्यम्; आश्रमोक्तसाध्यस्य सविकल्पकाद्युत्तरचाक्षुषे उक्तसंशयोत्तरचाक्षुषे च सत्त्वेन साध्याव्यापकत्वात्। मूलोक्तसाध्यस्यापि सौषुप्तसुखाकाराविद्यावृत्त्यादौ तत्सुखावरकस्वाप्नबुद्ध्यादिनिवर्तके सत्त्वेन तदव्यापकत्वात्। नचोक्तवृत्त्यादेरस्ति भातीति व्यवहाराप्रयोजकत्वेन स्वविषये स्वप्रयुक्तोक्तव्यवहारप्रतिबन्धकत्वरूपस्वविषयावरणत्वस्य स्वनिवर्त्यजन्यभ्रमान्यत्वरूपवस्त्वन्तरत्वस्य च स्वाप्नबुद्ध्यादावभाव इति—वाच्यम्; 'सुखमस्वाप्स'मिति स्मृतिद्वारा सौषुप्तसुखमस्तीत्यादिव्यवहारे उक्तवृत्त्यादेः प्रयोजकत्वात्, स्वाप्नसुखादिबुद्धेर्भ्रमान्यत्वेनोक्तवस्त्वन्तरत्वात् अविद्यावृत्तित्वेन तस्याः स्वावच्छेदकान्यदेशावच्छिन्नत्वरूपं स्वदेशगतत्वमप्युन्नेयम्। अनुकूलतर्केण साध्यव्याप्यतया[2] गृहीतहेतोरव्यापकत्वेनोक्तोपाधेः साध्यव्यापकत्व[3]ग्रहाच्च॥

[1] स्वविषया–ग. [2] साध्यव्यापकतया–ग. [3] साध्याव्यापक–ग.

मात्रवृत्तित्वाद्वा, आत्मत्ववत्। निवर्त्यत्वं वा, नानादिभावनिष्ठम्, अनाद्यभावविलक्षणनिष्ठं नेति वा, निवर्त्यमात्रवृत्तित्वात्, प्रागभावत्ववत्। अनादित्वं वा, नावरणनिष्ठम्, अनादिमात्रवृत्तित्वात्, प्रागभावत्ववत्। प्रमाणज्ञानं वा, अनाद्यभावान्यानाद्यनिवर्तकम्, ज्ञानत्वात्, भ्रमवदित्यादिना सत्प्रतिपक्षता; कृत्यभावमात्रेणाकृतस्य कृतिवत् पूर्वप्रकाशाभावमात्रेणाप्रकाशितस्य प्रकाशोपपत्तेरप्रयोजकत्वं चेति—चेन्न; अनुकूलतर्काभावेनाप्रयोजकत्वात्; सिद्धान्तिहेतोश्चानुकूलतर्कसद्भावेन साध्यव्याप्यत्वे निश्चिते सत्प्रतिपक्षाप्रयोजकत्वादीनामनवकाशात्। अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽप्यविद्याया भावविलक्षणाया निवर्त्यत्वोपपत्तेराद्यानुमानेनाविरोधश्च। द्वितीये त्वनाश्रितमात्रवृत्तित्वमुपाधिः। तृतीयचतुर्थयोः सकलनिवर्त्यावृत्तित्वमुपाधिः।

---

अज्ञानस्य भावविलक्षणत्वस्वीकारेऽप्याह—**अभावविलक्षणत्वं वेति**। **निवर्त्यत्वोपपत्तिरिति**। न चाभावविलक्षणस्य निवर्त्यत्वे सादित्वं प्रयोजकमिति—वाच्यम्; अज्ञानतत्प्रयुक्तान्यतरत्त्वस्यैव ज्ञाननाश्यताप्रयोजकत्वेनोक्तत्वात्। **अनाश्रितमात्रेति**। ध्वंसत्वादौ साध्याव्यापकत्वं[1] नाशङ्कयम्; प्रागभावध्वंसरूपघटाद्यवृत्तित्वस्याखण्डोपाधिरूपध्वंसत्वेऽभावात्, जन्यत्वे सति भावान्यत्वस्यापि मन्मते निवर्त्यवृत्तित्वाच्च[2]। **सकलनिवर्त्येति**। न चाभावविलक्षणस्य निवर्त्यत्वे सादित्वस्य प्रयोजकत्वादनादिभावत्वेन निश्चिते नाशसामग्रीमत्त्वस्याभावेन नाशसामग्रीमत्त्वे साध्यवति उपाध्यभावेन साध्यव्या[3]पकत्वमिति—वाच्यम्; उक्तप्रयोजकत्वस्य प्रत्युक्तत्वात्। न चोपाध्यभाववत्त्वेन निश्चिते नाशसामग्रीमत्त्वे साध्यसंशयेनोपाधौ साध्यव्यापकत्वं

[1] साध्यव्यापकत्वं-क. [2] निवृत्तित्वाच्च-ग. [3] तत्र साध्या-ग.

**पञ्चमे सकलानाद्यवृत्तित्वमुपाधिः । षष्ठे प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति च दूषणानि । तत्त्वप्रदीपिकोक्तं च—चैत्रप्रमा, चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वात्, मैत्रप्रमावत् । विगीतो विभ्रमः, एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवदिति । अत्राद्ये सुखादिज्ञानेषु न बाधः; अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः । चैत्रगतत्वं च नानादेर्विशेषणम्; मैत्रप्रमायाश्चैत्रनिष्ठानादिनिवर्तकत्वाभावेन दृष्टान्ते साध्यवैकल्यापा॰ात्, किंतु प्रमातदभावयोरन्यतरस्य; प्रमाया-**

---

न गृहीतुं शक्यम्, साध्ये उपाध्यभाववद्वृत्तित्वरूपव्यभिचारसंशयादिति—वाच्यम्; मां प्रति हि प्रयुक्तस्य त्वदनुमानस्य मन्मते निर्दोषत्वमपेक्ष्यते, तच्च नास्त्येव; मयोक्तसामग्रीमत्त्वेऽनादिभावनिष्ठत्वस्य निश्चितत्वेन ममोक्तसंशयायोगात् । अत एव सकलानाद्यवृत्तित्वोपाधावप्यावरणावृत्तित्वरूपसाध्यव्यापकत्वं मया निश्चितमिति प्रागभावप्रतियोगित्वादौ त्वदीय उक्तसाध्यसंशयोऽप्रयोजक इति भावः । **प्रतियोग्यप्रसिद्ध्येति ।** न चावाभ्यामप्रसिद्धप्रतियोगिकाभावस्वीकारान्न दोष इति—वाच्यम्; न ह्यावाभ्यामप्रसिद्धस्याभावः स्वीक्रियते, परं त्वलीकवादिनं त्वादृशं प्रति मादृशैः प्रयुज्यते । 'अहृदयवाचामहृदयमेवोत्तर'मिति न्यायात् । अत एव विमतम्, न चिदज्ञानकार्यम्, [1]चित्परोक्षायामप्यनिषेध्यत्वेन भासमानत्वादिति त्वदीयानुमाने भावरूपाज्ञानाप्रसिद्धिर्न दोषः; मत्प्रसिद्धत्वमादाय त्वया मां प्रति प्रयोक्तुं शक्यत्वादित्याचार्यैरुक्तम् । अत एव च मतद्वयेऽप्यप्रामाणिकस्य निषेधप्रतियोगित्वाभ्युपगमादित्यादित्वदीयपूर्वपक्षस्य सत्यत्वानुमानखण्डनावसरे आचार्याभ्युपगमोऽप्युक्ताभिप्रायेण । **एतज्जनकाबाध्यातिरिक्तेति ।** एतद्भ्रमजनकं यदबाध्यं तदन्येत्यर्थः । **सम्मतवत्—पुरुषान्तरीयभ्र-**

[1] चित्यपरोक्षायामिति स्यात्.

**आत्मगतत्वं प्राग्व्याख्यातम्, साध्ये तु प्रमापदमुपरञ्जकमेव। यदि त्वभावे प्रागिति विशेषणं नास्ति, तदा भावरूपाज्ञानस्यापि स्वाभावाभावत्वेन तद्व्यतिरिक्तानादिनिवर्तकत्वे बाधवारणाय। चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वं च नोपाधिः; चैत्रसुखादौ प्रागभावनिवर्तकतया व्यभिचारेण साध्याव्यापकत्वात्। न च चैत्रप्रमा, चैत्रगतस्याभावातिरिक्तस्यानादेर्निवर्तिका न, प्रमात्वात्, मैत्रप्रमादिवदिति सत्प्रतिपक्षः; प्रतियोगिप्रसिद्ध्यप्रसिद्धिभ्यां व्याहतेः। चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं**

---

मवत्। पुरुषान्तररूपोक्ताबाध्योपादानकत्वं परेणपि दृष्टान्ते स्वीक्रियते। जनकान्तानुपादाने तु साध्यवैकल्यमिति भावः। **आत्मगतत्व**माध्यासिकं चैत्राद्यात्म[1]तादात्म्यम्। तथाच मनस इव तदुपहितात्मनोऽपि वृत्त्युपादानत्वात्तत्रापि तत्प्रागभाव इति भावः। **अज्ञानस्यापीति।** प्रतियोगिजनकाभावत्वरूपप्रागभावत्वेऽखण्डोपाधिरूपाभावत्वस्य लाघवेन प्रवेशात्प्राक्पदलभ्यजनकान्तत्यागे तावन्मात्रमज्ञानेऽपीति भावः। **निवर्तकत्वे बाधवारणाय**—निवर्तकत्वबाधस्य वारणाय। **सुखादाविति।** स्वप्रागभावनिवर्तकत्वादिति शेषः। **व्याहतेरिति।** उक्तनिवृत्तिहेतुत्वं क्वचिद्गृहीत्वैव तदभावोऽनुमेयः, अन्यथा विशेषणज्ञानाभावेन साध्यव्याप्त्यग्रहात्, स चोक्तहेतुत्वग्रहश्चैत्रप्रमायामेवेति बाधः। न चोक्तहेतुत्वज्ञाने चैत्रप्रमायां जातेऽपि भ्रमत्वं तत्र पश्चात्कल्प्यत इति वाच्यम्; एतदनुमानेनैव तत्र भ्रमत्वस्य कल्प्यतयाऽन्योन्याश्रयात्। न चासतः प्रतियोगिनो मन्मते ख्यातिसंभवात्तस्याश्च विकल्पत्वेना[2]नुमानबाध[3]कत्वमिति—वाच्यम्; मां प्रति हि त्वदीयोऽनुमानप्रयोगो मदीयप्रतियोगिज्ञानमपेक्षते, तच्च प्रमारूपं बाधकमेव, तस्य च भ्रमत्वमेतदनुमानेनैव त्वया ज्ञापनीयमिति भावः। **चैत्रगतप्रमाभावेति।**

[1] त्मना—क. [2] विकल्पेना—ग. [3] नाबाध—क. ग.

तु नोपाधिः; चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वात्। विपक्षबाधकसत्त्वाच्च नाभाससाम्यम्। अत एव द्वितीयानुमानमपि सम्यक्। न च—विगीतो विभ्रमः, एतज्ज्ञानजनकसाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवदिति सत्प्रतिपक्ष इति—वाच्यम्; बाध्यस्य त्वन्मते अजनकत्वात्, साध्याप्रसिद्धेः, ब्रह्माविद्योभयोपादानकत्वेनाविरोधाच्च। नव्यास्तु विमता प्रमा, प्रमाभावातिरिक्तस्यानादेर्निवर्तिका, कार्यत्वात्, घटवत्; भ्रमानु-

---

चैत्रगतप्रमाया अभावेत्यर्थः। **निवर्तकतया**—निवृत्तिरूपव्यवहारजनकतया। यद्यपि प्रतियोग्यन्या प्रागभावस्य निवृत्तिरिति मतेनैवानुमानमिदम्; तथाच व्यवहार एव तत्प्रागभावस्य निवर्तको न तु ज्ञानम्, तथापि ज्ञानस्यापि व्यवहारद्वारा तत्प्रागभावनिवर्तकत्वम्। प्रयोजकत्वमात्रस्यैव साध्यव्यापकतासंभवेन जनकत्वानिवेशे वैयर्थ्यात्, शरीराजन्यत्वोपाधौ शरीरनिवेशवत्। तात्त्विकप्रमात्वस्य हेतुत्वे तूक्तनिवृत्तिजनकत्वमपि साधनव्यापकम्; 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुत्या त्वयापि ब्रह्मप्रमाया घटाद्यभावनिवर्तकत्वेन वाच्यत्वादिति भावः॥

ननु—घटश्चैत्रेच्छा, चैत्रभ्रमो वा, स्वप्रागभावान्यानादिनिवर्तकः, घटत्वादिच्छात्वाद्भ्रमत्वाद्वा, पटवत् मैत्रेच्छावत् मैत्रभ्रमवद्वेत्यपि स्यात्तत्राह—**विपक्षेति**। प्रमापक्षकोक्तानुमान एवेत्यादिः। न जानामीत्याद्यनुभवो न ज्ञानाभावविषयक इत्युक्तम्। रूप्यादेश्च शुक्त्यादिनिष्ठतया प्रतीयमानस्य शुक्त्यादिनिष्ठमेव परिणामि वाच्यम्; तच्च लाघवात् अनादिज्ञाननाज्ञानं नष्टमित्यनुभवादुपादाननाशं विनोपादेयनाशासंभवाच्च ज्ञाननिवर्त्यमित्यस्मदनुमानमेव सतर्कम्, न तु त्वदनुमानम्; साध्यं विनापि हेतुसंभवादिति भावः। **साध्याप्रसिद्धेः**।

त्तरप्रमा, स्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, भ्रमोत्तरप्रमावत्; ज्ञानत्वम्, स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वात्, आलोकत्ववत्; अनित्यज्ञानम्, अभावत्वानाधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे सति सविषयत्वे सत्यनित्यत्वात्, अनित्येच्छावत्; सा हि तादृग्द्वेषसमानाधिकरणा। न चैतेष्वप्रयोजकत्वशङ्का; विपक्षबाधकतर्कस्योक्तत्वात्। एवमन्यदप्यूहनीयम्। ज्ञानविरोधित्वम्, अनादिभावत्वसमानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वात्, दृश्यत्ववत्। यद्वा अनाद्यभावविलक्षणत्वम्, ज्ञान-

---

एतद्भ्रमजनकं यद्बाध्यं तदप्रसिद्ध्या तदन्योपादानकत्वस्य साध्यस्याप्रसिद्धेः। बाध्योपादानकं नेति साध्यकरणेऽपि स दोषः साध्यवैकल्यं च। न चैतद्भ्रमजनकं यद्बाध्यान्यत्तदुपादानकत्वं साध्यमिति–वाच्यम्; ब्रह्माविद्योभयेत्याद्युक्तदोषतादवस्थ्यात्, जनकान्तवैयर्थ्याच्च। अबाध्योपादानकत्वे भ्रमस्य बाध्यत्वानुपपत्तिः प्रतिकूलतर्कोऽपि बोध्यः। **अप्रकाशितार्थप्रकाशेति**। प्रमालोकान्यतरेत्यर्थः। नित्यज्ञाने बाधात्–**अनित्येति**। **स्वविरोधीति**। स्वनाश्यत्वस्वप्रतिबध्यत्वान्यतरयुक्तेत्यर्थः। निवृत्तिः प्रवृत्त्यभावो न तु यत्नविशेष इति मते प्रवृत्तौ व्यभिचारात् **प्रयत्नान्यत्वे सतीति**। **तादृग्द्वेषेति**। उक्तविरोधिद्वेषेत्यर्थः। समानविषययोः समानाधिकरणयोरिच्छाद्वेषयोर्मिथः प्रतिबन्धकत्वम्। अन्यथा तयोरेकसत्त्वेऽपरोत्पादापत्तेरिति भावः। **ज्ञानविरोधित्वं**–– ज्ञानप्रयुक्तनाशप्रतियोगित्वम्। तेनाज्ञानसिद्धिपूर्वं दृश्यमात्रस्य साक्षाज्ज्ञाननाश्यत्वासिद्धावपि न साध्यवैकल्यम्। परमतेऽप्यदृष्टादीनां ज्ञानप्रयुक्तनाशप्रतियोगित्वमावश्यकमिति भावः। **अनादिभावत्वं**— अभावविलक्षणानादित्वम्॥

विरोधिवृत्ति, अनाद्यभावविलक्षणमात्रवृत्तित्वात्, अभिधेयत्व-वदिति। एवमभावविलक्षणाज्ञानेऽनुमानान्यूहनीयानि ॥

इत्यद्वैतसिद्धावविद्यानुमानोपपत्तिः ॥

---

## अथाविद्यावादे श्रुत्युपपत्तिः

एवं श्रुतयश्च। तत्र छान्दोग्ये अष्टमाध्याये—'तद्यथा हिरण्यं निधिनिहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन प्रत्यूढा' इति श्रुतिर्ब्रह्मज्ञानप्रतिबन्धकत्वेनानृतं ब्रुवाणा तादृगज्ञाने प्रमाणम्। न च—ऋतशब्दस्य 'ऋतं पिबन्ता' वित्यत्र सत्कर्मणि प्रयोगदर्शनात् 'ऋतं सत्यं तथा धर्म' इति स्मृतेश्च ऋतशब्दस्य सत्कर्मपरत्वादनृतशब्दस्य दुष्कर्मपरत्वमिति—वाच्यम्; उत्तरत्र 'य आत्मापहतपाप्मा' इत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन

---

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तनाशायाज्ञानस्यानुमोदयः ॥

॥ इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां अज्ञानानुमानोपपत्तिः ॥

### अथाविद्यावादे श्रुत्युपपत्तिः

अनृतेन प्रत्यूढाः—अन्धीभूता अस्फुरद्ब्रह्मस्वरूपकाः। ब्रह्मज्ञानप्रतिबन्धकत्वेन—ब्रह्मस्फुरणाभावव्याप्यत्वेन। अपहतपाप्मत्वेति। पापशून्यस्वभावत्वेत्यर्थः। कादाचित्कपापसत्त्वे तच्छून्यस्वभाव-

**दुष्कर्मप्रत्यूढत्वविरोधात्, सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽप्यभावात्, कारणात्मनावस्थाने चाज्ञानस्यावश्यकत्वात्, कर्मण आवरणत्वानुपपत्तेश्च । ब्रह्मवेदनप्रतिबन्धकतया ह्यनादिब्रह्मावारकं ज्ञाननिवर्त्यं वाच्यम् । तथाच कर्मेव प्रधानमपि नानृतपदाभिधेयम्; तयोर्ज्ञानानिवर्त्यत्वात् । ज्ञाननिवर्त्यत्वे च 'भूयश्चान्ते विश्वमायानिवृत्ति' रित्यादिश्रुतिर्मानम् । न चात्र**

त्वमात्मनोऽनुपपन्नम् । न च—मिथ्याभूतं पापं प्रतिबन्धकमास्तामिति—वाच्यम्; अविद्यां विना तत्परिणामरूपस्य तस्यासंभवादिति भावः । **कारणात्मना** कारणगतसंस्काररूपेण । **अनादीति ।** न च पापानां प्रवाहरूपेणानादित्वात्पापत्वेन प्रतिबन्धकत्वं संभवतीति—वाच्यम्; पापस्य पुण्यस्य मिथ्याज्ञानजन्यसंस्कारस्य वा 'अस्ति भाती' ति व्यवहारे प्रतिबन्धकत्व[1]मित्यत्र विनिगमकाभावादनादिपापादिभिन्नं प्रतिबन्धकत्वेन कल्प्यत इत्यस्यैवोचितत्वात्[2] । न चानृतशब्दस्य पापे मुख्यवृत्तिसंभव एव विनिगमक इति—वाच्यम्; ऋतशब्दस्य सत्यवाचकस्य सत्यब्रह्मप्रापकत्वेन पुण्यं हि गौणार्थो न मुख्यार्थः, तथाच सत्यब्रह्मविरोधित्वेन पुण्यवासनयोरप्यनृतशब्दगौणार्थता संभवत्येव । न चास्तु तथा, श्रुत्यैव तेषां प्रतिबन्धकत्वोक्त्या नानादेरज्ञानस्य प्रतिबन्धकताया युक्त्या कल्पनामिति—वाच्यम्; पापादीनां श्रुत्यैव मिथ्यात्वोक्तेस्तन्निर्वाहार्थमनाद्यज्ञानस्यावश्यकत्वादिति भावः । न चानादि[3] प्रधानमस्तु प्रतिबन्धकम्; पापादिकं तु नैकं प्रतिबन्धकं संभवतीति विनिगमकाभावः । ऋतब्रह्मविरोधिप्रपञ्चभिन्नत्वादनृतपदेन तदेवोच्यतां तत्राह—**तथाचेति । विश्वमायेति ।** असत्त्वापादकाभानापादकसर्वाज्ञानेत्यर्थः । आदि-

[1] व्यवहारप्रतिबन्धकत्व-ग. [2] इत्यस्यौचित्यात्-ग. [3] नन्वनादि-ग.

निवृत्तिस्तरणमात्रम्, 'मायामेतां तरन्ति ते' इति स्मृतेरिति—वाच्यम्; ज्ञानहेतुकतरणस्य निवृत्त्यतिरिक्तस्यासंभवेनोभयोर्नाशमात्रार्थत्वात्। न च—'तम आसी'दित्यस्य सत्त्वप्रतिपादकस्य बाधकं विना पारमार्थिकसत्त्वपरत्वेन कथमावरणस्यानृतत्वमिति—वाच्यम्; 'नासदासीन्नो सदासी'दित्यनेन पारमार्थिकत्वतुच्छत्वयोर्निषेधेन व्यावहारिकसत्त्वपरत्वात्। न चानेन माया प्रतिपाद्यते; मायाशब्दार्थश्च नाज्ञानम्, मायिनो ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधादिति—वाच्यम्; उपाधेः प्रतिबिम्बपक्षपातित्वेनेश्वरासार्वज्ञ्याद्यापादनायोगात्, सार्वज्ञ्याद्यैश्वर्यस्य मायानिबन्धनत्वाच्च। न च—'मय ज्ञान' इति धात्वर्थानुसारान्माया कथमज्ञानमिति वाच्यम्; 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'ति श्रुत्या मायाविद्ययोरैक्यप्रतिपादनान्माया अज्ञानमेव। 'घट चेष्टाया'मिति धातुजस्यापि घटशब्दस्य

पदात् 'तरति शोकमात्मवि' दित्यादिश्रुतिः, 'ज्ञानेन तु तदज्ञानं येषां नाशितमि'त्यादिस्मृतिश्च मानम्। **नासदासीदिति।** उक्तवाक्यपूर्ववर्तिनेत्यादिः। **प्रतिबिम्बपक्षपातित्वेन** प्रतिबिम्बं प्रत्येवावरकत्वादिना। **ऐक्यप्रतिपादनादिति।** शुद्धसत्त्वमलिनसत्त्वाभ्यामुपाधिभ्यां मायाविद्ययोर्भेदेन मायागतः प्रतिबिम्बरूप आभास ईशः, अविद्यागतः स जीव इति जीवेशावित्यादिनोक्त्वा, 'माया चाविद्या च स्वयमेवे'त्यनेनैकव्यक्तिरूपत्वप्रतिपादनादित्यर्थः। वस्तु निर्वाच्यम्। विचित्रकार्यपरिणामित्वेन मायापदस्यावरकत्वेनाविद्यापदस्य प्रयोगः, मायायां बिम्बमीशः प्रतिबिम्बं जीवः। तथाचोक्तोपाधिकृतभेदस्याप्य-

**चेष्टावाचकत्वाभाववदत्रापि ज्ञानवाचकत्वाभावात् । माया प्रज्ञा वयुनमिति ज्ञानपर्याये निघण्टुकारवचनं च ज्ञानाकारपरिणामित्वादज्ञानस्योपपन्नम् । वृत्तिज्ञानस्याज्ञानाभिन्नत्वादज्ञान-**

---

नङ्गीकारान्मायाविद्ययोरत्यन्ताभेद इति प्रतिपादनादित्येवार्थः । **परिणामित्वादिति ।** मायापरिणामत्वेन ज्ञाने मायापदप्रयोगः । सुखादेर्मायापरिणामत्वेऽपि वृत्तिज्ञान एव भूरिप्रयोगवशान्निरूढलक्षणेति भावः । वस्तुतः प्रमित्यर्थकस्य माधातोर्मायेति पदं ज्ञानार्थकं 'माच्छासासिसूभ्यो य' इत्यौणादिकसूत्रसिद्धयप्रत्ययान्तम्, 'मय ज्ञान' इति तु पाणिनीयधातुपाठे नास्त्येव; 'अयवयपयमयचयतयणयगता'वित्यस्यैव धातुपाठे सत्त्वात् । यत्तु—'चिन्तिपूजी'त्यादौ चकारान्मयधातोरङ् 'प्रत्यय इति—तन्न; चकाराच्चोलयतेरङ्प्रत्ययेन तुलेति हरदत्तादिभिरुक्तत्वात्तुलाशब्दस्याङ्प्रत्ययान्तत्वेऽपि मायाशब्दस्य तथात्वे मानाभावात्, दीर्घत्वासंभवान्मायापदस्योज्वलदत्तीयादिवृत्तिषु माच्छेत्यादिसूत्रोदाहरणत्वेनोक्त्यनुपपत्तेश्च । तथा च 'मा मान' इति धातुपाठान्मानस्य च परिणामस्यैव ज्ञानरूपस्यापि संभवेन योगेन ज्ञानार्थकत्वेऽपि रूढ्याऽज्ञानार्थकं मायापदम् ॥

यत्तूज्वलदत्तादिवृत्तौ माया छद्मेति व्याख्यानं तदस्मदविरुद्धमेव; दुर्घटकार्यकारित्वस्य रूढ्यर्थगुणस्य छद्मन्यपि संभवात् । अत एव 'माया स्यात्साम्बरीबुद्ध्योर्मायः पीताम्बरे सुरे' इति मेदिन्यप्यविरुद्धा; साम्बर्यां[1] विद्यायामप्युक्तरूढ्यर्थगुणसंभवात् । न च दुर्घटकारित्वमेव रूढ्यर्थोऽस्त्विति—वाच्यम्; 'ऋतेऽर्थं यत्प्रतीयेत' त्यादिस्मृत्या मृषात्वविशिष्टस्य मायापदशक्यत्वबोधनात् । एवं च दुर्घटकारिणि निरूढलक्षणास्वीकाराद्भूरिप्रयोगः तिलरसमुख्यार्थकस्यापि तैलपदस्य

[1] शाम्बर्यां—ग.

**स्यैवानिर्वचनीयविचित्रशक्तियोगाच्च विचित्रशक्तिमति माया-शब्दप्रयोगानुपपत्तिः; क्वचिन्मणिमन्त्रादौ तत्प्रयोगस्तूप-चारात्। न च—शुक्तिरूप्यादौ मायाशब्दाप्रयोगान्न मृषार्थोऽ-यमिति—वाच्यम्; वज्रादौ पृथिवीत्वादिव्यवहाराभावेऽपि**

---

[1]सर्षपरसे निरूढगौणत्वेन भूरिप्रयोगवत्। वस्तुतोऽन्यथाभावेन ज्ञाय-मानक्रियाया एव छद्मत्वेन छद्मापि मायापदरूढ्यर्थमिथ्याभूतमेवेति ध्येयम्। **विचित्रशक्तीति**। विचित्रोपादानत्वेत्यर्थः, अनिर्वचनीय-विचित्रस्य निमित्तमात्रे मायाविपुरुषादौ तत्प्रयोगाभावात्। **क्वचिदिति**। मन्त्रविशेषादिरूपमायाश्रयत्वेन पुरुषे मायाविपदप्रयोगादित्यादिः। **उप-चारात्** मिथ्याभूतार्थनिमित्तत्वात्। **व्यवहाराभावेऽपीति**। व्यञ्ज-काभावदशायामिति शेषः। व्यञ्जकदशायां तु वज्रादौ पृथिवीत्वादेरिव रूप्यादावपि मायात्वं व्यवह्रियत एव। अत एव—

'यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम्'॥

इति साङ्ख्यवाक्येन दृश्यमात्रे मायात्वं व्यवहृतम्। किंच 'कष्टं कर्मे'त्यनुभवेन क्रियामात्रस्य दुःखजनकत्वेऽपि 'इदानीं मे दुःख'मिति सर्वदा न व्यवहारः; प्रकृष्टदुःखकाल एव तद्व्यवहारात्, तथा चमत्कारविशेषाधायकत्वेन प्रकृष्टमायायामेव मायापदप्रयोगः। अतएव—

'माया ह्येषा मया सृष्टा नैवं मां द्रष्टुमर्हसि'॥

इति नारदं प्रति भगवद्वाक्ये दृश्यमानस्य विश्वरूपस्य प्रतिपन्नो-पाधौ निषेधत्वे मायात्वं हेतूकृतम्। 'यदचरस्तन्वा वावृधानो बला-नीन्द्रप्रब्रुवाणो जनेषु। मायेत्साते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से' इत्यस्यामृचि वेद्यशत्रोर्निषेध्यत्वे मायात्वं हेतूकृतम्। तथा

---

[1] सार्षप—**क.**

**पृथिवीत्ववत् व्यवहाराभावेऽपि मायात्वानपायात्, ऐन्द्रजालिकादौ बहुशो मायाशब्दप्रयोगदर्शनाच्च, मायाया अज्ञानान्यत्वे ज्ञाननिवर्त्यत्वविरोधाच्च ।) नीहारतमःशब्दावप्यस्मिन्मते अज्ञानस्यावारकत्वाद्युज्येते नान्यमते । अनृतनीहारादि-**

---

'भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्माददूय एवायमात्मे' ति तापनीये भूतेन्द्रियादीनां मायामयत्वेन तत्प्रविष्टस्याप्यात्मनस्तच्छून्यत्वेनाद्वयस्वभावत्वमुक्तम् । 'मयश्च सम्बरश्चैव[1] महामायाधरावुभौ । पर्जन्यवारुणी माये व्यधत्ता' मिति हारिवंशे पर्जन्यवारुणास्त्राभ्यां मन्त्रविशेषविशिष्टाभ्यां जनिते मिथ्याभूते मायापदं प्रयुक्तम् । भागवतादावपि मिथ्यामारीचस्य 'मायामृगं दयितयेप्सित' मित्यादिना मायात्वमुक्तम् । रामशरवेध्यत्वादिकं तु न सत्यत्वे प्रयोजकम्; यथानुभवमर्थक्रियाकारित्वस्य मिथ्याभूतेऽपि संभवात्, मिथ्यात्वेन त्वदुक्तैन्द्रजालिकादेरर्थक्रियाकारित्वदर्शनात् । ऐन्द्रजालिकादौ मायाशब्दप्रयोगादपि तस्य मिथ्यारूढत्वम् । न च—शक्तिविशेषरूपमायापदमुख्यार्थजन्यधीविषयत्वात्तत्रोपचारात्तत्प्रयोग इति—वाच्यम्; मिथ्यारूपमुख्यार्थजनकत्वेन शक्तिविशेष एवोपचारात्, अन्यथोक्तस्मृत्यादिविरोधादित्याशयेनाह—**ऐन्द्रेति** । **नीहारतमःशब्दाविति** । 'न तं विदाथ य इमा जजान अन्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती' त्यत्र, 'सुषुप्तिकाले सकले विलीने तमोऽभिभूत' इत्यादौ चेत्यादिः । **युज्येतेति** । अज्ञान इत्यादिः । **नान्यमत इति** । अज्ञानस्यैवावारकत्वादिसंभवस्योक्तत्वादिति शेषः । अत एव माधवीयभाष्ये व्याख्यातं 'हे नरास्तं न जानीथ य इमाः प्रजा जजान जनितवान् तत्र हेतुः

[1] शम्बरश्चैव—ग

**शब्दानां दुष्कर्मपरत्वे श्रुत्यन्तरोक्तजीवेशभेदकत्वोपादानत्वादि-विरोधश्च। तस्मात् 'अनृतेन प्रत्यूढाः' 'नीहारेण प्रावृताः' 'तम आसीत्' 'मायां तु प्रकृतिं विद्यात्' 'अजामेकां लोहितशुक्लकृ-**

---

युष्माकामन्यदेवान्तरं व्यवधानं बभूव तदुच्यते नीहारसदृशेनाज्ञानेन प्रावृता यूयं जल्प्या 'अहं मनुष्य' इत्यादिजल्पनशीला असून् प्राणान् तर्पयन्ति उक्थं स्तोत्रविशेषादिकं शंसन्ति चरन्ति ऐहिकामुष्मिकभोग-मात्रपरा' इति । **दुष्कर्मपरत्वे** आवरकपापपरत्वे । **श्रुत्यन्तरेति** । 'अनीशया शोचति मुह्यमान' इत्यादिश्रुत्युक्तेत्यर्थः । आवरकस्ये-त्यादिः । मोहप्रयुक्तेनेशाया ईशत्वस्य विरोधिना ईशभेदेन शोचति संसरतीत्युक्तश्रुत्यर्थः । एषा मायेत्याद्युक्तश्रुत्यापि जीवेशभेदकत्वं कार्य-मात्रोपादानत्वमावरकादिरूपत्वं च मायाया उक्तम् । **उपादानत्वा-दीत्यादिना** त्रिगुणात्मकत्वादि ग्राह्यम् । तथाच कर्मण आवरकत्वे तस्यैव मोहत्वाद्भेदकत्वादीति वाच्यम् । न च सादेस्तस्यानादिभेद-प्रयोजकत्वं सकलकार्योपादानत्वादिकं वा संभवतीति भावः ।

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
भवत्यभेदो भेदश्च तस्याज्ञानकृत'

इति विष्णुपुराणादौ स्पष्टमज्ञानस्य भेदकत्वादीति[1] बोध्यम् ।

'देवादिभेदमध्यास्ते नास्त्येवावरणो[2] हि सः'

इति विष्णुपुराणे भेदनास्तित्वे आवरकप्रयुक्तत्वस्य हेतूकृतत्वात्तस्य तत्प्रा-माणिकमित्यादि बोध्यम् । **तस्मादित्यादि** । नीहारेण जल्प्या असुतृप उक्थशासश्चरन्तीत्यन्वयाद्दृश्यमात्रस्य नीहाररूपावरणप्रयोज्यत्वं 'नास-दासीन्नो सदासीत्तम आसी' दित्यादौ सदसद्विलक्षणत्वं प्रोक्तं न पापस्य संभवतीत्यदि बोध्यम् ॥

[1] भेदकत्वादि–क. ग.  [2] वरणे–ग.

ष्णाम्' 'अविद्यायामन्तरे वर्तमानाः' 'भूयश्चान्ते विश्वमाया-निवृत्ति'रित्याद्याः श्रुतयो वर्णिता अज्ञाने प्रमाणमिति स्थितम् ॥

इत्यद्वैतसिद्धावविद्याप्रतिपादकश्रुत्युपपत्तिः ॥

'तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तनाशायाविद्याश्रुत्युपपादनम् ॥

॥ इति गुरुचन्द्रिकायामविद्याप्रतिपादकश्रुत्युपपत्तिः ॥

## मैसूरु राजकीयप्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः संमुद्रितानां क्रय्याणां प्रबन्धानां

# प्रसिद्धिपत्रिका.

### श्रौतसूत्रम्.

| | | रू. | आ. | पै. |
|---|---|---|---|---|
| 73 | (1) आपस्तम्बशुल्बसूत्रं व्याख्यात्रयोपेतम्.... | 2 | 12 | 0 |

### गृह्यसूत्रम्.

| | | | | |
|---|---|---|---|---|
| 41 | (2) खादिरगृह्यसूत्रं रुद्रस्कन्दीयसहितम् .... | 1 | 0 | 0 |
| 55 | (3) बोधायनगृह्यसूत्रम् परिशिष्टसहितम् .... | 2 | 4 | 0 |

### धर्मसूत्रम्.

| | | | | |
|---|---|---|---|---|
| 50 | (4) गौतमधर्मसूत्रं मस्करिव्याख्यासहितम् | 3 | 8 | 0 |

### धर्मशास्त्रनिबन्धः.

| | | | | |
|---|---|---|---|---|
| 43 | (5) स्मृतिचन्द्रिका (प्रथमसंपुटं संस्कारकाण्डः). | 1 | 8 | 0 |
| 44 | (6) स्मृतिचन्द्रिका (द्वितीयसंपुटं आह्निककाण्डः). | 2 | 8 | 0 |
| 45 | (7) स्मृतिचन्द्रिका (तृतीयसंपुटं व्यवहारकाण्डः). | 2 | 0 | 0 |
| 48 | (8) स्मृतिचन्द्रिका (चतुर्थसंपुटं व्यवहारकाण्डः). | 3 | 0 | 0 |
| 52 | (9) स्मृतिचन्द्रिका (पञ्चमसंपुटं श्राद्धकाण्डः) | 3 | 4 | 0 |
| 56 | (10) स्मृतिचन्द्रिका (षष्ठसंपुटं आशौचकाण्डः). | 1 | 8 | 0 |

| | | | रू. | आ. | पै. |
|---|---|---|---|---|---|
| 71 | (11) | सरस्वतीविलासः प्रतापरुद्रविरचितः (व्यवहारमात्रम्). | 2 | 8 | 0 |

## अर्थशास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 64 | (12) | अर्थशास्त्रं कौटिलीयम् .... | 3 | 0 | 0 |
| 65 | (13) | अर्थशास्त्रपदसूची संपुटं I .... | 2 | 8 | 0 |
| 66 | (14) | " संपुटं II .... | 2 | 8 | 0 |
| 68 | (15) | " संपुटं III .... | 2 | 0 | 0 |

## अलङ्कारशास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 51 | (16) | अलङ्कारमणिहारः संपुटं I .... | 3 | 0 | 0 |
| 58 | (17) | " संपुटं II ... | 3 | 8 | 0 |
| 62 | (18) | " संपुटं III .... | 2 | 8 | 0 |
| 72 | (19) | " संपुटं IV .... | 2 | 4 | 0 |
| 60 | (20) | काव्यप्रकाशः सङ्केताख्यटीकायुतः .... | 3 | 8 | 0 |

## वैद्यशास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 71 | (21) | आयुर्वेदसूत्रं योगानन्दीयव्याख्योपेतम्.... | 2 | 0 | 0 |

## ज्योतिश्शास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 63 | (22) | विद्यामाधवीयं विष्णुशर्मविरचित— मुहूर्तदीपिकाख्यव्याख्यायुतम् संपुटं I .... | 2 | 0 | 0 |
| 67 | (23) | " संपुटं II .... | 2 | 0 | 0 |
| 70 | (24) | " संपुटं III .... | 1 | 8 | 0 |

## अद्वैतवेदान्तः.

| | | | | | |
|---|---|---|---|---|---|
| 75 | (25) | अद्वैतसिद्धिः, गुरुचन्द्रिकोपेता संपुटं I | 3 | 12 | 0 |
| 78 | (26) | " संपुटं II | | | |

## विशिष्टाद्वैतवेदान्तः.

| | | | रू. | आ. | पै. |
|---|---|---|---|---|---|
| 76 | (27) | सर्वार्थसिद्धयाख्यवृत्तियुत तत्त्वमुक्ताकलापः—आनन्ददायिनी—भावप्रकाशा—व्याख्याद्वयोपेतः—संपुटं I. | 4 | 0 | 0 |

## द्वैतवेदान्तः.

| | | | | | |
|---|---|---|---|---|---|
| 53 | (28) | ब्रह्मसूत्रभाष्यं आनन्दतीर्थीयं तत्वप्रकाशिकातात्पर्यचन्द्रिकाप्रकाशैः सहितम्—संपुटं III. | 4 | 0 | 0 |
| 59 | (29) | ब्रह्मसूत्रभाष्यं आनन्दतीर्थीयं तत्वप्रकाशिका—तात्पर्यचन्द्रिका—प्रकाशैः सहितम्—संपुटं IV. | 3 | 8 | 0 |
| 74 | (30) | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम्-संपुटं I. | 3 | 0 | 0 |
| 77 | (31) | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम्-संपुटं II. | 2 | 0 | 0 |

## प्रकीर्णकम्.

| | | | | | |
|---|---|---|---|---|---|
| 69 | (32) | अभिलषितार्थचिन्तामणिः—संपुटं I. (नानाशास्त्रीयविषयसंग्रहः). | 2 | 0 | 0 |

University of Mysore

Oriental Library Publications

GENERAL EDITOR

M. S. BASAVALINGAYYA, M.A.,
*Curator, Govt. Oriental Library, Mysore.*

SANSKRIT SERIES No. 78

# अद्वैतसिद्धिः

## गुरुचन्द्रिकाख्यव्याख्यासमलङ्कृता

तृतीयसम्पुटम्

---

# THE ADVAITASIDDHI

WITH THE

## GURUCHANDRIKA

Vol. III

EDITED BY

VIDVAN S. NÁRAYANASWAMI SASTRI

---

MYSORE:

PRINTED BY THE ASST. SUPDT., GOVT. BRANCH PRESS

1939

# भूमिका.

विदितमेवेदं समेषां यदद्वैतसिद्ध्याख्यो ग्रन्थो गुरुचन्द्रिकाख्य-व्याख्यया समलङ्कृत्य महीशूरराजकीयप्राच्यकोशागारात् प्रकाश्यत इति। तत्र आगमबाधोद्धारान्तभागोऽज्ञानवादान्तभागश्च सम्पुटद्वया-त्मना सम्मुद्र्य वत्सरद्वयात्पूर्वं वाचकमहाशयावगतिं नीतौ। इदानी-मवशिष्टप्रथमपरिच्छेदान्तभागोऽपि एकसम्पुटात्मना सम्मुद्र्य प्रकाशितो-वर्तते। अस्या गुरुचन्द्रिकाया अद्वैतसिद्धौ प्रथमपरिच्छेदपर्यन्तमेव उपलब्धतया तावत्पर्यन्तमेव इयं प्रकाशिता। अवशिष्टपरिच्छेदानामपि कृतेरस्या उपलब्धौ तन्मुद्रणे वयं सन्नद्धा एव स्मः॥

प्रथमसम्पुटोपोद्घाते आगमबाधोद्धाराच्छिष्टो भागः द्वितीय-सम्पुटात्मना प्रकाशयिष्यत इति लिखितमपि कालविलम्बमसहमानै-रस्माभिर्वाचकानुकूल्यार्थं स एव सम्पुटद्वयात्मना विभज्य प्रकाशितः॥

एतत्सम्पुटान्ते वाचकसौकर्याय सम्पुटत्रयेऽपि ग्रन्थान्तरेभ्य-स्सङ्गृहीतानां प्रमाणवचनानां आकरादिरकारादिक्रमेण निर्दिष्टः॥

ग्रन्थस्यास्य द्वितीयतृतीयसम्पुटयोर्मुद्रणे त्रय आदर्शा उपयुक्ताः॥

तेषु प्रथमः 'क' संज्ञकः अस्मत्प्राच्यकोशागारीय एव। द्वितीयः 'ख' संज्ञकः विद्याविशारदेत्यादिबिरुदाङ्कितानां आस्थान-धर्माधिकारिणां कुणिगल्-रामशास्त्रिणां सकाशादुपलब्धः॥

तृतीयो 'ग' संज्ञकः श्रृङ्गेरीवास्तव्यानां विदुषां वि. एस्. रामचन्द्रशास्त्रिणां सकाशादुपलब्धः ॥

आदर्शपुस्तकदानेन उपकृतवतामेषामुपकारं स्मरामः ॥

ग्रन्थस्यास्य द्वितीयतृतीयसम्पुटयोः प्रकाशने बहूपकृतवतां श्रीमन्महाराजसंस्कृतमहापाठशालाऽद्वैतवेदान्तप्रधानोपाध्यायानां आस्थानविदुषां पा. नारायणशास्त्रिमहोदयानामत्यन्तं कृतज्ञतां प्रदर्शयाम इति शम् ॥

M. S. BASAVALINGAYYA,
*General Editor.*

# विषयाणामनुक्रमणिका

# सव्याख्या अद्वैतसिद्धिः

## तृतीय सम्पुटम्

## अद्वैतसिद्धिः

### अथाज्ञानवादे अर्थापत्त्युपपत्तिः

जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिश्च तत्र मानम्। न च जीवस्य ब्रह्मभेदेनैव तादृगप्रकाशोपपत्तिः; जीवब्रह्मभेदस्याग्रे निरसिष्यमाणत्वात्। न चानवच्छिन्नानन्दस्यापि प्रकाशमानप्रत्यङ्मात्रत्वेनाप्रकाशमानत्वानुपपत्तिः; शरीरप्रतियोगिकस्यात्मनि स्वरूपभेदस्यात्माकारेण प्रकाशमानत्वेऽपि भेदाकारेणा-

---

## गुरुचन्द्रिका

### अथाज्ञानवादे अर्थापत्त्युपपत्तिः

आत्माकारेण—आत्मत्वेन । भेदाकारेण—भेदत्वेन ।

**प्रकाशमानत्ववद्रूपान्तरेण ब्रह्मणः प्रकाशमानत्वेऽप्युक्ताकारेणाविद्यावशादप्रकाशमानत्वोपपत्तेरुक्तत्वात् ॥**

**भ्रमस्य सोपादानत्वान्यथानुपपत्तिरप्यविद्यायां प्रमाणम्। न चान्तःकरणमुपादानम्; अन्तःकरणस्य ज्ञानजनने प्रमाणव्यापारसापेक्षत्वेन प्रमाणाविषये शुक्तिरूप्यादौ ज्ञानाजनक-**

**रूपान्तरेण**—अविद्योपहितरूपेण। **उक्ताकारेण**—अनवच्छिन्नानन्दरूपशुद्धस्वरूपेण। शुद्धरूपमिदानीं न भातीति भावः। अथवा—**रूपान्तरेण**—शुद्धचैतन्यरूपेण। **उक्ताकारेण**—पूर्णानन्दरूपेण। शुद्धस्योपहितधीविषयत्वेऽप्युक्तरूपयोराविद्यकभेदान्न पूर्णानन्दस्य तद्विषयत्वमिति भावः। वस्तुत उपहितभाने शुद्धभाननियमेऽपि चरमवृत्तेरेव विरोधित्वात्प्रकाशमानेऽपि चन्द्रादिस्वरूप इवात्मन्यविद्या न विरुद्धेति ध्येयम् ॥

**प्रमाणव्यापारसापेक्षत्वेन**—विषयगतप्रमाणव्यापारसापेक्षत्वेन। **प्रमाणाविषये**—प्रमाणव्यापारशून्ये। तथाच[1] शुक्त्यादौ चक्षुरादिप्रमाणव्यापारस्य सम्प्रयोगादेः[2] सत्त्वेऽपि रूप्यादौ तदुत्पत्तिकालीनात्तज्ज्ञानात्पूर्वं तदसत्त्वात्तज्ज्ञानासंभवः। न च—सम्प्रयोगस्येव दोषस्यापि चक्षुरादिव्यापारत्वमिति—वाच्यम्; दोषस्य चक्षुरादिजन्यस्य रूप्यचाक्षुषमात्रे वक्तुमशक्यत्वात्, चक्षुराद्यजन्यदोषेणापि रूप्यचाक्षुषभ्रमत्वोत्पत्तेः[3]। [4]अथ—मास्तु दोषो व्यापारः, तथापि चाक्षुषादिभ्रमजनने मनसश्चक्षुरादिप्रमाणव्यापारो न सहकारी; किंतु दोष इति—चेन्न; दोषो मनः शुक्त्यादिकं वा भ्रमपरिणामीत्यत्र विनिगमकाभावादतिरिक्ताज्ञानस्य परिणामित्वेन कल्पनौचित्यात्, दोषादीनामनुच्छेदे भ्रमबाधासंभवाच्च। एतेन—दोषाज्जाते[5] रूप्यादौ चक्षुरादिप्रमाण-

[1] तथा—ख. [2] संयोगादेः—ग. [3] भ्रमोत्पत्तेः—क. [4] अथवा—ख.
[5] ज्ञायते—क. ख.

**त्वात्, सादित्वेनानादिभ्रमपरम्परानुपादानत्वाच्च। नच ब्रह्मै-वोपादानम्; तस्यापरिणामित्वात्। नच विवर्ताधिष्ठानत्वेन शुक्त्यादेरिवोपादानत्वम्; अविद्यामन्तरेणातात्त्विकान्यथाभाव-लक्षणस्य विवर्तस्यैवासंभवात्, शुक्त्यादेरधिष्ठानावच्छेदकतया**

---

व्यापारोत्पत्त्या पश्चात्तद्भ्रमो मनःपरिणामोऽस्त्वित्यपास्तम्; दोषसमवधानोत्तरं भ्रमाविलम्बात्, उक्तव्यापारकल्पने गौरवात्। **सादित्वेनेति।** प्रवाहरूपेणानादिभ्रमपरम्परायां न मन उपादानम्; मनोभ्रमे उपादानमनाद्यवश्यं वाच्यम्, अन्यथा तत्राप्युपादानापेक्षायामनवस्था गौरवं च। तथाच तदेव मनसीवाकाशादावप्युपादानम्। दृष्टिसृष्टिपक्षे तु मनस उपादानत्वेऽपि विचित्रकार्ये विचित्रज्ञा[1]नमप्युपादानम्; कारण[2]-वैचित्र्यं विना कार्ये तदसंभवात् कारणान्तरे वैचित्र्यस्याप्यज्ञानरूप-शक्तिविशेषरूपत्वात् शुक्तिरूप्यादिभ्रमेष्वपि मनआदिसादीनामविनिगम्यत्वादनाद्यज्ञानमेवोपादानमिति भावः। **असंभवादिति।** अतात्त्विकत्वस्य तत्त्वप्रमानिवर्त्यत्वव्याप्यत्वेन रूप्यादौ ब्रह्मादुक्तनिवर्त्यत्वस्य च प्रपञ्चे साक्षात्कल्पने गौरवस्योक्तत्वेन तत्त्वधीनाश्यतया श्रुत्यनुभवादिसिद्धस्याज्ञानस्य नाशद्वारैव तत्कल्पनीयम्। तथाचाज्ञानस्यानुपादानत्वे तन्नाशोऽपि प्रपञ्चनाशे हेतुः कल्प्यः, उपादानत्वे तु क्लृप्त इत्युपादानत्वमावश्यकम्। किंच ब्रह्मणो मिथ्याभूतोऽन्यथा भावो विवर्तः। नच ब्रह्मान्यथा भवतीति तद्गताविद्याया अन्यथाभवनं वाच्यम्, नच यस्य कारणस्य [3]विषमसत्ताकं यत्कार्यं तत्तस्य विवर्त इति लक्षणात् विनाप्यविद्यां ब्रह्मणि विवर्तो जायतामिति—वाच्यम्; विकारिणमुपादानं विना कार्यस्यादृष्टत्वात्। न हि विकारि मृदाद्यनुपादाय घटादिकार्यजननाय कश्चित्प्रवर्तते। तथाच कल्पनाया

---

[1] विचित्राज्ञा—ग. [2] कारण—ग. [3] विषमसत्ताकयत्कार्य—क.

विवर्ताधिष्ठानत्वाभावात् । न चोपादानापेक्षस्य विवर्तस्य तात्त्विकातिरिक्तोपादानकल्पनवदविद्यादेराश्रयसापेक्षस्य ब्रह्मातिरिक्तमतात्त्विकमधिकरणं कल्प्यं स्यादिति—वाच्यम्; ब्रह्मण एव विकारित्वेऽनित्यत्वादिप्रसक्तिवत् ब्रह्मण एवाधिष्ठानत्वे बाधकाभावेन द्वितीयस्याधिकरणस्याकल्पनात्। न चासत्यस्य सत्यरूपान्तरापत्तिलक्षणपरिणाम्यनपेक्षत्वेन परिणामित्वेनापि नाविद्याकल्पनमिति—वाच्यम्; परिणामस्य परिणामिसत्तासमानसत्ताकत्वनियमेनासत्यत्वस्यैवाभावात् । नच—घटादौ स्वसमानसत्ताकोपादानकत्वदर्शनेन प्रपञ्चेऽपि तादृशोपादानकल्पने घटादेः स्वाधिकसत्ताकोपादानानपेक्षत्ववत् वियदादेरपि ब्रह्मानुपादानकत्वं स्यादिति—वाच्यम्; 'तदभिध्यानादेव तु तल्लिङ्गात्स' इत्यनेन न्यायेन घटादेरपि मृदवस्थचैतन्योपादानकतया तादृशोपादानानपेक्षत्वासिद्धेः । अत एव—रूप्येऽपि स्वसमानसत्ताकस्य निमित्तस्यापि कल्पनापत्तिरिति–निरस्तम्; निमित्तमात्रे वा इयं कल्पना, विशेषे वा। नाद्यः; अधिष्ठानरूपनिमित्तस्य सर्वत्राधिकसत्ताकत्वात्। द्वितीये तूत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य निमित्तत्वेनेष्टापत्तेः। नच—त्रिगुणात्मकं प्रधानमुपादानमिति—वाच्यम्; तस्यासत्यत्वेऽविद्यानातिरेकात् ।

---

दृष्टानुसारित्वेनाविद्यारूपविकारिसहकृतमेव ब्रह्म प्रपञ्चं जनयतीति कल्प्यत इति भावः। सत्यरूपान्तरापत्तिलक्षणेति। सत्यसंसृष्टा सत्यस्वरूपेत्यर्थः। नाविद्याकल्पनमिति। ब्रह्मण एव परिणामित्वसंभवादिति शेषः। अभावात्—विरोधात। मृदवस्थेति। 'सन् घट' इत्यादिधिया सद्ब्रह्मोपादानकत्वं 'मृद्घट' इत्यादिधियाऽ[1]न्वय-

---

[1] धिया–ग.

**सत्यत्वेऽपि सावयवं निरवयवं वा । आद्ये अनादित्वभङ्गः । द्वितीये परिणामित्वायोगो ब्रह्मवत् । न चाविद्यापक्षेऽपि समः पर्यनुयोगः ; तस्याः काल्पनिकत्वेन पर्यनुयोगायोगात् । तस्मादर्थापत्तिरविद्यायां प्रमाणम् ॥**

**इत्यद्वैतसिद्धावविद्यायामर्थापत्तिः ॥**

---

व्यतिरेकाभ्यां च मृदोऽप्युपादानत्वं न तु मृदवच्छिन्नचित्त्वेन हेतुत्वं येन गौरवमिति भावः । **पर्यनुयोगः**—सावयवत्वादिविकल्पः । **काल्पनिकत्वेन** युक्तिविरुद्धत्वव्याप्यमिथ्यात्वेन ॥

यत्तु—सत्यत्वपक्षेऽपीश्वरशक्तित्वेन न युक्तिविरुद्धत्वं दोष इति—तन्न ; ईश्वरीयत्वेन सर्वत्र तदापत्तेर्विचारलोपापत्तेः । मिथ्याभूतस्य तु युक्तिविरुद्धस्य त्वयापि स्वीकारात् । अविद्याया मिथ्यात्वे स्वीकृते दोषानवकाशः । वस्तुतोऽनवयवस्यापि परिणामित्वमव्याहतम् । ब्रह्मणस्तु श्रुतिविरोधान्न तत् । नच—मृदादिसावयवविलक्षणपरिणामिस्वीकारे दृष्टानुसारिकल्पनावश्यकत्वे विकारि कारणं विनैव कार्यं कल्प्यतामिति—वाच्यम् ; यावत्संभवं दृष्टानुसारेण कल्पनात् । अन्यथा तवाप्यतीन्द्रियविकारिकल्पने दृष्टविरोधात् । न चैवमपि सत्यं तदस्त्विति—वाच्यम् ; दृश्यत्वादिना श्रुत्यादिसिद्धज्ञाननाश्यत्वादिना च तस्य मिथ्यात्वात् । यदपि मृदाद्यवस्थचैतन्यस्य घटाद्युपादानत्वे नोक्तसूत्रं प्रमाणम् ; किंतु तस्य निमित्तत्व इति, तदपि न ; 'तदभिध्यानात्' 'सोऽकामयत बहु स्या'मिति सर्वकार्यात्मकतया स्वोत्पत्त्यभिधानात्, 'य आकाशमन्तरो यमयती'त्यादिलिङ्गाच्च, चेतनानधिष्ठितादचेतनात्कार्यासंभवेन कार्यमात्रं प्रति चेतने निमित्तत्वस्यावश्यं वाच्यत्वेन विनिगमकाभावात्सत्तादात्म्यप्रत्ययस्य कार्यमात्रे दर्शनाच्चोपादानत्वस्या-

## अथाज्ञानवादे तत्प्रतीत्युपपत्तिः.

सा चाविद्या साक्षिवेद्या, न तु शुद्धचित्प्रकाश्या। साक्षी चाविद्यावृत्तिप्रतिबिम्बितचैतन्यम्। तेन निर्दोषचित्प्रकाश्यत्वेनाज्ञानस्य पारमार्थिकत्वापत्तिः, मोक्षेऽपि तत्प्रकाशापत्तिः, न च तदानीमविद्याया निवृत्तत्वात्प्रकाशाभावः; प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगादित्यादिदोषानवकाशः। अत एवोच्यते राहुवत्स्वावृतचैतन्यप्रकाश्याविद्येति। न चैवं

प्यावश्यकत्वात्, स आत्मापि वाय्वादावुपादानं न त्वाकाशाद्येवेत्यर्थस्योक्तसूत्रात् स्फुटप्रत्ययात्, मृत्सहिततया आत्मनो घटाद्युपधायकत्वेन मृदवस्थचित्कारणत्वानपहारात्। 'विश्वस्य योनि'मित्यादिश्रुतिः 'योनिश्च हि गीयते' इत्यादिसूत्रं च स्पष्टमुक्तार्थे प्रमाणम्। **अत्रेदं बोध्यम्**—विकारिण उपादानत्वास्वीकारिणापि 'इदं रजतमि'त्यादिभ्रमेषु 'नेदं रजत'मित्यादिनिश्चयाभावो हेतुरवश्यं वाच्यः; अन्यथा उक्तनिश्चयसत्त्वे दोषात्तदापत्तेः। तथाचागृहीताप्रामाण्यकानाहार्यतादृशनिश्चयत्वेनाभावः कारणमिति तदपेक्षया लाघवात् 'नेदं रजत'मित्याकारकाज्ञानत्वेनोपादानत्वमेव युक्तम्। गृहीताप्रामाण्यके आहार्ये वोक्तानिश्चये[1] सत्युक्ताज्ञानसत्त्वादतादृशोक्तनिश्चये सति चोक्ताज्ञानासत्त्वा[2]दुक्तभ्रमोत्पादानुत्पादौ। **विस्तरेणानिर्वचनीयख्यातिविवेचने** विवेचितमिदमस्माभिः ॥

तर्कैरित्यादि—अज्ञानार्थापत्तिरक्षणम्।

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामविद्यायामर्थापत्तिः ॥

---

## अथाज्ञानवादे तत्प्रतीत्युपपत्तिः.

न चैवं न च कादाचित्काविद्यावृत्तिप्रतिबिम्बभास्यत्वे।

1 चोक्तनिश्चये–ग. 2 नसत्त्वा–ग.

**कदाचिदविद्याया अप्रतीत्यापत्तिः; इष्टापत्तेः, समाधौ तथाभ्युपगमात्। न चाविद्यावृत्तेर्दोषजन्यत्वादत्र कथमविद्यावृत्तिः? अविद्याया एव दोषत्वात्। न च वृत्तेरपि वृत्त्यन्तरप्रतिबिम्बितचिद्भास्यत्वेऽनवस्था। स्वस्या एव स्वभानोपाधित्वात्। ननु—प्रमाणागम्यायामविद्यायां प्रमाणोपन्यासवैयर्थ्यम्, न च—**

---

**अविद्याया एवेति।** भ्रमत्वावच्छिन्नेऽविद्यायाः परिणामितया हेतुत्वादविद्यारूपसाधारणदोषजत्वमक्षतम्, असाधारणदोषजत्वं (तु) शुक्तिरूप्यादिभ्रमरूपायामविद्यावृत्तावेव; भ्रमविषयहेतोरसाधारणदोषस्यैव भ्रमहेतुत्वात्। न अविद्यासुखादिकमसाधारणदोषजम्, येन तदाकारा वृत्तिस्तथा स्यात्। अथवा विषयविधया अविद्यादेः स्वाकाराविद्यावृत्तौ हेतुत्वस्वीकारात्स्वकालीनवृत्तित्वेनाविद्याद्यनादिविषयजन्यत्वात् सुखादिकालीनवृत्तित्वेनापि सुखादिजन्यत्वस्य[1] स्वीकारादविद्यासुखाद्याकाराऽविद्यावृत्तिरप्यसाधारणदोषजा। व्यवहारकाले च न तदधिष्ठानज्ञानमिति न सा बाध्यते। न चाविद्यावृत्तिर्मनोवृत्तिविषयेऽपि स्यादिति—वाच्यम्; प्रातीतिकत्वोपहितविषयकाविद्यावृत्तौ प्रातीतिकनिष्ठविषयतया ज्ञानस्य स्मरणरूपाविद्यावृत्तावुद्बोधकादेश्च हेतुत्वात्तादृशविशेषहेतुद्वयाभावात् तत्र तदापत्त्यसंभवात्। **स्वस्या एवेति।** अविद्यादेः समाध्यादिकाले भानवारणाय संस्काराय च तत्र वृत्तिरावश्यकी। तस्यां संस्कारस्तु तयैव; स्वस्वविषयकसंस्कारे[2] तस्याहेतुत्वादिति, तस्यां सा नावश्यकीति भावः। **प्रमाणोपनीतेत्यादि।** प्रमाणवृत्तिविषयीभूतमेवासद्व्यावृत्तिविशिष्टाज्ञानं साक्षिणा गृह्यते न तु तदविषयीभूतमित्यर्थः। पक्षविशेषान्तर्भावेनैवानुमितिः, अन्यथा साध्यपक्षयोः संसर्गाज्ञानं तया न निवर्तेत। तथाचासद्व्यावृत्तिविशिष्टरूपेण प्रमाणगम्यत्वेऽपि सविषयकत्वादिरूपेण साक्षिमात्रवेद्यमज्ञानमिति सिद्धान्तो न विरुध्यत

---

1 सुखादिहेतुजन्यत्वस्य—ग. 2 स्वस्वविषय विषयसंस्कारे—ख. स्वस्वविषयसंस्कारे—क.

प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यत इति—वाच्यम्; अज्ञानमगृह्णतां तत्रासद्व्यावृत्तिबोधेऽप्यसामर्थ्यादिति—चेन्न; प्रमाणोपनीतासद्व्यावृत्तिविशिष्टाज्ञानं हि साक्षिणा गृह्यते। तथाचासद्व्यावृत्त्युपनयने प्रमाणानां चरितार्थत्वान्न काप्यनुपपत्तिः ॥

इत्यद्वैतसिद्धावविद्याप्रतीत्युपपत्तिः ॥

## अथाविद्यायाश्चिन्मात्राश्रयत्वोपपत्तिः

अविद्याया आश्रयस्तु शुद्धं ब्रह्मैव। तदुक्तम्—

‘आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः’॥

इति ॥

दर्पणस्य मुखमात्रसंबन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीवे संसारः, न बिम्बे ब्रह्मणि; उपाधेः प्रतिबिम्बपक्षपातित्वात्। ननु—कथं चैतन्यमज्ञानाश्रयः? तस्य प्रकाश-

---

इत्याशयेनाह—तथाचेति। व्यावृत्त्युपनयने व्यावृत्तिविशिष्टाज्ञानप्रमापणे। चरितार्थत्वादज्ञाननिवृत्तिरूपफलवत्त्वात्। तथाच विशिष्टाकारज्ञाने विशेष्यस्याविशिष्टरूपेण भाननियमस्वीकारेऽपि प्रकृते विशिष्टरूपेण प्रमेयता, न त्वविशिष्टरूपेण; तत्र प्रमाविषयत्वेऽप्युक्तफलाभावादिति, तत्र प्रमाणं नाज्ञातज्ञापकमिति भावः ॥

तर्कैरित्यादि—अविद्याबुद्ध्युपपादनम्।

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामविद्याप्रतीत्युपपत्तिः ॥

अथाविद्यायाश्चिन्मात्राश्रयत्वोपपत्तिः

प्रतिबिम्बपक्षपातित्वात्—प्रतिबिम्ब एव कार्यविशेषजनक-

**स्वरूपत्वात्, तयोश्च तमःप्रकाशवद्विरुद्धस्वभावत्वादिति—चेन्न ; अज्ञानविरोधि ज्ञानं हि न चैतन्यमात्रम् ; किंतु वृत्तिप्रतिबिम्बितम् ; तच्च नाविद्याश्रयः, यच्चाविद्याश्रयः, तच्च नाज्ञानविरोधि । न च तर्हि शुद्धचितोऽज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिः ; वृत्त्यवच्छेदेन तस्या एवाज्ञानविरोधित्वात्, स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत्स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात् । नन्वहमज्ञ इति धर्मिग्राहकेण साक्षिणा अहङ्काराश्रितत्वेनाज्ञानस्य ग्रहणाद्बाधः, न च—स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इतिवदज्ञानाश्रयचिदैक्याध्यासात्**

---

त्वात् । यथा मलिनदर्पणो मालिन्यं स्वसंसर्गं च प्रतिबिम्ब एव जनयति, न तु बिम्बे ; तथैवानुभवात्, तथाऽविद्यापि जीवं प्रत्येवावरकत्वेन श्रुत्यनुभवादिसिद्धत्वादावरणप्रयुक्तव्यवहारं मनआदिकार्यं जीवे जनयति, न त्वीश इति भावः । अज्ञानं प्रति ज्ञाने विरोधित्वं नाशकत्वम्, तच्च न चिन्मात्रे ; तथाननुभवात्, किंतु प्रमाणवृत्तिप्रतिबिम्बिताचितीति नोक्तदोष इत्याह—**नाज्ञानेति । स्वतोऽविद्यातत्कार्यभासकस्येति** । यद्वृत्त्यवच्छिन्नस्य यदविद्यातत्कार्यनाशकत्वं तां वृत्तिं विनैव तदविद्यातत्कार्यभासकस्येत्यर्थः । **वृत्त्यवच्छेदेन** तदधिष्ठानगोचरवृत्त्यवच्छेदेन । **स्थौल्येति** । अहङ्कारावच्छिन्नचितीत्यादिः । **चिदैक्याध्यासात्** चित्यहङ्कारस्यैक्येनाध्यासात् । यद्यप्यहङ्कारोपादानीभूतं मूलाज्ञानं नावच्छिन्नाश्रयताकम् ; अत इदमंशावच्छिन्नाश्रयताकतूलाज्ञानपरिणामरूप्यादेरिदं रूप्यमिति भ्रमरीत्या 'नाहमज्ञ' इति भ्रमः ; तथापि घटादेर्मृदादिपरिणामत्वात् मृदवच्छिन्नचितीवाहङ्कारादेरज्ञानपरिणामत्वादज्ञानावच्छिन्नचित्यैक्याध्यासादुक्तभ्रम

**दग्धृत्वायसोरेकाग्निसंबन्धाद्यो दहतीतिवदज्ञानाहङ्कारयोरेकचिदैक्याध्यासाद्वा 'अहमज्ञ' इति धीर्भ्रान्तेति—वाच्यम्; चितोऽज्ञानाश्रयत्वासिद्ध्या अन्योन्याश्रयादिति — चेन्न; अहङ्कारस्याविद्याधीनत्वेन तदनाश्रयतया चित एवाज्ञानाश्रयत्वे सिद्धे 'अहमज्ञ' इति प्रतीतेरैक्याध्यासनिबन्धनत्वेनाबाधकत्वात्। नचाविद्याश्रयत्वादेवाहङ्कारोऽकल्पितोऽस्तु, कल्पित एव वा तदाश्रयत्वमस्तु, अविद्यायामनुपपत्तेरलङ्कारत्वादिति—वाच्यम्; अहमर्थस्य ज्ञाननिवर्त्यत्वेन दृश्यत्वेनाकल्पितत्वायोगात्, चिन्मात्राश्रितत्वं विना तद्गोचरचरमवृत्त्यनिवर्त्यत्वापातात्, स्वकल्पितस्य स्वाश्रितत्वेन स्वाश्रयत्वायोगात्। नचाविद्यायामनुपपत्तिरलङ्कारः; अनुपपत्तिमात्रं नाल-**

---

इति भावः। अज्ञानं नोपादानमिति पक्षेऽप्याह—**दग्धृत्वेत्यादि**। यथाग्नावयसस्तादात्म्येनाध्यासादग्निधर्मस्य दग्धृत्वस्यायसि[1]अयोधर्मस्य पिण्डत्वादेरग्नौ चाध्यासः, तथा चित्यहङ्कारस्य तादात्म्येनाध्यासाच्चिद्धर्मस्याज्ञानाश्रयत्वप्रेमास्पदत्वनित्यत्वादेरहङ्कारे तद्धर्मस्य कर्तृत्वादेश्च चित्यध्यास इति भावः। **भ्रान्तेति**। न त्वहङ्कारस्य सत्यस्य सत्यो धर्मोऽज्ञानमिति पररीत्या प्रमेति शेषः। **अविद्याधीनत्वेनेति**। 'जायते प्राणो मनः' 'मायां तु प्रकृतिम्' 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वे'त्यादिश्रुतिभिरित्यादिः। **अकल्पितः**—अविद्यानधीनः। उक्तश्रुतेर्ज्ञाननिवर्त्यत्वानुपपत्तेश्चाह—**कल्पित एवेति**। **चिन्मात्रेति**—अज्ञानस्येत्यादिः। **आपातादिति**। अभानापादकाज्ञानस्य स्वाश्रयविषयकज्ञानैकनिवर्त्यत्वादिति शेषः। **स्वकल्पितस्य** अज्ञानकल्पितस्य। **नालङ्कार**

---

[1] दग्धृत्वादेरयसि—**ग.**

ङ्कारः ; किंतु सत्त्वादिप्रापकयुक्तावनुपपत्तिः ; अन्यथा वा-दिवचसोऽनवकाशापत्तेः । ननु—'निरनिष्टो निरवद्यः शोकं मोहमत्येति नित्यमुक्त' इति श्रुतिविरोधान्न शुद्धचितोऽविद्याश्रयत्वम् ; न हि मौढ्यं न दोषः, नापि बन्धकाज्ञानाश्रयो मुक्तः, न च तात्त्विकाविद्यादेरेव निषेधः ; त्वन्मते तस्यांप्रसक्तेः, जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वव्यवस्थाश्रुतिविरोध इति—चेन्न ; अवद्यस्य चिति कार्यकारित्वाभावेन कार्यकरत्वाकार्यकरत्वाभ्यामेव सावद्यत्वनिरवद्यत्वव्यवस्थोपपत्ते ; उपाधेः प्रतिबिम्बपक्षपातित्वात् । न च—चिन्मात्रस्याविद्याश्रयत्वे प्रमाणाभावः, जीवाश्रितत्वे च प्रमाणमस्तीति—वाच्यम् ; 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्रुतेरेव प्रमाणत्वात् । न च 'ज्ञाज्ञावीशानीशा' विति जीवाज्ञानप्रतिपादकश्रुति-

---

इति । अनुपपत्तिस्वीकारो न कुलधर्मः, किंतु परिहर्तुमशक्याऽनुपपत्तिरनिर्वाच्यताख्यापकत्वेन स्वीक्रियत इति भावः । **युक्तौ** अनुमानादितत्सहकारितर्केषु । **अनुपपत्तिः**—प्रतिकूलतर्कः । **अन्यथा**—परिहारयोग्यानुपपत्तेरपि स्वीकारे । **दोषः**—अवद्यम् । **चिति**—जीवान्यचिति । **कार्यकारित्वेति** । अहङ्कारतत्कार्यरागादिकारित्वेत्यर्थः । **प्रमाणत्वात्**—शुद्धस्याज्ञानवत्त्वे प्रमाणत्वात् । केवलस्यामायित्वेऽपि महेश्वरत्वोपहिताभेदादुक्तश्रुतिसङ्गतिः, जीवस्य मायाश्रयत्वे तु तस्योक्ताभेदाभावात्तदसङ्गतिः । न चैवं—केवलस्य जीवेनाप्यभेदाज्जीवस्यापि मायावत्त्वेन श्रुतिः स्यादिति—वाच्यम् ; 'मायया सन्निरुद्धः' 'मूढ इव व्यवहरन्नास्ते माययैवे'त्यादेरेव तादृशश्रुतित्वात् । न हि कुठारायुक्ते कुठारेण छिनत्तीति प्रयोगः, न वा निगडशून्ये

**विरोधः; तदाश्रयत्वाभावेऽपि तत्कार्ययोगितया अज्ञत्वव्यपदेशोपपत्तेः । न च—ब्रह्मणोऽपि जीवाश्रिताज्ञानविषयत्वेन मायित्वोपपत्तिरिति—वाच्यम्; जीवत्वस्याश्रयतावच्छेदकत्वे परस्पराश्रयप्रसङ्गात् । ननु— शुक्त्याद्यज्ञानवज्ज्ञातुरर्थाप्रकाश-**

---

निगडेन बद्ध इतीति भावः । **योगितयेति** । ज्ञपदस्य जीवव्यावृत्तसर्वज्ञत्वरूपेण बोधकत्वादज्ञपदस्यासर्वज्ञत्वरूपेणैव बोधकत्वमित्यपि बोध्यम् । यद्यप्यज्ञानवत्केवलाभेदाज्जीवस्याज्ञत्वोक्तिः संभवति, तथापीशेऽपि तथा संभवात्प्रकृते सा नादृता । **ब्रह्मणोऽपीति** । अज्ञानाश्रयत्वेऽपीति शेषः । **उपपत्तिः**—व्यपदेशोपपत्तिः । **जीवत्वस्येत्यादि** । मनोऽवच्छिन्नचित्त्वरूपं जीवत्वमाश्रयतावच्छेदकं परेण वाच्यम्; 'अहमज्ञ' इति प्रतीतेः प्रमाणत्वेनोपन्यासात्, तच्च जीवत्वमज्ञानाधीनमिति परस्पराश्रयः । अज्ञानावच्छिन्नचित्त्वरूपं जीवत्वं तु वाचस्पतिमतेऽज्ञानाश्रयतावच्छेदकं वक्ष्यत एव, परंतु तस्मिन् पक्षे आश्रयताया अवच्छिन्नत्वकल्पने गौरवादनवच्छिन्नाश्रयतापक्ष एव युक्तः । यदि तु नाज्ञानाश्रयतायां जीवत्वं संयोगादौ शाखादिकमिवावच्छेदकम्, किंत्वाश्रयीभूतजीवस्योपाधिमात्रम्; शुद्धस्याश्रयत्वपक्षे ज्ञाविति[1] श्रुतावज्ञपदस्याज्ञानकार्यविशेषाश्रय इव वाचस्पतिपक्षे मायिनमिति श्रुतिपदे मायाविषयिणि लक्षणा न दोष इत्यालोच्यते; तथाप्युपहितचिदपेक्षया शुद्धचितो लघुत्वात्तत्रैवाश्रयत्वं युक्तम् । अहमर्थाश्रितमज्ञानमिति परपक्षस्तु सर्वथा न युक्तः; अहमर्थानुत्पत्तिदशायां तदाश्रितत्वासंभवात्, शुद्धचिदाद्याश्रितत्वेऽवश्यं वाच्ये तेनैवोक्तरीत्याऽहमज्ञ इति बुद्ध्युपपत्तेः, अज्ञानकार्यत्वादहमर्थोऽज्ञानाश्रितः अहमर्थाश्रितं चाज्ञानमिति स्थितावन्योन्याश्रयात्[2]।

[1] ज्ञाताविति–ग. [2] श्रयाच्च–ग.

**रूपमिदमप्यज्ञानं स्वकार्येण भ्रान्त्यादिना स्वनिवर्तकेन तत्त्वज्ञानादिना स्वसमानयोगक्षेमेण ज्ञानप्रागभावेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठम्, न तु चैतन्यरूपज्ञानाश्रितमिति—चेन्न; चैतन्यस्यैव ज्ञातृत्वेन ज्ञातुरर्थप्रकाशरूपत्वस्य सम्यक्ज्ञानाश्रयत्वस्य भ्रान्त्यादिसामानाधिकरण्यस्य चोपपत्तेः। न चैवं—ज्ञातृत्वे सत्यविद्याश्रयत्वम्, अविद्यायां ज्ञातृत्वमित्यन्योन्याश्रय इति—वाच्यम्; अविद्याया ज्ञातृत्वानपेक्षत्वेनान्योन्याश्रयाभावात्। न हि सामानाधिकरण्यमस्तीत्येतावतैव तदपेक्षया अनया भवितव्यम्। न च—शरीरेऽपि ज्ञातृत्वाध्याससंभवेन तत्राप्यज्ञानाश्रयत्वापत्तिरिति—वाच्यम्; न हि ज्ञातृत्वाध्यासोऽज्ञानाश्रयत्वे प्रयोजकः, येन तन्मात्रेण तदापद्येत, किंतु प्रसक्तप्रकाशत्वमज्ञानानाश्रितत्वं च। न चैवमविद्याश्रयस्य**

---

**चैतन्यस्य**—अज्ञानाश्रयशुद्धचिदभिन्नसाक्षिण.। ज्ञातुरर्थप्रकाशोऽज्ञानमित्यत्र ज्ञातृसंबद्धमज्ञानमित्यर्थः, स चाक्षतः; साक्षिणि ज्ञातर्यज्ञानवदभेदात्, एवं भ्रमादिसामानाधिकरण्यमपीति भावः। वस्तुतो ज्ञातारं प्रत्यावरकत्वमेव षष्ठ्योल्लिख्यते, न तु ज्ञातृनिष्ठत्वम्; शुक्त्याद्यज्ञानस्येदमंशादौ कार्यजनकत्वानुरोधेन स्वसमानाश्रयज्ञाननिवर्त्यत्वनियमानुरोधेन चेदमंशावच्छिन्नचित्यहमर्थे चाश्रयत्वावश्यकत्वेऽपि मूलाज्ञानस्य शुद्धचित्येव स्वकार्यजनकत्वात्; स्वकार्यमनःपरिणामविशेषनिवर्त्यत्वनियमेनैवानातिप्रसङ्गाच्च, शुद्धचिदाश्रितत्वमेव युक्तमिति ध्येयम्॥

अनावृतचित्संबन्धादहङ्कारस्यापि प्रसक्तप्रकाशत्वादाह—**अज्ञानानाश्रितत्वं चेति**। यद्यपि प्रसक्तप्रकाशत्वमज्ञानाविषयत्व एव प्रयोजकम्, तथाप्यभानापादकाज्ञानस्य विषयाश्रितत्वात्तद्विषयत्वे तदा-

ज्ञातृत्वभोक्तृत्वादिमत्वे जीवाश्रिताज्ञानपक्षप्रवेश इति–वाच्यम्; अविद्यावच्छिन्नस्य हि ज्ञातृत्वम्; अविद्या च नाविद्यावच्छेदेन; सामानाधिकरण्यं चावच्छेद्यांशैक्यमादाय। यथोपाधिसंबन्धो मुखमात्र एव, औपाधिकमालिन्यसंबन्धस्तूपाध्यवच्छिन्ने, बिम्बप्रतिबिम्बयोरैक्यात्, तथा सामानाधिकरण्यमपि। यथा प्रतिबिम्बो न वस्त्वन्तरम्, तथा वक्ष्यते। ननु— शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यगतं वाच्यम्, तथा च 'अहं जानामीच्छामी' तिवत् 'अहं न जानामी' ति ज्ञातृस्थत्वानुभवविरोध इति–चेन्न; अज्ञानद्वैविध्यात्। एकं हि शुक्त्यवच्छिन्नचैतन्याश्रितं तद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यम्। अपरं च परोक्षभ्रमजनकं तद्विषयप्रमामात्रनाश्यं प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितमित्युक्तं प्राक्। तत्र प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्यगताज्ञानविषयकोऽयमनुभवः। तेन प्रमातृनिष्ठत्वविषयतास्य न विरुध्यते। अत एव विषयगताज्ञाने विद्यमानेऽपि प्रमातृगताज्ञाननाशेन न ज्ञानामीति व्यवहाराभावः। ननु—उपाधेः प्रतिबिम्बपक्षपातित्वान्न ब्रह्मणः संसारित्वमित्युक्तं, तदयुक्तम्; बिम्बप्रतिबिम्बभावस्यैवासंभवात्। तथाहि—अचाक्षुषस्य चैतन्यस्य गन्धरसादिवत्प्रातिबिम्बतानर्हत्वात्, प्रातिबिम्बत्वे जविस्य सादित्वापाताच्च, सूर्यस्य सरिज्जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमानसत्ताक-

श्रयत्वे च तत्प्रयोजकमिति भावः। **सामानाधिकरण्यं च** अज्ञो ज्ञातेत्यभेदोक्तिश्च। **अवच्छेद्यांशैक्यं** अविद्यावच्छिन्नेन शुद्धस्यैक्यम्। **ऐक्यात्** तादात्म्यात्। **सामानाधिकरण्यमपि** बिम्बीभूतं ग्रीवास्थमुखं मलिनमित्यभेदोक्तिरपि। **न वस्त्वन्तरमिति। किंतु** बिम्बमेवोपाधिस्थत्वादिविशिष्टं सत्प्रतिबिम्ब इति शेष.। तथाचाभेदो

स्याज्ञानस्य चितं प्रत्युपाधित्वायोगात्, अस्वच्छस्याज्ञानस्य प्रतिबिम्बितोपाधित्वायोगाच्च, अविद्यायाश्चिन्मात्राभिमुख्यासंभवाच्च, अज्ञानस्याकाशाद्यात्मना परिणामे प्रतिबिम्बापायापाताच्चेति चेन्न; रूपवत एव प्रतिबिम्ब इत्यस्या व्याप्ते रूपादौ व्यभिचाराद्यथा भङ्गः, एवमाकाशादौ व्यभिचाराच्चाक्षुषस्यैव प्रतिबिम्ब इत्यस्या अपि व्याप्तेर्भङ्गः। वस्तुतस्तु श्रुतिबलाच्चितः प्रतिबिम्बे सिद्धे तत्रैव व्यभिचारान्नेयं व्याप्तिः; तथाच रसादिव्यावृत्तं फलैकोन्नेयं प्रतिबिम्बप्रयोजकम्। नापि जीवस्य सादित्वापत्तिः; उपाधिबिम्बसंबन्धानादित्वेनानादित्वोपपत्तेः। विस्तरस्तु सिद्धान्तबिन्दौ। यत्तूक्तं मरीचिकाजले सूर्यप्रतिबिम्बादर्शनाद्बिम्बसमानसत्ताकत्वं प्रतिबिम्बोद्ग्राहित्वे प्रयोजकमिति, तन्न; अध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात्। तस्मान्मरीचिकाजलव्यावृत्तं स्वच्छत्वं फलैकोन्नेयमननुगतमेव प्रतिबिम्बोद्ग्राहित्वे प्रयोजकम्। तच्च प्रकृतेऽप्यस्ति। अत एव अज्ञा-

---

युज्यत इति भावः। **वाच्यमिति**। मूलाज्ञानवदित्यादिः। **रूपादौ** स्फटिकाद्युपाधिकजपालौहित्यादौ। **आकाशादौ** जलप्रतिबिम्बिताकाशादौ। **श्रुतिबलात्** 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'ति 'रूपं रूपं प्रतिरूप' इत्यादिश्रुतिबलात्। **विस्तर इति**। विभ्रमहेतूनां विचित्रत्वादचाक्षुषस्यापि प्रतिबिम्बः; 'आभास एव च, अत एव चोपमा सूर्यकादिव' दित्यादिसूत्राणि च तत्र मानमित्यादिविस्तर इत्यर्थः। **अध्यस्तस्येति**। स्फटिके साक्षात्संबन्धेन लौहित्यप्रत्ययस्यानुभविकत्वाद्बाधाच्च तत्र तदध्यस्तामिति भावः। मरीचिकाजलादेः प्रातीतिकस्य प्रतिबिम्बोपाधित्वस्यादृष्टत्वेऽपि व्यावहारिकस्य दर्पणादेरिवाज्ञानादेरपि प्रतिबिम्बोपाधित्वं नायुक्तमित्यपि बोध्यम्। **अत एव** अननुगतस्य प्रतिबिम्बोपाधितायोग्यत्वस्यैव स्वच्छत्व-

नस्यास्वच्छत्वान्न प्रतिबिम्बोपाधित्वमिति निरस्तम् । यच्चोक्तं चिन्मात्राभिमुख्याभावादिति, तत्किं सर्वात्मना चिदाभिमुख्याभावाद्वा, आभिमुख्यमात्राभावाद्वा । नाद्यः; चैतन्यवद्विभुत्वपक्षे सर्वात्मनापि संभवात् । न्यूनपरिमाणत्वेऽपि न दोषः; न्यूनपरिमाणस्याप्यधिकपरिमाणाकाशादिप्रतिबिम्बोद्ग्राहित्वदर्शनात् । न द्वितीयः; चैतन्यस्य सर्वतोऽपी प्रसृतत्वेन व्यवधानाभावेन चाभिमुख्यस्य सद्भावात् । न चाकाशाद्यात्मना परिणामे प्रतिबिम्बापायापत्तिः; प्रतिबिम्बप्रयोजकरूपाविरोधिपरिणामस्य प्रतिबिम्बाविरोधित्वेन प्रतिबिम्बानपायात् । न च मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्ररूपव्यक्त्यन्तरस्येव जीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रयत्वयोग्य – व्यक्त्यन्तरस्याभावान्मुखमात्रसंबन्ध्यादर्शवच्चिन्मात्रसंबन्ध्य – ज्ञानमिति कथमिति—वाच्यम्; अपरामृष्टभेदस्य मुखादेर्मात्रार्थत्वेनानुगतधर्म्यतिरेकसंभवात् । ननु—उपाधिः प्रतिबिम्ब-

[1]रूपत्वादेव । **विभुत्वपक्षे** अज्ञानस्य परममहत्त्वपक्षे । **न्यूनेति** । जलादेरित्यादि । **सद्भावादिति** । देशविशेषस्थत्वं बिम्बोपाध्योराभिमुख्यं प्रतिबिम्ब[2]प्रयोजकमिति तु न युक्तम्; अननुगतत्वात् । **रूपाविरोधीति** । स्फटिकादेश्चूर्णादिरूपपरिणामस्य प्रतिबिम्बविरोधित्वेऽपि पात्रविशेषादिरूपः परिणामो न तथेति परिणाममात्रं न तथेति भावः । **मुखप्रतिमुखेत्यादि** । बिम्बमुखप्रतिबिम्बमुखयोरनुगतस्य मुखत्वान्यस्य मुखमात्ररूपव्यक्त्यन्तरस्येत्यर्थः । **अपरामृष्टभेदस्येति** । प्रतिबिम्बत्वोपहितमुखादितः परामृष्टो गृहीतो भेदो यत्र बिम्बत्वोपहितमुखादौ तदन्यस्येत्यर्थः । **मात्रार्थत्वेन**—बिम्बप्रतिबिम्बानुगतं मुख[3]मात्रमिति वाक्यगतमात्रशब्दार्थत्वेन । **धर्म्यतिरेकेति** । उपाधिभेदेन बिम्बप्रति-

[1] रूपत्वादेः–ग. [2] प्रतिबिम्बे–ग. [3] नुगतमुख–ग.

**पक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्तया बाध इति—चेन्न; विशेषव्याप्तिग्राहकसहचारदर्शनस्य विवादविषयातिरिक्तेऽसंभवेन विशेषव्याप्त्यसंभवात्। न च बन्धस्य चिन्मात्राश्रितमोक्षसामानाधिकरण्यानुपपत्तिः; अवच्छेद्यांशमादाय सामानाधिकरण्यस्योक्तत्वात्। ननु—उपाधेः प्रतिबिम्बपक्षपातित्वं तत्र स्वधर्मप्रतिभासकत्वं वा, स्वकार्यप्रतिभासकत्वं वा, स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा, प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा। नाद्यः; सुषुप्त्याद्यनुवृत्तस्याविद्यारूपस्याविद्यावच्छिन्नत्वरूपस्य वा, तत्प्रतिबिम्बितत्वस्य वा, सुषुप्तादावननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात्, ज्ञानक्रियासंस्कारादीनां त्वन्मते अज्ञाननिष्ठत्वेऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाऽप्य-**

---

बिम्बयोरिव[1] केवलोपाहितयोर्भेदात्ताभ्यां केवलमुखं भिन्नमवश्यं वाच्यम्, तच्च तयोरनुगतम्, उपहितकेवलयोस्तादात्म्यस्यानुभवादिति भावः। **विवादविषयातिरिक्त इति।** न च—तूलाज्ञाने सहचारदर्शनेन व्याप्तिग्रहान्मूलाज्ञाने तथाऽऽपादनीयमिति—वाच्यम्; अभानापादकस्य तूलाज्ञानस्य स्वानाश्रये प्रमातर्यपि[2] भ्रान्तिजनकत्वादसत्त्वापादकस्य तस्यापि स्वानाश्रये विषय एव भ्रमविषयजनकत्वात्तूलाज्ञानेऽपि सहचारदर्शनात्। तत्र—प्रतिबिम्ब एव। **नाद्य इति।** स्वधर्मस्यैव प्रतिभासकत्वं स्वधर्मसामान्यस्य प्रति[3]भासकत्वं वाऽभिप्रेत्य तमाद्यं[4] सुषुप्तेत्यादिना प्रत्याख्याय द्वितीयं प्रत्याह—**ज्ञानेति।** ननु —कर्तृत्वादेरविद्यापरिणामत्वादविद्यानिष्ठत्वेनाद्यपक्ष एव युक्तस्तत्राह—

---

[1] प्रतिबिम्बयोर्मिथो भेद इव–**ग.** [2] प्रमातर्येव–**ग.** [3] न्यप्रति–**क. ग.**
[4] अभिप्रेतम्: आद्यं **ग.**

**प्रतीतेः । 'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः' इति त्वन्मतेऽपि अविद्या बन्धिका बन्धो वा, न तु बद्धा, येन स्वनिष्ठबन्धरूपधर्मसङ्क्रामकत्वं स्यात् । न द्वितीयः; विच्छेदादेरुपाधिकार्यस्य बिम्बे महाकाशे च दर्शनात्, मुखस्य[1] बिम्बत्वादेर्ब्रह्मस्थसार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च । नापि तृतीयचतुर्थौ; दर्पणघटादावदृष्टेः। एवं बुद्धिरूपोपाधिरपि न प्रतिबिम्बपक्षपातीति चेन्न; अतिशयेन कार्यकरत्वमेव तत्पक्षपातित्वम् । तथाच विच्छेदादिरूपकार्यकरत्वसाम्येऽपि स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यकरत्वेनाविद्यायामपि प्रतिबिम्बपक्ष-**

---

**अविद्यास्तमय इति ।** **बन्धो वा** बन्धश्च । **न तु बद्धा** न तु कर्तृत्वादिबन्धाश्रयः । तथाच कर्तृत्वादिकं नाविद्यापरिणाम इत्यभिमानः । **धर्मसङ्क्रामकत्वं** धर्मस्यैव सङ्क्रामकत्वम् । **दर्शनादिति ।** प्रतिबिम्बभिन्ने स्वकार्याप्रतिभासकत्वं द्वितीयस्य पर्यवसितार्थः, स च न संभवतीति भावः । ननु—विच्छेदो बिम्बभेदः स्वनिष्ठो न स्वकार्य इति तस्य प्रतिबिम्बे सङ्क्रामकत्वेऽपि प्रकृते न दोषस्तत्राह—**मुखस्येति । प्रतिबिम्बपक्षपातित्वमित्यत्र** प्रतिबिम्बपदमुपाध्यन्तर्गतपरतयाऽवच्छिन्नाकाशाद्यर्थकमपीत्याशयेन पूर्वं महाकाश इति अग्रे घटादाविति चोक्तम् । **अतिशयेनेति ।** यथा सर्वाभिमतदाताऽपि भगवान् भक्तान्प्रत्येवातिशयेन तद्दातृत्वात्तत्पक्षपातीत्युच्यते, तथा बिम्बप्रतिबिम्बयोः कार्यकरोऽप्युपाधिरतिशयेन प्रतिबिम्ब एव कार्यकरत्वात्पक्ष[2]पातीति भावः । **स्थौल्यादीति ।** स्थूलमलिनदर्पणादेः प्रतिबिम्बे स्थौल्यादिधीजनकत्व-

---

[1] मुखस्थ. [2] त्वात्तत्पक्ष—**ग.**

**पातित्वोपपत्तेः । यत्तूक्तं मुखादिगतं बिम्बत्वं ब्रह्मगतं सार्वज्ञ्यादिकं चानौपाधिकं स्यादिति, तन्न; उपाधौ बिम्बकार्यकरत्वमेव नेतीति न ब्रूमः, किंतु प्रतिबिम्बे अतिशयेनेति। यदपि बुद्धिरूपोपाधेरपि न प्रतिबिम्बपक्षपातित्वम्, तस्य प्रतिबिम्बापक्षपातिजपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानीयत्वाभावादिति, तन्न; स्वनिष्ठस्थौल्यावभासकत्वेनादर्शस्येवा-**

---

मिति भावः । **उपपत्तेरिति ।** यथानुभवबलाद्दर्पणादेः प्रतिबिम्ब एव मालिन्यादिभ्रमहेतुत्वं तथा श्रुत्यनुभवादिबलाज्जीव एवाविद्याया मनस्तत्परिणामहेतुत्वम्; ईशे तु सर्वज्ञत्वाकाशादिहेतुत्वमिति भावः । प्रतिबिम्बं प्रत्येव स्वविषया[1]च्छादकत्वमिति चतुर्थपक्षोऽपि युक्तः; दर्पणादौ स्वविषयाच्छादकान्यत्वेऽप्युक्तरूपस्येवाज्ञाने प्रतिबिम्बं प्रत्येवानतिशयानन्दस्वरूपावरकत्वरूपस्य प्रतिबिम्बपक्षपातित्वस्य संभवात् । न हि सर्वत्रोपाधावेकजातीयं तद्वाच्यमिति कुलधर्मः । एवं च 'अनृतेन हि प्रत्यूढाः' 'मूढ इव व्यवहरन्नास्ते' इत्यादिश्रुत्यादिना जीवं प्रत्यावरकमज्ञानं नेशं प्रतीत्येव जीवेशयोर्विशेषसंभवेनेशे मनस्तत्परिणामसंबन्धस्वीकारेऽपि न क्षतिः । ईशस्य रागादिशून्यत्वश्रुतिस्तु जीवन्मुक्तस्याशरीरत्वादिश्रुतिरिव तदीयदृष्टिमाश्रित्य नेया ॥

अथैवमीशस्यैव सार्वज्ञ्यसर्वकर्तृत्वादिजनकत्वेनाज्ञानस्य बिम्बपक्षपातित्वमप्यनिवार्यमिति—चेत्, अस्तु तथा; तथाप्युक्तस्य प्रतिबिम्बपक्षपातित्वस्यानपाय एव । न च सार्वज्ञ्यादेर्जीवेऽप्यापत्तिः; मनोवृत्तिं विनाऽऽवरणानभिभवेन सर्वज्ञानेच्छाकृत्यसंभवात् । आवरणमेव तत्तदैश्वर्यतिरोधायकमित्यस्य 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वा सोऽपि' इति सूत्राभ्यां, 'ईश्वराभेदाज्जीवस्या-

---

[1] अनतिशयानन्दस्वाविषया—गः

**स्यापि स्वनिष्ठधर्मावभासकत्वेन तद्वत्पक्षपातित्वसंभवात्। तस्मादविद्याकृतविच्छेदेन ब्रह्मण्येव नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिंचिज्ज्ञत्वादिव्यवस्थोपपत्तिः। एतेनासर्वज्ञत्वादिनाऽनुभवसिद्धाज्जीवादन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतिर्निर्विषया स्यात्, एकजीववादे संसार्यसंसारिव्यवस्थायोगात्—**

**'द्वा सुपर्णा' 'य आत्मनि तिष्ठन्' इत्यादिश्रुतिभिः,**

**'अन्यश्च परमो राजन् तथाऽन्यः पञ्चविंशकः।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप'॥**

**इत्यादिस्मृतिभिः, 'शारीरश्चोभयेऽपि हि भेदेनैनमधी-**

---

प्यैश्वर्यमस्ति, परंतु तिरोहितम् अज्ञानकृतावरणाद्देहाभिमानाच्च, ईश्वरप्रसादादाविर्भवति' इत्यादिभाष्येणोक्तत्वाच्च। एवं चेशस्य कार्यमात्रोपादानत्वपक्षोऽपि सङ्गच्छते। एतेन—अतिशयेन प्रातिबिम्बे कार्यकरत्वं ईशनिष्ठकार्यापेक्षयाधिकसङ्ख्याककार्यकरत्वं वा विलक्षणकार्यकरत्वं वा। नाद्यः; ईशनिष्ठाकाशाद्यपेक्षया जीवनिष्ठानामाधिक्यानिर्णयात्। न च—जीवभेदेऽप्याकाशादेरेकैकत्वात्तथा निर्णय इति—वाच्यम्; तथापि जीवभेदेन प्रपञ्चभेदपक्षे तदनिर्णयात्। नान्त्यः; ईशेऽपि जीवनिष्ठकार्यापेक्षया विलक्षणकार्यजनकत्वेनेशपक्षपातित्वस्यापि वक्तुं शक्यत्वादिति परास्तम्; ईशकार्यविलक्षणकार्याणां जीवे जनकत्वानपायात्, जीवं प्रत्यावरणस्यैव जीवनिष्ठकार्येऽतिशयरूपत्वसंभवाच्चेत्याशयेनाह- **तस्मादिति। अविद्याकृतविच्छेदेन** अविद्याप्रयुक्तभेदेन। **नित्यमुक्तत्वेति। सत्यत्वेन** ज्ञायमानदृश्यसंबन्धरूपबन्धाश्रयान्यत्वेत्यर्थः। **आत्मनि** जीवे। **तिष्ठन्निति।** 'आत्मानमन्तरो यमयति' इति श्रुतिशेषः। **शारीरश्चेति।** ब्रह्मणोऽन्य इति शेषः। **उभये** काण्वा माध्यन्दिनाश्च 'यो विज्ञाने

यते' 'भेदव्यपदेशाच्च' इत्यादिसूत्रैः, 'तस्माच्छारीरादन्य एवेश्वरः। आत्मानौ तावेतौ चेतनौ एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः' इत्यादिभाष्यैः, 'तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवन्नेतरेतरत्रावतिष्ठेते' इत्यादिविवरणग्रन्थैश्च विरोध इति निरस्तम्। ननु—चिन्मात्रस्याज्ञानं स्वाभाविकमौपाधिकं वा, नाद्यः; आत्मवदनिवृत्तिप्रसङ्गात्। नान्त्यः; स्वस्यैवोपाधित्वे आत्माश्रयात्, एतदपेक्षान्यापेक्षत्वेऽन्योन्याश्रयात्, तदन्यान्यापेक्षत्वे चानवस्थानादिति—चेन्न; स्वस्यैवाश्रयत्वोपाधित्वात्। न चात्माश्रयः; भेदस्य स्वभेदकत्ववदुपपत्तेः, स्वाभाविकस्यापि घटरूपस्य तत्प्रागभावस्य च निवृत्तिदर्शनात्॥

इत्यद्वैतसिद्धावविद्यायाश्चिन्मात्राश्रयत्वोपपत्तिः॥

---

तिष्ठन्' 'य आत्मनि तिष्ठन्' इति च नियम्यनियन्तृभावरूपेण भेदेन हि यस्मादधीयते पठन्ति। तत्त्वज्ञानसंसरणे—अनावरणावरणे।

तर्कैरित्यादि—अज्ञानशुद्धचित्स्थितिः॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामज्ञानस्य चिन्मात्राश्रयत्वोपपत्तिः॥

## अथाज्ञानवादेऽविद्यायाः सर्वज्ञाश्रयत्वोपपत्तिः ॥

ननु—शुद्धब्रह्मणश्चिन्मात्रस्याज्ञानाश्रयत्वे सार्वज्ञ्यविरोधः। न च—विशिष्ट एव सार्वज्ञ्यम्; 'तुरीयं सर्वदृक्सदा' इति शुद्धस्यैव सर्वज्ञत्वोक्तेरिति—चेन्न; सर्वदृक्पदेन सर्वेषां दृग्भूतं चैतन्यमित्युच्यते, न तु सर्वज्ञं तुरीयम्; तस्माद्विशिष्ट एव सार्वज्ञ्यम्। तच्चाविद्यां विना न संभवतीत्यविद्यासिद्धिः। तथाहि—सर्वज्ञो हि प्रमाणतः, स्वरूपज्ञप्त्या वा। तत्र प्रमाणस्य भ्रान्तेश्चाविद्यामूलत्वात्, असङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेः। तदुक्तम्—

"स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विनाऽविद्यासंबन्धं नैव सिध्यति" ॥ इति ॥

न च—स्वरूपज्ञप्तेः स्वतः कालाद्यसंबन्धेऽसत्त्वापातेन स्वतः संबन्धाभावेऽसर्वगतत्वापातेन चाविद्ययेव स्वत एवान्येन संबन्धो वक्तव्य इति—वाच्यम्; अविद्यासंबन्धस्याप्याविद्य-

---

अथाज्ञानवादेऽविद्यायाः सर्वज्ञाश्रयत्वोपपत्तिः ॥

**सर्वेषां दृक्** सर्वभासकाभिन्नम्[1]। **चैतन्यं** शुद्धम्। **अविद्यामिति**। शुद्धे इत्यादिः। **प्रमाणतः**—वृत्तिज्ञानेन। **प्रमाणस्य** भाविगोचरानुमितिरूपायाः अविद्यावृत्तेः। **भ्रान्तेः** विद्यमानगोचरप्रत्यक्षरूपाया नष्टगोचरस्मृतिरूपायाश्च प्रमाणजन्याया अविद्यावृत्तेः। **प्रमाणैः**—अविद्यावृत्तिभिः। वस्तुस्थितिरियमुक्ता। वस्तुतोऽविद्याश्रयत्वं न सार्वज्ञ्येन विरुध्यते, यं प्रत्यावारिकाऽविद्या तत्रैव हि सार्वज्ञ्यासंभवः, न च सा जीवान्यं प्रत्यावारिकेति ध्येयम्।

---

[1] सर्वावभासकाभिन्नं–ग.

कत्वेनाविद्ययेवेति दृष्टान्तानुपपत्तेः । स्वतः परतो वा कालादिसंबन्धेन सर्वसंबन्धेन चासद्वैलक्षण्यसर्वगतत्वयोरुपपत्तेर्न तयोरर्थे स्वतः कालसंबन्धसर्वसंबन्धापेक्षा । असङ्गत्वश्रुतिरपि स्वतः सङ्गाभावविषयत्वेनोपपद्यते । अत एव—'अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन' इति–निरस्तम् । तस्माच्चिन्मात्राश्रितैवाविद्या ॥

इत्यज्ञानवादे सर्वज्ञस्याज्ञानाश्रयत्वोपपत्तिः ॥

---

## अथाज्ञानवादेऽविद्याया वाचस्पतिसंमतजीवाश्रयत्वोपपत्तिः ॥

वाचस्पतिमिश्रैस्तु जीवाश्रितैवाविद्या निगद्यते । ननु—जीवाश्रिताविद्या तत्प्रतिबिम्बितचैतन्यं वा, तदवच्छिन्नचैतन्यं

---

संवेत्तुरिति—तृजन्तम् । यत्तु—ताच्छीलिकतृन्नन्तमिति—तन्न; मानाभावात्, कैवल्ये वेत्तृत्वाभावेन विषयवेदनस्वभावत्वाभावात् । वस्तुतो ज्ञातृपरतया परेण प्रयुक्तत्वाद्वेत्तृपदमसाध्वेव; ज्ञानार्थकविदेः सेट्त्वेन वेदितृपदस्यैव ज्ञात्रर्थत्वात् । विचारार्थकविदेरनिट्त्वेऽपि प्रकृते विचारार्थकत्वमसङ्गतमेव; परोक्षज्ञानेनापि संभवतो विचारस्याज्ञत्वाविरोधित्वादिति ध्येयम् ॥

तर्कैरित्यादि—सार्वज्ञ्येऽप्यज्ञता चितः

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां सर्वज्ञस्याज्ञानाश्रयत्वोपपत्तिः ॥

---

वा, तत्कल्पितभेदं वा जीवः। तथाचान्योन्याश्रय इति चेन्न; किमयमन्योन्याश्रय उत्पत्तौ, ज्ञप्तौ, स्थितौ वा, नाद्यः; अनादित्वादुभयोः। न द्वितीयः; अज्ञानस्य चिद्भास्यत्वेऽपि चितेः स्वप्रकाशत्वेन तदभास्यत्वात्। न तृतीयः; स किं परस्पराश्रितत्वेन वा, परस्परसापेक्षस्थितिकत्वेन वा स्यात्। तन्न; उभयस्याप्यसिद्धेः। अज्ञानस्य चिदाश्रयत्वे चिदधीनस्थितिकत्वेऽपि चित्यविद्याश्रितत्वतदधीनस्थितिकत्वयोरभावात्। नचैवमन्योन्याधीनताक्षतिः; समानकालीनयोरप्यवच्छेद्यावच्छेदक-

---

अथाज्ञानवादेऽविद्याया वाचस्पतिसंमतजीवाश्रयत्वोपपत्तिः॥

**तत्कल्पितभेदं**—तया कल्पित ईशस्य भेदो यत्र तच्चैतन्यम्। **चिद्भास्यत्वेऽपि**—साक्षिरूपजीवभास्यत्वेऽपि। **चितेः**—जीवस्य। **तदभास्यत्वात्**—अविद्याभानरूपसाक्षिजन्यभानाविषयत्वात्। **चिदाश्रयत्वे**—जीवाश्रितत्वे। **चिदधीनस्थितिकत्वे**—जीवनियमितस्थितिकत्वे, जीवान्यावृत्तित्वे इति यावत्। **तदधीनस्थितिकत्वयोः**—तदन्यावृत्तित्वयोः। जीवस्य शुद्धचिद्वृत्तित्वान्नाविद्यान्यावृत्तित्वमिति भावः। **अन्योन्याधीनता**—अविद्यानाशस्य जीवनाशव्यापकत्वेनाविद्याया जीवोपाधित्वेन वा अन्योन्याधीनता। तत्राद्यमाह—**समानकालीनयोरिति**। व्याप्यव्यापकभावापन्नयोरित्यर्थः। यदा[1] यदाऽविद्या तदाऽवश्यं जीव इति व्याप्तावपि जीवनाशस्याविद्यानाशव्याप्यता संभवति, सा च न क्षतिकरीति भावः। द्वितीयेऽपि न क्षतिरित्याशयेनाह—**अवच्छेद्यावच्छेदकेति**—उपहितोपाधीत्यर्थः। स्वोपहितेऽपि जीवेऽविद्याया आश्रयत्वं संभवति; विद्यमानत्वे सति

---

[1] यद्वा—ग.

भावमात्रेण तदुपपत्तेः, घटतदवच्छिन्नाकाशयोरिव प्रमाण-प्रमेययोरिव च। तदुक्तम्—

"स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम्।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः" ॥ इति ॥

एतेन—यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धकत्वेनान्योन्यापेक्षताया अ-दोषत्वम्, तदा चैत्रमैत्रादेरन्योन्यारोहणाद्यापत्तिः—इति निर-स्तम्; परस्परमाश्रयाश्रयिभावस्यानङ्गीकारात्। न चेश्वरजीव-योरीश्वरजीवकल्पितत्वे आत्माश्रयः, जीवेशकल्पितत्वे चान्यो-न्याश्रयः, न च शुद्धा चित् कल्पिका, तस्या अज्ञानाभावा-दिति—वाच्यम्; जीवाश्रिताया अविद्याया एव जीवेशकल्प-कत्वेनैतद्विकल्पानवकाशात्। तस्माज्जीवाश्रयत्वेऽप्यदोषः ॥

इत्यद्वैतसिद्धावज्ञानस्य जीवाश्रयत्वोपपत्तिः ॥

---

व्यावर्तकत्वरूपस्योपाधित्वस्य स्वाश्रयं प्रति स्वीकारेऽपि स्वस्मिन्नविद्याया आश्रयत्वास्वीकारादिति भावः। देशे—प्रदेशे, स्वावच्छिन्न इति यावत्। **अविद्याया एवे**त्येवकारो हेत्वर्थः। **नैतदिति**। जीवेशौ प्रति कल्पकत्वं कल्पनाजनकत्वम्, जनकत्वमात्रम्, द्रष्टृत्वं वा। आद्ये अविद्यावृत्तिरूपकल्पनां प्रत्यविद्याया एव दोषतया उपादानतया च हेतुत्वम्। द्वितीयं तु नाभ्युपेयते; जीवेशयोरनादित्वात्। तृतीये तूभयोरपि स्वरूपतः स्वप्रकाशत्वम्, न तु दृश्यत्वम्; अविद्याविषयत्वेन स्वस्याविद्याश्रयत्वादिना जीवादेर्द्रष्टृत्वं त्वीशे स्वरूपचैतन्येन (न) त्वविद्यावृत्त्येति ईशस्याविद्यानाश्रयत्वेऽपि तदुपपद्यते। जीवे त्वविद्या-

## अथाज्ञानवादेऽज्ञानविषयनिरूपणम् ॥

अविद्याया विषयोऽपि सुवचः। तथाहि—चिन्मात्रमेवाविद्याविषयः; तस्याकल्पितत्वेनान्योन्याश्रयादिदोषाप्रसक्तेः, स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्नावरणकृत्यसंभवाच्च, नान्यत्;

---

विषयत्वाश्रयत्वादिना, ईश[1]जीवादिद्रष्टृत्वमविद्यावृत्त्यादिनैवेति नानुपपत्तिरिति भावः। विषयतासंबन्धेनाविद्या प्रपञ्चं प्रति निमित्तम्, न तूपादानम्; येन ब्रह्मणः प्रपञ्चाधारत्वं न स्यात्। जीव एव वा प्रपञ्चाधारो न ब्रह्म, अतो जीवाविद्ययोरेव प्रपञ्चोपादानत्वम्। जीवब्रह्मणोर्वास्तवाभेदाद्ब्रह्मणो जगद्धेतुत्वश्रुतिः। जगत्कारणाविद्याविषयत्वादिकमेव ब्रह्म[2]लक्षणं यतो वेत्यादिश्रुत्यर्थः। अत एवाविद्यैव शुद्धब्रह्माश्रिता जगदुपादानं; न तु ब्रह्म जीवो वेति पक्षे जगदुपादानाविद्यावत्त्वमेवोक्तश्रुत्यर्थ इत्यादि बोध्यम् ॥

तर्कैरित्यादि—अज्ञाने जीवनिष्ठता।

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामज्ञानस्य जीवनिष्ठतोपपत्तिः ॥

---

### अथाज्ञानवादेऽज्ञानविषयनिरूपणम्.

अन्योन्याश्रयादीति। अज्ञानजन्यानां मध्ये यद्विषयकेनाज्ञानेन यज्जन्यते तस्यापि तद्विषयकेनाज्ञानेन जननेऽन्योन्याश्रयः, तद्विषयकेनैवाज्ञानेन तस्य जनने आत्माश्रयः, अज्ञानावच्छिन्न[3]चिदादेरज्ञानविषयत्वे तत्प्रकाशानुपपत्त्यादिरिति भावः।

---

[1] ईशे—ग. [2] ब्रह्मणो—ग. [3] आत्माश्रयः, अज्ञानजन्यस्याज्ञानाश्रयत्वेऽन्योन्याश्रयः, मनोवच्छिन्न—ग.

**तस्याज्ञानकल्पितत्वात्, अप्रसक्तप्रकाशत्वेनावरणकृत्याभावाच्च। ननु—किमावरणकृत्यं (१) सिद्धप्रकाशलोपो वा, (२) असिद्धप्रकाशानुत्पत्तिर्वा, (३) सतः प्रकाशस्य विषयासंबन्धो वा, (४) प्राकट्याख्यकार्यप्रतिबन्धो वा, (५) नास्ति न प्रकाशत इति व्यवहारो वा, (६) अस्ति प्रकाशत इति व्यवहाराभावो वा, (७) नास्तीत्यादिव्यवहारयोग्यत्वं वा, (८) अस्तीत्यादिव्यवहारायोग्यत्वं वा। नाद्यद्वितीयौ; स्वरूपप्रकाशस्य नित्यसिद्धत्वेन तल्लोपानुत्पत्त्योरसंभवात्, तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। न तृतीयः; ज्ञानस्य विषयसंबन्धैकस्वभावत्वात्, स्वयं ज्ञानरूपत्वेन त्वन्मते संबन्धानपेक्षणाच्च। नापि चतुर्थः; त्वन्मते चैतन्यातिरिक्तस्य तस्याभावात्। नापि पञ्चमः; सुषुप्तौ व्यवहाराभावेनानावरणापातात्। नापि षष्ठः; व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वात्, वृत्तेश्च मोक्षेऽप्यसत्त्वात्। अभिलपनरूपत्वे मोक्षेऽप्यावरणप्रसङ्गात्। नापि सप्तमाष्टमौ; तयोरप्यारोपितत्वेनावरणं विनायोगा-**

---

**अज्ञानकल्पितत्वात्** अज्ञानप्रयुक्तत्वात्, अज्ञाननाशनाश्यत्वादिति यावत्। तथाचाज्ञानस्यामिथ्याविषयकज्ञाननिवर्त्यत्वेनामिथ्याविषयकत्वमावश्यकमिति भावः। एतेन—अज्ञानस्याश्रयत्वमिव विषयत्वमपि जीवे आस्तामप्येतस्य सदा प्रकाशमानत्वान्न तत्र तत्, तर्हि स एव हेतुर्वाच्यः, नाज्ञानकल्पितत्वमित्यादि—परास्तम्; 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुतेः शुद्धज्ञाननिवर्त्यत्वेनावगताज्ञानस्य शुद्धविषयकत्वौचित्ये प्रकृते तात्पर्यात्। **तल्लोपानुत्पत्त्योः**—तल्लोपतदुत्पत्त्यभावयोः। **असंभवात्** अप्रसिद्धेः। **त्वन्मते** त्वदभ्युपगते शुद्धचैतन्ये। **व्यवहाराभावेन** व्यवहाररूपकृत्यस्याभावेन। **आवरणप्रसङ्गादिति।**

**दिति—चेन्न ; नास्ति न प्रकाशत इति व्यवहार एवाभिज्ञादिसाधारणः, अस्ति प्रकाशत इत्येतद्व्यवहाराभावो वा आवरणकृत्यम्।**

[1] कृत्यसत्त्वादित्यादिः । **अभिज्ञादीति ।** वृत्तिज्ञानाभिलापादीत्यर्थः । असत्त्वापादकाज्ञानावच्छिन्नचिद्रूपं नास्तित्वं अभानापादकाज्ञानावच्छिन्नचिद्रूपोऽप्रकाशश्च नास्ति न प्रकाशत इत्याकारकाविद्यावृत्तिविषयः । **अस्ति प्रकाशत इतीति ।** उक्ताज्ञानाभावविशिष्टचिद्रूपमस्तित्वं प्रकाशश्चास्ति प्रकाशत इत्याकारवृत्तेर्विषयः । सा चोक्ताज्ञानविशिष्टचिदुपलब्ध्यभावकरणिका । तत्रास्मन्मते यद्यपि प्रतियोग्युपलब्धिसत्त्वेऽपि तदभावसत्त्वादभावस्य [2] धीप्रसङ्गेन प्रतियोग्युपलब्धेः कारणगतशक्तिविघटकत्वरूपप्रतिबन्धकत्वस्य स्वीकाराद्घटाद्यभावविशिष्टबोधे घटाद्युपलब्धेरुक्तप्रतिबन्धकत्वम् ; तथापि प्रातीतिकस्याज्ञानादेरभावविशिष्टबोधेऽज्ञानादिसंबन्धस्यैवोक्तप्रतिबन्धकत्वसं—भवात् अज्ञानाभावोपहितचिदाकारवृत्तावज्ञानोपहितचित उक्तप्रतिबन्धकत्वात् उक्तवृत्त्यभावस्याज्ञानचित्संबन्धरूपावरणप्रयुक्तत्वादुक्तावरणकृत्यत्वमव्याहतम् ॥

न चोक्तवृत्तेर्नाविद्यावृत्तित्वम् ; ब्रह्म भातीति व्यवहारकालेऽविद्याया अभावात् , नाप्यनुपलब्धत्वम् ; प्रतियोग्यनुपलब्धेरहेतुत्वस्यानुपदमुक्तत्वात् , प्रतिबन्धकस्य सिद्धान्ते विघटितशक्तिकान्न जायते विपरीताच्च जायत इति कार्याभावप्रयोजकत्वस्वीकारेऽपि प्रतिबन्धकाभावस्य हेतुत्वास्वीकारादिति—वाच्यम् ; प्रतियोग्युपलब्ध्यभावाजन्याऽपि मनोवृत्तिरुक्ताभावकालीनकारणजन्येत्यनुपलब्धत्वरूपवैजात्यस्य तत्र संभवात्तादृशवैजात्यावच्छिन्नं प्रत्युपलब्ध्यविघटितकारणशक्तेः प्रयोजकत्वेनानुपलब्धिहेतुत्वेन [3] तद्व्यवहारस्यापि संभवात् । उक्तवृत्तेः

[1] कृत्यसत्त्वादिति शेषः—ग. [2] सत्वेऽपि तदभावस्य धीप्र-क. [3] हेतुकत्वेन—ग.

**आवरणं च तद्योग्यता अज्ञानसम्बन्धरूपा सुषुप्त्यादिसाधारणी आब्रह्मज्ञानमवतिष्ठते । तेन सुषुप्तिकाले नानावरणम्, मोक्षकाले च नावरणम् । यदुक्तमस्याप्यारोपितत्वेनावरणसापेक्षत्वमिति,**

---

प्रमात्वस्थापनायेदमुक्तम् । वस्तुतोऽविद्यावृत्तित्वमपि प्रतियोग्युपलब्धि-प्रतिबद्धवृत्तेः संभवत्येव; ब्रह्म न भातीत्याकारवृत्तेरपि जीवन्मुक्तानु-वर्तमानविक्षेपशक्त्याऽविद्यालेशेन वा संभवादिति ध्येयम् ॥

नन्वस्तीतिव्यवहारे चिन्मत्रामेव विषयोऽस्तु, भातीति व्यवहारे तु तस्य विषयत्वे अस्तीतिव्यवहारस्यापि तत्समानविषयकतया तत्राप्य-भानापादकाज्ञानसंबन्धस्य प्रतिबन्धकत्वापत्तेः, भातीतिव्यवहारे उक्त-ज्ञानाभावविशिष्टा चिदेव विषयोऽस्त्विति—चेन्न; तथासत्यक्लृप्तस्या-सत्त्वापादकाज्ञान[1] प्रतिबन्धकत्वस्य कल्पनायां गौरवापत्तेः, उक्त-ज्ञानाभाव[2]विशिष्टचितस्तद्विषयत्वे तु प्रातीतिके [3]स्वाभावविशिष्ट-विषयकानुपलब्धज्ञाने प्रतिबन्धकत्वस्य क्लृप्तत्वेनागौरवमिति ध्येयम् । अत एव नास्तीत्यादिव्यवहारेऽप्युक्ताज्ञानमेव विषयः, [4]न त्वदन्यत्; उक्ताज्ञानविषयकापरोक्षवृत्तावुक्ताज्ञानहेतुत्वस्य क्लृप्तत्वात्, अन्यविषय-कत्वे तत्र तद्धेतुत्वस्य कल्प्यत्वात् । एवं च व्यवहाराभावो वेत्यत्र वाशब्दः समुच्चयार्थः । तूलाज्ञानास्वीकारपक्षे तु वृत्त्याविषयत्वसमाना-धिकरणं यदज्ञानविषयतावच्छेदकत्वं तदभाववन्निष्ठा चिदेवास्तित्वादि-रूपेति प्रतिकर्मव्यवस्थोक्तरीत्याऽवसेयम् ॥

**नानावरणमिति** । सुषुप्तौ नास्तीत्यादिवृत्त्यभावस्तु विशिष्ट-विषयकवृत्तिसामान्यकारणाहङ्कारस्याभावादिति भावः । **मोक्षकाले चेति** । अस्तीत्यादिवृत्त्यभावस्तदा[5] नावरणात्, किंत्वहङ्काराभावात्, अत एव जीवन्मुक्तस्योक्तवृत्तिर्भवत्येव; बाधिताहङ्कारानुवृत्तेः । **अस्यापि**

---

[1] अज्ञानप्रति -ग.  [2] उक्ताज्ञानाभाव–क. ग  [3] प्रातीतिकस्य–ग.
[4] न त्वन्य.  [5] वृत्त्यभावस्तु तदा -ग.

तन्न; अज्ञानसंबन्धरूपस्यावरणस्यानादित्वेन चित्प्रकाश्यत्वेन चोत्पत्तौ ज्ञप्तौ स्थितौ वा स्वानपेक्षणात्। नन्वद्वितीयत्वादिविशिष्टे तथा व्यवहारेऽपि अवस्थात्रयेऽप्यसन्दिग्धाविपर्यस्तत्वेन प्रकाशमानात्मरूपेऽध्यासाधिष्ठाने सुखादिज्ञानरूपे चिन्मात्रे तदभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरभाव इति–चेन्न; शुद्धरूपायाश्चितः प्रकाशमानत्वेऽपि तस्या एव परिपूर्णाद्याकारेणाप्रकाशमानत्वात्, तदर्थं तस्या एवावरणकल्पनात्, परिपूर्णाद्याकारस्य मोक्षदशानुवृत्तत्वेन शुद्धचिन्मात्रत्वात्। न च–निर्विभागचितः कथमेवं घटत इति–वाच्यम्; आवरणमहिम्नैव परिपूर्णं ब्रह्म नास्ति न प्रकाशत इति व्यवहारः, अस्ति प्रकाशत इति व्यवहारप्रतिबन्धश्च, अध्यासाधिष्ठानत्वादिना प्रकाशमानता चाविरुद्धेति। अत एव–अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूप-

---

आवरणस्यापि। **चित्प्रकाश्यत्वेन।** चिन्निष्ठत्वेन। **ज्ञप्ताविति।** चिद्रूपा ज्ञप्तिर्न कारणसापेक्षा, अविद्यावृत्तिरूपा तु विषयविधयाऽविद्यासंबन्धसापेक्षाऽपि न क्षतिकरीति भावः। **योग्यत्वायोग्यत्वयोः।** नास्तीत्यादिव्यवहारयोग्यत्वास्तीत्यादिव्यवहाराभावयोग्यत्वयोः। **निर्विभागेति।** पूर्णापूर्णभेदशून्येत्यर्थः। **महिम्ना** अनुभवबलेन। **प्रतिबन्धोऽभावः।** **अविरुद्धेति।** आवरणानुभवान्यथा[1]नुपपत्त्या पूर्णानन्दचिद्रूपयोर्वस्तुतोऽभिन्नयोरपि कल्पितानादिभेदस्य स्वीकारादविरोध इति भावः। इदं च परलालनम्। वस्तुतः प्रकाशमानेऽप्यात्मन्युक्तरीत्याऽज्ञानतदभावविषयकयोरुक्तव्यवहारयोर्भावाभावौ न विरुद्धौ, अखण्डाकारचरमवृत्तेरेवाज्ञानविरोधित्वादित्यसकृदुक्तम्। **अपरोक्षव्यवहारेति।** भा-

---

[1] अनुभावान्यथा–**ग.**

स्वप्रकाशत्वविरुद्धे योग्यत्वायोग्यत्वे कथमिदानीमपि ब्रह्मणि स्याताम्? न चाज्ञानादिमत्त्वेनापरोक्षव्यवहारयोग्यत्वं स्वरूपेण च तदयोग्यत्वमित्यविरोध इति—वाच्यम्; स्वरूपस्याप्रकाशत्वापातादिति—निरस्तम्। परिपूर्णाद्याकारेणेदानीं व्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वानपायात्। न चैवं—सुखादेरज्ञानावच्छिन्नचित्प्रकाश्यत्वे 'सुखादिकं न प्रकाशते' इत्यनुभवापातेन सुखादिकं प्रकाशत इत्यनुभवार्थं चितोऽज्ञानानवच्छेदेन प्रकाशोऽङ्गीकरणीय इति—वाच्यम्; इष्टापत्तेः, अनुक्तोपालम्भनत्वात्। न ह्यज्ञानावच्छेदेन चित् प्रकाशत इति ब्रूमः। अत एव च—नित्यातीन्द्रियेऽप्यज्ञानावच्छेदकतया अपरोक्षव्यवहारेण तत्रापि स्वप्रकाशापत्तिरिति—निरस्तम्; अज्ञानानवच्छेदेन तादृशस्य व्यवहारस्योक्तेः। ननु—प्रदीपावारकघटादिवच्चैतन्यावारकाविद्या चैतन्यस्यान्य-

---

तीति व्यवहारेत्यर्थः। **व्यवहाराभावेऽपि**—भातीतिव्यवहाराभावेऽपि। **योग्यत्वानपायादिति**। योग्यत्वं चाभानापादकाज्ञाननाशकवृत्तिं प्रति कदाचिद्विषयत्वमिति भावः। **अज्ञानानवच्छेदेन** अज्ञानान्यावच्छेदेनापि। **तत्रापि**—नित्यातीन्द्रियेऽपि। परमाण्वज्ञानं भातीति व्यवहारयोग्यत्वस्य फलव्याप्यत्वाभावरूपावेद्यत्वस्य च सत्वात्तत्रापि स्वप्रकाशत्वापत्तिरिति भावः। **अज्ञानानवच्छेदेनेति**—आज्ञानादिविषयतया भातीतिव्यवहारयोग्यत्वव्यावृत्तस्येत्यर्थः। **तादृशव्यवहारस्य** भातीति व्यवहारयोग्यत्वस्य। उक्तवृत्तिविषयत्वरूपयोग्यत्वस्येति समुदायार्थः। यथाश्रुतं फलव्याप्यत्वाभावविशिष्टस्याज्ञानानवच्छेदेन भातीति व्यवहारयोग्यत्वस्य सुखादावपि सत्त्वात्तत्रापि स्वप्रकाशत्वापत्तेरसङ्गतम्। अत एव मिथ्यात्वानुमानहेत्वस्वप्रकाशत्वविवेचने योग्यत्वमुक्तरूपमेवो-

संबन्धं प्रतिबध्नातु अन्यं प्रति चैतन्यमाच्छादयतु, न तु चैतन्यं प्रत्येव चैतन्ये उक्तयोग्यत्वरूपप्रकाशविरोधिनी सा, न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते ; तमःसंबन्धापातात्, न च—कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति—वाच्यम् ; आवरणं विना भेदकल्पनस्यैवायोगात्, यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः, तदभावस्यैवेदानीमज्ञानेन साधनीयत्वाच्चेति—चेन्न ; कल्पितभेदं जीवं प्रति शुद्धचैतन्यस्यावृतत्वात् । न च—भेदकल्पनस्यावरणोत्तरकालीनत्वादिदमयुक्तमिति—वाच्यम् ; भेदावरणयोरुभयोरप्यनादित्वेन परस्परमानन्तर्याभावात् । यच्चोक्तं — यो मोक्षे भावी चैतन्यं प्रति प्रकाशस्तदभाव इदानीमज्ञानसाध्य इति तन्न ; मोक्षे जन्यस्य चैतन्यप्रकाशस्याभावात्, कल्पितभेदापगमे शुद्धचैतन्यं प्रतीव प्रकाशस्य जीवं प्रत्यपि संभवात् । यच्चोक्तं — प्रकाशस्वरूपे चैतन्ये कथमज्ञानम्? न ह्यालोके तम इति, तन्न ; अज्ञानतमसोर्विरोधितायामनुभवसिद्धविशेषात् । तथाहि—'त्वदुक्तमर्थं न जानामि' इति प्रकाशमाने वस्तुन्यज्ञानस्यानुभवात्स्वरूपचैतन्यं साक्षी वा अज्ञानाविरोधि[1], तमसस्त्वालोके सत्यननुभवादालोकमात्रं तद्विरोधि । वस्तुतस्तु

---

क्तमिति ध्येयम् । **तदभावस्येति** । चिन्मात्रं प्रतीत्यादिः । ननु—नित्यप्रकाशो न जीवं प्रति प्रसक्तः ; भेदापगमे शुद्धं प्रत्येव तस्य दृष्टत्वात्, तथाच जीवं प्रत्यावरणकल्पना व्यर्था, तत्राह **कल्पितभेदापगम इति** । **जीवं प्रत्यपीति** । इदानीमित्यादिः । तथाच शुद्धं प्रति प्रसक्त्या तदभिन्नमीशं प्रतीव जीवं प्रत्यपि प्रसक्तिरिति भावः । **स्वरूपचैतन्यं साक्षी वेति** । साक्षी शुद्धचिदपि नाज्ञानविरोधी,

---

[1] नाज्ञाना।विरोधि.

अवतमसे विषयप्रकाशकालोकसहभावदर्शनेन तमस्यपि नालोकमात्रं विरोधि। न च—'त्वदुक्तार्थो न प्रकाशत' इत्यनुभवादस्तु तत्र भासमानेऽज्ञानम्, सुखादिस्फुरणे भासमाने न प्रकाशत इत्यननुभवात्कथं तत्राज्ञानमिति—वाच्यम्; सुखादिस्फुरणं न प्रकाशत इत्यनुभवाभावेऽप्यनवच्छिन्नाकारेण न प्रकाशत इत्यनुभवात्, आवारकाज्ञानस्य तत्राप्यावश्यकत्वात्। यदपि—'त्वदुक्तमर्थं न जानामी'त्यत्र भासमाने नाज्ञानम्, किंतु गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैव विशेषाज्ञानमनुभूयते, न हि परचित्तस्थमज्ञानं प्रातिस्विकरूपेणानूद्यते, एवं च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः; तथा दर्शनात्, न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा; अवच्छेदकज्ञानस्य ह्यवच्छिन्नज्ञानहेतुतापि दर्शनादेव कल्प्या, न चातिप्रसङ्गः; सामान्यविशेषभावस्यैव नियामकत्वादिति, तन्न; अज्ञानं हि विशेषावच्छिन्नतया भासते, सामान्यावच्छिन्नतया वा। आद्ये विशेषे भासमानत्वमागतमेव। न हि विशेषमभासयन्विशेषाज्ञानमित्यवभासयति। तथाच सामान्यनिश्चयजनितोऽपि संशयो विशेषमवगाहते यथा, तथा सामान्यज्ञानजनितोऽप्यज्ञानप्रत्ययो विशेषं विषयीकरिष्यतीति कुतो भासमाने नाज्ञानमिति। न द्वितीयः; सामान्यज्ञानेन तदवच्छिन्नतयैव गृहीतस्याज्ञानस्य विशेषसंब-

---

किंतु प्रमाणवृत्त्यवच्छिन्नचिदेव, तथा च शुद्धे प्रकाशमानेऽप्यज्ञानं संभवत्येव। पूर्णानन्दाकारेणावृतत्वं न तु चिन्मात्ररूपेणेति तु तव लालनमात्रं पूर्वं कृतमिति भावः। **अनवच्छिन्नाकारेण**—सुखाद्यनवछिन्नशुद्धरूपेण। **प्रातिस्विकरूपेण** — विशेषरूपेण।

न्धित्वे मानाभावेन भासमाने सामान्य एवाज्ञानमवगतम्, वस्तुनः प्रतीतिप्रमाणकत्वात्। तथा च परचित्तस्थं यथा अनूद्यते, तथा ज्ञातं[1] तथैवाज्ञातं[1] चेति सिद्धम्। ननु यथा द्वेषस्येष्टत्वेऽपि द्विष्टस्य नेष्टत्वम्, ईश्वरस्य भ्रान्तिज्ञत्वेऽपि न भ्रमविषयज्ञत्वम्, अस्मदादीनामीश्वरसार्वज्ञ्यज्ञानेऽपि न सर्वज्ञत्वम्, एवमज्ञातज्ञानाभावेऽप्यज्ञानज्ञानमिति—चेन्न; दृष्टान्तासंप्रतिपत्तेः। तथाहि—इच्छा तावज्ज्ञानसमानविषया, ज्ञानं चावच्छेदकतया द्विष्टमपि विषयीकरोतीतीच्छाया अप्यवच्छेदकतया तद्विषयत्वात्। नहीच्छा इष्टतावच्छेदकाविषया भवति। एतावानेव विशेषः। किंचित्साध्यतया विषयीकरोति,

**मानाभावेनेति**। विशेषप्रमानिवर्त्यत्वानुपपत्तिस्तु न मानम्; सामान्यज्ञानस्यैव विशेषाज्ञानधीहेतुत्ववद्विशेषज्ञानस्यैव सामान्याज्ञान[2]नाशकत्वसंभवात्। सामान्यावच्छिन्नतया विशेषाज्ञानावगाहिबुद्धेः प्रमात्वानुरोधेन सामान्यमवच्छेदकमवश्यं वाच्यम्; तथाच विशेषस्य विषयतावच्छेदकत्वेनाक्लृप्तत्वात्सामान्यमेव तथा कल्प्यते, न त्वज्ञानं प्रति सामान्यमाश्रयतावच्छेदकं विशेषस्तु विषयतावच्छेदक इति। एवं च विशेषावच्छिन्नविषयताकाज्ञानस्याप्रसिद्ध्या सामान्यावच्छिन्नविषयताकाज्ञानं प्रत्येव विशेषप्रमाया नाशकत्वसंभवान्नोक्तानुपपत्तिः[3]। किं च सामान्यावच्छिन्नतया विशेषाज्ञानस्यानुभवे धूमाद्यज्ञानमपि वन्ह्याद्यवच्छिन्नत्वेनानुभूयेत। न हि सामान्यविशेषभावो व्यापकव्याप्यभावान्य इति भावः। **अवच्छेदकतया** द्वेषविशेषणतया। **तद्विषयत्वात्** विशिष्टविषयकत्वात्। **किञ्चित्साध्यतया** द्वेषादिकमुद्देश्यतया। **अवच्छेदकतया** उद्देश्यतावच्छेदकतया। **विषयीकरोतीत्यत्र**

[1] ज्ञानं. [2] सामान्यज्ञान—क. ग. [3] नोक्तान्यथानुपपत्तिः—क.

किंचिदवच्छेदकतया। ईश्वरोऽपि भ्रमविषयमगृहीत्वा भ्रमं न गृह्णाति। भ्रमो हि भ्रमत्वेन ग्राह्यः। भ्रमत्वं च रजताभाववति रजतख्यातित्वं वा, असत्ख्यातित्वं वा, अनिर्वचनीयख्यातित्वं वा। तस्मिन् गृह्यमाणे सर्वथा विषयग्रहः। इयांस्तु विशेषः। यत् भ्रान्तः स्वातन्त्र्येण गृह्णाति, ईश्वरस्तु तज्ज्ञानावच्छेदकतयेति। ईश्वरसार्वज्ञ्यज्ञानमस्माकं तु सर्वज्ञपदेन। तत्र सर्वपदप्रतिपाद्यं जानन्नेवास्मदादिस्तत्र ज्ञानसंबन्धं गृह्णातीतीदृशं सार्वज्ञ्यमिष्टमेव। विशेषस्त्वीश्वरस्य न कुत्राप्यज्ञानम्, अस्मादृशां तु विशेषेष्वज्ञानमिति कृत्वा। एवं च ज्ञात एव विशेषेऽज्ञानज्ञानमिति। नच—घटादेरज्ञानावच्छेदकतया भानेऽपि घटाद्यज्ञाननिवृत्तिं विना तदवच्छिन्न-

---

विषयतायामुद्देश्यतातदवच्छेदकत्वयोः तृतीयार्थाभेदान्वयः। **स्वातन्त्र्येण**—शुक्त्याद्यंशे रजतादिकम्। **ज्ञानावच्छेदकतया** ज्ञानविशेषणीभूतविषयतांशे विशेषणतया। **एवं चेति**। दृष्टान्तासंप्रतिपत्तौ चेत्यर्थः। ननु—यथा द्वेषादौ स्ववृत्तित्वमगृहीत्वाऽपीच्छयां स्ववृत्तित्वेन द्वेषादिर्भाति, सत्यत्वेनास्माभिर्गृह्यमाणोऽपि भ्रमविषयो नेशेन सत्यतया गृह्यते, विशेषरूपेणेशस्य सर्वज्ञानं विशेषविषयकत्वरूपेण नास्माभिर्गृह्यते, तथा विशेषमगृहीत्वा सामान्यावच्छिन्नतयैवाज्ञानं गृह्यतामिति—चेन्न; विषयाविषयके विषयिग्रहे दृष्टान्ताभावात्। न हि यस्य ज्ञानादेर्यत्प्रत्यक्षं तद्विषयाविषयकं तदिति क्वचिद्दृष्टम्। तदुक्तम्—'विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानवित्तिवेद्यो विषय' इति। तथाच कंचिद्विषयं विषयीकुर्वन् कंचिदविषयीकुर्वन् भ्रमस्य ग्रह ईशस्य जायताम्, विशेषमात्रविषयकत्वज्ञानं कथं विशेषाविषयकेन साक्षिणा गृह्यतामिति ध्येयम्॥

**संयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञानज्ञानार्थं तदवच्छेदकविषयाज्ञाननिवृत्तेरपि वक्तव्यत्वेनाज्ञानाविरोधिज्ञानवत् अज्ञानाविरोधिन्यज्ञाननिवृत्तिरपि स्वीकार्या स्यादिति—वाच्यम्; संयोगादिसत्त्वस्यावच्छेदकघटादिसत्त्वसापेक्षत्वेऽपि यथा अभावे न स्वाधिकरणीयप्रतियोगिरूपावच्छेदकसत्त्वापेक्षा, विरोधात्; तथा अज्ञानज्ञानस्यापि न स्वविषयाज्ञाननिवृत्त्यपेक्षा, विरोधात्। न चैवं—तद्विषयकज्ञानापेक्षापि मास्तु; विरोधस्य समानत्वात्, अविरोधकल्पनाबीजस्य ज्ञान इवाज्ञाननिवृत्तावपि समानत्वात्। तथाच विषयेऽज्ञात एवाज्ञानं ज्ञायते, विषयविशेषावच्छिन्नबुद्धिस्तु तमसीव विशेषज्ञानानन्तरं 'एतावत्कालममुमर्थं नाज्ञासिषमि'त्येवंरूपा जायत इति वाच्यम्;**

---

**विषयावच्छिन्नाज्ञानज्ञानार्थं**—विषयावच्छिन्नत्वेनाज्ञानप्रकाशार्थम्। **वक्तव्यत्वेनेति**। अज्ञानस्याज्ञातत्वाभावेन प्रकाशसंभवेऽपि तदवच्छेदकस्याज्ञातत्वेनोक्तप्रकाशसंभवेन तदज्ञाननिवृत्तिर्वाच्येति भावः। **अवच्छेदकघटादिसत्त्वेति**। स्वाधिकरणसंयुक्तघटादिसत्त्वेत्यर्थः। ननु—तर्हि विशेषावच्छिन्नत्वस्याज्ञाने भानासंभवात्तत्र तदसिद्धिस्तत्राह—**विषयविशेषावच्छिन्नेति**। **तमसीवेति**। तमसि नष्टे घटादितम एतावत्कालं स्थितमिति धीरिवेत्यर्थः। 'घटं न जानामी'ति प्रत्यक्षे मन्मते घटादिज्ञानं कारणतया नापेक्ष्यत एव, विशिष्टबुद्ध्यादौ विशेषणज्ञानादेर्हेतुत्वास्वीकारात्; परंतु जातेऽपि प्रमाज्ञाने दोषात्तत्र प्रमात्वाग्रहे तद्विषये त्वदुक्तार्थं न जानामीति प्रत्यक्षम्, त्वन्मते तु तस्य ज्ञानाभावविषयकत्वेन त्वदुक्तार्थज्ञानत्वेन प्रतियोगिज्ञानापेक्षत्वमावश्यकम्, अन्यथा नेत्याकारकप्रत्यक्षापत्तेरित्युक्तज्ञानाभावे उक्तप्रत्यक्षासंभवः। अथात्र विरोधान्नोक्तज्ञानसंभवः;

हन्तैवमभावस्वभावविरोधिप्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वम - भाववैलक्षण्यसाधकमज्ञाने उपपादितमायुष्मता। किंच यद्यज्ञानं स्वकाले विषयावच्छिन्नतया न भासयेत्, तदा तु 'त्वदुक्तमर्थं न जानामी' ति विषयावच्छिन्नाज्ञानस्य वर्तमानार्थप्रत्ययो विरुध्येत। तस्माद्विषयाज्ञानसाधकत्वात्साक्षिरूपविषयप्रकाशोऽपि नाज्ञानाविरोधी, किंतु प्रमाणवृत्तिः। एकविषयत्वेऽपि प्रमाणवृत्तितदतिरिक्तवृत्त्योरज्ञानविरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाशयोर्वा तमोविरोधित्वाविरोधित्ववदुपपद्येते। नच—वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मतेऽस्या अज्ञाननिवर्तकत्वाभावादिदमयुक्तमिति—वाच्यम्; अज्ञाननिवर्तकत्वेन निवृत्तिप्रयोजकत्वस्यैवोक्तत्वात्। तच्च संब-

---

तर्हि क्लृप्तकारणबाधान्नोक्तप्रत्यक्षमभावविषयकम्, किं तु भावरूपाज्ञानविषयकमित्येव कल्पनीयम्। न तु क्लृप्तकारणबाधे कार्यमित्यादि पूर्वमुक्तम्; तथा च स्वमतहानाय स्वयमेव यतते इत्याशयेनाह—**हन्तेति**। हर्षे हन्तशब्दः, वर्तमानार्थप्रत्ययः[1]। स्थूलकालमादाय तदुपपादनं तु न युक्तम्; न जानामीति लटा स्वप्रयोगाधिकरणस्वशक्यतत्तत्कालोल्लेखात्, अन्यथाऽज्ञाननाशकालेऽपि नष्टक्षणाव[2]च्छेदेनाज्ञानाधिकरणस्थूलकालमादाय न जानामीति बुद्ध्यापत्तेः। **इदमुपलक्षणम्**—एतावत्कालं नाज्ञासिषमिति धीः स्मृतिरनुमितिरर्थापत्तिर्वा। नाद्यः; विशेषविषयकत्वेन पूर्वमननुभवात्। नेतरौ; विशेषज्ञानत्वस्य विशेषाज्ञाननाशकत्वाव्याप्तत्वात्। विशेषप्रमात्वस्याज्ञानसिद्धेः पूर्वमसिद्धत्वाद्विशेषज्ञानत्वादेर्हेतुत्वासंभवादित्याद्यपि बोध्यम्। **प्रकाशोऽपीत्य**पिना प्रमात्वेनागृह्यमाणवृत्तेः समुच्चयः। **प्रमाणवृत्तिः** प्रमात्वेन भासमानवृत्तिः। **चाक्षुषप्रकाशयोः** चक्षुःपरिणामतेजसोः। **अज्ञाननिवर्तकत्वेन**

---

[1] वर्तमानविषयकप्रत्ययः—ग. [2] भाविक्षणाव—ग.

धसंपादनद्वाराऽस्मिन्पक्षेऽप्यस्त्येव। न चाज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापात इति—वाच्यम्; मोक्षदशायामज्ञाननिवृत्तिश्रवणेन स्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वात्। न च—कथं प्रमाणवृत्तिमात्रविरोधित्वेऽज्ञानस्य ज्ञानमात्रविरोधित्वेनैव न जानामीत्याकारेण प्रत्यय इति—वाच्यम्; घटादिमात्राविरोधिनो घटाभावादेर्भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवत् ज्ञानविशेषविरोधिनोऽप्यज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतीतिसंभवात्। न ह्यभावपदादिनाभावप्रतीतौ घटाभावो न भासते। अथ सा विरोधिता तत्र विशेषमात्रपर्यवसन्ना, समं प्रकृतेऽपि; अन्यत्राभिनिवेशात्। न च—'न जानामी' ति ज्ञप्तिविरोधित्वस्यैवानुभवात्कथं वृत्तिविरोधित्वम्? त्वन्मते चैतन्यस्यैव ज्ञप्तित्वात्, चैतन्याज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगादिति—वाच्यम्; मन्मते वृत्तिप्रतिबिम्बितचै-

---

अज्ञानविरोधित्वपदेन। **अस्त्येवेति**। उपरागस्य स्वप्रागभावादिनिवर्तकत्वमस्त्येवेत्यर्थः। यत्तु निवृत्तिप्रयोजकत्वेत्यस्याज्ञाननिवृत्तिप्रयोजकत्वेत्यर्थः, स चायुक्तः; चैतन्यस्यैव तदौचित्यादिति, तच्छोभते; न हि वृत्तेश्चिदुपरागार्थत्वपक्षेऽप्यज्ञाननिवृत्तिप्रयोजकत्वम्, न वा चैतन्यस्य[1] तदापत्तिः संभवति, वृत्त्यभावकाले तदापत्तेः। **तद्विशेषमात्रपर्यवसन्नेति**। अभावपदस्य घटादिभावविशेषाधिकरणावृत्तित्वरूपेण लक्षणयेति शेषः। **सममिति**। अज्ञानपदस्य ज्ञाननाश्यत्वरूपेण ज्ञानविशेषनाश्यपरत्वम्। न हि बलिबाणादौ हरिहरादिभक्तेऽप्यसुरादिपदं सुरविशेषद्वेषिपरतया न प्रयुज्यत इति भावः। **वृत्तिप्रतिबिम्बितेति**। सुखादावपि स्वात्मकवृत्तिप्रतिबिम्बितचिदस्त्येवेति भावः।

---

[1] चैतन्यस्यैव–ग.

तन्यं जानामीति व्यवहारविषयः। तथा च न जानामीत्यनेन वृत्तिचितोरुभयोरप्यज्ञानाविरोधित्वं विषयीक्रियते। एवं च न चैतन्येऽज्ञानविरोधित्वम्; नापि वृत्तौ; वृत्त्युपारूढचित एवार्थप्रकाशकत्वेन तथात्वात्। ननु—वृत्तेरप्यर्थप्रकाशकत्वं विना जातिविशेषेणैवाज्ञानतत्कार्यनिवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवत्सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थप्रकाशकत्वेन तन्निवर्तकत्वे वक्तव्ये चैतन्यस्यापि तत्सत्त्वेन तन्निवर्तकत्वावश्यम्भावेन तन्निवृत्त्यापातः; नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामप्यज्ञानानिवृत्त्या सुखादावपरोक्षवृत्त्यभावेऽपि स्फुरणमात्रेणाज्ञानादर्शनेन चान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानविरोधित्वादिति—चेन्न; प्रमाणवृत्त्युपारूढप्रकाशत्वेन निवर्तकत्वं ब्रूमः, न तु जातिविशेषेण, प्रकाशत्वमात्रेण वा। अतो नेच्छादिनिवर्त्यद्वेषादिवदेतन्निवर्त्यानां सत्त्वापत्तिः, न वा चैतन्यमात्रस्य निवर्तकत्वापत्तिः। अत एव—शाब्दादिवृत्तौ सत्यामप्यज्ञाना-

---

**उभयोः** मिळितयोः। **अर्थप्रकाशकत्वेनेति।** अर्थेऽस्ति भातीति व्यवहारप्रयोजकत्वेनेत्यर्थः। **प्रमाणवृत्त्युपारूढप्रकाशकत्वेन।** प्रमाणवृत्त्यवच्छिन्नचित्त्वसमनियतप्रमात्वजात्या। अर्थप्रकाशके प्रमात्वव्यवहारेण वृत्त्यवच्छिन्नचित्येव तत्स्वीक्रियते, न तु केवलवृत्ताविति भावः। **जातिविशेषेण** चक्षुरादिजन्यतावच्छेदकीभूतेन वृत्तिमात्रनिष्ठचाक्षुषत्वादिजातिविशेषेण। **सत्त्वापत्तिरिति।** प्रमात्वेन प्रमानिवर्त्यस्य सत्यत्वेनासम्प्रतिपत्तेरिति शेषः। वस्तुतो वृत्तेः प्रमात्वेन निवर्तकत्वेऽपि न सत्त्वापत्तिः। न हि प्रमात्वेन प्रमानिवर्त्यस्य सत्त्वं क्वचिद्दृष्टम्। एवं चाज्ञानानुमाने वृत्तिरेव प्रमात्वेनाज्ञाननिवर्तिकेति यदुक्तम्, तदपि युक्तमेव; तदभेदाच्चैतन्येऽपि प्रमात्वव्यवहारोपपत्तेः,

निवृत्त्या सुखादौ प्रमाणवृत्त्यभावेऽपि स्फुरणमात्रेणाज्ञानादर्शने-नान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानादौ विरोधित्वमिति—निरस्तम्; परोक्षवृत्तेर्विषयपर्यन्तत्वाभावेन न विषयगताज्ञान-निवर्तकत्वम्, सुखादौ च ज्ञातैकसत्त्वादज्ञाननिवृत्तिं विनैवा-ज्ञानादर्शनम्। अतोऽन्वयव्यतिरेकयोरन्यथासिद्ध्या स्फुरणमात्रं नाज्ञानविरोधि। न चात्मनोऽज्ञानाश्रयविषयत्वे स्वसत्तायाम-प्रकाशविधुरत्वेन स्वप्रकाशत्वसाधनायोगः; परिपूर्णत्वादिनाऽ-प्रकाशविधुरत्वाभावेऽप्यध्यासाधिष्ठानत्वादिना प्रकाशमानतयाऽ-प्रकाशविधुरत्वसंभवात्। न च—वृत्तिचितोर्वैषम्योक्तिरयुक्ता, वृत्तिवत्साक्षिणोऽपि समानविषयतया अज्ञानविरोधित्वानुभवात्, अन्यथा साक्षिवेद्ये चैत्रेच्छासुखादौ मैत्रस्येव चैत्रस्याप्यज्ञानं स्यात्, नो चेन्मैत्रस्याप्यज्ञानं न स्यादिति—वाच्यम्; साक्षिणि यदज्ञानाविरोधित्वमनुभूयते, तन्नाज्ञानविरोधित्व[1]निबन्धनम् किंतु स्वविषय इच्छादौ यावत्सत्त्वं प्रकाशादज्ञानाप्रसक्तिनिब-न्धनम्। वृत्तेश्च स्वविषये प्रसक्ताज्ञाननिवृत्तिनिबन्धनमेवेत्युभ-योर्वैषम्योक्तिर्युक्तैव। अज्ञानाप्रसक्तेरेव चैत्रेच्छादौ चैत्रस्य नाज्ञानव्यवहारः, मैत्रस्य तु प्रमात्रज्ञानादेव तद्व्यवहारः।

---

अन्यथा चाक्षुषत्वादेरपि चिद्गतत्वापत्तेरिति ध्येयम्। **परिपूर्ण-त्वादिनेति**। शुद्धचिद्रूपेणावृतत्वस्वीकारेऽपि तद्रूपसंबन्धितया[2]अज्ञोऽ-हमित्यादिव्यवहारात्तद्रूपव्यवहारे प्रमाणवृत्त्यनपेक्षत्वरूपं स्वप्रकाशत्वं प्रमा-णवृत्तिं विनाप्यनुभूयमानतद्रूपव्यवहारकत्वपर्यवसन्नेनोक्तहेतुना साध्यत इत्यपि बोध्यम्। उक्तं च पूर्वं स्वव्यवहारे स्वातिरिक्तसंविद-न्तरानपेक्षत्वं स्वप्रकाशत्वमिति। **वृत्तिचितोः** प्रमाकेवलचितोः। **वृत्तेः**

---

1 निवर्तकत्व. 2 संबद्धताय-ग.

नच—तर्ह्यात्मन्यपि तत एव तदप्रसक्तिरिति—वाच्यम्; दत्तोत्तरत्वात्। किंच साक्षिवेद्यत्वं तदप्रसक्तौ तन्त्रम्, आत्मा तु न तद्वेद्यः; चिद्रूपत्वात्प्रकाश एवेति। न च—तर्हि सुतरामज्ञानानुपपत्तिस्तेजसीव तमसः, अन्यथा घटादिरालोकमिवात्मापि स्वव्यवहारे ज्ञानान्तरमपेक्षेतेति—वाच्यम्; अज्ञानावृतत्वाद्धटवदज्ञाननिवर्तकान्तरापेक्षा चेत्तर्हीष्टापत्तिः; वृत्तेरेवापेक्षणात्, प्रकाशान्तरापेक्षायां जडत्वस्योपाधित्वात्, प्रकाशत्वेऽप्यज्ञानाविरोधित्वस्योपपादितत्वात्। अत एव सर्वं वस्तु ज्ञाततयाज्ञाततया च साक्षिचैतन्यस्य विषयः, ज्ञानाज्ञानयोः स्वविषयावच्छिन्नयोरेव भानात्। एतेनान्धकारावृतवज्ज्ञानाभावावच्छेदकविषयवच्चाज्ञानावृतस्याप्यप्रकाशेन साक्षिवेद्यत्वायोग इति—निरस्तम्; विषयावच्छेदेनानुभवविरोधात्। ननु—वृत्तेरज्ञानविरोधित्वेऽप्यात्मविषया वृत्तिरिदानीमप्यस्त्येवेति कथं तत्राज्ञानम्; किंच त्वन्मते घटाद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वेन सुतरां चित्यज्ञानासंभवः, न च—विशिष्टचैतन्यरूपजीवविषया वा घटाव-

---

प्रमायाः। **अज्ञाननिवर्तकान्तरापेक्षेति।** अज्ञाननिवर्तकप्रमायां घटकान्तरापेक्षेत्यर्थः। **जडत्वस्येति।** 'यद्यदज्ञातं तत्स्वव्यवहारे स्वान्यप्रकाशापेक्ष[1]मिति' व्याप्तौ जडत्वमुपाधिः, तच्च न चिदन्यत्वम्; येन पक्षेतरत्वरूपता स्यात्, किंतु मिथ्यात्वादिरूपम्। वस्तुतोऽज्ञातत्वं यद्यज्ञानविषयत्वं तदा घटादौ साधनवैकल्यम्, यदि तदवच्छेदकत्वं तदा स्वरूपासिद्धिरपि, एतयोरन्यतरत्वं[2] तत्तथाप्रयोजकत्वम्[3], अज्ञानविषयतावच्छेदकत्वादेरुपाधित्वं चेति ध्येयम्। **अनुभवविरोधात्**—अज्ञानानुभवविरोधात्। **आत्मविषया वृत्तिरिति।** अहमित्याकारेति

---

1 पेक्ष्य–**क. ग.**　　2 तरवत्त्वं–**क. ग.**　　3 तथाप्यप्रयोजकत्वं–**क. ग.**

च्छिन्नचैतन्यविषया वा वृत्तिरज्ञानाविषयीभूतकेवलाचिद्विषयत्वादज्ञानविरोधिनी न स्यादिति—वाच्यम्; 'दण्डी चैत्र' इति वृत्त्या चैत्राज्ञानानभिभवापातात्। घटाकाशज्ञाने महाकाशाज्ञानस्य महत्त्वाज्ञाने पर्यवसानम्। अत एवाकाशो ज्ञात इति प्रतीतिः। न च श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनी; भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तरजन्येनाप्यज्ञाननिवृत्त्या[1]वतिप्रसङ्गात्, अनधिकविषयत्वे श्रवणादिवैयर्थ्यात्, सत्यत्वापाताच्चेति—चेन्न; यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मतेऽज्ञानविशेषः एकाज्ञानपक्षेऽवस्थाविशेषः शक्तिविशेषो वा अविद्यागतो विशिष्टगोचरवृत्त्या निवर्तत एव। प्रपञ्चनिदानभूतं तत्त्वमस्यादिवाक्यजन्याखण्डार्थगोचरवृत्तिनिवर्त्यमज्ञानं परमवशिष्यते; भेदभ्रमस्यानुभूयमानत्वात्। यथा अयमिति ज्ञानात्तत्राज्ञाने निवृत्तेऽपि सोऽयमित्यभेदगोचरवृत्तिनिवर्त्याज्ञानमवशिष्यते। तथा च विषयकृतविशेषाभावेऽपि

---

शेषः। **न स्यत्**—न भवति। **अतिप्रसङ्गादिति**। शुक्तौ रूप्यं नास्तीति बाधकालेऽपि भ्रमोऽनुवर्तेत, कारणविशेषजन्येनोक्तबाधेन पश्चान्निवर्तेतेति प्रसङ्गादित्यर्थः। **सत्यत्वापातात्** अधिष्ठानप्रमासामान्यनिवर्त्यत्वाभावेन प्रपञ्चस्य सत्यत्वापातात्। **विशिष्टगोचरवृत्त्या** अहमित्याकारकवृत्त्या॥

ननु—सोऽयमिति वाक्यजज्ञानं[2] तत्तोपहिते इदन्त्वोपहिततादात्म्यविषयकत्वेन तादृशविषयकाज्ञाननिवर्तकम्, अयमिति ज्ञानं तु नोक्तविषयकम्; अतो न तथेत्याशङ्क्याखण्डार्थत्वेनोक्तवाक्यस्वीकर्तृमतेऽयमिति ज्ञानसमानविषयकमेव सोऽयमिति वाक्यजज्ञानमित्याशयेनाह—**तथा चेति**। न चोक्तमतमेवाप्रामाणिकमिति—वाच्यम्;

---

1 अज्ञानानिवृत्ता. 2 वाक्यजन्यं ज्ञानं-ग.

**कारणविशेषजन्यत्वेन विशेषेण निवर्तकत्वे श्रवणवैयर्थ्यं सत्यताप-**

एकस्यां शुद्धव्यक्तौ भेदकल्पकाज्ञानस्य तत्तेदंत्वविषयकत्वे मानाभावेन व्यक्तिस्वरूपाखण्डैक्यविषयकत्वेन तन्निवर्तकज्ञानस्यापि तदौचित्यात् । न चोक्तभेदस्य तत्तेदंत्वोपहितप्रतियोग्यनुयोगिकत्वात्तज्जनकाज्ञानमप्युपहितयोरैक्यविषयकम्, न तु व्यक्तिमात्ररूपाखण्डैक्यविषयकमिति—वाच्यम्; उपहितयोर्हि भेदसहिष्णुतादात्म्यमपि नास्ति दूरे भेदासहिष्ण्वैक्यम् । न हि घटाकाशं पटाकाशमिति तादात्म्यप्रमा, किंतु घटाकाशमाकाशमिति । उक्ततादात्म्यस्वीकारेऽपि तस्य भेदाविरोधित्वेन न भेदजनकाज्ञानविषयत्वम् । न ह्यत्यन्ताभेदे तादात्म्यादिसंसर्गप्रमा । घटो घटः तद्व्यक्तिस्तद्व्यक्तिरिति संसर्गबुद्ध्यननुभवात् । तथाचोक्तभेदः शुद्धव्यक्तिप्रतियोग्यनुयोगिकः; नायं स इत्याकारस्तु तत्तेदंत्वयोरुपलक्षणत्वमात्रेण, न तु भेदधीविषयत्वेन । न चैवं—प्रतियोगितानुयोगितावच्छेदकराहित्येन भेदधीरेव न संभवतीति—वाच्यम्; प्रतियोग्यंशे ह्यप्रकारस्य न प्रतियोगितावच्छेदकत्वेन भानम् । तथाच प्रतियोग्यंश इव प्रतियोगितारूपसंबन्धांशेऽप्यवच्छेदकस्योपलक्षणत्वम्; न तु तदवच्छिन्नत्वेन प्रतियोगिताभानम् । अत एव शुद्धब्रह्मण्यानन्दचिद्रूपभेदः कल्पितः संगच्छते । एवं च शुद्धव्यक्तिरूपैक्यविषयकाज्ञाननाशकमुक्तवाक्यजज्ञानमुक्तविषयकमेवेति सामग्रीविशेषजन्यत्वमज्ञानविशेषनाशकत्वे प्रयोजकम् । न च—गौरवमिति—वाच्यम्; न ह्युक्तजन्यत्वेन नाशकता, किंतु शक्तिविशेषेणेत्याशयेनाह—**कारणेति** । **चैत्रो** ब्रह्मेति वाक्यजबुद्ध्याऽज्ञानानिवृत्तेः शक्तिविशेषेण मूलाज्ञाननाशकत्वावश्यकत्वात्करणविशेषादिनिवेशे गौरवं नेति भावः । **सत्यतापत्तिश्चेति** । शक्तिविशेषतो[1]नाशकत्वेऽपि

---

[1] शक्तिविशेषेण विशेषतो—क. ग.

त्तिश्च निरस्ता; अन्यथा सोऽयमित्यत्राप्यगतेः । किंच जीवविषया वृत्तिरविद्यावृत्तिः, न तु प्रमाणवृत्तिः; तस्या एवाज्ञानविरोधित्वात् । तदुक्तं विवरणे—'जीवाकाराहंवृत्तिपरिणतान्तःकरणेन जीवोऽभिव्यज्यत' इति । अस्यार्थः—जीवाकाराहंत्वप्रकारिकाविद्यावृत्तिः, तया परिणतान्तःकरणेनान्तःकरणपरिणामभूतज्ञानरूपवृत्तिसंसर्गेण जीवोऽभिव्यज्यत इति । न च—घटोऽयमिति ज्ञानेन चरमवृत्तिनिवर्त्याज्ञानमपि निवर्ततामिति—वाच्यम्; तदवच्छिन्नाज्ञातत्वप्रयोजकाज्ञानविशेषादे-

---

प्रमात्वेन सामान्यतो नाशकत्वस्यापि स्वकिारादाधिष्ठानप्रमासामान्यनिवर्त्यत्वयोग्यत्वस्य प्रपञ्चेऽनपायान्न सत्यतापत्तिरिति भावः । विशेषनिवर्तकत्वेऽपि शक्तिविशेषानादरे दोषमाह—**अन्यथेति । अगतेरिति** । तत्तेदंत्वोपहितयोस्तादात्म्यस्योक्तरीत्याधिष्ठानत्वासंभवात्तत्प्रमात्वेन[1] नाशकत्वे गौरवाच्च शक्तिविशेषेणैव विशेषतो नाशकत्वं युक्तमिति भावः । यथाश्रुते मनोवृत्तेरहमाकारत्वप्रतीतेर्व्याचष्टे—**अस्यार्थ इति । तयेति । अभिव्यज्यत इति ।** क्रियायां कर्तृपदं व्यङ्ग्यतावच्छेदकमहमर्थत्वमाह—**परिणतान्तःकरणेनेति ।** सौषुप्तसूक्ष्मावस्थया परिणतमनःसंसृष्टस्याव्यङ्ग्यत्वाज्ज्ञानरूपेत्युक्तम् । तथाचोक्तवृत्तिश्च परिणतान्तःकरणं च तत्तथा तदभेदेनाभिव्यज्यत इति शब्दार्थः । अहमाकारवृत्तिरविद्यावृत्तिरेव; अप्रमायामविद्याया एव परिणामित्वेन क्लृप्तत्वात्, प्रमायां प्रमाणव्यापारसहकृतस्यैव मनसः परिणामितया क्लृप्तत्वादहमर्थे चक्षुरादिसर्वप्रमाणव्यापारासंभवात् । **तस्माद्वृत्त्यन्त**मविद्यावृत्तिरूपव्यञ्जकानिर्देशः, **अन्तःकरणेत्यन्तं** तु व्यङ्ग्यस्य मनोवच्छिन्नचिद्रूपस्य प्रमाणसामान्यव्यापारशून्यताख्यापनद्वारा व्यञ्जकवृत्ते-

---

[1] तत्प्रमाणत्वेन-क.

**रेव तदवच्छिन्नज्ञाननिवर्त्यत्वस्य फलबलेन स्वीकारात् । अवतमस इव विषयप्रकाशकालोकस्य सर्वतमोऽनिवर्तकत्वेऽपि किंचित्तमोनिवर्तकत्वम् । तस्मात्सिद्धमाश्रयत्वविषयत्वभागिनी शुद्धचिदिति । एतेन—देहादिभेदो वा अभोक्तृत्वाद्यभेदो वा ब्रह्माभेदो वा अद्वितीयमात्राभेदो वा तद्विशिष्टात्मा वा न तद्विषयः;**

---

रविद्यापरिणामत्वख्यापनायोक्तमिति तात्पर्यार्थ इति भावः । वस्तुतो वृत्तीत्यन्तमभिव्यक्तिक्रियाविशेषणम् । जीवाकारा अहंवृत्तिर्यस्यां तादृश्याः साक्षिरूपाभिव्यक्तेर्विषयो वृत्तिज्ञानरूपेण परिणतमनसा संसृष्टं चैतन्यमिति वाक्यार्थ इत्याशयेन तयेति तृतीया सहार्थिकोक्ता । यदि चाहंवृत्तिरूपेण परिणतमनसेति यथाश्रुतार्थे आग्रहः, तथापि सा वृत्तिरुक्तयुक्त्या न प्रमेति नाविद्यानिवर्तिकेति ध्येयम् । उक्तवृत्तावविद्यान्यदोषश्चेदपेक्षते तदाऽहमर्थ एव तथा बोध्यः । **तदवच्छिन्नेति** । घटाद्यवच्छिन्नचिदित्यर्थः । **अवतमस इवेति** । क्षीणतमोगतेत्यर्थः । **आलोकस्येति** । घटावच्छिन्न[1]चिज्ज्ञानस्येति शेषः । यथाऽवतमसस्थघटादावालोकस्य गाढतमोरूपसर्वतमोनाशकत्वं नास्ति, गाढतमस एवाभावात्, तथावच्छिन्नचिदाकारज्ञानस्य न मूलाज्ञानरूपसर्वतमो निवर्तकत्वम्; शुद्धाकारचरमवृत्तेरेव मूलाज्ञानसमानविषयकत्वात् । उपाध्यविषयकत्वे सति चिद्विषयकत्वं हि तयोः समानविषयकत्वमित्याद्युक्तं मिथ्यात्वानुमान इति भावः ॥

**अभोक्तृत्वाद्यभेदः**—भोक्तृत्वाद्यभावत्वविशिष्टचिदभेदः । अभावस्याधिकरणरूपत्वेन चिदित्युक्तविशिष्टत्वोक्तिः । **तद्विषयः** मूलाज्ञान-

---

[1] घटाद्यवच्छिन्न—ग.

तेषामात्ममात्रत्वे उक्तदोषात्, भिन्नत्वेऽद्वैतक्षतेः, आविद्यकत्वेऽन्योन्याश्रयादित्यनुक्तोपालम्भनमपास्तम्; ब्रह्माभेदादेरात्ममात्रतापक्षे तस्याज्ञानविषयत्वमेव, दोषस्य परिहृतत्वात्। यत्तु प्रसङ्गादुक्तम्— द्वितीयाभावोपलक्षितात्मनोऽज्ञानविषयत्वे तादृशस्यैव चरमवृत्तिविषयत्वं वाच्यम्; तथाच वेदान्तानामप्युपलक्षणरूपप्रकारयुक्तोक्तात्मपरत्वेऽखण्डार्थताहानिः; अकाके काकवदित्यस्येवास्याप्यप्रामाण्यापात्तिः, उपलक्षणस्य मिथ्यात्वादिति; तत्राखण्डार्थवादे वक्ष्यामः। न च—न्यूनाप्यङ्गुलिरधिकमाच्छादयति; अविषयसंबन्धित्वात्, इयं हि विषयसंबन्धिनी कथमधिकमाच्छादयेदिति—वाच्यम्; दत्तोत्तरत्वात्। तस्मादविद्या स्वरूपत आश्रयतो विषयतश्च सुनिरूपा॥

इत्यद्वैतसिद्धावविद्याया विषयोपपत्तिः॥

---

विषयः। **उक्तदोषात्** घटाद्यवच्छिन्नचिज्ज्ञानादपि तन्नाशापत्त्यादिदोषात्। **अद्वैतक्षतेः** उक्ताज्ञाननाशिकाया उक्तभेदादिधियोऽप्रमात्ववारणायोक्तभेदादेः स्वाधिकत्वेन[1] वाच्यतयाऽद्वैतहानेः। **अन्योन्याश्रयात्** भेदादिसिद्धौ तद्विषयकाज्ञानसिद्धिः, तत्सिद्धौ च तज्जन्यभेदादिसिद्धिरित्यभिमानः। वस्तुतो भेदादेरनादित्वेऽप्यविद्यानाशनाश्यत्वेनाविद्यकत्वसंभवान्नान्योन्याश्रयः। **अकाके** काकशून्ये। **वक्ष्याम इति**। उपलक्ष्यस्य व्यक्तिमात्ररूपत्वे तज्ज्ञानस्य न सप्रकारकत्वम्, तथा शब्दाश्रयत्वाद्युपलक्ष्याकाशादेर्ज्ञान[2]स्येत्याद्युक्तमित्यपि बोध्यम्। **इयं हि**—इयं तु। **दत्तोत्तरत्वादिति**। अविद्याया अप्यात्मवद्विभुत्वपक्षे न्यूनत्वमेव नास्ति, अविभुत्वपक्षेऽप्यनुभवबलादाच्छादकत्वम्,

---

[1] तात्त्विकस्यैव—ग. [2] रज्ञान—ग.

## अथाहमर्थानात्मत्वोपपत्तिः

ततश्चाहंकारादिसृष्टिः। नन्वहमर्थ आत्मैव, तस्य कथमविद्यातः सृष्टिः, न च—सुषुप्तौ स्वयं प्रकाशमानस्यात्मनः संभवेऽप्यनेवंविधस्याहमर्थस्याभावः, यदि च सुषुप्तावहमर्थः प्रकाशेत, तर्हि स्मर्येत ह्यस्तन इवाहंकारः, अनुभूते स्मरणनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति—वाच्यम्; हेतोरसिद्धेस्तर्के इष्टापत्तेः। न ह्यद्यापि स्वप्रकाशात्मान्यत्वमहमर्थे सिद्धमस्ति। आत्मान्यत्वेनाप्रकाशत्वसाधने तेन च तदन्यत्वसाधनेऽन्योन्याश्रयः। न चाहमर्थस्यापरामर्शः, सुखमहमस्वाप्सं न किंचिदवेदिषमिति तस्यैव परामर्शादिति—चेन्न; अहंकारस्तावदिच्छादिविशिष्ट एव गृह्यत इत्यावयोः समम्। सुषुप्तौ च नेच्छादय इति कथं तदाऽहमर्थानुभवः? न चेच्छादिगुणविशिष्ट एवाऽहमर्थो गृह्यत इत्यत्र न नः सम्प्रतिपत्तिरिति वाच्यम्; गुणिग्रहणस्य गुणग्रहणव्याप्तत्वात्, अन्यथा रूपादिहीनोऽपि घटः प्रथेत। न च

---

न ह्यविद्यायास्तद्व्रस्रादेरिव, येन न्यूनत्वं तद्विरोधि स्यात्, किंतु नास्ति न भातीति व्यवहारजनकत्वमित्युत्तरमविद्यायां विभुत्वस्योक्तव्यवहारहेतुत्वस्य चोक्त्या दत्तमिति भावः ॥

तर्कैरित्यादि—अविद्याविषयस्थितिः।

इत्यद्वैतसिद्धिव्याख्यायामविद्याया विषयनिरूपणम् ॥

---

### अथाहमर्थानात्मत्वोपपत्तिः

अभाव इति। तथाचाहंकारोऽनात्मा, आत्मप्रकाशकाले प्रकाशमानत्वाभावादित्यनुमानं मानम्, अहंकारत्वं चाहमिति धीविषयताश्रयत्वम्, शुद्धात्मा च नोक्तधीविषयः; स्वप्रकाशतयैव तद्भानादिति न बाध इति भावः। हेतौ उक्ताप्रकाशमानत्वे। व्याप्तत्वादिति।

**रूपादिरहितानां तेषामसत्त्वं तत्र बीजमिति वाच्यम्; पूर्वरूपनाशाग्रिमरूपानुत्पत्तिक्षणाद्यक्षणादौ तद्विनापि सत्त्वात्। एवं च गुणाग्रहणे कथं गुणिग्रहणम्? तथाच निर्गुण एवात्मा गृह्यत इति स्वीकर्तव्यम्। अनुभवाभावे च न तस्य जागरे परामर्शः। तथाचाज्ञानाश्रयत्वेन सुषुप्तावनुभूयमानादात्मनोऽहंकारो भिन्नः। एवमेवात्मान्यत्वे सिद्धे अस्वप्रकाशत्वसाधने नान्योन्याश्रयः। न च तर्हि 'अहमस्वाप्स' मित्यहमर्थस्य परामर्शानुप्रवेशानुपपत्तिः; तदंशे परामर्शत्वासिद्धेः। एवं सत्यपि यथाऽज्ञानांशे तस्य परामर्शत्वं तथोपपादितमधस्तात्। यद्यप्यहमस्वाप्समित्यादिज्ञानान्नान्य आत्मपरामर्शः, तथाप्यहमर्थस्य सुषुप्ति-**

न च अहमर्थ एकत्वगुणविशिष्टतया सुषुप्तौ गृह्यते पश्चात्स्मर्यते चेति न व्याप्तिभङ्ग इति वाच्यम्; सुषुप्तौ विशिष्टधीस्वीकारे सुषुप्तित्वभङ्गात्, अहमर्थैकत्वग्रहस्य तार्किकादिविप्रतिपन्नत्वात्, विशेषगुणग्रहस्य गुणिग्रहव्यापकत्वभङ्गाच्च। न हि रूपाद्यविषयको घटादिग्रहो मानासिद्धः। **अनुत्पत्तिक्षणे इति**। यत्क्षणे पाकजरूपादि घटादौ जायते, तदव्यवहितपूर्वक्षणे तस्य नीरूपतावश्यं वाच्या; अन्यथा रूपादिकारणस्य रूपाद्यभावस्यासम्पत्तेरिति भावः। **आद्यक्षणादाविति**। तथाच द्वितीयक्षणादौ घटादिरूपाद्यविषयकप्रत्यक्षापत्तिः; आद्यक्षणे संयोगसन्निकर्षाभावेऽपि संयुक्तसमवायसन्निकर्षसंभवात्, द्वितीयक्षणे रूपादिसत्त्वेऽप्याद्यक्षणे तत्र सन्निकर्षाभावेन द्वितीयक्षणजायमानप्रत्यक्षे रूपादेरविषयत्व[1]संभवादिति भावः। **निर्गुण एवात्मेति**। एवकारात्सगुणात्मनि ग्राह्यत्वव्यवच्छेदः, सगुणात्मा चाहंकार एवेति बोध्यम्। **तस्य** अहंकारस्य। **अज्ञानाश्रयत्वेन** अज्ञानेन सह। **अनुभूयमानादिति**।

[1] रूपादेर्विषयत्व—ग.

**कालाननुभूतत्वेन तत्काले अज्ञानाश्रयत्वेन चानुभूतात्मन्येव परामर्शत्वपर्यवसानम् । अत एव चिदस्वपत्स्वयमस्वपीदिति परामर्शाकारतापत्तिर्निरस्ता ; तत्कालानुभूतान्तःकरणसंसर्गेऽहमित्याकारोपपत्तेः । यत्तूक्तं विवरणे—'अन्तःकरणविशिष्ट एवात्मनि प्रत्यभिज्ञानं ब्रूमः, न निष्कलङ्कचैतन्ये, तस्य मोक्षावस्थायिनः शास्त्रैकसमधिगम्यत्वा' दिति, तदत्र न विरोधाय। मोक्षावस्थायिनः शास्त्रैकसमधिगम्यत्वादिति हेतूक्त्या न निष्कलङ्क इत्युपाधिमात्रविरहिणि प्रत्यभिज्ञाननिषेधेन चान्तःकरणपदस्योपाधिमात्रपरत्वात् । तथा च सुषुप्तावप्यज्ञानोपहित एवात्मा**

---

अविद्यावृत्तिरविद्यात्मोभयविषयिका, न तु संसर्गविषयिका ; सविकल्पवृत्तिः सुषुप्तौ न संभवतीति पूर्वोक्तत्वात् । **स्वयं** अहमर्थाधिष्ठानरूपमविद्योपहितचैतन्यम् । यद्यप्यविद्योपहितत्वेन स्मृतिर्नोपादयितुं शक्या, सुषुप्तौ तथानन्[1]भवात् ; तथापि वस्तुगत्या यदविद्योपहितं साक्षिस्वरूपं तदाकारवृत्तेः सुषुप्तौ सत्त्वात्तथैव स्मृत्यापत्तिर्बोध्या । साक्ष्यंशे स्मृतिरूपा अहमर्थांशे स्मृतित्वशून्या एकैवाविद्यावृत्तिः, सामग्रीसत्त्वेनाहमर्थविषयकत्वस्य प्रत्याख्यातुमशक्यत्वादित्याशयेनाह—**तत्कालेति । यत्तूक्तमिति ।** सोऽहमिति प्रत्यभिज्ञा न स्यात् ; आत्मनः[2] स्वप्रकाशचिद्रूपत्वेन ज्ञाननाशरूप[3]संस्कारासंभवादित्याशङ्क्येत्यादिः । **विशिष्ट एवेति ।** तथाच तत्र वृत्तिज्ञानसत्त्वात्तन्नाश एव संस्कार इति भावः । **निषेधेनेति ।** अविद्योपहितेऽप्यविद्यावृत्तेर्विवरणकारसंमतत्वेन संस्काराधीनप्रत्यभिज्ञा[4]संभवात्तदनुक्त्या न्यूनत्वेनेति शेषः । **उपाधिमात्रेति ।** नचैवं—मनसः प्रतिसुषुप्तिकालं नाशात्तथापि प्रत्यभिज्ञानुपपत्तिरित्या-

---

[1] तथानुभ—**क.** [2] प्रत्यभिज्ञानस्यात्मनः—**ग.** [3] स्वरूप—**ग.** [4] ज्ञान—**क.**

गृह्यते । किंचान्तःकरणाविशिष्टे प्रत्यभिज्ञाननिषेधो नाभिज्ञानिषेधोऽपीति न विरोधः ; सुषुप्तावभिज्ञाया एवोक्तत्वात् । न च—यद्यहमर्थो न परामृश्येत, तर्हि 'एतावन्तं कालं सुप्तोऽहमन्यो वे' ति संशयः स्या त्, न त्वहमेवेति निश्चय इति वाच्यम् ; सुषुप्तिकालानुभूतात्मैक्याध्यासादिति गृहाण । यथा पूर्वदिनानुभूतदेवदत्तादभिन्नतयानुभूते चैत्रे सोऽयं न वेति न संशयः, किंतु स एवेति निश्चयः । किंच निश्चये सति संशयाभावनियमः, न तु निश्चयाभावे संशयनियमः । तदुक्तम्—'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोप' इति । न चैतावन्तं कालमहं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्रैवाहमस्वाप्समित्यत्राप्यहमंशे परामर्शत्वानुभवात्कथं तत्रापरामर्शत्वमिति—वाच्यम् ; परामृश्यमानात्मैक्यारोपात्तद्भानांशे परामर्शत्वाभिमानात् । न चापरामर्शे परामर्शत्वारोपो न दृष्ट इति—वाच्यम् ; तद्भिन्ने तत्त्वेनानुभूयमाने परामर्श-

---

शङ्क्य संसारावस्थायां मनसोऽत्यन्तानुच्छेदेन प्रत्यभिज्ञोपपत्तिरिति यत्समाहितं तत्प्रतिपादकोत्तरग्रन्थरूपाविवरणविरोध इति वाच्यम् ; अन्तःकरणपदस्य पूर्वग्रन्थे उपाधिमात्रपरत्वेप्यन्तःकरणमात्रांश एवोक्तानुपपत्तेस्तच्छङ्कासमाधानयोरौचित्यात् । **आभिज्ञाया इति ।** जागरेऽपि स्मृतेरेवोक्तत्वादित्यपि बोध्यम् । **नियम इति ।** कादाचित्कसंशयस्तु स्यादेव ; अहमर्थक्षणिकत्ववादिविप्रतिपत्त्यादिना तत्संभवादिति भावः । **तद्भिन्ने** स्मर्यमाणभिन्ने । **तत्त्वेन** स्मर्यमाणाभेदेन[1] । **अनुभूयमान इति ।** अनुभवे इति शेषः । **परामर्शत्वेति ।** स्मृतित्वेत्यर्थः । तथाचानुभूयमानत्वविशिष्टे स्मर्यमाणाभेदारोपस्थले अनुभवे स्मृतित्वमारोप्य तद्बुद्धिषयस्याभेदारोप इति भावः । स्वरूपतो विषयतश्चा-

---

[1] स्मर्यमाणभेदेन—ग.

त्वारोपदर्शनात् । अत एवाहमर्थस्यात्मान्यत्वे यः पूर्वं दुःखी, सोऽधुना सुखी जात इतिवत् यः पूर्वं मदन्यः सुषुप्तः सोऽधुना अहं जात इति धीः स्यादिति—निरस्तम्; यथा दुःखित्वेन प्राक् ज्ञानं तथा मदन्यत्वेन प्राक् ज्ञानाभावात् । सुषुप्तावहमर्थाप्रकाशवत्तदन्यत्वस्याप्यप्रकाश एव । एवंच प्रागसत्त्वाग्रहणात्पूर्वकालगृहीतेनाभिन्नतया गृह्यमाणत्वाच्च नाहंकारे जन्मप्रत्ययः । विवेकिनां चैतादृग्बुद्धाविष्टापत्तेः । नच—सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन् सुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वसिद्धिरित्यन्योन्याश्रय इति—वाच्यम्; आत्मान्यत्वसिद्धेः प्रागेवाहमर्थापरामर्शस्य साधनात् । अहमस्वाप्समित्यस्यैवात्मपरामर्शत्वाङ्गीकारेण न दृष्टहानादृष्टकल्पनापत्तिः । अत एव च सुषुप्तावहमर्थप्रकाशे ह्यस्तन इव स्मर्येतेत्यत्र नेष्टापत्त्यवकाशः । किंच 'एतावन्तं कालमहमित्याभिमन्यमान आस'मिति परामर्शः स्यात् । न चाहमर्थप्रकाशे तदभिमानापादनं कर्णस्पर्शे कटिचालनमिति—वाच्यम्; तवैव हि तत् । अहमर्थमात्रसापेक्षतया तदाभिमानप्रकाशयोरुभयोः

---

गृहीतभेदस्य ग्रहणस्मरणादिरूपज्ञानद्वयस्य भ्रमत्वमित्यख्यातिमते ग्रहणे स्मृतित्वारोपदर्शनादित्यपि बोध्यम् । **अत एव**—अहमर्थे पूर्वज्ञाना[1]भावादेव । **प्रागसत्त्वाग्रहणात्**—उत्पत्त्यग्रहणात् । **पूर्वकालगृहीतेन**—पूर्वकालीनतया गृहीतेन । तथाचोत्पद्यमानत्वाभावावच्छेदकत्वेन गृहीतपूर्वकालीनत्वस्य ग्रहान्नोत्पद्यमानत्वेन ग्रह इति भावः । यत्त्वहमस्वाप्समिति स्वापक्रियाकर्तृत्वेनाहमर्थपरामर्शो न स्यादिति, तन्न; पूर्वदिनेऽकार्षमितिवदहंकाररूपानुगम[2]स्योक्तत्वात् । **तदभिमानापादनम्**—तदभिमानपरामर्शापादनम् । **तदभिमान-**

[1] पूर्वं ज्ञाना—ग. [2] स्वरूपानुगम—ग.

समव्याप्ततया परस्परप्रकाशेन परस्परपरामर्शापादनस्याव्यधिकरणत्वात् । न च तवापि 'आत्मेत्यभिमन्यमान आस'मिति परामर्शापत्तिः; अहंकारस्य तत्र तन्त्रतया तदभावे तत्रापादयितुमशक्यत्वात् । यत्तु—सुषुप्तावहमर्थो भासत एव' 'न किंचिदहमवेदिष' मित्यज्ञानपरामर्शस्यात्माद्यज्ञानादन्यदिवाहमर्थाज्ञानादन्यदेवाज्ञानं विषयः; अन्यथा विरोधादिति,

---

प्रकाशयोः—अहमर्थाभिमानस्याहमर्थप्रकाशस्य चेत्यर्थः । परस्परप्रकाशेन—अहमर्थतदभिमानयोरन्यतरप्रकाशेन । अहमर्थाभिमानस्याहमाकारवृत्तिरूपत्वेऽपीतरवृत्तिवन्न प्रमाणव्यापारादिसापेक्षत्वम्, किंतु मनःस्थूलावस्थोपहितचिद्ग्राह्महमर्थमात्रसापेक्षत्वम् । एवमहमर्थप्रकाशस्याप्यहमर्थावच्छिन्नसाक्षिरूपत्वादहमर्थमात्रसापेक्षत्वम् । एवं चोक्ताभिमानस्य साक्षिमात्रभास्यत्वस्य त्वयापि स्वीकारात्सुषुप्तौ तत्प्रकाशावश्यकत्वेन पश्चात्परामर्शापादनं युक्तमेवेति भावः । नन्वहमर्थस्याणुजीवरूपत्वात्सुषुप्तावपि तत्सत्त्वादहमाकारवृत्तौ न तन्मात्रसापेक्षता; किंतु तस्या मनःपरिणामत्वेन मनआदिसापेक्षता, तथाच सुषुप्तौ मनोलयेन त्वन्मनोयोगरूपकारणाभावेन वा न सेति न तत्परामर्शापादनं युक्तमिति —चेन्न; अहमर्थस्याहमाकारवृत्त्यवच्छिन्नसाक्षिणा तदनवच्छिन्नसाक्षिणा परामर्शान्यथानुपपत्त्या वा सुषुप्तौ सिद्धिः । नाद्यः; त्वयाप्यनङ्गीकारात् । नेतरौ; परामर्शस्य साक्षिमात्रांश एव व्यवस्थापितत्वात्, सुषुप्तावहमर्थस्य त्वयाप्यभ्युपगतसाक्षिस्वरूपादन्यस्याप्रामाणिकत्वात्, अहमाकारवृत्तिं विनाप्यहमर्थस्य साक्षिवेद्यत्वे तस्यां त्वन्मते मानाभावात्, सुषुप्तौ तदभावस्य कारणाभावप्रयुक्तत्वोक्त्यसङ्गतेश्च । तन्त्रतयेति । आत्मेत्यभिमानोऽपि ह्यहमाकारवृत्तिरेव केवलात्मनो वेदान्तैकवेद्यत्वेनाभिमानासंभवात् । आत्माद्यज्ञानादिति । यथा तव चिद्रूपात्मांशे नाज्ञानम्; तस्य भासमानत्वात्, किंतु पूर्णा

**तदज्ञानविजृम्भितम्; न हि साक्षिवेदनमज्ञानविरोधि । सुषुप्तौ च यथाहमर्थानवभासस्तथोक्तम् । 'न विजानात्ययमहमस्मी' ति[1] सुषुप्तिविषया श्रुतिरपि तदानींतनाहमर्थाज्ञाने प्रमाणम् । न चेयं श्रुतिः 'नात्मानं न परांश्चे'ति सुषुप्तावात्माज्ञान-श्रुतिवाद्विशेषाज्ञानपरा, 'अहरहर्ब्रह्म गच्छन्ति सति संपद्य न विदु'रित्यात्मवेदनबोधकश्रुतिविरोधेन विशेषाज्ञानपरत्वं युक्तम्, न च प्रकृते तथा; विरोधाभावात् । यत्तु—अहमर्थ-स्तावत्स्मर्ता, स चाविद्यावच्छिन्नचैतन्यं वा, अन्तःकरणा-**

---

नन्दांशे, तथा मन्मतेऽहमर्थांशेऽपि नाज्ञानमिति भावः । **न हीत्यादि ।** तथाच चिन्मात्रस्य स्वप्रकाशस्याप्यज्ञातत्वसंभवात्साक्षिवेद्यस्यापि त्वद-भ्युपगताहमर्थस्याज्ञातत्वसंभवाच्च दृष्टान्तदार्ष्टान्तिकावयुक्ताविति भावः । **न विजानातीति** । 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहम-स्मीति नो एवेमानि भूतानी'ति छान्दोग्यश्रुतेरर्थतो ग्रहणमिदम् । नाहेति हशब्दः प्रसिद्धौ, दीर्घत्वं छान्दसम्, नाशब्द एव निषेधार्थो (वा) 'अमानोनाः प्रतिषेधार्था' इति शाब्दिकोक्तेः । **नात्मानमित्यादि ।**

'नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किंचन संवेत्ति तुरीयं सर्वदृक् सदा' ॥

इति गौडपादोक्तश्रुतिर्यथात्मनः परान्यत्वेनाज्ञानं बोधयति । तथा नाह खल्वयमित्यादिश्रुतिरपि परान्यत्वेनाहमर्थाज्ञानं बोधयतीत्यर्थः । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येन दूषयति—**अहरहर्ब्रह्म गच्छन्तीति ।** 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा'इति श्रुतेरर्थतो ग्रहणम् । **वेदनबोधकेति ।** ब्रह्मगमनसत्सम्पत्त्योः कार्यो-पाधिशून्यसाक्षिरूपेण प्रकाशमानत्वरूपतयोक्तश्रुतेरात्मवेदनबोधकत्वम् ॥

---

[1] सुषुप्त.

वच्छिन्नचैतन्यं वा। आद्ये योऽहमकार्षं सोऽहं सौषुप्तिकाज्ञानादि स्मरामीत्यनुभवविरोधः। अन्त्ये त्वहमर्थस्यैव तदनुभवितृत्वं वाच्यम्; स्मृतिसंस्कारानुभवानामेकाश्रयाणामेव कार्यकारणभावात्, 'योऽहमन्वभूवं सोऽहं स्मरामी'ति प्रत्यभिज्ञानाच्चेति—तन्न; दत्तोत्तरत्वात्। उक्तं ह्यविद्यावच्छिन्नचैतन्यमनुभवितृ, तदेव चान्तःकरणावच्छेदेनानुभूयमानं स्मर्त्रिति न तयोर्वैरूप्यम्। नचाविद्यावच्छिन्नाचितोऽपि नैक्यमस्ति, अन्तःकरणरूपोपाधिभेदेन भेदादिति—वाच्यम्; अविद्यावच्छिन्न एवान्तःकरणावच्छेदात्। न च—तथाप्यविद्यान्तःकरणरूपोपाधिभेदेन मठाकाशतदन्तःस्थघटाकाशयोरिवोपहितभेदः स्यादिति—वाच्यम्; दृष्टान्तासंप्रतिपत्तेः। तयो-

---

न चात्मनि प्रकाशमानेऽप्यज्ञानसंभवान्नोक्तश्रुतिविरोध इति—वाच्यम्; शुद्धात्मनि ह्यज्ञानं सतर्कमानासिद्धत्वेनोक्तम्, न तु साक्षिणि; तथाच प्राज्ञो नात्मानं वेत्तीत्येनेन साक्षिस्वरूपे प्राज्ञात्मन्यज्ञानबोधने उक्तश्रुतिर्विरुध्यत एव। न च—श्रुतिबलादेव प्रकाशमाने शुद्धात्मनीव साक्षिण्यज्ञानमुच्यतामिति—वाच्यम्; नात्मानमित्यादि[1]श्रुतिः परामृश्य[2]मानत्वान्यथानुपपत्त्या लोकसिद्धप्रतीतिकाज्ञानस्यानुवादिका; साक्ष्यंशाज्ञानं तु परामृश्यत[3] इति न तल्लोकसिद्धप्रतीतिकमिति नोक्त श्रुत्याप्यनूद्यते। न चैवमप्यात्मवेदनश्रुतिविरोधो न विशेषाज्ञानपरत्वे हेतुः, किंतु प्राज्ञविषयकत्वेनाज्ञानपरामर्शस्याभाव इति स एव वक्तुं युक्त इति—वाच्यम्; परामर्शाभावात्। प्राज्ञाज्ञानाभावसिद्धौ[4] चात्मवेदनबोधकश्रुतिरनावृतप्राज्ञप्रकाशं बोधयतीति कल्प्यते। अत एव

---

1 नात्मानं वेत्तीत्यादि-ग. 2 श्रुतिपरामृश्य—क. ग. 3 न परामृश्यत-ग.
4 सिद्धा-क.

**रेवोपाध्योः परस्परमुपहितभेदकत्वम्, यौ परस्परानुपहितमुपधत्तः। अन्यथा कम्ब्ववच्छिन्नग्रीवावच्छिन्नाकाशादन्य एव घटाकाशः स्यात्। न चैवं सुषुप्तावहमर्थाभावे अहं निर्दुःखः स्यामितीच्छया सुषुप्त्यर्थं प्रवृत्त्ययोगः; 'कृशोऽहं स्थूलोभवामी'तिवत् प्रवृत्त्युपपत्तेः। न च—तत्र कार्श्यादिनिष्कृष्टस्य शरीरस्यैव स्थौल्याधिकरणतया विवेकिनामुद्देश्यत्वमिति—वाच्यम्; प्रकृतेऽप्यन्तःकरणादिनिष्कृष्टस्यैव तदुद्देशविषयत्वात्।**

गच्छन्त्य इत्यन्तं सति संपद्येत्यन्तं चोक्तश्रुत्योः सार्थकम्; प्राज्ञस्वरूपस्यानावृतप्रकाशत्वेऽपि शुद्धात्मनो न तदित्यर्थकत्वात्। अत एव—कार्योपाधिसंसृष्टत्वेनाभानमेव सत्संपत्त्यादिशब्दार्थ इति—अपास्तम्; तादृशाभानेऽपि शुद्धात्मरूपब्रह्माभानमित्यर्थस्यासङ्गतत्वात्। यथोक्तसत्संपत्त्याद्यादरे तु शुद्धात्मन्येवाज्ञानम्, न तु प्राज्ञ इति ज्ञापयन्ती श्रुतिः प्राज्ञान्यात्मस्वरूपपरेति ध्येयम्॥

**अन्य एव घटाकाशः स्यादिति**। नन्वत्रेष्टापत्तिः; अन्यथा साक्षिण एव मनस्तद्वृत्तिघटावच्छिन्नतया प्रमातृप्रमाणप्रमेयाद्यभेदः स्यादिति—चेत्, भ्रान्तोऽसि; मनआदिकं हि यद्यपि न साक्षिचैतन्यात्स्वावच्छिन्नं भिनत्ति, तथापि वृत्त्याद्यवच्छिन्नचितः स्वावच्छिन्नाचितं भिनत्त्येवेति कथं प्रमात्रादीनामभेदः? न च—मनसो वृत्तावप्यनुगमात्कथं तदवच्छिन्नात्स्वावच्छिन्नभेदकत्वमिति[1]—वाच्यम्; मनोभागः शरीरावच्छिन्नः प्रमातुः, शरीरविषयाभ्यामनवच्छिन्नस्तु प्रमाणस्य, विषयावच्छिन्नस्तु प्रमितेरुपाधिः मनोविषयसंबन्धोत्पत्तिकालीना चित्प्रमितिः, उक्तोत्पत्तिपूर्वकालीनाऽज्ञातत्वोपहिता चित्प्रमेयम्, उक्तोत्पत्त्युत्तरकालीना चित्फलमिति, व्यवस्थायाः सिद्धान्तबिन्द्वादौ स्फुटत्वात्। **निष्कृष्टस्येति**। साक्षिगतनिर्दुःखत्वमात्रमुद्देश्यम्, अह-

[1] तदवच्छिन्नाभेदकत्व—क.

**ननु—'योऽहं सुप्तः सोऽहं जागर्मि' 'योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमी'ति प्रत्यभिज्ञानुपपत्तिः; अहमर्थस्य भेदात्, कृतहान्यकृताभ्यागमप्रसङ्गश्च; कर्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वात्, अभिन्ने चैतन्ये कर्तृत्वाद्यभावात्, तदारोपस्याप्यभावात्, देहादावतिप्रसङ्गाच्चेति—चेन्न; सुषुप्तौ कारणात्मना स्थितस्यैवोत्पत्त्यङ्गीकारेण सर्वोपपत्तेः। नच—'अथ हैतत्पुरुषः स्वपिती'त्यारभ्य 'गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन' इत्यादिश्रुतौ मनआदीनामेवोपरमोक्तेर्नाहंकारोपरम इति वाच्यम्; मनस उपरमे तेनैवाहंकारोपरमस्यापि प्राप्तेः। अहंकारो ह्यनुभवामीत्यात्मानुबन्ध्यनुभवस्याहं कर्तेत्यचिदनुबन्धिकर्तृत्वादेश्चाश्रयः**

---

मंशस्य त्ववर्जनीयेच्छाविषयत्वम्, परस्यायं ग्रामो मे भवत्वित्यादौ परसंबन्धांशस्यैवेति भावः। न च—चिन्मात्रं निर्दुःखमस्त्वितीच्छापत्तिरिति—वाच्यम्; चिन्मात्रत्वेनाज्ञानात्। निर्दुःखानुभवोऽस्त्वितीच्छा तु जायत एवेति ध्येयम्॥

**कर्तृत्वाद्यभावादिति**। तन्मतेऽहंकारस्यैव कर्तृत्वादिस्वीकारादिति शेषः। **तदारोपस्याप्यभावादिति**। अहं करोमीत्यादिप्रतीत्या अहंकार एव कर्तृत्वादिसिद्ध्या मानाभावेन चैतन्ये कर्तृत्वाद्यारोपस्याप्यभावादित्यर्थः। **स्थितस्येति**। अहंकारस्वरूपस्य तत्तत्परिणामेऽप्यत्यन्तोच्छेदाभावेन तत्परिणामावस्थानुगतत्वादैक्यप्रत्यभिज्ञादिकं युज्यत इति भावः। **आत्मानुबन्धीति**। आत्माभिन्नेत्यर्थः। यद्यप्यहमर्थस्य चिदघटितत्वेऽपि घटः स्फुरतीत्यादाविवानुभवाश्रयत्वं संभवति, तथाप्यहमिति प्रत्ययेऽवच्छिन्नानुभवरूपेणाहमर्थभानात्, अवच्छिन्नानुभवस्य चानवच्छिन्नात्मानुगतत्वात्, आत्मानुबन्धित्वेनात्मानुबन्ध्यनुभवावच्छेदकमनसस्तादृशानुभवाश्रयत्वेनोक्तिरिति बोध्यम्। **अचिदनु-**

**चिदचित्संवलनात्मकत्वादध्यस्तः। तस्य चाचितोऽन्तःकरणस्योपरमे उपरतिः। 'अथातोऽहंकारादेशः अथात आत्मादेश' इति श्रुतिरपि पृथगुपदेशेन पार्थक्ये प्रमाणम्। नन्वात्मनस्त्वन्मते 'स एवाधस्ता'दित्युपदिष्टेन भूम्नैवाहंकारेणाप्यैक्येऽपि पृथगुपदेशो युक्तः। नच—भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थः, द्वयोः सार्वात्म्यायोगात्, अहंकारस्य**

---

**बन्धीति**। अचित्परिणामेत्यर्थः। तथाचाहमर्थस्यावच्छिन्नचिद्रूपेण कर्तृत्वादिपारिणामाश्रयत्वेन चानुभवाच्चिदचिद्घटितत्वमिति भावः। **उपरतिरिति**॥

ननु—सङ्कल्परूपवृत्तिविशिष्टं मनः, अहमाकारवृत्तिविशिष्टोऽहंकारः, तथाच मनोलयोक्त्या नाहंकारलयलाभ इति—चेन्न; 'कामः सङ्कल्पो विचिकित्से'त्यादिना वृत्तिमात्रमुक्त्वा, 'एतत्सर्वं मन एवे'त्यनेन श्रुतौ सर्ववृत्त्युपहिते[1] मनस्त्वोक्त्या, 'गृहीतं मन' इत्यादिश्रुतावपि मनःसर्ववृत्त्युपहितोक्तेः, अन्यथा 'सुषुप्तिकाले सकले विलीन' इत्यादिश्रुतीनां सुषुप्तेः सुषुप्तित्वस्य च व्याघातात्। न हि सुषुप्तावहमाकारवृत्तिरध्यवसायादिवृत्तिर्वा केनाप्यनुभूयते। यत्तु वृत्तिसामान्याभाव एवोपरतिः प्रकृतश्रुत्यर्थः, न तु लय इति—तत्तुच्छम्? मनसो वृत्त्यवस्थारूपस्थौल्यत्यागे सूक्ष्मतैवावाशिष्यते, सैव च तस्य लयः; कारणस्थ[2]सूक्ष्मावस्थाया एव शास्त्रे लयशब्देनोच्यमानत्वात्। यदपि - मन आहंकारिकं न त्वहंकार इति–तन्न; उक्तसाङ्ख्यप्रक्रियाया 'अणवश्चे'ति सूत्रभाष्यादिदूषितत्वात्॥

**प्रत्यक्षसिद्धयोरिति**। भेदस्य ज्ञातत्वेन श्रुतितात्पर्याविषयत्वमित्यर्थः। **पृथगुपदेशः** सार्वात्म्येन पृथगुपदेशः। **ऐक्यार्थः** अत्यन्ताभेदतात्पर्यकः। **सार्वात्म्यायोगादिति**। सार्वात्म्यं हि बाधाया-

---

[1] वृत्त्युपहितस्य-ग. [2] कारणस्य–ग.

**त्वात्मैकत्वेन प्रत्यक्षसिद्धस्य पृथगुपदेशो भेदार्थ इति–वाच्यम्; अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरप्युपदेशो भेदार्थः, अहमर्थस्य तु ब्रह्माभिन्नत्वेन प्रत्यक्षसिद्धत्वात्तयोरुपदेश ऐक्यार्थ एव किं न स्यादिति—चेन्न; अहंकाराद्भिन्नात्मनो भूमरूपब्रह्माभिन्नत्वस्य प्रत्यक्षासिद्धत्वेऽपि तदभिन्नत्वस्यापि तदासिद्धतया उभयोः सार्वात्म्योपदेशानुपपत्तिसहकारेणास्याः श्रुतेस्तयोरभेदपरत्वमुचितम्, प्रकृते चाभेदपरत्वे विरोधः; जडाजडयोरैक्यायोगात् । नच—त्वन्मते भूमा-**

---

मध्यासे वा सामानाधिकरण्यात् भूता[1]त्मान्यन्नास्तीत्येवंरूपम्, भूतात्मा[1]नौ सर्वात्मकावित्येवंरूपं वा । तत्र द्वयोरधिष्ठानत्वे मानाभावादेकस्यैवानादिसाधारणसर्वदृश्यानुगतसच्चिद्रूपतया प्रतीयमानत्वसंभवाच्च पृथगुपदिश्यमानयोरत्यन्ताभेदं विना उक्तसार्वात्म्यमनुपपन्नमिति प्रतिसन्धानद्वारात्यन्ताभेदे द्वयोः सार्वात्म्योपदेशतात्पर्यमिति भावः । **पृथगुपदेशो भेदार्थ इति ।** परिच्छिन्नस्याहंकारस्य स्वरूपेण न सार्वात्म्यम्, किंतु सर्वात्मकचिदात्मघटितत्वेनेत्येतज्ज्ञापयितुं 'अथात आत्मादेश' इत्यादिकमुक्तम् । न चैवं 'अथातोऽहंकार'त्यादिकमनुक्त्वा 'अथात आत्मे' त्याद्येवोच्यताम्, तावतैव ब्रह्मात्मनोरैक्यसंभवादिति—वाच्यम्; आत्मपदस्य लोकेऽहमर्थ एव प्रयोगात्, शुद्धात्मनः सार्वात्म्यबोधनासंभवात् । अहंकारादेशवाक्योत्तरमात्मादेशवाक्योक्तौ तु पौनरुक्त्यप्रतिसन्धानद्वारात्मपदस्य शुद्धात्मपरत्वनिश्चयेन शुद्धात्मनः सार्वात्म्ये उक्ते तद्घटितत्वेनाहंकारस्य सार्वात्म्योक्तिरिति निश्चयसंभवः, तथा चोक्तरीत्याहंकारातिरिक्तात्मन्यात्मपदतात्पर्यनिर्णायकत्वेन पृथगुपदेशो भेदार्थः इति भावः । **जडाजडयोः** अहमर्थब्रह्मणोः । **ऐक्यायोगात्** अत्यन्ता-

---

[2] भूमा—ग.

**हंकारात्मनां बिम्बप्रतिबिम्बमुखस्थानीयाविद्योपाधिकब्रह्मजीवचिन्मात्रत्वसंभवेनाहंकारस्य जीवात्पार्थक्यासिद्धिरिति—वाच्यम्; 'यत्र नान्यत्पश्यति' 'स एवाधस्ता'दित्यादिना भूमस्वरूपोक्त्यनन्तरं यत्रेत्याद्यधिकरणाधिकर्तव्यनिर्देशात्स इति पारोक्ष्यनिर्देशाच्च द्रष्टुर्जीवादन्यत्वप्रसक्तौ तद्वारणार्थं 'अथातोऽहंकारादेश' इत्यहंकारेण भूम्नि निर्दिष्टेऽहंकारस्य देहादिसङ्घातेऽविवेकिप्रयोगदर्शनात्तदभेदप्रसक्तौ निष्कृष्टाहंकारकेवलात्मस्वरूपमादाय 'अथात आत्मादेश' इति द्रष्टृभेद उच्यत इत्येतादृशार्थ-**

भेदायोगात्। जडत्वं चात्र परिच्छिन्नत्वादिज्ञापनायोक्तम्, तेन परमतेऽहमथस्यानु[1]रूपस्याजडत्वस्वीकारेऽपि परिच्छिन्नत्वादिस्वीकारावश्यकत्वाद्ब्रह्मैक्यासंभव इति भावः। **अविद्योपाधिकब्रह्मजीवेति।** अविद्याबिम्बप्रतिबिम्बरूपब्रह्मजीवेत्यर्थः। **पार्थक्यासिद्धिरिति।** तथाचाहमर्थस्य शुद्धात्मभेदेऽपि सुषुप्तौ तदभानाद्युक्तिरसङ्गतेति भावः। **यत्र नान्यादित्यादि।** यत्र ब्रह्मणि अन्यद्दृश्यं अन्यो द्रष्टा पश्यतीत्यादिरूपा त्रिपुटी नास्तीत्यर्थः। **द्रष्टुरिति।** भूम्नीत्यादिः। **भूम्नि निर्दिष्ट इति।** अहंकारादेशवाक्ये यस्य सार्वात्म्ये तात्पर्यं तद्भूमाभिन्नम्; द्वयोः सार्वात्म्यायोगादिति ज्ञापिते सतीत्यर्थः। **अविवेकीति।** अहङ्कारेत्यस्योच्चारयितृशक्तत्वेऽपि चिदचित्संवलितस्योच्चारयितुरविवेकेनैव ग्रहः। शुद्धात्मनि प्रयोगो यद्यप्युक्तार्थरूपशक्यसंबन्धज्ञानात्, तथापि शुद्धात्मस्वरूपज्ञानस्य प्रमात्वान्नाविवेकाधीनत्वम्। अहमर्थस्याविद्याप्रयुक्तत्वेन गृहीतुरविवेकित्वमुक्तमिति बोध्यम्। **द्रष्टृभेद इति।** आत्मादेशवाक्यं शुद्धात्मसार्वात्म्यबोधनद्वाराहंकारादेशवाक्यस्य सर्वात्मकचिद्घटिताहंकारे तात्पर्यमुक्तरीत्या ग्राहयतीत्यहंकारशुद्धात्मनोर्भेदे पर्यवसन्नम्[2]। यदि चाहंकारवाक्यस्थाहंकाराहमादिपदा-

[1] अणु–ग. [2] पर्यवसानम्–क. ग.

**परत्वेन बिम्बप्रतिबिम्बकल्पनाया अत्रासंभवात् । संभवे वा अविद्योपाधिकजीवस्याहंकारत्वोक्तिः स्थूलारुन्धतीन्यायेन। अत**

---

नामपरोक्षैकरसशुद्धचिति लक्षणातात्पर्यग्राहकत्वमात्मादेशवाक्यस्योच्यते, तथाप्यहंकाररूपशक्यार्थसार्वात्म्यानुपपत्तिधीपूर्वकं तद्विविक्तशुद्धे लक्षणया तात्पर्यग्राहकत्वेनोक्तभेदपर्यवसानमक्षतमिति बोध्यम् ॥

नन्वहंकारशब्देनाविद्याप्रतिबिम्बितचिद्रूपजीवोक्तावप्युक्तरीत्या प्रसक्तभेदवारणम्, पश्चादात्मादेशवाक्येन शुद्धमादाय द्रष्टृभेदोक्तिश्च संभवतीत्यत आह—**संभव इति । स्थूलारुन्धतीति ।** यथा अरुन्धतीनिकटस्था स्थूला ताराऽरुन्धतीयमित्युक्त्वा प्रदर्श्यते ; सूक्ष्मत्वेनारुन्धत्याः प्रथमतो दर्शनासंभवात्, पश्चान्नेयमरुन्धती किंतु तन्निकटस्था सूक्ष्मतारेत्युक्त्वा अरुन्धतीप्रदर्शनात्पूर्ववाक्यस्यारुन्धतीज्ञाने तात्पर्यनिश्चयात्प्रदर्शिततारयोर्भेदपर्यवसानम्, तथाहंकारशब्देनाविद्याप्रतिबिम्बमहंकाराश्रयचैतन्यमुच्यताम् । अपरोक्षचैतन्यस्याहंकारशब्देनैव लोके व्यवहारादविद्याप्रतिबिम्बादिशब्दानामलौकिकत्वात्तेन शब्देन निर्देष्टुमशक्यत्वात्, पश्चादात्मादेशवाक्येन तस्योक्तरीत्या शुद्धसार्वात्म्यतात्पर्यनिश्चय[1] इत्यहंकारशब्दलक्षिताविद्याप्रतिबिम्बस्य शुद्धात्मभेदे वाक्यपर्यवसानमप्युच्यताम्, तथापि नास्माकं क्षतिरिति भावः। न चैवमहंकारशब्दवाच्यतैवाविद्याप्रतिबिम्बे स्यादिति—वाच्यम् ; । तथासति सुषुप्तौ विशेषगुणराहित्येनाहंकारपदवाच्यभानानुपपत्तितादवस्थ्यात् । नच— श्रुतिः पार्थक्ये प्रमाणमिति प्रतिज्ञाहानिरिति—वाच्यम् ; अहंकारपदवाच्यस्य श्रुतावनुक्तत्वेऽप्यहंकारशब्देनोक्तस्य निरुपाधिकात्मपार्थक्ये श्रुतिः प्रमाणमिति प्रतिज्ञातार्थस्य हानाभावादिति ध्येयम् ॥

**अत एव**—'स एवाधस्ता'दित्यादिवाक्यस्य भूमात्मैकत्वपरत्वा-

---

[1] तात्पर्ये निश्चय-ग.

एव—'स एवेदं सर्वम्' 'अहमेवेदं सर्वम्' 'आत्मैवेदं सर्व'-मित्याद्युपसंहाराणां 'स एवाधस्तादहमेवाधस्तादात्मैवाधस्ता'-दित्युपक्रमैः 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिस्मृतिभिश्च सर्वगतत्वपरत्वेन न सार्वात्म्यपरत्वम्, येनाहंपदस्य निष्कृष्टाहंकारचैतन्यपरत्वं स्यात्। सर्वगतत्वं चानेकेष्वपि संभवत्येव। भूमात्मोपदेशाभ्यामेव ब्रह्मात्मैक्यसिद्ध्या मध्येऽहंकारोपदेशवैयर्थ्यं चेति-निरस्तम्। 'स भगवः कस्मिन् प्रतिष्ठित' इति प्रश्नानन्तरं किं क्वचिदधिष्ठानत्वमात्रं पृष्टम्, परमार्थतः क्वचिदधिष्ठितत्वं वा। आद्ये स्वे महिम्नीत्युक्त्वा द्वितीये भूमातिरिक्तमेव

---

देव। सर्वगतत्वं चेति। वाच्यत्वज्ञेयत्वादिष्विवेति शेषः। स्वे महिम्नीत्युक्त्वेति। स्वकीये प्रपञ्चरूपे महिम्नि स्थित इत्यर्थकं स्वे महिम्नि प्रतिष्ठित इत्युक्त्वेत्यर्थः। ननु यदि स्वे महिम्नि स्थितस्तर्हि 'राजा गजाश्वादिमहिमस्थ' इत्यादौ स्वसमानसत्ताके भोगसाधने महिमपदप्रयोगात् प्रपञ्चस्य ब्रह्मसमसत्ताकत्वप्राप्तया सद्वृत्तिभेदप्रतियोगित्वादिरूपस्य वस्तुपरिच्छेदादेः प्राप्तया ब्रह्मणोऽपरिच्छिन्नत्वरूपभूमत्वव्याघात इत्याशङ्कायां [1]गोऽश्वमहिमेत्याचक्षत इत्यादिना कृतायां, नात्र महिमशब्द उक्तार्थकः; उक्तदोषात्' किंतु स्वशब्दस्य स्वाध्यस्तरूपस्वीयार्थकत्वात्तदन्वययोग्यत्वात् सङ्कोचकाभावाच्च दृश्यमात्रमेव तदर्थः, महिमशब्दो ह्युत्कर्षवाची, स च राजादौ स्वामित्वादिद्वारा गोऽश्वादिकमिव ब्रह्मणि भासकत्वादिद्वारा दृश्यमात्रमपीत्याशयेन 'नाहमेवं ब्रवीमीति होवाचे'त्यनेन निरस्तायामिति शेषः। द्वितीय इति। द्वितीयकोटिनिषेधे 'यदि वा नो महिम्नीति' वाक्येनोक्त इत्यर्थः। हेत्वा-

---

[1] गौण एवमिह महिमे—ख. ग. गो एवमिह महिमो—क.

**नास्तीत्येतदर्थपर‘अन्यो ह्यन्यस्मिन् प्रतिष्ठित’ इति पूर्ववाक्या-नुसारेण ‘स एवाधस्ता’दित्यादेरपि सार्वात्म्यपरत्वे निश्चिते**

---

काङ्क्षायामिति शेषः। **अन्यो ह्यन्यस्मिन्निति**। सत्यद्वयं चेत्तदा भूमस्त्वमेव व्याहतम्। उक्तं च पूर्वमेव ‘यत्र नान्यत्पश्यती’त्यादिना वाक्यनाद्वैतब्रह्मणो भूमस्वरूपत्वम्। अतः सत्यस्य भूमान्यस्याभावाद्भूम्नो नान्यप्रतिष्ठितत्वं परमार्थत इति श्रुत्याशय इति भावः। **पूर्ववाक्यानुसारेणेत्यादि**। पूर्ववाक्यादद्वितीयतया ब्रह्मणि प्रमिते तच्छेषीभूतं भूमात्मनोरैक्यं स एवेत्यादिनोच्यत इत्यवश्यं वाच्यम्; अन्यथा पूर्वापरवाक्यवैयर्थ्यात्। न हि पूर्वापरवाक्ये उपास्यत्वेन भूमानं आत्माभिन्नभूमानं वा प्रतिपादयतः, येनोपासनापरत्वेन तत्सार्थक्यमुच्येत। तल्लक्षणास्वीकारेऽपि [1] श्रुतकल्पनाद्दृष्टार्थत्वसंभवेऽदृष्टार्थकोपासनापरत्वे गौरवम्। द्वैतसामान्यविरोध्यद्वैतस्य ज्ञाने उपासनाया असंभवश्चेति भावः। **निश्चित इति**। ‘स एवाधस्ता’दित्यादावधस्तादित्यस्याधरमिति, उपरिष्टादित्यस्योर्ध्वमिति, पश्चादित्यस्यापरमिति, पुरस्तादित्यस्य पूर्वमिति, दक्षिणत इत्यस्य दक्षिणमिति, उत्तरत इत्यस्योत्तरमित्यर्थः॥

यद्यपि ‘दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरि’ति सूत्रे सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालेषु वर्तमानेभ्यो अस्तातिप्रत्ययः स्वार्थे विहितः, ‘पूर्वाधरावराणामसिपुरधवश्चैषा’मिति सूत्रेण च पूर्वादिभ्योऽसिप्रत्ययोऽस्तात्यर्थे विहितः, तद्योगे तेषां क्रमेण पुरादय आदेशाश्च विहिताः, ‘अस्ताति चे’ति सूत्रेण चास्तातियोगेऽपि तेषां पुरादय आदेशा विहिताः, तत एव ज्ञापकाच्च नासिप्रत्ययस्यास्तातिप्रत्ययबाधकत्वम्, ‘पश्चा’दिति सूत्रे चापरशब्दस्य पश्चभावोऽस्तात्यर्थे आतिप्रत्ययश्च विहितः, ‘दाक्षिणोत्तराभ्यामतसु’जिति सूत्रे

---

[1] श्रुतहान्यश्रुत–क. ग.

**एकत्रैव वाक्ये उपक्रमादिकल्पनेनार्थान्तराकल्पनात्, कल्प्य· मानस्य च प्रकृतार्थानुपपादकत्वात्, सर्वगता जातिरिति**

---

चास्तात्यपवादकोऽतसुच्प्रत्ययो विहितः, 'उपर्युपरिष्टा'दिति सूत्रे चोर्ध्वशब्दस्योपादेशो रिल्रिष्टातिलौ च प्रत्ययावस्तातेर्विषये विहिताः, तथाचाधस्तादित्यादेरधरे अधरादित्याद्यर्थकत्वमपि; तथापि पूर्ववाक्यानुसारेण प्रकृते सार्वात्म्यपरत्वनिश्चयादधरमित्याद्यर्थकत्वम्, तथाचाधरो देशः कालो दिक् स एवेत्याद्यर्थपर्यवासनम्। अत्र निश्चितोपक्रमस्यैवोपसंहारस्थार्थनियामकत्वात्, परमते पूर्ववाक्यानुसरणानादरेऽपि सन्दिग्धार्थकोपक्रमस्य नोपसंहारनियामकत्वम्, किंतुवाक्यशेषेण 'स एवेदं सर्व'मित्यनेनैव निर्णीतार्थकेनोपक्रमस्यार्थनिर्णय इत्यपि बोध्यम्॥

**एकत्रैव**—'स एवाधस्ता' दित्यादावेव। पूर्ववाक्यमननुसृत्ये[1]त्येवकारार्थः। 'तरति शोकमात्मवित्' 'एष तु वा अतिवदति यः सत्येनातिवदति' 'सुखं भगवो विजिज्ञासे भूमैव सुखं नाल्पे सुखम्, यत्र नान्यत्पश्यति स भूमे'त्यादिपूर्ववाक्यपर्यालोचनेनाज्ञाते सत्यसुखापारिच्छिन्नाद्वितीयात्मन्येव सप्तमप्रपाठकतात्पर्यनिश्चय इति भावः। **अर्थान्तराकल्पनात्** सर्वगतत्वमात्रस्यार्थस्य कल्पनाया असंभवात्। **प्रकृतार्थेति**—अद्वितीयभूमात्मैक्येत्यर्थः। 'स एवाधस्तादि'त्यादेः सर्वगतत्वपरत्वेऽपि न परेष्टस्य भूमात्मनोर्भेदस्य सिद्धिः; स एवाहमेवात्मैवेत्येवकारत्रयेणाधारादिषु भूमाद्यन्ययोगव्यवच्छेदबोधने[2] भूमादित्रयैक्यस्य पर्यवसानादित्यपि बोध्यम् ननु—'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इति वाक्यं नोक्तरीत्या भूम्नि प्रतिष्ठितत्वनिषेध[3]हेतुभूतस्य द्वैतभावस्य[4] बोधकम्, किंतु भूमा नान्यप्रतिष्ठितः; अनादिषु साक्षादसंबन्धात्कार्येषु तादात्म्यात् यो हि यस्मादत्यन्तभिन्नः[5] स तत्र प्रतिष्ठित उच्यते, यथा राजा गजादावित्येतदर्थपरम्; तत्राह—**सर्वेति**।

---

[1]मनुसृत्ये—ग. [2]बोधनेन—ग. [3]निषेधे-ग. [4]द्वैतभावस्य—क. ख. [5]न्ताभिन्न—क.

**पक्षे व्यापकजातेरिव भूम्नोऽप्यन्याधिष्ठितत्वसंभवात्, 'सर्वं समाप्नोषी' त्यादिश्रुतेः सार्वात्म्यपरत्वस्योपपादितत्वात्। नापि मध्येऽहंकारोपदेशवैयर्थ्यम्; ब्रह्मण आपरोक्ष्यायाहंकारैक्योक्तेः।**

---

सर्वजातीयसर्वेत्यर्थः। घटत्वादिजातिस्तादात्म्येन घटादौ स्वरूपसंबन्धेन चान्यत्र यथा संबद्धा, तथा परमते भूमा कार्यमात्रे तादात्म्येनानादिषु स्वज्ञानविषयत्वादिसंबन्धेन संबद्ध इति जातेरिव भूम्नः सर्वप्रतिष्ठितत्वं न विरुद्धम्। कार्यरूपान्यप्रतिष्ठितत्वं तु नतरां विरुद्धमिति नोक्तार्थपरमुक्तवाक्यमिति भावः। अथवा—भूमान्य एवान्यत्र प्रतिष्ठितो न तु भूमा; व्यापकत्वात्, यद्धि क्वचिदेव संबद्धं तत्प्रतिष्ठितमुच्यते इत्येतत्परा 'यदि वा नो महिम्नी' त्याद्य 'न्यो ह्यन्यस्मिन्प्रतिष्ठित' इत्यन्तश्रुतिः 'स्वे महिम्नि प्रतिष्ठित' इति तु सर्वव्यापकत्वपरमित्याशयेन स एवेत्यादिना व्यापकत्वमुपपादितम्। तथाच सार्वात्म्यपरत्वोक्तिर्न युक्ता, 'यत्र नान्यत्पश्यती' त्यादिकं तु यत्र विषये नान्यत्कर्तृ पश्यतीत्याद्यर्थकतया भूम्नो दुर्ज्ञेयतापरम्, तत्राह—**सर्वगतेति**। तथाच जात्यादौ सर्वप्रतिष्ठितत्वव्यवहारात् क्वचिदेव संबद्धं प्रतिष्ठितशब्दार्थ इत्यसिद्धम्। किंच 'स्वे महिम्नि प्रतिष्ठित' इत्यनेन सर्वव्यापकत्वोक्तौ 'यदि वा नो महिम्नी' त्यनेन सर्वाव्यापकत्वमुच्यत इति वाच्यम्; भावाभावयोरेव ताभ्यां प्रतीयमानत्वात्, अन्यथा यदि वेत्यनेन क्वचिदेव संबन्धत्वाभावस्य सर्वव्यापकत्वपर्यवसन्नस्य बोधने पौनरुक्त्यापाताच्च। तथाच परमते सर्वव्यापकत्वतदभावयोर्विरोधेन बोध्यत्वं न संभवति, निष्प्रयोजनं चेति भावः। **उपपादितत्वादिति**। सम्यक् अभेदान्यसंबन्धविलक्षणेन तादात्म्येन आप्नोषि संबध्यसे ततो हेतोः सर्वोऽसीत्यर्थस्योपपादितत्वादित्यर्थः। **श्रुतिविरोधेन** उक्तरीत्या भूमात्मैक्यश्रुतिविरोधेन। **सार्वात्म्यपरत्वमिति**। व्यापीत्यस्य सर्वतादात्म्यपरत्वात्सर्व-

**न च—त्वन्मते प्रत्यगर्थरूपस्यात्मन एवापरोक्षैकरसत्वेन तदैक्योक्त्यैवापरोक्ष्यसिद्ध्या अहंकारेऽविद्यमानसार्वात्म्योक्त्ययोग इति वाच्यम्; आत्मसंबन्धेनैवाहंकारोऽप्यपरोक्ष इत्यात्मैक्यादेवापरोक्ष्यं यद्यपि सिद्धम्, तथाप्यहंकारे आपरोक्ष्यस्य सुप्रसिद्धत्वादहंकारोक्तिर्नायुक्ता। यत्तु—**

**भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृतः।**
**जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः॥**
**अणुरूपोऽपि भगवान्वासुदेवः परो विभुः।**
**आत्मेत्युक्तः स च व्यापी**

**इत्यादिस्मृत्या श्रुतेः सार्वात्म्यं नार्थः; किंतु सर्वगतत्वम्—इति। तन्न; श्रुतिविरोधेन स्मृतेरेव सार्वात्म्यपरत्वम्, न तु स्मृत्या श्रुतेरन्यथानयनम्। न च—मोक्षधर्मे—**

**'अनिरुद्धो हि लोकेषु महानात्मा परात्परः।**
**योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम्॥**

---

मूर्तसंयोगिरूपविभुपरत्वे विभुपदवैयर्थ्यात्, व्यापकत्वस्य सङ्कोचकाभावाच्च। तादात्म्येनान्तरङ्गसंबन्धेन व्यापकत्वसंभवे बहिरङ्गेण स्वीयज्ञानविषयत्वादिसंबन्धेन तदुक्त्ययोगात्। यद्यपि सिद्धान्ते न सर्वमूर्तसंयोगित्वं भूम्नि, तथाप्यपरिच्छिन्नत्वादियुक्तमेव विभुपदार्थः। **अणुरूपोऽपि**। उपास्यरूपेण परिच्छिन्नोऽपि ज्ञेयरूपेणापरिच्छिन्न इत्यर्थः। **जीवस्थः** अविद्याप्रतिबिम्बरूपजीवाश्रितः, **अनिरुद्धः** अविद्याकामकर्मभिरिहामुत्रसञ्चारित्वेन न निरुद्धः। **सोऽहंकार इति**। तथाच तदुपलक्षितापरोक्षचिद्भेदतात्पर्येण स एवाहंकृतिरित्युक्तम्। एवं च सर्वजीवप्रत्यक्चैतन्यरूपशुद्धात्मैव भूमेत्याह। **अणुरूप इत्यादि**। **वासुदेवः** वसति सर्वभूतेषु दीव्यति चेति वासुदेव इत्यर्थः।

**सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः' ॥**

**इत्यनेन 'सैव हि सत्यादय' इति सूत्रेण चाहंकारस्यात्मत्वम्, अन्यथा व्याप्त्युक्तिरयुक्ता स्यादिति—वाच्यम्;**

---

**अहंकारस्यात्मत्वमिति** । अनिरुद्धो हीत्यादिस्मृतौ पितामहादिजगन्निर्मातृत्वेन 'आत्मन एवेदं सर्व'मित्यादिश्रुत्युक्तात्मन्यहंकारपदप्रयोगात् 'सैव हि सत्यादय' इति सूत्रेणैकस्याः सत्यविद्यायाः प्रतिपादकतया निर्णीते 'स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मे'त्यादि 'तत्सत्यमसौ स आदित्यो य एतस्मिन्मण्डले यश्चायं दक्षिणेऽक्षन् पुरुषस्तस्योपनिषदह'मिति बृहदारण्यके दक्षिणाक्षिगतपुरुषेऽहंपदनामत्वोक्तेश्चाहंकारस्यात्मत्वमित्यर्थः । **व्याप्त्युक्तिः** अपरिच्छिन्नत्वोक्तिः । महदादिपदैरिति शेषः । वस्तुतः—

'परमात्मेति यं प्राहुः साङ्ख्ययोगविशारदाः ।
तस्मात्प्रसूतमव्यक्तं प्रधानं तद्विदुर्जनाः ॥
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ।
अनिरुद्धो हि लोकेषु महानात्मा परात्परः ॥
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।
सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहंकारप्रसूतानि महाभूतानि पञ्च च' ॥

इति मोक्षधर्मवाक्ये महदहङ्कारपदयोः साङ्ख्यसिद्धमहदहङ्कारावर्थः, तौ च मन्मते भगवद्वीक्षणचिकीर्षे; तथा चोक्तवाक्येऽहंकारस्यात्मत्वोक्तिर्मौढ्यादेव । अत एव—

'तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः ।
अहंकारस्तत' इत्यपि मोक्षधर्मे स्थानान्तरे उक्तम् । 'महा-

'अहंकारश्चाहं कर्तव्यं चे' ति श्रुतेः 'महाभूतान्यहंकार' इति स्मृतेरहंकारस्य व्यापकत्वासंभवात् 'अहं मनुरभव'मित्यादाविवाहंपदस्य निष्कृष्टाहंकारचैतन्यपरत्वात् । ननु—अनयोः श्रुतिस्मृत्योर्महत्तत्त्वकार्यं मनआदीनां कारणं वैकारिकादिभेदेन त्रिविधमहंकारादिपदवाच्यं विषयः, न त्वहमर्थः; तथा च स्मृतिः—

महत्तत्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् ।
क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥

इत्यादेरविरुद्धार्थमादायोपपत्तेः । विरुद्धार्थत्वकल्पनायां 'बुद्धिरव्यक्तमेव चे' त्यत्र क्षेत्रे प्रयुक्तबुद्धिशब्देन संविद उक्तौ

---

नात्मे' ति मोक्षधर्मोक्तमहत्तत्त्वस्य मायावृत्तिरूपवीक्षणरूपत्वं तद्विशिष्टे स्वरूपत्वं[1] वा विवक्षितं बोध्यम् । 'यथा सौम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठते' इत्यादि 'मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं च अहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं चे' त्यादि प्रश्नोपनिषद्यात्माश्रितत्वेनोच्यमानमनआद्यन्तरिन्द्रियचतुष्टयमध्ये 'महाभूतान्यहंकार' इत्यादि 'एतत् क्षेत्रमि'त्यन्तगीतावाक्ये च क्षेत्रमध्ये चाहंकारस्य पाठान्न तस्यात्मत्वमित्याशयेनाह—**अहंकारश्चेत्यादि** । **व्यापकत्वासंभवात्** इन्द्रियक्षेत्ररूपाहंकारादिव्यापकात्मस्वरूपत्वासंभवात् । **अहं पदस्येति** । अनिरुद्धो ही' त्यादिस्मृतौ 'स यो हैत' मित्यादिश्रुतौ चाहंकाराहंपदयोरित्यर्थः । लक्षणयेति शेषः । तथाच शुद्धात्मा नाहंकारादिपदमुख्यार्थ इति भावः । **मनआदीनां** मनइन्द्रियभूतानाम् । **कारणं** यथाक्रमं हेतुः । **वैकारिकादिभेदेन** सात्त्विकराजसतामसभेदेन ।

---

[1] तद्विशिष्टेश्वररूपत्वं–ग.

**संविदोऽपि क्षेत्रत्वापत्तिः । न च—बुद्धिशब्दस्य नानार्थत्वम्, न त्वहंकारस्यात्मातिरिक्तार्थकत्वमिति—वाच्यम्; 'दम्भाहंकारसंयुक्ता' इत्यादौ देहेऽहंबुद्धौ गर्वे च प्रयोगेण 'गर्वोऽभिमानोऽहंकार' इत्यभिधानेन चाहमर्थवाचित्वनियमाभावात्, तथाचात्मवाच्यहंशब्दोऽस्मच्छब्दासिद्धः । अहंकारशब्दोऽनात्मवाची । तत्पर्यायस्त्वहंशब्दो मान्ताव्ययमिति—चेन्न; मान्तदान्तत्वभेदेनार्थभेदकल्पनमयुक्तम् । सर्वेषामेव तेषामहमिति प्रतीयमानाहंकारविषयत्वमेव; पर्यायतयैव प्रयोगदर्शनात् । अहंकारातिरिक्तात्मनि प्रयोगस्तु लक्षणया; मान्तदान्तत्वेनानिर्धारिताहंशब्दस्याहंकारे प्रयोगदर्शनस्य नियामकत्वात् । यथा—**

---

**प्रतीयमानेति** । चिदचिद्ग्रन्थिरूपेति शेषः । यथा 'अहंकारश्चाहंकर्तव्यं चे'ति श्रुतौ 'महाभूतान्यहंकार' इति स्मृतौ चाहंकारपदस्य चिदचिद्ग्रन्थिविषयत्वम् । तथा 'दम्भाहंकारसंयुक्ता' इत्यादावप्यहंकारगते धनित्वाभिजातत्वादिरूपोत्कर्षे अहंकाराभेद[1]विवक्षया तद्विषयत्वम् । उक्तग्रन्थिश्चाहमिति शब्देन प्रतीयत इति मान्तदान्तयोरर्थभेदे मानाभावः । अत एवाहन्ताऽहंभाव इत्यादिना उक्तग्रन्थिभावः प्रतीयते । न हि दान्तशब्दादहंभावादिपदं सिध्यति, अत एवाविद्याऽहंमतिरित्युक्तग्रन्थिर्बुद्धेः पर्याय इति भावः । नन्वहंकाराहंपदयोरुक्तग्रन्थौ प्रयोगो नैकरूपेण बोधक इति भिन्नार्थकत्वमास्ताम्, तत्राह—**पर्यायतयैवेति** । एकरूपेण बोधकेत्यर्थः । **प्रयोगस्तु** अहं ब्रह्मास्मीत्यादिप्रयोगस्तु । **प्रयोगदर्शनस्य** लौकिकवैदिकभूरिप्रयोगदर्शनस्य । **नियामकत्वादिति** । शुद्धात्मलक्षणायामिति शेषः । अहंकारशब्दोऽनात्मवाचीति वदतस्तव

---

[1] भेद—क. ग.

'अनिरुद्धो हि लोकेषु महानात्मा परात्परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥ इति ।
'सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः' ।

इत्यत्र लक्षणयाऽहंकारशब्द आत्मनीति । यत्तु—अहमर्थे आत्मानात्मधर्मदर्शनमसिद्धम्; कर्तृत्वादेरात्मधर्मत्वादिति, तत्र कर्तृत्वादेरनात्मधर्मत्वं यथा तथा वक्ष्यामः । ननु—अनात्म·

मतेऽप्यहंकारशब्द आत्मनि लाक्षणिकः, तथाच तद्वदहंशब्दोऽप्यहंकारवाची मान्तदान्तसाधारण आत्मनि लाक्षणिक इत्याह—**यथेति** ॥

नन्वहंकाराहंपदयोरुक्तग्रन्थिवाचित्वे परकीयोक्तग्रन्थावपि तत्प्रयोगापत्तिरिति—चेन्न; त्वन्मतेऽप्यहंकारमान्ताहंपदयो परकीये क्षेत्रे प्रयोगापत्तेः । अथ जातिविशेषपुरस्कारेण परकीयक्षेत्रेऽहंकारोस्ति अहमस्मीति प्रयोग इष्ट एवेति ब्रूषे, तर्हि ममापीष्ट एव । एतावांस्तु भेदः—तव शक्त्या मम तु लक्षणया । मम ह्युच्चारयितृतावच्छेदकवत्त्वेनाहंकारदान्तमान्ताहंपदानां स्वोच्चारयितरि शक्तता[1], तव दान्ताहंपदस्यैवेति । एवं च मम शुद्धात्मनोऽनुच्चारयितृत्वेन लक्ष्यत्वम् 'महत्तत्त्वं भगवतो वीक्षणम्, तस्माद्विकुर्वाणात्तदवस्थमायापरिणामः सिसृक्षारूपोऽहंकारस्त्रिगुणात्मकमायापरिणामत्वात्सात्त्विकादिरूपेण त्रिविधः । पूर्वपूर्वपरिणामावस्थमायाया एवोत्तरोत्तरपरिणामं प्रति परिणामित्वेनाहंकारस्य सात्त्विकाद्यंशेन मनआदिसात्त्विकादिपरिणामसंभवात्सात्त्विकादेर्मनआदिहेतुत्वोक्तिः । तस्य च क्रियाशक्तित्वेनाहंकारपदवाच्योच्चारयितृसाम्यादहंकारपदेन गौण्या वृत्त्या बोध्यते इत्याशयेन क्रियाशक्तिरित्युक्तमिति बोध्यम् ॥

[1] शक्यता—क. ग.

धर्मत्वेऽपि कर्तृत्वादेस्तदाश्रयस्याभानेऽपि कर्तृत्वादिकमात्मनि भासताम्, 'गौरोऽह'मित्यत्र शरीरगतगौरत्वमिवेति—चेन्न; दृष्टान्तासंप्रतिपत्तेः, तत्रापि देहत्वेनाभानेऽपि गौरत्वमनुष्यत्वादिना तत्प्रतीतेः। अनुमानं च—अहमर्थः, अनात्मा, अहंप्रत्ययविषयत्वात्, शरीरवत्। न चाहमर्थान्तर्गताधिष्ठानभूतचितोऽपि तत्प्रत्ययविषयत्वात्तत्र व्यभिचारः; येन रूपेणाहंप्रत्ययविषयता तेन रूपेण तस्याप्यनात्मत्वात् स्वरूपेणाहंप्रत्ययविषयत्वाभावान्न व्यभिचारः। अहमर्थः, आत्मान्यः, अहंशब्दाभिधेयत्वात्, अहंकारशब्दाभिधेयवत्। नचात्रासिद्धिः पर्यायताया दर्शितत्वात्। न च—त्वयाप्यात्मनो गौरोऽहमित्यनात्मारोपाधिष्ठानत्वं मा न भूवं भूयासमित्यादिना परमप्रेमास्पदत्वमहमर्थस्य स्वसत्तायां प्रकाशाव्यभिचारेणात्मनः स्वप्रकाशत्वं चोक्तम्, तत्सर्वमहमर्थस्यानात्मत्वे न युक्तं स्यादिति-

---

**तत्रापि** गौरोऽहमित्यत्रापि। **तत्प्रतीतेः** गौरत्वाद्याश्रयप्रतीतेः। तथा चानुभूयमानारोपस्थले[1] धर्माध्यासस्य प्रतिबिम्बरूपत्वं धर्म्यध्यासव्याप्यत्वं वेति नियमेन प्रकृते प्रतिबिम्बरूपत्वाभावे धर्म्यध्यास आवश्यकः। अत एव 'सुरभि जल'मित्याद्यनुभूयमानारोपे धर्म्यध्यासावश्यकत्वम्। स्मर्यमाणसौरभाद्यारोपे तु क्वचित्तदभावेऽपि न क्षतिरिति भावः। **विषयत्वादिति**। विशिष्टबुद्धेः शुद्धविशेष्यकत्वनियमाङ्गीकारेऽपि विषयत्वं किंचिद्रूपावच्छिन्नं निवेश्यम्। शुद्धे तु विषयत्वं न केनापि रूपेणावच्छिन्नमिति भावः। **अहंशब्दाभिधेयत्वात्** मान्ताहंपदवाच्यत्वात्। वाच्यत्वमात्रं परमते व्यभिचारीति विशेषणम्—**अहंकारशब्देति**। परमते मान्ताहंपदाहंकारपदवाच्ययो-

---

[1] स्थाने –ग.

वाच्यम्; इदम इवाधिष्ठानावच्छेदकत्वेनाधिष्ठानत्वोक्तेः। परमप्रेमास्पदत्वमहमर्थे आत्मैक्यारोपात्। न चैवमन्योन्याश्रयः; सुषुप्तिकालीनप्रकाशाप्रकाशाभ्यां वैधर्म्येण भेदसाधनात्। न चाहमर्थप्रेम्णोऽन्यस्य प्रेम्णोऽननुभवः; परामर्शसिद्धसुषुप्तिकालीनतादृशप्रेमानुभवस्य सत्त्वात्। न चाहिते हितबुद्ध्या प्रेमोत्पत्तिदर्शनेऽप्यप्रेमास्पदे प्रेमास्पदतारोपो न दृष्ट इति—वाच्यम्; अहमर्थे आत्मैक्यारोपनिबन्धनं प्रेमास्पदत्वम्, न तु स्वाभाविकमिति ब्रूमः, न तु प्रेमास्पदत्वारोपम्। अहमर्थात्मनोर्भेदेऽप्यहमर्थस्य प्रकाशाव्यभिचारः स्वप्रकाशात्मसंबन्धं विना न घटत इति सोऽपि तत्र प्रमाणमिति नायुक्तिलेशोऽपि। न च—

> समारोप्यस्य रूपेण विषयो रूपवान्भवेत्।
> विषयस्य तु रूपेण समारोप्यं न रूपवत्॥'

इति वाचस्पत्युक्तेरन्तःकरणगताप्रेमास्पदत्वस्यैवात्मनि प्रतीत्या-

---

रनात्मत्वात्साध्यसाधनावैकल्यम्। **अधिष्ठानावच्छेदकत्वेन** आधारतावच्छेदकत्वेन[1]। यथाश्रुतेऽनवच्छिन्नचित एव मूलाविद्याविषयत्वरूपेण गौरत्वाद्यध्यासाधिष्ठानत्वेनासङ्गतिः। **सुषुप्तिकालीनेति**। सुषुप्तौ निर्विकल्पकसुखधीरेव प्रेमोत्पादिका, प्रेम च नेच्छा; येन सिद्धसुखे न स्यात्, किंतु स्नेहरूपवृत्तिविशेषः। अथवा **सुषुप्तीत्यादेः** सुषुप्तिकालीनस्य प्रेममूलानुभवस्येत्यर्थः। तथा च सुषुप्तौ सप्रकारकज्ञानेच्छयोरसंभवेऽपि सुषुप्तानुभवजन्यस्मृत्या सौषुप्तसुखे उत्तरकालसत्त्वेनेच्छा अहमर्थविषयिका[2] नेत्यर्थः। **नायुक्तिलेशः** न किमप्ययुक्तम्। **रूपेण**—धर्मेण। **विषयः**—अधिष्ठानम्। **रूपवान्**—धर्मवान्। **अप्रेमास्पदत्वस्यैवेति**। एव-

---

[1] आरोपात्पूर्वमधिष्ठानगतत्वेन—ग.  [2] र्थाविषयिका—क.

पत्तिरिति—वाच्यम्; किमधिष्ठानगतधर्मस्यारोप्येऽभानमापाद्यते, आरोप्यगतधर्मस्याधिष्ठाने भानं वा। नाद्यः; यद्धर्मवत्तया ज्ञायमानेऽधिष्ठाने आरोप्यनिवृत्तिस्तस्यैवारोप्येऽभाननियमेन प्रकृते तदभावात्। न द्वितीय; अधिष्ठानगतधर्मप्रतीत्यविरोधिन आरोप्यगतस्याधिष्ठाने भानेऽपि प्रकृतेऽविरोधात्। आत्मैक्याध्यासकाल एव प्रेमास्पदत्वसंभवेनारोप्येऽप्यप्रेमास्पदत्वाप्रतीतेः कुतो विषये तत्प्रतीतिः? यथा इदमिति

कारादात्मगतस्य प्रेमास्पदत्वस्यान्तःकरणे प्रतीतिव्यवच्छेदः। **अधिष्ठानगतधर्मस्य**—अधिष्ठानधर्मसामान्यस्य। **तस्यैवेति**। अधिष्ठानधर्मसामान्यस्यारोप्ये [1]भानाभावे तु इदंत्वादेः रूप्यादौ भानं न स्यात्। परस्परधर्माध्यासो भाष्ययुक्त्यादिसिद्धो विरुध्येतेति भावः। **प्रतीत्यविरोधिनः**—प्रतीतिप्रतिबध्यधीविषयान्यस्य। **आरोप्यगतस्य** रज्वाद्यारोप्यसर्पादिगतस्य भीषणत्वादेः। **अविरोधादिति** यदुक्तं तद्विवेचयति—**आत्मैक्येति**। प्रेमास्पदत्वेन भासमानात्मैक्येत्यर्थः। **प्रेमास्पदत्वसंभवेन** आरोप्ये भासमानप्रेमास्पदत्वसंभवेन। प्रेमास्पदत्वं हि प्रेमविषयतायोग्यत्वं सुखत्वेन भासमानत्वरूपं, तस्य च मनआद्यध्यासपूर्वमेवात्मनि प्रतीतेस्तदभावविशिष्टतया मनआदेर्नात्मन्यध्यासः, नतरामुक्ताभावस्यात्मन्यध्यास इति भावः। **यथेति**। यत्त्विदंत्वादिनाधिष्ठानज्ञानस्य रजताद्यध्यासहेतुत्वादिदंत्वादिना रजतादिकं भायात्, प्रेमास्पदत्वादिना तु नाधिष्ठानज्ञानं किल कारणमिति, तच्छोभते; येन रूपेणाधिष्ठानस्य भ्रमे भानं तेन रूपेण तज्ज्ञानस्य भ्रमे हेतुत्वेन प्रेमास्पदत्वेन ज्ञानस्यापि हेतुत्वात्, पूर्णसुखरूपेणावृतत्वेऽपि साक्षिसुखस्येदानीमनावृतत्वात्, उक्तप्रेमास्पद-

[1] मानाभावे—ग.

**रजताध्यासकाल एव रजते अनिदन्त्वाप्रतीतिः। यत्तु कैश्चित्परिह्रियते—सुखानुभवरूपस्यात्मनोऽहमर्थाद्भेदेनैव सुखमनुभवामीत्यादौ प्रतीतिरिति, तन्न; वैषयिकसुखानुभवस्यात्मान्यत्वात्। न च—मोक्षेऽहमर्थाभावेनात्मनाशो मोक्ष इति बाह्यमतापत्तिः, प्रेमास्पदस्याहमर्थस्य त्वन्मतेऽपि नाशात्, तदन्यस्य शून्यस्य तन्मतेऽप्यनाशादिति—वाच्यम्; औपाधिकप्रेमास्पदनाशेन बाह्यमतप्रवेशापत्तौ शरीरनाशेऽपि तदापत्तेः। एतावताहमर्थस्य मुक्त्यनन्वयेऽपि 'माममृतं कृधि' 'ज्योतिरहं विरजा विपाप्मा भूयास'मिति श्रुतिरपि चैतन्यगतमेवामृतत्वं विषयीकरोति' 'अहं पुष्टः स्यामि'तीच्छेव स्वसमयविद्यमानशरीरवृत्तिपुष्टिम्। न च—'शरीरं पुष्टं स्या'दिति शरीरमात्रे पुष्टेच्छावत्**

---

त्वस्याध्यासपूर्वं भानसंभवात्। **कैश्चित्**—परमतानुयायिभिः। **भेदेनैवेति**। तथा चाहंकारस्य नात्मन्यैक्यारोप इति तस्य प्रेमास्पदत्वासंभव इति भावः। **वैषयिकेति**। यद्यप्यात्मैव सुखस्वरूपम्, तथापि सुखमनुभवामीत्यादौ विषयसंबन्धजन्यवृत्त्यवच्छिन्नात्मैव सुखपदवाच्य इति स एव तत्र विषय इति भावः। **आत्मान्यत्वात्** यादृशे अविद्योपहितात्मन्यहंकारैक्याध्यासस्तद्वैलक्षण्यात्तद्वृत्तेरहमर्थभेदस्य प्रतीयमानस्याश्रयत्वात्। वैषयिकसुखानुभवेऽहमर्थ[1]भेदधीः, अहमर्थाधारे[2] अविद्योपहिते त्वैक्यधीरेवेति भावः। स्वभावतः सुखरूपेण भासमानं यत्तस्य न मन्मते नाशः, मनस्तु शरीरमिव न तथेति तन्नाशो मोक्षे न दोष इत्याह—**औपाधिकेति। माममृतं कृधीति**। 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधी'ति

---

[1] नुभवेऽर्थ–क. ग. [2] र्थाधिष्ठाने–ग.

**'आत्ममात्रं मुक्तं स्या'दितीच्छाया अदर्शनेन मुक्तेरनिष्टत्वापत्तिरिति—वाच्यम्; इच्छासमयेऽन्तःकरणाध्याससंभवेन यद्यपि नात्ममात्रगतमुक्तीच्छा, तथापि विशिष्टगतमुक्तीच्छाया एव विवक्षितविवेकेन विशेष्यमात्रगतमुक्तिविषयत्वपर्यवसानात्तस्यामिष्टत्वोपपत्तेः। न चाहमर्थस्यान्तःकरणग्रन्थित्वे मम मन इति धीर्न स्यात्; चिदचिद्ग्रन्थिरहंकारः, अचिन्मात्रमन्तःकरणमिति भेदेन षष्ठ्युपपत्तेः। न चैवं—'मनः स्फुरति मनोऽस्ती'त्यादिज्ञानादहमिति ज्ञानस्य वैषम्यानुभवो न स्यात्; चिदचित्संवलनविषयत्वाविशेषादिति—वाच्यम्; संवलनं हि न संबन्धमात्रम्, किंतु तादात्म्येन प्रतिभासः। स च तत्र नास्तीति विशेषात्। ननु—सर्वापि भ्रान्तिर्भ्रंशविषया, अन्यथा निरधिष्ठानकभ्रमापत्तेः, नचाहमिति बुद्धेर्भ्रंशत्वमनुभूयते; कल्प्यते**

---

श्रुतिः। **अनिष्टत्वापत्तिरिति।** अहमर्थधर्मत्वेन नाशित्वापत्त्या परमपुरुषार्थत्वाभावापत्तिरित्यर्थः। **विशेष्यमात्रेति।** इच्छाभासकसाक्षिणाहमर्थभासनादिच्छोल्लेखकालेऽहमर्थोल्लेखेऽपि विवेकिनामहमर्थविविक्तात्मगतत्वेनैव मुक्ताविच्छा। अविवेकिनामपि यस्य दुःखमूलवत्वं तत्र तदुच्छेदोऽस्त्वितीच्छायाः शुद्धात्मनि तदुच्छेदरूपमुक्तिविषयकत्वेन पर्यवसानम्; तस्यैव दुःखमूलाज्ञानवत्त्वात्। शरीरं पुष्टं स्यादितीच्छोल्लेखस्तु युक्त एव; शरीरत्वेनात्मनि शरीरस्याध्यासाभावात्, आत्मतादात्म्याविशेषितशरीरत्वेनैवेच्छाभासकसाक्षिणा भासनादिति भावः। **नास्तीति।** स्फुरतीत्यादौ स्फुरणादेराश्रयत्वमाख्यातेनोल्लिख्यते, न तु तादात्म्यमिति भावः। स्फुरणत्वाद्यवच्छिन्नस्य तादात्म्यमवच्छेदकत्वं वा तत्रोल्लिख्यते, स्फुरणत्वादि त्वनावृतचित्त्वादिकम्। अहमित्यादौ ऽविद्योपहितचित्त्वावच्छिन्नस्य तादात्म्यमुल्लिख्यत इति वा विशेषो

**चेत्, आत्मेति बुद्धेरपि द्व्यंशत्वं कल्प्यतामिति—चेन्न; किमिदं द्व्यंशविषयत्वम्? अधिष्ठानारोप्यविषयत्वं चेत्तर्हीष्टापत्तिः; अहमर्थमिथ्यात्वस्यैव द्वितीयांशविषयत्वे प्रमाणत्वात्। आत्मेत्यत्र तु द्व्यंशविषयत्वे नैवं प्रमाणमस्ति, येन तथा कल्प्यते। न च द्व्यंशविषयत्वं भिन्नभिन्नप्रकारावच्छिन्नाधिष्ठानारोप्यविषयत्वम्; रजतत्वसंसर्गारोपनिबन्धनेदंरजतमिति प्रतीतौ व्यभिचारात्। न हि—रजतत्वेऽपि तत्र कश्चन**

बोध्यः। **इष्टापत्तिः** अहमिति प्रतीतेर्द्व्यंशत्वे इष्टापत्तिः। **रजतत्वसंसर्गारोपेति**। यत्रानुभूयमानारोपस्थले शुक्तौ रजतस्य भेदग्रहान्नारोपः, किंतु रजतत्वस्य; तत्रोक्तभेदग्रहस्याप्रतिबन्धकत्वात् समानाकारज्ञानस्यैव नव्यमते प्रतिबन्धकत्वात्, तत्रेदं बोध्यम्। वस्तुतो रजतादितादात्म्यारोपस्थलेऽपि रजतत्वादेः शुक्त्यादौ प्रकारत्वेनारोपसामग्रीसत्त्वाद्रजतत्वादेश्चानुपस्थितत्वादवाभानाद्रजतत्वसंसर्गारोपे न विप्रतिपत्तिरिति ध्येयम्। **निबन्धनेति**। घटितेत्यर्थः। इदं रजतमिति प्रतीतेर्वृत्तिद्वयावच्छिन्नसाक्षिरूपत्वेनारोपवृत्तिघटितत्वं बोध्यम्॥

भिन्न[1]प्रकारावच्छिन्नयोर्भानानियमो वस्तुगतिमनुरुध्योक्तम्। अहमर्थाध्यासे तु भिन्नप्रकारावच्छिन्नयोर्भानमस्त्येव; अज्ञोऽहं स्फुराम्यहमित्यविद्योपहितचित्त्वानावृतचित्त्वादिनैव चितो भानात्। अहमित्येव कदाचिदुल्लेखस्तु रजतमित्येवोल्लेख इव तावन्मात्रस्येष्टसाधनत्वज्ञानात्। न चैवं—'मनः स्फुरति' 'अहं स्फुरामी'ति धियोरवैलक्षण्यापत्तितादवस्थ्यमिति—वाच्यम्; मनःशब्देन मनस्त्वमात्रस्य अहंशब्देन मनोदेहावच्छिन्नचित्त्वरूपस्योच्चारयितृतावच्छेदक-

[1] अभिन्न–ग.

प्रकारो भासते; रजतादेस्तत्र प्रकारत्वकल्पने मानाभावात्। तत्कल्पनां विनैवोपपत्तेः, तथा कल्पनायामतिप्रसङ्गादप्रयोजकत्वाच्च। यद्वा—अत्राप्य 'हं स्फुरामि' 'अहमस्मी' ति द्व्यंशता भात्येव 'रूप्यं स्फुरति' 'रूप्यमस्ती' त्यत्रेव। इयांस्तु विशेषः—यत्तत्रेदंत्वावच्छिन्नस्फुरणमधिष्ठानमितीदं रूप्यमिति धीः, इह तु स्फुरणमात्रमधिष्ठानमिति स्फुरामीत्येव बुद्धिः। न च—भ्रमस्याप्यध्यस्तत्वेनाधिष्ठानत्वायोगः, भ्रान्तोऽसि। स्फुरणं चैतन्यं ब्रूमः, न त्वविद्यावृत्त्यादिकम्। एवं च न प्रत्यक्षमहमर्थस्यात्मत्वे प्रमाणम्। नाप्यनुमानम्। तथा हि—अहमर्थो मोक्षान्वयी, तत्साधनकृत्याश्रयत्वात्, संमतवत्, इत्यत्र विशेषव्याप्तौ दृष्टान्ताभावः। न हि कृत्याश्रये मोक्षान्वयित्वं क्वचित्संप्रतिपन्नमस्ति; सामान्यव्याप्तेः स्वर्गसाधनकृत्याश्रये ऋत्विजि स्वर्गानन्वयेन व्यभिचारात्। अहमर्थः, अनर्थनिवृत्त्याश्रयः, अनर्थाश्रयत्वात्, संमतवत्, इत्यत्र शरीरे

---

स्योल्लेखादित्याशयेनाह—**यद्वेति**। **द्व्यंशता** भिन्नप्रकारावच्छिन्नाधिष्ठानारोप्योभयस्फुरणम्। स्फुरणस्वरूपमधिष्ठानम्। स्फुरणत्वविशिष्टस्याध्यस्तत्वेऽपि नाधिष्ठानत्वम्, किंत्वाधारत्वम्; पूर्णानन्दस्वरूपस्यैवाविद्याविषयत्वेनाधिष्ठानत्वात्। अहमाकारवृत्त्यवच्छिन्नचित्तु नाधारोऽपीति तत्राधिष्ठानत्वोक्तिर्मौढ्यादेव। न च—ज्ञानस्य ज्ञेयाधिष्ठानत्वेन सा तथेति—वाच्यम्; यदधिष्ठानं तस्यारोप्यज्ञानस्वरूपत्वम्, न त्वारोप्यज्ञानत्वेनाधिष्ठानत्वमित्यस्यासकृदुक्तत्वात्। **विशेषव्याप्ताविति**। मोक्षान्वयित्वमोक्षसाधनकृतित्वाभ्यां व्याप्तावित्यर्थः। **सामान्यव्याप्तेः** यद्यत्साधनकृतिमत्तत्तदन्वयीति व्याप्तेः। **ऋत्विजीति**। अपरिक्रीतत्वे सतीति विशेषणेऽपि जातेष्ट्यादिकृत्याश्रये

**व्यभिचारः । न च तत्रानर्थाश्रयत्वमसिद्धम्; 'अहमज्ञ' इति प्रतीत्या अहमीव 'स्थूलोऽहमज्ञ' इति प्रतीत्या शरीरेऽपि तत्सत्त्वात्, अन्यथा असिद्धिप्रसङ्गात् । अनात्मत्वं, नाहमर्थवृत्ति, अनात्ममात्रवृत्तित्वात्, घटत्ववदित्यत्र कृत्याश्रयावृत्तित्वमुपाधिः । नापि 'कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' 'स प्राणमसृजत हन्ताहमिमास्तिस्रो देवता' इत्यादौ जगत्कारणे सति प्राणमनःसृष्टेः पूर्वमहंत्वोक्तेः 'तदात्मानमेवावेदहं ब्रह्मास्मी'त्यवधारणेन शुद्धात्मनोऽहंत्वोक्तेरनवद्यस्य ब्रह्मणोऽहमुल्लेखोक्तेः,**

**अहमित्येव यो वेद्यः स जीव इति कीर्तितः ।**

---

पित्रादौ पुत्रगतपूतत्वादिफलाभावेन व्यभिचारः । **तत्सत्त्वात्** अज्ञानसंबन्धरूपानर्थसत्त्वात् । नन्वज्ञानस्यानादिसंबन्ध एव हेतुः, शरीरे त्वधिष्ठानगताज्ञानस्य संबन्धश्च शरीराध्यासकाले जातस्तत्राह—**अन्यथेति** । उक्तहेतूकरणे इत्यर्थः । नन्वबाधितमज्ञानाश्रयत्वं हेतुरस्तु; शरीरे तु तद्बाधितमिति चेत्. भ्रान्तोऽसि; अहमर्थेऽपि मन्मते तस्य बाधितत्वेनासिद्धेर्हेतुत्वप्रसिद्धेश्च [1] मां प्रति दुष्टस्य हेतोस्त्वया प्रयोक्तुमशक्यत्वात् । **उपाधिरिति** । न च मुक्तौ साध्याव्यापकत्वम्; तस्यां साध्यतावच्छेदकविशिष्टस्य सन्दिग्धत्वेन पक्षसमत्वात्, [2] निश्चितसाध्यवत्युपाध्यसन्देहात् । न चाहं करोमीत्यहमर्थान्तर्गताधिष्ठानचितोऽपि कृत्याश्रयत्वात्तत्र मुक्तेर्वर्तमानत्वात् त्वन्मते मुक्तेरहमर्थावृत्तित्वानिश्चयात्त्वां प्रत्युपाधेः साध्याव्यापकत्वेनोक्तहेतुर्निर्दोष इति —वाच्यम्; उक्तचित एव मुक्तिस्वरूपत्वेन तत्र तस्या अवर्तमानत्वात् । **'स प्राणमसृजते'ति** । 'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं

---

1 हेत्वप्रसिद्धेश्च–**ग.** 2 पक्षसत्त्वात्–**ग.**

**स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः ॥**

**इत्यादौ मोक्षान्वयोक्तेश्चैताः श्रुतयः प्रमाणम्, विशिष्टवाचकस्यैवाहंपदस्य लक्षणया निष्कृष्टाहंकारचैतन्ये प्रयोगात्। लक्षणाबीजभूताऽनुपपत्तिरुक्ता। एतेन—'मामेव ये प्रपद्यन्त' इत्यादिस्मृतयोऽपि व्याख्याताः। अत एव 'तद्योऽहं सोऽसा' वित्यादावपि लक्षणाऽऽश्रयणीया; विशिष्टवाचकत्वेन क्लृप्तस्य विशेष्ये लक्षणाया आवश्यकत्वात् ॥**

इत्यद्वैतसिद्धावहमर्थस्यानात्मत्वोपपत्तिः.

---

मन' इत्यादिप्रश्नोपनिषत्। **इत्यादाविति**। 'अन्नमशितं त्रेधा विधीयते योऽणिष्ठस्तन्मनः आपः पीतास्त्रेधा विधीयन्ते योऽणिष्ठः स प्राण इत्यन्तोऽयं छान्दोग्यश्रुतिः। **विशिष्टवाचकस्य** उच्चारयितृतावच्छेदकविशिष्टवाचकस्य। प्राणादिस्रष्टरि ब्रह्मैक्येन ज्ञेयात्मनि चाहंपदोच्चारयितृत्वाभावाल्लक्षणाऽऽवश्यकी। न हि त्वन्मतेऽपि प्राणादिसृष्टेः पूर्वमुच्चारयितृ ब्रह्मेति सम्प्रतिपन्नम्। यो यदा स्वोच्चारयिता[1] तमेव ह्युच्चारयितृतावच्छेदकत्वोपलक्षितचैत्रत्वादिना अहंपदं बोधयति शक्त्येति भावः। **एतेन** वाच्यार्थान्वयासंभवे लक्षणावश्यकत्वेन। **व्याख्याता इति**। मां चिन्मात्रमेव प्रपद्यन्ते तत्त्वमस्यादिश्रुत्या साक्षात्कुर्वन्तीत्याद्यर्थकत्वेनेत्यादिः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तनाशायाहमर्थस्य नात्मता ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामहमर्थस्यानात्मत्वोपपत्तिः.

---

[1] चोच्चारयिता--ग.

# अथ कर्तृत्वाध्यासोपपत्तिः.

ननु—कर्तृत्वं यद्यनात्मधर्मः स्यात् कथमात्मनि भासेत? न च—जपाकुसुमस्थं लौहित्यं स्फटिक इवान्तःकरणगतं कर्तृत्वमात्मन्यध्यस्यते, न तु तात्त्विकम्; निर्विकारत्वश्रुतिविरोधात्, सुषुप्तौ बुद्ध्यभावेऽकर्तृत्वदर्शनाच्चेति—वाच्यम्; एवं हि 'रक्तं कुसुम'मितिवत् कदाचिन्मनः कर्त्रिति प्रत्यक्षप्रमा 'लोहितः स्फटिक' इतिवत् चैतन्यं कर्त्रिति भ्रमश्च स्यादिति-चेन्न; कर्तृत्वविशिष्टान्तःकरणस्य चैतन्यात्मनाध्यासेन न तथा प्रतीतिः। कुसुमस्य तु स्फटिकात्मना नाध्यास इति वैषम्यात्। न च—अधिष्ठानात्मनानध्यस्तजपाकुसुमस्थानीयमुपाधिं विना भीषणत्वादियुक्तसर्पस्य रज्ज्वात्मनेव कर्तृत्वादियुक्तबुद्धेश्चिदात्मनाध्यासे रज्जौ भीषणत्वान्तरस्येवात्मनि कर्तृत्वान्तरस्यानध्यासेन सोपाधिकत्वं न स्यादिति—वाच्यम्; आत्मनि कर्तृत्वान्तरस्यैवाध्यासात्। न च तर्हि कर्तृत्वद्वयस्य विविच्यप्रतीतिः स्यात्; आत्मान्तःकरणयोरैक्याध्यासात्। रज्जुसर्पादावध्यस्यमानक्रूरत्वादिविशिष्टसर्पापेक्षया अधिकसत्ताकस्य सर्पान्तरस्य संभवेन नायमुपाधिः, अतो निरुपाधिकत्वम्। अत्र त्वध्यस्यमानान्तःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टमन्यदधिकसत्ताकं नास्त्येवेत्यन्तःकरणमत्रोपाधिरिति न सोपाधिकत्वानुपपत्तिः। न चैवमपि—मनो न स्फुरणम्, किंतु स्फुरतीति

---

## अथ कर्तृत्वाध्यासोपपत्तिः.

**विरोधादिति।** धर्मधर्मिणोस्तादात्म्येन धर्मोत्पत्त्या धर्मिणोऽप्युत्पत्तिः, धर्मस्य मिथ्यात्वे तु न तथा; तादात्म्यस्यापि मिथ्यात्वादिति

**तयोर्भेदधीदशायां प्रत्येकं 'रक्तं कुसुमं' 'स्फटिको रक्त' इतिवत् 'मनः कर्तृ' 'चैतन्यं कर्त्रि'ति प्रतीत्यापत्तिरिति—वाच्यम्; तादात्म्यारोपविरोधिभेदग्रहस्यैव तत्प्रयोजकत्वात्; प्रकृते च तदभावात्। यत्त्वभेदग्रहदशायामपि 'अयं भीषणः सर्पो भीषणः' 'अहं गौरः शरीरं गौर'मितिवत् 'मनः कर्तृ' 'चैतन्यं कर्त्रि'ति प्रतीतिः स्यादिति, तन्न; तादात्म्यग्रहस्यैव प्रतिबन्धकस्य सत्त्वेन दृष्टान्तस्यैवासंप्रतिपत्तेः। यदपि सोपाधिकत्वे तन्त्रत्वेनाधिष्ठानसमसत्ताकत्वमुपाधेस्तद्धर्मस्य वा, अध्यस्यमानापेक्षयाधिकसत्ताकत्वं वा तयोरिति पक्षद्वयमुद्भाव्य प्रकृते तद्द्वयं न संभवतीति दूषणाभि-**

---

भावः। **तादात्म्यारोपविरोधीति**। मम मनः पाठे प्रवर्तते न तु कार्यान्तर इति धीर्जायत एव। अहं करोमीत्यत्र चिति कर्तृत्वमपि प्रतीयते। तथाच तादात्म्यारोपाभाव एव फलत आपादनीयः, तदापादनं च न संभवति। तादात्म्येन मनोध्यासे हि तत्पूर्वं विद्यमानो भेदग्रहः प्रतिबन्धको वाच्यः; स च नास्त्येव, भेदधीमात्रस्य मनोध्यासव्याप्यत्वादिति भावः। **तादात्म्यग्रहस्येति**। 'अयं भीषणः, सर्पो भीषण' इति पृथगुल्लेखस्यात्यन्तिकभेदग्रहव्याप्यत्वात्तादृशग्रहस्य च तादात्म्यधीप्रतिबध्यत्वात्तादात्म्यारोपकाले न तादृशग्रह इति भावः। वस्तुतस्तु भीषणत्वादिना नात्यन्तिकभेदग्रहः, तेन रूपेण तादात्म्याध्यासात्; शरीरत्वमनस्त्वादिना तु तादात्म्यं नाध्यस्यते, किंतु मनुष्यत्वगौरत्वकर्तृत्वादिनेति। 'अहं गौरः' 'शरीरं गौरं' 'मनः कर्तृ' 'चैतन्यं कर्त्रि'ति व्यवहार आत्यन्तिकभेदधीव्याप्योऽपीष्ट एवेति ध्येयम्। **यदपि सोपाधिकत्व इत्यादि** इति पक्षद्वयं सोपाधिकत्वे तन्त्रत्वेनोद्भाव्य प्रकृते तत्पक्षद्वयं न संभवतीति यदपि दूषणाभिधान-

**धानम्, तदनुक्तोपालम्भनम्, यदन्वयव्यतिरेकानुविधायितया यत्प्रतीयते तदपेक्षया अधिकसत्ताकतद्धर्माश्रयान्तराभावस्यैव सोपाधिकत्वे तन्त्रत्वात् । नचैवं क्षीरसंपृक्तनीरैक्याध्यास-**

---

मित्यर्थः[1] । **यदन्वयव्यतिरेकानुविधायितयेति** । यस्योपाधिरूपस्य धर्मिणः सन्निधिकाल एवेत्यर्थः । **यत्प्रतीयते** तदीयो यो धर्मः प्रतीयते । **तदपेक्षया** तद्धर्म्यपेक्षया । **अधिकसत्ताकतद्धर्माश्रयान्तराभावस्य**—अधिकसत्ताकं तद्धर्मस्य यदाश्रयान्तरं तदभावस्य । **सोपाधिकत्व इति** । यद्यपि तद्धर्मसोपाधिकत्वे इति वक्तुमुचितम्, तथापि नात्मनि कर्तृत्वाद्यन्तरमुत्पद्यते; किंतु कर्तृत्वादिविशिष्टस्य मनसः आत्मन्यारोपाद्विशेषणीभूतकर्तृत्वादेर्मनस्यात्मनि च संबन्धौ स्वीक्रियेते । तथा च कर्तृत्वादिसंबन्ध आत्मन्यौपाधिको न तु कर्तृत्वादिरित्यस्यापि पक्षान्तरस्य विवरणाद्युक्तस्य सङ्ग्रहाय सामान्यतः सोपाधिकत्वे इत्युक्तम् । कर्तृत्वाद्यन्तरस्यात्मनि स्वीकार एव युक्तः; अन्यथा लौहित्याद्यन्तरस्यापि स्फटिकादावस्वीकारः स्यात् । स्फटिकलौहित्यस्य प्रतिबिम्बत्ववादिभिर्वाचस्पत्यादिभिरेव हि स्फटिके लौहित्यान्तरं न स्वीक्रियते । पञ्चपादीकृद्भिस्तु तत्र तत्स्वीक्रियत एव । अथ—लौहित्याद्याश्रयजपादौ चक्षुरसन्निकर्षस्थले स्फटिकादौ लौहित्यस्यानुत्पादे तदापरोक्ष्यं न स्यादिति—चेत्, तथापि यत्रोक्तजपादौ चक्षुःसन्निकर्षस्तत्र स्फटिकादौ लौहित्याद्युत्पादो न स्यात् । अथ—स्फटिको लोहित इति प्रतीतौ स्फटिकावच्छिन्नचिति लौहित्यभानात् लौहित्यं तत्संबन्धो वा जायते इत्यत्र विनिगमकाभावात्, संबन्धस्येव लौहित्यस्यापि स्वरूपसंबन्धसंभवात्, सर्वत्र लौहित्यं तत्संबन्धश्च

---

[1] भिधान इत्यर्थः—ग.

**निबन्धनक्षीरधर्मप्रतीतिः सोपाधिकी स्यात्; तस्याः सोपाधिकत्वे इष्टापत्तेः ॥**

**ननु—बुद्धिगतं कर्तृत्वं किमहमर्थे, अहमर्थगतं वात्मन्यध्यस्यते। आद्य आरोपितस्याप्यनर्थस्यात्मन्यभावे तस्य बन्धमोक्षानधिकरणत्वापत्तिः; द्वितीयेऽनध्यासेनैव 'अहं कर्ते' ति प्रतीत्युपपत्तौ किमध्यासेनेति—चेन्न; अहंकारस्तु चिदचिद्ग्रन्थिरूपतया द्व्यंशः। तत्राचिदंशे बुद्धौ कर्तृत्वसत्त्वेऽपि तद्विशिष्टाया बुद्धेश्चित्यैक्याध्यासं विना अहं कर्तेति प्रतीतेरयोगेनाध्यासस्यावश्यकत्वात्। एतेन—आरोपितकर्तृत्वस्याप्यभावे आत्मनो बन्धमोक्षानधिकरणत्वं स्यादिति—निरस्तम्। न च—'कर्ता शास्त्रार्थवत्त्वा' दित्यधिकरणे त्वयापि साङ्ख्यरीत्या बुद्धेः कर्तृत्वे प्राप्ते, जीवस्यैवेति सिद्धान्तितत्वेन विरोधः? न चाविवेकनिबन्धनं जीवनिष्ठत्वम्; अविवेकस्य साङ्ख्यमतेऽपि**

---

जायत इति—वाच्यम्; तर्हि प्रकृते कर्तृत्वादिद्वयं युक्तमित्याशयेन स एव पक्षः कण्ठत उक्त इति बोध्यम् ॥

**इष्टापत्तिरिति।** उपाध्यधिष्ठानयोरमिळितत्वेन ग्रहणं तु न सोपाधिकत्वे प्रयोजकम्; अयो दहतीत्यादिभ्रमे तदभावादिति भावः ॥

न बुद्धिगतमहमर्थेऽध्यस्यते, अहमर्थस्य द्व्यंशत्वात्; बुद्ध्यधिष्ठान एव बुद्धिगतस्याध्यासात्, नाप्यहमर्थगतमात्मनि; अहमर्थे कर्तृत्वादेरस्वाभाविकत्वात्, यत्त्वनध्यासेनैवाहं कर्तेति बुद्ध्युपपत्तिरित्युक्तम्, तन्न; अध्यासं विनाहमित्युल्लेखासंभवादित्याशयेनाह—**नाहङ्कारस्त्विति।** **ऐक्याध्यासं विनेति।** कर्तृत्वादिविशिष्टतया ऐक्याध्यासस्यावश्यकत्वे तु विनिगमनाविरहात्कर्तृत्वादिधर्माध्यासोऽप्यावश्यक इति भावः। एतेन—बुद्धितादात्म्याध्यासादेवात्मनि कर्तृत्वादि-

सत्त्वादिति–वाच्यम्; बुद्धेरेव कर्तृत्वम्, भोक्तृत्वं तु चैतन्यस्येति पूर्वपक्षं कृत्वा कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यनियमेन भोक्तृत्ववत् कर्तृत्वमप्यङ्गीकर्तव्यमित्युक्तम्, न तु बुद्धेरकर्तृत्वमात्मनो वा स्वाभाविकं कर्तृत्वमिति। 'यथाच तक्षोभयथा' इत्युत्तराधिकरणे पूर्वाधिकरणोक्तस्य आत्मकर्तृत्वस्य स्वाभाविकत्वपूर्वपक्षे औपाधिकत्वस्य स्थापितत्वात्। अतो न तदधिकरणविरोधः। यदपि बुद्धेः कर्तृत्वे करणत्वं कथमिति? तदप्ययुक्तम्; अन्यत्र कर्त्र्या एव बुद्धेरुपलब्धिं प्रति करणत्वोपपत्तेः। न च—कर्तृत्वाद्यनर्थरूपबन्धस्य बुद्धिगतत्वेन मोक्षस्यापि तदन्वयापत्तिः, अनर्थतन्निवृत्त्योरैकाधिकरण्यनियमादिति—वाच्यम्; कर्तृत्वा-

---

बुद्ध्युपपत्तेः कर्तृत्वादेः सोपाधिकत्वमात्रसिद्ध्यर्थमात्मनि साक्षात्संबन्धो न युक्त—इत्यपास्तम्। किं च साक्षात्संबन्धेनात्मनि कर्तृत्वादेरनुभवस्तार्किकादिसर्वसिद्धः स्वाश्रयतादात्म्यमात्रेण कथमुपपाद्यः? कथं वा .... स्मृत्यादिगीयमानं कर्तृत्वादेरौपाधिकत्वमपलपनीयमिति ध्येयम्। **भोक्तृत्वं तु चैतन्यस्येति**। सुखदुःखानुभवरूपं भोक्तृत्वं चित एव युक्तमिति भावः। **नियमेन** करोमि भुञ्जे इति धीसिद्धेन। **कर्तृत्वमपीति**। असंसर्गाग्रहस्य विशिष्टव्यवहारहेतुत्वे गौरवाद्विशिष्टबुद्धेरेव तद्धेतुत्वादहं कर्तेत्यादिकम[1]प्यात्मनि वाच्यम्। न च—कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यनियमादरे बुद्धेरपि भोक्तृत्वापत्तिरिति—वाच्यम्; सुखाद्यनुभव[2]तादात्म्यारोपस्य बुद्धौ सत्वेनेष्टापत्तेः। **अन्यत्र** लौकिकवैदिकक्रियामात्रे। **कर्त्र्याः** 'विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि चे'ति श्रुत्युक्तकर्तृत्वयुक्तायाः। **उपलब्धिं** वृत्तिप्रतिबिम्बितां भग्नावरणां वा चितं प्रति। **करणत्वोपपत्तेः** वृत्ति-

---

[1] कर्तेत्यादिव्यवहारात्कर्तृत्वादिकम–क.     [2] भवे–क.

देश्चेतनगततयैवानर्थतया बुद्धेरनर्थानाश्रयत्वात् । न च चैतन्यगतस्यानर्थत्वे चैतन्यस्याप्यनर्थकोटौ निवेशापत्तिः; आत्मसंबन्धित्वेनैवानर्थस्य हेयत्वेनात्मनोऽपि हेयत्वं सर्वमतेऽपि स्यात् । आरोपितत्वपुरस्कारेणानर्थत्वाभावान्नान्योन्याश्रयः । न च—शुद्धात्मनः कदापि नानर्थाश्रयत्वेन प्रतीतिः, भ्रमकालेऽहं भोक्ता प्रमाकाले बुद्धिर्भोक्त्रीति प्रतीतेरिति—वाच्यम्; शुद्धस्य भोक्तृत्वाद्यनर्थानाश्रयत्वेऽप्युपाहितस्य शुद्धात्स्वाभाविकभेदाभावेन बन्धमोक्षसामानाधिकरण्योपपत्तेः । एतेन—बुद्धिः

---

द्वारा हेतुत्वोपपत्तेः । **चेतनगततया** चिन्निष्ठकर्तृतात्वादिना । **अनर्थतया** द्वेषोद्देश्यतया । **अनर्थानाश्रयत्वात्** द्वेषोद्देश्यतावच्छेदकविशिष्टानाश्रयत्वात् । स्वसंबन्धित्वेन यस्य तत्र द्वेषस्तस्य स्वसंबन्धित्वेन तदभावे इच्छेति नियमः; इदं मे मास्त्विति द्वेषादेतदभावो मेऽस्त्विति वाऽनुभवात्, तथाच स्वसंबन्धित्वेन कर्तृत्वादिकं द्विषता स्वसंबन्धित्वेन तदभावस्येष्यमाणत्वात् कर्तृत्वादिबन्धाभावश्चिन्निष्ठ एव युक्तो न तु बुद्धिनिष्ठतया आपादनार्हः । न च प्रतियोगिमति सर्वत्र ध्वंसावश्यंभावः; आश्रयनाशजन्यनाशे व्यभिचारादिति भावः । ननु—बुद्धेः कर्तृत्वादिकं न बन्धः, किंत्वात्मनो मिथ्याकर्तृत्वादिकमिति कल्पना मिथ्यात्वसिद्ध्यधीना, मिथ्यात्वसिद्धिश्चोक्तकल्पनाधीनेत्यन्योन्याश्रयस्तत्राह—**आरोपितत्वेति** । बुद्धिर्यदि बन्धस्याश्रयः स्यात्तदा मोक्षस्यापि स्यादिति त्वयोक्ते तर्के विपर्ययानुमानमस्मदभिमतमिति समाधानं कर्तृत्वादेरित्यादिनोक्तम्, न तु मिथ्याभूतस्य बन्धत्वकल्पनया किंचित्साधितमिति भावः । **स्वाभाविकभेदाभावेन** तादात्म्यविरोधिभेदाभावेन, भेदस्येव तादात्म्यस्यापि सत्त्वेनेति यावत् । **एतेन** उपहितचिन्निष्ठकर्तृत्वादेः शुद्धाभिन्ननिष्ठत्वेन । अत्रोपाहितधर्माणां

**श्रवणादिकर्त्रीति तस्या एव फलं मोक्षोऽपि स्यादिति वाच्यम्; 'शास्त्रफलं प्रयोक्तरी'ति न्यायात्, अन्यथाऽतिप्रसङ्गादिति— निरस्तम्; जातेष्टिपितृयज्ञयोर्व्यभिचारात्। न च पूतपुत्रकत्वं स्वर्गभागिपितृकत्वं वा कर्तृगतमेव फलम्; तस्य फलत्वेनाश्रवणात्। न च—तादृक्पुत्रकत्वं फलेन संबन्धः, न तु फलमिति—वाच्यम्; एवं हि संयुक्तसमवायादिना पित्रन्यस्यापि तत्फलं स्यात्, अशास्त्रीयत्वाविशेषात्। न च—**

---

दृश्यत्वादीनां शुद्धेऽप्यापत्तिर्मौढ्यादेव; न ह्यत्र भोक्तृत्वादेरुपहितधर्मस्य शुद्धनिष्ठतोक्ता, न वा तदुक्तावपि शुद्धचित्तादात्म्यरूपदृश्यत्वादेः शुद्धचिन्निष्ठत्वं संभवति; एकस्यैव संबन्धप्रतियोगित्वानुयोगित्वयोरसंभवादित्यसकृदुक्तम्। वस्तुतो बन्धस्याविद्यारूपत्वेन भोक्तृत्वादेः शुद्धनिष्ठत्वेऽपि न क्षतिरिति बोध्यम्। दूषणान्तरमाह—**जातेष्ट्यादीति**। ननु—यत्र प्रयोक्तृभिन्नगतत्वेन शास्त्रेणैव फलं बोधितम्, तत्र सन्देहाभावान्नोक्तन्यायः प्रवर्तते, किंत्वन्यत्रेति—चेत्तर्हि यागादिफलस्वर्गादेर्बुद्धिगतत्वसंभवात्तत्रोक्तन्यायसंभवेऽपि मोक्षस्याविद्यातत्कार्यसामान्योच्छेदकत्वेन प्रयोक्तृनिष्ठत्वासंभवान्न तत्रोक्तन्यायप्रवृत्तिरित्यपि गृहाण। वस्तुतो मोक्षो न शास्त्रफलशब्दार्थः; यत्फलसाधनत्वं शास्त्रतात्पर्यविषयस्तस्यैव तत्त्वात्, श्रवणादेस्त्वात्मसाक्षात्कारादिफलसाधनत्वस्यातथात्वेऽपि न क्षतिः; साक्षात्कारादेर्बुद्धिनिष्ठत्वानपायादिति ध्येयम्। **संयुक्तसमवायादिनेति**। पितृसंयुक्तशुक्रादिसमवायादिघटितस्य जातेष्ट्यादिसंबन्धस्य पित्रन्यस्मिन् पुत्रेऽपि सत्त्वेनेत्यर्थः। **स्यात्**[1]—भवत्येव। **अशास्त्रीयत्वेति**। पुत्रगतं फलं शास्त्रेण बोध्यम्, कार्य-

---

[1] स्यादिति। जातेष्ट्यादीत्यादिपदगृहीतकर्मान्तरस्य फलं पुत्रादौ तत्संयुक्तसमवायेन जायते इत्यर्थः। पित्रन्यस्य पुत्रस्य। स्यात्—ग.

**पित्रर्थपुत्रगतं पूतत्वादिकं तदनुष्ठातुः पितुरेव फलम्, तेन तदुद्देशात्; न चेहात्मा अन्तःकरणार्थः, येनात्मगतो मोक्षस्तस्योद्देश्यः स्यादिति–वाच्यम्; आत्मा यद्यपि नान्तःकरणार्थः, अहमर्थगततया तथापि फलस्योद्देश्यत्वानुभवादहमर्थस्य चात्मानात्मरूपत्वेनात्मन्यपि फले उद्देश्यगतत्वानपायात्। यद्वा—आरोपितानारोपितसाधारणं कर्तृत्वमेव फलभाक्त्वे प्रयोजकम्, तच्चात्मन्यस्त्येव। न च–शरीरेऽप्यारोपितकर्तृत्वेन फलभाक्त्वापत्तिः; फलपर्यन्तमसत्त्वेन फलभाक्त्वासंभवात्। न हि कर्तुः फल-**

---

कारणयोः सामानाधिकरण्यं तु शास्त्रबोधित[1]मपि कल्प्यमानं पितरीव पुत्रेऽपि संभवति; कार्यस्य कारणस्य वा परम्परासंबन्ध इत्यस्याविनिगम्यत्वात्, तथाच प्रयोक्तर्येवेति नियमो भग्न एव। न च—प्रयोक्तरीत्येवोच्यते न तु प्रयोक्तर्येवेतीति–वाच्यम्, ऋत्विजां फलसंबन्धवारणाय प्रयोक्तर्येवेत्यस्यावश्यं वाच्यत्वात्, पितृयज्ञादि कृत्वा मृतस्य पुत्रादेः शास्त्रोक्तफलासंबन्धेन प्रयोक्तरीत्येतावदुक्तावपि व्यभिचाराच्च। **पित्रर्थपुत्रेति**। सुखादियोगित्वेन पितुरिच्छाविषयपुत्रेत्यर्थः। **तेन**—पित्रा। **तदुद्देशात्** पुत्रगतत्वेन फलस्य काम्यत्वात्। यथा ग्रामादेः स्वनिष्ठत्वाभावेऽपि स्वसुखसाधनत्वेन गृहीतस्वत्त्वादिमत्त्वेनेष्टत्वम्, तथा पुत्रपूतत्वादेः स्वसुखप्रयोजकत्वेनेष्टतेति भावः। **आत्मा**—शुद्धात्मा। **अन्तःकरणार्थः** सुखस्फुरणं भवतु स्फुरणं सुखस्य भवतु स्फुरणं निर्दुःखं भवत्वितीच्छानुभवात्पुत्रादिवदात्माप्यन्तःकरणार्थ एवेति यद्यपीत्यनेन सूचितम्। **अहमर्थगततया तथापि** तथाप्यहमर्थगततया। **आत्मन्यपि फले** मोक्षरूपे केवलात्मगतेऽपि फले। **उद्देश्यगतत्वानपायात्** अन्तःकरणार्थाहमर्थाभिन्नात्मगतत्वस्यानपायात्। **असंभवादिति**। यत्तु—

---

[1] शास्त्राबोधित–**क. ग.**

भाक्त्वनियमं ब्रूमः, किंतु फलभाजः कर्तृत्वनियमम्; अजनित-फलकर्मकर्तरि व्यभिचारात् अप्रयोजकत्वाच्च। ननु—मनसः कर्तृत्वं न घटते; कृतिकर्मत्वस्य करणत्वस्य च तद्विरोधिनः श्रुत्यादिसिद्धत्वात्, बुद्ध्यभावेऽपि कर्तृत्वस्य श्रूयमाणत्वाच्च। तथाहि 'तन्मनोऽकुरुते' त्यादौ मनसः कृतिकर्मत्वम्, 'शृण्वन्तः श्रोत्रेण विद्वांसो मनसे' त्यादिश्रुतौ 'शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नर' इत्यादिस्मृतौ च करणत्वम्, 'मन उदक्राम-न्मीलित इवाश्नन् पिबन्नास्तेवे' त्यादिश्रुतौ मनउत्क्रमणेऽप्या-त्मनः कर्तृत्वम्, तथा 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभि-निष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादौ स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वं 'कर्ता विज्ञानात्मा' 'यो वेदेदं जिघ्राणीति स आत्मा' 'आनन्दभुक्तथा प्राज्ञ' इत्यादिश्रुतितश्च कर्तृत्वम्, तथा च बुद्धिर्न कर्त्रीति—चेन्न; 'विज्ञानं यज्ञं तनुत' इत्यादिश्रुत्या मनसः कर्तृत्वेन स्वकृ-

---

फलभाक्त्वान्यथानुपपत्त्या सूक्ष्मरूपेण स्थितस्य देहस्य भोगकाले पुन-रुपचयोऽदृष्टद्वारा फलपर्यन्तं सत्त्वं वा कल्प्यत इति—तत्तुच्छम्; पुनरुपचितस्याकर्तृत्वेन कर्तृदेहे फलानिर्वाहात्, कर्तृदेहजन्यादृष्ट-सत्त्वेऽपि कर्तृदेहाभावाच्च। **व्यभिचारादिति**। बाधकाभावे सतीति विशेषणे तु शरीरादावपि नापत्तिरिति भावः। **कर्ता विज्ञानात्मेति**—प्रश्नोपनिषत्। **यो वेदेदं जिघ्राणीति स आत्मेति**—छान्दोग्यम्। **आनन्दभुगिति**—

'विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक्।
आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत'॥

तिकर्मत्वविरोधेऽपी तत्रेश्वरकृतिकर्मत्वस्योपलब्धिं प्रति करणत्वस्य चाविरोधात् ईश्वरे आविद्यावृत्तिरूपज्ञानेच्छावत्तद्रूपकृतिसंभवात्। न च—विज्ञानपदं ब्रह्मपरम्, 'विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान्कामान् समश्नुत' इत्यादि वाक्यशेषादिति—वाच्यम्; वाक्यशेषोक्तमुमुक्षुज्ञेयशुद्धब्रह्मणो यज्ञकर्तृत्वासंभवेन कर्तृत्वेन प्रतिपाद्यमाने विज्ञाने ततोऽर्थान्तरत्वनिश्चयात्, 'अन्नं ब्रह्मेत्युपास्त' इत्येतद्वाक्यसमानयोगक्षेमत्वाच्च ॥

'तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति'॥

इत्यादिस्मृतेः, 'प्रकृतेः क्रियमाणानी' त्यादिस्मृतेश्च। न चात्मनि स्वातन्त्र्येण कर्तृत्वनिषेधबोधकत्वमनयोः, सामान्यतो निषेधे बाधकाभावात्। अत एव 'ध्यायतीव लेलायतीवे'त्यादाविवशब्दः।

इति गौडपादीयोक्तमाण्डूक्यम्[1]। उपलब्धिं प्रतीति[2]। तथाच 'शरीरवाङ्मनोभिर्यत्कर्मे'त्यादावप्युपलब्धिपूर्वककर्मसूपलब्धिद्वारकं मनसः करणत्वमुक्तमिति भावः। **एतद्वाक्येति**। एतदर्थक 'सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासत' इति वाक्येत्यर्थः। **समानयोगेति**। उक्तवाक्यशेषे सत्यपि 'ओषधीभ्योऽन्नम्। अन्नात्पुरुष' इत्यादावन्नपदं न ब्रह्मपरम्; अनन्वयापत्तेः, एवं 'विज्ञानं ब्रह्म चे'दित्यादिशेषे सत्यपि 'विज्ञानं यज्ञ'मित्यादौ विज्ञानपदं न ब्रह्मार्थकम्; 'ब्रह्मविदाप्नोती'त्यादौ प्रकृतं ब्रह्म हि विज्ञानादावुपास्यमुच्यते, तच्च शुद्धमेवेति न क्रियासामान्यकर्तृत्वान्वययोग्यमिति भावः। **निषेधे बाधकाभावादिति**। 'पञ्चैते तस्य हेतव' इति पूर्ववाक्ये क्रिया-

[1] क्यमुक्तमिति—ग. [2] प्रतीतिम्.

न चेवशब्दः परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवकर्तृत्वे परतन्त्रतामात्रपरः; तद्वदत्र बाधकाभावात् । न च—बुद्ध्यभावेऽप्यात्मनः कर्तृत्वश्रवणाद्बुद्धेः कर्तृत्वासंभव इति—वाच्यम्, बुद्धेः कर्तृत्वे जनकत्वमात्रे वा सर्वथा तस्या जीवनिष्ठत्वेनाभिमतायां कृतावपेक्षणीयत्वेन तदभावे कर्तृत्वबोधकस्य तवापि मते उपचरितार्थत्वात्, निर्धर्मकत्वनिर्विकारत्वनिष्क्रियत्वादिबोधकश्रुतिविरोधाच्च । न च—निर्धर्मकत्वरूपधर्मभावाभावाभ्यां व्याघातात् ज्ञानत्वसाक्षित्वादिवत्सत्यस्यासत्यस्य वा ज्ञातृत्वादेरप्यात्मन्येव संभवाच्च निर्धर्मकत्वश्रुतिर्न श्रूयमाणार्थपरेति—वाच्यम्; निर्धर्मकत्वस्य धर्माभावरूपस्य ब्रह्म-

---

सामान्ये आत्मान्यपञ्चानामेव हेतुत्वमित्युक्त्वा एवं सति केवलं कर्तृत्वादिशून्यमात्मानं तु यः कर्तारं पश्यति स दुर्मतिरित्यर्थस्य स्फुटमुक्तत्वेनाहङ्कारविमूढत्वस्य कर्ताहमिति बुद्धौ हेतुतयोक्तत्वेन च स्वातन्त्र्याभावो नार्थ इति भावः । **इवशब्द इति** । 'इवोपमायामल्पत्व' इत्यादिकोषादाभासत्वरूपाल्पत्वेन कर्तृत्वादिबोधक इति शेषः । **उपचरितार्थत्वादिति** । प्राणसंवादवाक्ये मनउत्क्रमणे कर्तृत्वादिकथनम्, वपोत्खननादिवाक्यवद्गौणार्थकम्,[1] 'मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाचे'त्यादेर्बाधितार्थकत्वात् । परममुक्तावपि कर्तृत्वं तु जीवन्मुक्तस्य मनःस्थितावेव । विज्ञानात्मनः कर्तृत्वं तु बुद्धितादात्म्यात् । प्राज्ञस्यानन्दभुक्त्वं चानन्दानुभवस्याश्रयत्वमनुकूलव्यापारत्वं[2] वा मनोलयेऽप्यस्ति, कृतेरेव मनोमात्रनिष्ठत्वात् । **श्रुतिविरोधात्**—'केवलो निर्गुणः' 'कूटस्थोऽद्वितीयः' 'निष्कलं निष्क्रिय'मित्यादि श्रुतिविरोधात् ।

---

1 गौणार्थकंमनो–ग. 2 २वत्त्वं–क.

स्वरूपानतिरेकेण धर्मत्वाभावेन व्याहृत्यभावात्। यत्त्वसत्यस्य सत्यस्य वा ज्ञातृत्वस्यात्मन्यपि संभव इत्युक्तम्, तदिष्टमेव; न ह्यारोपितमपि कर्तृत्वमात्मनि प्रतिषेधामः। न च—निर्विकारत्वं द्रव्यान्तररूपतया परिणामाभावपरम्, न तु विशेषाकाराभावपरम्, तच्चात्मनः कर्तृत्वादिसत्त्वेऽप्यविरुद्धमिति—वाच्यम्; द्रव्यान्तररूपतया परिणामनिषेधकमपीदं वाक्यं निर्धर्मकश्रुत्यनुसारेण विशेषाकारमात्रस्यैव निषेधपरम्, सामान्यनिषेधेनैव विशेषनिषेधप्राप्तेः। नापि—निष्क्रियत्वे क्रिया परिस्पन्दो वा धात्वर्थो वा। आद्ये इष्टापत्तिः, द्वितीये आत्मन्यप्यस्त्यादिधात्वर्थरूपसत्तादेः सत्त्वेनासिद्धिरिति—वाच्यम्; ब्रह्मण एव सद्रूपत्वेन तत्र सत्तादेरप्यभावात्, क्रियापदस्य कृतिपरत्वाच्च। अत एव मनसोऽभावे सुषुप्तौ कर्तृत्वाद्यदर्शनम्। न

---

**धर्मत्वाभावेनेति**। धर्माभावत्वविशिष्टरूपेण धात्वर्थस्य[1] कल्पितत्वेन धर्माभावसाधारणधर्मसामान्यस्याभावबोधनद्वारोक्तश्रुतेरखण्डबोधकत्वेनाव्याहतिरिति भावः। **प्रतिषेधामः** नाङ्गीकुर्मः। **तदिष्टमिति**। न चासत्यपदं व्यावहारिकार्थकमतो नेष्टमिति—वाच्यम्; सुखादेरिव ज्ञातृत्वादेरपि व्यावहारिकस्यैव ममेष्टत्वात्। **सामान्यनिषेधेन**—परिणामसामान्यनिषेधेन। **विशेषनिषेधेति**। द्रव्यान्तररूपेण रूपान्तरेण च परिणामस्य निषेधेत्यर्थः। **ब्रह्मण एव**—आत्मन एव, [2]पारमार्थिकी सत्ता स्वरूपभूता न तु धर्म इति भावः। नन्वात्मस्वरूपसत्ता न धात्वर्थः; मायावच्छिन्नचित्त्वेना[3]बाध्यत्वेन वा धातुशक्यतावच्छेदकेनोपहिता सत्ता शुद्धात्मन्यस्त्येव; तत्राह—**क्रियापदस्येति**। **अदर्शनमिति**। अन्वयव्यतिरेकदर्शनेन मनसः कर्तृत्वादावुपादानत्व-

[1] धर्मत्वस्य–क. ग. [2] आत्मनः पार–ग. [3] मायावच्छिन्नत्वेना–ग.

च—तदापि श्वासादिकर्तृत्वं दृश्यत एव, सुषुप्तौ 'भूर्भूरित्येव प्रश्वसिती'ति श्रुतेरिति—वाच्यम्; 'न तु तद्द्वितीयमस्ती'त्यादि-श्रुत्या तं प्रति श्वासस्यैवाभावेन तत्कर्तृत्वस्य सुतरामसंभवात्। यद्वा—क्रियाशक्तिप्राधान्येन प्राणात्मकस्यान्तःकरणस्य तदापि सत्त्वेन तदुपाधिककर्तृत्वस्य तदापि सत्त्वात्। तथाच श्रुतिरन्य-परा। दर्शनं च द्रष्टृविद्याकल्पितश्वासादिविषयम्। इदं च दृष्टिसृष्टिवाद एव समर्थितम्। 'कामः सङ्कल्प' इत्यारभ्य 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे' त्यन्ता श्रुतिरपि मनसः कर्तृत्वपरा, न तु मनसो निमित्तत्वपरा। न च—'मनसा वा अग्रे सङ्कल्पयती'त्यादिश्रुत्या 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहु-र्मनीषिण' इत्यादिश्रुत्या च मनसः करणत्वमिति—वाच्यम्; मनोव्यतिरिक्तस्य सङ्कल्पानाश्रयत्वेन 'मनसा वे'ति श्रुतेरुप-चरितार्थत्वात्। नापि॥ १॥ आत्मा, मोक्षसाधनविषयकृतिमान्,

मेव कल्प्यते, [1]कार्याश्रयनिष्ठत्वेनान्तरङ्गत्वात्, न तु निमित्तत्वम्; आत्मा तु कार्यमात्रे विवर्तोपादानमेव; परेणापि ज्ञेयमात्रस्य ज्ञान-संबन्धो वाच्य एव; तथा च मनसो निमित्तत्वमात्मन उपादानत्वं चेति कर्तृत्वादावुभयं परेण वाच्यम्, मया तु मनस उपादानत्वमेवेति मे लाघवमिति भावः। **अन्यपरेति**। 'देवाः परमात्मानं भूरित्युपासां-चक्रुः, तस्माद्वै वैतर्हि सुप्तः पुरुषो भूर्भूरित्येव प्रश्वसिती'ति श्रुतौ तस्मादित्याद्युपासनास्तुतिपरमित्यर्थः। दृष्टिसृष्टिपक्षे तेन प्रमात्रा अज्ञात-तत्प्रमाणाद्यसंभवेऽपि पक्षान्तरे तत्संभव इत्याशयेनाह—**यद्वेति**। **उपचरितार्थत्वादिति**। उपलब्धौ मनसः करणत्वेऽपि सङ्कल्पादौ तद-भावान्मनःपदं मनोगतायाः सङ्कल्पादिसामग्र्या बोधकमिति भावः। वस्तुतो मनसः सङ्कल्पादौ तत्सामग्र्युपहितरूपेण करणत्वं प्रकृतेऽर्थः। अत एव 'मनसैव मनो जये'दित्यादावपि नानुपपत्तिः; सामग्र्युपहित-

[1] कार्याश्रयानिष्ठत्वेन—क.

तत्फलान्वयित्वात्, संमतवत् ॥ २ ॥ अज्ञानम्, ज्ञानसमानाधिकरणम्, ज्ञाननिवर्त्यत्वात्, ज्ञानप्रागभाववत् ॥ ३ ॥ दुःखादिभोगः, मोक्षसमानाधिकरणः, बन्धत्वात्, संमतवदित्याद्यनुमानैरात्मनः कर्तृत्वसिद्धिरिति—वाच्यम्; आद्यानुमाने आरोपितानारोपितसाधारणकृतिमत्त्वं वा साध्यम्, अनारोपितकृतिमत्त्वं वा । आद्ये इष्टापत्तिः, द्वितीये जातेष्टिपितृयज्ञजन्यफलान्वयिनि व्यभिचारः । द्वितीयानुमानेऽप्यारोपितानारोपितसाधारणज्ञानाधिकरणवृत्तित्वं वा, अनारोपितज्ञानाधिकरणवृत्तित्वं वा । अत्राप्याद्ये इष्टापत्तिः, द्वितीये अनादिभावभिन्नत्वस्योपाधित्वम् । तृतीयानुमाने आरोपितानारोपितसाधारणसंबन्धेन मोक्षसामानाधिकरण्ये इष्टापत्तिः, अनारोपितसंबन्धेन सामानाधिकरण्ये साध्याप्रसिद्धिः । तस्मात्सिद्धं मनसः कर्तृत्वमात्मन्यारोप्यत इति ॥

इत्यद्वैतसिद्धौ कर्तृत्वाध्यासोपपत्तिः ॥

---

रूपेण करणत्वसंभवात्, सामग्र्याः करणघटितत्वात्। **फलान्वयित्वादिति ।** यो यत्फलवान् स तत्साधनकृतिमानिति व्याप्तिर्बोध्या । **अनारोपितेति ।** धर्मिसमानसत्ताकेत्यर्थः । **द्वितीये**—द्वितीयेऽपि । **साध्याप्रसिद्धिरिति ।** धर्मिसमानसत्ताकसंबन्धनिवेशेऽपि सिद्धसाधनम्; अहमर्थरूपधर्मिसमानसत्ताकत्वस्य[1] सिद्धत्वात्, आत्मसमानसत्ताकसंबन्धनिवेशे त्वप्रसिद्धिरिति भावः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय कर्तृत्वाद्यात्मनोऽस्वतः ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां कर्तृत्वाध्यासोपपत्तिः ॥

---

[1] सत्ताकस्य—ग.

# अथ देहात्मैक्याध्यासोपपत्तिः ॥

नन्वहमर्थस्यानात्मत्वे 'ब्राह्मणोऽहं काण' इत्यादिप्रत्यक्षं देहेन्द्रियाद्यावात्मैक्याध्यासे प्रमाणं न स्यात्; ऐक्यबुद्धावात्मनोऽविषयत्वादिति—चेन्न; अहमित्यस्य द्व्यंशत्वेन चिदंशे कर्तृत्वादिविशिष्टान्तःकरणैक्याध्यासवत् ब्राह्मणत्वकाणत्वादि-विशिष्टदेहेन्द्रियाद्यैक्याध्यासेनात्मैक्यविषयत्वसंभवात्। तथा चात्मनि देहेन्द्रियाद्यैक्याध्यासो युज्यत एव। नचैवं—देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानागमयोरप्रामाण्यप्रसङ्गः; वह्निशैत्यानुमानवत्, श्रूयमाणार्थे 'यजमानः प्रस्तर' इत्यागमवच्च, तथा च न देहात्मनोर्भेदसिद्धिः स्यादिति—वाच्यम्; चन्द्रपरिमाणप्रत्यक्षविरोध्यनुमानागमादिदृष्टान्तेन प्रत्यक्षविरोधिनः परीक्षितागमानुमानादेः प्रामाण्यस्य व्यवस्थापितत्वेन तथापि तयोर्भेदसिद्धिसंभवात्। न च—परस्पराभिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासायोगः, न हि भिन्नत्वेन निश्चितयो रजतरङ्गयोरेकदैकशुक्तिकायामैक्याध्यास इति—वाच्यम्; 'देहादिन्द्रियमन्यत्' 'इन्द्रियाद्देहोऽन्य' इति भेद-

---

अथ देहात्मैक्याध्यासोपपत्तिः

**चिदंशे**—अज्ञानोपहितचिति। ननु—तथापि न शुद्धात्मैक्याध्यासे तत्प्रमाणं तत्राह— **तथाचात्मनीति**। उपहितात्मन्यैक्याध्यासे सिद्धे शुद्धस्योपहितानुस्यूतत्वेन भानाद्भासमानेऽप्यावरणस्योक्तत्वादुपहितनिष्ठं शुद्धतादात्म्यं देहादावारोप्यत इति भावः। **दृष्टान्तेनेति**। चन्द्रप्रत्यक्षे दूरत्वादिरिव प्रकृतेऽप्यविद्यातन्मूलकवासनादिर्दोष इति

बुद्ध्या 'देहोऽहमिन्द्रिय'मित्यैक्याध्यासासंभवेऽपि ब्राह्मणादन्यः काणः काणादन्यो ब्राह्मण इति भेदबुद्ध्यभावेन ब्राह्मणोऽहं काण इत्येकदा ऐक्याध्याससंभवात्, समानप्रकारकभेदधिय एव विरोधित्वात्। ननु—भेदमात्रस्याप्यध्यस्तत्ववादिनस्तव देहात्मनोर्भेदस्याप्यध्यस्तत्वेन जीवब्रह्मणोरिव तदभेदस्तात्त्विकः स्यात्, मिथ्यात्वं ह्यधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वम्। तद्बाध्यात्यन्ताभावप्रतियोगित्वस्य सत्वेऽपि (अ)संभवात्। अभेदश्च भेदात्यन्ताभाव इति कथं भेदमिथ्यात्वे अभेदः सत्यो न स्यात्? न च–देहस्याप्यध्यस्तत्वेन तेन सहात्मनो न भेदो नाप्यभेद इति—वाच्यम्; अध्यस्तादपि रूप्याच्छुक्तेः स्वज्ञानाबाध्यभेददर्शनादिति—चेन्न; भेदस्य मिथ्यात्वेऽप्यभेदो न तात्त्विकः, भावाभावयोरुभयोरपि मिथ्यात्वस्य प्रागेवोपपादितत्वात्। इयांस्तु विशेषः यदत्राभेदो व्यवहारकालीनेन परीक्षितप्रमाणभावेनानुमानादिना बाध्यते, भेदस्तु

---

भावः। **समानप्रकारकेति**। 'ब्राह्मणस्याक्षि काण' मित्यादौ ब्राह्मणभेदविशिष्टेऽ[1]क्षिणि काणत्वादि विशेषणम्, न तु काणत्वादिविशिष्टे ब्राह्मणभेदः। अक्षित्वाविशिष्टस्य तु ब्राह्मणत्वादिविशिष्टेऽध्यासो नास्त्येव। ब्राह्मणदेहो न काणः काणं चक्षुर्न ब्राह्मण इत्यादिधीस्तु काणो ब्राह्मण इति बुद्धौ न विरोधिनी। काणभेदाद्यंशे हि[2] विशेष्यतावच्छेदकं देहत्वादिकमेव, ब्राह्मणत्वादिकं तु तद्विशिष्टे विशेषणमिति भावः। **सत्त्वेऽपि**—स्वाश्रयसत्यत्वेऽपि। **प्रागेवेति**। स्वसमानाधिकरणस्य स्वान्यूनसत्ताकात्यन्ताभावस्य प्रतियोगित्वं मिथ्यात्वम्। प्रातीतिकात्यन्ताभावमादाय सिद्धसाधनस्य वारणाय स्वान्यूनसत्ताकेति।

---

[1] ष्टाक्षिणि–क. [2] काणभेदाद्यंशैः–क.

देहात्मनोर्न तेन, किंतु चरमवृत्त्येति । न चैवं—गेहीतिवद्देहीति प्रतीतिर्न स्यात्, किंतु देहोऽहमितीति—वाच्यम्; देहत्वेन भेदग्रहाद्ब्राह्मणत्वादिना भेदाग्रहाच्च ब्राह्मणोऽहं देह्यहमित्युभयप्रतीत्युपपत्तेः । देवदत्ताद्यज्ञदत्तोऽन्य इति भेदबुद्धावपि तत्त्वेनोपस्थिताद्देवदत्ताद्यज्ञदत्ते 'सोऽय'मित्यभेदभ्रमदर्शनात् । ननु—'ब्राह्मणोऽहं मनुष्योऽह'मिति कथमध्यासरूपम्? मनुष्यत्वब्राह्मणत्वादेः शरीरविशिष्टात्मवृत्तित्वेन प्रमात्वस्यैव संभवात् । तदुक्तम्—

ब्राह्मणोऽहं मनुष्योऽहमित्यादिस्तु प्रमैव नः ।
देहभेदयुतो यस्माद्ब्राह्मणादिपदोदितः ॥

इति—चेन्न; मनुष्यत्वादेर्देहविशिष्टात्मवृत्तित्वे चक्षुरादिगम्यत्वं न स्यात्, देहविशिष्टात्मनश्चक्षुरगम्यत्वात् । न चैकदेशस्य चक्षुर्गम्यत्वाद्विशिष्टगता जातिश्चक्षुषा गृह्यत इति—वाच्यम्; व्यासज्यवृत्तेरुभययोग्यतायामेव योग्यत्वनियमात् । अन्यथा ऐन्द्रियकानैन्द्रियकवृत्तिसंयोगद्वित्वादेः प्रत्यक्षता स्यात् । व्यासज्यवृत्तित्वस्य जातावदृष्टचरत्वात् पृथिवीत्वादिना सङ्करा-

---

एवं च मिथ्यात्वघटकाभावोऽधिष्ठानरूपत्वेन तात्त्विकस्तदतिरिक्तत्वेन कल्पितो वोभयथापि न क्षतिरित्यादिकं तु मिथ्यात्वानुमाने पूर्वमुक्तमित्यर्थः । तत्त्वेन—तद्देशकालवृत्तित्वेन । उपस्थितात्—देवदत्तादभेदभ्रमस्य सोऽयमित्याकारकस्य यज्ञदत्ते दर्शनात् । भेदयुतः—अभेदान्यसंसर्गयुक्तः । विशिष्टं न विशेषणविशेष्याभ्यामतिरिक्तम्; तथाचोभयपर्याप्तत्वेऽपि योग्यवृत्तित्वान्मनुष्यत्वादिकं चक्षुषा गृह्यतामिति शङ्कते—न चेति । ननु—विशिष्टस्यातिरिक्तत्वपक्ष एवालम्बनीयः; केवलात्मन एव चक्षुराद्ययोग्यत्वेन देहविशिष्टस्य तद्योग्यतासंभव-

**पत्तेः, तव मते आत्मनोऽणुत्वेन तद्वृत्तित्वेऽतीन्द्रियत्वप्रसङ्गात्।**

स्तत्राह[1]—**तवेति। आत्मन इति।** देहादिविशिष्टात्मनोऽपीत्यर्थः। मन्मते सद्रूपस्यात्मनश्चक्षुरादियोग्यत्वाद्देहविशिष्टरूपेणापि तत्संभवति। परं तु वक्ष्यमाणरीत्याऽऽत्मनि कल्पिततादात्म्यान्यस्य देहवैशिष्ट्यस्य वक्तुमशक्यतया गौरोऽहं कृशोऽहमित्यादौ देहैक्याध्यासावश्यकत्वाच्च देहस्यैव मनुष्यत्वादिकं स्वाभाविकमुच्यते। त्वन्मते तु पार्थिवाद्यणोरिवात्मनोऽपि विशिष्टरूपेणापि चक्षुराद्ययोग्यत्वम्; विशिष्टपरमाणुं पश्यामीत्यादेरिव विशिष्टात्मानं पश्यामीत्यादेरपि प्रत्ययस्याभावादिति भावः॥

ननु—ब्राह्मणात्मानं पश्यामीत्यादिप्रत्यय इष्ट एव, अथवा आत्मत्वं न विशिष्टवृत्तीति नोक्तप्रत्ययः; विशिष्टात्मेति व्यवहारस्तु विशिष्टस्य केवलात्मतादात्म्यात्, विशिष्टपरमाणौ त्विमं पश्यामीत्यादिप्रत्ययरूपफलाभावाच्चक्षुराद्ययोग्यत्वकल्पनं युक्तमेव, विशिष्टात्मनि तु ब्राह्मणं पश्यामीत्यादिप्रत्ययरूपफलबलाद्विजातीयश्चक्षुरादिसंयोगः[2] कल्प्यतामिति—चेन्न; आत्मवृत्तिजातिविषयकत्वेनोक्तप्रत्ययस्य सन्दिग्धतया क्लृप्तैर्देहचक्षुःसंयोगैरेव तन्निर्वाहेऽनन्तानां विजातीयसंयोगानां विशिष्टात्मनि कल्पने मानाभावात्। अथ—साक्षिणैवास्तु ब्राह्मण्यादिकं प्रत्यक्षं न चक्षुरादिनेति—चेन्न; परकीयात्मनि साक्षिणोऽसंबन्धात्, विशिष्टपरमाणोरिव विशिष्टस्य पराभ्युपगतस्यैवात्मनोऽपि साक्ष्ययोग्यत्वात्। अथ—परमात्मनि ब्राह्मणत्वमनुष्यत्वादिकं विशुद्ध्यादिलिङ्गगम्यं न प्रत्यक्षम्; स्वात्मनि त्वणावपि साक्षियोग्यत्वमापरोक्ष्यव्यवहारबलात्कल्प्यमिति चेन्न; गोत्वाद्यपि सास्नादिलिङ्गगम्यं न प्रत्यक्षमित्यापत्तेः। प्रत्यक्षव्यवहारस्य साक्षिण्येव स्वीकारेणापरात्मनि[3] तदभावात्। एतेन—

---

[1] संभवात्तत्राह—**क. ग.** [2] चक्षुराद्ययोग्यत्वसंयोगः—**क.** [3] स्वीकारेणैवात्मनि—**क. ख. ग.**

**न चैवं 'देहो ब्राह्मणो मनुष्य' इत्यादिप्रतीत्यापत्तिः; अहंत्व-सामानाधिकरण्यभ्रमजनकदोषस्यैव तादृक्प्रतीतिप्रतिबन्धकत्वा-दुक्तबाधकैर्देहवृत्तित्वेऽनन्यगतिकत्वेन तथा कल्पनात्, 'कृशोऽहं**

---

कर्तृत्वादिद्वयस्येव ब्राह्मणत्वादिद्वयस्यापि त्वया वाच्यत्वेनात्मनिष्ठमेव ब्राह्मणत्वादि स्वीक्रियताम्, न तु देहनिष्ठमिति—परास्तम्। यत्त्व-तीन्द्रियघटितस्य व्याप्त्यादेरिवातीन्द्रियात्मवृत्तेर्ब्राह्मणत्वादेरपि चाक्षुष-त्वम्, आत्मनश्चक्षुराद्ययोग्यत्वेऽप्युपनयसन्निकर्षेण चाक्षुषविषयत्वसंभ-वाज्जातेः स्वाश्रयाविषयकप्रत्यक्षाविषयत्वनियमो न भग्न इति, तच्छो-भते; व्याप्त्यादेर्लौकिकचाक्षुषासिद्ध्या दृष्टान्तासिद्धेः। आश्रय-लौकिकचाक्षुषं विना जातिलौकिकचाक्षुषस्यासंभवाच्च॥

अथ स्वदेहे उक्तधीरापाद्यते, परदेहे वा। नान्त्यः; इष्टत्वात्, चक्षुषा दृश्यमानोऽवयवी ब्राह्मण इतिवदयं देहो ब्राह्मण इत्यस्यापि संभवादित्यभिप्रेत्य नाद्य इत्याह—**अहंत्वेति**। **दोषस्य** अहं ब्राह्मण इत्यादिभ्रमजन्यवासनादेः। ब्राह्मणत्वविशिष्टप्रत्यक्षकालेऽहं ब्राह्मण इत्येव धीर्जायते न तु देहो ब्राह्मण इत्यतस्तत्सामग्र्यास्तत्प्रतिबन्धकत्वमगत्या कल्प्यत इत्याह—**उक्तेति**। यदि च परदेहे अयं देहो ब्राह्मण इति न प्रत्ययः, तदा तत्रापीयं रीतिरिति भावः; वस्तुतो देहत्वावच्छिन्न-भेदावच्छेदकतया गृहीताहंत्वादेर्ब्राह्मणत्वाद्यवच्छेदेन भ्रमो देहत्वाद्यव-च्छेदेन ब्राह्मणत्वाद्यवच्छिन्नभेदभ्रमश्च देहो ब्राह्मण इत्यादिधीप्रति-बन्धकतया क्लृप्तः, तज्जनकत्वेन वासनादेस्तत्प्रतिबन्धकत्वमपि क्लृप्तमेव, देहत्वानवच्छिन्नदेहविशेष्यताकं ब्राह्मणत्वादिप्रत्यक्षं तूक्तविशेषदर्शना-प्रतिबध्यं जायत एव। न च देहो न ब्राह्मण इति धीरेव देहो ब्राह्मण

च सोपाख्यधर्मानुल्लेखित्वम्, अतो न कोऽपि दोषः। विकल्पस्य ज्ञानत्वे तु तदन्यज्ञानविषयत्वाभाव आपाद्यः। शुक्तिरूप्यादेरसत्त्वे च प्रतीतिविषयत्वं विकल्पान्यप्रतीतिविषयत्वं वानुपपन्नमित्यनिर्वाच्यत्वसिद्धिः। यद्वा— सत्त्वेन प्रतीत्यभाव एवापाद्यः। ननु—प्रमारूपतादृक्प्रत्ययाभावापादनमिष्टमेव। न ह्यसतः सत्त्वेन प्रतीतिः केनचित् प्रमोच्यते। न च तादृग्भ्रान्तिविरहस्तादृक्प्रतीतिसामान्यविरहो वाऽऽपाद्यः; येन पुंसा शशे शृङ्गाभावो नावगतस्तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यादपि भ्रान्तिदर्शनात्, न हि घढधषादिशब्दवदत्र पदार्थानुपस्थापकत्वम्, न वा कुण्डमजाजिनमित्यादिवदन्वयाबोधकत्वम्; अयोग्यताज्ञानाभावस्य योग्यताभ्रमस्य वा आकाङ्क्षादिसामग्रीसध्रीचीनस्य सत्त्वात्, अन्यथा प्रतीत्याद्यभावप्रसङ्ग इति—चेन्न; 'इदं रजत'मिति प्रात्यक्षिकभ्रमवदस्याप्यनिर्वाच्यविषयत्वात्, न च—अस्याप्यनिर्वाच्यत्वे रूप्या-

---

जकत्वपक्षे [1] सूत्रम्, इच्छादीनां चोक्तवृत्तिमूलकत्वेनोक्तविभागप्रदर्शनेनैव निरोद्धव्यसकलवृत्तीनां ज्ञापनं ज्ञानविभाजकत्वपक्षेऽपि तुल्यमिति—चेन्न; ज्ञानत्वेनैव विकल्पस्य हेतुतासंभवे स्वातन्त्र्येण हेतुत्वे गौरवात्, अन्यथा विपर्ययादीनामपि तदापत्तेः, जानामीति प्रत्ययस्तु विकल्पस्थलेऽपि तुल्य इत्यस्वरसादाह **विकल्पस्येति**। **ज्ञानत्वे** 'ह्रीर्धीर्भी' रित्यादिश्रुत्युक्तधीत्वाख्यजातिविशेषवत्त्वे[2]। **न हीति**। अगृहीतपदार्थसंबन्धकेति शेषः। **न वेति**। अयोग्यार्थकेति शेषः। शाब्दादिभ्रमस्यालीकविषयत्वसंभवादाह **प्रात्यक्षिकेति**। ननु— 'असदेवेदमग्र आसी' दित्यादिश्रुत्यैवोक्तवाक्येनाप्यसतः सत्त्वेन प्रती-

---

[1] विभाजकं सू—ग. [2] विशेषत्वे—क. ग.

द्भेदो न स्यादिति—वाच्यम्; को ह्यनिर्वाच्यादनिर्वाच्यं भेत्तुमध्यवसितः? यमेवमाक्षिपसि, किंतु निःस्वरूपात्। यथाच सत्त्वेन न निःस्वरूपविषयत्वं तथोक्तं प्राक्। न चैवं शशशृङ्गादेरनिर्वाच्यत्वे निःस्वरूपत्वोच्छेदः; [1]शशशृङ्गमस्तीत्यत्र शशे शृङ्गारोपेण शशीयत्वारोपेण वा अनिर्वाच्य(त्व)विषयत्वेऽपि 'असन्नृशृङ्ग' मित्यादिवाक्यश्रवणसमनन्तरं विकल्प्यमानाखण्डशशशृङ्गादेरनिर्वाच्यानात्मकस्य निःस्वरूपत्वात्। न चात्र निःस्वरूपत्वादिविकल्पः; उक्तोत्तरत्वात्। न च—'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति ही' ति त्वन्मते तस्याध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेऽपि 'शशशृङ्गमस' दिति वाक्यादिव 'शशशृङ्गमस्ती' ति वाक्येऽपि शशशृङ्गशब्देनासत एव प्रतीतिरिति—वाच्यम्; अस्तित्वस्यानिर्वाच्यत्वेन शशशृङ्गपदाभ्यां तदधिष्ठानमवश्यं वक्तव्यम्; अत्यन्तासच्चानाधिष्ठानमिति न शशशृङ्गपदाभ्यां तदुपस्थितिः। दृष्टान्तीकृतवाक्ये तु नानिर्वाच्यं किंचिदपि प्रतीयत इति नाधिष्ठानज्ञानापेक्षेति वैषम्यात्। अत्यन्तासत्यपि ज्ञानमित्यादि त्वस्त्यादिपदासमभिव्याहृतशशशृङ्गमसदिति वाक्यपरम्। न च—'तद्धैक आहुरसदेवेदमग्र

---

तिरास्ताम्; तत्राह—**यथा चेति**। **तथोक्तमिति**। सदेवासीदित्यादिना यद्विधीयते तदभाव उक्तश्रुत्या विधियित इत्युक्तं मिथ्यात्वानुमाने इत्यर्थः। विवेचितं तदस्माभिस्तत्रैव। **अनिर्वाच्यत्वविषयत्वेऽपीति**। असति सत्त्वसंबन्धाभावेन मन्मते सत्त्वसंसर्गस्यानिर्वाच्य एव भानादित्यादिः। **न च तद्धैक इत्यादि**। परेण पुनः शङ्कितत्वात्पुनः

---

[1] शशे शृङ्ग.

आसी'दिति श्रुत्या असतः सत्त्वेन प्रतीतिरिति वाच्यम्; यथा नानया असतः सत्त्वप्रतिपादनं तथोक्तं मिथ्यात्वलक्षणे। तार्किकास्तु—शशशृङ्गादिपदानामपार्थकतैवेति—वदन्ति। नचानन्वयनिश्चयविरहदशायां प्रवृत्तिपर्यन्तानुभवविरोधः; अनन्वयनिश्चयदशायामेवाबोधकतोक्तेस्तद्विरहदशायामपि नाखण्डशशशृङ्गादिबोधकत्वम्, किंतु सन्मात्रगोचरव्यधिकरणप्रकारकज्ञानं वा सदुपरागेणासद्गोचरज्ञानं वा। केवलासद्भाने सामग्रीविरहात्। तदुक्तं बौद्धाधिकारे—'सङ्गतिग्रहणाभावात् शशशृङ्गादिपदानामबोधकते'ति। न च यौगिकशब्दानामवयवसङ्गत्यतिरेकेण पृथक्सङ्गत्यनपेक्षत्वम्; अवयवशक्तिप्राधान्येन बोधनेऽखण्डासद्बोधनस्याशक्तत्वात्। अवयवानां स्वशक्यपुरस्कारेणाप्रत्यायकत्वात्। न हि पाचकादिः पाकादिमबोधयन् बोधयति। न च तर्हि शशशृङ्गमसच्छशशृङ्गं नास्तीत्यादिवाक्यानामबोधकत्वम्; तेषां शशे शृङ्गाभावबोधकत्वात्। एषा तु बोधकता न शशशृङ्गपदमात्रे, किंतु नास्तीतिपदसमभिव्याहृते। अतो न नास्तीति पौनरुक्त्यरूपशङ्काभासाद्यवकाश इति। यद्वा—अपरोक्षप्रतीत्यभाव आपाद्यः। न च—यदसत्तन्न

---

समाहितमिति बोध्यम्। **अपार्थकता** वाक्यार्थाबोधकत्वम्। **अखण्डेति**। शशीयत्वादिरूपेणाप्रतीयमानेत्यर्थः। टीकाकृन्मते भ्रमस्थले सदुपरक्तस्यासतः संसर्गस्य भानमाश्रित्याह—**सदुपरागेति**। **शशे शृङ्गाभावबोधकत्वादिति**। लक्षणया शृङ्गपदस्य शशवृत्तिरर्थः, नञ्पदस्य शृङ्गाभावोऽर्थः, शशपदं चोक्तलक्षणायां तात्पर्यग्राहकमिति भावः। नन्वेवं—शशशृङ्गपदाभ्यामपि शशवृत्तेः शृङ्गाभावस्य लक्षणया बोधनसंभवान्नास्तीत्यस्य वैयर्थ्यं, तत्राह—**एषेति**। तथाच तथा

प्रतीयत इति व्याप्तिज्ञानस्य प्रत्यक्षमावश्यकम्, अतश्चासतोऽपि प्रत्यक्षत्वम्; ज्ञानज्ञानस्य तद्विषयविषयकत्वानियमात्, किंच शशशृङ्गाद्यत्यन्ताभावप्रत्यक्षमावश्यकम्; अन्यथा असतोऽप्य-सत्त्वबुद्धिर्न स्यात्, तथाच शशशृङ्गादेः प्रत्यक्षत्वमेवेति—वाच्यम्; साक्षादित्यानिषेध्यतयेति चापरोक्षप्रतीतिविषयविशेष-णात्। उक्तस्थले च ज्ञानविषयतया निषेध्यतया च विषयत्व-मिति नास्ति विशिष्टाभावस्यापाद्यस्यासंभवः। यद्वा—सत्त्वेनापरोक्षप्रतीतिविषयत्वाभाव आपाद्यः। न च—इदं रूप्य-मित्यादिभ्रान्त्या अत्यन्तासदेव सत्त्वेन प्रतीयत इति—वाच्यम्; अत्यन्तासतस्तादृशप्रतीतिविषयत्वे सामग्र्यभावात्। इन्द्रिय-सन्निकर्षो हि प्रत्यक्षे सामान्यसामग्री, न चासति सोऽस्ति। नच—प्रातिभासिकत्वपक्षे रूप्यादेः प्रतीतिपूर्वकालेऽसत्त्वेन कथं सन्निकर्षरूपप्रत्यक्षसामग्रीसंभव इति—वाच्यम्, अस्मन्मते ज्ञातैकसति रूप्यादौ साक्ष्यपरोक्षेऽज्ञाननाशकान्तःकरणवृत्तिप्रयो-जकसन्निकर्षानुपयोगात्। न हि तवापीश्वरसाधारणप्रत्यक्षमात्रे सन्निकर्षो हेतुः। न च—प्रमायां निर्दुष्टेन्द्रियसन्निकर्षो हेतुः, न तु भ्रमे, स हि दोषसहितेन्द्रियादेव भविष्यतीति—वाच्यम्; सन्निकर्षो हीन्द्रियवत्सामान्यसामग्री, तदनपेक्षस्येन्द्रियस्याजन-

---

स्वीकारेऽपि तात्पर्यग्राहकत्वेन नास्तीत्यावश्यकमिति भावः। **सत्त्वेना-परोक्षप्रतीतिविषयत्वाभावः** अपरोक्षप्रतीतेः सत्त्वप्रकारतानिरूपित-विशेष्यत्वाभावः। व्याप्तिज्ञानादिविशेषणतया प्रत्यक्षविशेष्यत्वं तु न सत्त्वप्रकारतानिरूपितम्; प्रत्यक्षान्तरमपि न सत्त्वेनासद्विषयकम्; अनिर्वाच्येष्वेवाधिष्ठानसत्तासंबन्धप्रतीतेः, 'वस्तुशून्यो विकल्प'इति सूत्रेण विकल्पस्य सत्तास्वरूपविषयकत्वनिषेधाच्च। न चैवं—धीमात्र-

कत्वमित्युक्तत्वात् । न च तर्हि शाब्दबोधसामान्यसामग्र्या योग्यताज्ञानादेरभावात्कथं परोक्षविकल्पः स्यात्? अयोग्यताज्ञानविरहो हि सामान्यसामग्री, न तु योग्यताज्ञानम्; असंसर्गाग्रहरूपायोग्यताज्ञानविरहस्य विशिष्टज्ञाने आवश्यकत्वात् । स चासद्बोधके वाक्येऽस्त्येव । न हि शशशृङ्गेऽसत्त्वं नास्तीति जानानः शशशृङ्गमसदित्यवगच्छति । एतन्निबन्धन एवापरोक्षप्रतीतौ प्रद्वेषः । एतेन—सन्मात्राविषयकापरोक्षज्ञानमसद्विषयकम्, सत्त्वानाधिकरणविषयकप्रतीतित्वात्, असद्विषयकपरोक्षप्रतीतिवत् । न चात्र प्रातिभासिकसाधारणसद्विवक्षायामाश्रयासिद्धिः, परमार्थसद्विवक्षायां मात्रपदवैयर्थ्यमिति—वाच्यम्; भ्रममात्रस्यैवाधिष्ठानीभूतपरमार्थसद्विषयतया मात्रपदं विना आश्रयासिद्धेर्दुष्परिहरत्वादिति-निरस्तम्; सामग्रीविरहेण बाधात्, शाब्दत्वस्योपाधित्वात्, धर्मादिकमपरोक्षप्रतीतिविषयः, प्रतीतिविषयत्वादित्याद्याभाससाम्याच्च । किंचासतो रूप्यस्यापरोक्षप्रतीतिविषयत्वे शशशृङ्गादेरप्यपरोक्षप्रतीतिविषयत्वं स्यात्, विशे-

---

घटितमेवापाद्यतां, किं प्रत्यक्षनिवेशेनेति—वाच्यम्; असतः प्रत्यक्षविषयत्वस्य पराभ्युपगतस्य निरासाय प्रत्यक्षघटितस्यापाद्यतया प्रतिज्ञानात्, सामान्यसामग्री प्रत्यक्षसामान्यहेतुः प्रातिभसिकत्वपक्षे, प्रातिभासिकत्वमतेऽपि सामान्यधर्मावच्छेदेनैव प्रमाणवृत्तेर्भ्रमे प्रत्यक्षत्वे चाक्षुषत्वादौ वा स्वीकृते सन्निकर्षजन्यत्वावश्यकत्वात्, अन्यथा तत्र प्रत्यक्षत्वे इन्द्रियजन्यत्वादौ वा मानाभावात्, स्वविशिष्टं प्रति दोषाणामेव हेतुत्वेनोपपत्तेः । न चास्तु तथा, तथापि साक्षिसंबन्धादेव प्रत्यक्षता भ्रमविषयस्येति--वाच्यम्; त्वन्मते तस्यासत्त्वेन साक्षिसंबन्धासंभवात्, सदसतोरसंबन्धात्, अन्यथा ह्यसदिति नाममात्रं स्यादिति भावः ॥

षाभावात्, सविशेषत्वेऽसत्त्वव्याकोपात् । ननु—सदसतोः सत्तानिःस्वरूपत्वादिनेव नृशृङ्गशशशृङ्गादीनामपि परस्परं नृशृङ्ग-शशशृङ्गादिशब्दैरेव परोक्षप्रतीतिव्यवहारविषयत्वादेर्विशेषस्यास-त्त्वाविरोधिनो बुद्धिसिद्धस्य संभवः। न च—सर्वसामर्थ्य-हीनस्यासतः सता ज्ञानेन कथं संबन्धः! विषयत्वस्य तत्र वक्तुमशक्यत्वात्, भाति प्रतीयत इत्यादिकर्तृकर्मत्वादिविरोधा-च्चेति—वाच्यम्; अतीतादेः स्मृत्यनुमित्यादिविषयत्वादिव-दुपपत्तेः, न च—तत्र प्रतीत्यादेरेव विषयत्वम्, तावतैव तत्र विषयताव्यवहार इति वाच्यम्; समं ममापीति—चेत्, मैवम्; शशशब्दस्य नरि भ्रमदशायां नृशृङ्गशब्देनेव शशशृङ्गशब्देनापि नृशृङ्गस्य प्रतीयमानत्वेन नृशृङ्गादिशब्दैरेव प्रतीयमानत्वादेरपि परस्परविशेषस्य वक्तुमशक्यत्वात्। न च–दुष्टेन्द्रियादे रूप्यसंस्का-रसाचिव्यवच्छशशृङ्गसंस्कारसाचिव्याभावात्तस्यापरोक्ष भ्रमा–विषयत्वम्, अन्यथा तवाप्यनिर्वाच्यान्तरमेव तत्र कथं नोत्पद्येतेति–वाच्यम्; संस्कारस्य न तावत्प्रतीतौ साक्षादुपयोगः; स्मृतित्वापत्तेः, किंत्वर्थोत्पत्तिद्वारा, तथाच संस्कारनियामकतापि

---

ननु—शुक्तिरूप्यादौ रूप्यत्वादिविशेष एवापरोक्षतानियाम-कोऽस्तु; तत्राह—**सविशेषत्व इति**। रूप्यादेः सतोऽसत्संबन्धानु-पपत्तेः, अस (द्वि) न्विशेषस्तु शशश्रृङ्गादावपीति भावः। **शशशब्दस्य नरि भ्रमदशायां** नरि शशशब्दस्य शक्तिभ्रमदशायाम्। **अशक्यत्वा-दिति**। प्रत्यक्षहेतुविशेषाभावे तात्पर्यं बोध्यम्। तेन तत्तद्धीविषयत्वादि-विशेषसत्त्वेऽपि न क्षतिः। **स्मृतित्वापत्तेरिति**। प्रत्यभिज्ञायां तु नव्यतार्किकमते स्मृतिरेव हेतुर्न संस्कारः, मन्मते तु प्रत्यभिज्ञा तत्तांशे स्मृतिरेवेति भावः। पूर्वानुभूतजातीयस्यैव भ्रमोदयादन्वयव्यति-

**अनिर्वाच्यतापक्ष एव न त्वसद्विषयतापक्षे । वस्तुतस्तु— संस्कारस्तावत्तात्त्विकरजतादिगोचर एव प्राथमिकरजतादिभ्रमे प्रयोजकः सर्वमते, स चासद्रूप्यशशशृङ्गादिसर्वसाधारण एव, तदविषयत्वाविशेषात् । तथाच कथं स नियामको भवतु? एवं**

रेकाभ्यां संस्कारो भ्रमे प्रयोजकः, तत्र रजतत्वाद्यवच्छिन्नतादात्म्यादिसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन संस्कारं प्रति तादात्म्यादिना [1] रजतत्वादिकार्यत्वं न तूक्तविशेष्यताशालिभ्रमत्वादिना गौरवादित्यपि बोध्यम् । यस्य पुरुषस्य रजतभ्रमो जातस्तस्यासद्रजतस्वरूपे संस्कारसत्त्वात्तस्यैव भ्रमान्तरे तज्जन्ये भानम्, न तु शशशृङ्गादेः; समानप्रकारकत्वेन कार्यकारणभावसंभवात् । यस्य तु प्रथमत एवासद्रजतभ्रमस्तस्य तत्र भ्रमे सत्यरजतसंस्कार एव हेतुः परेण वाच्यः, तत्र यद्यसत्प्रकारकत्वरूपं भ्रमत्वं कार्यतावच्छेदकम्, तर्ह्यसत्त्वाविशेषात् शशशृङ्गादिभ्रमोऽप्युक्तसंस्कारेण स्यादित्याशयेनाह— **वस्तुतस्त्विति । शशशृङ्गादिसर्वसाधारणः** सर्वासद्भ्रमजननयोग्यः । ननु—रजतभ्रमत्वं कार्यतावच्छेदकम्, तच्च रजतत्वावच्छिन्नं यदसन्निष्ठं प्रकारत्वं तच्छालित्वं न; येन सर्वासतामुक्तभ्रमे भानं स्यात्, किंतु तदसद्व्यक्तिनिष्ठोक्तप्रकारताकत्वम्; तत्राह—**तदविषयत्वाविशेषादिति** । यदि तद्व्यक्तिविषयकसंस्कारो हेतुः स्यात्तदा तद्व्यक्तिभ्रमत्वेन कार्यत्वं स्यात्; समानविषयकत्वेनैवासद्विषयकसंस्कारभ्रमयोर्हेतुहेतुमत्त्वदर्शनात्, तद्व्यक्त्यन्यसत्यविषयकसंस्कारे हेतुत्वे तु कार्यतावच्छेदके सर्वासद्व्यक्तीनामेकैकव्यक्तिनिवेशे विनिगमकाभावः । न हि रजतत्वेन काचिदेवासद्व्यक्तिर्भ्रमविषय इत्यत्र त्वया मानमानेतुं शक्यम् । तथाचानन्तासद्व्यक्तीनां भाने गौरवमनुभवविरो-

[1] रजतत्वादिना कार्यत्वं—**क.**

**प्रवृत्तिविषयत्वान्यथानुपपत्तिरपि प्रमाणम् । इदमंशस्यासद्रूप्यात्मना प्रतीतौ सामग्रीविरहस्योपपादनात् । ननु—अनिदंरूपे प्रातिभासिके यदिदंत्वं व्यावहारिकसत्त्वं च तद्द्वयं न तावत्सत्; अद्वैतव्याकोपात्, नाप्यनिर्वाच्यम्; तथा सति तस्यासद्वैलक्षण्यार्थं प्रातिभासिकत्वाय सत्त्वेन प्रतीत्या भाव्यम् । एवं च तदपि सत्त्वमनिर्वाच्यं चेत्, तस्यापि सत्त्वेन प्रतीत्या भाव्यमित्यनवस्था, तथाच तयोरसत्त्वं वाच्यम् । तदुक्तम्—**

**'अन्यथात्वमसत्तस्माद्भ्रान्तावेव प्रतीयते ।**
**सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ।**
**तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः ॥' इति ॥**

**टीकायामपि इदंत्वसत्त्वयोः सत्त्वायोगादनिर्वाच्यत्वे इदंत्वेन**

---

धश्च । अथ—असद्रजतनिष्ठोक्तप्रकारताकत्वं तथेति—चेन्न; असतो हि रजतत्वं सद्रजतसाधारणं सद्वा, तदसाधारणमसद्वा । आद्ये सदसतोः संबन्धायोगः, अन्त्ये शशविषाणादिमात्रगतधर्मघटितस्यापि तथात्वं तदवस्थम्, सत्यरजतसाधारणरजतत्वादिप्रकारकेच्छावतां भ्रमविषये प्रवृत्त्यनुपपत्तिश्च । **प्रवृत्तीति** । इदंत्वादिविशिष्टरूप्यादिप्रवृत्तीत्यर्थः । **प्रतीतौ** उपादानप्रत्यक्षविधया प्रवृत्तिहेताविति शेषः । **सामग्रीविरहस्य** सन्निकर्षादिहेत्वभावस्य । **प्रातिभासिके** प्रातिभासिकसंसृष्टतया प्रतीयमाने शुक्त्याद्यधिष्ठाननिष्ठं **यदिदंत्वं व्यावहारिकसत्त्वं च** तदुक्तसंसृष्टरूपेण न सत्; अद्वैतहाने', नानिर्वाच्यमसद्वैलक्षण्यप्रयोजकस्य सत्त्वेन प्रतीयमानत्वस्यावश्यवाच्यत्वेनानवस्थितेः । **अन्यथात्वमित्यादि** । अन्यथात्वं शुक्त्यादे रूप्यादिरूपत्वम् । **भ्रान्तौ** असद्विषयज्ञाने । **एवं हि** एवं च । सत्त्वस्यासत

रूप्यावगाहि तदप्रतीतौ[1] प्रवृत्त्ययोगात्, सत्त्वेन भाने च तस्मिन्नपि सत्त्वादिविकल्पप्रसरेणानवस्थानादिदंत्वव्यावहारिकसत्त्वयोरसत्त्वमित्युक्तमिति—चेन्न ; तयोरसत्त्वेऽपरोक्षप्रतीतिविषयत्वे सामग्र्यभावादेर्बाधकस्योक्तत्वादनिर्वाच्यत्वमेव । न च तथा सत्त्वेन प्रतीत्या भाव्यम् ; इष्टापत्तेः । न चैवमनवस्था ; सत्त्वस्य सदिति प्रतीतावतिरिक्तसत्त्वस्यानपेक्षणात्, अन्यथा त्वत्पक्षेऽप्यसति रूप्ये यत्सत्त्वं प्रतीयते तस्य सत्त्वायोगात्, असत्त्वे च तथैव प्रतीतौ प्रवृत्त्यनुपपत्तिः, सत्त्वेन प्रतीतावनवस्था च स्यात् । न च—सत्त्वे सत्त्वासत्त्वयोरौदासीन्येऽप्यसतः सत्त्वेन प्रतीत्या प्रवृत्त्युपपत्तेरसति प्रतीतस्य सत्त्वस्य सत्त्वेनाप्रतीतावप्यसत्त्वासिद्धेश्च नास्माकं काप्यनुपपत्तिः, तव तु रूप्यादिसत्त्वस्य सत्त्वेनाप्रतीतौ प्रवृत्त्युपपत्तावपि प्रातिभासिकत्वानुपपत्तिरिति—वाच्यम् ; एवं हि तत्सत्त्वं स्वरूपतो न सत् ; तुच्छत्वात्, विज्ञानतोऽपि न सत्, सत्त्वेनाप्रतीतेः तथाचासति कथं तन्निबन्धनो व्यवहारः, न च—प्रतिभासकाले सत्त्वे स्वरूपतो निषेधप्रतियोगित्वं न स्यात्, पारमार्थिकत्वेन निषेधप्रतियोगित्त्वेऽनवस्थैवेत्यसत्त्वमेव रूप्यादीनामिति —वाच्यम् ;

---

एव प्रतीतता भ्रान्तौ स्वीकार्येत्यर्थः । **तदप्रतीतौ** इदंत्वाप्रतीतौ । **इदंत्वेन रूप्यावगाहि प्रवृत्त्ययोगात्** सत्त्वाप्रतीतावपि साद्गुषयकत्वरूपप्रामाण्याग्रहेण प्रवृत्त्ययोगात् । **इदंत्वव्यावहारिकसत्त्वयोः** शुक्त्यादिनिष्ठयोरपि रूप्यादिसंसृष्टतया प्रतीयमानयोः । **असतः** शुक्तिरूप्यादेः । **असत्त्वासिद्धेरिति** । भ्रमप्रकारत्वादिनेत्यादिः । **तन्निबन्धनः** तद्धीहेतुकः । **व्यवहारः** सदाकारानुगतव्यवहारः

[1] तदप्रतीतौ रूप्यावगाहि.

प्रतीतिकाले सत्त्वेऽपि स्वरूपतो निषेधस्य पारमार्थिकत्वेन निषेधेऽप्यनवस्थापरिहारस्य चोक्तत्वात् । नापि—प्रत्येकात्मकत्वेऽनुपपत्त्या उभयात्मकतैवास्त्विति—वाच्यम्; दत्तोत्तरत्वात्, भ्रमत्वानुपपत्तेश्च । नचानिर्वाच्यविषयत्वेन यथा तव मते भ्रमत्वम्, तथा सदसदात्मकत्वे यत्सत्त्वं तद्विषयत्वेन भ्रमत्वमस्तु; एवं तर्हि 'सच्चासच्च रजत'मित्याकारताया दुर्निवारत्वापत्तेः । न च असदेव रूप्यमिति बाधस्य सद्वैलक्षण्यविषयत्ववत् सद्रजतमिति भ्रमस्याप्यसद्वैलक्षण्यमेव विषयोऽस्तु, तथाच प्रातीतिकमपि सत्त्वं मास्त्विति—वाच्यम्; तथा सति बाधेन भ्रमविषयसत्त्वानपहारे बाधकत्वव्यवहारोच्छेदप्रसङ्गात्, अगृहीतासत्त्वस्यापीदं रजतं सदिति प्रतीतेश्च । न हि पुनरगृहीतसत्त्वस्यासद्रूप्यमभादिति प्रत्ययः; बाधस्य प्रसक्तिपूर्वकत्वात् । ननु—असद्विलक्षणं चेन्न बाध्येत सद्विलक्षणं चेन्न प्रतीयेत, अतोऽनुपपत्त्या अनिर्वाच्यत्वाभाव एव किं न सिध्येत्, न च—अबाधाप्रतीत्योर्लाघवात्सत्त्वासत्त्वे प्रयोजके, न त्वसद्वैलक्षण्यसद्वैलक्षण्ये; गौरवादिति—वाच्यम्, बाधप्रतीत्योरेव प्रथमोपस्थितयोः प्रयोजकजिज्ञासायामसत्त्वसत्त्वयोः प्रयोजकत्वं कल्प्यते, लाघवात्, प्रथमोपस्थितत्वाच्च, न तु सद्विलक्षणत्वादेः;

---

प्रवृत्तिश्च । **दत्तोत्तरत्वादिति** । विरोधादिनेत्यादिः । **भ्रमत्वानुपपत्तेरिति** । सद्विषयकधीः प्रमैव न तु भ्रम इति भावः । **दुर्निवारतेति** । ननु—सत्त्वमेव भ्रमविषयः, असत्त्वं तु भ्रमप्रकारत्वादिना सेत्स्यतीति—चेन्न; सदसदात्मकविषयत्वस्य भ्रमत्वरूपत्वोक्तिविरोधात्, सत्त्वादिप्रत्येकोक्तिदोषाणां सत्त्वादिसमुच्चयेऽप्यवारणाद्विरोधाच्च । **प्रथमोपस्थितयोः**—स्वाभावधीपूर्वमुपस्थितयोः । सद्वैलक्षण्यादेरप्रती-

**गौरवात्, चरमोपस्थितत्वाच्च। तदनन्तरं च भान[1] प्रयोजकाभावादेवाभानोपपत्तौ न प्रयोजकान्तरकल्पना। नृशृङ्गादेरसत्त्वेऽपि न बाधः, प्रसक्त्यभावादिति—चेत्, मैवम्; सत्त्वं न तावत्प्रतीतिप्रयोजकम्; रूप्यस्योभयमतेऽप्यप्रतीत्यापत्तेः, नाप्यसत्त्वं बाधप्रयोजकम्; उभयमतसिद्धासति बाधादर्शनात्, रूप्ये चासत्त्वस्याद्याप्यसिद्धेः, प्रत्युतासत्त्वेऽनुपपत्तेर्वक्ष्यमाणत्वात् गौरवं प्रामाणिकम्। तस्मात्सिद्धं ख्यातिबाधान्यथानुपपत्त्या अनिर्वाच्यत्वमिति॥**

इत्यद्वैतसिद्धौ ख्यातिबाधान्यथानुपपत्तिः॥

---

त्यादिप्रयोजकत्वे सत्त्वादेः प्रतीतिप्रयोजकत्वं वाच्यम्; तच्च न संभवतीत्याह—**मैवमिति। प्रतीतिप्रयोजकम्** प्रतीयमानत्वसमव्यापकम्। **अप्रतीत्यापत्तेरिति।** न च—प्रतीतिबलात्सत्त्वं साधनीयमिति—वाच्यम्; प्रतीतेः सत्त्वव्याप्यत्वासिद्धेः। **बाधादर्शनादिति।** न च—सद्वैलक्षण्यस्य त्वन्मते बाधप्रयोजकत्ववदुपपत्तिरिति–वाच्यम्; मन्मते सदसदन्यत्वस्यैव बाधप्रयोजकत्वात्। ननूभयसिद्धं सर्वमसद्बाध्यते, शशो विषाणीत्यादिभ्रमेषु शशविषाणादेरपि बाधात्तत्राह—**रूप्ये चेति।** तथाच बाध्यमात्रेषु रूप्यादिष्वसत्त्वानिश्चयादसत्त्वस्य बाधप्रयोकत्वकल्पनासंभव इति भावः। **प्रामाणिकमिति।** प्रतीतिप्रयोजकं सत्त्वं स्वसमानाधिकरणात्यन्तभावाप्रातियोगित्वादिरूपं वाच्यम्। तथाच लाघवात्कालसंबन्धवत्त्वादिकमसद्व्यावृत्तं तथोच्यताम्। एवं बाधप्रयोजकं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं कालसंबन्धित्वं वा युक्तम्; न तु सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वं कालासंबन्धित्वं

---

[1] भाव.

# अथ निषेधप्रतियोगित्वानुपपत्त्या अनिर्वचनीयत्वसमर्थनम्.

केचित्तु—बाध्यत्वं सत्यसति चानुपपन्नमित्यनिर्वाच्यत्वमिति—आहुः। न च–अतीते तत्कालासति ध्वंसप्रतियोगित्ववत् सर्वदा असत्यप्यत्यन्ताभावप्रतियोगित्वं स्यात्, तथा च बाध्यत्वं नात्यन्तासत्त्वविरोधीति—वाच्यम्; कालान्तरसत्तायाः कालान्तरसत्तां प्रत्यनुपयोगेऽपि विद्यमानतादशायामेव घटादौ ध्वंसप्रतियोगित्वम्; 'अनित्यो घटोऽस्ती' ति प्रतीतेः, न तु ध्वंसादिकाले घटे ध्वंसप्रतियोगित्वम्; तदानीं घटादीनामभावात्।

वा; गौरवात् कालासंबन्धित्वस्य ब्रह्मण्यपि सत्त्वाच्च। किञ्च सत्त्वासत्त्वयोः प्रतीतिबाधप्रयोजकत्वे तर्काभावः; अनिर्वाच्यस्याप्यपरोक्षधीबाधयोः संभवात्, कालसंबन्धस्य तत्त्वे[1] त्वस्ति तर्कः; कालसंबन्धिन एवापरोक्षप्रतीतिरूपप्रसक्तेर्बाधस्य संभवात्। तस्मादसत्त्वस्याप्रतीतौ सत्त्वस्याबाधे च प्रयोजकत्वं प्रामाणिकम्, तदवच्छेदकस्य कालसंबन्धादेर्लघुत्वादिति भावः॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तभङ्गाय ख्यातिबाधान्यथास्थितिः॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां ख्यातिबाधान्यथानुपपत्तिः॥

---

## अथ निषेधप्रतियोगित्वानुपपत्त्या अनिर्वचनीयत्वसमर्थनम्.

कालान्तरसत्तायाः—ध्वंसप्रतियोग्यादेः स्वकालसत्तायाः। कालान्तरसत्तां—ध्वंसप्रतियोगित्वादेर्ध्वंसकालसत्ताम्। तदानीं घटादीनामिति। अधिकरणासंबद्धकालस्य प्रतियोगित्वादावच्छेद-

[1] सत्त्वे–ग.

मेवाभावात्। न च तर्हि घटो न ध्वंसप्रतियोगीति प्रत्ययः स्यात्; न रूपवानित्यस्यापि प्रसङ्गात्। अथ यावत्सत्त्वं रूपसत्त्वान्नैवम्, समं प्रकृतेऽपि। वस्तुतस्तु—ध्वंसकालेऽपि घटो ध्वस्त इति ध्वंसप्रतियोगिता घटे प्रतीयत एव। तथाचानागतवर्तमानातीतावस्थाः क्रमेणाविर्भावयंस्तिरोभावयंश्चानिर्वाच्यो घटः कालत्रयेऽप्यनुस्यूत इति नः सिद्धान्तः। एवं च सत्यनिर्वाच्यत्वमेव प्रतियोगित्वादौ प्रयोजकमिति स्थितम्। ननु—असद्वैलक्षण्यापेक्षया लघुत्वात्सत्त्वमेव प्रतियोगित्वादौ प्रयोजकमस्तु, तथा-

---

कत्वासंभवादिति भावः। **यावत्सत्त्वमिति**। उक्तबुद्धे रूपवद्भेदविषयकत्वाद्भेदस्य च व्याप्यवृत्तित्वादुक्तबुद्धिरप्रमेति भावः। **सममिति**। ध्वंसप्रतियोगिभेदस्योक्तधीविषयत्वात्स्याद्भ्रमः, अत्यन्ताभावविषयकत्वे तु द्वयोः प्रमात्वम्। घटस्योत्पत्तिकाले रूपस्येव नाशकाले तत्प्रतियोगित्वस्याप्यत्यन्ताभावसत्त्वादिति भावः। यत्तु—स्वाधिकरणक्षणे घटो न नश्यति, किंतु स्वानधिकरणक्षण इति प्रत्ययात्स्वाश्रयक्षणे घटादेर्न नाशप्रतियोगित्वमिति—तत्तुच्छम्; स्वानधिकरणक्षणे नश्यतीत्यत्र हि प्रतियोगित्वे उक्तक्षणावच्छिन्नत्वं न विषयः, तथा सति त्वन्मते एतत्क्षणे नश्यति पदार्थे एतदुत्तरक्षणे न नश्यतीति धीः स्यात्; किंत्वाख्यातस्योत्पत्त्याद्यर्थकत्वात्स्वानधिकरणक्षणोत्पत्तिकनाशप्रतियोगित्वं घटे विशेषणम्, तच्च स्वाधिकरणकालावच्छिन्नत्वेऽप्यव्याहतम्। न चैवं—नाशतत्प्रतियोगित्वयोर्भिन्नकालावच्छिन्नयोः संबन्धायोग इति—वाच्यम्; ध्वंसप्रतियोगिनोस्तादृशयोः संबन्धस्य त्वयापि वाच्यत्वात्। अधिकरणासंबद्धकालो नावच्छेदक इत्यस्यैव प्रकृतत्वात्। पररीत्योक्त्वा स्वरीत्याह—**वस्तुत इति**। **अनिर्वाच्यः** तत्तदवस्थाभ्यो भेदाभेदादिना दुर्वचः। **अनुस्यूत इति**। नच—नष्टघटादेरुपादानापत्तिरिति—

**चानिर्वाच्यत्वेऽपि प्रतियोगित्वादिकमनुपपन्नमेवेति–चेत्, सत्यम्; सत्त्वमेव यत्किंचित्कालाबाध्यत्वरूपं तत्र प्रयोजकम्, न तु त्रिकालाबाध्यत्वरूपम्, गौरवात्। न च तर्हि कथं सति बाध्यत्वमनुपपन्नम्; न सन्मात्रे, किंतु परमार्थसतीत्यवेहि। तथाचानिर्वाच्यतापक्षे नानुपपत्तिः। नच तर्हि कथमसद्वैलक्षण्यप्रतियोगित्वमसति, कथं वा 'नासदासी' दिति श्रौतनिषेधः; असत्त्वं तावन्निःस्वरूपत्वम्, तद्वैलक्षण्यं सत्स्वरूपत्वम्, तच्च निष्प्रतियोगिकमेव। श्रुत्यर्थोऽपि तदेव। तथाच नास्ति प्रतियोगित्वप्रतिपत्तिः। न च—शशशृङ्गं नास्तीति प्रत्यक्षत एवासति निषेधप्रतियोगित्वमनुभूयत इति—वाच्यम्;**

वाच्यम्; भग्नावस्थायां जलाहरणाद्यर्थिनामुपादनस्ये[1]ष्टत्वात्। न हि वस्त्रादेः सङ्कुचितप्रसारितावस्था एककार्यार्थिनैवोपादीयन्ते, न वा वस्त्रादिस्वरूपं तासु नानुस्यूतम्; तथाच य आदौ मृत्पिण्डीभूत आसीत् पश्चाद्घटीभूतः स एवेदानीं भग्न इति प्रत्ययादवस्थासु भिन्नास्वपि व्यक्तिस्वरूपमनुगतमव्याहतमिति भावः। **किंचित्कालाबाध्यत्वरूपं** [2]अवच्छिन्नं बाधाऽविषयत्वं, ब्रह्मतुच्छयोर्व्यावर्तनायावच्छिन्नान्तम्, ब्रह्मणि बाधाविषयत्वं सार्वदिकत्वान्न कालावच्छिन्नम्, तुच्छे कालस्यासंबद्धत्वादपि न तदवच्छिन्नं तदिति भावः। समाधत्ते—**न सन्मात्र इति**। बाध्यत्वमनुपपन्नमित्यनुषज्यते। **निःस्वरूपत्वं**—सत्त्वेन प्रतीत्यनर्हत्वम्। **निष्प्रतियोगिकमिति**। तथा चासद्विलक्षणादिपदमुक्तार्हत्वरूपेण निरूढलक्षणया बोधकमिति भावः।

---

[1] मुपादाने कार्यान्तरार्थिनामुपादानस्ये–क. ग. [2] किंचित्कालावच्छिन्नं बाधाविषयत्वमित्यर्थः.

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।**
**तस्यां नानुपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ इति ।**

**न च—प्रतियोगिसत्त्वविरोध्यनुपलब्धिरेव तद्ग्राहिका, सा च प्रकृतेऽस्त्येवेति—वाच्यम्; स्तम्भात्मनि योग्यत्वप्रसिद्ध्या पिशाच उपलम्भापादनं संभवति, शशशृङ्गास्तित्वं न योग्यतया व्याप्तम्, यद्बलात्तेन उपलम्भ आपाद्येत, तथा च नात्र प्रतियोगिसत्त्वविरोधिन्यनुपलब्धिः । अत एव पिशाचादीनां भेदः प्रत्यक्षः, नात्यन्ताभावः । न च—शृङ्गादिकं योग्यतया व्याप्तमेवेति—वाच्यम्; तावता हि शृङ्गाभाव**

---

प्रामाणिकी । **विशेष्यता**—आश्रयता अनुमानेन वाच्या । न चालीके सा संभवति । अस्तु तर्हीशस्यालीकस्याभावानुमानं, तत्राह—**अभावेति** । वस्तुनो न त्वलीकस्य । तथाचानुयोगित्वप्रतियोगित्वे नालीके[1] स्त इति भावः । नन्वयोग्यस्याप्यनुपलब्ध्याऽभावो गृह्यतां, तत्राह—**दुष्टोपलम्भेत्यादि** । **दुष्टा** दोषसहिता शशशृङ्गाद्युपलम्भस्य **सामग्री** कारणकूटं वासनादिसहितः शब्दादिरिति यावत् । **योग्यतेति** । योग्यस्य प्रतियोगिनोऽनुपलब्धिरेवाभावग्राहिका वाच्या, अन्यथातीन्द्रियमात्रस्य सर्वत्राभावसिद्ध्यापत्तेः; सा च प्रकृते नास्तीति भावः । **प्रतियोगिसत्त्वविरोधिनी** प्रतियोगिसत्त्वेनापादनार्हप्रतियोगिका **अनुपलब्धिः** ग्राह्याभावस्य प्रतियोग्यनुपलब्धिः । **तद्ग्राहिका**—अभावमात्रग्राहिका । एवकारात्पूर्वोक्तानुपलब्धिर्न तथा; पिशाचादिभेदस्य स्तम्भादौ मनस्त्वाद्यत्यन्ताभावस्य घटादौ ग्रहे तदभावात् । **स्तम्भात्मनि** स्तम्भाभिन्ने । स्तम्भो यदि पिशाचः स्यात्तदोपलभ्येतेत्यापादनं संभवति; स्तम्भाभिन्नस्योपलब्धिविषयत्वरूपयोग्यत्व-

---

[1] नालीकस्य क. ग.

**एव योग्यानुपलब्धिसंभवः, न त्वलीकाभावे । एवं च शशशृङ्गं नास्तीत्युल्लिखन्त्या अपि बुद्धेः शशे शृङ्गाभाव एव विषयः । गवि शशशृङ्गं नास्तीत्यस्या अपि गवाधिकरणकशृङ्गे शशीयत्वाभावो विषयः; अनन्यगतिकत्वात् । अत एव गोरनन्वयोऽपि नास्ति; शशशृङ्गादेरुपस्थित्यभावात् न तदभावग्रह इति तार्किकरीत्योक्तत्वाच्च । अत एव सप्तमे पदार्थत्वनिषेधस्यासंभवात्पदार्थाः षडेवेत्यत्र कुसृष्टिव्याख्यानम् । न च—'घटो नास्ती'ति बुद्धेर्घटसंसर्गाभाव एव विषयः, न तु घटाभावः; पूर्वं तत्र घटस्य सत्त्वेन तदत्यन्ताभावस्याभावात्, प्राक्प्रध्वंसाभावयोः प्रतियोगि ।**

---

व्याप्यत्वात् । अत्र यदि शशशृङ्गं स्यात्तदा उपलभ्येतेति तु न संभवति; शशशृङ्गस्योक्तव्याप्यत्वाभावादिति समुदायार्थः । ननु—शशशृङ्गं नास्तीत्युल्लेखान्यथानुपपत्त्या शृङ्गत्वादिरूपेण योग्यानुपलब्धिरेव शशशृङ्गाद्यभावग्राहिका; तत्राह—**एवं चेति** । **अत एव** अप्रसिद्धस्याभावबुद्धौ विशेष्यतया विशेषणतया वा प्रतीत्यसंभवादेव । **सप्तमे** द्रव्यादिषड्भिन्ने । **पदार्थत्वनिषेधस्येति** । पदार्थाः षडेवेत्यत्र षडित्यस्योद्देश्यत्वे विशेष्यसङ्गतस्यैवकारस्यान्ययोगव्यवच्छेदबोधकत्वव्युत्पत्त्या द्रव्यादिषड्भिन्नेष्वभावेषु पदार्थत्वव्यवच्छेदः 'पार्थ एव धनुर्धर' इत्यादौ पार्थान्येषु धनुर्धरत्वव्यवच्छेद इव बोध्यः । स चाप्रसिद्धत्वाद्बाधितत्वाच्च विशेषणतया बोद्धुमशक्यः । बाधवारणाय षडन्यभावे[1] पदार्थत्वव्यवच्छेदे तु विशेष्याप्रसिद्धिरपि । तथाच तद्वदेव शशशृङ्गादेरप्रसिद्धस्य नाभावविशेषणतया बोध इति भावः । **कुसृष्टिव्याख्यानमिति** । षडेव पदार्था इत्यत्र षडन्यभावे[1]

---

[1] षडन्याभावे—ग.

**कालेऽसंभावितत्वात्, भेदस्य घटापसरणानपसरणयोस्तुल्यत्वात्, संसर्गोऽपि न तात्त्विकः; प्रतियोगिनि पूर्ववद्ध्वंसाद्यनुपपत्तेः, किंत्वसन् संसर्ग इति—वाच्यम्; उक्तमत्रोदयनाचार्यैः—यन्निबन्धना हि यत्प्रतीतिः तदभावनिबन्धनैव तदभावप्रतीतिः। इह च घटास्तित्वप्रतीतिः संयोगनिबन्धना, तदभावप्रतीतिः संयोगाभावनिबन्धनैव। स च संयोगस्तात्त्विक एव। न च ध्वंसादिविकल्पः; घटानयनात्प्राक्संयोगप्रागभा-**

---

पदार्थत्वव्यवच्छेदे उक्ताभावः प्रतीतो न वा, अप्रतीतश्चेत्कथं निषेधः? प्रतीतश्चेत्सप्तैव पदार्थाः। अथ—पदार्थेषु सप्तत्वं नास्तीत्यर्थ इति—चेन्न; घटपटादिषु सप्तत्वस्य सत्त्वात्। अथ—द्रव्यत्वादिके षड्लक्षणयोगितया षट्त्वमापाद्य तत्र सप्तत्वं नास्तीत्यर्थ इति—चेन्न; षट्सु तस्येष्टत्वादतिरिक्तस्याप्रसिद्धत्वात्। किंच द्रव्यत्वादेः प्रत्येकपरित्यागनिषेधे बाधः; गुणादौ द्रव्यत्वादित्यागात्; समुदायपरित्यागनिषेधेऽपि बाधः; एकत्र समुदायासत्त्वादि[1]त्याशङ्क्य भावत्वावच्छेदेनाद्रव्यत्वाद्ययोगसमुदायस्य व्यवच्छेदो न तु द्रव्यत्वादिसमुदायस्यायोगव्यवच्छेदः। उक्तायोगसमुदायश्चाभावेषु प्रसिद्धः। तथाच भावाः षडेवेत्ययोगव्यवच्छेदस्य, द्रव्यादिषड्भिन्ने भावत्वव्यवच्छेदाद्द्रव्यादय एव भावा इत्यन्ययोगव्यवच्छेदस्य वा प्रकृते बोध इति लीलावत्यां व्याख्यातम्। **असंभावितत्वादिति।** घटो नास्तीत्यादौ घटसामान्यस्य ध्वंसः प्रागभावो वा विषयो वाच्यः; तत्राद्यो महाप्रलयान्यकालेष्वप्रसिद्धः, द्वितीयस्तु सर्वदेति भावः। यद्यपि घटसंयोगादिसामान्यस्य ध्वंसः प्रागभावो वा न महाप्रलयान्यकाले प्रसिद्धः; तथापि घटसंयोगा यावन्तः प्रत्येकं तत्प्रतियोगिकाः संसर्गाभावा उक्तधीविषया इत्याशयेनाह—**घटानयनादित्यादि।** अनुभवस्यादरेऽभावकूटमपि न विषयः,

[1] समुदायसत्त्वादि—ख.

वस्य घटेऽपसारिते संयोगध्वंसस्य सत्त्वात् । न हि घटेऽन्यत्र नीते तद्देशे घटसंयोगोऽस्ति, येन प्रागभावादिर्व्याहन्येत । तथाच संसर्गप्रतियोगिकाभावस्वीकारेऽपि नासत्प्रतियोगिकाभावसिद्धिः । वस्तुतस्तु— घटप्रतियोगिकत्वेनैवाभावस्यानुभवान्नायं संयोगप्रतियोगिको भवितुमर्हति । एवं च सति कालविशेषसंसर्ग्यत्यन्ताभावो वा उत्पादविनाशशीलस्तुरीयः संसर्गाभावो वा भूतलादिसंयुक्तस्य घटस्य विशेषणाभावप्रयुक्तविशिष्टाभावो वा अङ्गीकरणीयः । न च—अत्राद्ये ध्वंसादेरुच्छेदः । कपालेऽपि घटान्यकालसंसर्गिणैवात्यन्ताभावेन तद्व्यवहारोपपत्तेरिति वाच्यम्; 'दण्डी गौरश्चलती'ति विलक्षणव्यवहारत्रये द्रव्यगुणकर्माणि विलक्षणानि हेतुर्यथा, तथात्रापि नास्ति नष्टो भविष्यतीति विलक्षणव्यवहारत्रयस्यैकेनात्यन्ताभावेनोपपादयितुमशक्यत्वाद्विलक्षणाभाव-

---

किंतु सामान्याभाव इत्याशयेनाह—**एवं चेति** । **विशेषसंसर्गी** कालविशेषावच्छिन्नाश्रयताकः । भूतले संयोगेन घटो नास्तीत्यादौ भूतालादिसंयुक्तघटाद्यभावो भूतलादौ विषय इत्याशयेनाह—**भूतलादीति**। **अद्य इति** । तृतीये तत्तद्विशेषणसंसर्गाभावकूटस्य भानमित्युक्तौ तदुपपत्तिः तद्व्यक्तिध्वंसमादायैवेति न तदन्यथासिद्धिः; द्वितीये तु यद्यप्युत्पत्त्यादिमता सामान्याभावेन तद्व्यक्तिप्रतियोगिकनाशस्यान्यथासिद्धिः, तथाप्यत एवेत्यादिना तस्य समाधेयत्वात् आद्य एव समयविशेषसंसर्गश्चेत्यादेः कथनीयत्वाच्चाद्य इत्येवोक्तम् । **घटान्यकालेति** । तत्कपालावच्छेदेन घटवत्कालादन्यकालेत्यर्थः । **विलक्षणव्यवहारत्रयस्येति** । नास्तीत्यत्रात्यन्ताभावत्वं नष्ट इत्यत्र ध्वंसत्वं भविष्यतीत्यत्र प्रागभावत्वमभावांशे प्रकारः; तानि चाखण्डा सखण्डा वोपाधय

त्रयसिद्धिः। समयविशेषसंसर्गश्च तत्समयावच्छिन्नं स्वरूपमेव संयोगध्वंसादिर्वा । न च—संयोगादिध्वंसादिनैवावश्यकेन तर्हि प्रतीत्युपपत्तिरिति—वाच्यम्; घटप्रतियोगिकत्वेनानुभवानुपपत्तेरुक्तत्वात् । न च—कपालेऽपि घटध्वंसादिः संबन्धस्थानीयोऽस्तु, एक एवात्यन्ताभावो व्यवहारयत्विति—वाच्यम्; विलक्षणव्यवहारत्रयानुपपत्त्या दत्तोत्तरत्वात्। अत एव द्वितीयतृतीयपक्षावपि क्षोदक्षमौ; घटप्रतियोगिकत्वानुभवस्यान्यथोपपादयितुमशक्यत्वात्। एतेन—दण्डसत्त्वेऽपि पुरुषासत्त्वाद्दण्ड्यभावदर्शनादस्तु तत्र विशिष्टाभावः, नचात्र संयोगसत्त्वे संयोग्यभावो दृष्टः, तथाच न विशिष्टस्याभावः, किं तु विशेषणस्यैवेति—निरस्तम्; संयोगिप्रतियोगिकत्वेनानुभवात्।

---

इत्यन्यदिति भावः । **स्वरूपं** भूतलाद्याश्रयरूपमाश्रयत्वम् । तत्तदधिकरणस्य स्वस्मिन् संबन्धत्वासंभवादाह—**संयोगध्वंसादिर्वेति** । आदिना संयोगप्रागभावसङ्ग्रहः । तथाच घटस्य संयोगनाशोत्तरं पुनर्नयने नास्तीति व्यवहारानापत्तिः; तत्तत्संयोगप्रागभावकालीनतत्तत्संयोगध्वंसस्यैव संबन्धत्वात् । **संयोगिप्रतियोगिकत्वेनेति** । यत्राधिकरणे प्रतियोगि न संयुक्तं तत्र नान्यः पक्ष इति बोध्यम् । यत्तु—घटो नास्तीति धीर्न संयोगमात्रस्याभावं गृह्णाति, किंतु भूतलादिघटसंयोगस्य; तथाच यत्र घटो नास्ति तत्र संयोगोऽसन्नेवेति तन्न; यत्र कादाचित्को घटसंयोगस्तत्रोक्तसंयोगः सन्नेव । अन्यत्रोक्तधीस्थलेऽपि न दोषः । **यन्निबन्धनेत्याद्याचार्योक्तेर्ह्ययमर्थः** । प्रतियोग्यनुयोगिनोर्येन संबन्धेन रूपेण चाभावविषयकधीविषयत्वं तेन संबन्धेन रूपेण चाभावधीविषयत्वम्; तथाच प्रतियोग्यनुयोगितावच्छेदकरूपेण प्रसिद्धिरभावबुद्ध्यापेक्ष्यते, न तु तदधिकरणीयतत्तत्संभन्ध-

संविदेव हि भगवती वस्तूपगमे शरणमिति । तस्मान्निषेधप्रतियोगित्वान्यथानुपपत्त्याप्यनिर्वाच्यत्वसिद्धिः ॥

इत्यद्वैतसिद्धौ निषेधप्रतियोगित्वानुपपत्त्या
अनिर्वचनीयत्वसमर्थनम् ॥

---

## अथ श्रुत्यर्थापत्त्युपपत्तिः.

'नासदासीन्नो सदासी'दित्यादिश्रुतयोऽप्यनिर्वाच्यत्वे प्रमाणम् । न चात्र सदसच्छब्दौ पञ्चभूतपरौ, 'न सत्तन्नासदुच्यत' इत्यादौ भूते प्रयोगात्, 'यदन्यद्वायोरन्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चेत्यस'दिति श्रुतेश्चेति—वाच्यम्, प्रसिद्धपरत्वे

---

विशिष्टप्रतियोगितावच्छेदकरूपेण । उक्तं हि 'सद्भ्यामभावो निरूप्यत' इति । एवं च घटसंयोगित्वभूतलत्वाभ्यां सतोः प्रसिद्धिः प्रकृतेऽस्त्येव ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय अनुपपन्ना निषेध्यता ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां निषेधप्रतियोगित्वानुपपत्त्यानिर्वचनीयत्वसमर्थनम् ॥

---

### अथ श्रुत्यर्थापत्त्युपपत्तिः

**नासदासीदित्यादि ।** 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् । किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि रात्र्या अह्न आसीत्प्रकेतः ।

**संभवत्यप्रसिद्धपरताया अयुक्तत्वात्, न हि भूते सदसच्छब्दौ प्रसिद्धौ, किंतु पारमार्थिकापारमार्थिकयोरेव। न च 'नासदासी'दित्यत्राप्रसिद्धप्रतिषेधापत्तिः; 'नो सदासी'दित्यनेन**

---

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास । तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् । तुच्छेनाभ्वपिहितं यदासीत्तमसस्तन्महिनाजायतैकम् । कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासी'दित्यादीत्यर्थः । **पारमार्थिकयोरिति।** भूतेषु शास्त्रीयप्रसिद्धिमात्रम्, सत्यालीकयोस्तु शास्त्रीया लौकिकी च प्रसिद्धिरिति तयोर्बलवत्त्वम् । अत एव माधवीयभाष्ये व्याख्यातम् । प्रलये स्थितं जगत्कारणस्वरूपमाह—**नासदासीदित्यादि। तदानीं**—प्रलये, **असत्**—निरूपाख्यम्, नासीत् तादृशस्य कारणत्वासंभवात्। नापि **सत्** सत्त्वेन निर्वाच्यमासीत्, सद्रूपस्य तद्विलक्षणजगत्परिणामित्वासंभवात् । तथा चानिर्वाच्यमासीदित्यर्थः । **नासीद्रज इति।** रजांसि लोक इति यास्कः, एकवचनं तु सामान्यापेक्षम् । व्योमादेर्वक्ष्यमाणत्वात्तदन्यलोकस्तदानीं नासीदित्यर्थः । तथा व्योम अन्तरिक्षलोकः परः परस्तादुपरि द्युलोकादिसत्यलोकान्तं च तदा नासीत् । एवं चतुर्दशभुवनगर्भं ब्रह्माण्डं निषिध्य तदावारकत्वेन पुराणप्रसिद्धानि भूतानि निषेधति—**किमावरीव इति।** आवृणोतेर्यङ्लुगन्ताच्छन्दसि लिटि तिपि रूपमावरीव इति । किमावरणीयं कर्म भूतजातमावृणोतु आवरणीयाभावादावारकभूतान्यपि न तदानीमासन्नित्यर्थः । **कुह** कुत्र देशे स्थित्वा भूतमावृणुयात्तादृशदेशोऽपि तदा नेत्यर्थः । **कस्य शर्मन्** शर्मणे कस्य भोगाय आवृणुयात्, भोक्तारोऽप्युपाधिमनोलयात्तदा नासन्नित्यर्थः । 'आपो वा इदमग्रे सलिलमासी'दित्यादिश्रुत्या अम्भःसत्त्वभ्रमं निरस्यति—**अम्भः किमासीदिति।** प्रलये

संहर्ता मृत्युःस्यात्तत्राह—**न मृत्युरिति**। तर्ह्यमृतं जीवनं स्यात्तत्राह—**अमृतमिति**। **न रात्र्या इति**। तथा रात्र्या अन्हश्च प्रकेतः प्रज्ञानं नासीत् चन्द्रसूर्याभावात्। **आनीदित्यादि**। तत् सर्ववेदान्तप्रसिद्धं ब्रह्म आनीत् जीवितवत्। ननु—कथं ब्रह्मणो जीवनम्; प्राणासंबन्धात्, तत्राह—**अवातमिति**। आसीदित्यर्थकमानीदित्युक्तमिति भावः। **स्वधया** मायया सहितम्। स्वस्मिन्धार्यत इति स्वधा। स्वधेत्यनेन सहार्थकतृतीयया च मायाया ईश्वरानाश्रितत्वमीश्वरेक्षणानपेक्षत्वं च साङ्ख्योक्तं वार्यते। **एकं** अद्वितीयं सर्वदा द्वितीयशून्यम्। एवं च स्वधासाहित्योक्तिर्व्यवहारतो न परमार्थत इति बोध्यम्। ननु—स्वधासहितं ब्रह्म यदि तदानीमस्ति तर्हि न रज इत्याद्यसङ्गतम्, न हि मायातोऽन्यद्रजआदिकम्; तत्राह—**तस्माद्धान्यदित्यादि**। तस्मात्स्वधायुक्तब्रह्मणोऽन्यद्रजआदि परः सृष्टिकाले जायमानं नास तदानीं न बभूव। हशब्देनोक्तब्रह्मान्यस्यानिर्वाच्यस्य जगतः प्रसिद्धिं द्योतयति। ननु—यदि तदा जगन्नासीत्कथं तर्हि जनिक्रियाकर्तृत्वम्? कारकविशेषस्य कर्तृत्वात्, निमित्तस्यैव कारकत्वात्, पूर्ववर्तिन एव निमित्तत्वात्तत्राह—**तम आसीत्तमसा गूढमग्रे इति**। **तमसा** अन्धकारवद्भावरूपेणात्मसंबन्धिस्वरूपावारकेणाज्ञानेन। **गूढं**— संस्काररूपापत्त्या स्ववशीकृतम्। **तमः** अज्ञानाभिन्नं जगत्तदानीमप्यासीदित्यर्थः। तथाचाविर्भावः स्थूलतापत्तिरूप उत्पत्तिः, संस्कारावस्थैव नाश इति भावः। एतेनासत्कार्यवादिनो निरस्ताः। ननु—तमसा गूढं तम इति विरुद्धम्; तत्राह—**अप्रकेतं** अप्रज्ञायमानं कार्यकारणयोरत्यन्तभेदाभावात्तमसोऽत्यन्तभेदे मानशून्यमित्यर्थः। अत एव **सलिलं** कारणीभूततमसि सङ्गतम्, तादात्म्यापन्नमिति यावत्। 'षलगतौ' इत्यस्माद्धातोरौणादिक इलच्प्रत्ययः। सर्वं जगत्तदा आसीत् अस्तेर्लङि तिपि 'बहुलं छन्दसी'तीडभावे

**सद्भिन्नत्वे उक्ते असत्त्वस्यापि प्रसक्तेः। न च तदानीमित्यस्य वैयर्थ्यम्; 'नासीद्रजो नो व्योमे'ति रजोनिषेधादावेव तदन्वयात्। न हि रजःप्रभृतीनां सर्वदा अनस्तित्वम्।**

---

'हल्ङ्याभ्य' इति तिलोपे 'तिप्यनस्ते'रिति दकाराभावः। यद्वा सलिलमिति लुप्तोपमा; यथा नीरं क्षीरयुक्तमेकतापन्नं तथा कारणगतं जगदित्यर्थः। **तुच्छेन** सद्विलक्षणेन। **अपिहितं** निगूढम्। **एकं** संस्काररूपैकावस्थापन्नम्। **आभु** आसमन्ताद्भवनयुक्तं यज्जगदासीत्तत्तपस ईश्वरालोचनस्य महिम्ना स्थूलविचित्ररूपेणाजायत आविर्बभूव। अथवा **अपिहितं** आवृतम्। **एकं** अद्वितीयम्। **आभु** विभु संस्कारतापन्नजगद[1]नुस्यूतं यद्ब्रह्म आसीदित्यर्थः॥

**प्रसक्तेरिति**। सद्भिन्नत्वेनैव सर्वदेशकालनिष्ठाभावप्रतियोगित्वरूपासत्त्वस्यानुमानसंभवादिति भावः। न चैवं—शास्त्रमूलकप्राप्तियुक्तस्य शास्त्रेण निषेधे विकल्पापत्तिरिति—वाच्यम्; अननुष्ठेये विकल्पासंभवात्। न ह्ययं घटो न घट इत्यादौ विकल्पः संभवति, विरोधात्। **वैयर्थ्यमिति**। नासदासीदित्यत्रान्वये इत्यादिः। **रजोनिषेधादावेव** न त्वसदादिनिषेधे। वस्तुतस्तदानीं सद्भिन्नमासीदित्यर्थकनोसदासीदितिवाक्य तदानीमसद्भिन्नमासीदित्यर्थकनासदितिवाक्ययोः तम आसीदित्यनेनैकवाक्यतया सदसद्भिन्नं तम आसीदित्यर्थपर्यवसानसंभवात्तदेकवाक्यतार्थमेव नासदित्यादौ तदानीमित्यस्यान्वयावश्यकत्वात्, नञः पर्युदासार्थकत्वास्वीकारे तु सन्नासीदित्यत्र बाध एव सत आत्मनः सदा सत्त्वात्। अथाऽऽनीदवातमित्याद्येकवाक्यतया आत्मान्यत्सन्नासीदित्यर्थ इति—चेन्न; प्रतियोग्यप्रसिद्धेः, सदसद्भिन्नत्वस्य पर्युदासपक्ष एव शाब्दत्वेनोपसंहारमात्रेण 'आग्नेयं चतुर्धा करोति'

[1] पन्नं जग-ग.

**न च 'नो सदासी' दित्यनेनैव रजःप्रभृतिनिषेधे सिद्धे पृथङ्निषेधानुपपत्तिः; 'नो सदासी' दित्यत्र सच्छब्दस्य परमार्थसत्परत्वेन व्यावहारिकसतो रजःप्रभृतेर्निषेधस्य ततः प्राप्त्यभावात्, 'आनीदवातं स्वधया तदेकमि' ति वाक्यशेषाद्ब्रह्मणोऽप्यनिर्वाच्यत्वप्रसङ्गः, 'तम आसीदि' ति वाक्याद-**

'पुरोडाशं चतुर्धा करोती'त्यनयोरिव विवक्षितार्थसिद्धेश्च। अन्यथा हि सदसतोः प्रतिषेधसहकृतेन तम आसीदित्यनेन तमसः सदसद्भिन्नत्वमार्थिकं स्यान्न शाब्दम्। किंच तदानीमित्यस्य सदसत्प्रतिषेधानन्वये[1] आर्थिकमपि तन्न स्यात्; न हि कदाचित्तत्प्रतिषेधसहकृता कदाचिद्विद्यमानत्वेन तमउक्तिस्तमसः सदसदन्यत्त्वं विनाऽनुपपन्ना। तस्मात्सदसन्निषेधपक्षे तदानीमित्यस्य तदन्वयावश्यकत्वेऽप्युक्तयुक्त्या स पक्षो न युक्तः; किंतु सदसद्भिन्नमासीदिति पर्युदास एव। तत्र च तदानीमित्यस्यान्वयेऽप्यदोष इत्याशयेन रजोनिषेधादावेव तदन्वयादित्युक्तम्। रजआदिनिषेध एव तदन्वयो न तु सदसन्निषेधे; तस्य प्रकृते नञर्थत्वाभावादिति भावः। अत एव सद्भिन्नत्वे उक्ते इत्युक्तम्। नञोक्ते इति तत्रार्थः। **व्यावहारिकसतः** सत्त्वेन व्यवहार्यस्य। एतेन प्रातिभासिकस्यापि पृथगुक्त्यापत्तिरिति परोक्तमपास्तम्; रजआदिपदस्य प्रातिभासिकादिघटितलोकपरत्वेन व्याख्यातत्वात्। शङ्कते—**आनीदित्यादि**। यथा तम आसीदित्यादिवाक्यशेषेणोपसंहारादविद्यायास्तदात्मककार्यसामान्यस्य च सदसदन्यत्वं लभ्यते; तमःपदस्याविद्यात्मकार्थकत्वादविद्यात्मके आसीदित्यस्यान्वयेऽविद्यायामपि तदन्वयात्, अर्थात्तस्यां सत्त्वलाभसंभवाच्च, आनीदित्यस्यासीदित्यर्थकत्वात्तदाऽऽनीदित्याद्युपसंहारेण

[1] प्रतिषेधान्वये–क. ग.

विद्याया इवेति चेत्, श्रुत्यन्तराविरोधाय सदेकं ब्रह्म सदासीन्न सदसद्विलक्षणमित्यर्थपर्यवसानात् ॥

इत्यद्वैतसिद्धौ नासदासीदित्यादिश्रुत्यर्थोपपत्तिः ॥

---

## अथासत्ख्यातिभङ्गः.

तस्मादनिर्वाच्यख्यातिरेव प्रमाणसंभवात्, न त्वसदन्यथाख्यातिः; प्रमाणविरहात्। न चासद्भानेऽसदेव रजतमभादिति प्रत्यक्षं मानम्; अनन्तरोक्तबाधकेन सद्वैलक्षण्यविषयकत्वात्, न चेदं प्रत्यक्षमपि, त्वयापि ह्यसदात्मनः सतः

---

ब्रह्मणोऽपि सदसदन्यत्वं स्यादिति भावः । चेदिति। नेति शेषः। तेन पर्यवसानादिति हेतोर्नासङ्गतिः। श्रुत्यन्तरेति। 'सदेव सोम्येदमग्र आसीत्' 'सत्यं ज्ञानमनन्त' मित्यादीत्यर्थः। न सदसद्विलक्षणमिति। 'नासदासीन्नो सदासीत्तम आसीदि' त्यनेन सदसद्विलक्षणस्य व्यवहारतः प्रलये सत्त्वोक्तावप्यासीदित्यत्र विद्यमानैकपदेन 'एकमेवाद्वितीयं' 'आत्मा वा इदमेक एवाग्र असी' दित्याद्यैकवाक्यतापन्नेन सदसद्विलक्षणस्य द्वितीयसामान्यस्याभावस्तदानीं लभ्यत इति भावः ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तनाशाय नासदित्यादिसङ्गतिः ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां नासदासीदित्यादिश्रुत्यर्थोपपत्तिः ॥

---

## अथासत्ख्यातिभङ्गः.

न त्वसदन्यथाख्यातिरिति। न त्वसदन्यथाख्यातिवान्।

प्रत्यक्षत्वमङ्गीक्रियते। न चात्र पूर्वकालीनभानविषये रजतेऽसत्त्वमिति ज्ञानमसदात्मना सद्विषयीकरोति। न च विमतमसत्, सत्त्वानधिकरणत्वात्, शशशृङ्गवत्, विमता अप्रमा असद्विषयिणी, सत्त्वानधिकरणविषयकत्वात्, सन्मात्राविषयकत्वे सति सविषयकत्वात्, नृशृङ्गमसादित्यादिवाक्याजन्यपरोक्षवदित्यनुमानं तत्र मानम्। पूर्वोक्तयुक्त्या तत्र बाधात्, प्रथमानुमाने शब्दैकसमधिगम्यत्वस्य द्वितीयतृतीययोः परोक्षत्वस्योपाधित्वाच्च। किंचासत्ख्यात्यङ्गीकारेण बौद्धमतप्रवेशापत्तिः। न च सदुपरागो विशेषः; तथाप्यसत्ख्यात्यापत्तेस्तदवस्थत्वात्। न च—तार्किकैरप्यसतः संसर्गस्य भानाङ्गीकारेण तेषामप्येवमापाद्येतेति—वाच्यम्; तथाङ्गीकारे तेषामपि तथैव।

---

**अङ्गीक्रियत इति।** अन्यथा शशशृङ्गमसदित्यपि प्रत्यक्षमङ्गीक्रियेतेति शेषः। **सद्विषयीकरोतीति।** न च इदंत्वविशिष्टस्य सतोऽसदात्मकतया प्रत्यक्षं मानमिति–वाच्यम्; [1]सदन्यत्वस्यैव तत्र भानमित्युक्तत्वात्। **पूर्वोक्तयुक्त्या**—असतः प्रत्यक्षत्वाद्यसंभवयुक्त्या। **परोक्षत्वस्य**—परोक्षधीत्वस्य। ननु—आद्यस्योपाधेर्नृशृङ्गादौ साध्याव्यापकत्वम्; तस्य स्वज्ञानानुव्यवसायविषयत्वात्, द्वितीयस्यापि स्वज्ञानानुव्यवसाये साध्याव्यापकत्वमिति—चेन्न; शाब्दान्यज्ञानं प्रति साक्षादनिषेध्यत्वेनाविषयत्वस्य प्रथमोपाधित्वात्, अप्रमाया असदन्यत्वादिविषयकत्वमादाय सद्विषयकत्वपर्यवसानवारणाय साक्षादसद्विषयकत्वस्यैव साध्यीकार्यतया द्वितीयस्यापि साध्यव्यापकत्वात्, पक्षधर्मावच्छिन्नयथाश्रुतसाध्यव्यापकत्वस्यानपायाच्च। यत्तु—प्रथमोपाधिमति ब्रह्मणि साध्याभावात्साध्याव्याप्यत्वं दोष—इति, तन्न

---

[1] सदसदन्यत्वस्यैव.

वस्तुतस्तु—तेषामपि सत्संसर्गभान एव निर्भरता, शुक्तिरूप्यं तत्तादात्म्यं चेत्यतोऽन्यस्य रजतभ्रमेऽविषयत्वात्, तेषां च सत्यत्वात्। न च तर्हि भ्रमत्वानुपपत्तिः; व्यधिकरणप्रकारकत्वेन तत्त्वात्। न च—रजतप्रतियोगिकसंसर्गस्य शुक्त्यनिष्ठत्वादसत्संसर्गभानं विना व्यधिकरणप्रकारत्वमेव न स्यादिति—वाच्यम्; तत्किमायुष्मन्नसत्संसर्गः शुक्तिनिष्ठः, येन तद्विषयत्वं व्यधिकरणप्रकारकत्वायाङ्गीकुरुषे। तस्माद्भासमानवैशिष्ट्यप्रतियोगित्वं न प्रकारत्वम्, किंतु ज्ञानविषययोः स्वरूपसंबन्धविशेषः। स च स्वरूपसंबन्धः सन्वा संसर्गो भासतामसन्वा। उभयथापि समान एव। न च शशशृङ्गमसदित्यादिवाक्यैरसत्यपि परोक्षप्रतीतस्त्वयाङ्गीकारेण तवाप्यसत्ख्यात्यापत्तिः; तत्र हि न प्रतीतिः, किंतु विकल्पमात्रमित्युक्तत्वात्। तस्मान्नासत्ख्यातिः॥

इत्यसत्ख्यातिभङ्गः॥

---

साध्यव्याप्यत्वस्योपाधित्वाघटकत्वात्। निर्भरताज्ञापनाय तार्किकोक्तमाह—**शुक्तिरूप्यमित्यादि**। **असन्वा** मिथ्या वा। **समानः** तदभाववद्विशेष्यतानिरूपितप्रकारताकत्वरूपस्य व्यधिकरणप्रकारकत्वस्य निर्वाहकतया तुल्यः। वस्तुतो भासमानस्य वैशिष्ट्यस्य प्रतियोगित्वं मास्तु प्रकारत्वम्। वैशिष्ट्यस्य भासमानं प्रतियोगित्वं तु स्यादेव; शुक्त्यादिनिष्ठवैशिष्ट्यप्रतियोगित्वस्य रूप्यादौ भानसंभवादित्यादि विवेचितं सामान्यलक्षणाखण्डने। **तत्र हीति**। हि शब्दोऽवधारणे, नैव प्रतीतिरित्यर्थः॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तभङ्गाय असत्ख्यातिनिराकृतिः॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामसत्ख्यातिभङ्गः॥

# अथान्यथाख्यातिभङ्गः

नाप्यन्यत्र स्थितस्य रूप्यस्य भानादन्यथाख्यातिः; अत्यन्तासत इवान्यत्र सतोऽप्यपरोक्षप्रतीतिप्रयोजकसन्निकर्षानुपपत्तेस्तुल्यत्वात्। न च संस्कारस्मृतिदोषाणां प्रत्यासत्तित्वम्; रजतप्रत्यक्षमात्रे रजतसंयोगत्वेन कारणत्वावधारणात्, सन्निकर्षान्तरसत्त्वेऽपि तदभावे रजतप्रत्यक्षोत्पत्तेर्वक्तुमशक्यत्वात्। न च लौकिकप्रमारूपप्रत्यक्ष एव तस्य कारणत्वम्; अस्य विभागस्य स्वशिष्यानेव प्रत्युचितत्वात्, गौरवकरत्वात्,

---

## अथान्यथाख्यातिभङ्गः

**संस्कारस्मृतिदोषाणामिति ।** इदं रूप्यमित्यादिभ्रमो रूप्यांशे उपनयसन्निकर्षजन्य इति प्राञ्चः—संस्कारस्योपनयत्वे तज्जन्यप्रत्यक्षस्य स्मृतित्वाद्यापत्त्या स्मृतिरेवोपनयो न संस्कार इति वदन्ति । नव्यास्तु—उपनयप्रयोज्यस्य विषयत्वस्य लौकिकत्वासंभवादिदं रूप्यं साक्षात्करोमीति प्रत्ययानुपपत्तेर्दोषाणामेव भ्रमीयलौकिकविषयत्वे नियामकत्वमित्याहुः । **प्रत्यक्षमात्रे इति ।** द्रव्यनिष्ठविषयतया प्रत्यक्षसामान्ये इन्द्रियसंयोगस्य हेतुत्वकल्पनायां लाघवाल्लौकिकविषयतया प्रत्यक्षे इन्द्रियसंयोगोऽलौकिकविषयतया प्रत्यक्षे उपनयादिर्हेतुरिति कल्पनानवकाशात् 'सुरभि चन्दन' मित्यादौ 'सौरभं स्मरामी' त्येव प्रत्ययादुपनयादिहेतुत्वे मानाभावाच्च । अत एव दोषस्य न लौकिकविषयताप्रयोजकत्वम्; रजतादिलौकिकप्रकारतानिरूपिततादात्म्यादिसांसर्गिकविषयतानिरूपितविशेष्यतया प्रत्यक्षं प्रति विषयादिदोषस्य हेतुत्वे गौरवेण तादात्म्यादिसंबन्धेन रजतादावेव तद्धेतुत्वौचित्यात्। द्वितीयादि

**निर्विकल्पकसाधारण्याभावाच्च । रजतेन्द्रियसन्निकर्षजस्य रजते रजतत्वप्रकारकज्ञानस्य भ्रमत्वानुपपत्तेः । 'इमे रङ्गरजते' इति भ्रमे विद्यमानोऽपि रजतसन्निकर्षो जनको न भवति, अनुमिताविव क्वचिद्विद्यमानोऽपि विषयः । अथानुमितेर्विषयजन्यत्वे प्रत्यक्षत्वापत्तिः, अतीतेऽनागते च विषये अनुमितिर्न स्यादिति बाधकम्, रजतप्रत्यक्षस्य रजतसन्निकर्षजन्यत्वे प्रमात्वापत्तिः, असन्निकर्षे च तत्प्रत्यक्षं न स्यादिति बाधकं प्रकृतेऽपि तुल्यम् । यदि तु दोषमहिम्ना रजतसान्निकर्षस्य रङ्गज्ञानांशे जनकत्वम्, रङ्गसन्निकर्षस्य च रजतज्ञानांशे, तदा रजतज्ञानांशे तत्सन्नि-**

---

क्षणे इन्द्रियसंयोगोत्पत्त्या चाक्षुषाद्युत्पत्तिसंभवादिति भावः । अनिर्वचनीयख्यातौ विचारितमेतदस्माभिः । ननु—प्रत्यक्षभ्रमसामान्ये सान्निकर्षानुपपत्तिरिति यदुक्तम्, तन्न युक्तम्; 'इमे रङ्गरजते' इति रङ्गरजतयो रजतरङ्गप्रकारके भ्रमे सन्निकर्षसंभवात्, तत्राह—**रजतेन्द्रियेति । रजते रजतत्वप्रकारकेति** । यथा रजते रजतत्वं प्रकारस्तथा रजतमपि स्वस्मिंस्तादात्म्येन प्रकारोऽस्तु; न तु रङ्गे एवेति ज्ञापनायेदमुक्तम् । **भ्रमत्वानुपपत्तेरिति** । रजतसन्निकर्षस्य तादात्म्येन रजतप्रमायां हेतोः सत्त्वात् भ्रममात्रत्वानुपपत्तेरुक्तप्रमात्वापत्तेः । **रजतप्रत्यक्षस्य रङ्गे** रजतप्रकारकप्रत्यक्षस्य । **असन्निकर्षे** इदं रजतमित्यादिभ्रमस्थलीये रजतासन्निकर्षे । **दोषमहिम्ना** दोषसहकृतत्वेन । **रङ्गज्ञानांशे** तादात्म्येन रङ्गप्रकारकज्ञानांशे । **रजतज्ञानांशे** तादात्म्येन रजतप्रकारकज्ञानांशे । एवकारः शेषः । रजतादिसन्निकर्षसत्त्वेऽपि न रजतादिप्रकारकप्रमा, दोषेणैव तत्प्रतिबन्धात्, किन्तु धर्मीन्द्रियसन्निकर्षसहकृतदोषबलाद्रजतादिप्रकारकभ्रम इत्यर्थः । **रजतज्ञानांशे** रजतप्रकारकभ्रमांशे । **तत्सान्निकर्षाजनकत्वात्** रजतसन्निकर्षस्या-

कर्षाजन्यत्वा[1]त्प्रमात्वाभाववत्प्रत्यक्षत्वाभावोऽपि स्यात्। तस्मादिमे इत्येवेन्द्रियजन्यम्, रङ्गरजते इति तु स्मृतिरूपमविद्यावृत्त्यात्मकमनिर्वचनीयत्वादित्यन्यत्र विस्तरः ॥

इत्यन्यथाख्यातिभङ्गः ॥

---

# अथाविद्यकरजतोत्पत्त्युपपत्तिः

तच्चानिर्वचनीयमज्ञानोपादानकम्, तत्त्वज्ञानेन नाश्यं च। नन्वेवं—'रूप्यमुत्पन्नं नष्टं चे'ति धीप्रसङ्गः, त्रैकालिक-

---

जनकत्वात्। प्रत्यक्षत्वाभावोऽपीति। दोषस्य प्रत्यक्षहेतुता तु प्रत्युक्तेति बोध्यम्। प्रमासामान्ये मनस उपादानत्वाच्चक्षुरादिसन्निकर्षसहकृतस्य मनस एव चाक्षुषादिप्रमोपधायकत्वात् भ्रमसामान्येऽविद्यैवोपादानम्। तत्तद्दोषसंस्कारादिसहकृतायास्तस्या एव भ्रमविशेषोपधायकत्वम्। तथा च भ्रमात्मकवृत्तेश्चाक्षुषादिरूपत्वे मानाभावः। अधिष्ठानचाक्षुषे भ्रमस्य तादात्म्याध्यासाच्चाक्षुषादिविषयाधिष्ठाने (न) रजतादेस्तादात्म्याध्यासाच्च रजतं पश्यामीत्यादिप्रत्यय इत्याशयेनाह—तस्मादित्यादि ॥

तर्कैः सारस्वतैः—अन्यथाख्यातिभञ्जनम् ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामन्यथाख्यातिभङ्गः ॥

---

1 जनकत्वा.

**निषेधप्रतीतिश्च न स्यादिति—चेन्न; उत्पादविनाशप्रतीतिरियं भ्रान्तिसमये आपाद्यते, बाधसमये वा। नाद्यः; पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव तत्र प्रतिबन्धकत्वात्, विरोधिज्ञानानुदयेन रूप्यस्याविनाशाच्च। न द्वितीयः; अत्यन्ताभावग्रहस्यैव प्रतियोगिग्रह इव तदुत्पादविनाशग्रहेऽपि प्रतिबन्धकत्वात्। न हि कुत्रापि कदाप्यत्यन्ताभावाधिकरणत्वेन प्रतीते उत्पादविनाशप्रतीतिरस्ति। न च—त्रयाणां सत्त्वे कथमत्यन्ताभावबुद्ध्या विनाशबुद्धिप्रतिबन्धः? विनाशबुद्ध्यैवात्यन्ताभावबुद्धिः किमिति न प्रतिबध्येत? नियामकाभावादिति—वाच्यम्; फलबलेनात्यन्ताभावधीसामग्र्या एव बलवत्त्वेन तस्यैव विनिगमकत्वात्। न च तद्व्युत्पादाद्यधिकरणे**

---

### अथाविद्यकरजतोत्पत्त्युपपत्तिः

**विनिगमकत्वात्।** ननु—समारोप्यधर्म उत्पादादिरारोपाधिष्ठाने प्रत्येतुमुचितमिति—चेन्न; यद्रूपविशिष्टस्यारोप्यता तस्यैवाधिष्ठाने धीः, उत्पादादिकं तु मिथ्यात्वादिकमिवावृतत्वान्न रूप्यादौ गृह्यते, अन्यथा त्वदभ्युपगतमसत्त्वं रूप्यादौ कुतो न गृह्यते? विचारदशायां तु प्रमाणवृत्त्योत्पादादिकं गृह्यत एव। एतेन—कपालादौ घटादेर्नाशकालेऽत्यन्ताभावस्येव नाशस्याप्यनुभवान्नाशबुद्धावत्यन्ताभावबुद्धेः[1] प्रतिबन्धकत्वं न क्लृप्तम्, अन्यथानुपपत्त्या भ्रमस्थल एव तत्कल्पनं तु न युक्तम्; अन्यथानुपपत्त्या भ्रमस्यासद्विषयकत्वं सदुपरागेणासतोऽपि प्रत्यक्षत्वमित्यस्यैव युक्तत्वादित्यादि—परास्तम्;

---

[1] नाशबुद्धावत्यन्ताभावस्येव नाशस्याप्यनुभवान्नाशबुद्धावत्यन्ताभावबुद्धेः – क. ग.

**अत्यन्ताभावः कथम्? प्रतीतिमुपलभस्व। यया अपरोक्षप्रतीत्या-द्यन्यथानुपपत्त्या सिद्धोत्पादादिकस्य त्रैकालिकनिषेधप्रतियो-योगित्वं विषयीक्रियते। यद्वा-न स्वरूपेण त्रैकालिकनिषेधप्रति-योगित्वम्, किं तु पारमार्थिकत्वाकारेण। न च-पारमार्थिकत्व-स्यापि प्रतिभाससमये प्रतीतत्वेन न त्रैकालिकनिषेधप्रतियोगित्वं संभवति, रजतप्रतियोगित्वेनानुभवविरोधश्चेति—वाच्यम्; प्र-तीतिकालप्रतीतं पारमार्थिकत्वमपि प्रातीतिकमेवेति न तन्नि-षिध्यते, किंत्वन्यत्र वृत्त्यैवेति तेनाकारेण रजतस्यैव निषेध**

---

सदुपरागेणासद्धानस्याप्यसंभवेन भ्रमविषयस्य प्रत्यक्षत्वायोग्यत्वादेराव-श्यकत्वेऽपि तद्ग्राहकसामग्र्यनवतारादेव तदग्रहात्। एवं चोक्तानव-तारकालीनाया अत्यन्ताभावबुद्धेर्नाशादिबुद्ध्यनुत्पत्तिव्याप्यत्वेन नाशा-दिबुद्धिप्रतिबन्धकत्वमुक्तम्, न तु दाहादौ मण्यादेरिव वास्तवं प्रति-बन्धकत्वम्। अत एव न हि कुत्रापीत्याद्यपि तदभिप्रायकमिति ध्येयम्॥

**अत्यन्ताभावः कथमिति।** अत्यन्ताभावस्य प्रतियोगिनेव ध्वंसप्रागभावाभ्यामपि सह नैककालावच्छेदेन सामानाधिकरण्य मित्यभिमानः। नोक्तार्थः प्रामाणिकः; प्रतीतिविरोधादित्याशयेन समाधत्ते—**प्रतीतिमिति**। पारमार्थिकत्वेन रूप्यं नास्तीत्याकारक-बाधस्य रूप्यनिषेधाविषयकत्वेन रूप्ये पारमार्थिकत्वनिषेधाविषयकत्वं वाच्यम्; तथाचासङ्गतिरित्याशङ्क्य निषेधति—**न च पारमार्थिक-त्वस्येति। अन्यत्रवृत्तीति।** अन्यत्रत्यव्ययम्; तेनान्यत्र वृत्तिर्यस्य तदित्यर्थः। उक्तधीविषय इति शेषः। तद्विषयत्वं न निषेध्यत्वेन; किंतु तदवच्छेदकत्वेनेत्याह — **तेनाकारेणेति**।

**इति न तत्प्रतियोगित्वेऽनुभवविरोधोऽपि । ननु—यद्यपि प्रसक्तिर्ज्ञानम्, सा च स्मृतिरूपा पारमार्थिकत्वस्यास्त्येव, तथापि निषेध्यताप्रयोजकपारमार्थिकत्वाकारेण प्रातिभासिकस्य प्रसक्तिर्नास्तीति—चेन्न; व्यधिकरणधर्मावच्छिन्नप्रतियोगिको ह्ययमभावः, तत्प्रतीतौ च न विशिष्टप्रसक्तिरुद्देश्या; प्रत्येकप्रसक्त्यैव तत्प्रतीत्युपपत्तेः । निर्विकल्पकादभावप्रतीतिरिष्टापत्त्यैव परिहरणीया । यद्वा — लौकिकपरमार्थरजतस्यैव तत्र त्रैकालिकनिषेधः । न च तर्हि 'नेह नाने'ति निषेधायापि तात्त्विकप्रपञ्चान्तरोररीकारापत्तिः; नेह नानेति निषेधस्थले किंचनेति पदसन्दंशात् प्रतीयमानसर्वनिषेधस्यावश्यकतया निषेध्यत्वेन प्रपञ्चान्तरकल्पनाया गौरवकरत्वात्, प्रकृते तु सर्वत्वेन प्रतियोग्यनुल्लेखादापणस्थरूप्यनिषेधस्य इदम्यावश्यक-**

---

**न विशिष्टप्रसक्तिरिति ।** यद्रूपविशिष्टस्य प्रतियोगित्वधीस्तद्रूपविशिष्टस्य प्रसक्तिरपेक्ष्यते, व्यधिकरणरूपविशिष्टस्य तु न प्रतियोगित्वधीरिति न तस्य प्रसक्त्यपेक्षेति भावः ॥

नन्वेवं—प्रतियोगिनि पारमार्थिकत्ववैशिष्ट्याभाने उक्ताभावबुद्धेर्विशिष्टवैशिष्ट्यधीत्वाभावात्पारमार्थिकत्वानिर्विकल्पोत्तरमप्युक्ताभावधीः स्यात्तत्राह—**निर्विकल्पकादिति । अभावप्रतीतिः ।** उक्ताभावधीः । **इष्टापत्त्येति ।** विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे मानाभावात्समानधिकरणरूपावच्छिन्नाभावधीरपि निर्विकल्पकोत्तरं स्वीक्रियते । तद्धेतुत्वस्य प्रामाणिकत्वे तु सैव तथा न स्वीक्रियते । उक्ताभावधियस्तथाऽस्वीकारे तु न किंचिन्मानमिति भावः । **प्रतीयमाननिषेधस्येति ।** निषेधाधिकरणे प्रतीयमानं यत्तन्निषेधस्येत्यर्थः ।

त्वेनाप्रतीतनिषेधकल्पनैव युक्ता । न चान्यथाख्यातिभिया तस्याप्रसक्तौ कथं तन्निषेधः? अपरोक्षत्वाभावेऽपि स्मृतिरूपतत्प्रसक्तेः संभवात् । एतेन—अधीस्थं पारमार्थिकत्वमवच्छेदकम्, अनवच्छेदकस्याभासस्य धीस्तु निषेधधीहेतुरिति—परास्तम् । न च—आरोपपूर्विकैव निषेधधीः, तस्यानारोपात्कथं तदभावप्रत्यय इति—वाच्यम्; आरोपस्य हेतुतायां मानाभावेन प्रतियोगिस्मरणाधिकरणानुभवादिनैव तदुपपत्तेः । अत एव न बुद्धिपूर्वकतदारोपोऽपि । अन्यथाख्यातेः सामग्र्यभावेनासत्ख्यातिवत् प्रागेव निरासादारोपस्य विशेषादर्शनजन्यत्वेन बुद्धिपूर्वकत्वानुपपत्तेश्च । किंचाभावप्रसक्तिरेव तत्प्रसक्तिः । ननु—(आभास इत्यप्रसक्ते) रजतत्वाकारेणाभासानाभासयोः प्रसक्तिर्वाच्या, सा चानुपपन्ना; उभयोरेकसामान्याभावात्, फलबलेन व्याप्तिग्रहे सामान्यस्य प्रत्यासत्तित्वेऽप्यन्यत्रातिप्रसङ्गेन तदभावाच्चेति—चेन्न; शुक्तिरूप्यस्यापणरूप्येण प्रातीतिकस्य सामान्यस्याभावे तदर्थिप्रवृत्त्यनुपपत्त्या तदुभयसामान्यस्यैकस्यावश्यकत्वात् । तेन सामान्येन प्रत्यासत्त्या आपणरूप्ये ज्ञानं न ब्रूमः, किंतु

---

**अप्रतीतनिषेधेति** । निषेधाधिकरणेऽप्रतीतस्य निषेधेत्यर्थः । **अधीस्थं**—प्रतियोगिप्रसक्तावप्रकारः । **अवच्छेदकं** निषेध्यतावच्छेदकम् । **अनवच्छेदकस्य**—निषेध्यतानवच्छेदकस्य । **आभासस्य** प्रातीतिकपारमार्थिकत्वस्य । **निषेधधीहेतुरिति** । इत्युक्तामिति[1] शेषः । **आरोपपूर्विका** निषेधाधिकरणे प्रतियोगिप्रसक्तिपूर्विका । **तत्प्रसक्तिः** लौकिकपरमार्थप्रसक्तिः । **अतिप्रसङ्गेन** सार्वज्ञ्यापत्त्या । **प्रातीतिकस्य** प्रतीतिप्रकारस्य । **सामान्यस्य** रजतत्वाद्येकजातीयत्वस्य । **तदर्थिप्रवृत्तिः**

---

[1] इत्ययुक्तामिति—क. ग.

**प्रतियोगितावच्छेदकप्रकारकं ज्ञानं प्रतियोग्यविषयकमप्यभावप्रतीत्युपयुक्तं संवृत्तमिति । अतो न सामान्यप्रत्यासत्तिनिबन्धनातिप्रसङ्गावकाशः । यत्तु व्याप्तिग्रहे सामान्यप्रत्यासत्तिमङ्गीकृत्यातिप्रसङ्गेनान्यत्र तदनङ्गीकरणम्, तदाशीविषमुखेऽङ्गुलिं निवेश्य वृश्चिकाद्भयनाटनम् । प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यादिति व्याप्तिग्रह एवातिप्रसङ्गस्य प्राचीनैरुक्तत्वात् । इदं च यथाश्रुतप्राचीनग्रन्थानुसारेणोक्तम् । अन्योन्याभावमादाय तु लौकिकपरमार्थरजतस्य निषेध्यत्वं प्राग्व्याख्यातं**

---

व्यावहारिकजातीयार्थिप्रवृत्तिः । **प्रतियोगितावच्छेदकप्रकारकं ज्ञानं** रूप्यत्वादिरूपेणाभासीभूतरूप्यादिप्रसक्तिः । **प्रतियोग्यविषयकं** लौकिकपरमार्थरूप्यादिरूपप्रतियोग्यविषयकम् । **प्राचीनग्रन्थेति** । लौकिकपरमार्थरजतनिषेध्यताबोधकतत्त्वप्रदीपिकादिवाक्येत्यर्थः । **व्याख्यातमिति** । इदं रूप्यमिति भ्रमे प्रातीतिकरूप्ये व्यावहारिकरूप्याभेदावगाहनेन नेदं रूप्यमिति बाधोऽपि तयोर्भेदमवगाहते ; समानविभक्तिकनामार्थयोः प्रतियोग्यनुयोगिभावे भेदस्यैव भानादित्यादि व्याख्यातम् । तथाचोभयोरेकजात्यभावेऽपि प्रातीतिके व्यावहारिकजातीयार्थिप्रवृत्तिरुपपद्यते, तत्र व्यावहारिकतादात्म्यारोपादिति भावः ॥

यत्तु—उभयानुगतसामान्यं प्रातीतिकं न वा. आद्ये व्यावहारिकस्य रूप्यत्वं व्यावहारिकं न स्यात्, द्वितीये प्रातीतिकस्य रूप्यत्वं व्यावहारिकं स्यात्, न चेष्टापत्तिः ; इदं रूप्यमिति धीविषयसामान्ये रूप्यत्वं नास्तीति बाधविरोधादिति—तन्न ; रूप्यप्रकारकभ्रमस्थले उक्तबाधस्यास्वीकारात्, स्वीकारे आधेयतासंबन्धेनोक्तविषयस्याभावो रूप्यत्वे भातीत्यदोषात् । ननु—व्यावहारिकस्य रूप्यत्वादेः प्रमाणवृत्तिं विना भानासंभवः, भ्रमस्थले तत्र तस्याः स्वीकारस्तु न संभ-

**न विस्मर्तव्यम्। न च सोपादानत्वे सकर्तृकत्वापत्तिः; इष्टापत्तेः। ननु—एवमपि रूप्यस्य कथमज्ञानमुपादानम्? तदनुविद्धतया अप्रतीतेः, इदमंशानुविद्धतया प्रतीतेरङ्गुलिनिर्देशाच्चेलाञ्चलबन्धनादितश्चेदमंश एव सत्यविकाराविरोधेन मिथ्याविकारात्मना विवर्तत इत्यङ्गीक्रियतामिति—चेन्न; शुक्त्यज्ञानस्य तावदन्वयव्यतिरेकाभ्यां कारणत्वमावश्यकमित्युपादानमपि तदेवास्तु; तत्कल्पनाया एवाभ्यर्हितत्वात्, उपादानान्तरासिद्धेः। किंच शुक्तिज्ञानमज्ञानं नाशयद्रूप्यमपि नाशयति। तच्च तदुपादानत्वं विना न घटते; निमित्तनाशस्य कार्यनाशं प्रत्यप्रयोजकत्वात्। उपादेये उपादानानुवेधनियमाभावात्। 'रूपं घटः' 'कपालं घट' इत्यप्रतीतेः, कथंचिदनुवेधस्य जडत्वा-**

---

वति; भ्रमोत्पत्ते पूर्वं सन्निकर्षाद्यसंभवादिति—चेन्न; मन्मते हि रूप्यत्वादिजातेर्व्यावहारिकव्यक्तिसंसृष्टतयैव प्रमाणवेद्यत्वनियमेन प्रातीतिकव्यक्तिससृष्टतया साक्षिमात्रवेद्यता। अथवा—रूप्यत्वादिरूपेण संस्कारस्य पूर्वं सत्त्वेन रूप्यत्वाद्यंशे स्मृतिरूपैव वृत्तिरिति ध्येयम्॥

**इष्टापत्तेरिति।** अधिष्ठानप्रकाशत्वेन हेतुत्वात्तद्रूत एव कर्तृत्वम्; कार्यानुकूलस्योपादानप्रकाशस्यैव हि लाघवेन कर्तृत्वरूपत्वम्, अनुकूलताविशेषोपादानान्नातिप्रसङ्गः. न तूपादानगोचरज्ञानेच्छाकृतिमत्त्वस्य; तथास्वीकारेपीश्वरे तदस्तीति भावः। **अभ्यर्हितत्वात्।** आश्रयत्वेनान्तरङ्गत्वात्। इदमंशस्य मनसो दोषस्य वोपादानत्वमित्यत्र विनिगमकाभावादुपादानत्वेनातिरिक्तमज्ञानं कल्प्यत इत्यादि पूर्वोक्तं स्मर्तव्यम्। **नाशयति** अत्यन्तमुच्छिनत्ति। **तदुपादानं** अज्ञानमुपादानम्। **कार्यनाशं** कार्यात्यन्तोच्छेदम्। तेन दोषादिनिमित्तनाशस्य भ्रमादिनाशप्रयोजकत्वेऽपि न क्षतिः। **कपालं घट इति।**

**दिनात्रापि संभवात् । अज्ञानावच्छेदकतया इदमंशे इदमंशा नुविद्धतया प्रतीतिरेव तदनुविद्धतया प्रतीतिः । कार्यकारण योरभेदादङ्गुलिनिर्देशादिकमप्युपपद्यते । न च—परोक्षज्ञानस्या प्यज्ञाननाशकतया श्वैत्यानुमित्या अज्ञाने नाशिते पीतभ्रमानु दयः स्यात्, उपादानाभावादिति—वाच्यम्; विषयगताज्ञा नस्य परोक्षवृत्त्याऽनाशात् । न चापरोक्षवृत्तेरज्ञाननाशकताया मपि 'घटोऽय'मिति साक्षात्कृते पटोऽयमिति वाक्याभासाद्भ्र मानुत्पत्तिप्रसङ्गः । न ह्यत्र 'वह्निना सिञ्चती'त्यत्रेवान्वयवि रोध्युपस्थितिरस्ति, येनेष्टापत्तिरवकाशमासादयेदिति—वाच्यम् यदा हि घटत्वं पटत्वविरुद्धतयाऽवगतम्, तदा हि तद्दर्शं विरोधिदर्शनमेवेति कथं नेष्टापत्त्यवकाशः? यदा घटत्वस्**

---

कपालं घटोपादानमित्यजानतो यथा कपालं घट इति न धीः, तथाऽ ज्ञानमुपादानमित्यजानतो रूप्यमज्ञानमिति न धीः । नचाज्ञाने साक्षि भास्ये तादात्म्येन रूप्यादेः सत्त्वात्तयोस्तादात्म्यं साक्षिणा गृह्यतामिति वाच्यम्; अननुभवबलेनैव तस्यावृतत्वकल्पनात्प्रमाणवृत्त्यैव तद्ग्रहा त्पुरोवर्तितादात्म्यस्याज्ञानतादात्म्याभावव्याप्यत्वेन गृहीतस्य ग्रहाल्लौ कानां तद्ग्रहासंभवाच्च । विचारकाले तु यद्रूप्यमभात्तदाविद्येति ग्रह स्त्विष्ट एवेति भावः । **अभेदादिति** । इदमः कारणीभूतचिदवच्छे दकत्वात्तत्रेति शेषः । **अनाशादिति** । ननु—श्वेतत्वाज्ञाने सति श्वेत शङ्खार्थिप्रवृत्तिर्न स्यादिति—चेन्न स्यादेव; न हि श्वेतत्वाप्रत्यक्षे श्वेत त्वप्रकारिका प्रवृत्तिः, किंतु शङ्खत्वादिप्रकारिका प्रवृत्तिः । यदि तत्र श्वेतत्वप्रकारिका प्रवृत्तिरिति सशपथं ब्रवीषि, तदासत्त्वापादक ज्ञानाभाव एव प्रवर्तकोऽस्तु । **पटत्वाविरुद्धतया** पटत्वाभावव्याप्यतया **तद्दर्शनं** इदंत्वविशिष्टं तद्दर्शनम् । **विरोधि** अयं पट इति भ्रमविरोधि

पटत्वविरुद्धतया न ज्ञानं तदा घटत्वज्ञानेन तदज्ञाननाशेऽपि पटत्वविरुद्धतया अज्ञातविशेषाज्ञानस्य सत्त्वात्तदुपादानक एव भ्रम इति न काप्यनुपपत्तिः । न च—साक्षिवेद्याज्ञानसुखादौ ज्ञानाभावत्वदुःखाभावत्वारोपौ न स्याताम्, अज्ञानरूपोपादानाभावादिति—वाच्यम्; दुःखाभावाभिन्नत्वेन ज्ञानाभावभिन्नत्वेन दुःखत्वविरुद्धधर्मवत्तयाऽज्ञानत्वविरुद्धधर्मतया वा अधिष्ठानज्ञानं भ्रमनिवर्तकम् । तच्च विरोधभेदादि न साक्षिगम्यम्, किंत्वनुपलब्धिगम्यम् । तथाच तदज्ञानमेव भ्रमोपादानम् । न च—परोक्षाध्यासो न परोक्षज्ञानेन निवर्तेत, तस्याज्ञानानिवर्तकत्वादिति वाच्यम्; परोक्षाध्यासे हि प्रमातृगताज्ञानमेवोपादानम् । तच्च परोक्षज्ञानेनापि निवर्तेत इत्युक्तत्वात् । न च—रूप्यं दृष्ट्वाऽधिष्ठानतत्त्वज्ञानं विना निवृत्तस्य पुंसोऽज्ञाननिवृत्त्यभावेन रूप्यतज्ज्ञानयोरविद्यापरिणामयोरनिवृत्त्या रूप्यधीसामग्रीसद्भावेन तद्धीर्दुर्वारैवेति—वाच्यम्; रूप्यं तद्धीश्चोत्पन्ने तावदुदीच्यज्ञानेन उपादाने विलीयेते । उपादानस्य निवृत्तिः परं न भवति; अधिष्ठानतत्त्वज्ञानाभावात् । रूप्यबुद्ध्यन्तरोत्पत्ति-

---

**दुःखत्वविरुद्धधर्मवत्तया** दुःखत्वघटितो यो दुःखाभावत्वविरुद्धो [1] दुःखाभावत्वाभावव्याप्यत्वेन गृहीतः सुखत्वादिरूपो धर्मस्तद्वत्तया । अथवा—दुःखत्वं दुःखहेतुत्वं तद्रूपो यो दुःखाभावत्वाभावव्याप्यतया गृहीतो धर्मः तद्वत्तया । **अज्ञानत्वविरुद्धधर्मवत्तया** ज्ञानाभावत्वाभावव्याप्यतया गृहीतं यदखण्डमज्ञानत्वं तद्वत्तया । **न साक्षिगम्यमिति** । [2] सविषयत्वाखण्डाज्ञानत्वादिनैव साक्षिभास्यमज्ञानं न तूक्तविरुद्धधर्मवत्त्वादिनेति भावः । **विलीयेते** संस्काररूपेण तिष्ठतः । संस्कारस्या-

[1] दुःखाभावव्याप्यत्वेन—**क. ग.** [2] सविषयकत्वा—**क. ग.**

स्त्विदमाकारान्तःकरणवृत्तिसद्भावेनानुत्पन्नाधिष्ठानतत्त्वसाक्षात्कारस्य भवत्येव । तदभावे तद्विलम्बादेव विलम्ब इति न काप्यनुपपत्तिः । तथाच सर्वप्रत्ययानां स्वगोचरशूरत्वात्प्रतीतिकाले रजतस्य विद्यमानता सिद्धा । न चैवं—तात्त्विकत्वमपि सिद्ध्येत्, तस्यापि प्रातीतिकत्वादिति—वाच्यम्; अपरोक्षप्रतीत्या तावत्त्रिकालाबाध्यत्वरूपं तात्त्विकत्वं विषयीकर्तुं न शक्यत इत्युक्तत्वात् । परोक्षप्रतीत्या विषयीकृतमपि तात्त्विकत्वं प्रातीतिकमेव; कालान्तरबाधेन पुनरतात्त्विकत्वस्य संभ-

---

योग्यत्वान्न साक्षिग्राह्यता । स्थूलावस्थारूपेण पुनरुत्पत्तिर्वक्ष्यमाणसामग्र्या नानुपपन्ना । एतेनविलयो यदि ध्वंसस्तदा पुनरुत्पत्तिर्न स्यात्, यदि तिरोधानं तदा रूप्यादौ तदसंभवः; पिशाचादेरेव तत्संभवादित्यपास्तम् । **स्वगोचरशूरत्वात्** बाधादिमानान्तराविरोधेन स्वविशेष्ये स्वविशेषणव्यवस्थापकत्वात् ॥

**प्रतीतिकाल इति** । ननु—प्रतीत्यभावकालेऽपि घटादिरिव शुक्तिरूप्यादिरपि वर्तताम्; घटादाविव तत्राप्यसञ्जातबाधे प्रतीत्यभावकालोत्तरं तदेवेदमिति प्रत्यभिज्ञानादिति—चेन्न; दोषादिशून्यपुरुषस्यापि संस्कारसहितसाक्षिणा प्रत्यभिज्ञापत्तेः । न च—दोषादिहेत्वभावेनाविद्यावृत्त्यभावान्नोक्तापत्तिरिति—वाच्यम्; आगन्तुकदोषादिकं विनापि स्मृत्यादिरूपाविद्यावृत्त्युत्पत्त्या रूप्यादावेव दोषादेर्हेतुत्वात्, रूप्यभ्रमोत्तरं रज्जुभ्रमकाले रूप्याग्रहणेन रूप्यनाशस्यावश्यकत्वाच्च । न च तत्र स्वरूप[1]गोचराविद्यावृत्तिरेवोत्तराविद्यावृत्त्या नश्यति, न तु रूप्यमिति—वाच्यम्; सुखदुःखादितदाकारवृत्तिरूपयोर्मनःपरिणामयोरुत्तरेण मनःपरिणामेनेव रूप्यतदाकारवृत्तिरूपयोरविद्यापरिणामयोरुत्तराविद्यापरिणा-

---

[1] स्वरूपागो—क. स्वरूप्य—ख.

वात् । तस्मादधिष्ठानांशेऽन्तःकरणवृत्तिः, अध्यस्तांशे चाविद्यावृत्तिः । तस्यां च तादात्म्यस्य भानान्नाख्यातिमतप्रवेशः ॥

इत्यानिर्वचनीयरजतोत्पत्त्युपपत्तिः ॥

---

## अथ भ्रमस्य वृत्तिद्वयोपपत्तिः

ननु—एवमिदमंशस्याप्यध्यस्तत्वेनेदमिति ज्ञानं त्र्यात्मकम्, इदं रूप्यमिति च त्र्यात्मकम्, स्वप्ने इदं रूप्यमिति ज्ञानं चतुरात्मकं च स्यादिति—चेन्न; इदंत्वस्याध्यस्तत्वेऽपि नेदमिति

---

मेन नाश्यत्वात्, एवं रूप्यादितद्भ्रमयोरबाधितयोरुत्तरेण मनःपरिणामेनापि नाशो लाघवात्; पल्लवाविद्यापरिणामत्वेनागन्तुकदोषप्रयुक्ताविद्यापरिणामत्वेन वोत्तरधीनाश्यत्वादित्युक्तत्वादिति । तथाचाधिष्ठानसद्रूपसंबन्ध एव गृह्यते, तत्तु तात्त्विकत्वाभावसाधकम्, यत्तु स्वकाले सत्ताग्राहकं कालत्रये मिथ्यात्वाभावमवश्यं गृह्णातीति तन्मानाभावादिना प्रत्युक्तम् । **तस्यां** मनोवृत्तौ । **तादात्म्यस्य**—अविद्यावृत्तितादात्म्यस्य ॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय रूप्याद्यज्ञानसंभवम् ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायामनिर्वचनीयरजतोत्पत्त्युपपत्तिः ॥

---

### अथ भ्रमस्य वृत्तिद्वयोपपत्तिः

**नन्वेवमिति** । एवं अध्यस्तस्य मनोवृत्तिविषयाधिष्ठानसापेक्षत्वे । **इदमंशस्य** इदंत्वस्य । **अध्यस्तत्वेन** संसृष्टरूपेणाध्यस्तत्वेन ।

**द्यात्मकम्; इदंत्वाद्यधिष्ठानस्य स्वप्रकाशत्वात्। न हि वयं सर्वत्राध्यासे द्यात्मकतां ब्रूमः, अपित्वन्तःकरणवृत्तिसव्यपेक्षाधिष्ठानप्रकाशे। अत एव नेदं रूप्यमिति त्र्यात्मकम्, स्वप्ने तु चतुरात्मकत्वशङ्का सर्वथानुपपन्ना; इदंरूप्ययोरप्यध्यसनीयत्वात्, अविद्यावच्छिन्नचैतन्यरूपाधिष्ठानस्य स्वप्रकाशत्वात्। न च रूप्यज्ञानस्याचाक्षुषत्वे 'रूप्यं पश्यामी' ति चाक्षुषत्वानुभवविरोधः; चाक्षुषेदंवृत्त्यवच्छिन्नचैतन्यस्थाविद्यापरिणामत्वेन चाक्षुषत्वोपचारात्, अनुभवत्वमात्रानुभव एव आत्मानं पश्यामीत्युल्लेखदर्शनाच्च। ननु—रूप्यज्ञानस्याविद्यावृत्तित्वेन प्रातिभासिकतया प्रतिभासावश्यंभावेनाध्यस्तविषयज्ञानस्य चाध्य-**

---

**इदंत्वाद्यधिष्ठानस्य**— संसृष्टेदंत्वं प्रत्याधारस्य रूप्यावच्छिन्नचैतन्यस्य। **स्वप्रकाशत्वात्** मनोवृत्तिविषयानात्मकत्वात्। **द्व्यात्मकतां** मनोवृत्त्याविद्यावृत्तिविषयाभ्यामाधारारोप्याभ्यां घटिताम्। **सव्यपेक्षाधिष्ठानप्रकाशे** सव्यपेक्षोऽधिष्ठानप्रकाशो यस्य तादृशभ्रमे। यत्रादौ रूप्यभ्रमः पश्चात्तत्र चैत्रीयत्वादिभ्रमः तत्र रूप्यं चैत्रीयमिति द्यात्मकत्वेऽपि यत्र युगपत्तादृशभ्रमस्तत्रैकैव अविद्यावृतिरिति न द्व्यात्मकं ज्ञानम्। मनोवृत्तिरूपाधिष्ठानधीजन्यभ्रमे तु वृत्तिद्व्यात्मकत्वमावश्यकमिति भावः। **स्वप्ने तु चतुरिति**। यत्रादाविदमिति शुक्तिधीः पश्चात्तत्र रूप्यमिति धीः, तादृशस्वप्ने वृत्तिद्व्यात्मकम्। यत्र तु युगपदिदं रूप्यं चाध्यस्तं तत्र स्वप्ने तदुभयगोचरैकैव वृत्तिः, अविद्यावच्छिन्नचिद्रूपाधिष्ठानगोचराप्यविद्यावृत्तिरन्या, तथाच पूर्वस्थले त्र्यात्मकं ज्ञानम्, द्वितीयस्थले तु द्व्यात्मकम्, चतुरात्मकत्वं त्विदं रूप्यमित्यादिस्वप्नस्य न संभवतीति भावः। **स्वप्रकाशत्वात्** पूर्वजाताविद्यावृत्तिविषयत्वात्॥

स्तत्वनियमेनाविद्यावृत्तेरप्यविद्यावृत्तिप्रतिबिम्बितचैतन्यवेद्यत्वम्, एवं तस्यापि तस्यापीत्यनवस्थितिरिति–चेत्,सत्यमेतत्। न पुनरन-

---

यत्तु—इदमंशाधिष्ठानस्य प्रकाशः स्वतः, इदमंशावच्छिन्नस्य तु वृत्तिकृत इति द्व्यात्मकता स्पष्टा। एवं स्वप्ने इदमंशस्याबाधेन तदंशे वृत्तिरुत्कृष्टा, रूप्यस्य तु बाधेन तदंशे वृत्तिरपकृष्टा, चिन्मात्रे स्वयंप्रकाशोऽविद्यावच्छिन्नचिति चाविद्यावृत्तिरिति चतुरात्मकता स्पष्टेति-तत्तुच्छम्; स्वप्रकाशचितमादाय द्व्यात्मकतादेरिष्टत्वात्। आचार्य-दूष्यप्रकृतग्रन्थे हीदं रूप्यमिति ज्ञानं त्र्यात्मकम्, स्वप्ने तच्चतुरात्मकं स्यादित्युक्तम्। तत्र स्वप्रकाशचितमादाय स्वप्ने [1]चतुरात्मकत्वमापद्येत। तस्मादाधारारोप्ययोर्वृत्तिद्वयाङ्गीकारे इदमित्यत्रैव तयोर्वृत्तिद्वयापादनं तत्राभिप्रेतम्, तच्च न संभवति; इदं[2]रूपारोप्यस्य रजतावच्छिन्न-चिद्रूपाधारस्य चैकस्यामविद्यावृत्तौ विषयत्वात्। न च रजतभ्रमं प्रतदिंज्ञानस्येवेदंत्वभ्रमं प्रति रजतज्ञानस्यापि हेतुत्वादविद्यावृत्तिद्वय-मावश्यकामिति—वाच्यम्; न ह्यारोपे आधारावच्छेदकसामान्यज्ञानं हेतुः, पूर्वं रजतज्ञानं विनापीदं रजतमिति भ्रमोदयात्, किंत्वारोप-हेत्वविद्याविषयावच्छेदकस्य सामान्यरूपेण ज्ञानम्; विशेषरूपेणैव तस्यावृतत्वात्, इदंत्वारोपं प्रतीव रजतं नोक्तविषयावच्छेदकम्। तस्मादिदंत्वसंसर्गरजतयोरेकस्यामविद्यावृत्तौ इदमाकारमनोवृत्तिर्हेतुरितीदं रजतमिति भ्रमे द्व्याकारे त्र्याकारत्वापादनं मौढ्यादेव। स्वप्ने उत्कृष्टा-पकृष्टवृत्तिद्वयोक्तिरपि तथैव; स्वप्नदृष्टं सर्वमिदमादि मिथ्येति पश्चा-द्बाधेनाबाधितविषयकत्वरूपोत्कर्षासंभवात्। तथाच तत्रैकैवाविद्या-वृत्तिरिदंरूप्योभयविषयकेति ध्येयम्॥

---

[1] स्वप्ने चतुरात्मकत्वस्याभिप्रेतत्वे इदं रूप्यमिति जाग्रति ज्ञानेऽपि चतु–क. ग. [2] इदंत्व- क. ग.

**वस्था; अविद्यावृत्तिप्रातिभासके चैतन्येऽविद्यावृत्तेः स्वत एवो-पाधित्वेन वृत्त्यन्तरानपेक्षत्वात्। ननु—अज्ञानस्य रूप्याकार-ज्ञानात्मना परिणामे रूप्यमिति प्रतीतेर्ज्ञानगताकारेणैवोपपत्ता-वतीतविषयकज्ञानन्यायेन वोपपत्तौ रूप्यरूपाविद्यापरिणाम-कल्पना न युक्तेति—चेन्न; ज्ञानाकारेणैव मविषयकत्वे साकार-वादप्रसङ्गात्। अतीतविषयवदुपपादनेऽप्यपरोक्षत्वानुपपत्तेरुक्त-त्वात्। न च—दोषाणां स्वाश्रय एवातिशयहेतुत्वेन चक्षुर्गत-दोषजन्यो भ्रमः कथमचाक्षुषः स्यात्? अन्यथा त्वचा गृहीते शङ्खे चक्षुषा गृहीते रूप्यसादृश्ये च निमीलितचक्षुषोऽपि पीत-**

---

**प्रतिभासके चैतन्य इति।** चैतन्यमेव प्रतिभासकं वृत्तिस्तु विद्यमाना सती तद्व्यावर्तिकेत्युपाधिः। तथा च स्वोपहितचितापि वृत्तेर्भास्यत्वसंभवान्न वृत्त्यन्तरापेक्षेति भावः।

यत्तु—वृत्तेः प्रातितिकसत्त्वात्स्वोपहितप्रतीतौ सत्यां सत्त्वम्, सत्त्वे चोपाधित्वमित्यन्योन्याश्रय इति तच्छोभते? न ह्युपाधित्वसिद्धि-सापेक्षं सत्त्वं भ्रमः; येनोपाधित्वसत्त्वेऽन्योन्यमाश्रयतः[1]। किन्तु यया वृत्त्या संबद्धा चिद्भासिका तस्या विद्यमानत्वे सति व्यावर्त-कत्वरूपमुपाधिकत्वमिति। **उक्तत्वादिति।** अपरोक्षत्वं न ज्ञानगतोऽ-खण्डाविशेषः; साकारवादापत्तेः, अनावृतचित्संबन्धस्यैव सुखादाव-परोक्षत्वरूपतया क्लृप्तत्वात्। अन्यथा विलक्षणवृत्तिविषयत्वस्य सुखादौ कल्पने गौरवादुक्तसंबन्धेनैवोपपत्तौ ज्ञानगतापरोक्षत्वरूपाखण्डधर्मे माना-भावादित्याद्युक्तमिति भावः। **स्वाश्रये** स्वाश्रयजन्ये। **अतिशय-हेतुत्वेन** भ्रमत्वादिरूपातिशयप्रयोजकत्वेन। **त्वचा गृहीते शङ्खे इत्यादि।** त्वचा गृहीते शङ्खे शङ्खः पीत इति भ्रमस्यापत्तेश्चक्षुषा

---

[1] माश्रयः—ग.

भ्रमरूप्यभ्रमयोरापत्तेरिति—वाच्यम्; दोषाणां स्वाश्रय एवातिशयजनकत्वमित्यस्यैवासिद्धेर्नियामकाभावात् । न चोक्तातिप्रसङ्गो नियामकः; स्वसंबन्धिनि कार्यजनकत्वाङ्गीकारेणानतिप्रसङ्गात् । संबन्धश्च स्वाश्रयजन्यज्ञानविषयत्वरूपः । स च न तदेति संस्कारविषयग्राहीन्द्रियजन्याधिष्ठानज्ञानस्यापरोक्षभ्रमहेतुत्वात्त्वचा गृहीते तदभावात् सादृश्यं गृहीत्वा चक्षुर्निमीलनस्थले इदंवृत्तिसद्भावे प्रमाणाभावेन नातिप्रसङ्गापादनं शक्यम् । तत्सत्त्वे इष्टापत्तिरेव । नन्वेवं—वृत्तिभेदे ज्ञानैक्यानुभवविरोधः, नचाध्यस्तेनाभेदेन विषययोरेकतापन्नत्वाज्ज्ञानयो-

---

गृहीते सादृश्ये इदं रूप्यमिति भ्रमस्य निमीलितचक्षुष्के आपत्तेश्चेत्यर्थः । रूप्यसादृश्यचाक्षुषस्य जनकतासंबन्धेन संयोगसंबन्धेन वाऽऽश्रयश्चक्षुः । तदजन्येऽपि ज्ञाने भ्रमत्वमुक्तचाक्षुषप्रयोज्यं स्यादिति भावः । **नियामकाभावादिति**। यथानुभवं कार्यजनकत्वं कल्प्यत इति भावः । **स च न तदेति**। पित्तदोषाश्रयचक्षुर्जन्यज्ञानविशेष्यत्वसंबन्धश्च त्वङ्मात्रेण शङ्खग्रहणकाले नास्तीत्यर्थः । ननु—धर्मीन्द्रियसन्निकर्ष एवेन्द्रियभ्रमहेतुः; अन्यथा शङ्खादौ रूपाद्यविषयकचाक्षुषाद्यसंभवात्, श्वेतरूपादेश्च पीतत्वादिभ्रमस्थले ग्रहणाभावात्, पीतत्वादिभ्रमपूर्वं शङ्खादिचाक्षुषाद्यसंभवात्, न च पीतरूपशङ्खयोर्वैशिष्ट्यमगृह्णत्तदुभयविषयकचाक्षुषं भ्रमपूर्वं जायताम्; अत एव द्रव्यत्व[1]रूपाणां निर्विकल्पकं तार्किकादिसंमतमिति—वाच्यम्; तावतापि नियमेन भ्रमपूर्वमुक्तचाक्षुषोत्पत्तौ मानाभावात्, युगपदेव तादृशचाक्षुषभ्रमयोः संभवात्, तथा च स्वाश्रयजन्यज्ञानविषयतासंबन्धेन दोषस्य हेतुत्वसंभवस्तत्राह—**संस्कारविषयग्राहीति** । संस्कारहेत्वनुभवजनकेत्यर्थः । **भ्रमहेतुत्वात्** भ्रमव्यवहारप्रयोजकत्वात् ।

[1] द्रव्यरूपत्व—क. ग.

रैक्यमुपचर्यत इति—वाच्यम्; एवमेकत्वप्रतिपादकप्रयोगसमर्थनेऽप्यनुभवविरोधस्यापरिहारादिति—चेन्न; विषययोरभेदाध्यासे ज्ञानयोरप्यभेदाध्यास इत्यस्योपचारशब्दार्थत्वेनानुभवविरोधाभावात्। न च—तर्हि धारावाहिकज्ञानेष्वैक्याध्यासापत्तिः, विषयैक्यज्ञानस्यारोपनिदानस्य सत्त्वादिति—वाच्यम्; आरोपस्य कारणानापाद्यत्वात्। न च विषयैक्यस्य ज्ञानैक्याध्यासनिमित्तत्वं न दृष्टमिति—वाच्यम्; पूर्वोक्तयुक्त्या ज्ञानभेदे सिद्धेऽपूर्वकल्पनायामपि दोषाभावात्। यद्वा—यथेदमंशावच्छिन्नचैतन्यगताविद्यापरिणामत्वाद्रूप्यमिदंत्वेन भाति, तथेदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यगताविद्यापरिणामत्वेन रूप्यज्ञानमिदंज्ञानत्वेन भाति। न च तर्हि बाधकाद्विषययोरिव ज्ञानयोरपि भेदधीप्रसङ्गः; विषयभेदग्रहज्ञानभेदग्रहयोर्भिन्नसामग्रीकत्वेनापादनस्याशक्यत्वात्। केचित्तु—भ्रम-

---

परोक्षभ्रमे इन्द्रियजन्याधिष्ठानज्ञानस्यानियमादपरोक्षभ्रमेत्युक्तम्। **कारणानापाद्यत्वादिति**। यज्जातीयं कारणं यज्जातीयारोपे क्वचिद्दृष्टं तज्जातीयात्सर्वस्मात्तज्जातीयस्यानापाद्यत्वादित्यर्थः। फलबलाद्दोषाणां विशिष्यैव हेतुत्वमिति भावः। **अशक्यत्वादिति**। ननु—कदाचिज्ज्ञानयोरपि भेदो गृह्येत; सर्वदा तत्र सामग्र्यभावस्य वक्तुमशक्यत्वादिति—चेत्, गृह्यत एव ज्ञानयोः कार्यकारणत्वादिविचारकाले भेदः; तयोः कार्यकारणत्वानङ्गीकारपक्षे तु मनोऽविद्ययोरेकवृत्तिरूपः परिणामश्चाक्षुषस्मृतिरूपः सुरभि चन्दनमित्याकारपरिणाम इव चाक्षुषानुमितिरूपः पर्वतो वह्निमानित्यादिपरिणाम इव चेत्यपि वक्तुं शक्यते। न चैवं—रूप्यादेरपि चाक्षुषविषयत्वे सन्निकर्षकारणत्वादौ व्यभिचार इति—वाच्यम्; विषयतासंबन्धेन चाक्षुषत्वावच्छिन्नाधि-

काले विषयैक्यग्रहनियमवन्न ज्ञानैक्यग्रहनियमः; तं विनापि प्रवृत्त्याद्युपपत्तेः, तथाच बाधकाले न तदैक्यग्रहनियमोऽपीति— आहुः । न च—इदंवृत्तेर्ज्ञातैकसत्त्वेन तदवच्छिन्नचैतन्यगताज्ञानमेव नास्तीति—वाच्यम्; वृत्तेः साक्षिवेद्यत्वेन यद्यपि तद्गोचराज्ञानं नास्ति; तथापि तदवच्छिन्नचैतन्ये शुक्त्यवच्छिन्नगोचराज्ञानसत्त्वात् । तथाचेदंवृत्तिराश्रयावच्छेदिका न तु विषयावच्छेदिकेति वस्तुस्थितिः । अत एव—शुक्तितत्त्वं जानत इदंवृत्तितत्त्वं चाजानतो रूप्यनिवृत्तावपि तदज्ञानानुवृत्तिप्रसङ्ग इति—निरस्तम्; शुक्तितत्त्वा-

---

करणताया रूप्यादावनङ्गीकारात्, अन्यथा सौरभादावपि व्यभिचारापत्तेः। अत एव मणिकृताप्युक्तम्—'प्राभाकरस्तु मितिमात्रांशे सर्वं ज्ञानं साक्षात्कार' इति । **न ज्ञानैक्यग्रहनियम इति** । यथा निदाघदूनदेहस्य गङ्गाह्रदसर्वाङ्गीणमज्जने तत्तदवयवावच्छिन्नसुखानां समानजातीयानां समकालीनानां न भेदग्रहः, तथा प्रकृतेऽपीति भावः । **नियमोऽपीति** । अर्थतत्त्वव्यवस्थापकोऽपि बाधो भ्रमज्ञाने ययोरैक्यमारोपितं भाति, तयोर्भेदमवगाहते । ज्ञानयोरैक्यस्य भ्रमाविषयत्वे तु तयोर्भेदं नावगाहते । वस्तुतोऽर्थतत्त्वव्यवस्थापकत्वं भ्रममूलाज्ञानविषयविषयकत्वं न तु यावदुक्तविषयविषयकत्वम्; आंशिकबाधे तदभावात् । न वा भ्रमे ययोरैक्यारोपस्तयोर्भेदाविषयकत्वम्; तत एव । तथाच भ्रमस्य ज्ञानयोरैक्याविषयकत्वेऽपि न क्षतिरिति ध्येयम् ॥

नन्विदं वृत्तेर्ज्ञातैकसत्त्वेऽपि तस्यां रजताकारवृत्तिभेदस्याज्ञातत्वात्तदज्ञानमेव रजतज्ञानोपादानमित्येव कुतो न सिद्धान्त्यते? तत्राह—**अत एवेति** । **इदं वृत्तितत्त्वं** इदंवृत्तौ रूप्यवृत्तेर्भेदम् । **तदज्ञानानुवृत्तीति** । उक्तभेदाज्ञानानुवृत्तीत्यर्थः । तदनुवृत्तौ च रूप्यज्ञानस्याप्यनु-

**ज्ञानस्यैवोभयपरिणामित्वात्, इदमंशस्तदाकारवृत्तिश्चैतद्द्वयमाश्रयमात्रावच्छेदकमित्युक्तत्वात्। न चैवमप्यबाधितज्ञानैक्यानुभवविरोधः; अध्यस्तेन सहेन्द्रियासंप्रयोगस्यैव बाधकत्वात्। न च सन्निकर्षः प्रमासामग्री; करणानां प्राप्यकारित्वनियमेन**

---

वृत्त्यापत्तिरिति भावः। वस्तुत उपादानीभूतोक्ताज्ञानानुच्छेदेन रजतज्ञानस्यानुच्छेदेऽप्युत्तरज्ञानेन निवृत्तिसंभवादनिवृत्तावपि सुखादेर्नाशे तद्भासकचित्सत्त्वे सुखं साक्षात्करोमीत्यस्यैव रूप्यनाशे तज्ज्ञानसत्त्वेऽपि रूप्यं साक्षात्करोमीत्यस्य व्यवहारस्यासंभवान्नानुपपत्तिः; परं तु एकस्यैवाज्ञानस्य रूप्यतज्ज्ञानोपादानत्वे लाघवात्तदेव युक्तमिति ध्येयम्। **आश्रयमात्रावच्छेदकमिति**। इदं रूप्यमिदं[1] रूप्यज्ञानमिति द्व्याकारानुभवादज्ञानमूलकभ्रमविशेष्यतावच्छेदकरूपावच्छिन्नस्यैवाज्ञानाधारावच्छेदकरूपत्वादेकस्याज्ञानस्य द्वयमाश्रयतावच्छेदकम्। यदवच्छिन्नां हि चितमज्ञानमाश्रयति तदवच्छिन्नां तां तत्परिमाणोऽपि, तदाश्रयतावच्छेदकमेव तदंशे विशेष्यतावच्छेदकम्। अथैवं—इदं ज्ञानं रूप्यमित्यपि भ्रमाकारः स्यादिति—चेन्न; इदं ज्ञानं न रूप्यमिति बाधसत्त्वात्समानविषयकसंस्काररूपस्य हेतोरभावात् इदमादिनिष्ठप्रत्यासत्त्या दोषविशेषाणां रूप्यादिहेतुत्वादिदमादावेव रूप्याद्युत्पत्त्या इदं ज्ञाने तदापत्त्यसंभवात्। तादात्म्यसंबन्धेनाविद्यापरिणामरूपं ज्ञानं प्रत्यविद्याविषयविषयकज्ञानत्वेन तादात्म्येन हेतुत्वादुक्तज्ञानरूपे इदं ज्ञान एव तादात्म्येन रूप्यादिज्ञानोत्पादः। **असंप्रयोगस्य** असंयोगप्रतिसंधानस्य। अध्यस्तम्, इन्द्रियजन्यज्ञानाविषयः, इन्द्रियासन्निकृष्टत्वादित्याद्यनुमानं बाधकमिति भावः।

[1] इदं रूप्यमिदं ज्ञानं-क ग.

सन्निकर्षस्यापि सामान्यसामग्रीत्वात् । न हि दृष्टा छिदा दारुवियुक्तकुठारेणेत्यन्यत्र विस्तरः । यत्तु—शुक्तिरेव विवर्ताधिष्ठानमस्तु, न चैतन्यमिति—तन्न; अधिष्ठानस्य भ्रमजनकाज्ञानविषयत्वेन तदकल्पिततया सत्यत्वानियमात्, शुक्तेश्च मिथ्यात्वात् । यद्वा—अविद्यावृत्तेर्न ज्ञानत्वम्, अतो ज्ञानैक्यधीः; ज्ञानत्वस्याज्ञाननिवर्तकमात्रवृत्तित्वात् । न चैवं धारावाहनस्थले द्वितीयादिज्ञाने ज्ञानत्वं न स्यादिति—वाच्यम्; तस्यापि तत्तत्कालविशिष्टग्राहकत्वेनागृहीतग्राहकतयाऽज्ञाननिवर्तकत्वात् । वस्तुतस्तु—यावन्ति ज्ञानानि तावन्त्यज्ञानानीति व्यवहितज्ञानेनैवाव्यवहितज्ञानेनाप्यज्ञाननिवर्तनादिति न काप्यनुपपत्तिः। परोक्षस्थलेऽपि प्रमातृगताज्ञाननिवृत्तिरस्त्येवेति तत्र जानामीति

---

**सामान्यसामाग्रीत्वात्** ज्ञानसामान्यसामग्रीत्वात् । **तदकल्पिततया** अज्ञानाप्रयुक्ततया । **नियमादिति** । वस्तुतः शुक्त्यादेस्तूलाज्ञानविषयत्वेऽपि न परोक्तदूषणावकाशः । अनादौ परमते विषयत्वस्येव मन्मते विषयित्वस्यापि कादाचित्कस्य संभवादिति ध्येयम् । **मिथ्यात्वादिति** । शुक्त्यवच्छिन्नचिद्रूपं तु यद्यपि मिथ्या, तथापि नाज्ञानविषयः; चिन्मात्रनिष्ठायामज्ञानविषयतायां शुक्त्यादेरुपाधित्वात् । न च—व्यावर्त्यविषयताकालाव्यापकत्वमुपाधित्वे विघटकमिति—वाच्यम्, व्यावृत्तिधीकालव्यापकत्वस्यैवोपाधित्वे तन्त्रत्वात् । **न काप्यनुपपत्तिरीति** । वस्तुतोऽज्ञाननिवृत्तिस्वरूपयोग्यत्वं प्रमात्व[1]पर्यवसितम् । अत एवेदमाकारवृत्तेरज्ञानानिवर्तकत्वेऽपि न क्षतिरिति ध्येयम् । **परोक्षस्थले** परोक्षभ्रमकारणादधिष्ठानसामान्यज्ञानात् । **निवृत्तिः** नाशं प्रति स्वरूपयोग्यता । तेनेदमाकारवृत्तेरज्ञाननिवृत्त्यनुपधायकत्वेऽपि

[1] योग्यत्वं ज्ञानत्वं प्रमात्व-क. ग.

प्रत्ययः । तेन सहाभेदग्रहात्परोक्षभ्रमेऽपि जानामीति प्रत्ययः । न च विवरणेऽन्तःकरणपरिणामे ज्ञानत्वोपचारादिदंवृत्तेरपि ज्ञानत्वोक्तौ विवरणविरोधः ; तस्य प्रकाशत्वनिबन्धनज्ञानपदप्रयोगविषयत्वमित्येतत्परत्वात्, न त्वज्ञाननिवर्तकत्वनिबन्धनज्ञानपदप्रयोगोऽप्यौपचारिक इति तस्यार्थः । तथाचाविद्यावृत्तौ यत्र ज्ञानपदप्रयोगस्तत्रौपचारिक एव । न च—अविद्यावृत्तेरज्ञानत्वेन ज्ञानस्यौत्सर्गिकं प्रामाण्यमिति विरुध्येत, निरपवादनियमस्यैव संभवादिति वाच्यम्; इच्छाजनकवृत्तिमात्रस्य ज्ञानत्वमभिप्रेत्योत्सर्गत्वोक्तेः । यद्वा — वृत्तिभेदेऽपीदंरूप्ययोरिदमंशावच्छिन्नचैतन्यप्रकाश्यत्वेन फलैक्याज्ज्ञानैक्यधीः । न च—परोक्षभ्रमेऽपरोक्षैकरसचैतन्यरूपफलैक्याभावात्कथं तन्निबन्धनज्ञानै-

---

न क्षतिः । **तेन सह**—तादृशज्ञानेन सह । भ्रमेऽपीत्यपिशब्दादपरोक्षभ्रमेऽप्यधिष्ठानसामान्यज्ञानाभेदग्रहाज्जानामीति धीरिति सूचितम् । इत्थं च भ्रमे ज्ञानत्वानङ्गीकारो विचारदशायामपि ज्ञानैक्यबुद्ध्युपपादनायेति बोध्यम् । **प्रकाशत्वेति** । असत्त्वापादकाज्ञानशून्यचिद्रूपत्वेत्यर्थः । **प्रयोगविषयत्वमिति** । औपचारिकमिति शेषः । **अज्ञानत्वेन** ज्ञानान्यत्वेन । **इच्छाजनकेति** । सुखादावपि वृत्तिमङ्गीकृत्येदमुक्तम् । तत्र तदनङ्गीकारे त्वसत्त्वापादकाज्ञानविषयतावच्छेदकत्वस्यैवेच्छाविषयताप्रयोजकत्वान्नाविद्यावृत्तेरिच्छाप्रयोजकत्वम् । परंतु ज्ञानस्यौत्सर्गिकमित्यादौ ज्ञानपदमुक्तानवच्छेदकत्वाश्रयविषयक[1]चित्परमिति ध्येयम् । **फलैक्यादिति** । आवरणनाशरूपफलविशिष्टत्वेनेदमंशावच्छिन्नचिदेव फलं न तु रूप्यावच्छिन्ना । तथाचोक्तफलस्यैक्यात्तदवच्छिन्नयोर्वृत्तिज्ञानयोरैक्यव्यवहार इति भावः ॥

---

[1] विषयकं—**क. ग.**

**क्यानुभव इति—वाच्यम्; तत्र फलैक्यमप्युपचर्य ज्ञानैक्योपचार इत्येव विशेषात्। ननु—त्वन्मते यथाक्रममिदंरूप्याकारान्तःकरणवृत्त्यविद्यावृत्तिप्रतिबिम्बिताभ्यां वा, तदभिव्यक्ताभ्यां वा, इदमंशावच्छिन्नतदनवच्छिन्नाभ्यामिदमंशरूप्याधिष्ठानचैतन्याभ्यां वा, वेद्यत्वेनावच्छिन्नफलस्य भेदात्कथं फलैक्यम्? अनवच्छिन्नफलीभूतचिन्मात्राभेदस्य सर्वत्र समानत्वात्। न हीदमंशेऽपि तदवच्छिन्नमेव चैतन्यमुपादानम्; आत्माश्रयात्। न वा रूप्ये इदमंशानवच्छिन्नमुपादानम्; इदं रूप्यमिति प्रतीत्यनुपपत्तेरिति—चेन्न; अविद्यावृत्तिस्तावन्नाज्ञाननाशिका, किंत्वन्तःकरणवृत्तिरिदमाकारा। तथाच तदभिव्यक्तचैतन्यमेव रूप्यमभिव्यनक्तीति फलैक्यसंभवात्। न ह्यवच्छेदकभेदेन फलभेदः, किंतु व्यञ्जकभेदेन। तथाच परमार्थसच्चैतन्यमधिष्ठानमध्यस्तज्ञानस्य। तच्च द्विविधं व्यावहारिकसत्प्रातिभासिक-**

---

**तदभिव्यक्ताभ्यां** वृत्तिकृतावरणनाशविशिष्टाभ्याम्। वृत्तेश्चिदुपरागार्थत्वे प्रथमः पक्षः। आवरणनाशार्थत्वे तु द्वितीयः पक्षः। अथ—मनोऽवच्छिन्नचितो जीवत्वपक्षे विषयचैतन्यमनावृतमेव; जीवस्य विषयचैतन्येनाभेदानभिव्यक्तयैव वृत्त्यभावकाले विषयाद्रष्टृत्वात्, तत्पक्षमाश्रित्याह—**इदमंशेति**। **चैतन्याभ्यामिति**। इदमंशरूप्याकारवृत्तिकृतप्रमात्रभेदापन्नाभ्यामिति शेषः। दूष्यग्रन्थे यद्यपि मध्यमो वाकारो नास्ति, तथापि पक्षत्रयसंभवात्स उक्तः। **अभिव्यनक्तीति**। इदमंशेऽज्ञानास्वीकारपक्षेऽपीदमाकारवृत्तेर्द्रव्यत्वाद्याकारकत्वसंभवेन द्रव्यत्वादिविशिष्टांशेऽज्ञाननाशकत्वं बोध्यम्। **व्यञ्जकभेदेन** अज्ञाननाशकवृत्तिभेदेन। मनोवृत्तिभेदे तत्कृतस्याज्ञाननाशस्यापि भेदात्तद्विशिष्टाचिद्रूपफलभेद इति भावः। **तच्च** अध्यस्तं च॥

सच्चेति । तदुक्तम्–'प्राग्व्यावहारिकसत्त्वविषयत्वात्प्रत्यक्षं नागमबाधक'मिति । परमार्थसत्त्वमादाय त्रिविधं सत्त्वम् ॥

इत्यद्वैतसिद्धौ भ्रमस्य वृत्तिद्वयोपपत्तिः ॥

---

## अथ सत्तात्रैविध्योपपत्तिः

ननु–एवं सत्त्वत्रैविध्यविभागो नोपपद्यते, प्रातिभासिकादप्यपकृष्टस्य स्वाप्नरूप्यस्य व्यावहारिकादप्युत्कृष्टाया अविद्यानिवृत्तेः सद्भावादिति चेन्न; स्वाप्ने प्रातिभासिकनिकृष्टत्वे प्रमाणाभावात् । तथाहि—प्रातिभासिकत्वं हि प्रतिभासमात्रसत्त्वम्, तच्च स्वप्नजागरयोः समानम् । ननु—जागरेऽधिष्ठानतावच्छेदकेदमंशस्याधिकसत्ताकत्वम्, स्वप्नकाले तस्यापि प्रातिभासिकत्वमित्येव निकृष्टत्वमिति—चेन्न; स्वप्ने हीदमो नाधिष्ठानतावच्छेदकत्वम्, तुल्यवदारोप्यत्वात् । तत्राधिष्ठानमविद्या-

---

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय भ्रमे वृत्तिद्वयं मतम् ॥

इत्यद्वैतसिद्धिव्याख्यायां गुरुचन्द्रिकायां भ्रमस्य वृत्तिद्वयोपपत्तिः ॥

---

## अथ सत्तात्रैविध्योपपत्तिः

आरोप्यत्वादिति । यत्तु—स्वाप्नेदमंशस्याधिष्ठानतानव[1]च्छेदकत्वेऽपि बाध्यत्वाभावाद्बाध्यरूप्यादुत्कृष्टत्वमिति प्रकृते विवक्षितमिति—

[1] नताव–क. ग.

**वच्छिन्नमेव चैतन्यमिति वक्ष्यते । अविद्यानिवृत्तेः पञ्चमप्रकारतापक्षे संसारकालीनसत्त्वस्यैवायं विभाग इति न न्यूनता। यद्वा—अविद्यानिवृत्तेः सत्त्वाभावेन सत्त्वविभागे न तदसङ्ग्रहनिबन्धनो दोषः। वस्तुतस्तु—अविद्यानिवृत्तिर्ब्रह्मस्वरूपा अनिर्वचनीया वेति न विभागन्यूनता । न च—विभागस्य तात्त्विकत्वेऽपसिद्धान्तः, अतात्त्विकत्वे त्रिविधत्वं गतमेवेति—वाच्यम्; ब्रह्मातिरिक्तमतात्त्विकमिति वदतो विभागातात्त्विकत्वस्येष्टत्वात्। न च तर्हि तात्त्विकत्रैविध्यहानिः; को हि त्रैविध्यस्य तात्त्विकत्वं ब्रवीति? किंतु व्यावहारिकत्वमेव। न च**

---

तत्तुच्छम्; जाग्रत्कालेऽपि शुक्तिरूप्यादुक्तोत्कर्षस्येदमंशे सत्त्वेन जाग्रच्छुक्तिरूप्यापेक्षया स्वाप्नशुक्तिरूप्यस्य तावताप्यपकर्षाप्रतिपादनेन प्रकृतानुपयोगात्। न हि जाग्रद्भ्रमबाधकेनेदमंशः स्वरूपेण बाध्यते, किंतु संसृष्टतया; तथा बाध्यत्वं तु स्वाप्नेदमंशेऽपि वाच्यम्, अन्यथा जाग्रद्भ्रमेऽपीदमंशे तन्न स्यादविशेषात्। किंच स्वाप्नेदमंशः कथमबाध्यः? 'स्वप्नदृष्टं सर्वं मिथ्ये'त्यनुभवात्, बहिःस्थस्येदमंशस्य सन्निकर्षाभावेनापरोक्ष्यानुपपत्त्या रूप्यादिवत्तस्याप्युत्पत्त्यावश्यकत्वेनाविद्यकत्वनिश्चयाच्च। **संसारेति**। मुक्त[1]कालीनब्रह्मसत्त्वासङ्ग्रहोक्तिस्तु शोभते; तस्य संसारकालेऽपि सत्त्वेन सङ्ग्रहानपायात्। **सत्त्वाभावेनेति**। न च तस्यास्तुच्छत्वापत्तिः; उत्पत्त्यादिमत्त्वात्। **ब्रह्मस्वरूपेति**। ज्ञानसाध्यत्वं तु नाशमात्रस्याधिकरणस्वरूपत्वम्; अत एवोपपादितं मण्डनमनुरुध्याह — **अनिर्वचनीया वेति**। अविद्यायास्तु स्वकालीनकार्यं प्रत्युपादानत्वमित्याद्युक्तम्। **इष्टत्वादिति**। न चास्थूलमित्यादिश्रुत्युक्तत्वेन भेदरूपो विभागस्ता-

[1] मुक्ति-ग.

तात्त्विकस्य ब्रह्मणोऽतात्त्विकाच्छुक्तिरूप्याद्बाधाधिगम्यस्य विभागस्य कथमतात्त्विकत्वमिति—वाच्यम्; बाधबोध्यत्वं न तात्त्विकत्वे प्रयोजकम्, किंत्वबाध्यत्वम्; तच्च न ब्रह्मातिरिक्तवृत्ति, नेह नानेत्यादिना बाधात्। न च त्रिविधसत्त्वाङ्गीकारे ब्रह्मैव सदिति स्वमतविरोधः; तस्य परमार्थसद्ब्रह्मैवेत्येतत्परत्वात्। एतेन — विश्वमिथ्यात्वब्रह्मनिर्विशेषत्वादावप्येवं विकल्प्य दूषणमिति—अपास्तम्। ननु— अत्र परमार्थसदेव सदितरद्वयं सद्विलक्षणमेव सत्त्वेन भाति, बाधविलम्बाविलम्बाभ्यां तद्भेद इत्यभिप्रेतम्, उत वा सत्त्वस्यैवावान्तरभेद इति। नाद्यः; त्वन्मते रूप्याभावे रूप्यधीरिव सत्त्वाभावे सत्त्वबुद्धेरयोगात्। कदाचिदपि सत्त्वाभावे तुच्छवदुत्पत्त्याद्ययोगात्, व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावेन तत्राऽर्थक्रियादेः श्रुतीनां तद्विषयत्वेन प्रामाण्यस्य चायुक्त्यापातात्। प्रत्युत नभोनैल्यभ्रमहेतोरिवार्थभ्रान्तिहेतुत्वेनाप्रामाण्यनिश्चय एव स्यात्। नान्त्यः; आरोपितानारोपितसाधारणसामान्यधर्माभावात्, व्यावहारिक-

---

त्त्विक इति—वाच्यम्; अच्छायमित्यादिसमभिव्याहारात् अस्थूलमित्यादेः स्थूलाद्यन्ताभाववदर्थकत्वादखण्डार्थकत्वाच्च। नेह नानेति। एतद्वाक्यस्यार्थान्तरवर्णनं तु शतधा दूषितम्। **तुच्छवदिति।** कार्यमात्रस्येति शेषः। **प्रातिभासिकादित्यादि।** व्यावहारिकविषयकज्ञानस्य प्रातीतिकज्ञानापेक्षयार्थगतस्य विशेषस्याभावेन व्यावहारिकज्ञानादेवार्थक्रियाविशेषः। मिथ्याभूतव्यावहारिकविषयत्वेऽपि [1] ज्योतिष्टोमादिश्रुतीनां प्रामाणिकत्वमित्ययुक्तमिति भावः। **अयुक्त्यापतात्** अयुक्तत्वापातात्। **अप्रामाण्यनिश्चय इति।**

[1] विषयकत्वेपि–क. ग.

**स्यानारोपितविशेषत्वे इष्टापत्तेश्चेति—चेन्न ; द्वितीयपक्षस्यैव क्षोदक्षमत्वात् । तथाहि—अबाध्यत्वरूपमारोपितानारोपितयोः सामान्यम् । अन्यदा बाध्येऽपि स्वकालाबाध्यत्वमात्रेणारोपितेऽपि तस्य संभवात्, आरोपितानारोपितयोरेकसामान्याभावे प्रवृत्त्याद्यनुपपत्तेरुक्तत्वात् । अत एवोक्तम्—**

**'आकाशादौ सत्यता तावदेका**
**प्रत्यङ्मात्रे सत्यता काचिदन्या ।**
**तत्संपर्कात्सत्यता तत्र चान्या**
**व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र" ॥ इति ॥**

**यथा प्रातिभासिकरजते ज्ञातैकसदेकं रजतत्वम्, लौकिकपरमार्थरजते चाज्ञातसदपरं रजतत्वम्, तदुभयानुगतं चारोपि-**

---

व्यावहारिकज्ञानस्योक्तश्रुतीनां चेत्यनुषज्यते । **अनारोपितविशेषत्वे** प्रातिभासिकव्यावृत्तस्यानारोपितविशेषस्याश्रयत्वे । **अबाध्यत्वरूपं** बाधविषयत्वसामान्याभावरूपम् । **स्वकालाबाध्यत्वमात्रेण** स्वकालावच्छिन्नेन बाधविषयत्वसामान्याभावेन । मात्रपदादनवच्छिन्नस्योक्ताभावस्य व्यवच्छेदः । तृतीयार्थस्याभेदस्य तस्येत्यत्रान्वयः । **प्रवृत्त्याद्यनुपपत्तेरिति** । येन हि रजतत्वादिसामान्येन विशिष्टं पूर्वमुपलब्धं तत्प्रकारकप्रवृत्तेर्भ्रमस्थलेऽप्यनुभवसिद्धाया उपपादनाय तत्प्रकारकत्वं भ्रमस्यावश्यं वाच्यम् ; तथा चाबाध्यत्वप्रकारकप्रवृत्तयेऽबाध्यत्वप्रकारकत्वमपि तस्यावश्यकमित्यन्यथाख्यातिदूषणाद्भ्रमविषयेऽबाध्यत्वादिसामान्यसिद्धिरिति भावः । **ज्ञातैकसदिति** । उभयानुगतजातेर्दोषादिकार्यतावच्छेदकत्वासंभवात्प्रमाणव्यापारं विना प्रातीतिकरजते भानासंभवात्, व्यक्तिविशेषसंबन्धित्वेनैव प्रमाणवेद्यत्वनियम इति कल्पने गौरवात्, तद्व्यक्तित्वादिनाप्युभयानुगतजातेः प्रमाणवेद्यत्वनियमाच्च ज्ञातैकसद्रजतत्वाद्यावश्यकमिति भावः । **अज्ञातसदपरमिति** । साक्षि-

तानारोपितसाधारण रजतत्वं रजतशब्दालम्बनम्, एवमाकाशादावारोपितैका सत्यता, चिदात्मनि चानारोपिताऽपरा, तदुभयसाधारणी चान्या व्यावहारिकी सत्यता सत्यशब्दालम्बनमिति भावः। सद्विशेषत्वेऽपि व्यावहारिकस्य प्रपञ्चस्य नानारोपितविशेषत्वम्; येनेष्टापत्तिरवकाशमासादयेत्, सत्त्वस्यानारोपितत्वात्मकत्वाभावात्। सत्त्वाङ्गीकारादेव नोत्पत्त्यादिविरोधोऽपि। न च—स्वरूपेण बाध्यत्वं प्रपञ्चेऽपि नास्ति; तुच्छत्वप्रसङ्गात्, पारमार्थिकत्वाकारेण बाध्यत्वं निर्धर्मकतया ब्रह्मण्यप्यस्तीति कथं कदाचिद्बाध्यत्वमादाय व्यावहारिकत्वादिस्थितिरिति—वाच्यम्; मिथ्यात्वरूपसाध्यनिरुक्तावेवास्य दत्तोत्तरत्वात्। यत्तु—सप्रकारकस्यैव ज्ञानस्य प्रपञ्चबाधकत्वं वक्तव्यम्; निष्प्रकारकत्वे बाधकत्वायोगात्, तथाच स प्रकारस्तात्त्विक एव

मात्रवेद्यस्य रजतत्वादेः प्रमाणवेद्यत्वानुभूयमानत्वानुपपत्तेः प्रातीतिकसाधारणजात्या व्यावहारिकस्य हेतुत्वादिस्वीकारे प्रातीतिकरजतादितो व्यावहारिकरजतकार्यविशेषापत्तेश्च साक्षिमात्रवेद्यभिन्नमुक्तकार्यहेतुतावच्छेदकं रजतत्वाद्यावश्यकमिति भावः। उभयानुगतत्वे मानमाह—**रजतशब्दालम्बनमिति**। रजतादिशब्दस्य प्रातीतिकेऽपि प्रयोगादुक्तजात्योः प्रयोगनिमित्तत्वे नानार्थत्वस्यापत्तेः रजताकारोभयानुगतप्रतीतेर्हर्षविशेषादिरूपकार्यप्रयोजकत्वस्योभया[1] निष्ठस्योक्तसामान्याभ्यां प्रत्येकवृत्तिभ्यामवच्छेत्तुमशक्यत्वाच्चोभयानुगतरजतत्वाद्यावश्यकमिति भावः। यत्त्वेकसामान्ये प्रातीतिकव्यावहारिकसंबन्धो विरुद्ध इति, तन्न; विरोधे बीजाभावात्, ब्रह्मदृश्ययोरबाध्यत्वादिसामान्यस्येव तादात्म्यादिसंबन्धस्येव च तस्याविरोधात्। **दत्तोत्तरत्वादिति**। अभावरूपधर्मस्य ब्रह्मणि

[1] भयनि-क. ग.

**स्यात्—इति, तन्न; स्वरूपोपलक्षणोपलाक्षितस्वरूपविषयकव्यावृत्ताकारज्ञानस्यैव निष्प्रकारकत्वेऽपि बाधकत्वमित्यस्यापि प्रागेवोक्तत्वात्। स्वरूपोपलक्षणनिबन्धनव्यावृत्ताकारत्वेऽपि यथा नाखण्डार्थत्वक्षतिः, तदप्युक्तमधस्तात्। ननु—व्यावहारिकप्रातिभासिकयोर्बाध्यत्वाविशेषे किंनिबन्धनो भेदः, न तावन्मायि-**

---

संभवात्स्वरूपत्वेन निषेध्यत्वमादाय मिथ्यात्वलक्षणसंभवादित्याद्युक्तम्। **प्रागेवेति**। यत्र धर्मान्तरमुपलक्ष्यते तत्रैव सप्रकारकत्वनियमो यथा काकवन्त इत्यादावुत्तृणत्वादि, यत्र तु व्यक्तिस्वरूपमुपलक्ष्यते तत्र न तथा, यथाऽऽकाशादिपदजन्यनिर्विकल्पोपस्थितौ व्यक्तिस्वरूपमात्रमुपलक्ष्यत इत्याद्युक्तम्॥

यत्तु—प्रातीतिकमात्रवृत्तिरजतत्वादौ मानाभावः; दोषादीनां सामानाधिकरण्यसंबन्धेन स्वविशिष्टं प्रत्येव हेतुत्वसंभवात्, प्रातीतिकव्यक्तिसंबन्धित्वेन प्रातीतिकत्वस्योभयानुगतजातौ संभवेन प्रमाणावेद्यत्वसंभवाच्च। किंचोक्तमानबलेन रजतत्वादित्रैविध्येऽप्याकाशादिमात्रगतसत्यतायां मानाभाव इति, तन्न; स्वविशिष्टत्वस्य नित्यसाधारणत्वेन दोषादिजन्यतानवच्छेदकत्वात्। न च—तत्तद्व्यक्तित्वमेव तत्तज्जन्यतावच्छेदकमस्त्विति—वाच्यम्; चिरमनुवर्तमानेन तत्तद्दोषेण जनितरजतादिव्यक्तेर्भ्रमान्तरेण विलयेऽपि पुना रजतव्यक्त्यन्तरोत्पादात्तत्तद्व्यक्तित्वेन तत्कार्यत्वे गौरवात्। नित्यसाधारण्यवारणाय कालिकसंबन्धोऽपि वैशिष्ट्यघटकतया निवेश्य इति—चेन्न; कालिकसंबन्धेन घटत्वादिमद्द्दोषादिसमानाधिकरणं तत्त्वेन जन्यतामादाय विनिगमनाविरहात्-कल्प्येन प्रातीतिकमात्रगतसामान्येन विनिगमनाविरहाभावात्, आकाशादिमात्रगतसत्यतायां तु 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य'

कत्वाविद्यकत्वाभ्यां भेदः; मायाविद्ययोरभेदात्, अर्थगतविशेषाभावे तदयोगाच्च। नाप्यर्थक्रियाकारित्वाकारित्वाभ्यां विशेषः; स्वाप्नघटादौ स्वाप्नजलाहरणाद्यर्थक्रियादर्शनात्। न चार्थक्रियायां व्यावहारिकत्वं विशेषणम्; अन्योन्याश्रयात्, स्वाप्नाङ्गनालिङ्गनादौ प्रातिभासिके व्यावहारिकसुखजनकेऽतिव्याप्तेश्च। नापि ब्रह्मज्ञानबाध्यत्वतद्भिन्नज्ञानबाध्यत्वाभ्यां विशेषः; त्वन्मते रूप्यादेरपि शुक्त्यवच्छिन्नब्रह्मधीबाध्यत्वात्, ब्रह्मण्यध्यस्तस्य क्षणिकत्वादेरपि प्रातिभासिकस्य ब्रह्मधीबाध्यत्वेनातिप्रसङ्गाच्च। नापि ब्रह्मप्रमाबाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां विशेषः; त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वात्। नापि प्रमाबाध्यत्वभ्रान्तिबाध्यत्वाभ्यां विशेषः; भ्रान्तिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात्। नापि पारमार्थिकाविषयधीबाध्यत्वव्यावहारिकाविषयधीबाध्यत्वाभ्यां विशेषः; अन्योन्याश्रयात्। नाप्यन्योन्येतरत्वाभ्याम्;

---

इत्यादिश्रुतिरेव मानमिति बोध्यम्। **अर्थगतेति**। व्यावहारिकप्रातीतिकयोरविशेषाद्द्वयोरपि मायिकत्वमाविद्यकत्वं वा स्यादिति भावः। **ब्रह्मधीबाध्यत्वेन** ब्रह्म न क्षणिकमिति धीबाध्यत्वेन। **त्वन्मत इति**। तथा च तदन्यप्रमात्वमप्रसिद्धमिति भावः। **भ्रान्तिबाध्यत्वस्य ब्रह्म** मिथ्येति भ्रान्त्या मिथ्यात्वेन ज्ञाप्यत्वस्य। **अन्योन्याश्रयादिति**। पारमार्थिकत्वस्य ज्ञानात्तद्घटितव्यावहारिकत्वस्य ज्ञानम्, व्यावहारिकत्वे च ज्ञाते व्यावहारिकप्रातीतिकान्यत्वं पारमार्थिकत्वं ज्ञेयमित्यन्योन्याश्रयात्। **अन्योन्येतरत्वाभ्यां** व्यावहारिकान्यत्वाभ्याम्[1]।

[1] न्यत्त्वप्रातीतिकान्यत्वाभ्यां–ग.

भेदकाभावे इतरत्वस्यैवायोगात्, अन्योन्याश्रयाच्चेति—चेन्न; सप्रकारकनिष्प्रकारकज्ञानबाध्यत्वाभ्यां शुद्धब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा महावाक्यजन्यधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा भेदसंभवात् । शुद्धशब्देन निर्धर्मकाधिष्ठानमात्रमेवाऽत्र विवक्षितम् । न च—निर्धर्मकं यद्वस्तुगत्या तज्ज्ञानं भ्रमकालेऽपि, निर्धर्मकत्वविशिष्टस्य तदुपलक्षितस्य वा ज्ञानं चेद्विवक्षितम्, तदा अखण्डार्थताहानिः, प्रकारीभूतनिर्धर्मकत्वद्वितीयाभावादेस्तात्त्विकत्वापत्तिश्चेति—वाच्यम्; निर्धर्मकं यद्वस्तुगत्या तन्मात्रगोचरज्ञानस्य विवक्षितत्वात्, तस्य च भ्रमकालेऽभावात् । निर्धर्मकत्वादेस्तद्बुद्धावुपायत्वमात्रम्; न तु तद्बुद्धौ विषयत्वम् । अतो नाखण्डार्थताहानिप्रकारतात्त्विकत्वापत्ती । निष्प्रकारकत्वेऽपि संशयादिनिवर्तकत्वमुपपादितमेव । तस्मादज्ञानोपादानकं जगन्मिथ्येति सिद्धम् ॥

---

विशेष इत्यनुषज्यते । **भेदकाभावे** अनुगताननतिप्रसक्तस्य भेदप्रतियोगितावच्छेदकस्याज्ञाने । **इतरत्वस्य** भेदज्ञानस्य । ननु—प्रातीतिकान्यत्वरूपव्यावहारिकत्वेन भेदः प्रातीतिकत्वम्, तत्राह । **अन्योन्याश्रयाच्चेति** । प्रातीतिकत्वज्ञानाद्व्यावहारिकत्वज्ञानम्, तज्ज्ञानाच्च प्रातीतिकत्वज्ञानमित्यन्योन्याश्रयाच्चेत्यर्थः । सोऽयमित्यादिवाक्यजन्यनिष्प्रकारकधीबाध्यभेदस्य व्यावहारिकत्वापत्तेराह— **शुद्धेति** । शुद्धस्य विषयत्वानङ्गीकारेऽप्याह— **महावाक्येति** । वाक्यस्य न बाधकसाक्षात्कारहेतुत्वम्; किंतु भावनासहकृतमनस इति भामतीमतेऽप्याह— **स्वबाधकेति** । **तद्बुद्धौ** चरमतद्बुद्धौ **उपपादितमिति** । उपलक्षणविधया व्यावृत्ताकारत्वादिनेत्यादिः । तस्मादित्यर्थं स्पष्टयति—

उपाधिबाधप्रतिपक्षशून्यं विपक्षबाधागमसव्यपेक्षम् ।
दृश्यत्वमव्याहतमम्बरादिमिथ्यात्वसिद्धौ सुदृढं हि मानम् ॥

तदेवं दृश्यस्य प्रपञ्चस्य मिथ्यात्वात्तदतिरिक्तब्रह्मरूपाखण्डार्थनिष्ठवेदान्तवाक्यं परतत्त्वावेदकम् । सखण्डार्थविषयकं सर्वमतत्त्वावेदकमेवेति । यद्यपीदं ब्रह्मज्ञानाव्यवहितभ्रमविषये प्रातिभासिके व्यावहारिकलक्षणमतिव्याप्तम्, प्रातिभासिकलक्षणं चाव्याप्तम्; तथापि करणसंसार्गिदोषप्रयुक्तत्वं तदसंसर्गिदोषप्रयुक्तत्वं च तयोर्लक्षणं निरवद्यम् ॥

इति सत्त्वत्रैविध्योपपत्तिः ॥

---

**उपाधीत्यादि** । **प्रतिपक्षः** सत्प्रतिपक्षः, विपक्षबाधकस्तर्कः, सापेक्षं सहितं, दृश्यत्वं दृश्यत्वादिहेतुः, दृढं हि दृढमेव । **करणसंसार्गिदोषप्रयुक्तत्वम्** करणनिष्ठसंसार्गितया करणसन्निकृष्टनिष्ठप्रत्यासत्त्या या दोषनिष्ठा प्रयोजकता तन्निरूपितप्रयोज्यतावत्त्वम् । काचादिदोषाणां हि चक्षुरादिसन्निकृष्टधर्मिगतप्रत्यासत्त्या प्रातीतिकाध्यासहेतुत्वम् । परोक्षभ्रमस्थलेऽपि व्याप्तिज्ञानादिकरणसंसृष्टपक्षादिनिष्ठप्रत्यासत्त्यैव दोषाध्यासयोः कारणकार्यभाव ऊहनीयः ॥

**अविद्यायास्तु** व्यावहारिकविषयकं स्ववृत्तिभ्रमं प्रति तादात्म्येनैव हेतुत्वम् । अतः करणसान्निकृष्टानिष्ठप्रत्यासत्त्यवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं करणसंसर्गीत्यादेरर्थः । तदनवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं तदसंसर्गीत्यादेरर्थः । अविद्यान्यदोषप्रयुक्तत्वमविद्यारूपदोषप्रयुक्तत्वं च द्वयोः पर्यवसितार्थः । तेन करणसन्निकर्षादेरननुगतत्वेऽपि न क्षतिः । दोषत्वं च तावद्दोषाणामन्यतमत्वं जातिविशेषो वा,

अविद्यातत्कार्यात्मकनिबिडबन्धव्यपगमे
यमद्वैतं सत्यं प्रततपरमानन्दममृतम् ।
भजन्ते भूमानं भवभयभिदं भव्यमतयो
नमस्तस्मै नित्यं निखिलनिगमेशाय हरये ॥

---

तदवच्छिन्ना प्रयोजकता प्रथमलक्षणे निवेश्या ; तेन दोषप्रत्यक्षादौ व्यावहारिके नातिव्याप्तिः । उक्तप्रयोजकतानिरूपितप्रयोज्यतापि शुक्तिरूप्याद्यन्यतमत्वेन शक्तिविशेषेण वा बोध्या । अविद्यारूपदोषप्रयुक्तत्वं यद्यपि प्रातीतिकेऽप्यस्ति; तथापि मूलाविद्याप्रयुक्तत्वं वाच्यम् ; अनादिदृश्येऽपि तदव्याहतम् । यद्यप्यविद्यान्यदोषकार्यत्वं भ्रमतद्विषयसाधारणरूपेण, तत्र कार्यतावच्छेदकसंबन्धो दोषाश्रयतत्तद्धर्मिनिष्ठा न स्वाश्रयाविद्याश्रयतावच्छेदकत्वरूप उभयीयः ; परोक्षभ्रमस्थले तदसंभवात् । रजतज्ञानस्येदमर्थे रजतस्येदमाकारवृत्तौ चोत्पत्त्यापत्तेरुभयोरुक्तावच्छेदकत्वाविशेषात् । न च—स्वाश्रयाविद्याविषयतावच्छेदकत्वसंबन्ध एव तादृश इति—वाच्यम् ; शुक्तित्वादिविशिष्टस्यैवोक्तावच्छेदकत्वेनेदमर्थतज्ज्ञानयोः रजतज्ञानयोरुत्पत्त्यसंभवात् । तथापि दोषसंस्कारविशेषाणां स्वविशिष्टरजतत्वाद्यवच्छिन्नस्य तादात्म्यादिसंबन्धेनोत्पत्तावविद्याया इदमाकारज्ञाननिष्ठप्रत्यासत्त्या रजतादिज्ञानोत्पत्तौ च विशेषतो हेतुत्वावश्यकत्वात् । तत एव रजतादेरिदंत्वादिविशिष्टनिष्ठत्वसंभवादुक्ताविषयतावच्छेदकत्वसंबन्धेन रजतादितद्धीसाधारणरूपेण सामान्यतो दोषकार्यत्वेऽपि न दोषः । यद्यपि ब्रह्मज्ञानजन्यनाशतज्जन्यनाशयोरन्यतरप्रतियोगित्वं ब्रह्मज्ञानबाध्यत्वम् , तच्च न प्रातीतिकेऽस्ति ; तन्नाशहेतुपल्लवाविद्यानाशस्यैव ब्रह्मज्ञानजन्यनाशजन्यत्वात् , पल्लवाविद्यापि मूलाविद्येव व्यावहारिक्येवेति न तत्राप्यतिव्याप्तिः । तथापि पल्लवाविद्यानङ्गीकारपक्षे प्रातीतिकविशेषेऽतिव्याप्तिर्बोध्या । अत्र पल्लवाविद्यापक्षे मूलपल्लवाविद्या-

अनादिसुखरूपता निखिलदृश्यनिर्मुक्तता
निरन्तरमनन्तता स्फुरणरूपता च स्वतः।
त्रिकालपरमार्थता त्रिविधभेदशून्यात्मता
मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वती-
श्रीचरणशिष्यश्रीमधुसूदनसरस्वतीविरचितायाम-
द्वैतसिद्धौ सपरिकरप्रपञ्चमिथ्यात्व-
निरूपणं नाम प्रथमः परिच्छेदः॥

---

प्रयुक्तत्वे लक्षणे, पक्षान्तरे चाविद्यामनस्तत्परिणामान्यत्वे सत्यविद्याविषयतानवच्छेदकदृश्यत्वं प्रातीतिकत्वम्, उक्तलक्षणशून्यत्वे सति बाध्यत्वं व्यावहारिकत्वमित्यपि बोध्यमिति शिवम्॥

यः पूर्णानन्दमग्नोऽप्यनुगतमनसां वल्लवीनां विधेयो
यश्चेन्द्रादेर्नियन्ता विजयहयतनूभार्जने सावधानः॥
यश्च श्रीशः सुदाम्नः पृथुककणगणं सादरं संचखाद
तस्य श्रीपादुकाया भवतु कृतिरियं मालिका मल्लिकायाः॥ १॥

न वीक्षध्वं दैवादिह निपतितां दोषकणिकां
यथापीनच्छत्रे रविकरकुलैराकुलतमाः।
महासेतौ दुर्गोत्तरणमनसो गाढकवचे
विशाले सङ्ग्रामव्रतकृतधियो मत्कृतधियः॥ २॥

क्वाऽद्वैतसिद्धिगा वाचः क्व वयं स्वल्पबुद्धयः।
लघूनपि गुरूकुर्याद्गुरूणां चरणस्मृतिः॥ ३॥

तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः।
दुरन्तध्वान्तभङ्गाय सत्त्वत्रैविध्यनिर्णयः॥ ४॥

व्यासाद्रेः शतधा भेदात्तरङ्गिण्याश्च तद्भुवः ।
आत्यन्तिकसमुच्छेदादिदानीं नाममात्रता ॥ ५ ॥
सारस्वतसमुद्रेको ध्वान्तध्वंसप्रसङ्गतः ।
यया चन्द्रिकया तस्याः परिच्छेदोऽयमादिमः ॥ ६ ॥

इति श्रीनारायणतीर्थपरमानन्दसरस्वतीशिष्यश्रीब्रह्मानन्दसरस्वती
विरचितायामद्वैतसिद्धिटीकायामद्वैतचन्द्रिकायां
प्रथमः परिच्छेदः समाप्तः ॥

॥ शुभमस्तु ॥

---

## Appendix.

# अस्या अद्वैतसिद्धेः सव्याख्यायास्त्रिष्वपि सम्पुटेषु ग्रन्थांन्तरेभ्यः संगृहीतानां वचनानामकारादिक्रमेणानुक्रमणिका.

### अ

| सं. | पु. | |
|---|---|---|
| 1 | 340 | अग्नय आज्यस्य —? |
| 1 | 278 | अग्नये दात्रे पुरोडाशं—तै. सं. 2–3–4 |
| 1 | 340 | अग्नय आज्यं—? |
| 2 | 223 | अग्निहोत्रं जुहोति—तै. सं. 1–5–9 |
| 1 | 306 | अग्निर्ज्योतिर्ज्योतिः—तै. आ. 4–10 |
| 1 | 306 | अग्निर्मूर्धा—तै. सं. 1–5–5 |
| 1 | 308 | अग्निर्वै ब्राह्मणः—? |
| 1 | 344 | अग्निर्हिमस्य भेषजम्—तै. सं. 7–4–18 |
| 1 | 278 | अग्निर्होता इत्यादि--तै. आ. 3–3 |
| 1 | 248 | अग्निः सोमाङ्ग—? |
| 2 | 225 | अग्नीषोमीयं पशुमालभते—तै. सं. 6–1–11 |
| 1 | 263 | अग्नेर्ऋग्वेदः—? |
| 1 | 282 | अङ्गगुणविरोधे—जै. सू. 12–2–25 |
| 1 | 205 | अचिन्त्यमव्यवहार्य--नृ. उ. ता, खण्ड 1 |
| 1 | 314 | अजक्षीरेण जुहोति— तै. सं. 5–4–3 |
| 2 | 151 | अजामेकां—श्वे. 4–5 |
| 2 | 231 | अजोऽग्नीषोमीयः—? |
| 1 | 303 | अजो नित्यः—कठ. 2–18 |
| 2 | 357 | अजो ह्येको जुषमाणः—श्वे. 4–5 |
| 3 | 23 | अज्ञताखिलसंवेत्तुः—? |
| 1 | 288 | अज्ञानेनावृतं ज्ञानं—गीता. 5–15 |
| 2 | 374 | अज्ञानमिति द्वयसापेक्ष—विवरण. |

(द)

(ध)



(न)

| सं. | पु. | |
|---|---|---|
| 2 | 4 | लोकप्रसिद्धिस्तन्त्रम्—इष्टसिद्धिः ? |
| 2 | 201 | लोकवत्तु लीलाकैवल्यम्—ब्र. सू. 2-1-33 |
| 2 | 17 | लोहितोष्णीषा ऋत्विजः—? |
| 2 | 287 | वप्रकरणेऽन्यत्रापि—वै. वार्तिकम् |
| 1 | 328 | वरुणो वा एतं गृह्णाति—तै. सं. 2-3-12 |
| 1 | 266 | वर्त्मनि जुहोति—श्रौ. सू. 11-6-13 |
| 2 | 215 | वसन्त ब्राह्मणः—? |
| 2 | 215 | वसन्ते ब्राह्मणं—आपस्तम्बधर्म 1-1-19 |
| 1 | 467 | वसन्ते वसन्ते (ज्योतिष्टोमेन)-आप. श्रौ. सू. 10-2-5 |
| 1 | 318 | वषट्कर्तुः प्रथम भक्षः--? |
| 2 | 287 | वस्तु राजेति—वि. पु. 2-13-99 |
| 1 | 21 | वस्तुशून्यो विकल्पः—यो. सू 19 |
| 2 | 280 | वाचारम्भणं विकारः—छा. 6-1-5 |
| 2 | 206 | वा चित्तविरागे—पा. सू. 6-4-91 |
| 1 | 314 | वाजपेयेन स्वाराज्यकामः—? |
| 1 | 282 | वात्स्यायनादीनां ब्रह्मण्येव समन्वयः—? |
| 2 | 304 | वायुर्यथैको भुवनम्—कठ. 5-10 |
| 2 | 287 | वायुर्वै घृतम्—? |
| 1 | 305 | वायुर्वै क्षेपिष्ठा देवता—तै. सं. 2-1-1 |
| 1 | 278 | वार्त्रघ्नी पौर्णमास्याम् (पूर्णमासे)—तै. सं. 2-5-2 |
| 2 | 287 | वासुदेवाभिधानस्य—वि. पु. 2-15-35 |
| 2 | 291 | विकल्पो विनिवर्तेत—गौ. का. 1-18 |
| 1 | 480 | विकारो नामधेयम्—छां. 6-1-5 |
| 2 | 65 | विज्ञानमानन्दं ब्रह्म—बृ. 3-9-28 |
| 2 | 297 | विज्ञानं परमार्थोऽसौ—वि. पु. 2-11-31 |
| 3 | 83 | विज्ञानं यज्ञं तनुते—तै. उ. 2-5-1 |
| 2 | 345 | विद्याविद्ये—सं. शा. 2-12-8 |
| 1 | 166 | विद्वान्नामरूपाद्विमुक्तः—मुण्ड. 3-2-8 |

(ष)



(स)

## ABBREVIATIONS.

---

| | |
|---|---|
| ऋ. सं. ऋक्संहिता | मै. मैत्रायणीयोपनिषत् |
| तै. सं. तैत्तरीयसंहिता | कै. कैवल्योपनिषत् |
| तै. ब्रा. तैत्तरीयब्राह्मणम् | सं. शा. संक्षेपशारीरकम् |
| तै. आ. तैत्तरीयारण्यकम् | भाम. भामती |
| ब्र. सू. ब्रह्मसूत्रम् | कल्प. कल्पतरुः |
| जै. सू. जैमिनिसूत्रम् | शां. भा. शांकरभाष्यम् |
| गौ. सू. गौतमसूत्रम् (न्याय) | यो. भा. पातञ्जलयोगभाष्यम् |
| पा. सू. पाणिनीयसूत्रम् | तन्त्र. तन्त्रावार्तिकम् |
| यो. सू. योगसूत्रम् (पातञ्जल) | मी. श्लो. मीमांसा श्लोकवार्तिकम् |
| ई. उ. ईशोपनिषत् | पञ्चपा. पञ्चपाटिका |
| के. उ. केनोपनिषत् | तत्त्वदी. तत्त्वदीपनम् |
| कठ. कठोपनिषत् | भाग. भागवतम् |
| प्रश्न. प्रश्नोपनिषत् | भा. भारतम् |
| मु. उ. मुण्डकोपनिषत् | वि. पु. विष्णुपुराणम् |
| गौ. का. गौडपादकारिका | ब्र. सि. ब्रह्मसिद्धिः |
| तै. उ. तैत्तरीयोपनिषत् | सि. बि. सिद्धान्ताबिन्दुः |
| या. उ. याज्ञिक्युपनिषत् | आ. श्रौ. सू. आपस्तम्बश्रौतसूत्रम् |
| ऐ. ऐतरेयोपनिषत् | न्या. कु. न्यायकुसुमाञ्जलिः |
| बृ. बृहदारण्यकोपनिषत् | वै. भू. सा. वैयाकरणभूषणसारः |
| छा. छान्दोग्योपनिषत् | बौद्धा. बौद्धाधिकारः (आत्मतत्वविवेकः) |
| श्वे. श्वेताश्वतरोपनिषत् | |
| नृ. उ. ता. नृसिंहोत्तरतापिनी | शा. द. शास्त्रदर्पणम् |

इत्येवं रीत्या बोद्धव्यानि । इतरत्सुगमम् ॥

---

मैसूरु राजकीयप्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः
संमुद्रितानां क्रय्याणां प्रबन्धानां

# प्रसिद्धिपत्रिका.

---

## श्रौतसूत्रम्.

| | | | रू. | आ. |
|---|---|---|---|---|
| 73 | (1) | आपस्तम्बशुल्बसूत्रं व्याख्यात्रयोपेतम् .... | 2 | 12 |

## गृह्यसूत्रम्.

| | | | | |
|---|---|---|---|---|
| 41 | (2) | खादिरगृह्यसूत्रं रुद्रस्कन्दीयसहितम् .... | 1 | 0 |
| 55 | (3) | बोधायनगृह्यसूत्रं परिशिष्टसहितम् .... | 2 | 4 |

## धर्मसूत्रम्.

| | | | | |
|---|---|---|---|---|
| 50 | (4) | गौतमधर्मसूत्रं मस्करिव्याख्यासहितम् .... | 3 | 8 |

## धर्मशास्त्रनिबन्धः.

| | | | | |
|---|---|---|---|---|
| 43 | (5) | स्मृतिचन्द्रिका (प्रथमसंपुटं संस्कारकाण्डः) | 1 | 8 |
| 44 | (6) | स्मृतिचन्द्रिका (द्वितीयसंपुटं आह्निककाण्डः) | 2 | 8 |
| 45 | (7) | स्मृतिचन्द्रिका (तृतीयसंपुटं व्यवहारकाण्डः) | 2 | 0 |
| 48 | (8) | स्मृतिचन्द्रिका (चतुर्थसंपुटं व्यवहारकाण्डः) | 3 | 0 |
| 52 | (9) | स्मृतिचन्द्रिका (पञ्चमसंपुटं श्राद्धकाण्डः .... | 3 | 4 |
| 56 | (10) | स्मृतिचन्द्रिका (षष्ठसंपुटं आशौचकाण्डः).... | 1 | 8 |
| 71 | (11) | सरस्वतीविलासः प्रतापरुद्रविरचितः .... (व्यवहारमात्रम्) | 2 | 8 |

## अर्थशास्त्रम्.

| | | | | रू. | आ |
|---|---|---|---|---|---|
| 64 | (12) | अर्थशास्त्रं कौटिलीयम् .... | .... | 3 | 0 |
| 65 | (13) | अर्थशास्त्रपदसूची संपुटं I | .... | 2 | 8 |
| 66 | (14) | ,, संपुटं II | ... | 2 | 8 |
| 68 | (15) | ,, संपुटं III | .... | 2 | 0 |

## अलङ्कारशास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 51 | (16) | अलङ्कारमणिहारः संपुटं I | .... | 3 | 0 |
| 58 | (17) | ,, संपुटं II | .... | 3 | 8 |
| 62 | (18) | ,, संपुटं III | .... | 2 | 8 |
| 72 | (19) | ,, संपुटं IV | .... | 2 | 4 |
| 60 | (20) | काव्यप्रकाशः सङ्केताख्यटीकायुतः | .... | 3 | 8 |

## वैद्यशास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 71 | (21) | आयुर्वेदसूत्रं योगानन्दीयव्याख्योपेतम् | .... | 2 | 0 |

## ज्योतिश्शास्त्रम्.

| | | | | | |
|---|---|---|---|---|---|
| 63 | (22) | विद्यामाधवीयं विष्णुशर्मविरचित— मुहूर्तदीपिकाख्यव्याख्यायुतम् संपुटं I | .... | 2 | 0 |
| 67 | (23) | ,, संपुटं II | .... | 2 | 0 |
| 70 | (24) | ,, संपुटं III | .... | 1 | 8 |

## अद्वैतवेदान्तः.

| | | | | | |
|---|---|---|---|---|---|
| 75 | (25) | अद्वैतसिद्धिः, गुरुचन्द्रिकोपेता संपुटं I | .... | 3 | 12 |
| 78 | (26) | ,, संपुटं II | .... | 3 | 4 |
| 80 | (27) | ,, संपुटं III | .... | | |

## विशिष्टाद्वैतवेदान्तः.

| | | | रू. | आ. |
|---|---|---|---|---|
| 76 | (28) | सर्वार्थसिद्धयाख्यवृत्तियुत तत्त्वमुक्ताकलापः— आनन्ददायिनी—भावप्रकाशा—व्याख्या-द्वयोपेतः—संपुटं I. | 4 | 0 |

## द्वैतवेदान्तः.

| | | | | |
|---|---|---|---|---|
| 53 | (29) | ब्रह्मसूत्रभाष्यं आनन्दतीर्थीयं तत्वप्रकाशिका— तात्पर्यचन्द्रिका—प्रकाशैः सहितम् संपुटं III. | 4 | 0 |
| 59 | (30) | ब्रह्मसूत्रभाष्यं आनन्दतीर्थीयं तत्वप्रकाशिका— तात्पर्यचन्द्रिका—प्रकाशैः सहितम्— संपुटं IV. | 3 | 0 |
| 74 | (31) | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम्— संपुटं I. | 3 | 0 |
| 77 | (32) | ,, संपुटं II. .... | 2 | 0 |
| 79 | (33) | ,, संपुटं III. .... | 2 | 0 |

## प्रकीर्णकम्.

| | | | | |
|---|---|---|---|---|
| 69 | (34) | अभिलषितार्थचिन्तामणिः—संपुटं I. .... (नानाशास्त्रीयविषयसंग्रहः). | 2 | 0 |
| | (35) | मैसूरु प्राच्यकोशागारस्थ लिखितग्रन्थसूची सविवरणा—प्रथमसंपुटं-वेदाः. | 3 | 12 |